आनन्दाश्रमसंस्कृतग्रन्थावलिः ।



ग्रन्थाङ्कः ८८

# दुर्गाचार्यकृतवृत्तिसमेतम् ।

# निरुक्तम् ।



पूर्वषट्कात्मकः प्रथमो भागः ।

एतत्पुस्तकम्

मास्टर् ऑफ् आर्ट्स् इत्युपपदधारिभिः वैजनाथ काशीनाथ
राजवाडे इत्येतैः संशोधितम् ।



तच्च

बी. ए. इत्युपपदधारिभिः

## विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

## आनन्दाश्रममुद्रणालये



आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८४३




खिस्ताब्दाः १९२१



मूल्यं पादोनरूपकनवकम् ।

Digitized by Arya Samaj Foundation Chennai and eGangotri

# विषयानुक्रमणी ।

## तृतीयोऽध्यायः ।

## चतुर्थोऽध्यायः।

# संस्करणायोपयुक्तानां पुस्तकानां वर्णनम् ।

अस्य ग्रन्थस्य संस्करणेऽधोवर्णितानि पुस्तकान्युपायुज्यन्त । निरुक्त-मूलसंशोधनार्थमुपयुक्तानां पुस्तकानां क. ख. छ. त. द. ङ. थ. ध. ठ. ड. इति चिह्नानि । क. ख. इति वङ्गवर्गः । छ. त. द. इति गुर्जरदेशीयः । ङ. थ. ध. ठ. ड. इति महाराष्ट्रीयः ।

ख. पण्डितसत्यव्रतसामाश्रमिभट्टाचार्यैः ' बिब्लिओथेका इंडिका '-ग्रन्थावल्यर्थं संशोधितं कलिकातानगर्यां येषूक्रिस्त १८८२-१८९१ वर्षेषु भागशो मुद्रितं प्रकाशितं च ।

क. पण्डितकुलपातिना बी. ए. उपाधिधारिणा श्रीजीवानन्दविद्या-सागरभट्टाचार्येण संस्कृतं प्रकाशितं च । द्वितीयसंस्करणं खिस्ताब्दे १८९१ । इदं ख. पुस्तकस्य सर्वशोऽनुकरणम् । अस्मिन्वर्गे गुर्जरमहा-राष्ट्रीययोर्मिश्रणं दृश्यते ।

छ. हस्तलिखितम् । पूर्वषट्कं ७८ पत्रात्मकम् । संवत् १७८८ न्नामायशुदि ६ गुरौ नागरज्ञातिय आचार्यश्रीपजीभाईतत्सुतसांमलेन लिखितं । श्रीनवानगरमध्ये लिखु छे । संवत् १८४१ केनाप्यन्येन लिखितम् । उत्तरषट्कं ९७ पत्रात्मकम् । संवत् साब्धिवसुभूवर्षे शुक्र-मासे सिते दले राकायां जीववारेषु लिषितमिदं पुस्तकम् । संवत् १८४६ ज्येष्ठवदि वैजनाथेन भूषितम् । हस्ताक्षरं स्पष्टम् । पुस्तकमानन्दाश्रम-स्थम् । क्रमाङ्कः ६५८० ।

त. हस्तलिखितम् । पूर्वषट्कं ८३ पत्रात्मकम् । शिवप्रसादेन लि-खितम् । संवत् १७४० वर्षे आषाढवद ·॥· दने लखतम् । उत्तरषट्कं ९३ पत्रात्मकम् । अपूर्णम् । लेखनपद्धतिः प्राचीना प्राङ्मात्रका यथा ामधावी = मेधावी । स्पष्टं स्थूलाक्षरं च । डेक्कनकालेजस्थम् । अधुना भाण्डारकरसंशोधनसंस्थायां वर्तमानम् । क्रमाङ्कः $\frac{६५}{१८८१-८२}$ ।

द. हस्तलिखितम् । १५७ पत्रात्मकम् । अतिस्तुत्यध्यायमारभ्य ग्रन्थान्तं यावत् पत्रसंख्या २१ । अनन्तसुतशिवासुतगोपालकस्य पुस्तकम् । त्रिवेदि गिरिजाशंकरसुतलालशंकरपुस्तकम् । दवे करुणाशंकरजेशंकर ।

अतीव जीर्णम् । प्राङ्मात्रकम् । डेक्कनकालेजस्थम् । अधुना भाण्डारकर-संशोधनसंस्थायां वर्तमानम् । क्रमाङ्कः ५७ १८८६-९२ ।

ङ. हस्तलिखितम् । पूर्वषट्कं ७९ पत्रात्मकम् । महादेवभटात्मज-गोविंदभट फणशेन लिखितम् । उत्तरषट्कं ८१ पत्रात्मकम् । तेनैव लिखितम् । शके १७३९. ईश्वरनामसंवत्सरे माघशुद्धद्वितीयायां संपूर्णम् । आनन्दाश्रमस्थम् । क्रमाङ्कः ४१९५-९६ ।

थ. हस्तलिखितम् । पूर्वषट्क ८० पत्रात्मकम् । शके १७०७ विश्वावसुनामसंवत्सरे चैत्रशुक्लपञ्चम्यां पटवर्धनोपनामककेशवभट्टात्मज-महादेवेन लिखितम् । उत्तरषट्कं ९१ पत्रात्मकम् । शके १७०७ विश्वावसुनामसंवत्सरे अधिकचैत्रशुद्धचतुर्थ्यां तेनैव लिखितम् । नाशिक-नगरस्थात्तद्वंशजान्मया संपादितम् ।

ध. मुम्बापुर्यां निर्णयसागरयन्त्रालये मुद्रितं शके १८१३ ।

गुर्जरपाठो महाराष्ट्रपाठाद्विश्वसनीयो दुर्गाचार्येण प्रायः स्वीकृतश्च । गुर्जरपाठस्य खण्डविभागो महाराष्ट्रपाठस्य खण्डविभागाद्भिन्नः । त. द. पुस्तकयोः पादे पादे प्रथमो द्वितीय इत्यादयः खण्डाङ्का दीयन्ते । न तथा छ. पुस्तके पादविभागे वर्तमानेऽपि । तत्राध्यायादारभ्य समाप्तिं यावत्प्रथमो द्वितीय इति खण्डगणना । क. ख. पुस्तकयोः पादविभागः खण्डाश्च गुर्जरपाठसदृशाः । किंतु तयोः छ.पुस्तकस्य खण्डगणना (   ) एतादृशचिह्नमध्ये लिख्यते । छ. त. द. पुस्तकेषु खण्डशृङ्खला न दीयते । सा क. ख. ङ. थ. घ. ठ. ड. पुस्तकेषु अध्यायान्ते पठनसाहाय्यार्थं दीयते । ङ. थ. ध. ठ. ङ. पुस्तकेषु पादविभागो नास्ति ।

---

निरुक्तवृत्तिसंशोधनार्थमुपयुक्तानि पुस्तकान्यधो वर्ण्यन्ते ।

क. ख. एतयोर्मुद्रणादिवर्णनं प्राग्दत्तमेव । एते नैव विश्वसनीये प्रमादप्रचुर्याद्यत्रतत्रानवधानतादोषाच्च । अनवधानतादोषा असंख्याताः कदा कदोपहास्याश्च । तेषामुदाहरणानि ।

| शुद्धं | प्रामादिकं | पङ्क्तिः |
|---|---|---|
| साकल्यं | साफल्यं | ( निरु० पत्रं ६ । २३ ) । |
| अप्यविवक्षिते | अर्थविवक्षिते | ( ९ । १ । |

| | | |
|---|---|---|
| दर्शयन्ति | वर्षयन्ति | ( ९ । ११ ) |
| ब्यापि | अथापि | ( १२ । १ ) |
| वसन्ती | च सन्ती | ( १४ । ३ ) |
| निर्देष्टुं | निर्दिष्टुं | ( १४ । ३ ) |
| स कृत्प्रत्ययोपजनितेन | सकृत्प्रयोजयति तेन | ( १५ । २४ ) |
| कथं | वायं | ( २१ । ८ ) |
| बुद्धितत्त्वे | बुद्धित्वे | ( २३ । ११ ) |
| देवेषु | वेदेषु | ( २५ । ६ ) |
| आप्यायते | अर्थायते | ( ३२ । १३ ) |
| यामी | आम्री | ( ४३ । ९ ) |
| ब्राह्मणं | बाह्यं | ( ९८ । १७ ) |
| उणादि | गुणादि | ( ८६ । ८ ) |
| दध्यादिद्रव्यं | द्रष्टव्यं | ( १३५ । २ ) |
| गौरन्यद्रव्यमयी | गोरन्यद्रव्यमपि | ( १४७ । २ ) |
| न पति | नयति | ( २१३ । १३ ) |
| मह्यते | अर्थ्यते | ( २४७ । १९ ) |
| एतद्द्वयः | एतद्वयः | ( ३५ । १४ ) |
| भक्षणार्थो | लक्षणार्थो | ( ४४७ । १ ) |

एतादृशा दोषाः शतश उपलभ्यन्ते । ते न केवलमनवधानतामूलाः । अज्ञानमपि यत्र तत्राविष्क्रियते । कदा कदा पङ्क्त्योऽपि गलिता दृश्यन्ते । यथा

| पत्रं | पङ्क्तयः |
|---|---|
| ३९ | १८–२० |
| ८७ | १४–१६ |
| ८७ | २५ |
| १०४ | २२–२५ |
| १५४ | २२–२६ |
| १५५ | १–५ |
| १५७ | ११–१२ |
| १७७ | २१–२२ |

| | |
|---|---|
| १७८ | १ |
| २१९ | १२-१३ |
| २८८ | ३-५ |
| २९३ | २०-२१ |
| ४१६ | २-४ |
| ५९१ | १-३ |

एतादृंशि गलितोदाहरणान्यन्यान्यपि सन्ति ।

कदा कदा मूलवृत्तावविद्यमाना अपि शब्दा वृत्तावन्तर्भाव्यन्ते । यथा

| पत्रं | पङ्क्तिः | |
|---|---|---|
| २७४ | १ | इत्यत्र ' अधि धन्वसु ' इत्यनन्तरं ' धनुःष्वविरोधिताः नभन्तां हिंस्यन्ताम् ' । |
| ४८० | ३-८ | अत्र ' प्रथमा० वा प्रायन् ' इत्यस्य स्थाने सायणभाष्यं दीयते । |
| ४४ | १६-१८ | ' वायुर्वा त्वा मनुर्वा त्वा ' इत्यस्य मूलं य० वा० सं० ९ । ७ दीयते । तत्र तु ' वातो वा मनो वा ' इति ऋच आरम्भः । |
| १५८ | १७-१८ | ' वक्ष्यति हि ' इत्यादेर्निरुक्तमूलं ७ । २८ । क. ख. पुस्तकयोस्तु १२ । २ । ८ अथवा १२ । १९ । अस्मिन् खण्डे १२ । १९ इत्यत्र ' तमकुर्वन् ' इति नास्ति । तस्मात्तत् अत्र क. ख. पुस्तकयोर्न पठितम् । |
| २७८ | २१-२२ | ' यदस्यु० ' इत्यस्य मूलं तैत्तिरीयसंहिता न तु ऋक्संहिता यस्मात्तत्र ' तज्जुषस्व यविष्ठय ' इति नास्ति ( ऋ० सं० ८ । १०२ । २१ ) । क. ख. पुस्तकयोः ' तज्जुषष्व यविष्ठय ' इति त्यक्तं तथा ' तैत्तिरीयके पठ्यते ' इति दुर्गवृत्तिस्थाः शब्दा अपि । |
| ४२० | २१-२३ | ' वाचस्पतये पवस्व वृष्णो अंशुभ्यां गभस्तिपूतः । देवो देवेभ्यः पवस्व येषां भागोऽसि ' ( य० वा० सं० ७ । १ ) ॥ एतत् ' रश्मयः पवित्रमुच्यन्ते ' इत्यस्योदाहरणं दीयते । अत्र पवित्रशब्दः क वर्तते । संस्करणकारैर्मैत्रा- |

यणीसंहिताया नामापि न श्रुतमिति स्पष्टम् । अहो धाष्टर्यम् ।

४३५ २०–२४ 'यदेनः०' इत्यस्य य० वा० सं० ३।४५ (३०।१७ इति प्रमादः) इति मूलं दीयते । किंतु तत्र 'अप्सः' शब्दो नास्ति ।

४५३ २०–२२ 'जातं यत्त्वा०' इत्यस्य मूलं नोपलभ्यते । क. ख. पुस्तकयोः 'ऋ० सं० ३।५१।८' इति दीयते । किंतु तौरयाणशब्दो न केवलं तस्यामृचि सर्वस्यामपि ऋक्संहितायां न वर्तते । अहो सत्यव्रतानां सत्यप्रियता । 'जातं यत्त्वा०' इति ऋगर्धमेव ३।५१।८ इत्यत्र ।

५१९ १४ 'आ नो भर०' इति ऋच्यपि तैर्धाष्टर्यं कृतं यत् 'धीमहि' इति पदं 'दधीमहि' इति विपरिणामितम् ।

९८ २१–२२ 'इति प्रभिन्नेषु०' इति श्लोको दुर्गाचार्यैः प्रतिपक्षहेतुनिराकरणजनितया अभिमानस्फूर्त्या रचितः विद्वद्भिः सत्यव्रतैर्गद्यवाक्यमिति लिखितः ।

११६ १६ 'अथ पुनर्यत्र० प्रायेण चिन्त्यते' इदं दैवतप्रकरणसंबद्धं वाक्यं 'अनुषङ्गतोऽन्यत् किंचित्' (पङ्क्तिः १४) इत्यस्यानन्तरं 'तदेतदेवं०' (पङ्क्तिः १४) इत्यस्य नैगमप्रकरणसंबद्धप्रकरणमिति कृत्वा स्थाप्यते । किमिदमज्ञानमनवधानता वा ।

कृमिपूर्णं बदरमिव दोषपूर्णमिदं संस्करणं सर्वथैव त्याज्यं नैवानुकरणीयम् । क. पुस्तकं ख. पुस्तकं दासवदनुकरोति । ख. दोषान्गुणत्वेन गृह्णाति । कदा कदा 'दृष्टव्ययत्वात्' इत्यत्र 'दृष्टाव्ययत्वात्' (५७।३) इति लिखित्वा स्वबुद्धिं प्रकाशयति । हस्तलिखितं न किंचनापि निरुक्तवृत्तिपुस्तकमेवं दोषरुग्णं भवेत् । अहो व्यर्थः प्रयासः सत्यव्रतजीवानन्दभट्टाचार्याणाम् ।

ग. च. ज. पुस्तकानि गुर्जरवर्गीयाणि ।

ग. हस्तलिखितम् । आनन्दाश्रमस्थम् । क्रमाङ्कः ६५८९ । अष्टमाध्यायस्यानन्तरं 'सं। १८७४ ना वैशाख शुद्ध ८ बुधे लि० ? नव-

माध्यायस्यानन्तरं ' सं । १८७४ ना ज्येष्ठ शुद्ध १४ बुधे श्रीभुज-नगरवीवाहमध्ये लि० ॥ नैरुक्तस्य भाष्यम् । वोरा श्रीकण्यार्जीकस्य पुस्तकोपरि पं । गोपीनाथ । ' पञ्चदशाध्यायस्यानन्तरं ' सं । १८७४ ना चैत्रवदि १ भौमवासरे लिं । त्रवाडि कचरासुत गोविन्दर्जायेन श्रीहाटकेश्वरसंनिधो ' । सप्तदशाध्यायस्यानन्तरं ' समाप्ता इयं निरुक्तभाष्यवृत्तिः । सं । १८७४ फाल्गुन शुद ५ प्रारंभ चैत्र शुद्ध समाप्तिः । वोरा कल्याणजीना पुस्तकोपरि लि० ' इति लेखनकालो दीयते । अध्यायस्याध्यायस्यान्ते खण्डपादमन्त्रग्रन्थसंख्या लिख्यन्ते । पूर्वषट्कस्यान्ते एकस्मिन्पत्रे सर्वा एताः संख्याः पुनर्लिखिताः । खण्डविभागः त. द. पुस्तकयोर्वर्तमानखण्डविभागानुसारी । अध्यायस्याध्यायस्य पत्राणि पृथक्संख्यायन्त । पूर्वषटकपत्रसंख्या ४३९ । उत्तरषट्कपत्रसंख्या २४६ । द्वयोः षट्कयोः ६८५ । अकारः 'ऋप' इत्येवं लिख्यते । लेखनपद्धतिः क्वचिदाधुनिकगुर्जरलेखनसदृशी । स्पष्टाक्षरा परिशिष्टाध्याययोर्वृत्तिर्नवर्तते ।

ज. हस्तलिखितम् । डेक्कनकालेजस्थमधुना भाण्डारकरसंशोधनसंस्थायां वर्तमानम् । क्रमाङ्कः $\frac{११}{१८७९-८०}$ । सर्वं ४६४ पत्रात्मकम् । अध्यायस्याध्यायस्य भिन्नं संख्यानं नास्ति नापि षट्कस्य षट्कस्य । क्वचिदध्यायान्ते मन्त्रसंख्या दीयते । ' अष्टमोऽध्यायः ' इत्यस्यानन्तरं ' ग्रन्थसंख्याऽस्मिन्नध्याये ' इति लिख्यते किंतु संख्या न दीयते । नवमाध्यायस्यानन्तरं ' अस्मिन्नध्याये व्याख्यात ऋच ७० ग्रन्थसंख्या ' इति । ' अस्मिन्नध्याये ' ( दशमाध्याये ) ऋक्संख्या ९८ ग्रन्थसंख्या १२०० ' । ' एकादशोऽध्यायः । ग्रन्थसंख्या १५५६ । व्याख्याता ऋचः १७० एवं अध्यायषट्के ४६० । संवत् । १८०२ ना पोषवदि १० रवौ लंखीतं ' । उत्तरषट्कान्ते ' संवत् १८०२ वर्षे माघवद ⠀॥- रवौ लखीतं ।

ग. ज. पुस्तकयोर्वर्तमानाः प्रमादाः प्रायशः समानाः । यथा ।

| शुद्धं | अशुद्धं | |
|---|---|---|
| वक्ष्यति | लक्ष्यते | ( ११ । २१ ) |
| लक्ष्यते | वाक्यते | ( २० । १३ ) |
| शेवधि° | सेवाधि° | ( १४२ । १४ ) |
| आह्रियते | आह्वयते | ( २४३ । १८ ) |

| | | |
|---|---|---|
| कुट्टयतः | कुहयतः | ( ३५२ । १५ ) |
| °रप्यनवगमः | °रथनवगमः | ( ३८५ । १९ ) |
| श्वस्तनं | दस्तनं | |
| सिषाधयिषितत्वात् | सिष.धयिष्टितत्वात् | |
| पुनः सूत्र° | पुनः स्तत्र° | |

किंतु एकमपरस्यानुकरणमिति वक्तुं न शक्यते यस्मात् ज. पुस्तके वर्तमानाः केचित्प्रमादाः ग. पुस्तके न दृश्यन्ते ग. पुस्तके च वर्तमानाः केचित् ज. पुस्तके । पत्रं ८ पाठभेदः ४ अयं प्रामादिक-पाठो ज. पुस्तके एव वर्तते ।

च. हस्तलिखितम् । आनन्दाश्रमस्थम् । क्रमाङ्कः ३५७९ । अतीव जीर्णम् । अध्यायस्याध्यायस्य प्रायशः पृथक्पत्रसंख्यानम् । सर्वग्रन्थस्य पृष्ठसंख्या ४०४ । अष्टमाध्यायस्यान्ते ' गङ्गाधरोऽस्मिँल्लिखिते तु भाष्ये व्यासस्य पूजां महतीं चकार । वंशमान्तरागस्य विवृत्य नेत्रे पारुष्यमुक्त्वा स्वगृहं जगाम ' । नवमाध्यायस्यान्ते ' अस्मिन्नध्याये व्याख्याता ऋचः ७० । संवत् षोडशशतसप्ताधिकत्रिंशत्तमे ( १६३७ ) संवत्सरे वैशाखस्य सिते पक्षे त्रयोदश्यां रविवासरे । जगन्नाथेनायं निरुक्ताध्यायो स्वहस्तेन धर्मार्थं लिखित्वा प्रदत्ता ' । कलात्तमायालवकात्तमूर्तिः कलक्कणद्वेणुनिनादरम्यः । श्रितो हृदि व्याकुलयंस्त्रिलोकीं श्रियेऽस्तु गोपीजनवल्लभो वः ।। १ नूनमच्युतकटाक्षपातनं कारणं भवति भक्तिरञ्जसा । तच्चतुष्टयफलाप्तये ततो भक्तिमानधिकृतो हरौ गुरौ ' । एकादशाध्यायान्ते ग्रन्थसंख्या १५५६ अस्मिन्नध्याये व्याख्याता ऋचः १७० अध्यायषट्के ऋच ४६० पूर्वार्धे ऋक्संख्या इति । संवत् १६३७ वर्षे कार्तिकवदि ४ बुधे श्रीवृद्धनगरे भटश्रीगङ्गाधरेण लिखितम् ' । चतुर्दशाध्यायान्ते ' अमुमध्यायं द्विवेदि श्रीदुर्कीकासूनुर्दीक्षिणात्यभट्टश्री गंगाधरस्यावलोकनार्थं श्रीविश्वात्मनः प्रीत्यर्थं च महादेवोऽलेखीत्' । अष्टादशाध्यायान्ते ' स्वस्तिश्रीनृपविक्रमसमयातीतसंवत् १६३७ वर्षे कार्तिकवदि २ दिने । यादिसं पुस्तकं द्रष्ट्वा तादिशं लिषितं मया । यदशुद्धमशुद्धं वा मम दोषो न विद्यते ' । अन्त्यपत्रस्य पश्चाद्भागे ' यज्ञेश्वरदीक्षितवडलीकरस्येदं पुस्तकं । मोडक नारायणभट्टस्येदं ' । लेखनपद्धतिर्गुजरी । पश्चान्मात्रा । ' उपसर्गः ' निर्गमनं ' ' मार्गाणां ' एते शब्दाः ' उप-

सर्गः ' निर्ग्रमनं ' ' मार्ग्राणां ' एवं लिख्यन्ते । 'ख' स्थाने' 'प' ष-स्थाने 'ख' च क्वचित् । सर्वं पुस्तकं नैकेन लिखितम् । त्रिचतुराणि हस्ताक्षराणि दृश्यन्ते । ग. च. ज. पुस्तकानि गुर्जरवर्गीयाणीत्युक्तमेव । तेषु केचित्साधारणाः प्रमादाः । यथा ' निग्रमणद्वारं ' ' पुनर्णवा ' ' पुन आत्मा ' ' उपमीयेतेऽश्विनौ ' ' पुरैवोषधि ' । सर्वेषु पुस्तकेष्विदं विश्वसनीयतमम् । कदा कदा भिन्नपाठा अपि वृत्तिमध्ये लिख्यन्ते तेन लेखकः प्राज्ञ आसीदिति भाति । अस्य शुद्धीकरणे द्वौ यत्नावास्ताम् । प्रथमो यत्न आवश्यकः समीचीनश्च । द्वितीयः केनचिदज्ञेन ट. सदृशपुस्तकानुरोधेन कृतः । सोऽनावश्यकः । शुद्धीकरणं कदा कदा प्रान्तेषु पङ्क्तीनामङ्कान् दत्त्वा क्रियते । कदा कदा मूलाक्षराणि मस्या दूष्यन्ते तेन मूलपाठोऽदर्शनीयो भवति । महती हानिश्च जायते । इदमशुद्धीकरणमेव । च. पुस्तकं प्रायः शुद्धम् । किंतु तत्रापि केचिद्विस्मयकारका दोषा दृश्यन्ते । माहाभाग्यशब्दः महाभाग्य इति प्रायो लिख्यते । ' प्रतिग्रहीतृ ' 'प्रतिगृहीतृ' एवम् । ' मैत्रायणी ' इति विशिष्टायाः यजुःसंहिताया नाम । तदज्ञानात् ' मैत्रायणीये ' इतिशब्दो ' मैत्रावरुणीयके ' इति परिगम्यते । ट. सदृशपुस्तकानुरोधेन प्रान्ते कदा कदा सायणभाष्यं लिख्यते ।

मूलवृत्तिः कीदृश्यासीदित्यस्मात् पुस्तकाज्ज्ञायते । अज्ञेनाशुद्धीकरणात्प्राक् दुर्गवृत्तिः किंस्वरूपासीदिति जिज्ञासातृप्त्यर्थं च.सदृशपुस्तकमवश्यमन्वेषणीयम् । तेन महत्कार्यं संपादितं स्यात् । ग. च. ज. पुस्तकेषु विद्यमानं निरुक्तमूलं छ. त. द. सदृशं खण्डविभागोऽपि तादृश एव ।

च. पुस्तकस्य पूर्वषट्कं प्रायः शुद्धं न तथोत्तरषट्कम् । इदमुत्तरषट्कं प्रचुरप्रमाददूषितम् केनचिदसंस्कृतज्ञेन लिखितम् । ते प्रमादा उत्तरषट्कप्रस्तावनायां दर्शयिष्यन्ते ।

पूर्वषट्के यत्र तत्र ट. सदृशपुस्तकानुरोधेन शोधाः कृताः । ते प्रायशोऽज्ञानमूलाः । कदा कदा च. पुस्तकानुरोधेन ट. पुस्तके पाठशुद्धिः ट. पुस्तकानुरोधेन च च. पुस्तके । यथा ।

२९.३ । ८ ट. °मानंत्रैत्र° न् त । च.° मान् तंत्रैव° अ ।

३११ । २६ ट. प्रैयात° आ । च. आँयात° प्र ।

३१३ । ५ ट. ब्रवीषि° मि । च. ब्रवीमि° षि ।

३३५ । २१ ट. प्रकीर्णः' आ । च. आकीर्णः° प्र ।

ट. हस्तलिखितम् । आनन्दाश्रमस्थम् । क्रमाङ्कः ७२'१६ । अध्यायस्याध्यायस्य पृथक्पृथगङ्कनम् । पूर्वषट्कस्य पत्रसंख्या ३९७ । उत्तरषट्कस्य २११ । अष्टमाध्यायस्यान्ते ' अष्टमोऽध्यायो भट्टगोविंदेन लिखितः ' । दशमाध्यायान्ते ' धच्चखोहिंबिमसिगिपांल्हतपोतआषाष्यं ' ( अस्यार्थो न ज्ञायते ) । एकादशाध्यायान्ते ' अस्मिन्नध्याये व्याख्याता ऋचः १७० एवमध्यायषट्के ऋचः ४६० ग्रन्थसंख्याऽस्याध्यायद्वयस्य १५९६ । संवत् १८ ( ! ) शके १६८४ !) ' । पञ्चदशाध्यायस्य पञ्चत्रिंसत्तमे पत्रे ' खोहिंबीशं ' ( दुर्बोधं ) । अस्मिन् पुस्तके च. सदृश-पुस्तकात् = एवं चिह्नं मूले कृत्वा प्रान्ते पाठा लिख्यन्ते । कासांचि-दृचां सायणभाष्यं स्कन्दस्वामिभाष्यं वा द्वयं वा कदा कदा उवटभाष्यं यजुर्भाष्यमन्यत्किमपि भाष्यं निघण्टुभाष्यं वा तैत्तिरीयमैत्रायणीब्राह्मणा-वतरणानि कोशमन्त्रादिस्मृतिमच्चभागवतादिपुराणावतरणानि च तथा प्रायशः सायणभाष्यानुरोधेन कठिनशब्दानामर्थाः प्रान्ते दीयन्ते । एतेषां कानिचिदवतरणानि च. पुस्तकेऽपि प्रान्ते लिख्यन्ते । निरुक्ते वर्तमानाना-मवतरणानां कदा कदान्यसंहितास्थं मूलमपि दीयते । एवमिदं पुस्तकं भृशमुपयुक्तम् । किंतु लेखकोऽज्ञ आसीदिति यत्र तत्र भाति । अशु-द्धानि बहूनि वर्तन्ते । तेषां शुद्धीकरणे प्रायशो न कोऽपि यत्नः कृत आसीत् । ऋक्षु कदा कदान्यत्रापि ' ल ' स्थाने ' ळ ' लिख्यते । यथा । मण्डळान्तरे मण्डळे स्थूळं स्थूळेन । कदा कदा पाठा मिश्री-क्रियन्ते । यथा । यतथावश्यं = यथावश्यं + तथावश्यं । अतत्र = अत्र + तत्र । विशिशेषार्ष्यार्षे = विशिष्यार्षे + विशेषार्षे । लेखनप-द्धतिः प्रायः स्पष्टा ।

घ. हस्तलिखितम् । आनन्दाश्रमस्थम् । क्रमाङ्कौ ५१४२—५१४३ । अध्यायस्याध्यायस्य पृथक्पृथगङ्कनम् । पूर्वषट्के २१४ उत्तरषट्के १७२ पत्राणि । ट. पुस्तकस्येदमक्षरशोऽनुकरणम् । ट. पुस्तके ' अष्टमोध्यायो भट्टगोविन्देन लिखितः ' दशमाध्यायान्ते ' धच्च० आषाष्यं ' ' संवत् १८४० ' । घ. पुस्तके तथैव । लेखकस्य मौर्ख्यमुपहासास्पदम् । ट. पुस्तके कदा कदा लेखनप्रमादाः शुद्धीक्रियन्ते । तत्रत्यचिह्नानामज्ञाना-त्किमपि दुर्बोधं लिख्यते । यथा । ' पदप्रयोगस्य ' इति वृत्तिः ।

ट. पुस्तके ' पप्रदेयोगस्य ' । घ. पुस्तके ' पप्रदेयोगस्य ' । ट. पुस्तके ' एतया त्रि त्रिष्टुभा ' । ' त्रि ' प्रामादिकमक्षरं त्याज्यमिति चिह्नस्यार्थः । तदज्ञानात् ' त्रि ' इत्यक्षरस्य स्थाने ट. पुस्तके पत्रस्योपरितनभागे लिखितं वेदभाष्यं लेखनीयमिति मनसि कृत्वा सर्वं तत् ' एतया ' इत्यास्यानन्तरं ' त्रिष्टुभा ' इत्यस्य प्राग्लिख्यते । अहो परमावधि मौर्ख्यम् । ट. पुस्तकं द्वित्रिवारं शुद्धीकृतम् । घ. पुस्तकं द्वितीयशुद्धीकरणात्प्राग्लिखितमिति तत्र तत्र स्पष्टम् ।

झ. हस्तलिखितम् । एतत्पुस्तकमन्तरेण न किंचिद्वक्तुं शक्यते यस्मात्तन्मत्समीपेऽधुना नास्ति । घ. ट. सदृशमेव तत्पुस्तकम् ।

घ. झ. ट. पुस्तकेषु भाष्यप्रतीकानि ' सूत्राणि ' इति कदा कदोच्यन्ते ।

घ. ट. पुस्तकयोर्वर्तमानानामशुद्धानामुदाहरणानि ।

| शुद्धं | अशुद्धं | |
|---|---|---|
| अथापीदं | अथापीतं | ( ९९ । १५ ) |
| व्यवस्थितः | व्यऽपवस्थितः | ( ८० । १४ ) |
| ज्ञापकं | ज्ञाः पकं | ( १०५ । २२ ) |
| निरुद्धाः | निः रुद्धाः | ( १७९ । १३ ) |

ठ. हस्तलिखितम् । पूर्वषट्के ३८९ पत्राणि । उत्तरषट्के २०२ अष्टादशाध्यायस्य च ८ । षोडशाध्यायस्य आद्ये द्वे पत्रे अन्त्यानि च ४४ खण्डस्यानन्तरं कानिचित्पत्राणि नष्टानि ।

षष्ठाध्यायस्यान्ते ' शके १७९८ धातृनामसंवत्सरे वैशाख व॥ ११ शुक्रे रात्रौ प्रथमप्रहरी समा० इदं पुस्तकं रामचन्द्र दीक्षित अयाचितोपनामक श्रीनृसिंहवाडिग्रामस्थस्य हस्ताक्षरं कुरवलिग्रामस्थगणेशनारायणज्योतिषोपनामकश्रीसिद्धेश्वरसंनिधस्थ ' । नवमाध्यायस्यान्ते ' अस्मिन्नध्याये व्याख्यात ऋक्संख्या ७० । शके १७९८ धृनामसंवत्सरे ज्येष्ठ शु० १४ इदं पुस्तकं रामचन्द्र दीक्षितोपनामक कवेश्वर । हस्ताक्षरं गणेश नारायण ज्योतिषि कुरवलिग्रामस्थस्य । ग्रन्थसंख्या १६३२ ' । दशमाध्यायान्ते ' संवत् १९१२ शके ' । त्रयोदशाध्यायान्ते ' शके १७९८ धातृनाम० ज्ये० कृ० ५ ' । चतुर्दशाध्यायान्ते ' इदं पुस्तकं भालचन्द्र दीक्षित कवेश्वरात्मज रामचन्द्र दीक्षितस्य हस्ताक्षरं गणेश नारायण ज्योतिषि करवलिरवलिग्रामस्थ स्वार्थाय वा परोपकाराय

लिखितं मुकाम इंदुरग्राम । शके १७९८ धातृनाम संवत्सरे ज्येष्ठ वद्य १३ भौमवासरे इदं पुस्तकं समाप्तम् । यादृशं पुस्तकं० भग्नपृष्ठ० ' इत्यादि श्लोकद्वयम् । पञ्चदशाध्यायान्ते ' शके १७९८ धातृनामसंवत्सरे आषाढ शुक्ल १० मन्दवासरे तद्दिने अयमध्यायं तट्टु इत्युपनाम्ना रंगनाथस्य ज्येष्ठसूनुना नारायणेन इंदूराख्यपुर्यां लिखितं ' । सप्तदशाध्यायान्ते 'इदं पुस्तकं भालचन्द्र दीक्षितात्मज रामचन्द्र दीक्षित कवेश्वरस्य हस्ताक्षर नारायणभट्टात्मज गणेशभट्ट ज्योतिषि कुरवलिकरेण । शके १७९८ धातृनामसंवत्सरे अषाढ शु० १४ सौम्यवासरे इदं पुस्तकं समाप्तिमगमत् । इंदुरपट्टने लिखितं' । अष्टादशाध्यायान्ते ' इदं पुस्तकं रामचंद्र दिक्षित अयाचितोपनामक श्रीनृसिंहवाडीग्रामस्थस्य हस्ताक्षर गणेश नारायण ज्योतिषि कुरवलिकर शके १७९८ धातृनामसंवत्सरे अषाढ व ॥ ४ सोमवार समाप्तिमगमत् । पङ्क्तिसंख्या ६६० ग्रंथसंख्या ९९०'।

लेखनमतीव शीघ्रं तस्माच्च कारणाद्दुर्दर्शनम् । शीघ्रतया सावधानदृष्टेरभावः । कति शब्दाः कति शब्दसमुदायाः कति पङ्क्तयोऽपि गलिताः । पत्रमेकमधस्ताद्भागमुपरि कृत्वा लिखितम् । यत्र तत्र उद्वेजनदर्शका उद्गारा अपि लिखिताः । यथा । श्रीलक्ष्मीकान्ताय नमः । श्रीरेणुकादेव्यै नमः । लक्ष्मीसहितगोपालकृष्णाय नमः । प्रारंभी विनती करू गणपती इत्यादिः महाराष्ट्रीयश्लोकोऽपि । असंस्कृतज्ञतया रुच्यभावाज्जुगुप्सया च सहस्रशः प्रमादाः । यथा ।

| शुद्धं | अशुद्धं |
|---|---|
| टीकायां | टियाकायां |
| प्रकाराः | प्रकाशः |
| लोमानि | लोमाणी |

इदं पुस्तकं मदर्थमिंदुरनिवासिभिः सरदार मुळ्ये इत्येतैः संपादितम् ।

ड. हस्तलिखितम् । आनन्दाश्रमस्थम् । १०९ क्रमाङ्कः । पूर्वषट्के २२४ पत्राणि । प्रथमोऽध्यायो नष्टः । उत्तरषट्के त्रयोदशस्यान्त्यानि पञ्च पत्राणि नष्टानि । तान्यूनीकृत्य शिष्टानि पत्राणि १७० । सप्तमाध्यायान्ते ' श्रीसंवत् १९०६ शके १७ ' । अष्टमाध्यायान्ते ' संवत् १९६ । इदं पुस्तकं विठ्ठलेन लिखितं ' । नवमाध्यायान्ते ' अस्मिन्नध्याये व्याख्यातश्लोकसंख्या ७० । संवत् १८२४ शके

१७९९ भाद्रपदशुक्ल ७ सप्तम्यां तदिने इदं पुस्तकं चित्तपावनज्ञातीय पराञ्ज्ये इत्युपनाम्ना आपाभट्टस्य सुतेन अण्णाभट्टेन काश्यां लिखितं ' । दशमाध्यायान्ते ' संवत् १९०६ ' । एकादशस्यान्ते ' अस्मिन्नध्याये व्याख्यात ऋचः १७० । एवमध्यायषट्के व्याख्यातऋक्संख्या ४६० । संवत् । शके । चतुर्दशाध्यायान्ते ' सवत् १९०६ तथा शालिवाहन शके १७७१ दुर्मतिनामसंवत्सरे कार्तिकशुक्लनवम्यां सौम्यवासरे तद्दिन इदं पुस्तकं श्रीकाश्यां समाप्तं ' । षोडशाध्यायान्ते ' संवत् १९६ ' । सप्तदशाध्यायान्ते ' संवत् १९६ शके १७७१ दुर्मतिनामसंवत्सरे इदं पुस्तकं समाप्त । विठ्ठलन लिखितं । काश्यां वाराणसीतटे ' । अष्टादशान्ते ' संवत् १९६ शके १७७१ दुर्मतिनामसंवत्सरे इदं पुस्तकं विठ्ठलेन लिखितं ' ।

ड. पुस्तकस्य लेखनं प्रायशो रुचिरम् । प्रमादाः ठ. पुस्तके वर्तमानेभ्योऽल्पतराः । न तादृगनवधानतादोषः । जुगुप्साया नामापि नास्ति । ये दोषा वर्तन्ते तेऽज्ञानमूला अनुलिखितपुस्तकमूलाश्च । ॐ नमो भगवते वासुदेवाय ' इति पुनःपुनर्लिख्यते । ठ. ड. पुस्तकयोर्मूलमेकमासीदिति भाति यस्माद्बहवः प्रमादा द्वयोः समानाः । यथा ।

| शुद्धं | अशुद्धं |
|---|---|
| प्रुष स्नेहने | प्रुष स्नेहनो |
| चतुर्थाध्याये | चतुर्थोध्याये |
| प्रकारेण | प्रकरिण |
| एवमहमपि | एवमहानपि |

नवमाध्यायस्यान्ते अध्वरशब्दस्य व्युत्पत्तिः षष्ठाध्यायवृत्तौ वर्तमाना लिख्यते न वा उ एतन्म्रियसे इत्यस्य सायणभाष्यं च । तच्च भाष्यं षष्ठाध्याये ट. पुस्तके प्रान्ते लिख्यते । ट. पुस्तके प्रान्ते लिख्यमानं सर्वं ठ. ड. पुस्तकयोर्वृत्तावन्तर्भाव्यते । पाठभेदेष्वेतत्तत्र तत्र प्रदर्शितम् ।

घ. ट. ठ. ड. एतेषु केचित्समाना दोषा दृश्यन्ते । यथा ।

| शुद्धं | अशुद्धं |
|---|---|
| व्यवहार॰ | व्यहार॰ |
| नातिकठिनस्य | नातिकठिणास्य |
| नातिकठिने | नातिकठिणे |

| | |
|---|---|
| आर्जवेन | आर्जवने |
| उदात्तं | उप्तत्तं |
| क्षेप्तुं | क्षप्तुं |
| षोडशाहुतयो | षोडशतपर्थे हुतयो |
| गतो | गत |

क. ख. घ. झ. ट. ठ. ड. एकवर्गीयाणि पुस्तकानि । सर्वेषु ( पत्रं १३२ पङ्क्तिः १७ ) 'तत्र संख्यापूर्वो द्विगुः' इत्यस्य स्थाने 'पाणिनेः सूत्रं संख्यापूर्वो द्विगुः' 'चाथ द्वंद्वः' ( पङ्क्तिः १८ ) इत्यत्र 'सूत्रं चाथ द्वंद्वः'। एतादृशाः केचित्समानाः पाठभेदाः सन्ति ।

क. ख. घ. ट. ठ. ड. पुस्तकेषु एकादशाध्यायस्यान्ते 'यावन्तो मन्त्राः सर्वशाखासु तेषु यानि गुणपदानि लक्षणोद्देशतस्तानि सर्वाण्येव व्याख्यातानि'। अस्यानन्तरं घ. ट. ठ. ड. पुस्तकेषु 'अस्मिन्नध्याये व्याख्याता ऋचः १७० । एवमाध्यायषट्के ऋचः ४६० ग्रन्थसंख्याऽध्यायद्वयस्य १५५६ । संवत् १८४० ( ट. १८४ शके १६५४ ) श्लोक २००० '।

क. ख. घ. झ. ट. ठ. ड. महान् वर्गः । तेषामन्तर्वर्गाः 'क. ख.' 'घ. झ. ट.' 'ठ. ड.' इति । तथा 'ग. च. ज.' इत्येको वर्गः । अन्तर्वर्गौ 'ग. ज.' 'च' इति च । विश्वसनीयत्वे पुस्तकानां क्रमः च. ट. ग. ज. घ. झ. ख. क. ठ. ड. ।

प्रतिपत्रं पाठभेदा दत्ताः । तेषु कानिचिच्चिह्नान्युपयुक्तानि । तेषामर्थः । °भूतविनाशस्थितिहे° ( पत्रं १४९ पङ्क्तिः २६ ) इति पाठभेदः । 'भूतस्थितिविनाशहेतुं' इति स्वीकृतपाठः । पाठभेदे 'विनाशस्थिति' इति व्यत्यासो वर्तते । स दर्शनीयः । तदर्थं 'भूत' इति पूर्वमक्षरद्वयं 'हे' इत्यनन्तरीयमक्षरं पठ्यत एवं° चिन्हं च दीयते एतस्मिन्नेवाक्षरसमुदाये पाठभेद इति दर्शनार्थम् । कदा कदा पूर्वं वा पश्चाद्वा सकृदेव तादृशं चिह्नं दीयते । यथा । °त्परिहाराय ( पत्रं १४८ पङ्क्तिः २८ ) । '°त्परिहाय' इति मूलम् । ददाति° दत् ( पङ्क्तिः २८ ) । अत्र 'दाति' इत्यस्य स्थाने 'दत्' पठनीयमिति == चिह्नस्यार्थः । कदा कदा महत्यक्षरसमुदाये बहूनां पृथक्स्थितानामक्षराणां स्थाने आदेशः

कर्तव्यः । तत्र यस्याक्षरस्य स्थाने आदेशः कर्तव्यस्तस्योपरि = एतच्चिन्हं कृत्वा तदक्षरसमीपे एव ( ) एतयोश्चिन्हयोर्मध्ये आदेशो लिख्यते । यत्रादेशो न दीयते तत्र तदक्षरं त्याज्यमिति एतादृशचिह्नस्यार्थः । कदा कदा द्वयोरक्षरयोः शब्दयोर्मध्ये ˇ एतच्चिन्हं क्रियते । तस्यार्थः । अक्षराणां शब्दानां वा पश्चाल्लिखितान्यक्षराणि चिन्हस्थाने पठनीयानि । कदा कदा ' °चिषं ज्ये० श्रुत्तमः ' ( ३२३ । २४ ) इति वर्तते । तस्यार्थः । घ. ट. पुस्तकयोः सर्वा ऋक् न पठ्यते । किंतु ' शीरं पावकज्योतिषं ज्ये० श्रुत्तमः ' इत्येव ।

---

## प्रयुक्तानामाङ्गलचिन्हानामर्थाः ।

' ' अनयोश्चिन्हयोर्वर्तमानोऽक्षरसमुदायोऽवतरणम् ।
अथवा । ' निरुक्तमूलस्थशब्दाः ' इति ज्ञापनार्थम् ।

( ) अथवा [ ] अवतरणमूलानि निरुक्तस्थलानि निरुक्तवृत्तिस्थलानि च दर्शयितुम् ।

== अयमस्यार्थ इति ज्ञापनार्थम् ।

— पङ्क्त्यन्ते अपूर्णः शब्द इति ज्ञापनार्थम् ।

## संक्षिप्ताक्षराणामर्थाः ।

| | |
|---|---|
| अ० सं० अथवा अथ० सं० | अथर्वसंहिता |
| अम० अथवा अमरः | अमरकोशः |
| आप० श्रौ० | आपस्तम्बश्रौतसूत्रम् |
| आश्व० गृ० | आश्वलायनगृह्यसूत्रम् |
| आ० श्रौ० अथवा आश्व० अथवा आश्व० श्रौ० | आश्वलायनश्रौतसूत्रम् |
| ऋ० अथवा ऋ० सं० | ऋक्संहिता |
| ऋ० प्राति० | ऋक्प्रातिशाख्यम् |
| ऐ० आ० | ऐतरेयारण्यकम् |
| ऐतरे० उप० | ऐतरेयोपनिषत् |
| ऐ० ब्रा० | ऐतरेयब्राह्मणम् |
| कपि० सं० | कपिष्ठलसंहिता |

| | |
|---|---|
| काठ० सं० | काठकसंहिता |
| कात्या० श्रौ० | कात्यायनश्रौतसूत्रम् |
| कौषी० आ० | कौषीतक्यारण्यकम् |
| कौ० ब्रा० अथवा कौषी० ब्रा० | कौषीतकिब्राह्मणम् |
| गर्भ० उ० | गर्भोपनिषत् |
| गोपथब्रा० | गोपथब्राह्मणम् |
| गोभि० गृ० | गोभिलगृह्यसूत्रम् |
| गौ० ध० अथवा गौत० धर्म० | गौतमधर्मसूत्रम् |
| छा० उ० | छान्दोग्योपनिषत् |
| जै० सू० अथवा जै० न्या० | जैमिनिसूत्रम् |
| ताण्ड्य० ब्रा० | ताण्ड्यमहाब्राह्मणम् |
| तै० आ० | तैत्तिरीयारण्यकम् |
| तै० ब्रा० | तैत्तिरीयब्राह्मणम् |
| तै० सं० | तैत्तिरीयसंहिता |
| धा० | धातुपाठः |
| निघ० | निघण्टुः |
| नि० अथवा निरु० | निरुक्तम् |
| पा० | पाणिनेरष्टाध्यायी |
| पा० शि० | पाणिनीयशिक्षा |
| फि० सू० | फिट्सूत्राणि |
| बृ० उ० अथवा बृह० उ० | बृहदारण्यकोपनिषत् |
| बृ० अथवा बृह० अथवा बृहद्दे० | बृहद्देवता |
| भ० गी० अथवा भग० गी० | भगवद्गीता |
| मनु० अथवा म० सं० | मनुस्मृतिः |
| महा० ना० | महानारायणीयोपनिषत् |
| मान० गृ० | मानवगृह्यसूत्रम् |
| मान० श्रौ० | मानवश्रौतसूत्रम् |
| मै० सं० अथवा मैत्रा० सं० | मैत्रायणीसंहिता |
| य० वा० सं० अथवा वा० सं० | वाजसनेयिसंहिता |
| याज्ञ० | याज्ञवल्क्यः |
| वासि० धर्म० | वासिष्ठधर्मसूत्रम् |

| | |
|---|---|
| श० अथवा श० ब्रा० अथवा शत० ब्रा० | शतपथब्राह्मणम् |
| श्वेता० उप० | श्वेताश्वतरोपनिषत् |
| सत्या० श्रौ० अथवा हिर० | हिरण्यकेशिश्रौतसूत्रम् |
| श्रौ० अथवा हि० श्रौ० सा० सं० | सामसंहिता |

ॐ तत्सद्ब्रह्मणे नमः ।

# दुर्गाचार्यकृतटीकासमेतं

# निरुक्तम् ।



तत्र पूर्वषट्कम् ।

अथ प्रथमोऽध्यायः ।

"ॐ[1] समाम्नायः समाम्नातः । स व्याख्यातव्यः" । अथ किमर्थं वेदो वेदाङ्गानि च प्रवृत्तानि[2] । सर्वकामप्राप्त्यादिर्मोक्षान्तः पुरुषार्थो वक्तव्य इति वेदः प्रवृत्तः । तत्परिज्ञानाय वेदाङ्गानि प्रवृत्तानि । तानि पुनरमूनि प्रतिनियतार्थविषयवृत्त्या वेदमास्कन्दन्ति । तद्यथा । शिक्षा तावत् "आत्मा बुद्ध्या समर्थ्यार्थान्[3]" (पा० शि० ६) इत्येवमादिना क्रमेण स्वरव्यञ्जनाभिव्यक्तिलक्षणं पूर्वाह्णमध्यंदिनापराह्णेषु यथाध्येयमधीतस्य च स्वरसौष्ठवयुक्तस्य[4] यज्ञकर्मणि[5] प्रयोग इत्येवमाद्यर्थजातं निरुवाच । तथा ह्यधीतः प्रयुज्यमानश्चापूर्वाङ्गभावाय नान्यथेत्येवमर्थवत्ता शिक्षायाः । एवं ह्याह । "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्" (पा० शि० ५२) इति । वेदाध्ययनानुषङ्गतश्चेतिहासपुराणशास्त्राणां लौकिकानां ग्रन्थविस्तररचनानामतएवाध्ययनपरिज्ञानम् ।

वेदवेदाङ्गप्रयोजनं

१. शिक्षा

शिक्षाधिगताध्ययनविधेर्वेदस्याक्षरकोशपादव्यवस्थालक्षणपरिज्ञाने[6] छन्दो-

५ १० १५

---

१ क. ख. ग. ज. घ. ढ. श्रीगणेशायनमः । आदितः पाणिनीयं तु (ग. च) शिक्षा ज्योतिस्तत (ग. ज्योतिः कल्पः) श्छन्दः । पञ्चाध्यायी निघण्टोश्च निरुक्तमुपरि स्थितम् ॥ १ ॥ प्रणम्य तत्प्रवक्ष्यामि रुद्रायामिततेजसे । स मे दिशतु सुप्रीतो वाग्वियोः शिष्टसंमतिम् ॥ २ ॥ समाम्ना°; च. पुस्तके इदं श्लोकद्वयं पत्रस्योपरितनभागे लिखितं क्षेपकमिव भाति°; ठ. पुस्तके इमौ श्लोकौ व्यत्यस्तौ. २ घ. झ. 'च प्रवृत्तानि' नास्ति; ट. °ङ्गानि ~ सर्व° च प्रवृत्तानि. ३ क. ख. ठ. समेत्यार्थान्. ४ घ. °सौष्ठवाद्युक्तस्य°; झ. °सौष्ठयुक्तस्य°; ट. °सौष्ठवाद्युक्तस्य° वयु°; ठ. सौष्ठवाद्युक्तस्य. ५ च. यज्ञे कर्मणि°. ६ ग. ज. व्यवस्थापरिज्ञाने°.

२० २५

विचितिराद्रियते । इयताक्षरकोशेनेयद्भिः पादैर्गायत्रीयद्भिस्त्रिष्टुबिति । न ह्यविज्ञातच्छन्दसा प्रयुज्यमानो मन्त्रः कर्मण्यर्धुकः स्यात् । एवं ह्याह । " यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्ते वा पद्यति प्र वा मीयते पापीयान्भवति यातयामान्यस्य च्छन्दांसि भवन्ति " ( आर्षेयब्राह्मणम् ) इति । अतोऽनुषङ्गतो वक्त्रादिलक्षणपरिज्ञानं लोकेऽत्र लौकिकमिति ह्याह ।

सम्यगधीतस्य परिज्ञातच्छन्दसोऽमुष्मिन्कर्मणि विनियोग इति कल्प आद्रियते । तद्यथा । इषे त्वेति च्छिनत्ति । ऊर्जे त्वेत्यनुमार्ष्टीति । न हि कल्पानभिज्ञः प्रयोगान्विजानीयादिति ।

श्रुतिचोदितकर्माङ्गभूतकालपरिज्ञानाय ज्योतिषम् । अनुषङ्गतश्चातोऽपि प्राणिनां शुभाशुभकर्मफलविपाककालपरिज्ञानम् ।

व्याकरणाद्विभक्त्यादिपरिज्ञानम् । एवं ह्याह " प्रयाजाः सविभक्तिकाः कर्तव्याः " । तथा चोहं दर्शयति " संख्यादयो न विवर्धन्ते " इति । न च व्याकरणानभिज्ञो विभक्तीर्जानीयादूहितुं वा मन्त्रान् । तत एव चानुषङ्गतो लोके लौकिकलक्षणपरिज्ञानम् । एवं छन्दस्येवं भाषायामिति प्रविभागो नान्तरीयकोऽनन्तरेण व्यवस्थितः ।

अत उक्ताध्ययनविधेरुक्तच्छन्दःप्रविभागस्योक्तविनियोगस्योपलक्षितकर्माङ्गभूतकालस्योपदर्शितलक्षणस्यैतैरङ्गैर्वेदस्यार्थपरिज्ञानविषये निरुक्तं नामेदमङ्गमारभ्यते । प्रधानं चेदमितरेभ्योऽङ्गेभ्यः सर्वशास्त्रेभ्यश्चार्थपरिज्ञानाभिनिवेशात् । अर्थो हि प्रधानम् । तद्गुणः शब्दः । स चेतरेषु व्याकरणादिषु चिन्त्यते । कल्पे खल्वपि विनियोगश्चिन्त्यते स च पुनरर्थाभिधानवशेन मन्त्राणाम् । यो यमर्थमभिधानेन संस्कर्तुं समर्थो मन्त्रः स तत्र विनियुज्यते । तदुक्तं " अर्था-

---

१ क. ख. ण्यार्द्धकः; ग. घ. झ. ट. ठ. °ण्यार्द्धु°; ज. ण्याल्हुकः°. २ ग. ज. स्नाता°. ३ घ. पद्यने; च. पतति प्रमीयते°; ट. गर्तं वा पद्यते प्र वा मीयते° गर्तं वा पतति प्रमीयते वा° पाठान्तरं; ठ. पातयते प्रमीयते वा. ४ ठ. °षङ्गतोऽनुष्टुब्वक्त्रादि.° ५ ग. ज. °रणायानभि°

भिधानसंयोगान्मन्त्रेषु शेषभावः स्यात् " [ जै० सू० ९—१—३६ ] इति । न च निरुक्तादृतेऽन्यदङ्गमन्यद्वा बाह्यं शास्त्रमस्ति तात्पर्येण यदशेषां[1] शब्दान्निर्ब्रूयात् । यदपि च कचित्कचिदन्यशास्त्रे शब्दनिर्वचनमत एव तदित्युपलक्ष्यम् । यथा शब्दलक्षणपरिज्ञानं[2] सर्वशास्त्रेषु व्याकरणादेवं शब्दार्थनिर्वचनपरिज्ञानं निरुक्तात् । वस्तुमात्रमेव हीतरेषु शास्त्रेषु स्वाभिमतबुद्धिविषयमेव किंचिच्चिन्त्यते । ब्राह्मणमपि च विध्यर्थवादरूपमशेषं[3] मन्त्रार्थशेषभूतमेव । मन्त्रब्राह्मणार्थपरिज्ञानबद्धश्चाध्यात्माधिदैवाधिभूतपरिज्ञानद्वारेण धर्मार्थकाममोक्षाख्याऽखिलपुरुषार्थः । न चानिरुक्तो मन्त्रार्थो व्याख्यातव्य इति । तस्मादर्थपरिज्ञानाभिनिवेशादिदमेव प्रधानमित्युपपन्नम् ।

अथास्यैवमखिलपुरुषार्थोपकारवृत्ति[4]समर्थस्य संग्रहः । तद्यथा । नामाख्यातोपसर्गनिपातलक्षणम् । भावविकारलक्षणम् ।

निरुक्तविषयसंग्रहः नामान्याख्यातजानि न सर्वाणि च यथोपन्यस्य पक्षप्रतिपक्षतो विचार्यावधारणं सर्वाण्याख्यात[5]जानि कानिचिदेवानेकधातुजान्यपीति । मन्त्राणामर्थवत्त्वानर्थवत्त्वे विचार्य शास्त्रारम्भप्रयोजनद्वारेणार्थवत्तावधारणम् । पदविभागपरिज्ञानप्रतिज्ञा[6]वबोधावलम्बित्वप्रदर्शनाय । आदिमध्यान्तानेकदैवतलिङ्गसंकटेषु मन्त्रेषु याज्ञिका[7]परिज्ञानद्वारेण देवतापरिज्ञानप्रतिज्ञा । अर्थज्ञप्रशंसा[8] । अनर्थावधारणम्[9] । वेदवेदाङ्गव्यूहः । सप्रयोजननिघण्टु[10]समाम्नायविरचनं प्रकरणत्रयविभागेन । नैघण्टुकप्रधानदेवताभिधानप्रविभागलक्षणम् । निर्वचनलक्षणद्वारेण शब्दवृत्तिविषयोपदेशोऽर्थप्राधान्यात् । लोपोपधाविकारवर्णलोपविपर्ययोपदेशेन सामर्थ्योपप्रदर्शनायादिमध्यान्तलोपोपधाविकारवर्णलोपद्विवर्णलोपाद्यन्तविपर्ययाद्यन्तवर्णव्यापत्तिवर्णोपजनोदाहरणचिन्ता । अन्तस्थान्तर्धातुनिमित्तेन संप्रसार्यासंप्रसार्योभयप्रकृतिधातुनिर्वचनोपदेशः । भाषिकप्रायोवृत्तिभ्यो नैगमशब्दार्थप्रसिद्धिः । नैगमप्रायोवृत्तिभ्यो भाषिकशब्दार्थप्रसिद्धिः । देश-

---

१ घ. झ. ट. अशेषात् . २ घ. झ. ट. °लक्षणया परिज्ञानं. ३ क. ख. अशेषमन्त्रा°; ग. ज. घ. षमन्त्रार्थे शेष°. ४ घ. झ. ट. ठ. °कारकवृत्ति°. ५ ग. च. ज. ख्यातजातानि. ६ क. ख. ग. ज. प्रतिज्ञावबोधावलंबिप्रद°; घ. झ. ठ. प्रतिज्ञा तदवबोधाविलंबित्वप्रद; ट. प्रतिज्ञा तदवबोधावि(व) लंबित्वप्रद°. ७ ठ. याज्ञिकोप. ८ ग. ज. °ज्ञशंसा. ९ क. ख. अनर्थज्ञाव°; च. ज. अनर्थाव° र्थज्ञा; ठ. अनर्थज्ञावधीरणं. १० ग. ज. निघण्ट.

व्यवस्थया शब्दरूढ्युपदेशः । तद्धितसमासनामनिर्वचनलक्षणम् । शिष्यलक्षणम् । विशेष[1]व्याख्यया तत्त्वपर्यायभेदसंख्यासंदिग्धोदाहरणनिर्वचनव्यवस्थया नामाख्यातोपसर्गनिपातानां विभागेन नैघण्टुकप्रकरणानुक्रमणम् । अनेकार्थानवगतसंस्कारानुक्रमणम् । परोक्षकृतप्रत्यक्षकृताध्यात्मिकमन्त्रलक्षणम् । स्तुत्याशीःशपथाभिशापाचिख्यासापरिदेवनानिन्दाप्रशंसादिभिर्मन्त्राभिव्य[2]क्तिहेतूपदेशो निदानपरिज्ञान[3]ख्यापनाय । अनादिष्टदेवतोपपरीक्षणायाध्यात्मोपदेशप्रकृतिभूमत्वम् । इतरेतरजन्मत्वम् । स्थानत्रयभेदशस्त्रि[4]सृणामेकैकस्या [5]महाभाग्यकृतोऽनेकनामधेय[6]प्रतिलम्भः । पृथगभिधानं [7]स्तुतिसंबन्धाद्वा । देवतानामाकारचि[8]न्तनभक्तिसाहचर्यसंस्तवकर्मसूक्तभाक्त्वहविर्भाक्त्वव्यञ्जनभाक्त्वानि । पृथिव्यन्तरिक्षद्युस्थानदेवतानामभिधेयाभिधानव्युत्पत्तिप्राधान्यस्तु[9]त्युदाहरणं तन्निर्वचनविचारोपपत्त्यवधारणा[10]नुक्रमेण व्याख्याय दैवतप्रकरणनिर्णयः । विद्यापारप्राप्त्युपायोपदेशो मन्त्रार्थनिर्वचनद्वारेण । देवताभिधाननिर्वचनफलं देवताताद्भाव्यमित्येष समासतो निरुक्तशास्त्रचिन्ताविषयः ।

तस्यैषा गवाद्या देवपत्न्यन्ता पञ्चाध्यायी सूत्रसंग्रहः । सा च पुनरियं साक्षात्कृतधर्मभ्यो महर्षिभ्य उपदेशेन मन्त्रार्थमुपश्रुत्य श्रुतर्षिभिरवरशक्तिदौर्बल्यमवेक्ष्य तदनुजिघृक्षया वाक्यार्थसामर्थ्यादभिधेयानु[10]न्नीयोन्नीय मन्त्रार्थावबोधाय छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाता । सैषा छन्दोवयवभूता छन्दोधर्मिण्येव यथा यूथाप[11]त्रस्तो हि गौर्गोधर्मा ।

निघण्टुः

**ॐ समाम्नायः समाम्नातः स व्याख्यातव्यस्तमिमं समाम्नायं निघण्टव इत्याचक्षते निघण्टवः कस्मान्निगमा इमे भवन्ति छन्दोभ्यः समाहृत्य समाहृत्य समाम्नातास्ते निगन्तव एव सन्तो निगमनान्निघण्टव उच्यन्त इत्यौ-**

---

१ घ. झ. ट. °विशेषणव्या°. २ ग. ज. °भिव्यक्तहे°. ३ क. ख. घ. झ. ट. ठ. °ज्ञानव्याख्यापनाय. ४ ग. ज. ठ. तिसृणा°. ५ ग. च. ज. महाभाग्य°. ६ ग. च. ज. नामप्रति°. ७ क. ख. ग. ज. घ. झ. °धानं तूत्पत्तिसंब°; ट. °धानं तूत्पत्तिसंब° स्तुति. ८ क. ख. घ. झ. ट. ठ. °न्तनम् । भक्ति°. ९ ग. ज. °न्यस्तुतीत्युदा°. १० क. ख. ज. °नुन्नीय मन्त्रा°. ११ क. ख. °त्रस्ता गौ°; घ. °त्रस्ता हि°; ट. °त्रस्ता हि° स्तो; ठ. पवित्रस्तो हि.

**पमन्यवोऽपि वाहननादेव स्युः समाहता भवन्ति यद्वा समाहृता भवन्ति तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च तानीमानि भवन्ति तत्रै-तन्नामाख्यातयोर्लक्षणं प्रदिशन्ति भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि तद्यत्रोभे भावप्रधाने भवतः पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तं मूर्तं सत्त्वभूतं सत्त्वनामभिर्व्रज्या पक्तिरित्यद इति सत्त्वानामुपदेशो[1] गौरश्वः पुरुषो हस्तीति भवतीति भावस्यास्ते शेते व्रजति तिष्ठतीतीन्द्रियनित्यं वचनमौदुम्बरायणः ॥ १[2] ॥**

इयं च तस्या द्वादशाध्यायी भाष्यविस्तरः । तस्या इदमादिवाक्यं "समाम्नायः समाम्नातः" इति । गवादिदेवपत्न्यन्तः शब्दसमुदाय[3] उच्यते । समाङ्पूर्वस्य म्नातेरभ्यासार्थस्य कर्मणि कारके समाम्नायः । समभ्यस्यते मर्यादयाऽयमिति समाम्नायः । स च ऋषिभिर्मन्त्रार्थपरिज्ञानायोदाहरणभूतः पञ्चाध्यायीशास्त्रसंग्रहभावेनैकस्मिन्नाम्नाये ग्रन्थीकृत इत्यर्थः । तस्य किमिति । स[4] व्याख्यातव्यः । स च योऽसमाम्नातश्छन्दस्येवावस्थितोऽगवादिरन्यैर्वा निरुक्तैर्यः समाम्नातोऽयं चैतस्मिन्निरुक्ते स एष उभयलक्षणोऽपि व्याख्यातव्यः । आह । कथमेतद्गम्यतेऽसमाम्नातव्याख्यानमप्यत्राभिमेतामिति[5] । समाम्नानार्हाणां वा किमर्थमसमाम्नानमिति । उच्यते । निर्वचनलक्षणोपदेशात् । निर्वचनप्रसक्तानां च मृगकर्णदक्षिणालक्ष्मीनिघण्टुभद्रांधः[6]शब्दप्रभृतीनामेवमाद्यानां निर्वचनोपदेशा[7]ज्ज्ञायतेऽसमाम्नातव्याख्यानमप्यत्राभिमतामिति । यत्पुनरेतदुक्तं समाम्नानार्हाणां वा किमर्थमसमाम्नानमिति । अत्र ब्रूमः । न हि समाम्नानार्हाणामन्तोऽस्ति । तेषां सर्वेषां समाम्नाने शास्त्रान्त एव न स्यात् । अतश्चाध्ययनश्रवणज्ञानशक्तिहान[8]दोषः प्रसज्येत । शक्यश्चैतावल्लक्षणोद्देशोदाहरणभूतनिघण्टुश-

१ क. ख. छ. त. द. न. °देशः ॥ १ ॥ गौ°. २ क. ख. छ. त. द. न. '१' नास्ति. ३ क. ख. घ. (झ. पत्रं गलितं) ट. ठ. °दायः समाम्नाय उच्यते. ४ च. 'सः' नास्ति. ५ घ. °भिप्रेत°; ट. °भिप्रेत° म. ६ घ. (झ. पत्रं गलितं) ट ठ. भद्रांधःप्र°. ७ ग. ज. °चनप्रदेशात्; च. °चनप्रदर्शनात्; ट. °चनोपदेशा° न प्रदर्शना. ८ घ. ट. ठ. (झ. पत्रं गलितं) °शक्तिहीनदोषः.

५ ब्दसमुदायेनाधीतवेदेन मेधाविना तपस्विना लक्षणविनियोगार्षच्छन्दो-
दैवतनिदानविदाभियुक्तेनागमवता मन्त्रार्थोऽभ्यूहितुमित्येतावानेव निघण्टुषु
शब्दसमुदायः समाम्नातः । तस्मादुपपन्नमसमाम्नातव्याख्यानमप्यत्राभि-
मतमित्यसमाम्नानं सर्वेषां शास्त्रातिगौरवभयादिति । व्याख्यातव्यो
१० विभज्येमान्यत्र नामानीमान्याख्यातान्युपसर्गा इमे निपाता इम इदं
सामान्यलक्षणमिदं विशेषलक्षणमिमान्येकार्थानीमान्यनेकार्थानीमान्यनवगत-
संस्काराणीदमभिधानमिदमभिधेयमिदमभिधानस्य निर्वचनमित्येवंविधया
मर्यादया परिपाट्या यथासमाम्नात आख्यातव्यो निर्वक्तव्य इत्यर्थः ।

१५ "तमिमं समाम्नायं निघण्टव इत्याचक्षते" । तं च योऽसमाम्नातश्छन्दस्ये-
वावस्थितोऽगवादिरन्यैर्वा निरुक्तैः समाम्नातस्तमिमं
च निघण्टव इत्याचक्षतेऽन्येऽप्याचार्या इति वाक्यशेषः ।
निरूढा हीयमेतस्मिञ्छब्दसमुदाये संज्ञेत्यभिप्रायः ।

निघण्टुशब्द-व्युत्पत्तिः

२० "निघण्टवः कस्मात्" इति निघण्टुशब्दव्युत्पिपादयिषया प्रश्नः ।
निर्विवक्षयेदमाह "निगमा इमे भवन्ति" । येष्वभिधाननिर्वचनप्रारम्भ-
केष्वाचार्यः कस्माच्छब्दमुत्तरत्र न कुर्यात्तेष्वपि व्याख्याकालेऽयं समुत्पाद्यः ।
तथा हि व्याख्यासाकल्यं भवति । "निगमा इमे भवन्ति" । निश्चयेना-
धिकं वा निष्कृष्य निगूढार्था एते परिज्ञाताः सन्तो मन्त्रार्थान् गमयन्ति
ज्ञापयन्ति । ततो निगमसंज्ञा इमे भवन्ति ।

२५ आह । कः पुनरेतेषु विशेषो येनैत एव ज्ञापयन्तीति । उच्यते ।
यस्मादेते "छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाताः" । छन्दांसि
मन्त्रास्तेभ्य उपलक्षितसामर्थ्याः समाहृत्य ग्रन्थीकृता इत्यर्थः । आह ।
कस्मात्पुनरेतावन्त एव ग्रन्थीकृता इति । उच्यते । इतो यस्मादेतैरेव

---

१ च. 'अपि' न विद्यते. २ घ. (झ. पत्रं गलितं). ट. ठ. °माम्नानं च सर्वे°. ३ च. °म्नातव्याख्यातव्यः. ४ ग. ज. 'वा' नास्ति. ५ क. घ. (झ. पत्रं गलितं) °चार्योऽयं यास्को निरुक्तकारः कस्मा°; ट. °चार्यः । अयं यास्को निरुक्तकारः । कस्मा°. ६ क. घ. (झ. पत्रं गलितं) ठ. काले कस्मादिति शब्दः
३० स°; ट. °काले कस्मादिति शब्दः स°. ७ च. निरूढार्था°. ८ क. ख. ग. ज. ठ. 'ज्ञापयन्ति' नास्ति. ९ क. ख. °संज्ञा निघण्टव एव इमे; घ. (झ. पत्रं गलितं) °संज्ञा निघण्टव इमे; ट. °संज्ञा निघण्टव इमे.° १० घ. उच्यते । छन्दो;° (झ. पत्रं गलितं); ट. उच्यते । ^छन्दो° यस्मादेते; च. उच्यते । कस्मा.° ११ ठ. समाहृत्येति च्छन्दांसि.°

छन्दस्यवस्थितैरभिनिविष्टधियामपि मेधाविनां तपस्विनां लक्षणविनियोगा-
षेच्छन्दोदैवतनिदानविदामपि सतां मन्त्रार्थपरिज्ञानोद्यमभङ्गः क्रियते दुष्प- ५
रिज्ञानत्वात्तेषाम् । एतेषु परिज्ञातेष्वप्रतिवन्धेन शक्यते मन्त्रार्थः परि-
ज्ञातुमित्यत उच्यते त एव ज्ञापका भवन्तीति । अतश्चैत एवोन्नीतसामर्थ्याः
समाहृत्य समाहृत्य समाम्नाता इति । समाम्नानमात्रमेव दर्शयति ।
प्रकरणगताश्च नित्या एवैत इति गम्यते ।

"ते निगन्तव एव सन्तो निगमनान्निघण्टव उच्यन्त इत्यौपमन्यवः"। १०

उदाहृतासमाम्नाता निर्वचनप्रसङ्गतो ये निरुच्यन्ते य एते समाम्नाता गवा-
दयस्त एते मन्त्रार्थनिगमयितृत्वादुभयेऽपि निगन्तवः
निगमनात् सन्तो निगमनाद्धेतोर्निघण्टव उच्यन्त इत्यौपमन्यवः ।
इत्येवमर्थनिगमयितृत्वान्निगन्तव एते संपन्नाः सन्तोऽति-
परोक्षवृत्तिना शब्देन गकारस्थाने घकारं कृत्वा तकारस्थाने च टकारं १५
कृत्वा । वर्णव्यापत्त्यादिलक्षणं " अथाप्यादिविपर्ययः " ( निरु० २—
१ ) इत्येवमादि । तदेतत्परोक्षातिपरोक्षवृत्तिषु यथासंभवं द्रष्टव्यम् । त्रिविधा
हि शब्दव्यवस्था प्रत्यक्षवृत्तयः परोक्षवृत्तयोऽतिपरोक्षवृत्तयश्च । तत्रोत्कट-
क्रियाः प्रत्यक्षवृत्तयः । अन्तर्लीनक्रियाः परोक्षवृत्तयः । अतिपरोक्षवृत्तिषु २०
शब्देष्वेष निर्वचनाभ्युपायः । तस्मात्परोक्षवृत्तितामापाद्य प्रत्यक्षवृत्तिना
शब्देन निर्वक्तव्याः । तद्यथा । निघण्टव इत्यतिपरोक्षवृत्तिः । निगन्तव
इति परोक्षवृत्तिः । निगमयितार इति प्रत्यक्षवृत्तिः । यस्मान्निगमयितार एते
निगन्तव इति निघण्टव उच्यन्ते । उक्तं च । " वर्णागमो वर्णविपर्ययश्च
द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं २५
निरुक्तम् " ॥ वक्ष्यति चायमपि वर्णविपर्ययवर्णव्यापत्तिलक्षणम् ( निरु०
२ । १ ) । त एते निगन्तवः सन्तो निघण्टव उच्यन्ते । इत्येवमतिपरो-
क्षवृत्तयो निर्वक्तव्याः । प्रायेण चोणादिषु परोक्षवृत्तयः शब्दाश्चिन्त्यन्ते ।

---

१ क. ख. घ. ( झ. पत्रं गलितं ) ट. ठ. °ज्ञानायोद्यमभङ्गः. २ घ. ट.
ठ. दुः परि°. ३ क. ख. ग. ज. 'समाहृत्य' पदं सकृदेव. ४ ग. ज. समाम्नातमा°.
५ ठ. एवेति उदा°. ६ क. ख. °हृताः स; च. °हृतास° ताः. ७ च. °म्नाता° ३०
ये. ८ क. ख. ग. ज. घ. ट. ठ. 'ये' नास्ति; च. °ङ्गतो ता नि° ये. ९ घ. झ.
अत्रो; °ट. अत्रो° त. १० च. अन्तर्णीतक्रियाः; ट. अन्तर्लीन° र्णीत. ११ च. अवि-
द्यमानक्रिया अतिपरोक्षवृत्तयः । अतिप°. १२ घ. झ. ट. ठ. इत्युच्यन्ते.

तत्र[1] तेषां लक्षणमुपेक्षितव्यम् । येषामपि लक्षणं नास्ति तेषामपि तत्र
५ कल्प्यम् । अपरिसमाप्ता[2] ह्युणादय इति लक्षणविदः प्रतिजानते । सर्वथाऽपि
लक्षणासंभवे पृषोदरादिपाठसिद्धेरेव[3] द्रष्टव्याः । तत्र हि सर्वे यथाध्ययनमेव[4]
शब्दाः साधीयांसो भवन्त्यभिव्याहारानभिघातायेति हि लक्षणविदो
मन्यन्ते । इत्यौपमन्यव एवमौपमन्यव[5] आचार्यो मन्यत इति वाक्यशेषः ।
१० उपरतमन्युरुपमन्युस्तस्यापत्यमौपमन्यवः । कीर्तिप्रथनार्थमौपमन्यवग्रहणम् ।

"अपि वाहननादेव स्युः समाहता भवन्ति" । अपि वैवं[6] यथोक्तम् ।

अपि वैवमन्यथा[7] निघण्टवः स्युः । कथमिति । आहनना-

आहननात् देव । न निगमनादित्यभिप्रायः । विद्यमानमपि हि निगम-

नमविवक्षितमेतस्मिन्पक्षे । अनेकक्रियायोगेऽपि हि सति

१५ कांचिदेव क्रियामङ्गीकृत्य नामधेयप्रतिलम्भो भवति । तदुत्तरत्र वक्ष्यामः
( निरु० १—१४ ) । आह किमेतेष्वाहतमिति । उच्यते । समाहता
भवन्ति । समः स्थाने नीत्येष नियुक्तः । दर्शयिष्यति चायमुपसर्गव्यत्ययं
" निरित्येष समित्येतस्य स्थाने " ( निरु० १२—७ ) इति ।
आङविद्यमान एवाध्याहृतो[8] मर्यादार्थप्रकाशनाय हन्तेः पाठार्थे वर्तमानस्या-
२० नेकार्थत्वाद्धातूनाम् । वर्णव्यापत्त्यौघशब्दवद्धकारस्य स्थाने घकारस्तकारस्य
टकारः । अथ कोऽर्थः । एतस्मिन्पञ्चाध्यायीसंग्रहे मर्यादया पठिता ह्येते
भवन्ति तस्मात्समाहताः । समाहन्तव[10] एते सन्त उपसर्गव्यत्ययोपसर्गा-
ध्याहारवर्णव्यापत्तिभिर्निघण्टव इत्युच्यन्ते । प्रसिद्धश्च पाठार्थे हन्तेः
प्रयोगः । एवं हि वक्तारो भवन्ति ब्राह्मण इदमाहतं सूत्र इदमाहतमिति ।
अर्थप्राधान्यादर्थनिर्वचनवशेन[11] शब्दविपरिणामोऽयं प्रदर्शितः ।
२५ "यद्वा समाहृता भवन्ति" । पूर्ववदेवोपसर्गव्यत्यय[12] उपसर्गाध्याहारोऽत्रापि ।

धातुस्तु हरतिरत्र । यद्यस्मादित्यर्थः । यस्माद्धैते समाहृता

समाहरणात् भवन्ति छन्दोभ्यस्तस्मात्समाहरणक्रियायोगात्समाहर्तव एते

समाहृताः सन्तः पूर्ववदेवोपसर्गव्यत्ययादिक्रमेण निघण्टव

---

१ व. झ. अत्र; ट. अत्र° त'. २ ग. ज. परिसमाप्ताः; च. असमाम्नाताः. ३ क. ख. घ. झ. ट. ठ. सिद्धिरेव द्रष्टव्या । तत्र. ४ ज. यथा विभक्त्युत्पत्तये योग्यः शास्त्रीयः शब्द इष्यते । रूढयौगिकतन्मिश्रैः प्रभेदैः स पुनस्त्रिधा । अव्यक्तयोगनिर्यो-
३० गयोगाभासैस्त्रिधाग्रिमः । ते च वृक्षादिभूत्रादिमण्डपाद्या यथाक्रमम् । शुद्धतन्मूलसं भिन्नप्रभेदैर्यौगिकस्त्रिधा । ते च भ्रान्तिस्फुरत्कान्तिकं । ध्ययन°. ५ ग. ज. 'एवमौप' नास्ति. ६ ख. घ. झ. ट. ठ. चैवं. ७ क. ख. ग. ज. ठ. चैव°. ८ ग. ज. एवाहृतो°. ९ घ. झ. ट. °पत्त्याऽव्वश'. १० ग. ज. समाहन्त एव एते°. ११ ग. ज. °निर्वचनेन वशेन, १२ च. व्यत्ययोपस°.

इत्युच्यन्ते । एतस्मिन्नपि निगमनसमाहननक्रिये निघण्टुषु विद्यमाने अप्य-विवक्षिते कृत्वा समाहरणक्रियायोगहेतुको नामधेयप्रतिलम्भ उक्तः । एवमेष निघण्टुशब्दो गमेर्वैकोपसर्गाद्धन्तिहरतिभ्यां वा द्व्युपसर्गाभ्यां निरुक्तः ।

**व्युत्पत्तियत्नस्य हेतुः**

आह किमयं पुनरतिमहान्यत्न एकस्मिन्नभिधानेऽनेकधात्वर्थनिर्वचनकृत इति । उच्यते । इह तावत्सर्वाण्याख्यातजानि नामानीति सिद्धान्तः । सत्याख्यातजत्वेऽभिधेयस्था या क्रिया लक्ष्यते तदभिधानसमर्थपरोक्षवृत्तौ वा तदभिधायिनि रूढिशब्दे वा धातुरुत्प्रेक्ष्यते । स च पुनः स्वरवर्ण-क्रियासामान्येन । तत्रैवं सति रूढिशब्दे यावन्तो धातवः स्वं स्वं लिङ्गं रूढिगतं दर्शयन्ति तावतः संगृह्य स रूढिशब्दो निर्वाच्यः । किं कारणम् । विशेषलक्षणव्यवस्थाभावात् । न हि तत्र विशेषलक्षणव्यवस्था काचिदस्ति यथैकोऽवतिष्ठेतान्ये व्यावर्तेरन् । अपि चोक्तं वार्तिककारेण— "यावतामेव धातूनां लिङ्गं रूढिगतं भवेत् । अर्थश्चाप्यभिधेयस्थस्तावद्भि-र्गुणविग्रहः" ( बृहद्देवता २ । १०४ ) इति ॥ रूढिशब्दगतानां च धातूनां रूढिशब्दवाच्येऽर्थे क्रियायोगे सत्येतत् । अभावे तु क्रियाया रूढिशब्दे वर्तमानमपि धातुलिङ्गमकिंचित्करम् । स एव क्रियाभावस्तदाश्रयनि-र्वचनव्यावर्तको भवति । ता एतास्तिस्रः क्रिया निगमनसमाहननसमा-हरणाख्या निघण्टुषु विद्यन्ते । तदभिधायिन्यपि च रूढिशब्दे निरुच्यमाने गमिर्हन्तिर्हरतिश्चाहंपूर्विकया संनिपत्य वदन्ति ममानुरूपं मयैतं निर्ब्रूहि मयैतं निर्ब्रूहीति । गमिस्तावदत्र गकारमात्मीयं व्यापन्नं मन्यते घकारम् । तथा हन्तिहरती हकारं व्यापन्नं घकारं मन्येते । तस्मादनेकधात्वर्थैर्नि-घण्टुशब्दो निरुक्त एवंजातीयाभिधाननिर्वचनप्रदर्शनाय ।

---

१ घ. झ. ट. °न्नपि गम.° २ ग. ज. मानेऽप्यवि°. ३ ग. ज. °निर्वचने कृत°. ४ घ. झ. ट. ठ. 'या' नास्ति. ५ क. ख. ग. ज. समर्थे परोक्ष°. ६ ग. °वृत्तौ तावदभिधा°. ७ क. ख. ग ज. 'वा' नास्ति°. ८ क. ख. झ. ठ. स्वलिङ्गं; ग. ज. व. ट. 'स्वं' सकृदेव. ९ : ट. यथैको°. १० क. ख. घ. झ. सति । एतदभावे°; ट. सति । एतदभावे° त्येतत् । अ. ११ ग. ज. 'ताः' न विद्यते. १२ च. °समाहरणानि निघ.° १३ ठ. 'मयैतं निर्ब्रूहि' सकृदेव.

" तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च तानीमानि भवन्ति "। इहैतावदेवोक्तं समाम्नायो निघण्टव इति । समाम्नायशब्दपर्यायप्रसक्तस्य च निघण्टुशब्दस्य व्युत्पत्तिरुक्ता न तु निघण्टुशब्दस्यार्थ-

चत्वारि पदजातानि

५ तत्त्वमवधारितम् । तदवधार्यत इति पर्युपयुक्तस्तच्छब्दः । किं पुनस्तदिति । यान्येतानि चत्वारि पदजातानि या एताश्चतस्रः पदजातयः । क्व । लोके वेदे च । कतमानि तानि । नामाख्याते चोपसर्गनिपाताश्च । किं तेषामिति । इमानि चत्वार्यपि पदजातानि सन्त्येतस्मिञ्शास्त्रे । किमिति । निघण्टुसंज्ञानि भवन्ति । नित्यमेवानुविधीयमानानि भवन्तीत्याह ।
१० न कदाचिदपि न भवन्ति नित्यं भवन्त्येवेत्यभिप्रायः । चत्वारि पदजातानि । चतुर्ग्रहणमवधारणार्थम् । नैकं पदजातं यथाऽर्थः पदमैन्द्राणामिति । नापि द्वे यथा सुबन्तं तिङन्तं च । नापि त्रीणि निपातोपसर्गावेकतः कृत्वा । नापि पञ्च षड्वा यथा गतिकर्मप्रवचनीयभेदेनेति । पदजातानीति पदगणा इत्यर्थः । जातशब्दो हि गणे प्रसिद्धः । तद्यथा
१५ गोजातमश्वजातमिति । तद्वदिहापि । तत्र नामपदगणः स्त्रीपुंनपुंसकलिङ्गप्रविभागेन । तथाख्यातपदगणः कर्तृवचनभाववचनकर्मवचनप्रविभागेन । तथोपसर्गपदगण आङादिः । तथा निपातपदगण इवादिः । एवमभिप्रेत्योक्तं चत्वारि पदजातानीति । अत्र नामाख्यातयोः पूर्वमभिधानं प्राधान्यादप्राधान्यादुपसर्ग निपातानां

तेषां पौर्वापर्यं

२० पश्चात् । उभे अपि नामाख्याते निपातोपसर्गनिरपेक्षे अपि सती स्वमर्थं ब्रूतो न तूपसर्गनिपातानां नामाख्यातनिरपेक्षाणामर्थोऽस्ति । वक्ष्यति हि " न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः " ( निरु० १ । ३ ) इति । वाच्येन चैते अर्थेनार्थवती द्योत्येनोपसर्गनिपाता इति वा प्राधान्यं नामाख्यातयोस्तु कर्मोपसंयोगद्योतका
२५ भवन्ति ( निरु० १।३ ) इति । तस्मादुपपन्नं भवति प्राधान्यान्नामाख्यातयोः पूर्वमभिधानमप्राधान्याच्च पश्चादुपसर्गनिपातानामिति । नामाख्याते

---

१ क ख. ग. ज. 'चत्वारि पदजातानि' नास्ति. २ क. ख. ग. ज. घ. झ. ट. चत्वारीति चतु°. ३ च. प्रवचनार्थभेदे°. ४ क ख. ग. ज. कर्तृवचनभाववचनकर्मवचनप्रविभागेन. ५ क. ख. ग. ज. 'पद' नास्ति.

नामाख्याते इति समासस्य प्रयोजनम्

इतीतरेतराकाङ्क्षित्वमुभयोर्नामाख्यातयोः समासेनाभिधानम्[1] । कथमितरेतराकाङ्क्षित्वमिति[2] । यज्ञदत्त इति हि नामशब्दस्तावदेव साकाङ्क्षो भवति यावत्पचति पठतीत्याख्यातशब्दैर्न[3][4] निराकाङ्क्षी क्रियत इति[5] । तथा च[6] पचतीत्याख्यातशब्दस्तावदेव साकाङ्क्षो[7] भवति यावन्न यज्ञदत्तशब्दः । पचति[8] यज्ञदत्त ओदनमितीतरेतराकाङ्क्षित्वमुभयोर्नामाख्यातयोः । समानकार्थत्वं चैतयोर्लक्ष्यते[9] । वाच्येनार्थेनार्थवत्त्वमित्यतः समस्येते नामाख्याते इति । नाम्नः पूर्वनिपातोऽल्पाच्तरत्वात् । नामपदवाच्यार्थाश्रयक्रियोपलक्ष्यत्वाच्चाख्यातार्थस्य[10] पश्चान्निपातः । १०

उपसर्गनिपाता इत्यस्य च

उपसर्गनिपाता इत्युभयेषामुपसर्गनिपातानां नामाख्यातयोरर्थविशेषद्योतकत्वात्समानकार्यत्वमित्यतः समस्यन्ते । आख्यातसहयोगित्वादुपसर्गाणामाख्यातानन्तरं पाठः परिशेषाणां निपातानां पश्चादपरिमिताश्च निपाता इति ।

तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति । तत्र तस्मिँल्लोकवेदप्रसिद्धे पदचतुष्टये निघण्टुशब्दसामान्यसंज्ञोपलक्षिते[11] ये तावन्नामाख्याते तयोस्तावदेतल्लक्षणं प्रदिशन्ति[12] । कतमत् । यदेतद्वक्ष्यमाणमित्यभिप्रायः । प्रदिशन्ति प्रविभज्येदं नाम्नां लक्षणमिदमाख्यातस्येत्येवं दिशन्त्युपदिशन्त्याचार्या इति वाक्यशेषः ।

लक्षणप्रयोजनम्

आह लक्षणोपदेशः कस्मादनुक्रमणेनैव सिद्धत्वात् । अनुक्रमणेनैव हि वक्ष्यति[13] " इमानि पृथिवीनामधेयान्येकविंशतिः (२–७) हिरण्यनामान्युत्तराणि पञ्चदश (२–१०) कान्तिकर्माण उत्तरे धातवोऽष्टादश (३–९) गतिकर्माण उत्तरे धातवो द्वाविंशं शतम् (३–९)" इति । तत एव विज्ञास्याम इमानि नामानीमान्याख्यातानीति । तस्मादयम-

---

१ ग. ज. 'इति' नास्ति. २ ग. ज. कथमितीतराका°. ३ क. ख. ग. ज. इत्याद्याख्यात°. ४ च. ठ. शब्देन°; ट. शब्दैर्° ब्देन. ५ च. °ङ्क्षीकृत इति; ट. °ङ्क्षीक्रियत° कृ. ६ क. ख. ग. ज. 'च' नास्ति. ७ ट. काङ्क्षीभवति. ८ ग. ज. 'पचति' नास्ति. ९ ग. ज. वक्ष्यते. १० क. ख. ग. ज. 'आख्यातार्थस्य' नास्ति ११ क. ख. ग. घ. ज. झ. ठ. °शब्दसमानसंज्ञो°; ठ. °शब्दसमानसंज्ञो° सामान्य. १२ च. प्रतिदिशंति. १३ ग. ज. लक्ष्यति.

नर्थको लक्षणोपदेशः । नानर्थकः । कस्मात् । व्यापि हि लक्षणं समाम्नातान्यसमाम्नातानि च व्याप्य वर्तते । यत्पुनरेतदुक्तमनुक्रमणादेव विज्ञास्याम इति । अत्र ब्रूमः । निर्देशोऽसौ न हि लक्षणम् । निर्देशश्च परिच्छिन्नविषयः । स तर्हि किमर्थ इति । शास्त्रे रूपस्वभावोपप्रदर्शनार्थः[1] । तस्मादसमाम्नातार्थोऽयमादितो लक्षणोपदेशो युक्त इत्युपपन्नम् । आह । तात्पर्येणैवेदमन्तरेण समाम्नातवदसमाम्नातानि कस्मान्नोपदिश्यन्ते । अपि च तथा सूपदिष्टानि भवन्तीति । उच्यते । तथा ह्युपदेशगौरवं[2] प्रसज्येत ग्रहणशक्तिहानं चापि । तथाचोक्तं " ऋषयोऽप्युपदेशस्य[3] नान्तं यान्ति पृथक्त्वशः । लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः " इति ॥ तस्मादुपदेशगौरवभयाद्ग्रहणशक्तिहानदोषाच्च सामान्यलक्षणोपदेशः[4] क्रियत इति ॥

*नामाख्यातयोर्लक्षणम्*

आह । किं पुनस्तल्लक्षणमिति । उच्यते । "भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि" । नामपदवाच्यार्थाश्रयक्रियाव्यङ्ग्यो भावः पाकरागत्यागाख्यः । स यत्र प्रधानं गुणभूता क्रिया तदिदं भावप्रधानम् । किं पुनस्तदिति । आख्यातम् । आख्यायतेऽनेन गुणभावेन[5] वर्तमानानेककारकप्रविभक्ता स्फुरमाणप्रधानद्रव्यभावाभिव्यक्त्युन्मुखीभूता[6] क्रिया तस्याश्च प्राधान्येन वर्तमानो भावः स्वात्मलाभप्रधान[7] इत्याख्यातम् । आह । कथं पुनर्गुणभूता क्रियेति ।

*क्रिया गुणभूता*

उच्यते । तदर्थत्वात् । तदर्था हि सा भावार्था । भावसिद्ध्यर्थमात्मलाभमनुभूय कारकेषु तण्डुलादौ पाकाख्यं भावमभिनिष्पाद्यावसितप्रयोजनैकपद[8] एव तिरोभवति । यस्य च यदर्थ आत्मलाभस्तत्तद्गुणभूतं भवति । भावसिद्ध्यर्थश्च क्रियाया आत्मलाभस्तस्माद्गुणभूतेति गम्यते । भावसिद्ध्यैव चानुमीयते क्रिया परोक्षापि सती ।

*क्रिया परोक्षा*

आह । कथं पुनः परोक्षा क्रियेति । उच्यते । न हि सेन्द्रियाणामन्यतमेन स्वरूपस्था सती कदाचिदपि संनिकृष्यते । किं तर्हि तदवसाने

---

१ च. °वोपदर्श°. २ क. ख. व. झ. भवति; ट. भवति° प्रसज्येत. ३ क ख. घ. झ. ट. ठ. ह्युपदे°. ४ क. ख. ग. ज. व. झ. समानल;° ट. समानल° सामान्य. ५ च. गुणभावे वर्त. ६ क. ख. ज. ठ स्फुरमाणेव प्रधा°; ग. स्फुरमाणे च प्रधा°. ७ ग. ज. लाभः. ८ क, ख. घ. च. झ, ट. ढ. कदेश एव°.

योऽभिनिष्पद्यते भावस्तेन लिङ्ग्यते । नूनमभिनिर्वृत्ता क्रिया यया भावोऽयमभिनिष्पादित इति । नाभिनिर्वृत्ता चेदभविष्यद्यथैव प्राक्क्रियानिर्वृत्तेर्नाभवदयं भाव एवं सांप्रतमपि नाभविष्यत् । अस्ति चायम् । तस्मादभिनिर्वृत्ता क्रियेत्येवमनुमीयते ।

तदेतदाख्यातं क्रियावाचकमपि सद्भावार्थत्वात्क्रियाया भावप्रधानमुच्यत इत्येवमेके मन्यन्ते । अपरे[1] पुनर्भावप्रधानमाख्यातम् तमिति प्रकृत्यर्थप्रधानमिति मन्यन्ते । प्रकृत्यर्थविशेषणं हि प्रत्ययार्थादय इति । भावः कर्म क्रिया धात्वर्थ इत्यनर्थान्तरम् । स यत्र प्रधानं गुणभूतानि साधनानि तदिदं भावप्रधानम् । किं पुनस्तत् । आख्यातम् । आख्यायन्ते स्त्रीपुंनपुंसकानि क्रियागुणभावेन वर्तमानान्यनेन क्रिया च[2] तेषामुपरि प्राधान्येन[3] वतर्मानेत्याख्यातम् । आह । कथं पुनरत्र क्रियायाः प्राधान्यमिति । उच्यते । सा ह्यत्र शब्दवाच्याऽर्थगृहीतानि तत्साधनानीत्यतः प्राधान्यमत्र क्रियायाः । इतश्च प्राधान्यम् । कुतः । विशेषप्रत्ययाधानात् । पचतीति प्रथमपुरुषैकवचनपरस्मैपदान्तं आख्यातशब्दो वर्तमानकालकर्तृविषयो यत्किंचिदविवक्षितविशेषमेव पक्त्रादिसाधनमात्मन आश्रयभावेनोपलक्षयन्ननेकक्रियाशक्तिमत्यपि पक्त्रादौ साधने पचिक्रियायामेव विशेष[4]प्रत्ययमादधाति नान्यासु क्रियासु नापि विशिष्टे पक्त्रादौ साधने । यश्च यस्मिन्नर्थे विशेषेण वर्तते शब्दः स एव तस्य[5] प्रधानम् । विशेषेण च क्रियायामाख्यातशब्दो वर्तते गुणभावेन कारकेषु । तस्माद्विशेषप्रत्ययाधानाद्भावप्रधानमाख्यातमित्युपपन्नम् । अपि च क्रियाव्यापारविज्ञानपरतया पृष्टः किं करोति देवदत्तः क्रियाख्या[6]नपरतयैव प्रत्याचष्टे पचतीति ।

क्रियायाः प्राधान्यम्

नन्वोदनमिति[7] पूर्वमुक्त्वा ततः पचतीति ब्रवीत्यथ[8] कथमुच्यते भावप्रधान-

१ क. ख. घ. झ. एके; ट. एके पु° अपरे. २ च. वा. ३ ङ. च. ज. प्राधान्ये वर्त. ४ घ. ज. ट. ठ विशेषण प्रत्यय°. ५ घ. ज. ट. ठ. 'तस्य' नास्ति. ६ घ. झ. ट. ठ. °ख्यापन°. ७ क. ख. ग. ज. घ. झ. ट. ठ. त्वोदन°. ८ क. ख. ग. ज. घ. झ. ट. ठ. ब्रवीति । अथ°.

**भावप्रधानमाख्यातम्**

माख्यातमिति । शृणु । अमूर्ता हि क्रिया निरुपाख्या । सा हि कारकैरभिव्यज्यमाना कारकशरीरे वसन्ती[1] शक्यते निर्देष्टुम्[2] । इतरथा ह्यशरीरा सती सा न गृह्येत । तथा[3] ग्रहणे च सति कथमिव निर्दिश्येत । तत्रैवं सति कारकसमूहेनाभिव्यज्यमाना क्रिया यस्मिन्साधने विशिष्टमात्मीयं कार्यमारभते पाकाख्यं तदभिधानशब्दोपपदैव साक्षाद्ग्रहणासंभवान्निर्दिश्यते । न ह्यनाश्रिता कदाचिदपि गृहीतपूर्वाकृतिरिति साक्षाद्ग्रहणासंभवः । तस्मादोदनकर्मिका[4] या देवदत्तकर्तृकौदनशब्दोपपदैव निर्दिश्यत ओदनं पचति देवदत्त इति तत्राविवक्षितस्वार्थ ओदनशब्दः । अपि च क्रियाव्यापारं[5] पिपृच्छिषयैव पृष्टः किं करोतीति क्रियाव्यापारमात्रमेव प्रत्याचष्टे पचतीति । ततः किमिति पर्यनुयुक्ते शब्दान्तरेणापाकरोति देवदत्त ओदनमिति । तस्माच्छब्दान्तरवाच्यत्वात्साधनस्य पचतीत्यत्र क्रियैव प्रधानमित्युपपन्नम् । यत्पुनरेतदुक्तमोदनमिति[6] पूर्वमुक्त्वेति तत्र ब्रूमः । स हि पर्यनुयुयुक्षां साधनगतां भाविनीमाशङ्कमानः पर्यनुयोगमात्मनो बुद्ध्यवस्थं कृत्वा तदपाकरणार्थमोदनमिति पूर्वं ब्रवीति । एवं तत्रापि द्रव्यविशेषपरिज्ञानार्थो द्वितीयः पर्यनुयोगोऽनुक्तो[7] द्रष्टव्यः । तस्मात्पचतीति शब्दवाच्यत्वादत्र[8] क्रियायाः शब्दान्तरवाच्यत्वात्तद्द्रव्यस्य[9] क्रियैव प्रधानमिति ।

**तदेव**

इतश्च भावप्रधानमाख्यातम्[10] । एकस्मिन्वाक्ये द्वयोराख्यातयोरसमवायात्पचति पठतीत्युभयोः प्राधान्यादितरेतरेण समवायो नास्ति । न हीतरः शब्द इतरत्र गुणी भवति । द्रव्यशब्दे च समवायात् । समवैति हि[11] द्रव्यशब्देनाऽऽख्यातशब्दः । पचति देवदत्त इत्युक्ते पचिक्रियागुणभूतो लक्ष्यते देवदत्तः । तस्मादुपपन्नं भावप्रधानमाख्यातमिति । अपि चोक्तं "क्रियावाचकमाख्यातं लिङ्गतो न विशिष्यते । त्रीनत्र पुरुषान्विद्यात्कालतस्तु विशिष्यते" इति[12] ॥

---

१ घ. झ. ट वसती; ठ. वसति इति श°. २ क. ख. घ. झ. ट. निर्दिष्टुं. ३ क. ख. ग. ज. 'तथा' नास्ति. ४ क. ख. ग. च. ज. कर्मका सा. ५ ग. च. ज. व्यापर°. ६ झ. यदुक्त° ट. यदुक्त° देतत्पुनरु. ७ ग. ज. अनुक्तोऽपि. ८ ग. ज. वाच्यशब्दत्वात्. ९ क. ख. ग. ज. 'तत्तत्' नास्ति; घ. झ. ट. ठ. तत्तद्द्रव्य°. १० क. ख. ग. ज. इतश्च न द्रव्यप्रधान°. ११ क. ख. ग. ज 'हि' नास्ति. १२ च. 'इति' नास्ति.

**चतुष्प्रभेदमाख्यातम्**

तत्पुनरेतच्चतुष्प्रभेदमाख्यातं भवति । कर्तरि भावे कर्मणि कर्मकर्तरि चेति । पचतीति कर्तरि । भूयते पच्यत इति भावकर्मणोः । पच्यते स्वयमेवेति कर्मकर्तरि । चतुर्ष्वप्यविवक्षितार्थानि द्रव्याण्यप्रधानानि क्रियैव प्रधानम् । तामभिदधत्त्यैव लक्ष्यमाण आख्यातसंज्ञो भवतीत्युक्तम् । ५

**नामलक्षणम्**

आख्यातजत्वान्नाम्नां प्रतिज्ञाक्रमं भित्त्वा पूर्वमाख्यातलक्षणमुक्तम् । पश्चान्नामलक्षणमुच्यते । किं पुनस्तत् । सत्त्वप्रधानानि नामानि । लिङ्गसंख्ययोरत्र सद्भाव इति सत्त्वम् । तथा लक्षणोपपत्तेः । तद्येषु प्रधानं गुणभूता क्रिया नामान्येव तानि । नमन्त्याख्यातशब्दे गुणभावेन नमयन्ति वा स्वमर्थमाख्यातशब्दवाच्ये गुणभावेनेति नामानि । यथैव ह्याख्याते विद्यमानमपि द्रव्यमविवक्षितमेवमिहापि विद्यमाना क्रियाविवक्षिता द्रव्यपरत्वात्सत्त्वशब्दस्य । तद्धि क्रियाजनितमुत्तरकालं क्रियाशेषभूतमभिधाय धात्वर्थोऽसौ व्यावर्तते । १० १५

**नाम्नि क्रिया किमर्थमविवक्षिता**

आह । कथं पुनर्नाम्नि क्रिया विद्यत इति विद्यमानापि चाविवक्षितेति । प्रकृतिः प्रत्ययो विभक्तिरिति त्रिधा विभज्यमानमेतद्वदेवैतन्नाम । तत्र प्रकृतिर्धातुरित्येकोऽर्थः । धातुश्च पुनः क्रियावचनः । स च नाम्नि विद्यत इति तदभिधेयभूतया क्रियया भवितव्यम् । २० तथावश्यं यत्रार्थस्तत्र तदभिधायकशब्दो यत्र शब्दस्तत्र तद्वाच्योऽर्थ इति । संबद्धौ हि शब्दार्थौ वाच्यवाचकत्वेन नित्यमिति । एवं तावत्क्रिया विद्यते । यत्पुनरेतदुक्तं विद्यमाना क्रिया कथमविवक्षितेति । अत्र ब्रूमः । नाम्नि यो धातुः स कृत्प्रत्ययोपजनितेन प्रातिपदिकेनाभिभूतक्रियाभिधान-

---

१ क. ख. ग. ज. °प्यव्ययवार्थानि. घ. झ. ट. °प्यविवक्षितान्वयवार्थानि; ट. °प्यविवक्षितान्वयवार्थानि° र्थानि. २ क. ख. ग. ज. घ. झ. ट. °नानीति क्रि°. ३ घ. झ. ट. ठ. नामयन्ति. ४ क. ख. घ. झ. ट ठ. °मानाभि क्रि°. ५ क. ख ग. ज. तद्धिक्रि°. ६ च. ठ. कृतार्थो; ट. धात्वर्थो° कृता. ६ क. ख. वा त्रि° . ७ क. ख. घ. झ. ट. ठ. त्रेधा. ८ क. ख. यथावश्यं; घ. ट. यत्तथावश्यं. ९ क. ख. °मानापि. २५ ३०

शक्तिः प्रातिपदिकान्तर्लीनवृत्तिरेव स्वमर्थमुद्भावयितुमशक्नुवन्प्रातिपदिकार्थ-मेवानुवर्तमानो द्रव्यप्रधान एव भवतीत्येवं न विवक्षिता क्रिया । सा तु विद्यमानापि विगृह्यमाणे नाम्नि प्रातिपदिकनिबन्धनादुन्मुच्यमाना द्रव्यगतमर्थं प्रकाशयति न प्राग्विग्रहादिति द्रव्यपरता सत्त्वशब्दस्य गम्यते । तथा-
५ चोक्तं "शब्देनोच्चारितेनेह येन द्रव्यं प्रतीयते[1] । तदक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः" ( बृहद्देवता १–४२ ) इति । पुनश्चोक्तं "अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः । तन्नाम कवयः प्राहुर्भेदे वचनलिङ्गयोः" ( बृ० १–४३ ) ॥ "निर्देशः कर्म करणं प्रदानमपकर्षणम् । स्वाम्यर्थोऽथाधिकरणं[2] विभक्त्यर्थाः प्रकीर्तिताः"
१० इति ॥ स्त्रीपुंनपुंसकैर्भेदं[3] निपातोपसर्गाणामपि वा क्वचिन्नामत्वमपेक्ष्य बहुवचनेनोक्तं नामानीति ।

नामाख्यातलक्षणयोरपरा व्याख्या

अपरे पुनः । भावकालकारकसंख्याश्चत्वार एतेऽर्था आख्यातस्य । तेषां भावः प्रधानं भवति[4] । अतो भावप्रधान-माख्यातमित्युक्तम्[5] । नाम्नोऽपि सत्ता द्रव्यं संख्या
१५ लिङ्गमित्येतेऽर्थाः । तेषां द्रव्यं प्रधानमित्यतः सत्त्व-प्रधानानि नामानीत्युक्तमेवमेके मन्यन्ते ।

नामाख्यातयोः कतरत्प्रधानं

"तद्यत्रोभे भावप्रधाने भवतः" । एवं तावदनयोर्नामाख्यातयोः परस्परविनाभूतयोः[6] स्वपदार्थोक्तावेकस्य भावप्राधान्यमेकस्य सत्त्वप्राधान्यम् । अथ पुनर्यत्र[7] ते उभे
२० भवतः । क्व च पुनरुभे एते[8] भवतः । वाक्ये । तत्र कस्य प्रधानमर्थः कस्य गुणभूत इति । शृणु । भावप्रधाने भवतस्तस्य चिकीर्षितत्वात् । वाक्ये ह्याख्यातं प्रधानं तदर्थत्वाद्गुणभूतं नाम तदर्थस्य भावनिष्पत्तावङ्गभूतत्वात् । एवं तावदाख्यातं वाक्ये प्रधानम् ।

---

२५ १ ग. ज. प्रदीयते. २ ग. ज. स्वाम्यर्थोऽधिक°. ३ घ. ट. °सकनेदं; झ. °सकभेदं. ४ क. ख. ठ. भावप्रधानता भवति; ग. ज. भावप्रधानं. ५ घ. झ. 'इति' नास्ति; ट. ख्यातमुक्तम्° मित्यु. ६ क. ख. घ. ज. झ. ट. °स्पराविना; च. परस्पराविना°रा; °ठ. परस्परं विना°. ७ क. ख. घ. झ. ट. °यत्रैते. ८ क.
३० ख. घ. झ ट. पुनरेते उभे.

अथ पुनः कथमभिनिर्वर्त्यमानो भाव आख्यातेनोच्यते किं वा तदाख्यातमिति । यतो लोकप्रसिद्ध्यैवोदाहरति तत्प्रसिद्धत्वाच्छब्दार्थसंबन्धस्य । "पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम्" । अपूर्वमनपरं सन्तमेकत्वात्पूर्वापरीभूतं पूर्वापरमिव पौर्वापर्येणावस्थितमेकमनेकासु क्रियास्वाश्रितमुपानदधिनहनपूर्वोत्तरपादविहरणपथिभोजनशयनासनोदकपानाद्यास्वाश्रितं तदभिनिर्वृत्तिवशेनाभिनिर्वर्त्यमानं कस्मैचित्पृच्छते किं करोतीत्यन्य आचष्टे व्रजतीति । अविभक्तकर्तृकं द्वितीयमित्युदाहरणद्वयं भावद्वयोपप्रदर्शनार्थम् । उपक्रमप्रभृतीति । उपक्रम आरम्भस्तस्मादारभ्यापवर्गपर्यन्तं यावदन्त्या क्रियेत्यर्थः । आह । अन्त्यासंनिधौ भावनिर्वृत्तिदर्शनादन्त्ययैव निर्वर्त्यत इति । शृणु । पूर्वासामभावेऽन्त्यैव न स्यात्पूर्वापेक्षं हि तस्या अन्त्यत्वम् । अपि च । प्राप्तिफलो हि व्रजिः । न चैकया क्रिययाभिमतदेशान्तरप्राप्तिरस्ति । तस्मादुपक्रमाद्याभिः क्रियाभिरीषदीषदभिनिष्पाद्यमानो भावोऽन्त्यायामभिसंतिष्ठते । अतस्तत्संनिकर्षे गृह्यते । न त्वसावन्त्ययैवाभिनिर्वर्त्यत इत्यन्ते गृह्यते । अपि च प्रसिद्धमेतदुपक्रमादारभ्य यच्च व्रजितं यच्च व्रज्यते यच्च व्रजिष्यमाणं तत्सर्वमेकीकृत्य वक्तारो भवन्ति व्रजति देवदत्त इति । न प्रसिद्धिरुपरोद्धुं न्याय्या । यथावस्थितानां हि शब्दानामन्वाख्यानमात्रमेव शास्त्रेण क्रियते नोत्पाद्यन्ते शब्दा नाप्यर्थेषु विधीयन्ते । तस्मात्प्रसिद्धशास्त्रसमयोऽपि लौकिकप्रसिद्ध्यैव पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम् । तस्मादुपपन्नमनेकक्रियाभिर्निर्व-

(Marginal notes: आख्यातेन भावः कथमुच्यते । आख्यातोदाहरणं च — भावोऽनेकक्रियाभिर्निर्वर्त्यते)

१ ठ. °भूतमिति । अपूर्व'. २ घ. झ. ट क्रियासु स्वा आश्रि°. ३ घ. झ. ट. °दभिनहन°. ४ घ. ट. तदक्षिभिनिर्वृत्ति°. ५ क. ख. ग. ज. °निर्वर्तमानं. ६ घ. झ. ट. पचि द्वितीयमिति । उदा०. ७ च. निर्वृत्यत°. ८ क. ख. घ. झ. ट. ठ. व्रजातिः. ९ क. ख. ग. ज. ततः संनि°; व. अत तत्संनि°; झ. अतंततरं; ट. °ह्यततैःतैसं' ततः सं. १० क. ख. घ. झ. ट. गृहीतः. ११ ग. ज. °क्रमप्रार°. १२ ग. ज. व्राजित'.

र्त्तमानो भाव आख्यातेनोच्यत इति । आह च । " क्रियासु बह्वीष्व-भिसं[1]श्रितो यः पूर्वापरीभूत इवैक एव । क्रियाभिर्निर्वृत्तिवशेन सिद्ध आख्यातशब्देन तमर्थमाहुः " [ बृह० १४–४ ] इति ।

" मूर्तं सत्त्वभूतं सत्त्वनामभिः " । कदाचित्तमेव भावं तथैवोपक्रमप्रभृत्यभिनिर्वर्तमान[2]मपवर्गपर्यन्तं मूर्तं सन्तं[3] सत्त्वभूतं सत्त्वरूपिणं लिङ्गसंख्यायुक्तैः सत्त्वनामभिराचष्टे । कथम् । "व्रज्या पक्तिरिति" । तत्रोक्तो विशेषः । कृदभिहितो भावो द्रव्यवद्भवति । सोऽयं प्रयुक्तस्य लक्षणस्य प्रयोगमपेक्ष्य क्वचिदपवादः । आह च । " क्रियाभिनिर्वृत्तिवशोपजातः कृदन्तशब्दाभिहितो यदा स्यात् । संख्याविभक्तिव्ययलिङ्गयुक्तो भावस्तदा द्रव्यमिवोपलक्ष्यः । " [ बृ० १–४ ] इति । आह । कस्मात्पुनरेक एव भावस्तिङन्तेन कृदन्तेन[4] चान्यथोच्यत इति । उच्यते । शब्दस्वाभाव्यादृते नान्यदत्र प्रयोजकमस्ति । अपि चोक्तमस्माभिरवस्थितानामेव शब्दानामभिधानाभिधेयसंबन्धेनाभिसंबद्धानामेव नित्यमन्वाख्यानमात्रमेव क्रियते नोत्पाद्यन्तेऽर्थेषु वा विधीयन्ते शब्दा इति । व्रज्या पक्तिरित्युदाहरणद्वयमुक्तप्रयोजनम् ।

सत्त्वभूतो भावः कथमुच्यते

भावस्य द्विरूपत्वे कारणम्

" अद इति सत्त्वानामुपदेश " इति । भावोऽधिकृतः । स च पुनः सत्त्वभूतो नेतरः । यतस्तत्संबन्धेनैव नाम्नो यदवशिष्यते तदुच्यते । किं पुनस्तत् । सामान्यविशेषवाचित्वम् । तत्राद इति सत्त्वानामुपदेशः सामान्यत इति वाक्यशेषः । सर्वेषामपि सत्त्वानामध्ययने प्राप्ते लिङ्गाविशिष्टत्वादिदमेवैकमुदाहृतमुपप्रदर्शनार्थम् ।

सत्त्वानां सामान्योपदेशः

आह । विशेषोपदेशः कथमिति । उच्यते[5] । " गौरश्वः पुरुषो हस्तीति "

१ च. संशृतो. २ ठ. °निर्वर्त्यमान°. ३ क. ख. ग. ज. ' सन्तं ' न विद्यते. ४ च. ' कृदन्तेनं ' न विद्यतें. ५ क. ख. °च्यते । खण्डसूत्रम् । गो° ; ग. °च्यते । प्रथमः खण्डः ॥ १ ॥ गौ°; ज. °च्यते । खण्डः । गौ°; घ. झ. ट. °च्यते । सूत्रं । गौ°.

सत्त्वानां विशेषोपदेश इति वाक्यशेषः । सोपाधिकनिरुपाधिकोपप्रदर्शनार्थमनेकोदाहरणम् । सामान्यवृत्त्या विशेषवृत्त्या चोभयथा शब्दः प्रवर्तत इत्युभयमुपदर्शितम् ।

विशेषोपदेशश्च

" भवतीति भावस्य " सामान्येनोपदेशः । अत्र हि सर्वेषां सत्तावाचिनामध्ययने प्राप्ते भवतिरेवैक उदाहरणार्थः परिगृहीतः । विद्यमानतामेवानुभवन्तः सर्वे भवतिशब्दवाच्या अन्याभिर्विशेषक्रियाभिरभिसंबध्यन्ते । तस्माद्भवतीति सर्वक्रियाप्रसवबीजभूतमस्तित्वमात्रमेव निरुपपदेन भवतिशब्देनोच्यत इत्युपपन्नं भवति सामान्यवाचित्वम् । विशेषनिर्देशः कथमिति । उच्यते । " आस्ते शेते व्रजति तिष्ठतीति " । सकर्मकाकर्मकोपदर्शनार्थमुभयेषामुदाहरणम् ।

भावस्य सामान्योपदेशः

विशेषोपदेशश्च

" इन्द्रियनित्यं वचनमौदुम्बरायणः " ॥ १ ॥

**तत्र चतुष्ट्वं नोपपद्यते युगपदुत्पन्नानां वा शब्दानामितरेतरोपदेशः शास्त्रकृतो योगश्च व्याप्तिमत्त्वात्तु शब्दस्याणीयस्त्वाच्च शब्देन संज्ञाकरणं व्यवहारार्थं लोके तेषां मनुष्यवद्देवताभिधानं पुरुषविद्यानित्यत्वात्कर्मसंपत्तिर्मन्त्रो वेदे । षड् भावविकारा भवन्तीति वार्ष्यायणिर्जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति जायत इति पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे न प्रतिषेधत्यस्तीत्युत्पन्नस्य सत्त्वस्यावधारणं विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारं वर्धत इति स्वाङ्गाभ्युच्चयं सांयौगिकानां वार्थानां वर्धते विजयेनेति वा वर्धते शरीरेणेति वापक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमं विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति ॥ २ ॥**

१ ग. ज. °ध्ययनप्राप्तो भ°. २ क. ख. ग. च. ज. घ. झ. °रायणस्तत्र; ट. °रायणैस्तत्रं; ठ. °रायण इति । इति निरुक्तटीकायां प्रथमाध्याये प्रथमः खण्डः। तत्र. ३ क. ख. छ. त. द. °वेदे ॥२॥ षड°. ४ क. ख. छ. त. द. ३.

" तत्र चतुष्ट्वं नोपपद्यते "। आह[1] । इदं[2] तावदुक्तं पदचतुष्टयं भावचनता द्रव्यवचनता गुणभावः प्रधानभावः पूर्वापरीभावः सामान्यवाचित्वं विशेषवाचित्वमिति नोपपद्यते । कस्मात् । वचनानित्यत्वात् । कः पुनरेवमाहानित्यं वचनमिति । उच्यते । इन्द्रियनित्यं वचनमित्यौ[3]दुम्बरायणः । इन्द्र आत्मा स येन ईयते लिङ्ग्यतेऽनुमीयते वास्त्यसावात्मा कर्ता यस्येदं करणं नाकर्तृकं करणमस्तीति तदिन्द्रियम् । तस्मिन्नित्यमिन्द्रियनित्यम् । किं पुनस्तत् । वचनम् । उच्यतेऽनेनेति वचनं वाक्यमित्यर्थः । कतमत् । यदेतन्नामाख्यातोपसर्गनिपातात्मकम् । औदुम्बरायण आचार्यो मन्यत इति वाक्यशेषः । उदुम्बरस्यापत्यमौदुम्बरिः । तस्यापत्यमौदुम्बरायणः । आह । ततः किमिति । उच्यते । तत्र तस्मिन्वाक्य एवमिन्द्रियनित्ये सति यदेतत्पदचतु[4]ष्टमुक्तमेतन्नोपपद्यते । कस्मात् । शृणु । यावदेव वक्तुर्वागिन्द्रिये श्रोतुश्च श्रोत्रेन्द्रिये वचनं तावदेव तदस्तीति शक्यते वक्तुं प्रच्युतं च नास्ति । अपि च । वा[5]क्यमपि समस्तमुद्भूतं तदिन्द्रिये नावतिष्ठते यदवयवभूतानि पदान्यवस्थितानि परिसंख्यातुम् । न च विनष्टाविनष्टयोः पदयोः सह परिसंख्यानमस्ति । तस्माद्वचनानित्यत्वात्पदचतुष्टानुपपत्तिरित्युपपन्नम् ।

पदचतुष्टानुपपत्तिः

किं चान्यत् । " अयु[7]गपदुत्पन्नानां वा शब्दानामितरेतरोपदेशः " । वाशब्दः समुच्चयार्थः । " वा विकल्पोपमानद्वंद्वसमु[8]च्चयार्थेष्विति " हि निपातविदः पठन्ति । वक्ष्यति चायमपि " वेति विचारणार्थे " इत्युपक्रम्य " अथापि समुच्चयार्थे[9] भवति" ( निरु० १-४) इति । एवं चैतेषामयुगपदुत्पन्नानां शब्दानां वाक्यावयवभूतानां योऽयमितरेतरोपदेश इतरेतरगुणप्रधानभावो नाम्न आख्यातं प्रति गुणभावेनोपदेश आख्यातस्य च नाम प्रति प्रधानभावेनोपदेशः । अयं च नोपपद्यत इत्यनुवर्तते । किं कारणम् । न हि

इतरेतरोपदेशश्च

---

१ ग. ज. ' आह ' नास्ति. २ क. ख. इह ताव;° ग. ज. इह तावदुत्तरं । पद°. ३ क. ख. ग. ज. घ. झ. ट ठ. °मिति । इन्द्र;° च. °मिति । इन्द्र, °त्यौदुम्बरायणः. ४ ठ. °चतुष्टयमु° ५ ग. ज. वाक्यतो. ६ क. ख. ग. ज. घ. झ. ट. वाक्यमपि वाक्यं सम°. ७ ग. ज. युगपद्° . ८ च. °च्चयापेक्षया इति°. ९ क. च. झ. ट. °यार्थे वाशब्दो भव.

विनष्टं नाम गुणभावमियादाख्याते । नापि विनष्टमाख्यातं प्रधानभावमियान्नाम्नि । न हि विनष्टाविनष्टयोरितरेतरगुणप्रधानभावोऽस्ति ।

किं चान्यत् । "शास्त्रकृतो योगश्च" । यश्चायं शास्त्रकृतो योगः शास्त्रदृष्टः शब्दस्य शब्दान्तरेण योगः संयोगः[1] ।

**शास्त्रकृतो योगश्च**

तद्यथा । उपसर्गस्य धातुना धातोः प्रत्ययेन प्रत्ययस्य लोपागमवर्णविकारैः । अयं च वचनानित्यत्वान्नोपपद्यते । किं कारणम् । अयुगपदुत्पत्तौ हि सत्यां धातुरुच्चारितो विनष्टः स कथमुपसर्गेण योक्ष्यते प्रत्ययेन वा । न हि विनष्टाविनष्टयोर्योगोऽस्ति । तस्माद्य एष नामाख्यातयोरितरेतरगुणप्रधानभाव उपसर्गनिपातानां नामाख्याताभ्यां योगो[2] यच्च पदचतुष्टमुक्तं सर्वमेतदसम्यगिति ।

युगपदुत्पन्नानामित्येवमारभ्यमाणयोर्वाक्ययोरनयोरन्यो[3] व्याख्यामार्गो भवति । नोपपद्यते युगपदुत्पन्नानामयुगपदुत्पन्नानामित्युभावपि[4] पाठौ व्यापारं प्राप्नुतः समानसंहितत्वात् । इन्द्रियनित्यत्वात्पदचतुष्टानुपपत्तिरित्युच्चार्यमताशङ्काद्वारेणैतदवतार्यते[5][6] युगपदुत्पन्नानामिति ।

**युगपदुत्पन्नानामित्यस्यान्यो व्याख्यामार्गः**

अथ मतम् । अविचालिन एवैते कूटस्था अविनाशिनः शब्दाः । ते तु कल्पान्ते तस्माद्व्याप्तिरूपाद्विशीर्णेष्वभिधेयेष्वभिधातृषु[7] कारणभावमापद्यमानेष्वाश्रयाभावादेवावस्थातुमशक्नुवन्तोऽभिधेयाभिधातृसहिता एव कारणात्मभावमधिकमनुभूयाभिसंभवकाले कल्पादावन्यकल्पविशिष्टकर्मनिर्जितकार्यकरणसर्वभूतसाधारणात्मभूते[8] हिरण्यगर्भे विवर्तमाने तद्बुद्धिमाश्रयं प्राप्य तेनैव सह युगपदेवाभिव्यज्यन्ते विशेषात्मलाभाय शब्दा इति । अत्र ब्रूमः । एवमप्येतेषां युगपदुत्पन्नानां युगपदुत्पत्तावपि सत्यां यद्यपि पदचतुष्टं[9] प्राप्नोत्येव सहावस्थितानां तथापीतरेतरोपदेश इतरेतरगुणप्रधानभावश्च न प्राप्नोति । न हि युगपदुत्पन्नयोर्गोविषाणयोरितरेतरगुणप्रधानभावोऽस्ति । किं चान्यत् । कूटस्थेषु चाविचालिषु नित्येषु शब्देषु य एष[10] शास्त्रकृतो योग एवं नोप-

---

१ क. ख ग ज. 'संयोगः' नास्ति. २ क. ख. च. योगे. ३ क. ख घ. झ. ट. °न्नानामयुगपदुत्पन्नानामित्ये°. ४ क. ख. ग. ज. °वपि व्याहारौ प्राप्नु°. ५ ग. ज. मताशङ्कच्छद्वा°; घ. ट. मनाशङ्काद्वा°. ६ ग. च. ज. °णैतत्प्रतार्यते. ७ घ. झ. ट. व्याप्तिरूपा°. ८ घ. झ. निर्मित; ट. निर्मित° र्जि. ९ क ख. घ. झ. ट. ठ. °चतुष्टयं. १० क. ख. घ. झ. ट ठ. स एष.

पद्यते । किं कारणम् । अयुक्तो हि युज्यते । नित्ययुक्ताश्च[1] धातव उपसर्गैः प्रत्ययैश्च प्रत्ययाश्च लोपागमवर्णविकारैरिति । तस्मान्नित्यपक्षेऽपि वचनस्य यदेतदुपवर्णितं गुणप्रधानभावविषयं[2] पदचतुष्टयमाधिकृत्य[3] सर्वमेतदसम्यगिति ।

परोद्भावितदोषनिराकरणम्

५ " व्याप्तिमत्त्वात्तु शब्दस्य " । उच्यते सर्वमेतदुपपद्यते । कस्मात् । व्याप्तिमत्त्वाच्छब्दस्य । तुशब्दः पक्षव्यावृत्तौ । व्यापनं व्याप्तिः । सा यस्मिन्नस्ति सोऽयं व्याप्तिमाञ्छब्दः । तद्भावो व्याप्तिमत्त्वम् । तस्माद् व्याप्तिमत्त्वाच्छब्दस्य सर्वमेतदुपपद्यत इति

१० वाक्यशेषः । आह । कथं पुनर्व्याप्तिमाञ्छब्द इति । शृणु । शरीरे ह्यभिधानाभिधेयरूपा बुद्धिर्हृदयान्तर्गताकाशप्रतिष्ठिता[4] । तयोरभिधानरूपा-[5]भिधेयरूपयोर्बुद्ध्योर्मध्येऽभिधानरूपया[6] शास्त्राभिमतप्रयोजनविजिज्ञापयिषया बुद्ध्या पुरुषेण तदभिव्यक्तिसमर्थेन[7] स्वगुणभूतेन प्रयत्नेनोदीर्यमाणः[8] शब्द उरःकण्ठादिवर्णस्थानेषु[9] निष्पद्यमानस्तथा[10] पुरुषार्थाभिधानसमर्थ-

१५ वर्णादिभावमापद्यमानः पुरुषप्रयत्नेन[11] बहिर्विनिक्षिप्तोऽविनाशिनि[12] व्यक्तिभावमापन्नः श्रोत्रद्वारेणानुप्रविश्य प्रत्याय्यस्य[13] बुद्धिं सर्वार्थरूपां सर्वाभिधानरूपां व्याप्नोतीत्येवं व्याप्तिमाञ्छब्दः । आह । ततः किं यदि व्याप्तिमाञ्छब्दः । उच्यते । यदि नित्यो यद्यनित्यः पदचतुष्ट्वादि सर्वमुपपद्यत एव । किं कारणम् । न ह्यसंव्याप्य पुरुषस्य बुद्धिं[14] बुद्ध्यवस्थमर्थं प्रत्ययमादधीत ।

२० न चानवस्थितो व्याप्नुयात् । ततश्च किम् । स शब्दस्तं[15] तमर्थमभिदधत्स्व-

---

१ क. ख. हि; घ. झ. ट. हिश्च, ठ. °श्च हि धा°. २ क. ख. घ. झ. ठ. भावादि पद°; ट. भावादि पद° वविषय. ३ ग. ज. तुष्टत्वमधि°. ४ ठ. °काशे प्र°. ५ ग. ज. तयोरभिधानरूपा हृदयान्तर्गताकाशप्रतिष्ठिता तयोरभिधानाभिधेयरूपयो°. ६ च. 'भिधेयरूपयोर्बुद्ध्योर्मध्येऽभिधानरूपया' नास्ति. ७ ग. ज. समर्थो

२५ न; च. सामर्थ्येन. ८ ग. °माणादिषु सत्युरःकण्ठा°; च. ज. माणा सत्युरःकण्ठा°; ट. °माणः शब्दः उरः उ° सत्यु. ९ ग. च. ज. °ण्ठादिषु वर्ण°. १० क. ख. झ. निष्पद्यमानस्तया; ग. ज. निष्पद्यमानस्ततया; च. निष्पद्यमानतया. ११ घ. झ. ट. ठ. °षयत्नेन. १२ ग. ठ. बहिर्निक्षिप्तो°. १३ घ. झ. प्रत्याप्यस्य; ट प्रत्याय्यस्य° य्य. १४ क. ख. ग. ज. 'बुद्धिं' नास्ति. १५ क. ख. घ. झ. ट. °ब्दः

३० स्वमर्थं°.

क्रियाप्रवेशोपजनितेन[1] तेनाभिधानेनाख्यातमित्येवमादिना स्वमात्मानमभिसं-
बध्य तिरोभवितुमुपक्रमते विनाशं [2]वोपैति । तस्य स्वदेशोपजनितैराख्या-
तादिभिः स्वप्रदेशविशेषानुस्मृतिपूर्वकं परिसंख्यानमुपपद्यत एव । तस्मात्स-
म्यगेवोक्तम् । यत्पुनरेतदुक्तं न हि विनष्टाविनष्टयोः परिसंख्यानमस्तीति ।
अत्र ब्रूमः । पुरुषप्रयत्नोपजनिताद्वक्त्रोद्घातात्[3] परस्यार्थप्रत्ययमाधाय शब्दव्य-
क्तय एता[4] ध्वंसन्ते न तु शब्दाकृतयः । तास्तु [5]भूयोऽभिधानशक्त्या बुद्धि-
द्वारेणावस्थिताः [6]स्वानभिधेयान्प्रकाशयन्त्यः स्थिता एव भवन्ति । तासु
साक्षात्परिसंख्यानं वर्तमानमितरासु विनाशिनीषु व्यक्तिषु लक्षणयोपच-
र्यते । तस्माद्व्याप्तिमत्त्वाच्छब्दस्य पदचतुष्ट्वादि सर्वमुपपद्यत एव । व्याप्ति-
मत्त्वादित्येतेनैवेतरेतरोपदेशः प्रत्युक्तः शास्त्रकृतश्च[7] यो योगः । नामाख्यातपद-
रूपे बुद्धितत्त्वे [8]सत्त्वक्रियाविषये गुणप्रधानभावेनावतिष्ठेते । तयोर्गुणप्रधान-
भावे सति व्यक्तिषु[9] लक्षणयोपचर्यते[10] । तथा च धातुरूपा बुद्धिस्तदर्थया[11]
संयुज्यते । बुद्धिरेव हि धात्वादिरूपेण विपरिणममाना शास्त्रेण[12] संस्क्रियते ।
तस्यां संस्क्रियमाणायां शब्दे संस्कारोपचारः क्रियते तदभिधायकत्वाच्छ-
ब्दस्य । तत्र यदुक्तं वचनानित्यत्वादितरेतरोपदेशः शास्त्रकृतश्च योगो नोप-
पद्यत इत्येतदयुक्तमिति । नित्यत्वपक्षेऽपि युगपदुत्पन्नानां गुणप्रधानभावो
गोविषाणवन्नास्तीति यदुक्तमनैकान्तिको[13] दृष्टान्तः । दृष्टो हि युगपदुत्पन्न-
योरेककाले[14] राजपुत्रामात्यपुत्रयोर्गुणप्रधानभावः । तत्र यदुक्तं युगपदुत्पन्ना-
नामितरेतरोपदेशो न प्राप्नोतीत्येतदयुक्तं व्याप्तिमत्त्वाच्छब्दस्य सर्वमुपपद्यत
इति । तदेव सम्यग्भवति[15] ।

अपरो व्याख्यामार्गः । इन्द्रियनित्यत्वात्पदचतुष्ट्वानुपपत्तिस्तदाश्रयस्य च[16]

---

१ घ. झ. ट. ठ. °पजतितेनाभि°. २ क. ख. घ. झ. ट. ठ. चोपैति. ३ च. जनिता वक्त्रोद्याताः. ४ क. ख. ग. घ. ज. झ. ठ. एव. ५ घ. झ. ठ. तयाभिधान; ट. तयाभि° भूयोऽ°. ६ घ. झ. स्वानर्थान्; ट. स्वानर्थान् °भिधेया. ७ क. ख. घ. झ. ट. °कृतो योगश्च. ८ च. ठ. सर्वक्रि; ° ट. सत्त्वं वं. ९ क. ख. घ. झ. ठ. °सति तच्छब्दे लक्षण;° ग. ज. °सति तच्छब्दे (ग. °च्छब्द) लक्षणया व्यक्तिषूपचर्यते; ट. तच्छब्दे ल° व्यक्तिषु. १० क. ख. घ. झ. ट. ठ. °चर्यते. ११ घ. ट. तदर्थतया. १२ ग. ज. शास्त्रे. १३ क. ख. घ. झ. ट. °कान्तिकोऽसौ दृ°. १४ ग. ज. °कालराज°. १५ क. ख. घ. झ. ट. ठ. सम्यगिति. १६ ग. च. ज. ' च ' न विद्यते.

युगपदुत्पन्नानामित्यस्यापरो व्याख्यामार्गः

सर्वस्येत्येवमाक्षिप्ते परिहारद्वारेणेदमवतार्यते युगपदुत्पन्नानां वा शब्दानामितरेतरोपदेश इति । अत्र समञ्जस एव वाशब्दः । कथम् । अयुगपदुत्पन्नानां वा युगपदुत्पन्नानां वा नित्यानां वानित्यानां वेत्यर्थः । इतरस्याख्यातशब्दस्य क्रियावचने शब्देऽभिधानत्वेनोपदेशः । इतरस्य च नामशब्दस्य च सत्त्ववचने शब्देऽभिधानत्वेनोपदेशः । शास्त्रकृतो योगश्च । लक्षणशास्त्रेण चैते क्रियासत्त्वे आख्यातनामशब्दाभ्यां युज्येते । तस्मादुपपद्यते पदचतुष्टमिति । आह । आगमनमात्रमेतत् । हेतुरुच्यतां कथं विनष्टाविनष्टयोः सह परिसंख्यानमवस्थितयोर्वा गुणप्रधानभाव इति । उच्यते । व्याप्तिमत्त्वात्तु शब्दस्य । हेत्वर्थः समान एव पूर्वेण ।

शब्दानां स्थानेऽभिनयाः प्रयोज्या इति परपक्षः

आह । यदि व्याप्तिमत्त्वाच्छब्दस्य व्यवहारार्थं पदचतुष्टमुपादीयत एवमपि नोपादेयम् । किं कारणम् । अभिनया[2] अपि व्याप्तिमन्तः पाणिविहाराक्षिनिकोचादयस्तैरेव कार्यसिद्धिरस्त्विति । अपि चैवं पदचतुष्टयदोषैर्न संभक्ष्यामहे न[3] वायमतिमहान्वेदसमुद्रः पठितव्यो भविष्यत्यतिक्लेशेनेति । उच्यते ।

स्यादेतदेवं यद्ययमपरो

नेति सिद्धान्तः

विशेषहेतुर्न स्यात् । कतमः । " अणीयस्त्वाच्च शब्देन संज्ञाकरणं व्यवहारार्थे लोके " । सत्यमभिनया अपि व्याप्तिमन्तो न त्वणीयांसः । ते महता यत्नेन व्याप्नुवन्ति न च निःसंदिग्धं कुर्वन्ति । तत्प्रतीतार्थसंबन्धस्यैव नेतरस्य । शब्दस्त्वपरिमितमर्थमल्पीयसा यत्नेनोच्चारितो व्याप्नोति । तस्मादणीयस्त्वादितिविशेषहेतूपपत्त्या शब्देनैव संज्ञाकरणं व्यवहारार्थं लोक इत्युपपन्नम् । यत्पुनरेतदुक्तमध्ययनकृतैर्दोषैर्न संभक्ष्यामहे न चायमतिमहान्वेदसमुद्रोऽध्येतव्यो भविष्यतीति ।

---

१ क. ख. घ. झ. ट. °त्यर्थः । इतरेतरोपदेशः । इतरस्येत्याख्यात°. २ ठ. अभिनया° संकेता. ३ क. ख. घ. झ. ट. न चाय°. ४ घ. झ. ट. ष्यतीति । अतिक्ले;° च. ष्यतीति । अतिक्ले°. ५ ठ. °च्यते । तत्स्यादे°. ६ व. ट. 'च' नास्ति; ठ. °त्वाच्च शब्देनेति । सत्य°. ७ क. ख. ग. च. ज. ठ. °तीतशब्दार्थसं;° ट. °तीतार्थ° तशब्दा.

अत्र ब्रूमः । अभ्युदयो ह्यत्र वेदानुरूप एव भवति । अभ्युदयार्थं नः शास्त्रारम्भे यत्नः । तत्र यदुक्तमध्ययनकृतैर्दोषैर्न संभक्ष्यामहे न चायमतिमहान्वेदसमुद्रोऽध्येतव्यो भविष्यतीत्येतदुक्तमिति ।

**देवताभिरपि शब्दैरेव व्यवहारः**

" तेषां मनुष्यवद्देवताभिधानम् " । आह । एवं तावन्मनुष्याणां मनुष्येषु शब्देन चतुर्थीविभक्तेनावबोधकरणम् । अथ मनुष्याणां देवेषु हविःसंप्रदानाशीःप्रार्थनादिव्यवहारः केनेति । उच्यते । तेषामेव शब्दानामियमेव व्यवस्था देवेष्वपि देवानपि प्रति । कतमा । मनुष्यवद्देवताभिधानमिति । मनुष्यैस्तुल्यं मनुष्यवद्देवताभिधानम् । अभिहितिरभिधानम् । यथैव हि मनुष्याः प्रयोजनेषु नामाख्यातोपसर्गनिपातैर्यथार्थमभिदधत्येवमेव देवानपि[1] । देवेष्वपि शब्दस्याभिधान[2]शक्तिरपरिहीणे[3]त्यभिप्रायः । तेऽपि[4] हि मनुष्यवद्देवा अङ्गादियुक्ताः पौरुषविधिकैरङ्गैः कर्मभिश्च संस्तूयन्त इति वक्ष्यामः [ निरु० ७—६ ] । तस्मादुपपद्यते मनुष्यवद्देवताभिधानमिति ।

**मन्त्रसमाम्नानप्रयोजनम्**

आह । यदि नामाख्यातोपसर्गनिपातानामपरिहीणा शक्तिर्देवानप्यभिधातुमथ किमर्थं वेदे मन्त्रः समाम्नात इति । उच्यते । " पुरुषविद्यानित्यत्वात्कर्मसंपत्तिर्मन्त्रो वेदे " । पुरुषेषु मनुष्येषु विद्याया विज्ञानस्यानित्यत्वम् । तस्मात्पुरुषविद्यानित्यत्वाद्धेतोः कर्मसंपत्तिः फलेन संपादनमविगुणकर्मसंपत्तिः फलसंपन्नमेवं कर्म भविष्यतीत्येवमर्थं वेदे मन्त्रः । समाम्नात इति वाक्यशेषः । इतरथा हि पुरुषेषु विज्ञानस्यानित्यत्वाद्यथार्थं नाभिदधते देवान्नामाख्यातोपसर्गनिपातैः । अशिक्षितत्वान्मन्दशिक्षितत्वाद्विस्मरणशीलत्वाद्वा देवानामपराध्येयुरयथावत्प्रयुञ्जाना नामाख्यातोपसर्गनिपातान् । ते ततश्च सर्वार्थप्रत्यक्षदृशो देवाः स्वल्पमप्य[11]पराधं

---

१ क. ख. घ. झ. ट. देवा अपि. २ क. ख. ग. ज. °भिधानेन शक्ति°. ३ क. ख. घ. झ. °हीनेत्य°; ट. हीनेत्य° णे. ४ झ. °मेपि हि; ठ. तेऽपि मनु°. ५ ग. ज. संस्क्रियन्ते. ६ क. ख. घ. झ. ट. इति हि वक्ष्यति; ग. ज. इति हि वक्ष्यामः. ७ ग. ज. विद्याविज्ञान°. ८ घ. झ. ट. ठ. °त्यत्वात्तस्मा°. ९ ग. फलैकसं°. १० क. ख. झ. ट. ठ. °मेव कर्म° . ११ क. ख. घ. झ. ठ. °मप्ययथावदभिधानं; ट. मप्ययथावदभिधानं न° पराधं .

न मर्षयन्ति । विगुणमेतदिति विद्यानित्यत्वात्तदभावे नेयुः कर्माणि । ततश्च देवताहीनं कर्मफलं संपद्यते । न च केवलं फलासंपत्तिः । किं तर्हि । दुरिष्टहेतुको दोषोऽपि स्यात् । तस्मादेत एव नामाख्यातोपसर्ग-निपाताः प्रयोगानुपरिपाटिविनियमार्थं मन्त्रत्वेन वेदे समाम्नाताः । न हि नामाख्यातोपसर्गनिपातान्परित्यज्य मन्त्राः सन्ति । एतदेव हि चतुर्विधं पदजातं प्रयोगानुपरिपाट्या कयाचिदवस्थितं मन्त्रा इत्युच्यन्ते ।

**लौकिकज्ञानस्यानित्यत्वम्**

आह । कथमनित्यत्वं विद्यायाः पुरुषेष्विति । उच्यते । इह येन वाक्यविरचनानुक्रमेणार्थवस्त्वनुक्रमेण वोक्त्वानुप्रेष्यते मनुष्य 'एवमेव ब्रूयास्त्वममुं देवदत्तमिति' स तेनैव वाक्यविरचनानुक्रमेणैवावबद्धमपि सन्तमर्थं न शक्नोति प्रतिपादयितुम् । एवमनित्यत्वं विद्यायाः पुरुषेषु । तददोषं वा मनुष्यान्प्रति सर्वेषामेव मनुष्याणामनित्यत्वाद्विद्यायाः । अयमपि हि येन वाक्यानुक्रमेणाद्य वक्ति मनुष्यः कं[illegible]दर्थं न तेनैव श्वः शक्नोति वक्तुम् । तत्र यदुक्तं किमर्थं मन्त्रो वेदे समाम्नात इतीदं न युक्तं पुरुषविद्यानित्यत्वात्कर्मफलसंपत्त्यर्थं मन्त्रो वेदे समाम्नात इति । न ह्यविचारितमेवं वेदे पठ्यत इत्यत इदमाह ।

पदचतुष्टमाक्षिप्य पक्षप्रतिपक्षशो विचार्यावधारितम् । विषयश्चाक्षेपप्रसङ्गेनैवास्य परिक्लृप्तो देवमनुष्यव्यवहारार्थमेतदिति । तदेतत्सर्वमपि चोदकवशेन प्रसक्तानुप्रसक्तमुक्तम् । भावस्तु प्रकृतो यतस्तच्छेषमधुना वर्णयिष्यामः । स च पुनरुभयात्मा भावः कार्यात्मा कारणात्मा च । अनयोर्यः कार्यात्मा तमधिकृत्योक्तं क्रियानिर्वर्त्यो योऽर्थः स भावः क्रियैव वा भाव इति । इदानीं कारणात्मा भावो निरूप्यते । कथम् । क्रियाद्रव्ययोः

---

१ ग. च. ज. ठ. कर्मफलं न. २ घ. झ. ट. ठ. °पाटिनियमार्थं . ३ ग. ज. कदाचिदव° . ४.क. ख. ब्रूयात्—त्वं गन्तुं देव°; ग. ब्रूयास्त्वंगंदेव°; ज. ब्रूयास्त्वं गंत देव° . ५ ज. ठ. किंचिदर्थं. ६ ठ. युक्तं अयुक्तमित्यर्थः पुरु° . ७ क. ख. घ. झ. ठ. °मेव विज्ञायते । अत°; ट. °मेव विज्ञायते अत° वेदे पठ्यत इति . ८ क. ख. ग. ज. परिक्लृप्तः; च. परिक्लृप्तः° क्ल . ९ क. ख. घ. झ. ट. तयो° . १० च. भाव वा इति; ग. भाव इति ॥ २ ॥ इदा° .

कारणात्मा भावः

स्वात्मस्थो विशेषः कार्यात्मप्रध्वस्तयोः पुरुषोपभोगसंतानोपक्षये कार्यात्मभावातीतो येनात्मभावेन भवनमात्राभिसंबन्धिना प्रलयकालेऽवतिष्ठते सोऽत्यन्ताविनाशधर्मा आत्मा भाव इत्युच्यते । आह । कथमयमिह प्रसक्तः । शृणु । तद्विकारा एव हि द्रव्यगुणकर्मभावेनावस्थिताः सन्तो नामाख्यातोपसर्गनिपातैरभिधीयन्ते स्थितिकाले । असावपि च प्रहीणसर्वविशेषभवनमात्रक्रियाभिसंबन्धी सन् व्यावृत्तसर्वोपपदाभ्यां नामाख्यातशब्दाभ्यामुच्यते भवतीति भाव इति च । शब्दगतिविभुत्वादपोढसर्वविशेषामप्येतामवस्थामेतौ शब्दावाचक्षाते । अत एतयोरेव सत्त्वावधारणार्थमयमिह प्रसञ्जितः पदचतुष्टयाधिकरणे ।

अयं भावः प्रधानं पुरुषः शून्यं वा न भवति

आह । प्रधानमेतत्स्यात् । किं कारणम् । तद्भावेन ह्येतज्जगदवतिष्ठते प्रलयकाल इत्येके मन्यन्ते । तच्च नैव । किं कारणम् । भावविकार एव हि सोपपदशब्दवाच्यत्वात्प्रधानभाव इत्युच्यते । पुरुषस्तर्हि । तत्राप्ययमेव हेतुरनुपक्षीणशक्तित्वात् । एतेनैवेश्वरपरमाण्वादिभावविकाराः प्रत्युक्ता ईश्वरभावः परमाणुभाव इति सोपपदत्वात् । शून्यं तर्हि । तदपि न । यस्माच्छून्यशब्देऽपि भावशब्दासङ्गदर्शनम् । न ह्यसत्यर्थे शब्दः प्रयुज्यते । शब्दो हि शब्दस्यार्थेन संबद्धः । किंचित्तदस्ति यच्छून्यमिति । लोके हि प्रसिद्धं गृहं शून्यं ग्रामः शून्य इति । तस्मान्न शून्यशब्देनेह भाव उच्यते । किं तर्हि । प्रत्यपेक्षाकृतं शून्यत्वमिति । भावशब्द एवात्रोप-

५ १० १५ २०

---

१ घ. ट. स्थोऽविशे°. २ क. ख. सद्नमात्रा°; च. ठ. 'भवन' नास्ति; ट. भवन° सद्. ३ घ. झ. ट. च. संबन्धिना तनुमात्रा प्रलय;° ग. ज. संबन्धिन प्रलय;° ठ. संबन्धिना तनुमात्रः प्रलय°. ४ क. ख. घ. झ. ट. प्रहीन. ५ क. ख. घ. झ. ट. ठ. °गतविभु;° ग. ज. °गतं विभु°. ६ झ. अतः. ७ क. ख. ग. ज. घ. झ. साधारण्यार्थ;° ट. साधारण्यार्थ° सत्त्वावधारणा°. ८ ग. ज. प्रलयकार इ°. ९ क. ख. घ. झ. ट. इति ह्युच्यते. १० क. ख. °भावाः प्रत्यु;° च. ज. भावविकारः. ११ च. प्रत्युक्तः. १२ घ. झ. ट. ठ. तस्मात्. १३ क. ख. घ. ट. शून्यः शून्ये शब्दमहत्त्वे इति. १४ क. ख. °ब्देनाभाव°; घ. °नेहो भाव एवोच्यते; ट. ठ. °नेहाभाव एवोच्यते. १५ क. ख. घ. झ. अपेक्षा°; ट. अपेक्षा° प्रत्य.

२५ ३०

पदत्वेन युक्त इति चेन्न प्रयोगाप्रसिद्धेः। न हि भाव[1]भाव इति प्रसिद्ध[2]पूर्वः प्रयोगः। न च प्रयुज्यमानो [3]भावशब्दो भावशब्द एवोपपदत्वेन प्र[4]धानशब्दव[5]त्किंचिद्विशेषप्रत्ययमादधाति। तस्मात्सर्वोपपदहीनस्य भवतेर्घञन्तस्य भावः। तेनात्मभावेनेदं जगन्नित्यम्। इतरैस्तु भावविकारैः परमाण्वादिभिर्भावविकारात्मभिरनित्यम्। कस्मात्। विकारात्मकत्वादेव। विकारो ह्यनित्यः। तमेवं भवनमात्राभिसंबन्धेन प्रहीणसर्वभावविकारमेतत्सद्भाव[6]विदोऽवधृतवेदान्तरह[7]स्यसंपदः परापरविदो वेदविदो मेधाविन [8]आत्मसंप्रपातकातर्यहीना विशुद्धदर्शनप्रयोगा वेदविहितकर्मकृतस्तत्त्वकारितया मुक्ताधिकारबन्धना एतत्परिज्ञानादेवोपक्षीणकर्मोपभोगसंतानाः सन्त आत्मकामाः प्रतिपद्यन्ते। नेतरे। प्रधानादिविदो वेदानुशासनैकदेशानीश्वरपुरुषप्रधानादीननित्यान्भावविकारान्स्वम[9]तिकल्पनाहेतुव्यवहितान्कृ[10]त्वा स्थिरीकृत्य चातो नित्यत्वेन प्रतिपद्यन्ते भवनमात्राभिसंबन्धेन तदेतस्मादात्मन उद्विजन्त आत्मप्रणाशकातर्यादिना [11]कर्मोपभोगसंतानं शिवमिव मन्यमानाः। केचिच्च शक्तिहानादसंबोधनादेव। स एष इह वेदाङ्गे वेदार्थनिर्वचनाभिनिवेशिनि शब्दानां सामान्यविशेषवृत्त्युपदेशप्रसङ्गे [12]वर्तमाने भवतेः कृदन्तीभूतस्य वा भवनमात्रमेव वक्तुं सामर्थ्यं नेतरान्भावविकारान्विद्यमानानपीत्येतेन प्रसं[13]ङ्गेन संसूचितः। वेदरहस्यब्राह्मणैस्तत्रै[14] तत्र वि[15]स्तरेणायं निर्णीयते[16]।

[17]उक्तं द्विविधो भावः कारणरूपः कार्यरूपश्च। तत्र कारणेऽविकृत-

---

१ ठ. भावाभाव°. २ घ. झ. ट. ठ. °सिद्धः पूर्वप्रयोगः. ३ क. ख. घ. झ. ट. °मानोऽपि भाव°; ठ. युज्यमानोऽपि भाव°. ४ क. ख. घ. झ. ट. °धानादिशब्द°. ५ घ. झ. ट. ठ. °वत्किंचि;° च. °वत्किंचित्कं°. ६ च. °विदो विवृतवेदा°. ७ घ. झ. ठ. °हस्यविदो वेद°; ट. °हस्यविद्गो वेद° परापर विदो. ८ क. ख. आत्मवेदविदो न कृत्स्नकारितया मुक्ता°; ग. आत्मसंप्रपातकातर्यादीनां विशुद्ध;° घ. झ. ट. ठ. आत्मकृत्स्नकारितया मुक्ता°. ९ च. स्वमिति° म; ज. स्वमिति°. १० क. ख. मत्वा; घ. झ. ट. ठ. मत्या. ११ घ. झ. ठ. कर्मोपभोगसमामाप्य तत्संतानं°. १२ क. ख. घ. झ. ट. ठ. प्रवर्तमाने. १३ क. ख. घ. झ. ट. °सङ्गेनात्र संसू°; ग. ज. °सङ्गेनायं सूचि°. १४ क. ख. °ह्मणैः ॥ २ ॥ तत्र वि; घ. झ. ट. °ह्मणैस्तत्र वि°; च. °ह्मणे सूत्रवि°. १५ ग. च. ज. ठ. विस्तारे°. १६ क. ख. घ. झ. विधीयते; ट. विधीयते° निर्णी. १७ क. ख. ग. ज. 'उक्तं द्विविध........निर्वक्तुमाह' इति नास्ति; ठ. उक्तो.

भावविकाराः

त्वादभिन्न एवेत्यवगतः । इदानीं कार्यरूपस्याने-कविकृतरूपत्वाद्दुर्विज्ञेयत्वेन निर्वक्तुमाह । " षड् भावविकारा भवन्तीति " । भाव उक्तलक्षणो नित्यं विकृतिकारणम् । तैर्विकारैर्विशिष्टः षट्प्रकारोऽभिधीयत उपचारतो यतोऽयं विद्यमानतामेव भवनशब्देनाभिधत्ते । तेन यो विद्यमानमात्रभवना-त्मकः स एव भिन्नोऽभिधीयते । अपि च लक्षणविदो विगृह्णन्ति भावशब्दं "भवतेः स्वपदार्थभवनं भावः" इति । " सन्मात्रं भावलिङ्गं स्यात् " इति च पठन्ति । तस्य विकारा भावविकाराः । भवन्तीति सामान्यादात्मनः प्रस्कन्दा इव सन्तः स्वेन स्वेन वैशेषिकेण भावविकारात्म-लाभाय भवन्ति । इतिपरः प्रयुज्यमानः शब्दः शब्दपदार्थकः । क एवमाह "षड् भावविकारा" इति । उच्यते । " वार्ष्यायणिः " इति । तिकादिपाठात्फिञ् [ पा० ४ । १ । १५४ ] । आचार्य इति वाक्यशेषः । निर्देशत उपलब्धानां षडित्येवधारणं सुखार्थम् । वक्ष्यामः " अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्ति " [ निरु० १ । ३ ] इति । आह । कतमे त इति । उच्यते । " जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति " । आह । एतेषां

तेषां विशेषाः

जन्यादीनां भावविकारशब्दानां कः कस्यां विकारावस्थायामवस्थितं भावमाचष्टे कं वा विद्य-मानमपि नाचष्टे कं वा न प्रतिषेधतीति । उच्यते । " जायत इति पूर्व-भावस्यादिमाचष्टे नापरभावमाचष्टे न प्रतिषेधति " । जनिः पूर्वो भावः । तस्य पूर्वभावस्य । षण्णां भावविकाराणां यदि वान्यो यः पूर्वो भावविकार-स्तस्य जायत इत्यनेन शब्देनादिमाचष्टे । आह । किमादिमेव । नेत्युच्यते । उक्तं "उपक्रमप्रभृत्यपवर्गपर्यन्तं" (निरु० १।१) इति । स एव पूर्वापरीभूतो भावस्तावदेवजायत इत्युच्यते यावन्निष्ठाशब्दवाच्यः संवृत्तो जात इति । नापर-

१ ग. ज. ' षड्भावविकारा भवन्तीति ' नास्ति. २ क. ख. ग. ज. ' भाव उक्त.........भिन्नोऽभिधीयते ' इति नास्ति. ३ ठ. °रो विधी°. ४ च. एवं. ५ क. ख. स्वपदार्थे भव°; घ. झ. ट. स्वः पदार्थभव°; ग. ज. ठ. स्वः पदार्थो भव°. ६ च. भावोऽलिङ्गः स्यादिति°. ७ ग. ज. °वधारणार्थो. ८ च. ' कः ' नास्ति. ९ ग. ज. भ्रिविद्यमानमपि; च. भ्रियमाणमपि. १० ग. च. ज. इत्येष भावः पूर्व°. ११ ठ. आचष्टे इति जनिः°.

भावमाचष्टे न प्रतिषेधति । नेति प्रतिषेधे । अपरो भावोऽपरभावः । आह ।
कस्मादपरः । पौर्वापर्यं हि देशकालकृतम् । उच्यते । जनिशब्दवाच्यो
भावविकारः पूर्वः । तस्मादपरकालेऽस्तिशब्दवाच्यः । तत्रैवं सति जनिश-
ब्दवाच्ये भावविकारेऽस्तेरप्यर्थोऽस्ति विद्यमानता । किं कारणम् । न
५ ह्यविद्यमानो जायते । अपि च कारणात्मनि भावे सर्व एते भावविकाराः
सन्ति सर्वार्थप्रसवशक्तित्वात्तस्य यथा पृथिव्यां घटादयो भावविकाराः । ते
तु द्वारद्वारिभावेन विशेषात्मलाभं प्राप्नुवन्ति । तद्यथा । जनिद्वारेणास्ति ।
अस्तिद्वारेण विपरिणमति । किं कारणम् । न ह्यजातोऽस्तीत्युच्यते
नाप्यविद्यमानो विपरिणमत इति । तत्रैवं सति जायत इत्येष शब्दो
१० जन्मैव केवलं ब्रवीत्यविवक्षितेतरभावविशेषम् । किं कारणम् । एकार्थवृ-
त्तित्वाच्छब्दस्य । अस्तिशब्दवाच्यस्य भावविकारस्यासंपूर्णत्वात् । अनवधृ-
तरूपं हि तस्यामवस्थायां तद्भवत्यनुमानगम्यं किमपि जायत इति ।
तस्माज्जायत इत्येष शब्दो जायमानावस्थायामस्तित्वं विद्यमानमपि नाचष्टे ।
आह । यदि नाचष्टेऽर्थादापन्नं भवति प्रतिषेधतीति । उच्यते । " न
१५ प्रतिषेधति " इति । अस्तित्वस्य न प्रतिषेधं करोतीत्यर्थः । किं कारणम् ।
उच्यते । अस्तित्वात्मवानपि ह्यसौ जायते । तस्मिन्प्रतिषिद्धेऽनात्मक एव
स्यात् । कमालम्ब्य जायते । तस्मान्न प्रतिषेधत्यस्तित्वम् । उपस्थितत्वाच्च ।
उपस्थित एव प्रत्यासन्नस्तस्यावधारणकाल इत्यतश्च न प्रतिषेधति ।
एवमेव प्रपञ्च उत्तरेष्वपि भावविकारेषु । समासतस्तु यत्र यद्वक्तव्यं
२० तत्र तद्ब्रूमः ।

" अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणम् " । अस्तीति जातस्य सत्त्वस्या-
वधारणमात्रं ब्रवीति न विपरिणाममाचष्टेऽपूर्णत्वात् । न प्रतिषेधत्युपस्थि-
तत्वात् । " विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारम् " । विपरिण-
मत इत्येष शब्दोऽप्रच्यवमानस्य तत्त्वादभ्रश्यमानस्य तत्त्वात्तद्भावाद्विकारं
२५ योऽस्य भावोऽस्तित्वं स्वरूपत्वं वा तस्माद्विकारं विक्रियामात्रं ब्रवीति न

---

१ ग. ज. अपरो भाव आह; ° च. अपरभाव आह°. २ क. ख. °णास्तिः. ३ क. ख. ग. घ. ज. झ. ट. ठ. °मतिः. ४ क. ख. ग. ज. जायेतैतरस्मिन्. ५ क. ख. ग. ज. एव च प्र°. ६ चं. ' सत्वस्यावधारणम् । अस्तीति ' नास्ति. ७ ग. ज. ' अस्तीति ' न विद्यते. ८ च. °पूर्वत्वात्; ट. पूर्ण° वे. ९ ग. ज. °दप्रभ्रंश्य°; च.
३० °दभ्रस्यमा°.

वृद्धेरर्थमाचष्टे न प्रतिषेधति । " वर्धत इति स्वाङ्गाभ्युच्चयं [1]सांयौगिकानां वार्थानाम् " । वर्धत इत्येष शब्दः स्वेषामङ्गानां शिरोग्रीवाबाहूदरादीनां सांयौगिकानां वा[2] गोहिरण्यधान्यादीनामभ्युच्चयमाहाभ्युच्चितततां ब्रवीति । आह । कथं प्रयोगः । उच्यते । " वर्धते विजयेनेति वा वर्धते शरीरेणेति वा " । वर्धते विजयेनेति सांयौगिकेषूदाहरणम् । वर्धते शरीरेणेति स्वाङ्गाभ्युच्चये । अत्र वर्धत इति ब्रुवन्नापक्षीयतिमाचष्टे न प्रतिषेधति । " अपक्षीयत इ[3]त्यनेनैव व्याख्यातः प्रतिलोमम् " । यथैव हि स्वाङ्गैः सांयौगिकैर्वा द्रव्यैरु[4]च्चीयते तथैवापक्षीयतेऽपि[5] तत्रापि नाचष्टे न प्रतिषेधति । " विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति " । विनाश एवापरभावस्तस्यादिमाचष्टे । किमादिमेव । नेत्युच्यते । उपक्रमप्रभृत्यपवर्गपर्यन्तमिति ह्यु[6]क्तं (नि० १।१) यावद्विनष्ट इति । स च विनाशं ब्रुवन्न पूर्वभावमाचष्टेऽपक्षीयतेरर्थं विद्यमानमपि तस्मिन्विनाशे । कथं युगपदपक्षीयतेरर्थो विनाशेऽस्तीति । उच्यते । न ह्यनपक्षीयमाणो विनश्येत् । आह । एतेभ्यो भावविकारेभ्यः किमन्येऽपि व्यतिरिक्ताः सन्ति भावविकारा न वा । उच्यते ॥ २[7] ॥

**अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह ते यथावचनमभ्यूहितव्या न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनो नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्त्युच्चावचाः पदार्था भवन्तीति गार्ग्यस्तद्य एषु पदार्थः प्राहुरिमे तन्नामाख्यातयोरर्थविकरणमा इत्यर्वागर्थे प्रपरेत्येतस्य प्रातिलोम्यमभीत्याभिमुख्यं प्रतीत्येतस्य प्रातिलोम्यमति सु इत्यभिपूजितार्थे निर्दुरित्येतयोः प्रातिलोम्यं न्यवेति विनिग्रहार्थीया उदित्येतयोः प्रातिलोम्यं समित्येकीभावं व्यपेत्येतस्य प्रातिलोम्यमन्विति सादृश्यापरभावमपीति संसर्गमुपेत्युपजनं परीति**

१ ग. च. ज. ' सांयौगिकानां वार्थानां ' नास्ति. २ ग. °कानां वार्थानां गो°; च. कानां गो°. ३ क. ख. घ. झ. ट. ठ. इत्येतेनै° ४ क. ख. झ. ट. ठ. °रुपचीय.° ५ क. ख. घ. झ. ठ. ठ. ' अपि ' नास्ति. ६ क. ख. घ. झ. ट. ठ. ' हि ' नास्ति. ७ क. ख. ग. ३; घ. च. ज. झ. ट. अङ्को नास्ति; ठ. इति निरुक्तव्याख्यायां द्वितीयः खण्डः. ८ क. ख. छ. त. द. रणम् ॥ ४ ॥ आ०.

**सर्वतोभावमधीत्युपरिभावमैश्वर्यं वैवमुच्चावचानर्थान्प्राहुस्त उपेक्षितव्याः ॥ ३ ॥**

## इति प्रथमाध्यायस्य प्रथमः पादः ।

---

" अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह " । अतो भावविकारषट्काद्येऽन्यत्वेन भावविकारा लक्ष्यन्ते न ते पृथगेवात्यन्तभिन्नाः सन्ति । किं तर्हि । एतेषामेव विकारा भवन्ति । तद्यथा । जनिशब्दवाच्यो भावविकारोऽनेकप्रभेदभिन्नोऽनेकपर्यायशब्दवचनो निष्पद्यतेऽभिव्यज्यते उत्तिष्ठतीत्येवमाद्युपेक्षितव्यम् । तथाऽस्तिशब्दवाच्योऽनेकप्रभेदभिन्नोऽनेकपर्यायवचनश्चास्ति विद्यते भवतीत्येवमादि । तथा विपरिणमतिशब्दवाच्यो विपरिणमते जीर्यते भावान्तरमापद्यत इत्येवमादि । तथा वर्धतिशब्दवाच्यो वर्धते पुष्यति उपचीयत आप्यायत इत्येवमादि । तथा अपक्षीयतिशब्दवाच्यो भ्रस्यति भ्रश्यतीत्येवमादि । तथा विनश्यतिशब्दवाच्यो विनश्यति म्रियते विलीयत इत्येवमादि । इति ह स्माह । क एवमाह वार्ष्यायणिरित्यनुवर्तते ।

अन्ये भावविकाराः

" ते यथावचनमभ्यूहितव्याः " । त एते जन्यादिशब्दवाच्या विकारा यथावचनं यो यस्मिन्वचने यथावचनमवस्थिताः सन्तः प्रकरणोपपत्तिभ्यां मन्त्रार्थावधारणं प्रत्यभ्यूहितव्या वितर्क्याः प्रयुज्यमाना इति वाक्यशेषः । सर्व एव धातवो भाववचनास्तेषामिहाध्ययने प्राप्ते शास्त्रातिगौरवभयादेतल्लक्षणमुत्सृष्टम् । इह शास्त्रे व्याख्याशैलीयं द्रष्टव्या । उद्देशो निर्देशः प्रतिनिर्देश इति । तत्रोद्देशः सूत्रस्थानीयः । तद्यथा । षड्भावविकारा इति । निर्देशो वृत्तिस्थानीयः । तद्यथा । जायतेऽस्ति विपरिणमत इति । प्रतिनिर्देशो वार्तिकस्थानीयः । तद्यथा । जायत इति पूर्वभावस्यादिमाचष्ट इति । एवं सर्वत्र यथासंभवं योज्यम् ।

यास्कस्य व्याख्याशैली

---

१ क. ख. छ. त. द. ५. २ ङ. थ. ध. ठ. 'प्रथमाध्यायस्य प्रथमःपादः' नास्ति; त. द. प्रथमः पादः. ३ ट. °विकारा इति । अतो भाव°. ४ क. ख. घ. झ. ट. पृथक्पृथगत्यन्त°. ५ ठ. °वन्तीति । त°. ६ क. ख. ग. ज. झ. झ. ट. ठ. जीर्यति. ७ क. ख. घ. झ. ट. ठ. ध्वस्यति. ८ ग. च. ज. भ्रंस्यती°. ९ च. सन्ति. १० ग. च. ज. व्याख्याशीली°. ११ च. 'वि' °नास्ति.

सानुषङ्गमुक्तं नामाख्यातयोर्लक्षणम् । नामसु किंचिदवशिष्यते । तदव-सरप्राप्तमपि सदधुना नोच्यते पदचतुष्टलक्षणप्रतिज्ञाव्याघातभयात् । उक्त्वा पदचतुष्टलक्षणं चतुर्थेन पादेन तद्वक्ष्यामः । प्रतिज्ञाप्रसक्तमेवाधुनोपसर्ग-लक्षणमुच्यते । आह । वक्ष्यति भवानुपसर्गलक्षणमिदमेव तावदुच्यतां

उपसर्गाः सार्थकत्वे परतन्त्रा इति शाकटायनमः

किमिमे उपसर्गा नामाख्यातवत्पदचतुष्टान्निष्कृष्य बद्धाः सन्तोऽर्थानाहुर्न वेति । उच्यते "न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः" । नेति प्रतिषेधे । निष्कृष्य नामाख्यातमध्यात्पद-वाक्यरूपेण विरचिताः सन्तः । के पुनस्ते । उपसर्गाः । आख्यातमुपगृ-ह्यार्थविशेषमिमे तस्यैव सृजन्तीत्युपसर्गाः । "अर्थान्निराहुरिति शाकटायनः"। निश्चयेन सतोऽर्थानाहुः । साक्षान्न तेषामर्थाभिधानशक्तिरस्ति पृथग्विरचि-तानामित्यभिप्रायः । यथा वर्णानां पदादपगतानामर्थाभिधानशक्तिर्नास्त्येव-मेतेषामपि नामाख्यातवियोगेऽर्थाभिधानशक्तिर्नास्ति । क एवमाह । शाक-टायनः । शकटस्यापत्यं नडादिपाठात्फक् ( पा० ४ । १ । ९९ ) शाकटायनः ॥

आह । कथं तेषामर्थवत्तेति । उच्यते । "नामाख्यातयोस्तु कर्मोपसं-योगद्योतका भवन्ति" । तुशब्दोऽवधारणार्थः । नामाख्यातयोरेव योऽर्थः कर्म तत्रैव विशेषं कंचिदुपसंयुज्य द्योतयन्ति । स एष नामाख्यातयोरेवार्थ-विशेष उपसर्गसंयोगे सति व्यज्यते यथा प्रदीपसंयोगे द्रव्यस्य गुणविशे-षोऽभिव्यज्यमानो द्रव्याश्रय एव भवति न प्रदीपाश्रयः ।

आह । कोऽन्यथा ब्रवीति येनैवमुच्यते शाकटायन एवमाहेति । शृणु ।

स्वतन्त्रा इति गार्ग्यः

"उच्चावचाः पदार्था भवन्तीति गार्ग्यः" । उच्चा-श्चावचाश्च उच्चावचा बहुप्रकारा इत्यर्थः । एषा-मुपसर्गपदानामर्थाः पदार्था भवन्ति वियुक्ताना-मपि नामाख्याताभ्यामिति गार्ग्य आचार्यो मन्यत इति वाक्यशेषः । एकै-कोऽप्येषां प्रादीनां नामाख्यातवियोगेऽप्यनेकार्थ इत्यभिप्रायः । तद्यथा । 'प्रेत्यादिकर्मोपदीर्णभृशार्थेषु' इत्यभिधाने शक्तिरस्त्येवेत्येवमाद्युपलक्षितव्यं

१ ठ. सर्गा इति । नेति°. २ ठ. °टायन इति निश्च°. ३ ग. ज. 'उच्यते' नास्ति. ४ ठ. °योस्त्विति । तुशब्दो°. ५ ठ. 'एव' नास्ति. ६ ज. किंचित्. ७ क. ख. घ. झ. ट. ठ. °कर्मोदीर्णो भृशार्थे इ°.

लक्षणशास्त्रे। यत्पुनरेतदुक्तं वर्णवदित्यनभ्युपगमादयुक्तम्। न ह्यभ्युपगतम- स्माभिरेतदनर्थका वर्णा इति। सामान्या हि वर्णेष्वभिधानशक्तिरस्त्येव यथा मृदवयवेषु सर्वमृन्मयभाण्डारम्भशक्तिः। सा तु पदत्वेन समुदितानामर्थविशे- षेऽवतिष्ठते यथा मृदवयवानां घटे घटारम्भशक्तिरभिव्यज्यत एवम्। तत्र
५ यदुक्तं वर्णवदनर्थका उपसर्गा नामाख्यातवियोगादित्येतदयुक्तम्। अपि च। नेनु वर्णैरनर्थकैरारभ्यमाणं पदमप्यनर्थकमेव स्यात्। न ह्यशुक्लैस्तन्तुभिरारभ्य- माणः पटः शुक्लो भवति। ततश्च पदैरनर्थकैरारभ्यमाणं वाक्यमनर्थकमेव स्यात्। वाक्यैश्चानर्थकैरारब्धं शास्त्रमप्यनर्थकमेव स्यात्। ततश्चाभ्युदयनिः- श्रेयसार्थो योऽयमभ्युद्यमः स्वप्रत्ययेन विदुषामयमनर्थक एव स्यात्। अनिष्टं
१० चैतत्। तस्मादर्थवन्तो वर्णा इत्येतदुपपन्नम्। यत्पुनरेतदुक्तं प्रदीपवद- नर्थका उपसर्गा इति। तदयुक्तम्। प्रदीपो हि स्वेनार्थेन प्रकाशाख्येनार्थ- वानेव। सत्यपि चार्थवत्त्वे प्रकाश्यमर्थमाधारभूतं प्रत्याययन् स्वां प्रकाशन- शक्तिमभिव्यनक्ति। एवमुपसर्गा अर्थवन्तोऽपि सन्तः स्वार्थाभिधानशक्ति- मनेकप्रकारां विद्यमानामपि स्वार्थाभिधानशक्त्याधारभूते नामाख्याते प्रत्या-
१५ य्याभिव्यञ्जयेयुः। तत्र यदुक्तं प्रदीपवदनर्थका उपसर्गा इत्येतदयुक्तम्। नामाख्यातयोरेवासावर्थ उपसर्गसंयोगे सत्युपजायत इति ब्रूमः। न हि लोके यो यत्र समर्थो भवति स तत्रान्यमपेक्षते। नामाख्याते चार्थविशेषं प्रत्युपसर्गसंयोगमपेक्षेते। तस्मादुपपन्नमुपसर्गस्य क्रियाविशेषोऽर्थः क्रिया- सामान्यमात्रमाख्यातस्येति। तत्र यदुक्तमनर्थकाः पृथगवस्थिता उपसर्गा
२० इत्येतदयुक्तम्। कुतः। "तद्य एषु पदार्थः प्राहुरिमे तम्"। तदेतदु- पपन्नं भवति। य एषूपसर्गेषु स्वोऽनेकप्रकारोऽर्थ इति प्राहुरेव तमिमे उप- सर्गाः पदविशेषाः पृथगपि सन्तः। कः पुनरसाविति। उच्यते। "नामा- ख्यातयोरर्थविकरणम्"। अर्थविक्रियामित्यर्थः। तस्मादर्थवन्त एवेति। उच्यतां तर्हि क एषां कस्मिन्नर्थविशेषे वर्तते। उच्यते। अयं तावत्।

२५ "आ इत्यर्वागर्थे"। तद्यथा। आ पर्वतादिति। अर्वागिति गम्यते। अनेकार्थत्वेऽपि सत्युपसर्गाणामेकैकोऽर्थ उदाहरणत्वेनोच्यतेऽर्थव

१ क. ख. घ. झ. ट. ठ. मृदोऽवय°. २ क. ख. घ. झ. ट. ठ. 'ननु' नास्ति. ३ क. ख. घ. झ. ट. 'एतद्' नास्ति. ४ क. ख. घ. झ. ट. ठ. तत्रोच्यते. ५ क. ख. घ. झ. ट. ठ. अपि. ६ ग. ज. °मवेक्षेते. ७ च. °सर्गपद°.
३० ८ क. ख. एवेति। ४। उच्य°. ९ ग. °तावत्॥ ४॥ आ°.

स्वप्रकाशनार्थम् । " प्रपरेत्येतस्य प्रातिलोम्यम् । " प्रपरा इत्येतावुपसर्गावेतस्यैवाङ्गेऽर्थस्य प्रातिलोम्यमाहतुः । प्रगतः परागतः । "अभीत्याभिमुख्यं" आह । अभिगतः । "प्रतीत्येतस्य" एवाभेः[1] "प्रातिलोम्यं" आह । प्रतिगत इति । " अतिसु[2] इत्येतावभिपूजितार्थे " वर्तेते । अतिधनः सुब्राह्मण इति । " निर्दुरित्येतयोः प्रातिलोम्यम्[3] " । निर्धनो दुर्ब्राह्मण इति । " न्यवेति विनिग्रहार्थीयौ[4] " । निगृह्णाति अवगृह्णातीति । " उदिति[5] " अयमेक एव द्वयोः " प्रातिलोम्यं " आह । उद्गृह्णातीति । "समित्येकीभावं[6] " अर्थमाह । संगृह्णातीति । " व्यपेत्येतस्य प्रातिलोम्यं " आहतुः । विगृह्णाति अपगृह्णातीति । " अन्विति सादृश्यापरभावं " आह । अनुरूपमस्येदमिति सादृश्यम् । अनुगच्छतीत्यपरभावः । " अपीति संसर्गं[7] " आह । सर्पिषोऽपि स्यात् । मधुनोऽपि स्यात् । " उपे[8]त्युपजनम्[9] " । उपजनमाधिक्यम् । उपजायते । " परीति सर्वतोभावं[10] " आह । परिधावतीति[11] । " अधीत्युपरिभावं " आह " ऐश्वर्यं वा " अधितिष्ठति[12] अधिपतिरिति ।

आह । नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्तीत्युक्तम् । अत्र नाम्नः कर्मोपसंयोगद्योतका भवन्तीत्येवं न गृह्यते[13] । " उपसर्गाः क्रियायोगे " ( पा० १ । ४ । ५९ ) इति प्रसिद्धो[14] ह्युपसर्गाणां क्रियापदेन योगो न नाम्ना । उपसर्गा हि क्रियाङ्गत्वेनैव नामान्यास्कन्दन्तीति ॥ ३[15] ॥

इति[16] निरुक्तव्याख्यायां षष्ठस्याध्यायस्य[17] प्रथमः पादः[18] ।

---

१ ट. °स्यैवाभेः; ठ. ' एवाभेः ' नास्ति. २ ठ. अतिसु इत्यभिपूजितार्थे इति अतिसु°. ३ ठ. °लोम्यमाह । निः°. ४ ठ. र्थीयाविति । नि°. ५ ठ. उदित्येतयोः प्रातिलोम्यं । उदि°. ६ ठ. °भावमिति अर्थ°. ७ ठ. °सर्गमिति आह°. ८ च. ' उपेत्युप०जायते ' नास्ति. ९ ठ जनमिति उप°. १० ठ. भावमिति आह. ११ च. °धापयतीति. १२ घ. ट. अधितिष्ठपतिरिति. १३ च. गृह्यंते. १४ घ. झ. ट. ठ. सिद्धो°. १५ ग. ५; घ. झ. ट. ठ. च. ज. ' ३ ' नास्ति. १६ क. ख. घ. झ. ट. इति जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ निरुक्त°. १७ ठ. षष्ठाध्यायस्य. १८ घ. झ. ट. पादः सपूर्णः; च. पादः समाप्तः.

अथ निपाता उच्चावचेष्वर्थेषु निपतन्त्यप्युपमार्थेऽपि कर्मोपसंग्रहार्थेऽपि पदपूरणास्तेषामेते चत्वार उपमार्थे भवन्तीवेति भाषायां चान्वध्यायं चाग्निरिवेन्द्र इवेति नेति प्रतिषेधार्थीयो भाषायामुभयमन्वध्यायं नेन्द्रं देवममंसतेति प्रतिषेधार्थीयः पुरस्तादुपाचारस्तस्य यत्प्रतिषेधति दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपाचारस्तस्य येनोपमिमीते[१] चिदित्येषोऽनेककर्माचार्यश्चिदिदं ब्रूयादिति पूजायामाचार्यः कस्मादाचार्य आचारं ग्राहयत्याचिनोत्यर्थानाचिनोति बुद्धिमिति वा दधिचिदित्युपमार्थे कुल्माषांश्चिदाहरेत्यवकुत्सिते कुल्माषाः कुलेषु सीदन्ति नु इत्येषोऽनेककर्मेदं नु करिष्यतीति हेत्वपदेशे कथं नु करिष्यतीत्यनुपृष्टे नन्वेतदकार्षीदिति चाथाप्युपमार्थे भवति ॥ वृक्षस्य नु ते पुरुहूत वयाः। वृक्षस्येव ते पुरुहूत शाखा वयाः शाखा वेतेर्वातायना भवन्ति शाखाः खशयाः शक्नोतेर्वाथ यस्यागमादर्थपृथक्त्वमह विज्ञायते न त्वौद्देशिकमिव विग्रहेण पृथक्त्वात्स कर्मोपसंग्रहश्चेति समुच्चयार्थ उभाभ्यां संप्रयुज्यतेऽहं च त्वं च वृत्रहन्नित्येतस्मिन्नेवार्थे देवेभ्यश्च पितृभ्य एत्याकारो वेति विचारणार्थे हन्ताहं पृथिवीमिमां निदधानीह वेह वेत्यथापि समुच्चयार्थे भवति ॥ ४ ॥

"अथ निपाताः"। उक्तमुपसर्गलक्षणं सामान्यं "नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्तीति"। विशेषलक्षणमपि "आ इत्यर्वागर्थे" इत्येवमादि। अल्पा इति कृत्वा च ते प्रत्येकं समाम्नाताः। अधुना सामान्यलक्षणानुपक्तं प्रतिज्ञाप्रसक्तमेव निपातलक्षणं वर्तयिष्यामः। तदधिकारार्थोऽयमथशब्दः। "उच्चावचेषु" अनेकप्रकारेषु "अर्थेषु निपतन्ति" इति निपाताः। आह। कतमे पुनस्ते य एतेषामिति।

---

१ क. ख. द. °मीते ॥ १ ॥ चिदि°; छ. त. °मीते ॥ ६ ॥ चिदि°. २ क. ख. छ. त. द. 'कस्मादाचार्यः' नास्ति. ३ क. ख. द. भवति ॥ २ ॥ वृक्ष;° छ. त. भवति ॥७॥ वृक्ष°. ४ छ. त. द. °ज्यते । अहं°. ५ क. ख. छ. त. द. भवति वायुर्वा त्वा मनुर्वा त्वेति ॥ ३ ॥ (छ. त. ८). ६ ट. उच्चावचेष्वर्थेषु निपतन्तीति ॥ उच्चा°.

उच्यंते । " अप्युपमार्थेऽपि कर्मोपसंग्रहार्थेऽपि पदपूरणाः " । उपमैवार्थ उपमार्थस्तस्मिन्नुपमार्थे । उपमा नाम कस्मिंश्चि-

निपातानामर्थाः

देवार्थे यः प्रसिद्धो गुणस्तस्यान्यस्मिन्नप्रसिद्धत॰द्गुणेऽर्थे शब्दमात्रेण यदुपसंयोज्य तद्गुणप्रकाशनं क्रियते सोपमा । कर्मोपसंग्रह एवार्थः कर्मोपसंग्रहार्थस्तस्मिन्कर्मोपसंग्रहार्थे । अर्थोपसंग्रहार्थे । कर्मशब्दो हि प्रायेणार्थपर्यायवचन एतस्मिञ्शास्त्रे । गतिकर्माण उत्तरे धातवः । गत्यर्था इति गम्यते । पदमेव पूरयितव्यं येषामर्थस्ते पदपूरणाः । तदेतत्त्रैराश्यमर्थभेदकृतं निपातानां समासेन । ५

आह । किमविशेषेण सर्व एतस्मिन्नर्थे निपतन्ति । नेत्युच्यते । तेषां सर्वेषां मध्य एत एव चत्वार इवनचिन्नवः प्रायोवृत्त्योपमार्थे भवन्ति । अधुनैवमुक्त्वा भाषाछन्दःप्रविभागेनोदाहरणे एकैकं दर्शयति । समासविस्तराभ्यां हि शास्त्राणि प्रतीयन्ते । तत्रायं तावत् । " इवेति भाषायां च " उपमार्थीयः " अन्वध्यायं " छन्दसि चेत्यर्थः । कश्चिच्छन्दस्येव भवति न भाषायां कश्चिद्भाषायामेव न छन्दसि कश्चिदुभयत्रेत्यतो विभागेन प्रदर्श्यते । आह । किमुदाहरणमिवेत्यस्योपमार्थीयत्वे का चोपमाशब्दस्य व्युत्पत्तिरिति । उच्यते । उपगम्यानया गुणैर्मीयत इत्युपमा । १० १५

इवेत्यस्योपमार्थीयत्वे उदाहरणम् ।

"अ॒ग्निरि॑व मन्यो त्विषि॒तः स॑हस्व सेना॒नीर्नः॑ सहुरे हू॒त ए॑धि । ह॒त्वाय॒ शत्रू॒न्वि भ॑जस्व॒ वेद॒ ओजो॒ मिमा॑नो॒ वि मृधो॑ नुदस्व " [ ऋ० १० । ८४–२ ] । इत्येतदत्रोदाहरणम् । तपसः पुत्रो मन्युर्नाम तस्येयमार्षम् । २०

आह । ननु सर्व एवायमृग्यजुःसामात्मको ब्रह्मराशिरादित्यान्तरपुरुषस्य

१ झ. ट. ठ. उच्यंते; च. उच्यं ( ? ) ते. २ ग. ज. °प्रसिद्धे. ३ ग. ज. °हार्थः । कर्म;° क. ख. घ. झ. ट. ठ. °हार्थ इत्यर्थः । कर्म.° ४ क. ख. घ. झ. त्रिधात्वमर्थ;° ट. त्रिधात्वं° त्रैराश्य. ५ क. ख. घ. झ. ट. ठ. °हरणमेकै°. ६ ठ. इवेतिभाषायां चान्वध्यायं चेति । इव । भाषा.° ७ घ. झ. ट. ठ. वोपमा. ८ ग. ज. अग्निरिव मन्यो त्विषितः सहस्वेति ऋक् एतद°; घ. ट. अग्निरिव नुदस्वेत्येतद°. ९ ठ. °तस्येदमार्ष°. १० घ. झ. ट. ठ. °सामाथर्वात्मको; च. सामान्यात्मको. २५

‘ आर्ष ’ कथन-प्रयोजनं

भगवतो हिरण्यगर्भप्राणस्यार्षम् । ऐतरेयके रहस्य-ब्राह्मणे “ शतर्चिनो माध्यमाः ” इत्येवमाद्यनुपरिक्रम्य पुनः पर्यायवृत्त्या “एतमेव सन्तं शतर्चिन इत्याचक्षत एतमेव सन्तं गृत्समद इत्याचक्षते ” [ ऐ० आ० २।२।१ ] इत्येवमादिना क्रमेण मन्त्रदृक् शब्दान् प्राणे निगमयति । अपि चैता ऋचः शौनकेन संदृष्टाः । यस्यामार्षाणि चिन्त्यन्ते सा च स्मृतिः । “ श्रुतिस्मृत्योश्च विरोधे श्रुतिरेव गरीयसी ” इति । न्यायविदः खल्वपि पठन्ति “ विरोधे त्वनपेक्षं स्यात् [ जै० सू० १।३।३ ] ” इति । तस्माद्विशेषाभिधानमनर्थकमेवेति । उच्यते । न ह्यकस्मादात्मनः परिशयमात्रशेषः सञ्शौनकः कुर्यात् । “ पश्यतो ह्युभावपि ” । तेन क्षेत्रज्ञावुभावपि मन्त्राभिव्यक्तौ व्यापृतौ । बुद्धिदेवतात्वेन हिरण्यगर्भः क्षेत्रज्ञो व्यवस्थितः सर्वभूतानां कर्मविपाकानुरूप्येण यमर्थं शब्दं वा दर्शयति तमितरो विशिष्टकर्मकारी क्षेत्रज्ञो बुद्धिस्थः पश्यति । तत्रैवं सति वसिष्ठादिर्मन्त्रदृक् क्षेत्रज्ञस्तेनैवोपदर्शितं मन्त्रं पश्यतीत्युभयमुपपद्यते । एवं सत्युभावपि याथात्म्यतस्तावनुसंधेयौ मन्त्रप्रयोगकाल उभयोरर्थवत्त्वाय । यत्पुनरेतदुक्तं श्रुतिस्मृत्योर्विरोधे स्मृतिरनपेक्षेति । न हि विरोधोऽस्त्युभयोरपि संधीयमानयोः । अपि च श्रुतिपूर्वकमेवेदं स्मरणं न स्वतन्त्रम् । ताण्डके हि रहस्यब्राह्मणं दर्शयति “ येन साम्ना स्तोष्यन्त्स्यात्तत्सामोपधावेद्यस्यामृचि तामृचं यदार्षेयं तमृषिं (छा० उ० १।३।८–९) इति । तत्र यदुक्तं स्मृतिरियमिति तदुक्तम् । तस्माद्वक्तव्यमेव विशेषार्षमिति ।

त्रिष्टुबेषा मान्यवी श्येनादिषु निष्केवल्ये शस्यते । मन्यु पुनरिन्द्र एव माहाभाग्यात्कर्मपृथक्त्वाच्च । अथवा देवतान्तरं पृथगभिधानस्तुल्यभिधानसंबन्धात् ।

---

१ क. ख. च ठ. पर्यावृत्त्यै°. २ ग. ज. संदृष्टा; च. शौदृष्टाः; ठ. सादृष्टा°. ३ क. ख. घ. झ. विद्यन्ते, ट. विद्यन्ते° चिन्त्य. ४ ग. ज. व्यावृत्तौ. ५ ग. च. ज. ठ. °नुरूपेण. ६ क. ख. घ. झ. ट. ठ. तदितरो. ७ घ. झ. वासिष्ठमन्त्र°; ठ. वसिष्ठमन्त्र द्यादि°. ८ क. ख. घ. झ. ट. ठ. °स्तावदनुसं°; ग. ज. °त्म्यतस्थावनुसंध्येयो. ९ क. ख. ग. घ. ज. झ. ट. अर्थतत्त्वाय. १० क. ख. ढ. श्रुतिर°. ११ क. ख. घ. झ. ट. °नपेक्ष्येति; च. °नपेक्षेति° क्ष्ये. १२ क. ख. घ. झ. यदार्षं; ट. यदार्षं° षेयं. १३ क. ख. घ. झ. ट. ठ. तदयुक्तम्. १४ क. ख. विशिष्यार्षमिति; घ. झ. ट. विशिशेषाष्यार्षमिति. १५ ग. च. ज. मान्यवे. १६ ग. °निष्केवल्येषु. १७ ग. घ. झ. ट. महाभाग्यात्. १८ ग. च. ज. °संबन्धत्वात्.

आह । ननु मान्यवो मन्त्रो माहेन्द्रग्रहयजि[1]संनिधौ निष्केवल्ये शस्यमानो महेन्द्रमभिहितिसंस्कारेणासमर्थ एव वक्तुमथ किमर्थमयं निष्केवल्ये शस्यत इति । उच्यते । अन्यदेव हि स्तुत्यभिव्यङ्ग्यमपूर्वमारादुपकाराङ्गभूतं माहेन्द्रग्रहयजिव्यङ्ग्यस्यापूर्वस्य । " अपि[2] वा श्रुतिसंयोगात्प्रकरणे स्तौतिशंसती[3] क्रियोत्पत्तिं विदध्याताम् " [ जै० सू० २।१।२४ ] इति न्यायविदो याज्ञिकाः पठन्ति । वक्ष्यति चायमपि " इतीमा देवता अनुक्रान्ताः सूक्तभाजो हविर्भाज ऋग्भाजश्च भूयिष्ठाः " [ निरु० ७।१३ ] इति । स एष मन्युः स्तुतिभागेव । यथा " अभित्वा शूर " [ ऋ० सं० ७।२।२२ ] इतीन्द्र एव तस्मिन्निष्केवल्ये यथा च[4] " आपो हि ष्ठा " [ ऋ० सं० १०–९–१ ] इत्याप आग्निमारुते सूर्यादय आश्विन एवम् ।

[5]हे मन्यो सहुरे सहनशील एतस्मिन् शत्रूणामभिभवनकाले प्रत्युपस्थित आहूतः सन्नस्माभिः सेनानीः सेनाप्रणेता नो[6]ऽस्माकमेधि भव । ततश्चाग्निरिव त्विषितो दीप्तस्त्वं तेजसा भूत्वा सहस्व अभिभव तानस्मच्छत्रून् । हत्वाय हत्वैव यदेतेषामस्मच्छत्रूणां त्वं[7] वेदो धनं तत् त्वमादाय तेषामस्मद्योधा[8]नामोजो बलं मिमानो निर्माय यथावस्तु यथार्हं विभजस्व । येऽपि च केचिद्धतावशिष्टा मृधो मृधकारिणोऽस्मद्विषोऽस्मत्तः प्रत्याजिहीर्षन्त्येतद्धनं तानपि विनुदस्व प्रेरयस्व[9] दूरमपुनरागमनाय । अथवा ओज इत्यस्योत्तरेण विनुदस्वेत्यनेन क्रियापदेन योगः[11] । कथम् । हत्वा शत्रून्भाजयित्वा च तद्धनं ये केचिद्धतावशिष्टा अस्मद्विषः[12] प्रत्याजिहीर्षन्त्येतद्धनमस्मत्तस्तेषामोजो मिमानः तुलयित्वा कियदवशिष्टबला ह्येते न शक्ताः प्रत्याहर्तुमित्येवं मिमानस्तावन्मात्रशेषबलान्कृत्वा त्वं विनुदस्वैनान्दूरमपुनरागमनाय ।

द्वितीयमुदाहरणमेतस्यैव । " इहैवैधि[13] माप च्योष्ठाः[14] पर्वत इवाविचा-

---

१ ग. ज. माहेन्द्राः ग्रह. २ च. अपि च श्रु°. ३ ग. ज. स्तौति शंसतीति. ४ क. ख. घ. झ. ट. ठ. 'च' नास्ति. ५ ठ. अग्निरिवेति मन्त्रः पुनरत्र पठ्यते. ६ च. 'नः' नास्ति. ७ क. ख. घ. झ. ट. ठ. 'त्वं' नास्ति. ८ च. ट. यद्यपि. ९ ट. °द्धननावशिष्टा°. १० ग. ज. 'प्रेरयस्व' नास्ति. ११ घ. झ. ट. ठ. संबन्धः. १२ घ. झ. ट. ड. द्विषंतः १३ घ. झ. ट. °वैधि° धारय; ग. ज. °वैधि माप च्यो ( ज. चो ) ष्ठाः०धारय.

चलिः । इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय

इवेत्यस्य तस्मिन्नेवार्थे द्वितीयमुदाहरणं

[ ऋ० सं० १०।१७३।२ ] अनया चानुष्टभा ध्रुव आङ्गिरसो राजानमभिषिषेच । इहैव राष्ट्रे त्वमेधि भव । मा[1] चातस्त्वं अपच्योष्ठाः[2] । पर्वत इवाविचलनशील । इन्द्र इव च[3] इह ध्रुवः शाश्वतस्तिष्ठ । स्थित्वेदं[4] राष्ट्रमिहैव विभूतियोगेऽवस्थितं धारयेत्याशीः ।

भाषायां प्रसिद्धमेवेति कृत्वा नोदाहरणं पठति[5] । अथवैते एव । अग्निरिव तीक्ष्ण इन्द्र एव विक्रान्तः ।

"नेति प्रतिषेधार्थीयो भाषायां" प्रसिद्धः[6] । "उभयमन्वध्यायम्" । "नेन्द्रं देवममंसत" [ ऋ० सं० १० । ८६ । १ ]। नेन्द्रं देवमात्मनो दीपयितारममन्यन्तादित्यरश्मयः । दैवते शेषः [ निरु० १३ । ४ ]। किं पुनर्लक्षणमिति । उच्यते[7] । "उपमार्थीय उपरिष्टादुपाचारस्तस्य[8] येन" अर्थेनोपमेयमर्थं "उपमिमीते" । तद्यथा । "हृत्सु पीतासो युध्यन्ते दुर्मदासो न सुरायाम् । ऊधर्न नग्ना जरन्ते[9] [ ऋ० सं० ८ । २ । १२ ]। काण्वो

नेत्यस्योपमार्थीयत्वे उदाहरणं

मेधातिथिराङ्गिरसश्च प्रियमेध ऐन्द्रं सूक्तं ददृशाते। तत्रैषा गायत्री[10] । येषामपि विनियोगः क्वचिदन्यत्र नास्ति तेऽपि वाचस्तोमे[11] विनियुज्यन्ते । हृत्सु[12] पीतासः पीताः सन्तो हृदयेष्ववस्थिताः सोमाः युध्यन्त इव संप्रहारमिव कुर्वन्त्यहं विशिष्ट इत्येवं स्पर्धमानाः । क इव । दुर्मदासो न । दुर्मदासः "आज्जसेरसुक्" [ पा० ७।१।५० ] । यथा कुत्सितमदाः केचित्पुरुषाः सुरायां पीतायां सत्यां युध्येरन्नेवम् । किंच तमेव यजमानं जरन्ते स्तुवन्तीवात्मलाभपरितुष्टाः । कथं जरन्ते । ऊधर्न ऊधरिव रात्रिमिव नग्ना भूत्वा स्त्रियं संप्रयोक्ष्यामह इत्येवमभिप्राया इव केचिद्विशिष्टाः पुरुषाः[13] ।

---

१ घ. ट. मां. २ ज. चोष्ठाः. ३ ठ. 'च' नास्ति. ४ क. ख. घ. झ. ट. स्थित्वा चेदं. ५ क. ख. घ. झ. ट. पठितम्; ग. ज. पठंति. ६ झ. प्रसिद्धः इति शेषः। उभ.° ७ क. ख. 'उच्यते' इत्यस्य पश्चात् 'प्रतिषेधार्थीयः पुरस्तादुपचारस्तस्य यत्प्रतिषेधति । दुर्मदासो न सुरायाम्' इति वर्तते; झ. इदं सर्वं 'देवममंसत' इत्यस्य पश्चाद्वर्तते. ८ घ. ट. ठ. °दुपचारः°. ९ घ. झ. ठ. हृत्सु पी०जरंते; ग. ज. हृत्सु पीतासो युध्यंते०जरंते. १० च. ठ. गायत्री । हृत्सु पीतासः । येषां°. ११ ग. ज. वाचास्तोमे. १२ च. ठ. 'हृत्सु पीतासः' नास्ति. १३ क. ख. पुरुषाः ॥ १ ॥ चिदि°; ग. पुरुषाः ॥ ६॥ चिदि°.

श्चिदित्येषोऽनेकार्थोऽपि सन्नुपमार्थीयसंयोगेनो[1]दाहृतः । कथमयमनेकार्थ इति । उच्यते । " आचार्यश्चिदिदं ब्रूयादिति पूजायाम् " । आचार्य एवं ब्रूयात्कोऽन्य एवं वक्ष्यतीति । " दधि चिदित्युपमार्थे " । दधिरूप ओदन इति । " कुल्माषांश्चिदाहरेत्यवकुत्सिते " । भृ[3]शं कुत्सिते । कु[2]ल्माषानपि तावदाहरेति किं चा[4]न्यदाहरि[5]ष्यसि । " नु इत्येषोऽनेककर्मा " । कथम् । " इदं नु करिष्यतीति " । कथं हि क्रियाया हेतुनिमित्तमित्यर्थः । कथं नु[6] करिष्यतीति पृष्ट्वा करिष्यतीत्युक्ते यत्पुनरनुपृच्छति कथं नु करिष्यति त[7]दनुज्ञानमेतस्मिन्ननुपृष्टे । " नन्वेतदकार्षीदिति च " । अनुपृष्ट एवायं भवतीति । नन्वयमकार्षीदेतत्कथमयं ब्रवीति क[8]थं करिष्यतीति ।

‘चित्’ ‘नु’ ‘ननु’ इत्येतेषामर्थाः

" अथाप्ययमुपमार्थे भ[9]वति" । तद्य[10]था । " अक्षो न चक्र्योः शूर बृ[11]हन्प्र ते मह्ना रिरिचे रोदस्योः। वृक्षस्य नु ते पुरुहूत वया व्यू३ तयो रुरुहुरिन्द्र पूर्वीः" [ ऋ० सं० ६ । २४ । ३ ] ॥ भरद्वाजो बार्हस्प[12]त्योऽस्यास्त्रिष्टुभः पूर्वेणार्धर्चेनेन्द्रं स्तुत्वोत्तरेणोपालब्धवान् । हे शूर इन्द्र पुरुहूत महानक्ष इव चक्रयोः प्ररिरिचे प्रकर्षेणातिरिच्यते तव मह्ना महत्त्वेन विभूतिः । कुतोऽतिरिच्यते । रोदस्योः द्यावापृथिव्योः । तथापि चैवं विभूतियुक्तस्य सतस्तव त्वद्भक्तानामेवास्माकं सतां वृक्षस्येव वयाः शाखाः पूर्वीरूतयः पूर्वेऽस्मद्यज्ञागमनमार्गा विरुरुहुः खिलीभूतास्तवानागमनार्त[13]ं । अहो क[14]ष्टं मन्दभागधेयतास्माकं येषां नो धनं तदस्ति येन त्वां यजेमहि । किमत्र त्वां व[15]क्ष्याम इति । "वयाः शाखाः" इति पर्यायवचनः । "वेतेर्वयाः" इति निगमप्रसक्तस्य निर्वचनम् । "शाखाः खशया[16]ः" इति पर्यायप्रसक्तस्य । व्याख्याता उपमार्थीयाः ।

‘नु’इत्येतस्योपमार्थीयत्वे उदाहरणम्

---

१ क. ख. घ. झ. ट. ठ. °संयोगादत्रोदाहृतः, ग. ज. ‘मार्थयसंगेनो°. २ च. कुल्मासोन्°. ३ झ. °कुत्सिते कुलेषु सीदन्तीति भृशं°. ४ क. ख. घ. झ. ट. ठ. किं वान्य°. ५ च. °रिष्यति. ६ ठ. ‘नु’ नास्ति°. ७ घ. झ. ट. तदनुज्ञातमे°. ८ ग. च. ज. झ. ट. कटं; घ. कठं. ९ ग. भवाति ॥ ७ ॥ अक्ष्यो°. १० घ. झ. ट. हृद्यथा । अक्षो न० पूर्वीः. ११ ग. बृहन्० पूर्वीः° ॥ ४ ॥; ज. बृहन्० पूर्वीः°. १२ ग. ज. बार्हस्पत्यो पारिक्षितोऽस्याः°; च. भरद्वाजः स्याः°. १३ क. ख. तवात्रागम°; झ. तवागम°. १४ ज. कथं. १५ ठ. यक्ष्याम°. १६ च. शिखया.

अथानन्तरं प्रतिज्ञाप्रसक्तानेव कर्मोपसंग्रहार्थान्वक्ष्यामः । "अथ यस्यागमादर्थपृथक्त्वमह विज्ञायते न त्वौद्देशिकमिव विग्रहेण पृथक्त्वात्स कर्मोपसंग्रहः" । यस्यागमादध्याहारादश्रूयमाणस्यैव निपातस्य सरूपविरूपैकशेषादर्थतो वा पृथक्त्वमह पृथग्भाव एव विज्ञायते । तद्यथा देवदत्तयज्ञदत्तौ देवदत्तश्च यज्ञदत्तश्चेति । आह । द्वावप्यत्र देवदत्तयज्ञदत्तौ श्रूयेते । न तु तयोरौद्देशिकमिव पृथक्त्वमिति यथा गा अश्वान्पुरुषान्पशूनिति प्रत्येकमुद्दिश्यमानानाम् । इह तु विग्रहेण चशब्दागमादेतत्पृथक्त्वमुपजायते । तेन विग्रहणं द्वयोर्बहूनामर्थानां वेति विग्रहः । स एव पृथक्त्वाद्धेतोः पृथक्त्वेन निमित्तेनोपलक्ष्यमाणो यस्माद्द्वावर्थौ बहून्वा गृहीत्वैकस्मिन्कर्मण्युपसमावेष्टयति । तद्यथा । देवदत्तयज्ञदत्तौ पचेते इत्येवम् । तस्मात्कर्मोपसंग्रह ईत्येतन्नामैव तद्भवति । अथवा बृहस्पतिश्चेत्युक्ते प्रजापतिरनुक्तोऽपि द्वितीयो गम्यते प्रजापतिश्चेति । कतमः पुनरसाविति । उच्यते । "चेति" ।

*(margin: कर्मोपसंग्रहार्थाः)*

कदाचित्त्वयमेव 'समुच्चयार्थ उभाभ्यां' अप्यर्थाभ्यां विगृहीताभ्यामेव संयुक्तः 'प्रयुज्यते' । यथाहं च त्वं च । "अहं च त्वं च वृत्रहन्त्सं युज्याव सनिभ्य आ । अरातीवा चिदद्रिवोऽनु नौ शूर मंसते भद्रा इन्द्रस्य रातयः" [ ऋ० सं० ८ । ६२ । ११ ] ॥

*(margin: 'च' इत्यस्य समुच्चयार्थे उदाहरणं)*

घोरपुत्रः प्रगाथोऽनयैन्द्र्येन्द्रस्य सख्यार्थी सन्नब्रवीत् । हे वृत्रहन्निन्द्र अहं च प्रगाथस्त्वं च संयुज्याव । एकस्मिन्नर्थे सति प्राप्तिलक्षणे युज्यावहै ।

१ च. °पृथक्त्वतो वा मह°. २ ग. ज. °शेषादर्थपृथक्त्कमह°; घ. ट. °शेषादर्थत्कमह°; ठ. °शेषादर्थपृथग्भाव°. ३ च. पृथक्त्वभावः. ४ क. ख. नानाग्रह°; ग. ज. तेनाग्रह°; घ झ. ट. तेन ग्रह°; ठ. नात्वेन ग्रह°. ५ क. ख. ग. ज. घ. झ. ट. ठ. 'वेति' नास्ति; च. विति. ६ क. ख. घ. झ. ठ. एष; ट. एष पृ° व. ७ च. कस्मात्. ८ घ. झ. ट. ठ. इत्येवंनाम°. ९ क. ख घ. झ. ट. ठ. 'तु' नास्ति. १० घ. झ. ठ. संप्रयुक्तः; ट. संप्रयुक्तः° स. ११ घ. झ. ट. °त्वं च वृत्रहन्निति. १२ ग. च. ज. °च० रातयः; घ. झ. ट. °च वृत्रहन्० रातयः°. १३ क. ख. घ. झ. ट. ठ. °यैन्द्र्या पङ्क्त्या इन्द्रस्य°.

आ सनिभ्य आप्राप्तेः । 'अरातीवा' इत्येकं पदम् । अथैवमावां संयुक्तौ दृष्ट्वा हे अद्रिवः'। अदानशीलोऽपि दानशीलतामुपेत्यानुमंस्यत एतावयोर्दानं भद्रा भन्दनीया इन्द्रस्य रातयो दानानीत्येवं मन्यमानः । को हि नाम त्वत्संयुक्तानामस्माकं न दद्यादित्यभिप्रायः ।

अथाप्याकार[3] "एतस्मिन्" समुच्चयार्थे । "देवेभ्यश्च पितृभ्य एति" अयमेतस्मिन्मन्त्र[4] 'आकारः' । "यो अग्निः क्रव्यवाहनः पितॄन्यक्षदृतावृधः । प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ" [ ऋ० सं० १० । १६ । ११ ] अनुष्टुब् यामी पितृयज्ञे विनियुक्ता । योऽग्निः कव्यस्य[6] वोढा यस्यायमधिकारः कव्यानि वोढव्यानीति स इहास्माकं पितृयज्ञे होतृत्वेन व्यवस्थितः[7] पितॄनाहूय यक्षत्पूजयत्वित्यर्थः । किंलक्षणान् । ऋतावृधः सत्यवृधो वा यज्ञवृधो वा । किं च । प्रेदु हव्यानि वोचति वोचतु वा[8] प्रब्रवीत्वेतानि हवींष्यस्मत्प्रत्तानि । कस्मै । देवेभ्यश्च पितृभ्यश्चेति ।

आ इत्यस्य समुच्चयार्थे उदाहरणम्

'वेति' अयं 'विचारणार्थे' । समुच्चयार्थीयप्रसङ्गेनोदाह्रियते । "हन्ताहं पृथिवीमिमां नि दधानीह वेह वा । कुवित्सोमस्यापामिति" [ ऋ० सं० १० । ११९ । ९ ] ॥ ऐन्द्रो लवस्तस्येयमार्षं[10][11] गायत्री । हन्तेदानीमेवाहमिमां पृथिवीमिह वान्तरिक्षलोक इह वा द्युलोकेऽथवेह दक्षिणे स्कन्ध इह वा सव्ये निदधान्यवस्थापयाम्यतः स्थानादुद्धृत्य । अथ किमर्थं ब्रूषे । कुवित्सोमस्य बह्वहं सोमं[12] पीतवानिति । अस्य मे सोमपानस्यानुरूपमेव वीर्यमप्यस्तीत्यभिप्रायः[13] ।

वा इत्यस्य विचारणार्थे

१ ग. च. ज. आ सनि प्राप्तेः. २ घ. ट. °द्रिवः । अद्रिवज्रः । अरतीवा चित् अदान°; झ. °द्रिवः अरातीवा चित् । अदान°; ठ. °द्रिवः आद्रिवज्रः तद्दाम हे शूर विक्रांत अरातीवा चित् अदान°. ३ घ. ट. ठ. अथाकार°. ४ क. ख. घ. झ. ट. अस्मिन्. ५ घ. झ. ट. °अग्निः०पितृभ्य आ; ग. च. ज. °अग्निः कव्यवाहनः०पितृभ्य आ. ६ ग. च. ज. कव्यवोढा°. ७ क. ख. घ. झ. ट. ठ. °त्वेन स्थितः°. ८ क. ख. घ. झ. ट. °चतु च प्रब्र;° ठ. चतु च ब्रवी°. ९ ग. ज. हन्ताहं पृथिवीमिमां०मिति; घ. झ. ट. हन्ताहं०पामिति. १० ग. तवः° ल; ज. तवः; च. लवः; ठ. बलः. ११ ठ. तस्येदमार्षं. १२ ग. सोमस्य पी°. १३ क. ख. घ. झ. ट. 'अपि' नास्ति.

' अथापि ' वेत्ययं ' समुच्चयार्थे ' भवति ' ॥ ४ ॥

वायुर्वा त्वा मनुर्वा त्वेति अह इति च ह इति च विनिग्रहार्थीयौ पूर्वेण संप्रयुज्येते अयमहेदं करोत्वयमिदमिदं ह करिष्यतीदं नँ करिष्यतीत्यथाप्युकार एतस्मिन्नेवार्थ उत्तरेण मृषेमे वदन्ति सत्यमु ते वदन्तीत्यथापि पदपूरण इदमु तदु हीत्येषोऽनेककर्मेदं हि करिष्यतीति हेत्वपदेशे कथं हि करिष्यतीत्यनुपृष्टे कथं हि व्याकरिष्यतीत्यसूयायां किलेति विद्याप्रकर्ष एवं किलेत्यथापि न ननु इत्येताभ्यां संप्रयुज्यतेऽनुपृष्टे न किलैवं ननु किलैवं मेति प्रतिषेधे मा कार्षीर्मा हार्षीरिति च खल्विति च खलु कृत्वा खलु कृतमथापि पदपूरण एवं खलु तद्बभूवेति शश्वदिति विचिकित्सार्थीयो भाषायां शश्वदेवमित्यनुपृष्ट एवं शश्वदित्यस्वयंपृष्टे नूनमिति विचिकित्सार्थीयो भाषायामुभयमन्वध्यायं विचिकित्सार्थीयश्च पदपूरणश्चागस्त्य इन्द्राय हविर्निरुप्य मरुद्भ्यः संप्रदित्सांचकार स इन्द्र एत्य परिदेवयांचक्रे ॥ ५ ॥

" वायुर्वा त्वा मनुर्वा त्वेति " । " वायुर्वा त्वा मनुर्वा त्वा गन्धर्वाः सप्तविंशतिः । ते अग्रे अश्वमायुञ्जन्ते ते अस्मिञ्जवमा दधुः " [ तै० सं० १ । ७ । ७ । काठक सं० १३ । १४ । मैत्रा० सं० १ । ११ । १ ] ॥ अनुष्टुबेषा । वाजपेयेऽश्वयोजने विनियुक्ता । हे अश्व वायुश्च त्वा मनुश्च त्वा गन्धर्वा एते सप्तविंशतिर्युञ्जन्ति त्वामस्मिन्रथे । ते हि विदुर्यथा त्वं योक्तव्यः । त एव च पूर्वमप्यश्वं युक्तवन्तो देवानामृषीणां च । त एव च तस्मिञ्जवमादधुराहितवन्तो यस्मादतो ब्रवीमि ममापि चाग्रे तमश्वं त एव युञ्जन्तु जवं चास्मिन्नादधत्विति ।

तस्यैव समुच्चयार्थे

---

१ नैकस्मिन्नपि पुस्तकेऽङ्को विद्यते; ढ. भवति इति निरुक्ते चतुर्थः खंडः । वायु°. २ ग. च, ज. ऋक् न पठ्यते. ३ घ. अश्वमयु°; ट. अश्वमयु° मा. ४ घ. °युञ्जंस्तेऽस्मि°; ट. °युञ्जस्तेऽस्मि° स्थले अं. ५ ग. च. ज. वाग्रे. ६ क. ख. °त्विति ॥ ३ ॥ अह°; ग. त्विति ॥ ८ ॥ अह°. ७ छ. त. द. नु. ८ क. ख. ॥ ४ ॥ इति प्रथमाध्यायस्य द्वितीयः पादः ॥ ९ ॥ छ. इति प्रथमस्य द्वितीयः पादः ॥ न ननू°; त. ॥ ९ ॥ न ननू°; द. ॥ ४ ॥ न नूत°.

'अह इति च ह इति च' द्वावप्येतौ 'विनिग्रहार्थीयौ'। तयोः

**अह ह च विनिग्रहार्थे**

पुनरेतयोरेतत्प्रयोगस्वाभाव्यम् । द्वयोरर्थयोरेककाले प्रक्तयोः पूर्ववाक्यगतेनार्थेन संयुक्तौ 'प्रयुज्येते'। तद्यथा 'अयमहेदं करोत्वयमिदम्'। अयमह यज्ञदत्तो गाः पाययत्वयं देवदत्तो भुङ्क्तामिति । हकारस्योदाहरणम्। 'इदं ह[1] करि[2]ष्यति' यज्ञदत्त इदं न[3] करिष्यति । ओदनं न पक्ष्यतीति। 'अथाप्युकार ए[4]तस्मिन्नेव' विनिग्रहार्थे भवति । स

**तस्मिन्नेवार्थे उकारः**

पुनरुत्तरेण द्वितीयवाक्यगतेनार्थेन संयुक्तः प्रयुज्यते। तद्यथा। 'मृषेमे' वृषला 'वदन्ति' 'सत्यमु ते' ब्राह्मणा 'वदन्तीति'। विनिग्रहो नाम विभागेनावस्थितयोर्यज्ञदत्तदेवदत्तयोरेकस्मिन्यज्ञदत्तेऽभिमतरसगो[5]पायनस्य नियमेन ग्रहणं यत्स विनिग्रहः। तदर्थो विनिग्रहार्थः। विनिग्रहार्थ एव विनिग्रहार्थीयः। 'अथापि' अ[6]यमुकारः 'पदपूरणो' भवति। "इदमु त्यत्पु[7]-

**तस्यैव पदपूरणार्थः उदाहरणम्**

रुतमं पुरस्ताज्ज्योतिस्तमसो वयुनावदस्थात्।
नूनं दिवो दुहितरो विभातीर्गातुं कृणवन्नुषसो जनाय" [ ऋ० सं० ४। ५१। १ ]॥

वामदेवो गौतमोऽनया त्रिष्टुभोषसं तुष्टाव। प्रातरनुवाकाश्विनयोः शस्यते। इदं तज्ज्योतिर्यज्जनाः कथयन्ति । उकारः पदपूरणः । एतत्पुरुतमं बहुतमम् । कुतः पुरुतमम्। तम[8]सः। यदभिभूय शार्वरं तमः स्वमास्मानमभिव्यनक्त्यत एव तद्बहुतमम्। पुरस्तात्प्राच्यां दिशि ज्योतिर्वयुनवत्प्रज्ञा[9]नवदुत्तिष्ठति । नूनं निश्चयेनैता उषसो दिवो दुहितरः। रूपसामान्याद्दुहितृत्वम् । विभातीर्विभासमाना गातुं गमनमपि कृतार्थं जनानां कृण्व[10]न्कुर्वत्य आगच्छन्ति यथेयमनुरज्यते प्राची दिग्विध्वंस[11]ते च तमः। ए[12]कस्या एव पूजनार्थे बहुवचनम्।

---

१ ग. ज. 'ह' नास्ति°. २ घ. झ. ट करिष्यतीति। इदं न करिष्यति। यज्ञदत्त इदं ह करिष्यति। ओदनं°. ३ ग. ज. नु. ४ क. ख. घ. झ. ट. ठ. एतस्मिन्नेवार्थ उत्तरेण। विनि°. ५ च. °गोः पाय°. ६ क. ख. घ. झ. ट. ठ. 'अयं' नास्ति°. ७ ग. ज. त्यत्पुरुतमं०जनाय; घ. झ. ट. त्यत्०जनाय. ८ घ. झ. ट. तमा. ९ च. °ज्ञानवत्पुरस्तादुत्ति°. १० क. ख. घ. ट. कृणवत्; ठ. कृण्वन्. ११ क. ख. विध्वंस्यते; घ. झ. ट. विध्वंसस्यते; ठ. विध्वस्यते. १२ च. एकयां.

"तदु प्रेयक्षतममस्य कर्म दस्मस्य चारुतममस्ति दंसः । उपह्वरे यदुपरा अपिन्वन्मध्वर्णसो नद्य १ श्चतस्रः"

तस्यैव द्वितीयमुदाहरणम्

[ ऋ० सं० १ । ६२ । ६ ] ॥ द्वितीयमुदाहरणमस्यैव । गौतमोऽनया[2] त्रिष्टुभेन्द्रमस्तौत् । प्रवर्ग्ये[3] विनियुक्ता । तत्प्रकर्षेण यक्षतमं पूज्यतमम् । उ इति पदपूरण[4] एव । अस्येन्द्रस्य दस्मस्य दासयितुर्दर्शनीयस्य वा चारुतमं शोभनतमम् । अन्यदपि तस्यास्ति दंसः कर्म किमपि बहुप्रकारम् । तच्चार्वेवं[5] पूज्यमेव च[6] । इदमेव तस्य चारुतमं च पूज्यतमं च । यत्किम्[7] । उपह्वरे यदुपरा अपिन्वत् । उपह्वानमर्हन्ति यस्मिन्देशेऽवस्थिताः सहायाः स उपह्वरो देशः । जनैरनाकीर्णे[8] यस्मिन्नेकाकी यदुपरा[9] मेघपूरिताः मधूदकांश्चतस्रः[10] नद्योऽपिन्वदपि[11] आनयदक्षारयत्[12] । यज्ञादि वर्षद्वारेण प्रवर्तत[13] इत्यत एतदेवास्य चारुतमं पूज्यतमं चेत्यभिप्रायः ।

'हि' इत्यस्यार्थाः

'हीत्येषोऽनेककर्मा' । तद्यथा । 'इदं हि करिष्यतीति हेत्वपदेशे । कथं हि करिष्यतीत्यनुपृष्टे । कथं हि व्याकरिष्यतीत्यसूयायाम्' । कथमयं व्याकरिष्यतीत्यकृतप्रयत्नोऽयमित्यभिप्रायः[14] । अमर्षादसाक्षाच्छब्दपूर्वकोऽभिप्रायः परिवादोऽसूयेत्युच्यते[15] । परगुणानभ्यनुज्ञेत्यर्थः ।

किल इत्यस्य

'किलेति विद्याप्रकर्षे' । विज्ञानातिशय इत्यर्थः । अन्यत उपश्रुत्यातिशयेनावधार्यान्यस्मा आचष्टे कश्चित् 'एवं किल तदासीद्युद्धमिति[16] ।

[1] ग. ज. प्रयक्षतममस्य कर्म०श्चतस्रः°; घ. झ. ट. प्रन्यक्ष०चतस्रः [2] क. ख. °मो नोधाश्चानया; ग. ज. °मो नोधानया; घ. ट. ठ. °मो नोधा अनया. [3] च. प्रवर्गे. [4] च. पादपू°. [5] घ. ट. स्वार्वेव; च. चार्विव; ठ. चारु पूज्य°. [6] क. ख. ग. ज. घ. झ. ट. ठ. 'च' नास्ति. [7] क. ख. ठ. तत्किम्. [8] क. ख. °रनाकीर्णो; ग. ज. जनैराकीर्णे; घ. ट. जनैरनाकिर्णे; ठ. °कीर्णे तस्मि°. [9] च. यदुपुरानेकपुरः मेव°. [10] घ. झ. ट. °दकाश्च चत°. [11] क. ख. ठ. °दपातयत् अक्षा°. [12] ग. ज. 'अक्षारयत्' नास्ति; च. अक्षारवत. [13] ग. ज. घ. ट. प्रवर्तयते; ठ. प्रावर्तयत्. [14] च. कृतप्रत्नो°. [15] च. °प्रायः । यतः परि°. [16] क. ख. ग. ज. घ. झ. ट. किलैतदा°.

'अथापि न ननु इत्येताभ्यां' संयुक्तः किलेत्ययं 'प्रयुज्यतेऽनुपृष्टे' अर्थे । अन्यत उपश्रुत्य कंचिदर्थं नायमेवमिति ततस्तमेवार्थमन्यमनुपृच्छत्यथेतरमश्रद्दधत्पूर्वस्य 'न किलैवं' इति 'ननु किलैवं' इति । 'मेति'

मा खलु इत्येतयोः — अयं 'प्रतिषेधे'। तद्यथा। 'मा कार्षीर्मा हार्षीरिति च'। अयं प्रतिषेधार्थीय एव। ५

'खल्विति च'। तद्यथा। एवं 'खलु कृत्वा'। अकृत्वेत्यर्थः। देशभाषान्वयस्थयैवंजातीयानामुपेक्षितव्यः क्वचित्प्रयोगः । 'अथापि' खल्वित्ययं 'पदपूरणो' भवति। तद्यथा। 'एवं खलु तद्बभूवेति'। अन्वीक्ष्यः प्रयोगः क्वचित्पादवृत्तेषु। 'शश्वदिति विचिकित्सार्थीयो भाषा-

शश्वदित्यस्य — याम्'। छन्दसि पुनरन्येष्वप्यर्थेषु भवति। यथासंभवं द्रष्टव्यः। इयं चास्य शैली। अर्थ- १०

मपेक्ष्य 'एवं' शब्दस्य पुरस्तात्प्रयोगो वा भवत्युपरिष्टाद्वा। तद्यथा। 'शश्वदेवमित्यनुपृष्ट एवं शश्वदित्यस्वयंपृष्टे'। अर्थे इति वाक्यशेषः।

नूनं इत्यस्य — 'नूनमिति विचिकित्सार्थीयो भाषायाम्'। विचिकित्सा नाम विवेकपूर्वकोऽवधारणाभिप्रायः। १५

तत्रायं भाषायां भवति । 'अन्वध्यायं' पुनरयमर्थद्वये भवति । 'विचिकित्सार्थीयश्च पदपूरणश्च'।

उदाहरणमत्र निर्विवक्षुर्निदानमेवाह। 'अगस्त्य इन्द्राय' इत्यादि।

न नूनमिति मन्त्रस्य निदानम् — निदानवतां मन्त्राणां निदानमेव पूर्वं वक्तव्यम्। तेन ह्यतितरामर्थ उच्यमानः प्रकाशते । ततः पदानि। ततोऽर्थः। ततः प्रत्येकं विग्रहेण शब्दनिर्वचनम्। एष हि व्याख्याक्रमः। अगः कुंभः। तत्र स्त्यानः संहत इत्यगस्त्यः। स 'इन्द्रार्थं हविर्निरुप्य मरुद्भ्यः संप्रदित्सांचकार'। २०

१ च. °च्छत्यर्थान्तरमश्र°. २ च. खल्विति चायं प्रतिषेधार्थीय एव। तद्यथा°; ट. अयं प्रतिषेधार्थीय एवं। खल्विति चं. ३ घ. ट. अकृत्वा। अकृत्वेत्यर्थः; झ. अकृत्वेत्यर्थः। खलु कृतं न कृतमित्यर्थः। देश°. ४ क. ख. ठ. शैली. ५ घ. झ. ठ. °मवेक्ष्य; ट. °मवेक्ष्य° पे. ६ क. ख. घ. झ. ट. उभयमन्वध्यायम्। पुन°; ठ. उभयमन्वध्यायं। छन्दसि पुन°. ७ घ. ट. भवतीति विकि°. ८ च. कर्तव्यम्. ९ क. ख. ग. ज. घ. झ. ट. 'शब्द' नास्ति. १० च. कुजः. २५

संप्रदातुमैच्छदित्यर्थः । स[2] इन्द्र उपेत्य परिदेवयांचक्रे । परिदेवना नाम मन्युपूर्वको विलापः ॥ ५ ॥

तृतीय पादः

---

**न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतम् । अन्यस्य चित्तमभि संचरेण्यमुताधीतं वि नश्यति [ ऋ० सं० १ । १७० । १ ] ॥ न नूनमस्त्यद्यतनं नो एव श्वस्तनमद्यास्मिन्द्यवि द्युरित्यह्नो नामधेयं द्योतत इति सतः श्व उपाशंसनीयः कालो ह्यो हीनः कालः कस्तद्वेद यदद्भुतम् । कस्तद्वेद यदभूतमिदमपीतरदद्भुतमभूतमिवा[3]न्यस्य चित्तमभिसंचरेण्यमभिसंचार्यन्यो नानेयाश्चितं चेततेरुताधीतं विनश्यतीत्यप्या[4]ध्यातं विनश्यत्याध्यातमभिप्रेतमथापि पदपूरणः ॥ ६ ॥**

'न नूनमस्ति' इति । विचार्यमेतन्ममैतत्तावदद्यतनं हविर्मम नास्तीति । नकारं दृष्ट्वाद्यतनशब्दोऽध्याहृ[6]त आचार्येण प्रतिषेधे हि सति प्रतिषेध्येनाव[7]श्यं भवितव्यमिति । एते च मन्त्रैकदेशा एव सन्तोऽध्याहाराः पदातिरेकादध्ययनकाले नाधीयन्ते । ते त्वर्थनिर्वचनकाले प्रकाशयितव्याः । अथापि स्याच्छ्वस्तनं भविष्यतीति । नो श्वः । इदं तावदस्मदर्थमेव निरुप्तं सदस्मत्तो व्यापन्नमथ श्वस्तने का प्रत्याशा । किं कारणम् । कस्तद्वेद यदद्भुतम् । को हि नाम तद्वेद जानाति यदद्भुतमनुत्पन्नं कस्य भविष्यतीति मम वान्यस्य वेति । कस्मात्पुनर्न विज्ञायत इति । अतो यस्मादन्यस्य चित्तमभिसंचरेण्यं संचरणशीलमनवस्थितमित्यभिप्रायः । उत अपि अथेति छन्दसि समानो[9]र्थाः । एतदद्यतनं हविरा[10]धीतं आध्यातमभिप्रेतं सन्मया

---

१ घ. झ. ट. प्रदातु°. २ क. ख. ॥४॥ इति निरुक्तवृत्तौ षष्ठाध्यायस्य द्वितीयः पादः; ग. च. ज. घ. झ. ट. अङ्को नास्ति; ठ. °लापः इति निरुक्तव्याख्यायां पञ्चमः खण्डः. ३ छ. त. °भूतमिति वान्य°; द. °भूतमिति वान्य°. ४ क. ख. छ. त. द. 'अप्याध्यातं विनश्यति' नास्ति. ५ क. ख. द. १; छ. त. १०. ६ घ. झ. °ध्याह्रियत आ°; ट. ध्याह्रियंत आ° ह. ७ क. ख. घ. झ. ट. ठ. °षेध्येनाप्यव°. ८ ज. ठ. °मद्य. ९ ट. समानार्थः. १० क. ख. ग. ज. हविरधीत°.

ममेदमित्येवं तथापि विनश्यत्येव । अन्यस्यैव प्रदीयते । तत्रैवं सति श्वस्तनमस्माकं भविष्यतीति कुत एतदिति समस्तार्थः ।

अथैकपदनिरुक्तम् । 'अद्यास्मिन्द्यवि । द्युरित्यह्नो नामधेयं द्योतत इति सतः' । द्योतते तदिति द्युरिति कर्तृकारकम् । सदिति यत्र ब्रूयात्तत्र तत्रोच्चारित एव कारकनियमो द्रष्टव्यः । अन्यत्र यथेष्टं योज्यम् । 'श्वः' इति 'उपाशंसनीयः' उपगम्यैं चेतसाशास्तव्यो भवत्यनागतत्वात् । 'ह्यो हीनः कालः' । अतिक्रान्तो हि स भवति । श्वःसंबन्धाच्च ह्यःशब्दोऽविद्यमानोऽपि निरुक्तः । 'अद्भुतमभूतम्' । इदमपीतरदद्भुतं शोणितवर्षाद्यभूतमिव कादाचित्कत्वात् । शब्दसारूप्यप्रसङ्गेनेदं निरुक्तम् । 'अन्यो नानेयः' । नानात्वेन व्यवस्थितस्यापत्यमसत्कुलजस्येत्यर्थः । अथवा 'न' सतां 'आनेयः'[7] । चित्तं चेततेः । चेतत्यनेनार्थानिति चित्तम् । उताधीतं विनश्यतीति । 'आध्यातमभिप्रेतं' इति पर्यायवचनम् । एवमयमस्मिन्मन्त्रे विचिकित्सार्थीयः । 'अथापि' अयमेतस्मिन्नन्यस्मिन्मन्त्रे पदपूरणो भवति ॥ ६ ॥

[9]इति निरुक्तवृत्तौ [10]षष्ठस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

---

**नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी । शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः (ऋ० सं० २।११।२१) ॥ सा ते प्रतिदुग्धां वरं जरित्रे वरो वरयितव्यो भवति जरिता गरिता दक्षिणा मघोनी मघवती मघमिति धननामधेयं मंहतेर्दानकर्मणो दक्षिणा दक्षतेः समर्धयतिकर्मणो व्यृद्धं समर्धयतीत्यपि**

---

१ क. ख. ग. ज. घ. झ. ट. 'अद्य' नास्ति. २ क. ख. घ. झ. ट. ठ. 'तत्र' एकदेव. ३ क. ख. घ. झ. ट. ठ. 'इति' नास्ति. ४ क. ख. °गम्यः सचेतसा°; ग. ज. °गम्य चेतसां आशा°; घ. °गम्य स्यचेतसा°; झ. °गम्य सचेतसा°; ट. °गम्यः स्यचेतसा°; ठ. °गम्य स्वचेतसा°. ५ ग. च. ज. कदाचि°; ठ. क्वचित्°. ६ घ. ट. नानात्वेत यवस्थितपापन्यमसभकुलज°; झ. नानात्वेन व्यवस्थि—न्ययसभकुलज°. ७ च. 'इति' नास्ति. ८ क. ख. °थाप्ययमस्मिन्म°; घ. झ. ट. ठ. 'एतस्मिन्' नास्ति. ९ क. ख. १; इतरेषु पुस्तकेष्वङ्को नास्ति. १० क. ख. 'इति०पादः' नास्ति; ग. च. ज. 'इति' नास्ति; ठ. इति जम्बूमार्गाश्रमवासिनं आचार्यभगवद्दुर्गस्य कृतौ ऋज्वर्थायां निरुक्तटीकायां निघण्टाध्यायपञ्चकेन सह निरुक्तषष्ठाध्यायस्य°. १० ग. ज. घ. झ. ट. षष्ठाध्या°.

वा प्रदक्षिणागमनाद्दिशमभिप्रेत्य दिग्घस्तप्रकृतिर्दक्षिणो हस्तो दक्षतेरुत्साहकर्मणो दाशतेर्वा स्याद्दानकर्मणो हस्तो हन्तेः प्राशुर्हनने देहि स्तोतृभ्यः कामान्मास्मानतिदंहीर्मा- स्मानतिहाय दा भगो नो अस्तु बृहद्वदेम स्वे वेदने भगो भजतेर्बृहदिति महतो नामधेयं परिवृढं भवति वीरवन्तः कल्याणवीरा वा वीरो वीरयत्यमित्रान्वेतेर्वा स्याद्गतिक- र्मणो वीरयतेर्वा सीमिति परिग्रहार्थीयो वा पदपूरणो वा। प्र सीमादित्यो असृजत् । प्रासृजदिति वा प्रासृज- त्सर्वत इति वा विसीमतः सुरुचो वेन आवरिति च व्यवृणोत्सर्वत आदित्यः सुरुच आदित्यरश्मयः सुरो- चनादपि वा सीमित्येतदनर्थकमुपबन्धमाददीत पञ्चमी- कर्माणं सीम्नः सीमतः सीमातो मर्यादातः सीमा मर्यादा विषीव्यति देशाविति त्व इति विनिग्रहार्थीयं सर्वनामा- नुदात्तमर्धनामेत्येके ॥ ७ ॥

'नूनं सा ते' इति। गृत्समदस्येयमार्षम्। पृष्ठ्यस्य चतुर्थेऽहनि मरुत्वतीये शस्यते। नूनमिति पदपूरण एव। सा दक्षिणा ते तव या पुत्रभावके कर्मणि। सा किं करोतु। प्रतिदुग्धाम्। किम्। वरम्।

*नूनमित्यस्य पदपूरणार्थे उदाहरणम्*

कर्मणो दक्षिणागुणकात्फलप्राप्तिस्तथापि तु दक्षिणायामुपचर्यते। कस्मै। स्तुवते यजमानाय। किंलक्षणा। मघोनी मघवती हिरण्यधान्यादिधनेन संयुक्ता तद्वतीत्यर्थः। किंच शिक्ष देहि। कस्मै। स्तोतृभ्य ऋत्विग्भ्योऽनुकामान्। किंच माति धक्। मास्मानतिहायातीत्यान्येभ्यो देहीति। मा दा इत्यर्थः। अस्मभ्यं तावद्देहि ततोऽन्येभ्योऽपि दास्यसि चेत्यभिप्रायः। किंच भगो नो धनं नोऽस्तु। येन किं कुर्याम। बृहद्वदेम महदूर्जितं वदेम दीयतां भुज्यतामिति। क्व। विदथे यज्ञे। अथवा स्वे गृहे। किंच युष्मदनुग्रहाच्च सुवीरा वीरवन्तो भवेम पुत्रवन्तो यद्यपुत्राः। एव- मयं मत्वर्थीयः सुः। अथ पुनः पुत्रवन्त एव ततः कल्याणवीरा इति समस्तार्थः।

---

१ क. ख. छ. त. द. °वृढं. २ क. ख. छ. त. द. विसीव्यति. ३ क. ख. द;२; छ. त. ११; ठ. अङ्को नास्ति. ४ ग. च. ज. ° कस्मै ते यज°. ५ ठ. °दास्यसि चेद्देहीत्यभि°. ६ ठ. स्वगृहे°. ७ ट. 'यद्यपुत्राः' नास्ति.

अथैकपदनिरुक्तम् । 'वरो वरयितव्यो भवति'। व्रियते ह्यसौ । जरिता गरिता गिरतेः[1] स्तुत्यर्थस्य । मघं मंहतेर्दानार्थस्य[2] । दीयते हि तत् । 'दक्षिणा दक्षतेः' समर्धयत्यर्थस्य । यज्ञे हि यत्किंचिद्विगतर्द्धिकं भवति तदियं समर्धयति विशिष्टं हि[3] यज्ञस्य साधनमेतदिति[4] । 'अपि वा प्रदक्षिणागमनात्' दक्षिणा 'दक्षिणां दिशमभिप्रेत्य' । सा हि दक्षिणस्यां वेदिश्रोणावग्रेण गार्हपत्यं जघनेन सदो दक्षिणेनाग्नीध्रं[5] गत्वान्तर्वेदि[6] स्थित्वान्तरेण चात्वालमाग्नीध्रं[7] चोत्सृज्यमाना गच्छति[8] । 'दिक्' पुनर्दक्षिणा 'हस्तप्रकृतिः'। प्राङ्मुखस्य प्रजापतेर्यतो दक्षिणो हस्तो बभूव सा दक्षिणा दिगभवत्[9] । अथ 'दक्षिणो हस्तः' कस्माद्दक्षिण इति । 'दक्षतेः' उत्साहार्थस्य । स ह्युत्साहवान्भवति कर्मसु न तथा सव्यः । 'दाशतेर्वा स्यात्' दानार्थस्य । तेनैव हि प्रायेण दीयते । अथ '[10]हस्तः' कस्माद्धस्तः । 'हन्तेः'। तेन हि हन्यते[11] । नन्वन्येनापि[12] केनचिदङ्गेन हन्यत[13] एव यो हन्तव्यो भवति[14] । सत्यं हन्यते । अयमेव तु 'प्राशुः' शीघ्र इत्यर्थः । 'बृहदिति महतो नामधेयं [15]परिवृढं' तत् 'भवति' इति । 'वीरो वीरयत्यमित्रान्'। नानाप्रकारमीरयतीत्यर्थः । 'वेतेर्वा स्याद्गतिकर्मणः' गत्यर्थे वर्तमानस्य । गच्छत्येवासावभिमुखः[16] शत्रून् । 'वीरयतेर्वा' विक्रमार्थस्य । विक्रान्तो ह्यसौ भवति ।

'सीमिति' अयं 'परिग्रहार्थीयो वा पदपूरणो वा'। "प्र सीमादित्यो[17] असृजद्विधर्ता ऋतं सिन्धवो वरुणस्य यन्ति । न श्राम्यन्ति न वि मुचन्त्येते वयो न पप्तू रघुया परिज्मन् (ऋ० सं० २ । २८ । ४)" ॥ अस्यामेव तावदुभयमपि प्रदर्शयति । ततः परिग्रहार्थीयत्वे

सीमित्यस्योदाहरणम्

---

१ घ. झ. ट. ठ. इति गिरतेः. २ क. ख. घ. झ. ट. ठ. दानकर्मणः. ३ क. ख. घ. झ. ट. ठ. 'हि' नास्ति. ४ ठ. °साधनं तदिति. ५ क. ख. घ. झ. ट. ठ. °नाग्नीध्रीयं. ६ क. ख. म. ज. अन्तर्वेदिं. ७ क. ख. घ. झ. ट. ठ. चात्वालोत्करौ तान्त (झ. नान्त) माग्नीध्रं°. ८ क. ख. घ. झ. ठ. ठ. गच्छन्तीति. ९ ठ. °भवद्दाक्षिणो हस्तो दक्षतेरुत्साहकर्मण इति अथ°. १० क. ख. घ. झ. ट. 'हस्तो' नास्ति. ११ घ. ट. हव्यते; झ. हन्वते. १२ घ. झ. ट. ठ. नत्वन्ये°. १३ घ. झ. ट. हन्यते । एवं । यो°. १४ घ. झ. ट. ठ. भवति तस्य हननेऽ (घ. ट. हननेऽ) यमेव°. १५ ग. च. ज. परिवृल्हं हि परिवृल्हं तद्भ°. १६ च. °वासाभविमुखः. १७ घ. ट. सीमाद्रि° रिज्मन् । अस्या°.

द्वितीयमुदाहरणं वक्ष्यति । गृत्समदस्य तत्पुत्रस्य वा कूर्मस्येयमार्षम् ।
त्रिष्टुप्सौरी । सूर्यः पुनरस्यां वरुणनाम्ना स्तूयते । प्रासृजत्सूर्यो रश्मीन् ।
सीमिति पदपूरण एव । कुतोऽपीत्यविवक्षितमेवैतत्पादपूरणपक्षे । अथ
परिग्रहार्थीयं सर्वमेव परिगृह्णाति प्रासृजत्सर्वत इति । विधर्ता विधारयिता
५ रसानां रश्मीनां वा । स्वरश्मिजालान्तर्गतस्य वा धर्ता सर्वस्य जगतः ।
ऋतमुदकमादाय पृथिवीलोकादन्तरिक्षलोकाच्च । सिन्धवः स्यन्दनाः सूर्य-
रश्मयः । ते ह्यादित्यमण्डलान्म्यञ्चो वर्तमानाः स्यन्दन्ते वर्षाकाले । सूर्येण
प्रसृष्टा उदकमादाय सार्वलौकिकं वरुणस्य सूर्यस्य स्थानं मण्डलं यन्ति ।
तदेवमप्यनिशमुत्सर्गादानलक्षणं कर्म कुर्वाणा न श्राम्यन्ति । न वा श्रान्ता
१० अपि सन्तो विरागान्नाप्येतत्कर्म मुञ्चन्त्येते । कथं पुनः पतन्तो न श्राम्यन्ति ।
किं शनकैः । न । वयो न वय इव पक्षिण इव शीघ्रं पप्तुः पतन्तो रघुया
लघुया लघ्व्या शीघ्रिकयाऽपि गत्या परिज्मन् परिजमन्तः परिगच्छन्तः
सर्वमप्येतज्जगन्न श्राम्यन्ति न विमुञ्चन्त्येतत्कर्म । एतद्गुणयुक्तानामप्येतेषां
सूर्य एव प्रविसर्गे संयमे चेश्वर इत्येवं सूर्यस्य स्तुतिरेषा ।

१५ ' विसीमतः सुरुचो वेन आवरिति च ' इदं द्वितीयमुदाहरणम् ।

तस्यैव द्वितीयमुदाहरणम् ।

> ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन
> आवः । स बुध्न्या उपमा अस्य विष्ठाः सतश्च
> योनिमसतश्च विवः ( य० वा०सं० १३ । ३ ) ॥

२० वामदेवपुत्रो नकुलोऽनया त्रिष्टुभादित्यं तुष्टाव । प्रवर्ग्यविनियुक्ता रुक्मोपधाने
चाग्निचयने । ब्रह्म आदित्याख्यं जज्ञानं जायमानं प्रथममनुत्पन्नेष्वन्येष्वादितः

---

१ क. ख. म. इति का. २ ब. झ. ट. ठ. 'रश्मीनां वा' नास्ति. ३ घ. झ. ट. ठ. ' धर्ता ' नास्ति. ४ ग. च. ज. स्पन्दनात्; ठ. स्यन्दमानाः. ५ क. ख. घ. झ. ट. ठ. °लात्प्राञ्चो. ६ ग. च. ज. स्पन्दन्ते. ७ क. ख. घ. झ. ट. ठ.
२५ वर्षकाले. ८ क. ख. घ. झ. ट. ठ. स्वकर्म. ९ च. शनैः. १० च. ' वयो न ' नास्ति. ११ घ. च. पपुः; ट. पप्तुःप° पुः. १२ घ. ट. 'लघुया' नास्ति. १३ घ. ट. लघ्या. १४ क. ख. °कया गत्यापि; घ. झ. ट. शीघ्रकयापि गत्या. १५ क. ख. घ. झ. ट. ठ. प्रतिसर्गे. १६ च. ठ. सूर्यस्तुति°. १७ ग. °हरणम् । १३; च. ज. °हरणम् । १२. १८ ग. च. घ. ज. झ. ठ. जज्ञानमिति । वाम°. १९
३० घ. ट. नहुलो. २० ग. ज. रुक्माधाने. २१ घ. ट. अदितः; ठ. अदितेः.

पुरस्तात्प्राच्यां दिशि । तदुदयोपलक्षितमेव हि प्राच्याः प्राचीत्वम् । वि आवः व्यवृणोद्विवृतानकरोत्सुरुचः प्रशस्तरोचनान्रश्मीन्सीमतः सर्वतः । किंच स वेनो मेधावी बुध्न्या बुध्नमन्तरिक्षं तदवयवभूता दिश उपमाः उपनिर्मात्र्यः । तासु ह्येतत्प्रतिष्ठितं सर्वमुपनिर्मीयते जगदित्येतस्मात्ता एवोपनिर्मात्र्य उच्यन्ते । विष्ठा विस्थाः । तासु ह्येतज्जगद्विभिन्नं तिष्ठतीति ता एव विष्ठाः । सतश्चाभिव्यक्तस्य स्थूलस्यासतश्चानभिव्यक्तस्य सूक्ष्मस्य योनिं स्थानं । विवः व्यवृणोदित्यर्थः । तदुदये ह्येवंगुणयुक्ता दिशोऽभिव्यज्यन्त इत्यभिप्रायः । अथवा बुध्न्या आप आन्तरिक्षास्ता उपमा इत्येवमादि सर्वं योज्यम् ।

'अपि वा सीमित्येतदनर्थकमुपबन्धमाददीत पञ्चमीकर्माणं सीम्नः सीमतः सीमातो मर्यादातः । सीमा मर्यादा विषीव्यति देशाविति' । विगतसंतानौ देशौ करोतीति ।

'त्व इति विनिग्रहार्थीयं सर्वनामानुदात्तम्' । निपातत्वेनैतदपि संदिह्यते । वक्ष्यति हि 'निपात इत्येके' [ निरु० १ । ८ ] इति । अतस्त्व इति ह्येवं निपातकाण्ड उदाह्रियते संशयपरिशोधनाय । त्व इत्येतद्विनिग्रहार्थीयमिति व्याख्यातम् । किमुत तत्सर्वनाम । विप्रतिपन्नस्वरत्वात्स्वरमप्यवधारयन्नस्यानुदात्तमित्याह । कथं पुनर्विप्रतिपन्नस्वरमेतदिति । उच्यते । 'प्रातिपदिकस्यान्तः' इत्यौत्सर्गिकं लक्षणम् । 'अन्यत्रापवादात्' । लक्षणविदोऽपि चास्यापवादं पठन्ति 'त्वत्त्वनेमसमसिमेत्यनुच्चानि' ( फि० सू० ४ । १० ) इति ।

त्व इति निपातः सर्वनाम च

'अर्धनामेत्येके' । अर्धस्यैतन्नामेत्येवमेक आचार्या मन्यन्ते । वक्ष्यति

---

१ ग. ज. °लक्षितेनैव हि. २ ग. ज. सूक्ष्मयोनिः स्थानं; च. सूक्ष्मस्य । योनिः स्थानं; ठ. सूक्ष्मस्य अस्य जगतः योनिं°. ३ ठ. आन्तरिक्ष्याः. ४ च. ज. योज्यं । १३ । अपि°. ५ क, ख. ग. ज. विसीव्य°. ६ ग. ज. हैवं. ७ क. ख. च. किमु तत्सर्वनामविप्र°. ८ ग. ज. °नामाविप्रति°. ९ च. °न्नस्यामित्याह. १० ग. ज. घ. झ. °पठन्ति अंशेन त्वनेम°; च. पठन्ति त्व त्वत् नेम; ट. °पठन्ति अंशेन त्वनेम° त्वत्; ठ. °पठन्ति अंशेन त्वत् नेम°. ११ ग. ज. °त्यनुद्यानि.

चायमपि ' त्वो नेम इत्यर्धस्य ' ( निरु० ३ । २० ) इति । तदेतत्प्रकरणोपपदाभ्यामध्यवसेयं क्वार्धनाम क्व सर्वनामेति ।

यथात्र सर्वनाम तथेयमृगुदाह्रियते[1] ॥ ७ ॥

---

ऋचां त्वः पोषमास्ते पुपुष्वान्गायत्रं त्वो गायति शक्वरीषु । ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः ( ऋ० सं० १० । ७१ । ११ ) ॥ इत्यृत्विक्कर्मणां विनियोगमाचष्ट ऋचामेकः पोषमास्ते पुपुष्वान् होतर्गर्चनी गायत्रमेको गायति शक्वरीषूद्गाता गायत्रं गायतेः स्तुतिकर्मणः शक्वर्य ऋचः शक्नोतेस्तद्यदाभिर्वृत्रमशकद्धन्तुं तच्छक्वरीणां शक्वरीत्वमिति विज्ञायते ब्रह्मैको जाते जाते विद्यां वदति ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति ब्रह्मा परिवृढः[2] श्रुततो ब्रह्म परिवृढं[3] सर्वतो यज्ञस्य मात्रां विमिमीत एकोऽध्वर्युरध्वर्युरध्वरयुरध्वरं युनक्त्यध्वरस्य नेताध्वरं कामयत इति वाऽपि वाधीयाने युरुपबन्धोऽध्वर इति यज्ञनाम ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधो निपात इत्येके तत्कथमनुदात्तप्रकृति नाम स्याद्दृष्टव्ययं तु भवत्युत[4] त्वं सख्ये स्थिरपीतमाहुरिति द्वितीयायामुतो त्वस्मै[5] तन्वं विसस्र इति चतुर्थ्यामथापि प्रथमाबहुवचने ॥ ८ ॥

' ऋचां त्वः ' इति । बृहस्पतेरार्षम् । ऋत्विक्कर्मणां[6] विनियोगमनयर्चाचष्टे । ऋचां त्वः पोषमिति । य एते चत्वारो महर्त्विज एतेषां त्व एक इत्यर्थः । किमेकः करोति । ऋचां पोषं पुष्टिं पुपुष्वान्पुनः पुनः भृशं वा देवतायाथात्म्यानुचिन्तन[7]संतानगर्भस्थानकरणानुग्रदानवतीर्यथाकालमृचोऽधीयान आस्ते । स हि तासां पोषः ।

त्व इत्यस्य सर्वनामत्वे उदाहरणम्

---

१ ग. १२ । ऋचां त्व इति ॥ १४ ॥; च. ज. १३; घ. झ. ट. अङ्को नास्ति; ठ. °ह्रियते इति निरुक्तव्याख्यायां सप्तमः खण्डः. २ क. ख. छ. त. द. परिवृल्हः. ३ क. ख. छ. त. द. परिवृल्हं. ४ क. ख. छ. त. द. भवति उत. ५ क. ख. द. ३; छ. त. १२. ६ ग. ज. ऋत्विक्कर्मविनि°. ७ घ. झ. ट. ठ. °नुसंचिन्तन°; ग. ज. यथात्म्यानुचिन्तन°. च. याथात्मानुचिन्तन°.

कतम एक एतत्कर्म कुर्वन्नास्त इति । होता । एतत्तावदृगध्ययनकर्म तस्मिन्होतरि विनियुक्तम् । उक्तं च । 'यदृचा हौत्रं क्रियते' [ शत० ब्रा० ११ । ४ । २ । ७ ] इति । गायत्रं त्वः । गायत्रं त्वः एको गायति शक्करीषु ऋक्षु । कतमः । उद्गाता । तस्मिन्नप्येतत्सामगानकर्म विनियुक्तम् । उक्त च । 'साम्नोद्गीथम्' ( ऐ० ब्रा० २५ । ८ ) इति । ब्रह्मा त्वो ब्रह्मा नामैक ऋत्विग् जाते जाते प्रायश्चित्ते विद्यां वदति । विद्यात्रयहेतुत्वादात्मनो विद्यां विज्ञानं वदतीतरेभ्य ऋत्विग्भ्य इदमत्र कुरुतेदमत्र कुरुतेति । तत्रापि ह्येतत्कर्म विनियुक्तम् । स पुनरेष सर्वविद्यः सर्वविज्ञानः । तथाविधो ह्यसावधिकारी त्रयीविद्यासंयुक्तो येनासौ सर्वमेव वेदितुमर्हति । न ह्यसर्ववित्तमधिकारं शक्नुयान्निर्वर्तयितुम् । उक्त च । 'अथ केन ब्रह्मत्वमित्यनया त्रय्या विद्यया' ( शत० ब्रा० ११ । ४ । २ । ७ ) इति । यज्ञस्य मात्रां विमिमीत उ त्वः । विमिमीत एक इति । मीयत इति मानं कर्म तन्मात्रेत्युच्यते । या काचिदितिकर्तव्यता यज्ञस्य तां विमिमीतेऽध्वर्युः । नानाप्रकारां करोतीत्यर्थः ।

'गायत्रं गायतेः' स्तुत्यर्थस्य [धा० १ । ९४२] । स्तूयते ह्यनेन । 'शक्वर्य ऋचः शक्नोतेः' इत्युक्त्वा ब्राह्मणेनापि शक्नोतेः शक्करीशब्दे वृत्तिं दर्शयति । 'तद्यदाभिर्वृत्रमशकद्धन्तुं तदेतच्छक्करीणां शक्करीत्वम्' । यद्यस्मादाभिरभिष्टुत इन्द्रो वृत्रमशकद्धन्तुं तच्छक्करीत्वमिति विज्ञायते ऋचां शक्करीत्वमिति । एवं ब्राह्मणेऽपि शक्नोतेरेव शक्वर्य इति विज्ञायते । लिङ्गतोऽपि हि दर्शितं भवत्याख्यातजानि नामानीति । 'ब्रह्मा परिवृढः श्रुततः' । स हि त्रयीं विद्यां वेद । शब्दसारूप्यप्रसक्तमुच्यते । 'ब्रह्म परिवृढं सर्वतः' । ऋगादि परं चोभयमपि तत्परिवृढं सर्वासु दिक्षु । 'अध्वर्युरध्वरयुः' । एवमपि

१ घ. झ. ट. ठ. एतस्मिन्. २ क. ख. घ. झ. 'त्वः' नास्ति; ट. गायत्रमेको° त्रं त्व ए. ३ क. ख. ग. च. ज. ठ. 'जाते' सकृदेव; ट. जाते प्राय° जाते जाते. ४ क. ख. ज. 'इदमत्र कुरुत' सकृदेव. ५ ट. उक्तं च पंचमपंचिकापंचमाध्यायी द्वाविंशे खंडे । अथ.° ६ क. ख. घ. झ. ट. 'विमिमीत' नास्ति. ७ च. 'मीयत इति' नास्ति. ८ ग. ज. समानं. ९ घ. झ. ट. प्रकारां. १० च. 'इति' नास्ति. ११ क. ख. तदेव शक्क°; ग. ज. तदेतच्छक्करीत्वं; घ. झ. ठ. तदेव शक्करीत्वं; ट. तदेवं शक्करीत्वं° तच्छक्करीणां. १२ च. 'हन्तुं' नास्ति. १३ ठ. °यते तदेतच्छक्करीणां ऋचां°. १४ ग. ज. परिवृल्हः. १५ ग. च. ज. परिवृल्हं.

न[1] गृह्यत इति पुनरप्याह । 'अध्वरं युनक्त्यध्वरस्य नेता' प्रापयितेत्यर्थः । स ह्यन्तं प्रापयत्यध्वरम् । एवम् । अथवा 'अध्वरं कामयते' कर्तुमित्य॰ध्वर्युः । एतस्मिन्निर्वचने युर्वसूयव इति यथा । अथवा 'अधीयाने' तम॰ध्वरं कस्मिंश्चिद्ब्राह्मणेऽध्वर इतीयमेव संज्ञा भवति मञ्चक्रोशनवत् । एतस्मिंश्च निर्वचने 'युः' अयम् 'उपबन्धः' नामकरणः[2] । अध्वरमधीते यः सोऽध्वर्युः । विग्रहप्रसक्तस्याध्वरशब्दस्य तत्त्वमाचष्टे । 'अध्वर इति यज्ञनाम' । अध्वर इत्यधुना निर्वक्तव्यः । 'ध्वरति[3]हिंसाकर्मा' । ध्वरति धूर्वतीति हिंसार्थेषु पठितौ [ नि० २ । १९ ] । 'तत्प्रतिषेधः' अध्वरः । अहिंस्र इत्यर्थः । आह । नन्वत्र हन्यन्ते पशवश्छिद्यन्ते तृणवनस्पतयोऽर्थं[4] कथमहिंस्रः । उच्यते । अभ्युदय एव हिं[5]सः । एवं हि[6] श्रूयते । 'न[7] वा उ एतन्[8]म्रियसे' ( य० वा० सं० २३ । १६ ) इति । तथाच । 'कृशत्वमि॰च्छन्ति तृणानि राजन्' इति । तस्मादभ्युदययोगादहिंस्र इत्युपपद्यते ।

निपातोऽयमित्येके मन्यन्ते । एवमेकीयपक्षे निपातत्वमस्योक्त्वाधुना चोदकपक्षे स्थित्वा परपक्षमाक्षिपन्नाह । 'तत्क॰थमनुदात्तप्रकृति नाम स्यात्' इति । तदेतच्छब्द-रूपमनुदात्त[9]मनुदात्तस्वभावं सत्कथं नाम स्यात् । ननु भवतैवोक्तमुत्सर्गेणैवान्तोदात्तानि प्रातिपदि-कानीति [नि० वृत्तौ १।७] । उच्यते । सत्यमुक्तम् । ननु तत्रैवेदं प्रत्युक्तं 'अन्यत्र चापवादात्' इति । स एषोऽपवादः[10] 'त्वत्त्वनेमसमसिमेत्यनुदात्तानि' इति । उत्सर्गादपवादो बलीयान् । तस्माद्द्विप्रतिपन्नस्वरमपि तदेतन्नामैव । किंच 'दृष्टव्ययं तु भवति' । तुशब्दो हेत्वर्थो हेतुसमुच्चयार्थो वा । अनु-दात्तप्रकृतित्वेऽपि सति 'दृष्टानुविधिश्छन्दसि' इति दृष्टव्ययत्वान्नामेति[11] तद्भ-वति । एवं हेत्वर्थः । अथ[12]वैवमन्यथा हेतुसमुच्चयार्थः । अपवादश्र[13]वणाद्य-

त्व इत्यस्य दृष्टव्यय-त्वेऽपि निपातत्वम्

---

१ क. ख. ग. ज. घ. झ. ट. ठ. 'न' नास्ति. २ क. ख. नामकरणं; घ. झ. नामकारणं; ट. नामकारणं° करणः. ३ च. अध्वरति°. ४ क. ख. घ. झ. ट. ठ. °तयस्तत्कथ°. ५ ठ. हिंसः° हिंसा. ६ च. एवं विश्रूयते. ७ सर्वत्रैक् पठ्यते. ८ क. ख. च. एतस्मिन्म्रियसे ( च. °यते. ) ९ च. अनुदात्त । अनु°; घ. झ. ट. ट. 'अनुदात्तं' नास्ति. १० ग. ज. °वादोऽशेन त्वसमसिमे°; घ. झ. ट. °वादांशेन त्वनेम°; ठ. °वादोऽशेन त्वनेम°. ११ च. नामेविति; ठ. नामैवति° वै. १२ ग. च. अथ चैव°. १३ क. ख. घ. झ. ट. °वादस्मरणाद्य°.

यदर्शनाच्चानुदात्तमपि सदेतन्नामैव भवति । निपातत्वेऽपि कल्प्यमानेऽस्य स्वरसामञ्जस्यं न भवत्येव । निपाता अप्याद्युदात्ता भवन्ति [ फि० सू० ४ । १२ ] । तस्मात्कृतापवादत्वाद्दृष्टव्ययत्वाच्च नामैवैतदित्युपपन्नम् ।

आह । क पुनरस्य व्ययो दृष्टः । उच्यते । 'उतो त्वस्मै तन्वं, १ वि सस्त्रे' [ ऋ० सं० १० । ७१ । ४ ] इति चतुर्थ्यामेकवचने व्ययो दृष्टः । ५
'उत त्वं सख्ये स्थिरपीतमाहुः' [ ऋ० सं० १० । ७१ । ५ ] इति द्वितीयायामेकवचन एव । उपरिष्टाच्छेषौ [ निरु० १ । १९–२० ] ।

अथापि प्रथमाबहुवचने व्ययो दृष्ट इत्यध्याहारः ॥ ८ ॥

---

**अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः । १०
आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे [ ऋ० सं० १० । ७१ । ७ ] ॥ अक्षिमन्तः कर्णवन्तः सखायोऽक्षि चष्टेरनक्तेरित्याग्रायणस्तस्मादेते व्यक्ततरे इव भवत इति ह विज्ञायते कर्णः कृन्ततेर्निकृत्तद्वारो भवत्यृच्छतेरित्याग्रायण ऋच्छन्तीव खे उदगन्तामिति ह विज्ञायते १५
मनसा प्रजवेष्वसमा बभूवुरास्यदघ्ना अपर उपकक्षदघ्ना अपर आस्यमस्यतेरास्यन्दत एनदन्नमिति वा दघ्नं दध्यतेः स्रवतिकर्मणो दस्यतेर्वा स्याद्विदस्ततरं भवति प्रस्नेया ह्रदा इवैके प्रस्नेया ददृशिरे[12] स्नानार्हा ह्रदो ह्रादतेः शब्दकर्मणो ह्लादतेर्वा स्याच्छीतीभावकर्मणोऽथापि समु- २०
च्चयार्थे भवति[13] पर्याया इव त्वदाश्विनमाश्विनं च पर्यायाश्चेत्यथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छ-**

---

१ ग. ज. 'एतत्' नास्ति; ठ. तदेत°. २ ग. ज. कल्यमानस्य; च. कल्यामानेऽस्वर°; ठ. कल्यमानेस्य स्वर°. ३ घ. झ ट. अथाद्युदात्ता. ४ क. घ. दृष्टाव्यय°; ट. दृष्टॉव्य°. ५ ग. ज. नामैवं तदि°. ६ ग. च. ज. ब. झ. ट. एवमुप°. ७ क. २५
ख. ३; ग. च. ज. १४; घ. झ. ट. 'अङ्को न वर्तते°. ८ छ. त. द. 'सखायः' नास्ति°. ९ ठ. °त्याग्रयण°. १० छ. त. निकृंत°. ११ छ. त. ऋच्छंती इव; द. ऋच्छती इव. १२ छ. त. द. ददर्शिरे. १३ क. ख. °वति ॥ ४ ॥ पर्या°;
छ. त. °घति ॥ १३ ॥ पर्या°; द. °वति ॥ ८ ॥ पर्या°. २९

न्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति ॥ ९ ॥

" अक्षण्वन्तः कर्णवन्तः सखायो " इत्यस्यामृचि । बृहस्पतेरार्षं विद्यासूक्तं नाम तत्रेयमृक् । अक्षण्वन्तोऽक्षिसंयुक्ताः । कर्णवन्तः कर्णसंयुक्ताः । एवमपि समानेन्द्रियाः समानपृष्ठोदरपाणिपादाः सन्तः । अपि च समानख्यानाः सर्वे मनुष्याख्याः ।

त्व इत्यस्य दृष्टव्ययत्वे उदाहरणम्

अथवा समानेषु शास्त्रेषु कृतश्रमाः । वैयाकरणा वैयाकरणानामेव समानख्याना नैरुक्ता एव नैरुक्तानाम् । मनोजवेषु मनोगम्येष्वर्थेष्वसमा बभूवुः । केचिदूहापोहकरणवक्तृत्वसमर्थाः केचिदमेधसः । कथमसाम्यमिति । यतो दृष्टान्तेन प्रदर्शयति । आदघ्नास उपकक्षास उ त्वे ह्रदा इव । आदघ्ना एव आदघ्नासः । आस्यदघ्नह्रदपरिमाणाः केचित्प्रज्ञया । उपकक्षासः कक्षसंनिकृष्टदेशतुल्योदका इव ह्रदा एके प्रज्ञया । ह्रदाः स्नात्वाः स्नानार्हाः । स्नात्वा अक्षोभ्या अपरिमेयप्रज्ञाना ददृश्रे ददृशिरे । दृश्यन्त इति समस्तार्थः ।

अथैकपदनिरुक्तम् । ' आक्षि चष्टेः ' पश्यत्यर्थस्य ( धा० २।७ ) । दृश्यते ह्यनेन । ' अनक्तेः ' व्यक्त्यर्थस्य [ धा० ७ । २१ ] ' इत्याग्रायणो ' मन्यते । ब्राह्मणमपि चैतस्मिन्निर्वचने भवति । 'तस्मादेते व्यक्ततरे इव भवतः इति ह विज्ञायते ' । यस्मादिदं नामेति किमपि प्रकृतम-

१ क. ख. छ. त. द. ठ. ' ९ ' नास्ति. २ क. ख. घ. झ. ट. ठ. 'सखायो' नास्ति. ३ क. ख. घ. झ. ट. ठ. इत्येतस्या°. ४ घ. झ. ट. °मृगिति; ठ. 'तत्रेयमृक् ' इति नास्ति. ५ ग. ज. समानं किं समानपृष्ठो°. ६ क. ख. घ. झ. ट. ठ. मनुष्याः; च. मनुष्याख्यास्याः. ७ क. ख. ग. ज. °पोहनधारणवक्तृत्व°. ८ घ. ट. समार्थाः. ९ क. ख. कथमसामान्यमिति; ग. ज. कथसमामान्यमिति. १० क. ख. घ. झ. ट. ठ. प्रतिपादयति. ११ ग. ज. °दघ्नहृदयप°; घ. झ. अस्यद ( झ. आस्यद ) हृदयप्रमाणाः; ट. अ (आ) स्यदहृदयप्रमाणाः° घ्नह्रदपरि. १२ ग. ह्यनेनेति. १३ घ. झ. ट. व्यक्तस्यार्थस्य; च. ठ. व्यक्तार्थस्य. १४ क. ख. ग. ज. आग्रायणो. १५ क. ख. ग. ज. घ. झ. ' ह विज्ञायते ' नास्ति; ट. इति । यस्मा° ह विज्ञायते. १६ क. ख. ग. ज. घ. झ. ट. ठ. किमिति प्रकृ°.

पेक्ष्य । अथवा यस्मादेते तेजोवयवभूयिष्ठे तस्मात्कारणा[1]दित्येवं यच्छन्द-मन्वाकृष्य विद्यमानमविद्यमानं वो[2]त्पाद्य तस्माच्छब्दस्य[3] सामर्थ्यमुत्पाद्यते । तथा हि स निराकाङ्क्षो भवति । सर्वत्र साकाङ्क्षेषु शब्देष्वेवं व्या[4]ख्यान-धर्मा द्रष्टव्याः । एते अक्षिणी इतरेभ्योऽङ्गेभ्यो व्यक्ततरे स्पष्टतरे प्रकाशतरे भवतः । अन्धकारेऽपि ह्येते प्रकाशेते नक्तंचरादीनां न तथेतराण्यङ्गानि । एवं ब्राह्मणेऽप्यनक्तेरेवाक्षिणी इ[5]ति विज्ञायते । ' कर्णः कृन्ततेर्नि[6]कृत्तद्वारो भवति ' । ऋच्छतेरित्याग्र[7]यणो मन्यते । ब्राह्मणमपि चैतस्मिन्निर्वचने भवति । 'ऋच्छन्तीव खे उदगन्तामिति ह विज्ञायते ' इति । ऋच्छन्तीवैतौ कर्णौ खेऽभिव्यक्ताः सन्तः शब्दाः । एतावपि चोदगन्तां प्र[8]त्युदृच्छत इव ग्र[9]हणाय । विचार्यमाणे ज्ञायते खे कर्णाविति । ' आस्यमस्यतेः ' क्षेपार्थस्य [ धा० ४ । १०३ ] । क्षिप्यते ह्येतदाभिमुख्येनान्नम् । स्यन्दतेर्वा स्यादाङ्[10]पूर्वस्यैव स्र[11]वणार्थस्य [ धा० १ । ७६२ ] । शुष्केऽपि ह्येतदन्ने[12] आगते स्रवत्येव श्लेष्माणं येन तदार्द्री[13]भूतं ग्रसितुं शक्यते । दध्न दध्यतेः स्र[14]वत्यर्थस्य । सु[15]ततरमिव तद्भवत्यु[16]त्तरात्परिमाणत् । ' दस्यतेर्वा स्यात् ' क्षयार्थस्य । ' विदस्ततरं ' ह्युपक्षीणतरं तद् ' भवति ' उत्तरस्मात्प-रिमाणत् । ' प्रस्नेयाः ' प्रकर्षेण स्नातुं येषु योग्यमगाधत्वात्ते प्रस्नेयाः स्नानार्हा इत्यर्थः । ' ह्रदो ह्रादतेः ' शब्दार्थस्य । शब्दं ह्यसावभिहन्य-मानः करोति । ' ह्लादतेर्वा स्यात् ' शीतीभावार्थस्य । ग्रीष्मेऽपि ह्यसौ शी[17]तल एव भवति ।

" अथापि " अयमपरो निपातः ' समुच्चयार्थे भवति ' । कतमः । त्वदिति । किमुदाहरण[18]म् । ' पर्याया इव त्वदाश्विनं ' ( कौ० ब्रा० १७ ।

१ घ. झ. ट. ठ. ' कारणात् ' नास्ति. २ क. ख. ग. ज. घ. झ. ट. ठ. चोत्पाद्य. ३ घ. झ. ट. ठ. 'च्छब्दसामर्थ्यादयमुत्पाद्यते. ४ क. ख. घ. झ. ट. ठ. व्याख्यानधर्मो द्रष्टव्यः. ५ च. ठ इति च वि°; ट. इति त्रि° च. ६ ग. ज. घ. झ. ट. निकृत°. ७ क. ख. ग. ज. घ. ट. आग्रायणो. ८ ग. ज. इत्युदृच्छ°. ९ घ. ट. प्रग्रहणाय; ठ. शब्दग्रहणाय. १० च. °दापूर्व°. ११ च. श्रव°. १२ ग. ज. ' अन्ने ' नास्ति. १३ क. ख. व. झ. ट. आर्द्रीकृतं; ग. ज. आर्द्रभू°. १४ च. दध्न्यतेः १५ ग. च. ज. स्तुततर°. १६ ग. ज. घ. झ. ट. ठ. °वति पूर्वतरात्प°. १७ च. ज. सीतल°. १८ क. ख. णम् ॥ ४ ॥ पर्या°; ग. णम् ॥ १४ ॥ पर्या°.

४ ) इति । आह । किमुक्तं भवति । उच्यते । ' आश्विनं च पर्यायाश्चेति ' । एवं समुच्चयार्थे भवति ।

" अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति " ।

५ पदपूरणलक्षणम् व्याख्याताः कर्मोपसंग्रहार्थीयाः । तत्प्रसङ्गेन हीत्येवमादयोऽन्यार्थाः[1] अप्युक्ताः । प्रतिज्ञाप्रसक्तानेवाधुना पदपूरणान्वक्ष्यामः । तेषां सामान्यमेव तावल्लक्षणमुच्यते । तत्राधिकारार्थोऽयमथशब्दः । अथ ये प्रवृत्ते[2] परिसमाप्ते[3]ऽर्थेऽन्यैरेकवाक्यगतैः पदैरमिताक्षरेषु गद्यग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणार्थास्त

१० एव मिताक्षरेषु पादवृत्तेषु भवन्ति । उभयत्रापि तु तेऽनर्थका अनर्थान्तर[4]वाचकाः । प्रकृतादर्थान्न किंचिदर्थान्तरं द्योतयन्ति । पदमेव वाक्यमेव वा पूरयितव्यमित्ययमेव हि तेषामर्थो नान्यदर्थान्तरम् । उक्तं च

" क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् ।
सत्त्वाभिधायकं नाम निपातः पादपूरणः[5] " इति ॥

१५ कतम पुनस्त इति । उच्यते । ' कमीमिद्विति ' एते चत्वारः । कम् ईम् इत् उ इति । आह । ननु ये प्रवृ[6]त्तेऽर्थ इति यदेतदुपदिष्टं लक्षणमत एव विज्ञास्यामो येऽमिताक्षरेषु वाक्येषु पठितास्ते मिताक्षरेषु पदपूरणा भविष्यन्तीति[7] । अथ किमर्थमेते विशेषतः कमीमिद्वो

के ते पदपूरणाः

२० निर्दिश्यन्त इति । उच्यते । एते हि प्रायेण पदपूरणा एव । अन्ये पुनरिवनचिन्न्वादयोऽर्थवन्तोऽप्यर्थासंभवे सति पदपूरणा भवन्ति । लक्षणं हि तानपि व्याप्नोति । एते पुनः प्रायेणानर्थका एवेति विशेषतो निर्दिश्यन्ते । अथवा ते प्रायेणार्थवन्तः कदाचिदनर्थका एते पुनः प्रायेणानर्थकाः कदाचिदर्थवन्त इत्यतो विशेषतो निर्दिश्यन्ते । आह । एवमपि[8] चोकारो

२५ न निर्देष्टव्यः[9] । किं कारणम् । स हि पुरस्तान्निर्दिष्ट एव ' अथापि पदपूरण

---

१ च. °दयो °नार्था° ना २ ग. ज. अप्रवृत्ते°. ३ ग. च. परिप्रापितेऽर्थे°; ज. अपरिमापितेऽर्थे; ट. परि==प्ते° प्रापिते; ठ. प्रापिते परि°. ४ ग. ज. अनर्थअन्तर°; च. अनर्थकान्तर°. ५ ज. झ. पदपूरणः. ६ च. अप्रवृत्ते°. ७ ग. च. ज. ' इति ' नास्ति. ८ च. ' अपि ' नास्ति. ९ ग. ज. निर्दिष्टव्यः.

इदमु तदु' [ निरु० १ । ५ ] इति । उच्यते ।

**उकारस्य पुनर्निर्देशे कारणम्**

सत्यं निर्दिष्टः । प्रासङ्गिकस्तु स[1] तस्य[2] निर्देशः । अयमेवात्रोकारस्य पदपूरणत्वे मुख्यो निर्देशः स्वप्रकरणत्वात् । आह । तत्र तर्ह्यकिंचित्कर इति । उच्यते । नाकिंचित्करः । किं कारणम् । शृणु । यदि ह्ययमुकारस्तत्र पदपूरणत्वेन नोच्येतेहैवोच्येत[3] ततः पूर्वोक्तस्य विनिग्रहार्थीयत्वस्यायमपवाद इति गम्येत[4] । अथापि तत्रैव केवलमस्य पदपूरणत्वमुच्येत नेह तथापि पदपूरणेषु परिसंख्यायमानेषु नायमुक्त इति परिसंख्यया पदपूरण[5]त्वमस्य बाध्येत । अनिष्टं चैतत् । तस्मादुभयत्राप्यधीत[6] इति । आह । नन्वेवं खलु नूनमित्येतयोः परिसंख्यया पदपूरण[7]त्वस्य बाधः प्राप्त इति । उच्यते । नैवम् । किं कारणम् । उ[8]कारवत्तौ ह्युभावपि । यथैव ह्युकारोऽर्थवांश्चानर्थकश्चैवं तावपि । तस्मादुकारग्रहणेनैव तावप्यत्र गृहीतौ द्रष्टव्यौ । न केवलमुभावेव । किं तर्हि । अन्येऽपि[9] चानर्थकाः सन्ति । तद्यथा । 'आ घा ता गच्छानुत्तरा' [ ऋ० सं० १० । १० । १० ] इत्यत्र घकारः । तेऽपि चात्रावरुद्धा द्रष्टव्याः । उदाहरणमात्रप्रदर्शनार्थं ह्येतावन्त एवात्रोदाहृताः । त एते सर्व एवार्थासंभवे सत्यनर्थका एव । अ[10]र्थसंभवे त्वर्थवन्त इति । किं कारणम् । न हि कस्मिंश्चिद[11]र्थलवे संभवत्यनर्थत्वकल्पना न्याय्या शब्दस्य । अर्थप्रधानो हि शब्दः । स नाकस्मादभिधेयेनार्थेन विना वाक्ये संहन्येत । तस्माद्यावद्गम्यमेव तावदर्थः कल्पयितव्यः[12] । यत्पुनरेतदुक्तं वाक्यपूरणा इत्यगतिरेषा । तदेतत्सर्वथाप्यर्थासंभवे सत्यगतौ सत्यां भवति । त एते प्रायोवृत्त्येवनचिन्वादयोऽर्थवन्तः प्रायोवृत्त्या च कमीमिद्वोऽनर्थका इति द्रष्टव्यम् ।

**सर्वे निपाताः प्रायशोऽर्थवन्तः कदाचिदनर्थकाः**

---

१ घ. झ. ट. ठ. 'सः' नास्ति. २ च. त्यस्य°. ३ ग. उच्यते; ज. 'इहैवोच्येत' नास्ति. ४ क. ख. ग. च. ज. गम्यते. ५ ठ. °पूरणत्वबाधः प्राप्त इति बाध्येत. ६ ग. ज. ठ. °प्यधीयत इति. ७ च. °त्वस्य च बाधः. ८ च. उकारवंततौ. ९ क. ख. ग. ज. °पि तावन्त एव सन्ति. १० क. ख. 'अर्थ' नास्ति; ग. च. ज. चार्थसं° ११ क. ख. घ. झ. 'दर्थे तावत्संभ°; ट. °दर्थे तावत्संभ° र्थलाभे सं; ठ. °दर्थलाभे सं°. १२ क. ख. घ. झ. ठ. कल्पनीयः; ट. कल्पनीयः । य° यितव्यः.

आह । नन्वादौ च[1] मध्ये च[2] पदपूरणानामागमो दृष्टः । तद्यथा । 'नूनं सा ते' [ऋ० सं० २।११।२१] इति । अथ कथमुच्यते 'ये प्रवृत्तेऽर्थे आगच्छन्ति ते पदपूरणाः' इति । उच्यते । न ह्येतदध्ययनकालीनमानुपूर्व्यमक्षराणां पदानां वा व्याख्याकाले नियतमस्ति । अर्थप्रकाशनार्थनिर्व-

५ चनवशेनान्यदानुपूर्व्यमुपजायते व्याख्याकाले । तत्रैवं सत्याख्यातपदं प्रधानं तदनु नाम तदनूपसर्गास्तदनु निपाता इत्येतामानुपूर्वीमवेक्ष्यैतदुक्तं[3] 'अथ ये प्रवृत्तेऽर्थे आगच्छन्ति ते[4] पदपूरणा भवन्ति' इति ।

**पदपूरणानां वाक्येषु स्थानम्**

एतामेवानुपूर्वीमवेक्ष्य पूर्वमाख्यातलक्षणमुक्तं तदनु नाम-

१० लक्षणं तदनूपसर्गलक्षणं तदनु निपातलक्षणम् । तस्मादादावपि निपातः सन्मध्ये वान्त एव द्रष्टव्यः । लोकेऽपि हि दत्तानुयोगानां ब्राह्मणानामवस्थानक्रमोऽकिंचित्कर एव भवति । मध्येऽन्त्ये[5] वावस्थितो यः प्रधानं[6] भवति[7] सोऽग्र्य इत्युच्यते । तस्मात्सम्यगेवोक्तं 'ये प्रवृत्तेऽर्थे[8]' इति । व्यत्ययं चाधिकृत्य श्लोकमप्युदाहरन्ति ।

१५ "आदिमध्यान्तलुप्तानि प्रच्छन्नापिहितानि[9] च ।
ब्रह्मणः परिगुप्त्यर्थं वेदे व्यवहितानि च" इति ॥ ९ ॥[10]

---

**निष्टुक्त्रासश्चिद्दिन्नरो भूरितोका वृकादिव । बिभ्यस्यन्तो ववाशिरे शिशिरं जीवनाय कम् । शिशिरं जीवनाय ।**

२० **शिशिरं शृणातेः शम्नातेर्वा । एमेनं सृजता सुते । आसृजतैनं सुते । तमिद्वर्धन्तु नो गिरः । तं वर्धयन्तु नो गिरः स्तुतयो गिरो गृणातेः । अयमु ते समतसि । अयं ते समतसीवोऽपि दृश्यते[11] । सु विदुरिव [ काठक सं० ८ । ३**

---

१ च. 'च' नास्ति. २ ग. च. ज. 'च' नास्ति. ३ क. ख. °दुक्तं तत्र ये°; घ.
२५ झ. ट. ठ. °दुक्तमथ तत्र ये°. ४ ग. ज. 'ते' नास्ति. ५ क. ख. घ. झ. ट. ठ. मध्येन्ते:. ६ क. ख. प्रधानः. ७ क. ख. घ. झ. ट. ठ. 'भवति' नास्ति. ८ ग. च. ज. येऽप्रवृ°. ९ ठ. प्रच्छिन्ना°. १० न कस्मिन्नपि पुस्तकेऽङ्कोऽस्ति. ११ क.
२८ ख. °श्यते ॥५॥ सु°; °छ. त. °श्यते ॥ १४ ॥ सु°; द. °श्यते ॥ ९ ॥ सु°.

**तथा ८ । १३ ] सु विज्ञायेते इवाथापि नेत्येष इदित्येतेन संप्रयुज्यते परिभये ॥ १० ॥**

अधुनैवमेतानुदाहृतान्कमीमिदून्समासतः प्रत्येकमुदाहरणैर्दर्शयति । 'शिशिरं जीवनाय कम् ' [ ऋ० १० । १६१ । १ ] इति ।

कमित्यस्योदाहरणम्

अत्र कमित्येष पदपूरणः । शिशिरं जीवनाय जीवनार्थमित्यर्थः । तत्र हि प्रायेण प्रचुराणि शरद्धान्यानि भवन्ति । कमिति पदपूरण एव । शाखान्तरेषु शेषो द्रष्टव्यः । केचिदेवं कृतशेषमत्राधीयते ।

'निष्ट्वक्रासश्चिदिन्नरो भूरितोका वृकादिव ।
बिभ्यस्यन्तो ववाशिरे शिशिरं जीवनाय कम् ' इति ॥

निष्ट्वक्त्रासः । निष्ट्वक्त्रा एव निष्ट्वक्त्रासः । निर्वसना इत्यर्थः । अपि च । भूरितोका बह्वपत्या इत्यर्थः । के पुनस्ते । दरिद्राः केचिन्नरो मनुष्या इत्यर्थः । किं तेषामिति । वृकादिव बिभ्यस्यन्तः पुनः पुनर्भृशं वा बिभ्यतो वृकादिव हिमाद्ववाशिरे पुनः पुनर्भृशं वा वाश्यन्ते । किमिति ववाशिरे । शिशिरमस्माकं जीवनाय जीवनार्थमागच्छतीत्येवं हेमन्ते ववाशिरे । अल्पतरशीतं हि शिशिरम् । सुखं तत्र जीविष्याम इत्यभिप्रायः ।

निगमप्रसक्तस्य शिशिरशब्दस्य निर्वचनम् । ' शिशिरं शृणातेः ' हिंसार्थस्य [ धा० ९ । १६ ] । 'शम्नातेर्वा' हिंसार्थस्यैव । नार्थकृतो विशेषः । हिनस्ति हि तस्मिन्कालेऽप्रतिबध्यमानोऽतिशयेन दावाग्निः शुष्कानोषधिवनस्पतीन् ।

ईमित्यस्योदाहरणम् । ' एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने । चक्रिं विश्वानि चक्रये '' [ ऋ० सं० १ । ९ । २ ]॥ ऐन्द्रेषा गायत्री ।

ईमित्यस्य

मधुच्छन्दस आर्षम् । पृष्ठ्याभिप्लवयोः स्तोमवृद्धौ प्रातःसवने ब्राह्मणाच्छंसिनः शस्त्रे महाव्रते च तृचाशीतिषु विनियुक्ता । आसृजत । एनमाभिमुख्येन सृजत । ईमिति पदपूरण एव । सृजत दत्तोक्थपात्रेण चमसैश्च सोमं हे

१ क. ख. छ. त. द. '१०' नास्ति. २ ठ. निष्ट्वक्त्रास इति निष्ट्व°. ३ ग. झ. विभ्यस्यंतो; घ. विभ्यस्यांतो; ट. विभ्यस्यांतो. ४ च. ये निस्त्वं (ष्ट्व) क्त्रासः । निस्त्वक्त्रा एव निस्त्वक्त्रासः. ५ घ. विभ्यतो. ६ ग. च. ज. वाश्यंते ववाशिरे । किमि°. ७ ग. च. ज. °हरणं ॥ १६॥ एमे°. ८ घ. झ. ट. एमेनं० चक्रये; ग. ज. एमेनं सृजता सुते० चक्रये. ९ च. ऐन्द्रेषा. १० च. 'ब्राह्मणा' नास्ति. ११ घ. झ. ट. °व्रते बृहतीतृचा°. १२ क. ख. घ. झ. ठ. ठ. 'सृजत' नास्ति; ग. ज. आसृजत. १३ घ. झ. ट. दत्तोच्छपात्रेण.

अध्वर्यवः । किंमासृजत[1] । योऽयमिन्द्रस्य सुतेऽभिषुते सोमे स्वांश उक्थपात्रचमसस्थ एनमासृजत । मन्दिं मन्दयितारम्[2] । मन्दिन इन्द्राय हर्षवते । चक्रिं चक्रवन्तं चरणवन्तं[3] क्रमणवन्तं वा । अपि वा हविर्धानशकटचक्राभ्यां चक्रवन्तम् । अपि च चक्रादिति कर्मनाम [निघ० २ । १] । प्रतिविशिष्टवीर्यजनकैः संस्कारकर्मभिस्तद्वन्तम् । विश्वानि सर्वाणि भूतानि कर्माणि चक्रये कृतवत इन्द्राय । सोमोऽत्र प्रत्यक्षो दातारश्च । परोक्षा त्विन्द्रस्य स्तुतिः । ' अथापि प्रत्यक्षकृताः स्तोतारो भवन्ति परोक्षकृतानि स्तोतव्यानि ' [ नि० ७ । २ ] इति हि वक्ष्यति ।

'तमिद्वर्धन्तु नो गिरः' इति ' इत् ' इत्यस्योदाहरणम्[4] । "तमिद्वर्धन्तु नो गिरो वत्सं संशिश्वरीरिव । य इन्द्रस्य हृदंसनिः[5] " [ ऋ० सं० ९ । ६१ । १४ ] ॥

इदित्यस्य

अमहीयोराङ्गिरसस्येयमार्षम् । गायत्री सौमी ग्रावस्तुतौ विनियुक्ता । तं वर्धयन्तु नः । तं सोमम् । 'इत्' इति पदपूरणः । वर्धयन्तूपजातवीर्यं कुर्वन्तु देवतृप्तये न एता अस्मद्गिरः स्तुतयः । कथं पुनर्वर्धयन्तु । वत्सं संशिश्वरीरिव । वत्समिवैकशिशुका बह्व्यो गावः । ता यथा पर्यायेण वत्समेकं मृतवत्साः स्वैः स्वैः पयोभिर्वहनादिसमर्थं कुर्युरेवमेवा[6]स्मद्गिर एतं सोममुपजातवीर्यं देवतर्पणाय कुर्वन्तु वर्धयन्तु । यः कतमः[7] । य इन्द्रस्य हृदंसनिर्हृदयस्य[8] संभक्ता तमेनं वर्धयन्त्वित्यभिप्रायः ।

आह । कस्मात्पुनरत्र केचिदुदाहरणमन्त्रा अशेषाः पठ्यन्ते निरुच्यन्ते च केषांचिदेकदेशा[9] इति । उच्यते । ये तावदशेषाः पठयन्ते निरुच्यन्ते च ते[10] व्याख्याधर्मोपदर्शनार्थम्[11] । यदि पुनः सर्व एव पठयेरन्निरुच्येरंश्चातिगुरु शास्त्रं संपद्येत । अथापि सर्वेषामेवोदाहरणमन्त्राणामेकदेशः[12] पठयेत निरु-

१ ग. ज. कमासृजत. २ ग. मादयि°. ३ ट. चरणवन्तं; ठ. ' चरणवन्तं ' नास्ति. ४ ग. च. ज. °णम् ॥ १७ ॥ त°. ५ घ. झ. ट. तमिद्वर्ध० दं संनिः; ग. ज. तमिद्वर्धन्तु नो गिरो० हृदं सानिः. ६ घ. झ. ट. ' एव ' नास्ति. ७ घ. झ. ट. °यन्तु । कतमःसः । य°; ग. ज. °यन्तु । कयःतमः । य°; च. ठ. °यन्तु । यः कतमः । स इन्द्र°. ८ क. ख. ग. ज. हृदयसंभक्ता. ९ घ. झ. ट. एकदेशः. १० च. 'ते' नास्ति. ११ क. ख. ग. ज. धर्मोपदेशनार्थं. १२ क. ख. घ. झ; ट. °षामप्युदाह°.

*मन्त्राणामेकदेशेन पठनेऽशेषेण च पठने प्रयोजनम् ।*

च्येत च तथापि व्याख्याधर्मो न प्रदर्शितः स्यात् । तस्माद्व्याख्योपप्रदर्शनार्थं केचिदशेषाः पठयन्ते निरुच्यन्ते च केषांचिदेकदेशाः शास्त्रातिगौरवभयादिति । प्रतिमन्त्रमपि सकलार्धर्चपादाध्ययने शक्यते प्रयोजनमन्वेष्टुम् । तदेतत्समासेन ब्रूमः । यस्मिन्यस्मिन्मन्त्रे यद्यत्पदमेकार्थमनेकार्थमनवगतसंस्कारं वा निर्ब्रवीति किंचिद्वान्यच्छन्दरूपमभ्याहरत्यन्यद्वापोहत्यन्यथा वा कस्यचिद्विपरिणामं करोति संदिग्धं वा निर्णयति तदर्थमेव तं सकलमधीते । यस्मिन्वार्धर्चे पादे वा तत्पदं भवति यदभिमतं निर्वक्तुं तावन्मात्रमेवाधीते तन्निर्विवक्षया । तदेतदेवं निपुणमन्वेष्यं सर्वत्र ।

उकारस्योदाहरणम् । " अयमु ते समतसि कपोत इव गर्भधिम् । वचस्तच्चिन्न ओहसे ( ऋ० सं० १ । ३० । ४ ) ॥ शुनःशेपो यूपे

*उ इत्यस्योदाहरणम्*

नियुक्त आत्मानं मोचयितुमिच्छन्ननया गायत्र्येन्द्रं तुष्टाव । अयमिति वर्तमान एव कर्मणि दर्शयन्नाह । ते तव त्वदर्थं सोमो यं प्रति नित्यकालमेव समतसि संपतसि । त्वं तासु तासु क्रियास्वाहूयमानः समतसि संपतसि । कथं पुनर्यं प्रति समतसि । कपोत इव । कपतनः कपोतः कुत्सितपतनः । स यथा गर्भधिं गर्भधानीं कपोतिकामण्डाश्रयं वा नीडं प्रति पुनः पुनः पतत्येवं यं प्रति नित्यकालमिव संपतसि त्वं स एवायमभिषुतः सोम एभिर्ऋत्विग्भिः । अथ किमस्माभिः करिष्यसि । मोचय अस्मान् । किं वा वच एवेदं नः स्तुतिलक्षणं नोहसे न वितर्कयसि रोरूयमाणानां केनाप्यभिप्रायेण वयमेतद्ब्रूमः कैर्वा युष्मद्गुणैर्न युक्तमेतदिति यतो न मोचयस्यस्मानतो यूपात् । श्रुत्वैतदवबुद्ध्यार्थमार्ततामस्माकमवधार्य कारुण्या-

१ घ. झ. ट. वा. २ क. ख. घ. झ. ट. °द्व्याख्याधर्मोपदर्श°; ठ. °स्यात् । तद्व्याख्योपदर्श°. ३ क. ख. घ. झ. ट. अन्वेष्टव्यं°. ४ ग च. ज. °णम् ॥ १८ ॥ अय°. ५ घं. झ. ट. ते०हसे. ६ क. च. शुनःशेफो. ७ क. ख. निर्वितसन् . घ. झ. ट. ठ. निदर्शय°. ८ क. ख. ग. ज. घ. झ. युष्मदर्थं; ट. युष्मद° त्व. ९ क. ख. घ. झ. 'तासु' सकृदेव वर्तते १० घ. झ. नीलं; ट. नीळं. ११ ग. घ. कारूण्योन्मोच°.

९

न्मोचयास्मान् । किं तेऽस्माभिरयमेव तेऽस्मत्तः प्रतिविशिष्टतरः सोमोऽभिषुत इत्यभिप्रायः ।

'इवोऽपि दृश्यते' कदाचिदनर्थक इति वाक्यशेषः । किमुदाहरणम् ।

इवेत्यस्य च — 'सुविदुरिव सु विज्ञायेते इव' इत्येते उदाहरणे । सुष्ठु विदुर्यज्ञं ब्राह्मणा इति । इवोऽनर्थक एव वाक्यपूरणः । सुष्ठु विज्ञायेते यज्ञो नक्षत्रं ब्राह्मणैरिति । अत्रापीवोऽनर्थक एव ।

व्याख्याताः पदपूरणाः । निपातसमाहारमधुना दर्शयति । तदधिकारार्थोऽयं 'अथ' शब्दः । 'अपि' इति संभावने । अप्ययमेव इदिति केवलः प्रयुज्यमानः पदपूरणो भवति । अपि चायमेव 'न' इत्यनेन संप्रयुक्तः 'प्रयुज्यते परिभये' अर्थे । सर्वतो भयं परिभयम् । कथं प्रयोगः । 'नेज्जिह्मायन्त्यो नरकं पताम' इति । मृग्यः शेषः । केचित्त्वेतं कृतशेषमत्राधीयते ॥ १० ॥

**हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान् । शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकं पतामेति ॥ नरकं न्यरकं नीचैर्गमनं नास्मिन्त्रमणं स्थानमल्पमप्यस्तीति वाथापि न चेत्येष इदित्येतेन संप्रयुज्यतेऽनुपृष्टे न चेत्सुरां पिबन्तीति सुरा सुनोतेरेवमुच्चावचेष्वर्थेषु निपतन्ति त उपेक्षितव्याः ॥ ११ ॥**

**इति प्रथमस्य तृतीयः पादः ॥**

---

नेत्परिभये इत्यस्यादाहरणम् — 'हविर्भिरेके स्वरितः संचन्ते सुन्वन्त एके सवनेषु सोमान् । शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकं पताम' ॥ इति ।

---

१ ग. °णम् । १४ सुविदु°. २ घ. ट. नक्षत्रं य ब्राह्मणै°; ठ. यज्ञनक्षत्रे ब्रा°. ३ ग. पाद°. ४ क. ख. घ. झ. ट. ठ. इत्येतेन, ५ ठ. °त्वेवं कृ° तं. ६ ग. च. ज. °यते ॥१९॥ हवि°; इतरेषु पुस्तकेष्वङ्को नास्ति. ७ क. ख. ६; छ. त. १५; द. १०. ८ ङ. थ. ध. ठ. 'इति०पाद' नास्ति; त. इति प्रथमाध्यायस्य द्वितीयः पादः ॥ २ ॥; द. द्वितीयः पादः. ९ ग. ज. सचन्ते० पतामेति; ठ. स्वरित इति.

नारदेन किल विप्रलभ्यमाना असुरपत्न्यो भर्तृन्प्रति तमनेन मन्त्रेण प्रत्यूचुः । एके तावत् इतो लोकाद्धविर्भिः पुरोडा[१]शादिभिर्निमित्तभूतैः स्वः सचन्ते[२] स्वर्गं[३] प्राप्नुव[४]न्ति । अथैके सवनेषु यज्ञेषु सोमानभिषुण्वन्तः । तेन कर्मणेत्यर्थः । शचीर्मदन्तः । अन्ये शच्या वाचा स्तुतिभिरेके देवान्मादयन्तः संतर्पयन्त इत्यर्थः । अप्यन्ये दक्षिणाभिः स्वः संचन्ते इत्येतदेवानुवर्तते[५] । तत्रैवं सति तेन तेनाभ्युद्यतेषु प्राणिषु श्रेयः प्रति यदि वयमेतानपि भर्तृन्न सम्यक्परिचरेमान्येषां जपहोमादीनां कर्मणामसंभवे सति नेद्वयमेतेषामप्युपरि जिह्मायन्त्यो जिह्ममाचरन्त्यो भगवन्नरकं षताम । न ह्यन्यो भर्तृपरिचर्यातः स्त्रियाः कश्चन धर्मोऽस्तीत्यभिप्रायः ।

नरकशब्दं निर्ब्रवीति । नीचैरस्मिन्नर्यते गम्यत इति नरकमथवा [६]नास्मिन् रमणं रतिकरं स्थानमल्पमप्यस्तीति नरकम् ।

'अथापि' अयमपरो निपातसमाहारो 'नचेत्येष इदित्येतेन' एव संप्रयुक्तः 'प्रयुज्यते' । केनचित् 'अनुपृष्टे' सति प्रतिवचनं

न चेदित्यस्योदाहरणम् भवति । तद्यथा । कश्चित्कंचित्पृच्छति तिष्ठन्ति वृषला इति । ततः प्रत्याचष्टे तिष्ठन्तीति । ततो यदि तिष्ठन्ति किमर्थं नागच्छन्तीति पुनरनुपृष्टे ब्रवीति 'न चेत्सुरां पिबन्ति' आगमिष्यन्तीति । यदि सुरां न पिबन्तीत्यर्थः[७] । अथ कस्मात् 'सुरा' । 'सुनोतेः' । सा ह्यभिषूयतेऽनेकैर्द्रव्यैः पिष्टादिभिः ।

'एवमुच्चावचेष्वर्थेषु निपतन्ति त उपेक्षितव्याः[८]' । एवमनेन प्रकारेणोच्चावचेष्वर्थेषु बहुप्रकारेषु समाहृताश्चान्येऽप्येवं बहुप्रकारा निपतन्ति प्रयुज्यमानाः । ते लक्षणशास्त्रमेतच्चार्थनिर्वचनशास्त्रमुपेत्योपगम्यानुप्रविश्येक्षितव्याः । कः कस्मिन्नर्थे वर्तत इत्येवं द्रष्टव्याः । परीक्ष्या[९] इत्यर्थः ।

इतिकरणोऽधिकारपरिसमाप्त्यर्थः । इमा[१०]नि चत्वारि पदजातान्यनुक्रान्तानि नामाख्याते चोपसर्गनिपाताश्चेति प्रतिज्ञाभ्यासो निर्ग[११]मनार्थः ॥ ११ ॥[१२]

[१३]इति षष्ठस्याध्यायस्य तृतीयः पादः ॥

---

१ ग. ज. पुरोलाशा°. २ म. ज. सचन्त; च. स्वरसचन्त. ३ क. ख. घ. झ. ट. ठ. स्वर्गं लोकं प्राप्नु°. ४ क. ख. घ. झ. ट. °वन्ति स्म । अथैके°; ग. ज. °वन्ति स्म अप्येके°. ५ च. स्वरसचन्तेत्येवदे°. ६ क. ख. घ झ. ट. ठ. नास्त्यस्मिन्. ७ ग. सुरां भवन्ति; ज. सुरां न बांति. ८ ठ. °तव्याः । ११ । एव°. ९ घ. च. ट. परीक्षाः. १० ग. ज. इतीमानि. ११ च. निगमर्थः. १२ क. ख. ६; ग. १५; इतरेषु पुस्तकेष्वङ्को नास्ति. १३ ग. च. ज. 'इति' नास्ति; घ. झ. ट. ठ. °इति षष्ठाध्या°.

## चतुर्थः पादः ।

---

**इतीमानि चत्वारि पदजातान्यनुक्रान्तानि नामाख्याते चोपसर्गनिपाताश्च तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च न सर्वाणीति गार्ग्यो वैयाकरणानां चैके तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां संविज्ञातानि तानि यथा गौरश्वः पुरुषो हस्तीत्यथ चेत्सर्वाण्याख्यातजानि नामानि स्युर्यः कश्च तत्कर्म कुर्यात्सर्वं तत्सत्त्वं तथाचक्षीरन्यः कश्चाध्वानमश्नुवीताश्वः स वचनीयः स्याद्यत्किंचित्तृन्द्यात्तृणं तद्यथापि चेत्सर्वाण्याख्यातजानि नामानि स्युर्यावद्भिर्भावैः संप्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यात्तत्रैवं स्थूणा दरशया वा सञ्जनी च स्यात् ॥ १२ ॥**

इमानि पदजातानीति व्याख्यातम् [ निरु० १ । १ ] । अनुक्रान्तान्यानुपूर्व्येण । पूर्वमाख्यातं ततो नामानि तत उपसर्गास्ततो निपाता इत्येवमानुपूर्व्येण क्रान्तानि वर्णितानि व्याख्ययेति वाक्यशेषः । कतमानि पुनस्तानि । नामाख्याते चोपसर्गनिपाताश्चेति । तदपि व्याख्यातमेव [निरु० १ । १] । यच्च तदुक्तं 'नाम्नः किंचिदवशिष्यते तच्चतुर्थेन पादेन वर्णयिष्यामः' (पत्रं ३३ आवलयः १–३) इति तदिदमेवावसरप्राप्तं पदचतुष्टयलक्षणानन्तरमारभ्यते । 'तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च' । तत्र तस्मिन्नेव पदचतुष्टये यानि नामानि तानि सर्वाण्येवाविशेषेणाख्यातजानीत्येवं शाकटायन आचार्यो ब्रवीतीति वाक्यशेषः । नैरुक्तानां चैव समयः सिद्धान्तः सर्वेषामविशेषेण ॥

*सर्वाणि नामान्याख्यातजानीत्येकं मतम्*

आह । कः पुनरन्यथा ब्रवीति येनैवमुच्यते

---

१ छ. नामधेयः प्रतिलम्भस्या°. २ छ दर्शया चा सञ्जनी° रश; त. दरशया चा सञ्जनी°; द. दर्शया चा सञ्जनी°; ठ. दरसया°. ३ क. ख. द. १; छ. त. १६. ४ क. ख. ग. ज. थ. झ. द. ठ. इतीमानि चत्वारि पद°. ५ क. ख. ग. ज. थ. झ. द. ठ. °शेषेण गार्ग्यवर्जम् । आह°. ६ घ. ट. °ब्रवीति । नेत्युच्यते । शाक°; ठ. ब्रवीति । उच्यते । शाक°.

न सर्वाणीत्यन्यत् शाकटायन एवं ब्रवीतीति[1] । उच्यते । 'न सर्वाणीति[2] गार्ग्यः' ब्रवीति । किं गार्ग्य एव[3] । नेत्युच्यते । 'वैयाकरणानां चैके' । व्याकरणमधीयते एते[4] वैयाकरणाः । तेषां चैके न सर्वाण्याख्यातजानि नामानीत्येवं ब्रुवत इति वाक्यशेषः ।

'तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां संविज्ञातानि तानि' इति । तदेतत्प्रपञ्च्यते गार्ग्यसंविज्ञातनाम्नां लक्षणम् पक्षेण । यान्याख्यातजानि नामानि यानि वा[6] नेत्येवं पर्युपयुक्तस्तच्छब्दः । इह त्रिविधा व्यवस्था नाम्नाम् । तद्यथा । प्रत्यक्षक्रियाणि प्रकल्प्य[7]क्रियाण्यविद्यमानक्रियाणीति । तत्र प्रत्यक्षक्रियाणि । तद्यथा कारको हारक इति । प्रकल्प्यक्रियाणि । तद्यथा गौरश्व इति । अविद्यमानक्रियाणि । तद्यथा डित्थो[8] डवित्थः अरविन्दो वार्विडं[9] इति । तत्रैवं सति यत्र येष्वित्यर्थः । केषु । नामसु । स्वरसंस्कारौ । स्वरश्चोदात्तादिः संस्कारश्च प्रकृतिप्रत्ययादि[10]रेतौ स्वरसंस्कारौ । समर्थौ । समर्थता नामोपपत्तिरुच्यते । संगतार्थौ लक्षणशास्त्रविहितयोपपत्त्या युक्तावित्यर्थः । यथैव लक्षणाविप्रतिपत्त्या स्वरोऽवस्थित एवं संस्कारोऽपि । येष्वपि च प्रादेशिकेन । प्रदिश्यते[11]ऽनयेति प्रदेशः क्रिया यां तस्मिन्द्रव्ये व्यवस्थिता[12] यद्धेतुकस्तस्य नामधेयप्रतिलम्भोऽभिप्रेतस्तस्याः प्रदेशाख्यायाः क्रियाया अभिधायको धातुः स गुण इत्युच्यते । अन्यत्र हि गुणशब्दोऽप्रधाने वर्तते । शेषः अङ्गं गुणः इति समानार्थाः । प्रधानं तु तत्र क्रिया प्रदेशाख्या । तदभिधायको धातुर्गुणाख्यः । स प्रदेशवाचकत्वात्प्रादेशिको गुण इत्युच्यते । तेन धातु[13]रूपेणान्वितावनुगतौ स्वरसंस्कारौ स्यातां भवेतां येषाम् । आह । किं तेषामिति । उच्यते । संविज्ञातानि तानि । समं विज्ञातान्यैकमत्येन विज्ञातानीत्यर्थः । तेषु तावद-

---

१ घ. झ. ट. 'इति' नास्ति. २ ग. ज. 'इति' नास्ति. ३ घ. झ ट. ठ. एव ब्रवीति । ने°. ४ घ. झ. ट ठ. 'एते' नास्ति. ५ च. वैयाकरणानां तेषां°. ६ घ, झ. ट. ठ. वान्यानि । एवं°; च. वा निति एवं°. ७ क. च. प्रकल्पक्रिया°. ८ ग. ज. दित्थो दवित्थ°, ९ ग. ज. चार्विड इति. १० ग. ज. प्रत्ययादिभिस्तौ°. ११ क. ख. ग. ज. °श्यते द्रव्यमनये°. १२ क. ख. घ. झ. °न्द्रव्येऽवस्थि°; ट. °न्द्रव्येऽवस्थि° व्य. १३ घ. झ. ट. ठ. धातुगुणेनान्वि°.

विप्रतिपत्तिरेवास्माकमाख्यातजानि तानीति । तद्यथा । कर्ता कारकः पक्ता पाचक इति । न पुनर्यथा गौरश्वः पुरुषो हस्तीति । किं कारणम् । एतेषु प्रकल्प्यन्ते क्रिया न साक्षादुपलभ्यन्ते । अपि चैतेषु कल्पयितुमपि तावच्छक्यन्ते । न डित्थादिषु पुनः प्रकल्पयितुमपि शक्यन्ते । तस्मान्न सर्वाण्याख्यातजानि नामानीति । तत्र यदुक्तं सर्वाण्याख्यातजानि नामानीत्येतदयुक्तम् । रूढिशब्दे च क्रियाः केवलं शब्दव्युत्पत्तिकर्मण्युपलक्षणभूता निमित्तभावेनोपादीयन्ते न वस्तुतोऽर्थक्रियास्वनुसहायभावं प्रति । तत्र शब्दस्याप्रच्युतावुपलक्षितेऽनुप्रवृत्तेऽभिधाने निवृत्तायां क्रियायामुपरतसाधनव्यापारं निरूप्य क्रियायामभिधानं वस्तुमात्रस्य प्रतिनिर्देशकं रूढिरित्यभिधीयते ।

अपरो व्याख्यामार्गः । " यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्याताम् " । यत्र यस्मिन्नाम्नि स्वरसंस्कारौ समर्थावष्टाध्यायीलक्षणोपपत्त्या युक्तौ प्रदेशाभिधायिना च धात्वाख्येन प्रादेशिकेन गुणेनान्वितावनुगतौ स्याताम् न्यायवत्कार्मनामिकसंस्कारेण युक्तौ । तद्यथा । कर्ता कारकः पक्ता पाचक इत्येवमादि । तदाख्यातजं गुणकृतमिति प्रतीम इति वाक्यशेषः । येषु पुनरष्टाध्यायीलक्षणपराङ्मुखौ स्वरसंस्कारावनुगतौ न च न्याय्यकार्मनामिकसंस्कारयुक्तेन प्रदेशाख्येन धातुरूपेण । किं तेषामिति । उच्यते । ' संविज्ञातानि तानि ' । संविज्ञानपदमितीह शास्त्रे रूढिशब्दस्येयं संज्ञा । वक्ष्यति ह्यग्निरिन्द्र इत्येवमादीनां संविज्ञानपदत्वं ' यत्तु संविज्ञानभूतं स्यात् ' [ निरु० ७ । १३ ] इति । तथा वृत्रहा पुरन्दर इत्येवमादीनां गुणपद-

(तद्यत्र० इत्यस्यान्या व्याख्या)

१ ढ. 'तानि' नास्ति. २ ग. च. ज. दित्थादिषु. ३ घ. झ. ट. तत्. ४ क. ख. ग. ज. शब्दस्य प्र°. ५ ग. ज. 'क्रियायां' नास्ति. ६ ग. ज. साधनाव्या°. ७ क. ख. ग. ज. घ. झ. ट. ठ. निरूप्यक्रियाया°. ८ क. ख. ग. ज. तद्यत्र. ९ घ. ट. °नान्वितौ अतौ अनुगतौ; झ. ' अनुगतौ ' नास्ति. १० क. ख. ग. ज. घ. झ. ट. ठ. °नामिकसंयुक्तेन संस्का°. ११ क. ख. ग. ज. घ. झ. ट. ठ. ' युक्तौ ' नास्ति. १२ घ. झ. °च त्यायाकार्म°; च. °च नापि न्याय्यकार्म°; ट. °च त्यायाकार्म° न्याय्य; ठ. °च कर्मानामि°. १३ च. झ. °ज्ञानानि. १४ ग. ज. संविज्ञातपद°. १५ च. °मादीनां गुणपदत्वम् । स एवाय°. १६ घ. झ. ट. यथा.

संविज्ञानपदस्यार्थः

त्वम् [ निरु० ७ । १३ ] । स एवायमिहापि विभागो द्रष्टव्यः । तत्र गुणपदानि कारकपाचकादीनि । संविज्ञानपदानि तानि यथा गौरश्वः पुरुषो हस्तीत्येवमादीनि । न ह्येषां गवादीनामष्टाध्याय्यां व्युपत्तिलक्षणमस्ति । तस्माद्रूढिशब्दा एवैत इति ।

प्रदेशपदस्य गुणपदस्य- चान्योऽर्थः

अन्ये तु प्रदेशो व्याकरणमिति व्याचक्षते । तत्र हि शब्दानां लक्षणानि प्रदिश्यन्ते । तत्कृतः कैश्चिल्लक्षणानुग्रहः लक्षणावयवो वा गुण इत्युच्यते । प्रसिद्धो हि गुणशब्दोऽनुग्रहेऽवयवे च । तद्यथा । गुणे ममायं वर्तत इत्युक्तेऽनुग्रहे वर्तत इति गम्यते । अवयवेऽपि द्विगुणा रज्जुस्त्रिगुणेति चोक्ते द्व्यवयवा त्र्यवयवेति गम्यते । शेषं समानमेव पूर्वास्यामर्थाभ्याम् ।

अथवा संविज्ञानानि तानि संविज्ञातानि तानि वेत्युभावप्येतौ पाठौ । तस्मादुभयथापि व्याख्यातव्यम् । सत्त्वं प्रदेश इति केचिदङ्गभूता क्रिया गुण इति व्याचक्षते ।

शाकटायनमते दोषाः। १. एकं कर्म कुर्वाणा नैकेन नाम्नाऽभिधीयन्ते

किं चान्यत् । 'अथ चेत्सर्वाण्याख्यातजानि नामानि स्युः' तथाप्ययमपरो दोषः प्रसज्येत । आह । कतम इति । 'यः कश्च तत्कर्म कुर्यात्सर्वं तत्सत्त्वं तथाचक्षीरन्यः कश्चाध्वानमश्नुवीताश्वः स वचनीयः स्याद्यत्किंचित्तृन्द्यात्तृणं तत्' इति । यः कश्चाविशेषेण प्राणी तत्कर्म कुर्यात् । यत्किंचिदनेकप्राण्याश्रयमेकं तदित्यभिप्रेत्योच्यते तत्कर्म कुर्यादिति । सर्वमेव तं प्राणिनं तत्सत्त्वं तथा तेनैवैकेन नाम्नाचक्षीरन् । तद्यथा । यः कश्चाध्वा-

१ ग. च. ज. °पावका°. २ घ. झ. ट. 'संविज्ञानपदानि तानि' नास्ति. ३ क. ख. घ. झ. ट. ठ. क्वचित्. ४ घ. झ. ट. ठ. 'तत्' नास्ति. ५ झ. ट. वर्ततन इति. ६ ठ. 'सविज्ञानानि तानि' नास्ति. ७ घ. ट. 'संविज्ञातानि तानि' नास्ति; च. संविज्ञातानि वेत्यु°; झ. संविज्ञानानि वेत्यु°. ८ क. ख. ग. ज. ठ. वेत्यु°. ९ क. ख. घ. झ. ठ. 'एतौ' नास्ति; ट. वेत्युभावपि पाठौ° त्येता. १० क. ख. घ. झ. ठ. व्याख्यातम्; ट. व्याख्यातं तव्यम्°. ११ च. केचिदङ्गतावत्क्रिया°. १२ ठ. प्रसज्जेत. १३ च. कश्चित्कर्म°.

समविशेषेणाश्वोऽप्यश्नुवीताश्व इत्येवं स वचनीयः स्यात् । कस्माद्वाश्वोऽश्नुवन्नश्व इत्युच्यतेऽन्योऽश्नुवन्नपि नोच्यत इति विशेषहेतुर्नास्ति । तस्मादश्वोऽपि नैवाशनक्रियायोगाभिप्रायेणाश्व इत्युच्यते । किं तर्हि । शब्दव्यवहार एवायमर्थप्रत्यायनार्थं ईदृशक्रियानिरपेक्ष एव । यत्किंचित्तृन्द्यादविशेषेण तत्सर्वं तर्दनक्रियायोगात्तृणमित्येवोच्येत । न चोच्यते । तस्मान्न सर्वाण्याख्यातजानि नामानीति ।

किं चान्यत् । ' अथापि चेत् ' अथापि यदि । ' सर्वाण्याख्यातजानि नामानि स्युः ' तथाप्ययमपरो दोषः स्यात् । आह । कतम इति । उच्यते । ' यावद्भिर्भावैः संप्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यात् ' । ' तत्रैव ' तद्यथा । ' स्थूणा दरशया वा सञ्जनी च स्यात् ' । क्रियाहेतुके हि नामधेयप्रतिलम्भे सति यावद्भिर्भावैर्यावतीभिः क्रियाभिरेकं द्रव्यं संयुज्येत तावद्भ्यो भावेभ्यस्तावतीभ्यः क्रियाभ्यो नामधेयप्रतिलम्भः स्यात् । किं कारणम् । न हि तत्र कासांचिद्व्यावर्तको विशेषहेतुरस्त्यन्यासां वा नियामकः । तत्रैवं सति स्थूणैकैव सती दरे शेते इति दरशया इत्युच्येत । न चोच्यते । तथा च सज्यते तस्यां वंश इति सञ्जनीत्युच्येत । न चोच्यते । एवमनेकानि सत्त्वान्येकक्रियायोगादेकनामानि स्युरेकं वानेकक्रियायोगादनेकनाम । उभयथापि च व्यवहाराप्रसिद्धिः । तस्मान्न सर्वाण्याख्यातजानि नामानीति ॥ १२ ॥

२ भिन्नक्रियायोगादेकमेव द्रव्यं भिन्ननामभिरभिधीयेत

---

१ ग. च. ज. °श्नुवीतेश्व इ°. २ क. ख. घ. झ. ट. ठ. नास्तीति. ३ क. ख. ग. ज. घ. झ. ट. ईदृशः क्रि°. ४ क. ख. घ. झ. ट. ठ. °पेक्षः । एवमेष यत्किं°. ५ क. ख. ग. च. ज. °त्येवमुच्यते. ६ घ. झ. ठ. प्रतिलंभके. ७ घ. झ. ट. ठ. ' तत्र ' नास्ति. ८ ग. ज. व्यावृत्तको. ९ ठ. दर्शया. १० क. ख. घ. झ. ट. ठ. अस्यां. ११ घ. झ. ट. ठ. ' च ' नास्ति. १२ क. ख. १; ग. १६; च. ज. घ. झ. ट. अङ्को नास्ति; ठ. १२ ' इति निरुक्तव्याख्यायां द्वादशः खण्डः १२.

अथ पञ्चमः पादः ।

---

**अथापि य एषां न्यायवान्कार्मनामिकः संस्कारो यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्पुरुषं पुरिशय इत्याचक्षीरन्नष्टेत्यश्वं तर्दनमिति तृणमथापि निष्पन्नेऽभिव्याहारेऽभिविचारयन्ति प्रथनात्पृथिवीत्याहुः क एनामप्रथयिष्यत्किमाधारश्चेत्यथानन्वितेऽर्थेऽप्रादेशिके विकारे पदेभ्यः पदेतराधान्संचस्कार शाकटायन एतेःकारितं च यकारादिं चान्तंकरणमस्तेः शुद्धं च सकारादिं चाथापि सत्त्वपूर्वो भाव इत्याहुरपरस्माद्भावात्पूर्वस्य प्रदेशो नोपपद्यत इति तदेतन्नोपपद्यते ॥ १३ ॥** ५ १०

'अथापि' चैतदन्यत्स्याद्यदि सर्वाण्याख्यातजानि नामानि स्युः । आह । किमिति । उच्यते । 'य एषां न्यायवान्कार्मनामिकः संस्कारो यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्' । एषां पुरुषाश्वादिनाम्नां न्यायवान् लक्षणन्यायेन युक्तः । आह कः पुनरसाविति । उच्यते । कार्मनामिकः संस्कारः । कर्मकृतं नाम कर्मनाम । तत्पुनः पाचकलावकादि । तस्मिन्भवः कार्मनामिकः संस्कारः । किंच । यथा चापि प्रतीतार्थानि स्युः प्रतीतक्रियाणि स्युस्तथैव तान्याचक्षीरन् जनाः । आह । कथं पुनराख्यायमानान्येतानि न्यायवता कार्मनामिकेन संस्कारेणोपेतानि स्युः कथं वा प्रतीतक्रियाणीति । उच्यते । 'पुरुषं' तावत् 'पुरि शय इत्याचक्षीरन्' । पुरि ह्यसौ शेते इति पुरिशयः प्राप्नोति । एवमसौ न्यायवता कार्मनामिकसंस्कारयुक्तेन शब्देनोक्तः स्यात् । एवं चैव प्रतीतक्रियः शब्दो भवति । एवमिव 'अष्टा इत्यश्वं' आचक्षीरन् । अश्नोति ह्यसावित्यष्टा प्राप्नोति । एवमेव तृन्द्यतेऽनेनेति 'तर्दनमिति तृणं' आचक्षीरन् । न चैवमाचक्षते । न चासति कारणे विद्यमाना क्रिया परीक्षीकर्तुं न्याय्या । तस्मान्न सर्वाण्याख्यातजानि नामानीति । १५ २० २५

---

१ छ. चान्तः क'. २ क. ख. द. २; छ. त. १७; ठ. अङ्को नास्ति. ३ च. तथापि; ठ. अथापीति । अथा°. ४ घ. ट. वारि. ५ ग. ज. य एशां. ६ च. कर्मनामिकः. ७ च. °राख्यायनामानि. ८ क. ख. घ. झ. ट. शेते पुरिशय इति प्रा°. ९ च. 'अश्नोति०तृणमाचक्षीरन्' नास्ति.

'अथापि' इदमपरमप्राप्तं कुर्वन्ति ते शाकटायनादयः । किम् । 'निष्पन्नेऽभिव्याहारेऽभिविचारयन्ति प्रथनात्पृथिवीत्याहुः । क एनामप्रथयिष्यदिति' । निष्पन्ने । कस्मिन् । अभिव्याहरणमभिव्याहारः । तस्मिन्नभिव्याहारे ततः पश्चादाभिमुख्येन स्थित्वा तस्याभिधानस्य
५ ततो विचारयन्ति कतमस्य धातोरत्र रूपमिति । आह । यथा[3] किमिति । उच्यते । तद्यथा । प्रथनात्पृथिवीत्याहुस्ते शाकटायनादयः । आह । ततः किमिति । उच्यते । तत्र वयं पृच्छामस्तान्यदीयं स्वभावत एव पृथिवी नाभविष्यत्ततः क एनामपृथिवीं सतीमप्रथयिष्यत् । कोऽस्याः प्रथनमकरिष्यदित्यभिप्रायः । अथापि कश्चिदस्या अपृथिव्याः सत्या.
१० प्रथनकर्ताऽभ्युपगम्येत ततोऽपि च वयमिदमपरं पृच्छेमं 'किमाधारश्चेति' । चशब्दः समुच्चयार्थः । सर्वस्य हि प्राणिजातस्येयमेवाधारः प्रतिष्ठा । अथ पुनर्यदेयमप्रथितासीत्तदा योऽस्याः प्रथयिता स किमाधार आसीत् । न ह्यनाधारेणाप्रतिष्ठितेन शक्येयं प्रथयितुम् । स चाधारो नास्तीति प्रथनक्रियाभावः । प्रथनक्रियाभावे च सति क्रियाजान्येवमादीनि नामा-
१५ नीत्येतदयुक्तम् । तस्मान्न सर्वाण्याख्यातजानि नामानीति ।

'अथ' अपीदमपरमप्राप्तं शाकटायनः कृतवान् । आह । किमिति । उच्यते । 'अनन्वितेऽर्थे' इत्येवमादिर्दोषः ।

आह । वेदाङ्गानामेकैकमनेकप्रभेदम् । तद्यथा । निरुक्तं चतुर्दश[6]प्रभेदम् । व्याकरणमष्टप्रभेदम् । तत्र केषांचिन्नैरुक्तानां कैश्चिद्वै-
२० याकरणैः साकं केषुचिच्छब्देष्वैकमत्यं केषांचिद्वैमत्यम् । तत्र शाकटायनो नैरुक्ताश्च गार्ग्यवर्जं कानिचिदभिधानान्यनेकैर्धातुभिरनुविदधति कानिचिदेकेनैव । किं कारणम् । प्रतिनियतो हि[7] स्वेषु स्वेषु व्याकरणेषु शब्दानुविधानस्य[8] समयः । तद्यथा । पाणिनीया भू इति प्रकृतिमुपादाय लडित्येतं प्रत्ययमुपाददते । ततः कृतानुबन्धलोपस्यानच्कस्य लस्य
२५ स्थाने तिबादीनादिशन्ति । तथाहि ते तं शब्दमनुविधातुं शक्नुवन्ति । स[10] हि तेषां शब्दानुविधानोपायः पाणिनिना परिक्लृप्तः । सैषा शब्दानुविधा[11]नत-

१ ग. ज. यथापि. २ व. ट. ठ. रेऽतिविचा°. ३ च. 'यथा' नास्ति; ठ. तथा. ४ च. °यिष्यत. ५ क ख. घ. झ. ट. ठ. पृच्छामः. ६ ग. ज. °र्दशभेद°. ७ ग. ज. °हि स्वेषु कारणेषु शब्दा°. ८ क. घ. झ. ट. ठ. विधानसमयः. ९ च. लोथस्या°. १० घ. झ. ट. ठ. न हि°. ११ क. ख. घ. झ. ट. ठ. विधाने
३१ तंत्र°.

न्त्रशीली[1]त्येतदेवैकं प्रयोजनं मुक्त्वा नान्यत्प्रयोजनमस्ति लडादीनामनुबन्धा-
नामध्ययने लोपे च । अपरे पुनर्वैयाकरणा लटमकृत्वैव तिबादीनेवोपाददते ।
तेषामपि हि शब्दानुविधाने सा तन्त्रशीली । एवं प्रतिनियतया[2] स्वया[3]
स्वया तन्त्रशील्या[4] भवतीत्येवमादिसमानमेव शब्दरूपं साधयन्ति । तत्रैवं
शब्दानुविधानोपायविप्रतिपत्तौ सत्यां शाकटायन आचार्योऽनेकैश्च धातु-
भिरेकमभिधानमनुविहितवानेकेन चैकमेव । तत्र यदनेकैरनुविहितवांस्त-
दितरैर्गार्ग्यपाणिन्यादिभिर्न मृष्यते । किं कारणम् । अप्रसिद्धो हि स
तेषां शब्दानुविधानमार्गो धातुसमुदायमात्रमेव नामेति । यतस्ते शाकटा-
यनमाचिक्षिप्सन्त[5] आहुः ' अथानन्वितेऽर्थे ' इति । अनन्वितेऽर्थेऽननुगते
शब्देनार्थे । यत्र प्रतार्यमाणोऽपि[6] शब्दोऽर्थमनुगन्तुं न शक्नोति । एवं
धातुजोऽसमर्थो भवति । ' अप्रादेशिके च विकारे ' । यया हि क्रियया
तद्द्रव्यं प्रदिश्यते[7] तदभिधायको यो धातुः स तदभिधानं विगृह्यमाणं
विकर्तुं न शक्नोति यत्र[8] तत्र हीयमानप्रतिज्ञः शाकटायनः सर्वाण्याख्या-
तजानि नामान्युपपादयिष्यन्नसंभवे सति काशकुशावलम्बनमिव कुर्वन्कि-
मकरोदिति । ' पदेभ्यः पदेतरार्धान्त्संचस्कार शाकटायनः ' । पदेभ्य
आख्यातपदेभ्यः समस्तेभ्योऽवयवानुपादाय पदेतरार्धानन्यांश्चान्यांश्चे-
तरेतराख्यातपदावयवैरन्यैश्चान्यैश्चान्यमर्धं[9] नाम्नः संस्कृतवान् । तद्यथा। सत्यमि-
त्येतदभिधानं संचस्कार । कथम् । ' एतेः कारितं च यकारादि चान्तकर-
णमस्तेः शुद्धं च सकारादिं च ' । एतेः इण्गतौ [ धा० २ । ३५ ]
इत्यस्य कारितान्तं[10] ण्यन्तं रूपं कृत्वा ततो यकारमन्तमादाय मकारान्तं
कृत्वा सत्यशब्दस्यान्त्यमर्धं संचस्कार । ततो यमिति भवति । अस्तेः शुद्धं च।
अस्[11] भुवि [ धा० २ । ५५ ] इत्येतस्य शुद्धमेव रूपं कृत्वा नकारिता[12]-
न्तमित्यर्थः । ततः सकारादिशब्दरूपं गृहीत्वा सदित्येतत्सत्यमित्ये-
तस्य शब्दस्यादिमकरोत् । आद्यमर्धं संचस्कार । तत्सदिति भवति । अत्र
योऽयमस्तेस्तकारः स यकारमधिरोहति । एवमेतदेकमभिधानं द्वयोर्धात्वोः

१ ठ. तन्त्रशैली°. २ व. झ. ठ. प्रातिनियतया°. ३ घ. झ. ट ठ. ' स्वया ' सकृदेव. ४ ठ. तन्त्रशैल्या. ५ घ. झ. ट. ठ. च. आचिक्षिप्स्यन्तः. ६ क. ख. संस्कार्यमाणोऽपि. ७ च. प्रविश्यते; ठ. प्रतिदिश्यते. ८ घ. झ. ट. ठ. ' तत्र ' नास्ति. ९ घ. झ. ट. ठ. °श्चान्यदन्यदर्धं. १० ठ. कारितं. ११ ग. च. ण. असु. १२ घ. झ. ट, ठ. तकारि°.

संचस्कार । सत्यमिति भवति । अथ कोऽर्थः । सन्तमर्थमाययति प्रत्याययति गमयतीति सत्यम् । कारितं च यकारादिं च शुद्धं च सकारादिं चेतीतरस्माच्चेतरस्माच्चेतरं चेतरं चार्धमिति समुच्चयार्थाश्चकाराः । एवं पदेभ्यः पदेतरार्धान्संचस्कार शाकटायनः । तदेतदन्याय्यं कृतवान् । को हि नाम पदं विभज्यानेकधातुजं कुर्यात् । तदेतदकृतपूर्वमन्यैर्विद्वद्भिः शाकटायनोऽतिपाण्डित्याभिमानादकरोद्यदभिन्नपदानि । अपि चोपजायते नः शङ्का । यथासौ पुष्टो नासौ पदेषु स्थास्यति । अवश्यमसौ वर्णानपि भेत्स्यत्यनेकार्थांश्च कल्पयिष्यति । यो हि पदान्यभिनत्तस्य वर्णभेदे विशेषहेतुः को भविष्यति । तस्मादतिप्रसङ्गदोषोपपत्त्या नानेकधातुजानि नामानि नापि सर्वाण्याख्यातजानीति ।

' अथापि ' अयमपरो दोषः प्रसज्येत । कतमः । ' सत्त्वपूर्वो भाव इत्याहुः ' अभियुक्तास्तद्विदः । सत्त्वं पूर्वमस्मात्सोऽयं सत्त्वपूर्वः । किं कारणम् । सत्त्वाश्रय एव ह्यसौ । तत्रैवं सत्यपरकालीनेन भावेन क्रियया पूर्वोत्पन्नस्य सत्त्वस्य ' प्रदेशः ' प्रदेशनं संज्ञाप्रतिलम्भो ' नोपपद्यते ' । किं कारणम् । उत्पत्तिसहभूता हि सा । स्वेनाभिधानेन क्रियानिरपेक्षेणाभिसंबद्धमेव द्रव्यमुत्पद्यते नित्यसंबद्धौ हि शब्दार्थाविति । ' तदेतत् ' सर्वथा सर्वाण्याख्यातजानि नामानीति शाकटायनमतं नोपपद्यते । तदनुपपत्तावस्मत्पक्षसिद्धिः कानिचिदाख्यातजानि नामानि कानिचिदनाख्यातजानीति । अथ शक्यते प्रत्यवस्थातुं प्रत्यवस्थीयतामिति परिसमाप्तो गार्ग्यपक्षः ॥ १३ ॥

---

१ घ. यकारादिं इतरस्माच्चेतरस्माच्च शुद्धं च सकारादिं चेति इतरं चेतरं°; ठ. यकारादिं इतरस्माच्च च शुद्धं च सकारादिं चेति (इतरस्माच्चेत˘) इतरं चेतरं° रस्माच्च; ठ. एतैः कारितं च यकारादिं च. २ ग. ज. °तरस्याप्येतरं चार्ध°. ३ क. ख. घ. झ. ट. ठ. प्रवृत्तो°. ४ क. ख. घ. झ. अपि चासौ; ट. अपिचासौ° अवश्यमसौ पाठः. ५ क. ख. घ. झ. ठ. वर्णभेदे; ट. वर्णभेदे° र्णा. ६ क. ख. घ. झ. ट. °ख्यातजानि नामानीति. ७ म. ज. °भूता सा हि. ८ ठ. प्रत्यक् स्थातुं. ९ ठ. प्रत्यक् स्थी°. १० क. ख. ग. च. ज. घ. झ. ट. अङ्को नास्ति; ढ. ॥ १३ ॥ इति निरुक्तव्या० त्रयोदशः खण्डः । शाक°.

अथ षष्ठः पादः ।

---

यथो हि नु वा एतत्तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां सर्वं प्रादेशिकमित्येवं सत्यनु-[1]पालम्भ एष भवति यथो एतद्यः कश्च तत्कर्म कुर्यात्सर्वं तत्सत्त्वं तथाचक्षीरन्निति पश्यामः समानकर्मणां नामधेयं[2]प्रतिलम्भमेकेषां नैकेषां यथा तक्षा परिव्राजको जीवनो भूमिज[3] इत्येतेनैवोत्तरः प्रत्युक्तो यथो एतद्यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति सन्त्यल्पप्रयोगाः कृतोऽप्यैकपदिका[4] यथा व्रततिर्दमूना[5] जाटय आट्नारो जागरूको दर्विहोमीति यथो एतन्निष्पन्नेऽभिव्याहारेऽभिविचारयन्तीति भवति हि निष्पन्नेऽभिव्याहारे योगपरीष्टिः प्रथनात्पृथिवीत्याहुः क एनामप्रथयिष्यत्किमाधारश्चेत्यथ वै दर्शनेन पृथुरप्रथिता चेदप्यन्यैरथाप्येवं[6] सर्व एव दृष्टप्रवादा उपालभ्यन्ते यथो एतत्पदेभ्यः पदेतरार्धान्त्संचस्कारेति योऽनन्वितेऽर्थे संचस्कार स तेन गर्ह्यः[7] सैषा पुरुषगर्हा न शास्त्रगर्हा[8] इति यथो एतदपरस्माद्भावात्पूर्वस्य प्रदेशो नोपपद्यत इति पश्यामः पूर्वोत्पन्नानां सत्त्वानामपरस्माद्भावान्नामधेयप्रतिलम्भमेकेषां नैकेषां यथा बिल्वादो लम्बचूडक[9] इति बिल्वं भरणाद्वा भेदनाद्वा॥ १४॥[10]

[11]इति प्रथमाध्यायस्य चतुर्थः पादः ॥

---

शाकटायनपक्षेणेदानीमेतान्दोषान्प्रतिसमाधास्यामस्तदर्थमिदमारभ्यते[12] ' यथो हि नु वा एतत् ' इति । यथेति वाक्योपादाने । यथा येन प्रकारेण । उकारोऽवधारणार्थः । व्याख्यातमेतत् ' अथाप्युकार एतस्मिन्ने-

---

१ छ. सत्यमुपा°. २ छ. नामधेयःप्र°. ३ ठ. भूतिज°. ४ छ. त. द. °तोऽप्येकप°. ५ छ. व्रजति°; त. व्रजंति° त. ६ क. ख. द. °प्यन्यैः ॥ ३ ॥ अथ;° छ. त. °प्यन्यैः ॥ १८ ॥ अथा°. ७ क. ख. छ. त. गर्हः. ८ क. ख. छ. त. द. ' न शास्त्रगर्हा' इति नास्ति. ९ छ. त. चूलक; द. चूडक° ल. १०·क. ख. द. ४; छ. त. १९. ११ ङ. थ. ध. त. द. ठ. ' इति पादः ' नास्ति. १२ ग. °भ्यते ॥ १७ ॥ यथा°.

वार्थे उत्तरेण ' ( निरु० १ । ९ इति )। येनैव प्रकारेण प्रसिद्धमाचार्ये-
णाख्यातजत्वं प्रतिषिद्धं नाम्नस्तेनैव प्रकारेण प्रत्यनुभाष्य समीकरिष्या-
मीति । हीत्यसूयायां ' कथं हि व्याकरिष्यति ' ( निरु० १ । ५ )
इति । नु इत्येष हेत्वपदेशे । वै इत्ययं यथोक्तपूर्वपक्षोपदेशार्थः । येनैव
५ प्रकारेणासमर्था हेतव उक्तास्तेनैव प्रकारेण प्रत्यनुभाष्य प्रतिवक्तृधर्मेण
समीकरिष्यामः । यत्त्वयैतदुक्तम्[1] । किमिति । ' तद्यत्र स्वरसंस्कारौ समर्थौ
प्रादेशिकेन गुणेनान्वितौ स्याताम् ' इति । आह । तत्र किमिति । उच्यते ।
तदेतत्प्रत्युच्यत इत्युपयुक्तस्तच्छब्दः । आह । केन[2] प्रकारेण प्रत्युच्यत
इति । उच्यते । ' सर्वं प्रादेशिकमित्येवं सत्यनुपालम्भ एष भवति ' ।
१० सर्वमेव प्रादेशिकं सर्वमेव क्रियाजं नाम । आह । ततः किमिति ।
इत्येवं सत्यनुपालम्भ[3] एष भवति । आह । कथम् । शृणु । प्रदेशवा-
चिनो धातूँ[4]नुत्प्रेक्ष्य तदाश्रयौ स्वरसंस्कारौ यावद्गम्यमनुविधेयौ । विम्बी हि
लक्षणगतिः । नैष शब्दापराधो नाप्यस्माकम् । भवत एवायम[5]पराधो
मन्दशिक्षितत्वाद्येनानुविधातुं स्वरसंस्कारौ विद्यमानावपि प्रदेशवाचिनि
१५ धातौ न शक्नोषि । स त्वं तावत्पुनः पुँ[6]नः शिक्षस्वान्यद्व्याकरणं यावच्छक्ति-
स्तँ[7]वानुविधातुमिति । व्याकरणेऽप्यष्टधाभिन्ने लक्षणैकदेशो[8] विक्षिप्तः ।
कश्चित्सौत्रो विधिः[9] । कश्चित्तुशब्दचशब्दवाशब्दातिरिक्ता[10]भिव्या-
हारयोगविभागादिगम्यः । तद्यथा मतान्तरेष्वप्यभिन्नेषु कश्चित्क्वचिद्विधि-
रुच्यते ते[11] च सर्व एव प्रयोगमिच्छता प्रयोगकाल उपसंहर्तव्या एवमिहा-
२० पि सर्वाण्येव लक्षणशास्त्राण्यपेक्ष्याणि स्वर[12]संस्कारसिद्धय इति । स त्वं ताव-
च्छिक्षस्वानिर्विण्णो यावदखिलशब्दानां स्वरसंस्कारावनुविधातुमुपजातं[13]
सामर्थ्यमिति ।

---

१ क. ख. घ. झ. ट. ढ. यथैतदुक्तं; च. यथेत्वयै°. २ क. ख. घ. झ. ट. ढ.
केन पुनः प्र°. ३ ग. सत्यमुँपा° नु. ४ क. ख. ग. ज. घ. झ. ढ. °चिन आख्या-
२५ तानुत्प्रे°; च. °चिनः धातून्पाठः । आख्यातानुत्प्रे°; ट. °चिनं आख्यातानु° नो
धातू. ५ घ. ट. °वायं त्वं अप°; ढ. °वायं त्वा°. ६ घ. ट. ' पुनः ' सकृदेव.
७ ग. ज. °क्तिस्तावानुविधा°. ८ क. ख. घ. झ. लक्षणैरेकदे°; ग. ज. लक्षणैक-
दे°; ट. लक्षणैरेकदे° कै. ९ क. ख. धातुः; घ. धाविधितुः; झ. धाविधातुः; ट. धावि-
धिः तुः. १० क. ख. °रिक्ताध्याहारविभा°; ग. ज. °रिक्ताव्याहारयोगविभा°; घ. झ.
ट. ढ. °क्ताध्याहार°. ११ घ. ट. ' ते ' नास्ति. १२ क. ख. घ. झ. ट. ढ. °पेक्ष्या-
ण्यखिलस्वर°; ग. ज. अखिलसंस्कारसिद्धयेभिस्वरसंस्कारे वा; च. अखिलस्वर-
३२ संस्कार इति पाठः । स्वरसंस्कार°. १३ क. ख. घ. झ. ट. ढ. उपज्ञातुं.

'यथो एतत्' यत्पुनरेतदुक्तं यः कश्च तत्कर्म कुर्यात्सर्वं तत्सत्त्वं तथाचक्षीरन्नित्यनेकेषामेकक्रियायोगादेकनामता प्रसज्येतेत्यत्र ब्रूमः । न हि प्रसज्यंते । त्वमपि पश्यसि वयमपि च 'पश्यामः समानकर्मणां' तुल्यकर्मणामपि सतां कर्मकृत—'नामधेयप्रतिलम्भमेकेषां नैकेषां यथा तक्षा परिव्राजको जीवनो भूमिज' इति । तक्षन्कश्चित्तक्षेत्युच्यते । अन्यस्तक्षन्नपि न तक्षेत्युच्यते । आह । कोऽत्र हेतुरिति । शृणु । लोकमेव पृच्छ तमेवोपालभस्व न मयैव नियमः कृत इति । अथ च तद्यथा समानमीहमानानां कश्चिदेवार्थेन संयुज्यते कश्चिन्न । न चेदानीमेकोऽर्थेन संयुज्यत इत्यन्यैरपि संयोक्तव्यमेकेन वा लब्धमित्यन्यैरपि लब्धव्यम् । स्वभावतो हि शब्दानां क्रियाजत्वेऽपि सति कांचिदेव क्रियामङ्गीकृत्यावस्थितिर्भवतीति । अथवा क्रियातिशयकृतो नियमः स्यात् । यो हि यदतिशयेन करोति तस्यानेकक्रियावत्त्वेऽपि सति तद्धेतुक एव नामधेयप्रतिलम्भो भवति । अयं समाधिः । अथवा न ब्रूमो यो यत्र यदा च तक्षति

---

१ घ. ट. यथा एव तत्. २ घ. झ. ठ. °नरुक्तं; ट. °नरुक्त° रेतदुक्तं सर्वं पाठः. ३ ग. च. ज. 'यः कश्च तत्कर्म कुर्यात' नास्ति. ४ ठ. प्रसज्जेते°. ५ ठ. प्रसज्जते. ६ क. ख. घ. झ. ट. ठ. कर्मकृतां. ७ क. ख. ग. च. ज. °पालम्भस्व; ठ. तमेव्यालभस्व. ८ क. ख. कश्चिन्न वेदादीनाम्, एकोऽर्थेन संयुज्यत इति अन्यैरपि संयुक्तः, सत्यमेकेन चालब्धम् । स्वभा°; ग. ज. कश्चिन्न वेदानीमेकोऽर्थेन संयुक्त इति अन्यैरपि संयुक्तः सत्यमेकेन वालब्धं स्वभा°; घ. कश्चिन्न चेदानी एकोऽर्थेन संयुज्यत इति अन्यैरपि संयुक्तं सत्यमेकेन वा लब्धं । स्वभा°; झ. कश्चिन्न वेदानीं एकोऽर्थेन संयुज्यत इति अन्यैरपि संयुक्तं सत्यमेकेन वा लब्धं स्वभा°; ट. कश्चिन्न चेदानी (वेदादीनां पाठः) एकोऽर्थेन संयुज्यत इति अन्यैरपि संयुक्तः सत्यमेकेन वा लब्धं °न चेदानीं एकार्थेन संयुक्त इत्यन्यैरपि संयोक्तव्यं । एकेन वा लब्धं अन्यैरपि लब्धव्यं॰इति वा पाठः; च. कश्चिन्न । वेदादीनामेकोर्थेन संयुज्यत इति अन्यैरपि मेकेन वा लब्धं । न च इदानीं एकोऽर्थेन संयुक्त इत्यन्यैरपि संयोक्तव्यं एकेन वा लब्ध न्यैरपि लब्धव्यं । इति पाठः शुद्धः; ठ. कश्चिनन्वेदानीमेकोर्थेन संयुक्त इति अन्यैरपि संयोक्तव्यं एकेन वा लब्धमन्यैरपि लब्धव्यं चेदानीमेकोर्थेन संयुज्यत इति अन्यैरपि संयुक्तं सत्यमेकेन वा लभ्यत इति अन्यैरपि लब्धं स्वभा°. ९ ठ. भवतीति. १० ग. ज. चक्षति.

स एव तक्षेति[1]। किं तर्हि। यो यदा यत्र तक्षा भवति स एव तक्षति। तदेतल्लक्षणमानियतं[3] काममन्येष्वप्यस्तु। कदाचित्[2]क्वचित्तेषामप्यन्याः क्रिया नियततराः सन्ति यद्धेतुको नामधेयप्रतिलम्भ इति। तेषां तु तक्षानियमतस्तक्षतीति विशेषः। जीवन इक्षुरसः शाकजातिर्वा। भूमिजोऽङ्गारको
५ वृक्षो वा।

'एतेनैवोत्तरः प्रत्युक्तः'। आह। कतमः। 'यावद्भिर्भावैः संप्रयु[4]ज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यात्' [ निरु० १। १२ ] इत्येषः[5]। पश्यामोऽनेकक्रियायुक्तानामप्येकक्रियाकारितो[6] नामधेयप्रतिलम्भः। तद्यथा। तक्षा परिव्राजक इत्येतान्येवोदाहरणानि। तक्षा ह्यन्यान्यपि कर्माणि
१० करोति। न पुनस्तस्य[7] तत्कृतो नामधेयप्रतिलम्भोऽस्ति। तत्र यदुक्तमेकस्यानेकक्रियायोगादनेकनामता प्रसज्येतेत्येतदयुक्तम्। न हि प्रसज्येत[8]। यदि[9] चोक्तमनेकेषामेकनामतैकस्य चानेकनामता प्राप्नोति ततश्च व्यवहाराप्रसिद्धिरिति न हि तदुभयमस्ति। अनेकेषामेकक्रियायोगेऽपि हि सत्येकस्य चा[10]नेकक्रियायोगेऽपि हि सति व्यवस्थित एव शब्दनियमः स्वभावत
१५ एव लोके। तस्मान्न व्यवहाराप्रसिद्धिदोषोऽस्ति। तत्र यदुक्तं व्यवहाराप्रसिद्धिदोषप्रसङ्गान्न सर्वाण्याख्यातजानि नामानीत्येतदयुक्तम्[11]।

'यथो एतत्' यत्पुनरेतदुक्तं[12] 'यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति' अत्र ब्रूमः। शब्दस्वाभाव्यमेतद्यन्न तथा सर्वाण्याख्यायन्ते यथा यथा प्रतीतार्थानि भवन्ति। न तत्राहमपराध्ये भवतो
२० नापि शास्त्रम्। यथावस्थितानां हि शब्दानामन्वाख्यानमात्रमेव क्रियते। नाहं शब्दानां कर्ता। य एषां प्रयोक्तारस्ताननुपालभस्व[13]। निराकुरु वा यदि शक्नोषि।

---

१ क. ख. ग. ज. घ. झ. ट. ठ. तक्षोति. २ ठ. 'कदाचित्' नास्ति. ३ घ. झ. ट. लक्षणानियः°; ठ तक्षानियतः. ४ घ. झ. ट. संयुज्येत. ५ च. 'स्यादि
२५ त्येषः......क्रियाकारितो नामधेयप्रतिलम्भः' नास्ति. ६ ठ. क्रियाकृतो नाम°. ७ ठ. पुनस्तत्र तत्कृतो°. ८ ठ. प्रसज्जेत. ९ ठ. यच्चोक्त°. १० घ. झ. ठ. ठ. वानेक°. ११ ग. च. ज. °दयुक्तमिति. १२ घ. झ. ट. 'एतत्' नास्ति. १३ क. ख.
२८ घ. झ. ठ. ठ. °स्तानेवोपालभस्व.

आह । कस्मात्पुनः कानिचिदाख्यायन्ते लोके । तदभिधानस्वाभाव्यमेव । कानिचित्प्रतीतार्थानि कानिचिदप्रतीतार्थानि । तान्यपि शास्त्रेण प्रतीतार्थान्येव कर्तव्यानि । एतदेव शास्त्रस्य शास्त्रार्थत्वम्[1] । यदप्रतीतार्थान्यपि प्रकृत्यादिना[2] 'प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति' आख्यायन्त एव कानिचित्कानिचिच्छास्त्रेण प्रतीतानि क्रियन्ते । रूढ्यनुविधायित्वाल्लक्षणशास्त्रस्य गुणतस्तेषु लक्षणम् । अपि च । 'सन्ति' एव अल्पप्रयोगाः प्रतीतार्थक्रिया अपि केचित्कृत्प्रत्ययान्ताः शब्दा 'ऐकपदिकाः[3]' एकपदप्रकरणान्तर्वर्तिनस्तद्धर्माणः । तत् 'यथा व्रततिर्दमूना जाट्य आट्णारो जागरूको दर्विहोमीति' । व्रततिर्व्रीणातेः । वल्ली । दमूना दममना वेत्येवमादि[4] । अग्निरतिथिर्वा । जाट्यः जटावान् । आट्णारः अटनशीलः । जागरूकः जागरणशीलः । दर्विहोमी[5] दर्व्या जुहोतीति । एवं प्रतीतार्थान्यपीति[6] शाकटायनाभिप्रायः । तत्र यदुक्तं न सर्वाण्याख्यातजानि नामानीत्येतदयुक्तम् ।

प्रतीतार्थक्रियाणां नाम्नामुदाहरणानि

'यथो एतत्' यत्पुनरेतदुक्तं 'निष्पन्नेऽभिव्याहारेऽभिविचारयन्तीति' अत्र ब्रूमः । युक्तं[7] ते कुर्वन्ति । 'भवति हि निष्पन्नेऽभिव्याहारे योगपरीष्टिः[8]' । योगपरीष्टिर्नाम योगस्य परीक्षणम् । कथं[9] चानुत्पन्नः सन्नभिधानयोगः परीक्ष्येत[10] । तत्र यदुक्तं 'प्रथनात्पृथिवीत्याहुः क एनामप्रथयिष्यत्किमाधारश्चेति' । न वयमेवं ब्रूमः प्रथितेयं केनचिदतः पृथिवीयमिति । आह । कथमियमप्रथिता सती पृथिवीत्वमापेति । उच्यते । 'अथ[11] वै दर्शनेन पृथुरप्रथिता चेदप्यन्यैः' । दृश्यमाना हीयं पृथिवी । तस्माद्यद्यप्यप्रथिता कैश्चिदन्यैस्तथापीयं पृथुदर्शनक्रियायोगात्पृथिव्येव । तत्र यदुक्तं 'क एनामप्रथयिष्यत्किमाधारश्चेति' एतदयुक्तम् ।

निष्पत्त्यनन्तरं वस्तुनो नाम्ना व्यवहारः

पृथुत्वदर्शनात्पृथिवी

१ क. ख. झ. शास्त्रत्वं. २ च. प्रकृत्यादीना; झ. प्रकृत्यादीनिः. ३ च. एक°. ४ च. °मादिः. ५ क. ख. घ. झ. ट. ठ. °होमीति. ६ क. ख. ग. च. ज घ. झ. ट. 'इति' नास्ति. ७ ग. ज. 'युक्तं ते कुर्वन्ति' नास्ति ८ च. °परिष्टिः. ९ ग. घ. झ. ट. ठ. कथं वानु°. १० ग. ज. घ. झ. ट. ठ. परीक्षेत. ११ च. 'अथ वै' नास्ति.

अन्यथापि हि धात्वर्थ उपपद्यत एव । तत्रैवं सति यथा न विरोत्स्यते तथा निर्वक्ष्यामः । तस्मादविरुद्धः शाकटायनाभिप्रायः[1] ।

*दृष्टप्रवादे नोपालम्भार्हता*

'अपि' च यदि दृष्टेऽप्यस्याः पृथुत्वे वयमुपालभ्यामहे[2] ननु 'एवं' सति 'सर्व एव दृष्टप्रवादा उपालभ्यन्ते'[3] न केवलमहमेव । यो यद्दृष्ट्वा ब्रवीति स तत्र दोष एव । तथा सति दृष्टहानं प्रसज्येत[4] । अनिष्टं चैतत् । तस्मात्पृथुदर्शनात्पृथिवीत्युपपद्यते[5] ।

*अनेकैर्धातुभिर्नाम्नो व्युत्पत्तौ न कोऽपि दोषः*

'यथो एतत्[6]' यत्पुनरेतदुक्तं 'पदेभ्यः[7] पदेतरार्धान्तसंचस्कारेति' अत्र ब्रूमः । 'योऽनन्विते' शब्देनानभिधेये 'अर्थे' अननुगतमसंबद्धं 'संचस्कार स तेन' असमञ्जसेनासंबद्धेन संस्कारेण 'गर्ह्यो' गर्हणीयो न पुनराचार्यो योऽनुगमय्य धातुभिरनेकैरेकाभिधानगतानर्थांस्ततः संचस्कार नैव मौढ्येन ।

'सैषा' तदभिप्रायापरिज्ञानात् 'पुरुषगर्हा' । पुरुषो हि कश्चिदशिक्षितत्वादेकधातुजमपि न जानाति किमुत बहुधातुजम् । अपि च सन्ति लोके तादृशाः पुरुषा ये कारकहारकादीन्यपि प्रकटक्रियाणि सन्ति कतमेभ्यो धातुभ्य एतान्यभिनिष्पद्यन्त[8] इति न जानते । एष पुरुषदोषो न शास्त्रदोषो यदनुगमयितुं धातुशब्दैरर्थो न शक्यते । तत्र यदुक्तं '[9]अनन्वितेऽर्थेऽप्रादेशिके विकारे पदेभ्यः पदेतरार्धान्तसंचस्कार शाकटायनः' इति तदयुक्तम् । अनुगत एवार्थे संचस्कार शाकटायनः । सन्तमेव ह्यर्थमाययति गमयतीति सत्यम् । तस्मादुपपद्यत एव शाकटायनमतम् ।

अपि च [10]रूढिशब्दव्युत्पत्तिर्मन्त्रेष्वपि दृश्यते । यथा च[11] लक्ष्यं[12] तथा च[11] लक्षणं प्रवर्तितुमर्हति । इतरथा हि कस्य[13] तल्लक्षणं स्यात् । 'यदसर्प-

१ क. ख. °प्रायः ॥ ३ ॥ अपि°. २ ग. °भ्यामहे । १८ । ननु°. ३ च. उपलभ्यंते. ४ ठ. प्रसज्जेत. ५ क. ख. घ. झ. ट. ठ. °त्युच्यते. ६ घ. झ. ट. ठ. 'एतत्' नास्ति. ७ घ. झ. ट. पदेभ्यः पदेभ्यः पदे°. ८ घ. झ. ट. ठ. °निष्पद्यंते. ९ क. ख. ग. ज. 'अनन्विते० तदयुक्तम्' नास्ति. १० ग. व्यूढिश°. ११ क. ख. घ. झ. ट. ठ. 'च.' नास्ति. १२ च. लक्षणः. १३ घ. झ. ट. कस्यचिल्लक्षणं

त्तत्सर्पिः ' [ तै० सं० २ । ३ । १० ] इति मन्त्रः । यन्नवमैत्तन्न[1]वनीतमभवत् । [ तै० सं० २ । ३ । १० ]

ताद्दशव्युत्पत्तौ ब्राह्मणो इति मन्त्रः । अपि च ब्राह्मणेनाप्यनेदाहरणम् । कधातुजान्येव कृत्वा निरुच्यन्ते । तत्र मन्त्राभिधानानि यत्परिज्ञाने च फलमुपपद्यते । आह । ' तदेतत्त्र्य[2]क्षर॒ँ हृदयमिति हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद द इत्येकमक्षरं ददन्त्यस्मै स्वाश्चान्ये च य एवं वेद यमि[3]त्येकमक्षरमेति स्वर्गं लोकं य एवं वेद ' [ श० ब्रा० १४ । ८ । ४ । १ बृ० उ० ५ । ३ । १ ] इति । एवं हरतेर्ददातेरेतेर्हृदयशब्दः । तदर्थफलो[4]प्रदर्शनार्थं ब्राह्मणे[5] चैवं निरुक्तः । तच्च नः परं प्रमाणम् । तस्माच्छाकटायनस्तदनुदृश्य सम्यगेव कृतवान्यदनेकैर्धातुभिरेकमभिधानं निरुक्तवानिति ।

' यथो एतत्[6] ' यत्पुनरेतदुक्तं ' अपरस्माद्भावात्[7]पूर्वस्य प्रदेशो नोपपद्यत इति ' अत्र ब्रूमः । ' पूर्वोत्पन्नानां सत्त्वानां

पश्चात्कालीनेन भावेन पूर्वोत्पन्नस्य सत्त्वस्य नामधेयप्रतिलम्भः

नामधेयप्रतिलम्भः ' अपरकालीनादपि सतो भावात् केषांचित् । तत् ' यथा बिल्वादो लम्बचूडक[8] इति ' । पश्चात्कालीनयापि चूडालम्बनक्रियया भविष्यता योगेन बिल्वादनक्रियया च पूर्वोत्पन्नस्य सत्त्वस्य[9] नामधेयप्रतिलम्भ उपपद्यमानो दृष्टः । क चान्यत्र [10]नोपपद्यते । तत्र यदुक्तं ' अपरस्माद्भावात्पूर्वस्य प्रदेशो नोपपद्यत इति ' तदनैकान्तिकत्वादयुक्तम् । उपपद्यत एव हि केषांचिदिति ।

' बिल्वं भरणाद्वा भेदनाद्वा ' । भृतं हि तद्भवति बीजानाम् । बिभर्ति वा दुर्भिक्षादौ भक्ष्यमाणं जनम् । भेदनाद्वा । भिद्यते हि तदवश्यं भक्षणायेति ।

आह । किमिदमतिबाह्वे[11] किमपि पूर्वोत्तरपक्षसंबद्धं नामाख्यातजत्वमाधि-

---

१ घ. झ. ट. यन्नवमेतन्नव°. २ च. तदेतदक्षरं. ३ ग. च. ज. यमिदमित्ये°. ४ क. ख. घ. झ. ट. ठ. °फलोपदर्श:°. ५ क. ख. ग. ज. ब्राह्मणेनैवं. ६ घ. झ. ट. ठ. ' एतत् ' नास्ति. ७ क. ख. घ. झ. ठ. अपरस्मादपि; ट. अपरस्माद° कालिना पाठः. ८ ग. च. ज. लम्बचूलक°. ९ ग. च. ज. सत्त्वनामधे°. १० घ. झ. ट. ठ. ' न ' नास्ति. ११ च. °बह्वेच किं°.

नाम्नामाख्यातजत्वमधिकृत्य किंहेतुकोऽयं वादः

कृत्योक्तमिति । उच्यते । शिष्यबुद्धिवृद्ध्यर्थमेतदुक्तम्[1] । कथं नाम व्युत्पन्नबुद्धिः शिष्योऽप्रतिबध्यमानः सर्वतोमुखानेव लौकिकवैदिकाञ्छब्दान्निर्ब्रूयादिति । सर्वाण्येव हि व्याकरणानि निरु-
५ क्तानि च वेदाङ्गत्वाविशेषात्प्रमाणानि । तेषामिदं फल्गिवदं साध्वित्येतदशक्यं वक्तुमिति[2] ॥ १४[3] ॥

इति निरुक्तवृत्तौ षष्ठाध्यायस्य चतुर्थः पादः[4] ।

---

पञ्चमः पादः ।

१०

---

**अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यतेऽर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशस्तदिदं विद्यास्थानं व्याकरणस्य कात्स्न्र्यं स्वार्थसाधकं च यदि मन्त्रार्थप्रत्ययायानर्थकं भवतीति कौत्सोऽनर्थका हि मन्त्रास्त-**
**१५ देतेनोपेक्षितव्यं नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्त्यथापि ब्राह्मणेन रूपसंपन्ना विधीयन्ते । उरु प्रथस्वेति प्रथयति । प्रोहाणीति प्रोहत्यथाप्यनुपपन्नार्था भवन्ति । ओषधे त्रायस्वैनं स्वधिते मैनं हिंसीरित्याह हिंसन्नथापि विप्रतिषिद्धार्था भवन्ति । एक एव रुद्रोऽवतस्थे न**
**२० द्वितीयः । असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम् । अशत्रुरिन्द्र जज्ञिषे शतं सेना अजयत्साकमिन्द्र इत्यथापि जानन्तं संप्रेष्यत्यग्नये समिध्यमानायानुब्रूहीत्यथाप्याहादितिः सर्वमिति । अदितिर्द्यौरदितिरन्तरिक्षमिति । तदुपरिष्टाद्व्याख्यास्यामोऽथाप्यविस्पष्टार्था भवन्त्यम्यग्याद्दृश्मि-**
**२५ ञ्जारयायि काणुकेति[5] ॥ १५ ॥**

---

१ क. °प्रतिबुध्यमानः; म. ज. न प्रतिबुध्यमानः; च. न प्रतिबध्यमानः-
२ क. ख. तदुक्तमिति; घ. ट. वदुक्तमिति; झ. त्वदुक्तमिति. ३ क. ख. ४; घ. झ. ट ठ. च. ज, अङ्को नास्ति. ४ ग. च, ज. निरुक्तस्य षष्ठा°; ठ. निरुक्तव्या-
२९ ख्यायां षष्ठाध्यायचतु°. ५ क, ख. छ. त. द. °केत्यर्थ°.

'अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते'। एवं नामाख्यातोपसर्गनिपातानां प्रविभागेनावस्थितानामेतस्माल्लक्षणं परिज्ञायते। 'अथापीदमन्तरेण'। अथशब्दोऽधिकारार्थे द्वितीयं शास्त्रारम्भप्रयोजनमधिकरोतीति[1]। अपीति संभावने। अपि पदेषु विभागेनावस्थितेषु लोके वेदे वापि मन्त्रेषु वाक्यभावेनावस्थितेषु यः समस्तार्थस्तस्मिन्प्रत्ययो विशेषावधारणं न विद्यते नास्तीत्यर्थः[2]। अपीदं शास्त्रमन्तरेण पदार्थे प्रत्ययो नास्ति। अपि वाक्यार्थ इत्यभिप्रायः। आह। कः पुनः पदार्थवाक्यार्थयोर्विशेष इति। उच्यते। साकाङ्क्षः पदार्थो निराकाङ्क्षो वाक्यार्थः। तद्यथा गौरित्युक्ते किमित्याकाङ्क्षा भवति ततो गच्छतीत्युक्ते निराकाङ्क्षं भवति। तथा[3] गच्छतीत्युक्ते क इति साकाङ्क्षं भवति तथा गौरित्युक्ते निराकाङ्क्षं भवति। अथेदानीं गौर्गच्छतीति[4] यद्गौर्वाहदोहादिभ्यो व्यावृत्य गमनेऽवतिष्ठते गमनं चान्येभ्यो व्यावृत्य गव्येवावतिष्ठत एष वाक्यार्थः। स एष प्रकरणाविरोधी[5] वाक्यार्थः पदार्थं[6] नियमेन लक्षयति। पदार्थश्च पदलक्षणम्। पदार्थसंनियोगेन[7] हि[8] व्याकरणे पदानां प्रकृतिप्रत्ययादीनि[9] लक्षणानि व्यादिश्यन्ते।

मन्त्रार्थावधारणं निरुक्तादेव

पदार्थवाक्यार्थलक्षणम्

यत एवमतः 'अर्थमप्रतियतो[10] नात्यन्तं स्वरसंस्कारोद्देशः'। अर्थमप्रतियतोऽप्रतिपद्यमानस्यानवधृतार्थस्येत्यर्थः[11]। नात्यन्तं नैकान्तेन[12]। एकान्तं नाम निश्चयः। निश्चयेनेत्यर्थः। किम्। स्वरसंस्कारोद्देशः। स्वरोद्देशश्च संस्कारोद्देशश्च। स्वरावधारणं संस्कारावधारणं च नास्तीति वाक्यशेषः। किं कारणम्। न ह्यनवधृतार्थः स्वरसंस्कारावधारयितुं शक्नुयात्। अर्थवशेन हि स्वरसंस्काराववतिष्ठेते। 'तदिदं'

स्वरसंस्कारावधारणमर्थज्ञानादेव

५ १० १५ २०

१ ग. ज. 'इति' नास्ति. २ क. ख. घ. झ. ट. ठ. न भवतीत्यर्थः. ३ घ. झ. ट. ठ. यथा. ४ क. ख. घ. झ. ट. ठ. °च्छतीत्युक्ते गौ°. ५ घ. झ. ट. ठ. प्रकरणविरोधी; च. प्रकरणाविशेषेण. ६ ग. ज. घ. झ. ट. ठ. पदार्थनिय°. ७ ग. च. ज. घ. झ. ट. °सन्नियोगेन. ८ च. °हि तेषां लक्षणे पदा°. ९ घ. ट. °यादीतिलक्षणादीनि व्या°. १० च 'अर्थमप्रतियतः' नास्ति ११ ग. ज. °स्यानवत्तार्थस्ये°. १२ क. ख. घ. झ. ट. ठ. नैकान्तिकेन; ग. ज. नैकान्ते च.

२५ ३०

व्याकरणमपूर्णं यावत्स्वरसंस्कारौ नावधार्येते.

एवं कृत्वा निरुक्तशास्त्रं ' विद्यास्थानं ' एतदर्थीनत्वादर्थपरिज्ञानस्य । अर्थवशगत्वाच्च स्वरसंस्कारयोरिदं " व्याकरणस्य कार्त्स्न्यं " कृत्स्नभावं करोतीति वाक्यशेषः । व्याकरणे हि स्वरसंस्कारौ चिन्त्येते । तस्मादपरिसमाप्तमेव तावद्व्याकरणं यावन्निरुक्तं नाधिगतमिति । न ह्यनैरुक्तोऽर्थमवधारयितुमलं नानवधृतार्थः स्वरसंस्कारतत्त्वं विजानीयादिति । आह । ननु व्याकरणस्य कार्त्स्न्यमेतत्करोतीत्युच्यमाने तच्छेषभूतमेवैतदुणादिवत् । ततश्च विद्यास्थानत्वमस्य विरुध्यत इति । नेत्युच्यते । 'स्वार्थसाधकं च' । स्वार्थाजहद्वृत्त्या ह्येतदनुषङ्गतो व्याकरणेकृत्स्नतां करोति यथा लोके स्वार्थमपरिहाय कश्चित्परानुग्रहं करोत्येवम् । यत्पुनरेतदुक्तमुणादिवदिति । ते हि तत्रान्तर्भूता एव । " उणादयो बहुलम् ( पा० ३ । ३ । १ ) " इत्युक्तं न पुनर्निघण्टवो बहुलमिति । तस्मात्स्वतन्त्रमेवेदं विद्यास्थानमर्थनिर्वचनम् । व्याकरणं तु लक्षणप्रधानमिति विशेषः ।

निरुक्तं स्वतन्त्रं शास्त्रं विद्यास्थानं च

आह । ' यदि मन्त्रार्थप्रत्ययाय ' एतदारभ्यते हन्त तर्ह्येतदेवमर्थमारभ्यमाणं ' अनर्थकं ' एव भवतीति । आह । क एवमाहेति । उच्यते । " कौत्सः " । किं कारणम् । " अनर्थका हि मन्त्राः " । न हि मन्त्राणामर्थोऽस्ति वाच्यवाचकत्वेन । तदर्थनिर्वचनायारभ्यमाणमिदमप्यनर्थकमेव भवति । तस्मान्नारब्धव्यमित्येव कौत्सो मन्यते । " तत् " एतदेवमुच्यमानं कौत्सेनानेन नैरुक्तेन ' उपेक्षितव्यम् ' । उपगम्य वेदं[6] शास्त्रं चेक्षितव्यं किमसौ सत्यमाचष्टे वृथेति वा परीक्ष्यम् । अर्थवत्त्वे मन्त्राणां यद्धेतुज्ञानं वक्ष्यमाणं तदुपगम्यार्थवत्त्वं मन्त्राणामीक्षितव्यमिति केचिदाहुः ।

मन्त्रा अनर्थका इति कौत्सः

कया पुनरुपपत्त्या कौत्सो मन्त्राणामानर्थक्यमाहेति । उच्यते । " निय-

---

१ क. ख. घ. झ. ट. ठ. व्याकरणेन हि. २ क. ख. घ. झ. ट. ठ. °रोतीत्युक्ते. ३ घ. झ. ट. ठ. °षङ्गात्. ४ क. ख. घ. झ. ट. ठ. व्याकरणस्य कृत्स्नतां. ५ ग. च. ज. °हाय; घ. झ. ट. स्वार्थं परिहाप्य. ६ च. चेदं.

तवाचोयुक्तयो नियतानुपूर्व्या भवन्ति ' इति । नियतवाचोयुक्तयो निरूढवाचोयुक्तयः । अभिधाननियता हि ते भवन्ति । अग्न आ याहि वीतये [ ऋ० ६ । १६ । १० ] इति मन्त्रे न पुनर्विभावसो आगच्छ पानायेति । नियतानुपूर्व्या । नियतनिष्ठानुपूर्वी पदप्रयोगस्य । तद्यथा । ' अग्न आ याहि ' इति न पुनर्भवति ' आयाह्यग्ने ' इति । इह लोकेऽर्थवतां शब्दानामनियमेन पर्यायवचनता दृष्ट गवादिप्रयोगे । तथा न पौर्वापर्यं दृष्टम् । तद्यथा । गोणीमभ्याज गामभ्याज । आहर पात्रं पात्रमाहरेति । न च तथा मन्त्रेषु । ते वयमर्थवच्छब्दवैधर्म्यात्पश्यामोऽनर्थका मन्त्रा इति ।

मन्त्रानर्थक्ये कारणानि

नियतवाचोयुक्तित्वं नियतानुपूर्व्यत्वं च

अथाध्ययमपरो हेतुरानर्थक्ये मन्त्राणाम् । आह । कतम इति । उच्यते । " ब्राह्मणेन ' ह्येते ' रूपसंपन्ना ' अपि सन्तो ' विधीयन्ते ' एव । रूपं नाम लिङ्गं तेन संपन्ना लिङ्गसंयुक्ता इत्यर्थः । प्रकटलिङ्गा अपि सन्तस्तदविवक्षितं कृत्वा कर्मसु विधीयन्त एव । यदि ह्येतेऽर्थवन्तोऽभविष्यन्स्वेनैव लिङ्गेन स्वमात्मानमेते विनियोक्तुं समर्था इति कृत्वा न ब्राह्मणेन तेषु तेषु कर्मसु व्यधास्यन्त । विहिताश्च । तद्यथा । ' उरु प्रथस्वेति' [ श० ब्रा० १ । १ । ६ । ८ ] प्रथनलिङ्गो मन्त्रो विहितः प्रथनकर्मणि । तथा च । ' उरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम् ' [य० वा० सं० १ । २२] । यजुरिदम् । पुरोडाशं प्रत्युच्यते । पुरोडाश त्वं विस्तीर्णप्रथनः सन्विस्तारयात्मानम् । ते तव यज्ञपतिश्चायं यजमानः प्रजापशुहिरण्यादिभिश्चोरु प्रथतां विस्तीर्यतामिति । तथा । 'प्रोहाणीति प्रोहति' इति ब्राह्मणं द्रोणकलशप्रोहणविधायि । 'इदमहमात्मानमेवं प्राञ्चं प्रोहामि तेजसे ब्रह्मवर्चसायेति । तेजोर्थं ब्रह्मवर्चसार्थं चात्मानं प्रोहामि प्राञ्चं प्रेरयामीति । प्रोहाणीति प्रोहति' इति प्रोहणलिङ्गो

मन्त्राणां ब्राह्मणकृतो विनियोगः

---

१ च. नियता बा°. २ ग. ज. नियतामिनिष्ठा°; घ. °निष्ठानुयेपूर्वीपपद्यो-गस्य; झ. °निष्ठायेनुपूर्वोपद्प्रयोगस्य; ट. °निष्ठानुपूर्वीपदप्रयोगस्य° ये; ठ. नियतानुपूर्वी°. ३ ठ. पुनर्न भ°. ४ घ. झ. ट. गोमभ्याज. ५ क. ख. घ. झ. ट. ठ. तलोऽर्थव°. ६ ठ. ह्येते ह्यर्थ°. ७ ग. च. ज. तथा च ॥ २० ॥ उरु°. ८ च. °डाश इत्यु°. ९ क. ख, ग, ज. इति नास्ति.

विहितः प्रोहणकर्मणि । तस्माल्लिङ्गसंपन्नविधानात्पश्यामो ब्राह्मणेनानर्थकस्वरूपमेव सन्तं[1] विनियुक्तम् । एवं सति मन्त्रं पुनर्विदधद्ब्राह्मणमर्थवदनर्थका हि[2] मन्त्राः । न ह्यर्थवन्तः सन्तो दासवद्ब्राह्मणेन विधीयेरन् । विहिताश्च । तस्मादनर्थका मन्त्रा इति पश्यामः । अपि च ब्राह्मणस्यानर्थकत्वा[3]भ्युपगमे देशकालकर्तृदक्षिणादि कर्माङ्गभूतं कुत उपलभ्येत[4] । तथा च[5] ब्राह्मणस्यानर्थक्येऽभ्युपगम्यमाने वेदैकदेशस्या[6]त्यन्तमेवानर्थकत्वमभ्युपगतं स्यात् । न हि ब्राह्मणस्य विधिस्तुत्यर्थत्वाद्दृतेऽर्थवत्तास्ति । मन्त्राणां पुनर्वाच्यवाचकत्वेनानर्थकानामपि सतां विनियोगमात्रेणापि[7]र्थवत्ता स्यादेव[8] । तस्मात्काममनर्थका[9] मन्त्रा वाच्यवाचकत्वेन सन्तो विनियोगमात्रेणैवार्थवन्तो विधेयत्वात् । विधायकत्वाच्च ब्राह्मणमर्थवदस्त्विति ।

*मन्त्राणां विधेयत्वाद्ब्राह्मणस्य विधायकत्वाच्चार्थवत्त्वम्*

'अथापि' अयमपरो हेतुरनर्थकत्वे मन्त्राणाम् । आह । कतम इति । उच्यते । 'अनुपपन्नार्था' ह्येते 'भवन्ति' । य एतेष्वर्थो लभ्यतेऽयमेष्व[10]र्थः स्यादिति नासावुपपद्यते । तद्यथा । 'ओषधे त्रायस्वैनम् । [ य० वा० ५ । ४२ । तै० सं० १ । ३ । ५ ] इत्याह । न चौषधिरात्मानमपि त्रातुं समर्था किमुत[11] वृक्षम् । तथा । 'स्वधिते मैनꣳ हिꣳसीः [ य० सं० वा० सं० ६ । ४२ । तै० सं० १ । ३ । ५ ] इत्याहात्मनैव 'हिंसन्' । को हि नामैवमुक्त्वा स्वयमेव हिंस्यात् । हिनस्ति च । लोके यान्येवंविधानि वाक्यान्युन्मत्तप्रभृतीनां तान्यनर्थकानीत्युच्यन्ते । तथैवेमानि । तस्मादिमान्यप्यनर्थकानीत्युपपद्यते ।

*मन्त्रा अनुपपन्नार्थाः*

'अथापि' अयमपरो हेतुरानर्थक्ये मन्त्राणाम् । आह । कतम[12] इति ।

---

१ क. ख. घ. झ. ट ठ सन्तं मन्त्रं विनि°. २ क. ख. घ. झ. ठ. ठ. 'हि' नास्ति. ३ घ. झ. ट. ठ. °नर्थक्याभ्युपगमे; च. °नर्थकत्वाभ्युपगमने. ४ ग. ज. उपलभ्यते. ५ ग. ज. 'च' नास्ति. ६ क. ख. घ. झ. ट. ठ. °देशस्य मन्त्रस्यात्यन्त°; च. °देशस्य ब्राह्मणाख्यस्यात्यन्त°. ७ क. ख. घ. झ. ट. ठ. 'अपि' नास्ति. ८ क. ख. घ. झ. ट. ठ. 'एव' नास्ति. ९ क. ख. घ. झ. ट. ठ. एतस्माच्च काम°. १० क. ख. व. झ. ट. °यमेतेष्वर्थः. ११ क. ख. घ. झ. ट. ठ. किं पुनर्वृक्षं. १२ घ. झ. ट. 'कतमः' नास्ति .

विप्रतिषिद्धार्थाश्च

उच्यते । 'विप्रतिषिद्धार्था भवन्ति' इति । अन्यस्यान्येन विरुद्धार्थेन प्रतिषेधोऽन्यस्य चान्येन[1] विप्रतिषेध इतरेतरव्याघात इत्यर्थः । तद्यथा । 'एक एव रुद्रोऽवतस्थे न द्वितीयः' 'असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम्' [ य० वा० सं० १६।५४ ] "अशत्रुरिन्द्र जज्ञिषे [ ऋ० सं० १० । १३३ । २ ] 'शतं सेना अजयत्साकमिन्द्रः'

विप्रतिषिद्धार्थत्वस्योदाहरणानि

[ ऋ० सं० १० । १०३ । १ ] इत्येतान्युदाहरणानि[2] ।

'एक एव रुद्रोऽवतस्थे न द्वितीयो रणे निघ्नन्पृतनासु शत्रून् । संसृज्य विश्वा भुवनानि गोप्ता प्रत्यङ्जनान्संचुकोचान्तकाले ॥ एक एवावतस्थे रुद्रः स्थितवान्-रणाय रणार्थं नान्यो द्वितीयः कश्चिदस्ति । इति[3] रुद्रबहुत्वप्रतिषेधः । कथमवतस्थे । निश्चयेन घ्नन् पृतासु स्पर्धनीयेषु संग्रामेषु । किं निघ्नन्[4] । शत्रून् । किंच स एकः संसृज्य सृष्ट्वा विश्वा विश्वानि भुवनानि गोप्ता रक्षिता । सृष्ट्वा च सर्गकाले पालयित्वा च स्थितिकाले प्रत्यङ् सर्गप्रातिलोम्येन[5] जनान्संचुकोच संकोचयत्यन्तकाले प्रलयकाले । य एवंगुणयुक्तो रुद्रस्तं वयं स्तुमः[6] ।

असंख्याता सहस्राणि[7] ये रुद्रा अधि भूम्याम् । तेषां सहस्रयोजनेऽव धन्वानि तन्मसि' [ य० वा० सं० १६ । ५४ ] ॥ एषा शतरुद्रियेऽ[8]नुष्टुप् । तेन चाग्निचयनेऽर्कपर्णेनाजाक्षीरमिश्रा गवेधुकाः सक्तवो हूयन्त उत्तरस्यां श्रोणावन्त्यायामिष्टकायाम् [ का० श्रौ० १८ । १ । १ । ५] । प्रजापतेरार्षम् । असंख्यातानि सहस्राणि बहूनीति[9] यावदुक्तं[10] स्यात् । केषाम् । ये रुद्रा भूम्यामधि उपरि तेषाम् । सहस्रयोजनेऽध्वनि अवस्थितानामिवावतनुमो धनूंषि । अप्राप्तानामेवास्मान्प्रतीत्यभिप्रायः । तावदेव च तानभिष्टुमो यावदवततानि तानि धनूंषीति[11] ।

---

१ घ. झ. ट. ठ. वान्येन. २ ग. च. ज. °जानि । २१ । एक°. ३ ग. च. ज. 'इति' नास्ति. ४ घ. झ. ट. ठ. किं घ्नन्°. ५ ग. ज. सप्राति°. ६ ग. ज. स्तुमः । २२ । असं°; च. स्तुमः । २३ । असं°. ७ ग. च. ज. घ. झ. ट. सहस्राणि । एषा शतरु°. ८ ग. ज. शतरुद्रीये. ९ ग. च. ज. 'इति' नास्ति. १० घ. झ. ट. यावद् युक्तं. ११ ग. च. ज. °षीति । २२ ।.

त्वं सिन्धूँरवासृजोऽधराचो अहन्नहिम् । अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यं तं त्वा परि ष्वजामहे नभन्तामन्यकेषां ज्याका अधि धन्वसु [ ऋ० सं० १० । १३३ । २ ] ॥ एतयाऽतिच्छन्दसेन्द्रं तुष्टाव सुदाः पैजवनः । षोडशिनि शस्त्रे विनियुक्ता [ आश्व० श्रौ० ६ । २ ] । हे इन्द्र त्वं अवासृजः सिन्धून्स्यन्दनानेतान्माध्यमिकानुदकसंस्त्यायान् । कथं पुनरवासृजः । अधराचः तानधोगमनान्कृत्वा सर्वानेवावासृजो नित्यकालं अहन् अहिं घ्नन्मेघम् । अशत्रुः अशातयितव्यो जज्ञिषे जायसे नित्यकालं भवसि तस्मिंस्तस्मिन्हते मेघे । किंच त्वमेतेन प्रकारेण मेघवधकर्मणा विश्वं सर्वं पुष्यसि पुष्णासि वार्यं वारिप्रभवं व्रीह्यादिकम् । तं त्वामेवंगुणसंयुक्तं वयं परिष्वजामहे सर्वतः स्वजामहे आश्लिष्यामः । न भन्तां मा भूवन् अन्यकेषां अन्येषां ज्याका ज्या अपि अधिधन्वसु अधिधनुःषु । किमुतान्ये केचनाभ्युँद्यच्छमाना एतेऽस्मद्विषोऽवततज्य-धनुषो हतसर्वोद्यमाः सन्त्वित्यतस्त्वां परिष्वजामह इत्यभिप्रायः ।

'आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् । संक्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत्साकमिन्द्रः ( ऋ० सं० १० । १०३ । १ ) ॥ 'आशुः शिशानः' इत्येषाप्रतिरथे त्रिष्टुबग्नाव-ग्निप्रणयने विनियुक्ता ( तै० सं० ५ । ४ । ६ । ) । अप्रतिरथस्येन्द्रपुत्र-स्यार्षम् । आशुः व्यापकः क्षिप्रो वा । शिशानः शिशयानस्तीक्ष्णीकुर्व-न्नायुधं प्रगृहीतायुधः वृषभो न वृषभ इव पुष्टो योद्धा । घनाघनः हना-हनः जहिजहीत्येवंशब्दकारी क्षोभणः । केषाम् । चर्षणीनां प्रत्यनीकाव-स्थितानामसुरादीनाम् । संक्रन्दनः समाह्वाता शत्रूणाम् । आहूय चानिमिषः आदरवान् जयं प्रति । एकवीरः एक एव विक्रान्तोऽप्रतिबन्धः संग्रामेषु । शतं सेनाः बह्वीः शत्रुसेनाः साकमवस्थिताः अजयदेक इन्द्रो यस्तं वयं स्तुमः ।

---

१ ग. सिंधूरवासृजा०धन्वसु; घ. झ. ट. सिंधून्०न्वसु. २ क. ख. घ. झ. ट. 'तास्मिन्' सकृदेव. ३ घ. झ. ट. अभ्युच्छमानाः. ४ ग. च. ज. °प्रायः॥ २४ ॥ आशुः°. ५ ग. च. ज. घ. झ. ट. आशुः शिशान इत्येषा न पठ्यते. ६ च. व्यापनः; ट. व्यापकः° न्नः. ७ ग. च. ज. 'शिश्यानः' नास्ति. ८ घ प्रतिगृही°. ९ ठ. योद्धा भीमः शत्रूणां भयजनकः । घना°. १० च. प्रत्यनिका°. ११ च. 'एकवीरः' नास्ति. १२ क. ख. °प्रतिद्वन्द्वः सं°; ग. ज. घ. झ. ट. °प्रतिबद्धः सं°.

एवमितरेतरविप्रतिषिद्धान्येतानि मन्त्रवाक्यानि । यथैको रुद्रो नासंख्यातानि सहस्राणि । अथासंख्यातानि नैकः । यद्यशत्रुः कथं शतं सेना अजयत् । अथ शतं सेना अजयत्कथमशत्रुः । लोके[1] यान्येवंलक्षणानि वाक्यान्युन्मत्तादीनां तान्यनर्थकानीत्युच्यन्ते । तथाचेमानि । तस्मादिमान्यप्यनर्थकानीति । ५

'अथापि' अयमपरो हेतुर्मन्त्राणामानर्थक्ये । कतम इति । उच्यते । 'जानन्तं संप्रेष्यति' इति[2] । अध्वर्युर्होतारम् । कथम् । 'अग्नये समिध्यमानायानुब्रूहि' (शतपथब्रा० १ । ३ । २ । २) इति । होता हि विधिज्ञ[3] एव भवति । नह्यविद्वान्विहितोऽस्तीति । स विजानात्येवामुष्मिन्नवधाविदं मयानुष्ठातव्यमिति । तदेतद्विज्ञातार्थस्य सतः संप्रेषणमनर्थकमेव भवति । यथैतदनर्थकमेवमन्येऽपि मन्त्रा इति । १०

विधिज्ञाय प्रैषः

'अथापि' अयमपरो हेतुर्मन्त्राणामानर्थक्ये । आह । कतम इति । उच्यते । 'अथाप्याह' मन्त्रनिगमः 'अदितिः सर्वमिति' । आह । किमुदाहरणम् । 'अदितिर्द्यौरदितिरन्तरिक्षम्' ( ऋ० सं० १ । ८९ । १० ) इति । १५

परस्परासंबद्धत्वम्

'तत्' एतदुदाहरणं 'उपरिष्टाद्' ऐकपदिके 'व्याख्यास्यामः' (निरु०४।२३)।इह त्वेवमर्थमियमुदाहृता । कथं यैव द्यौः सान्तरिक्षं यैव माता स एव पुत्रः स एव च पितेत्येवमादि । किमपि च[6] बह्वत्र परस्परासंबद्धमुच्यते । तदर्थवत्त्वे सत्युपपादयितुमशक्यम् । तस्मादनर्थका मन्त्रा इति । २०

'अथापि' अयमपरो हेतुरानर्थक्ये मन्त्राणाम् । आह । कतम इति । उच्यते । 'अविस्पष्टार्थाः' अपि हि केचिद् 'भवन्ति' । तद्यथा । 'अम्यग् यादृश्मिन् जारयायि काणुकेति' एवमादयः । न ह्येतेषां विस्पष्टार्थता मन्त्रेषु शक्यते परिज्ञातुम् । न च केचिदर्थवन्तः केचिदनर्थका इति न्याय्यमभ्युपगन्तुम् । अर्धवैशसं हि स्यात् । तस्मात्सर्व एवानर्थकाः । इति परिसमाप्तः पूर्वपक्षः ॥ १५ ॥[7] २५

अविस्पष्टार्थत्वम्

---

१ क. ख. घ. झ. ट. ठ. लोके हि यान्ये°. २ ठ. 'इति' नास्ति. ३ घ. ट. विधि. त एव°; झ. विधि. न एव°; ठ. विहित एव°. ४ च. भवतीति. ५ घ. ट. °दनर्थमेव°. ६ क. ख. घ. झ. ट. ठ 'च' नास्ति. ७ क. ख. ग. च. ज. घ. झ. ट. अङ्को न वर्तते; ठ. °पक्षः इति निरुक्तव्याख्यायां पञ्चदशः खण्डः. ३२

---

अर्थवन्तः शब्दसामान्यादेतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृग्यजुर्वाभिवदतीति च ब्राह्मणम् । क्रीळन्तौ[2] पुत्रैर्नप्तृभिरिति यथो एतन्नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्तीति लौकिकेष्वप्येतद्यथेन्द्राग्नी पितापुत्राविति यतो एतद्ब्राह्मणेन रूपसंपन्ना विधीयन्त इत्युदितानुवादः[3] स भवति यथो एतदनुपपन्नार्था भवन्ती[4]त्याम्नायवचनादहिंसा प्रतीयेत यथो एतद्विप्रतिषिद्धार्था भवन्तीति लौकिकेष्वप्येतद्यथा सपत्नोऽयं ब्राह्मणोऽनमित्रो राजेति यथो एतज्जानन्तं संप्रेष्यतीति जानन्तमभिवादयते जानते मधुपर्कं प्राहेति[5] यथो एतददितिः सर्वमिति लौकिकेष्वप्येतद्यथा सर्वरसा अनुप्राप्ताः पानीयमिति यथो एतदविस्पष्टार्था भवन्तीति नैष स्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधः स भवति यथा जानपदीषु विद्यातः पुरुषविशेषो भवति पा[6]रोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति ॥ १६ ॥[7]

इ[8]ति प्रथमाध्यायस्य पञ्चमः पादः ॥

---

स्वपक्षनिदानं[9] स्थापयिष्यामस्तदर्थमिदमारभ्यते ' अर्थवन्तः शब्दसामान्यात्' इति । अर्थवन्त एव मन्त्रा इति प्रतिज्ञा ।

मन्त्रा अर्थवन्तः शब्दसामान्यात्

हेतुरुच्यते शब्दसामान्यादिति । समान एव हि शब्दो लोके मन्त्रेषु च । तद्यथा । य एव गोशब्दो लोके स्वरसंस्कारसंयुंक्तः[10] स एव मन्त्रेष्वपि । तत्रैवं सति स एवार्थवाँल्लोके स एव चानर्थको मन्त्रेष्विति विशेषहेतुर्नास्ति । असति च विशेषहेतावर्थवन्त एव मन्त्राः शब्दसामान्यादित्युपपद्यते । यत्पुनरेतदुक्तं प्रयोगानियमाल्लोकेऽर्थवत्त्वं प्रयोगानियमाच्च

---

१ क. ख. °णम् ॥ १ ॥ क्री°; छ. त. णम् ॥ २० ॥ क्री°; द, णम् ॥५॥क्री°. २ क. ख. छ. त. द. क्रीलन्तौ. ३ ङ. °नुवाकः. ४ ङ. 'इति' नास्ति. ५ क. ख. छ. त. द. ' इति ' नास्ति. ६ छ. त. ठ. परो°. ७ क. ख. २; छ. त. २१; द. ६. ८ ङ. थ. घ. ठ. ' इति० पादः ' नास्ति; त. इति प्रथमोऽध्यायस्य तृतीयः पादः; द. तृतीयः पादः. ९ व. झ. ट. ठ. °क्षमिदानीं स्थाप°. १० क. ख. व. झ. द. ठ °स्कारयुक्तः.

मन्त्राणामानर्थक्यमिति प्रतिवक्ष्याम एतत् । लोकेऽपि हि प्रयोगनियमो दृष्टः । तद्यथापितापुत्राविति ।

**ऋग्यजुर्भिरभ्युदितं कर्म समृद्धं भवति**

किं चान्यत् । 'एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं[1] यत्कर्म क्रियमाणमृग्यजुर्वाभिवदतीति च ब्राह्मणम्' [गोपथब्रा० २ २ । ६ ॥ २ । ४ । २ ] । एतदेव हि ५ यज्ञस्य कर्मणः[2] समृद्धम् । तत्किमिति[3] । उच्यते । यद्रूपसमृद्धं मन्त्रलिङ्गैरभिधीयते[4] तदेवमिह[5] समस्तऋद्ध्या युक्तं भवति नेतरत् । एतदेव सुतरां स्पष्टीकरोति । 'यत्कर्म क्रियमाणमृग्यजुर्वाभिवदतीति च ब्राह्मणम्' इति । शब्दसामान्याद्ब्राह्मणप्रामाण्याच्चेति चशब्दः । ब्राह्मणमपि च मन्त्राणामर्थवत्त्वमेव १० दर्शयति । अनर्थका हि सन्तः[6] कथं कर्माभिवदेयुः[7] । कथं चानभिवदन्त समर्थयेयुः । अर्थवत्त्वं चाभ्युपगतं भवता ब्राह्मणस्य 'अथापि ब्राह्मणेन रूपसंपन्ना विधीयन्ते' इत्यत्र । ब्राह्मणेन सिद्धमेवार्थवत्त्वमुक्तं मन्त्राणाम् । तदेतदुपदर्शितमस्माभिः । तस्मादर्थवन्त एव मन्त्रा इति[8] । आह । किं पुनः समृद्धरूपत्वे मन्त्राणामुदाहरणमिति । १५ उच्यते । क्रीळंताविति[9] ।

'इहैव[10] स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतम् । क्रीळन्तौ[11] पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे' [ ऋ० सं० १० । ८६ । ४२ ] ॥ सूर्याया आर्षम् । विवाहे विनियुक्ता । अनुष्टुप् । इहैव स्तं भवतं युवां स्वे गृहे मोदमानौ हर्षमाणौ मा वियौष्टं मा च वियुज्यतम्[12] । सर्वमायुः व्यश्नुतं क्रीळन्तौ[13] २० पुत्रैश्च[14] पौत्रैश्च सहेत्याशीः ।

स्थापितमर्थवत्त्वं मन्त्राणाम् । अधुना परपक्षहेतवो निराकर्तव्यास्त-

१ घ. ट. 'यद्रूपसमृद्धं' नास्ति. २ क. ख. ग. व. झ. ट. ठ. यज्ञकर्मणः. ३ ग. ज. तद्यत्किमिति. ४ घ. झ. ठ. 'यद्रूप......धीयते' नास्ति; ठ. यद्रूपसमृद्धं तदेव हि सम°. ५ क. ख. घ. झ. तदेव हि सम°; ट. तदेव हि सम° २५ मिह. ६ घ. झ. ट. मन्त्राः कथं°; ट. मन्त्राः कथं° सन्तः. ७ ग. कर्म वदेयुः; ठ. कर्माणि वदेयुः. ८ क. ख. °इति ॥ १ ॥ क्री°. ९ क. ख. घ. झ. ट. क्रीलन्ताविति; ग. च. ज. क्रीलन्ताविति ॥ २५ ॥ इहै°. १० ग. स्तं मा वियौष्टं० स्वे गृहे; घ. झ. ट. स्तं० गृहे. ११ क. ख. ग. च. ज. घ. झ. ट. क्रीलन्तौ. १२ क. ख. घ. ट. ठ. वियुज्येताम्; च वियुज्यतां° तं; झ. वियुज्येतं. १३ क. ख. घ. झ. क्रीलंतौ; ग. च. ज. क्रीडंतौ. १४ क. ख. घ. झ. ट. ठ. 'च' नास्ति. ३२

परपक्षहेतुनिराकरणम्

दर्थमिदमाह । 'यथो एतत्' इति । यत्पुनरेतदुक्तं 'नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्तीति' अत्र ब्रूमः । 'लौकिकेष्वपि' नियतवाचोयुक्तित्वं नियतानुपूर्व्यत्वं च दृष्टमेव । 'तद्यथा इन्द्राग्नी' इति 'पितापुत्राविति' च । तत्र यदुक्तं नियतवाचोयुक्तित्वान्नियतानुपूर्व्यत्वाच्चानर्थका मन्त्रा इत्येतदयुक्तम् । लौकिकेष्वपि हि नियतप्रयोगाः सन्तः शब्दाः केचिदर्थवन्तो दृष्टा यथेन्द्राग्नी पितापुत्राविति ।

ह्यर्थवत्सु शब्देषु

लौकिकेष्वपि प्रयोगेषु नियतवाचोयुक्तित्वं नियतानुपूर्व्यत्वं च दृश्यते

स एवं प्रयोगनियमादनर्थका मन्त्रा इत्यनैकान्तिको हेतुः । तस्मादर्थवन्त एवेति ।

यत्पुनरेतदुक्तं 'ब्राह्मणेन रूपसंपन्ना विधीयन्ते । अत्र ब्रूमः । 'उदितानुवादः स भवति' । नासमर्था आत्मानमेते स्वेन रूपेण विधातुमित्यतो ब्राह्मणेन विधीयन्ते । किं तर्हि । आत्मनियोगाश्रयमुक्तमेव सन्तं मन्त्रेणार्थं ब्राह्मणमनुवक्ति विस्तरेण, प्रकृतार्थसंतुष्टूषया । न ह्यनुक्तं स्तोतुं शक्यते । सोऽयमेवमुदितानुवाद एव भवति । उक्तानुवाद इत्यर्थः । अपि चानेकेऽपि समानलिङ्गाः प्रकरणे मन्त्रा भवन्ति ।

ब्राह्मणेन मन्त्रोक्तमनूद्यते

ते ह्यहंपूर्विकयैकं प्रयोगं प्रति खले कपोतवत्संनिपतन्ति । तेषां समुच्चये विकल्पे च प्राप्ते सत्यभिमत एको नियमार्थं ब्राह्मणेन विधीयते । एवमुभयोरर्थवत्त्वं मन्त्रब्राह्मणयोः । तत्र यदुक्तं रूपसंपन्नविधानान्मन्त्रानर्थक्यं मन्त्रार्थवत्त्वे वा ब्राह्मणानर्थक्यमित्येतदयुक्तम् । तस्मादुभयमर्थवन्मन्त्राश्च ब्राह्मणं चेति ।

यत्पुनरेतदुक्तं 'ओषधे त्रायस्वैनं स्वधिते मैनं हिंसीरिति' एवमादयः 'अनुपपन्नार्था इति' अत्र ब्रूमः । ओषध्यधिदेवतोच्यते । हे ओषधे

---

१ ग. ज. नियतानुपूर्ववत्त्वं; च. ठ. नियतानुपूर्वत्वं. २ व. झ. ट. ठ. °युक्तत्वा°. ३ घ. झ. ट. ठ. एव. ४ क. ख. घ. झं. ट. ठ. °यन्त इति । अत्र°. ५ घ. झ. ट. ठ. °यैवं°. ६ ध. झ. ट. 'एतत्' नास्ति. ७ क. ख. घ. झ. ट. ठ. 'एवं' नास्ति. ८ च. 'इति' नास्ति.

न कश्चिदनुपपन्नार्थः

त्रायस्वैनं त्वत्पूर्वको ह्येष वृक्षश्छिद्यमानः सम्यक्छिन्नो भविष्यति ततश्च यज्ञे विनियुक्तः प्रतिविशिष्टमुत्कर्षमेतस्मात्स्थावरत्वात्प्राप्स्यत इत्येतदत्र त्राणमभिप्रेत्योक्तमोषधे त्रायस्वैनमिति न च्छेदनं प्रतिपत्स्यतेऽयमित्यनेनाभिप्रायेण । तस्मादुपपन्नार्थ एवायम् । तत्र यदुक्तमनुपपन्नार्था इत्येवमादयो मन्त्रा इत्येतदयुक्तमिति ।

यदपि चोक्तं 'स्वधिते मैनं हिंसीरित्याह हिंसन्' इति । अत्र ब्रूमः । 'आम्नायवचनादहिंसा' एषा 'प्रतीयते' । आह । कथमहिंसा ।

आम्नायवचनाद्धिंसाऽहिंसैव

प्रत्यक्षतो हि च्छिद्यते वृक्षः । शृणु । इयमहिंसेयं हिंसेत्यागमादेतत्प्रतीयते । प्रतिविशिष्टश्चायमेव वैदिक आम्नाय आगम एतत्पूर्वकत्वादन्येषामागमानाम् । स एष कृत्स्न्यस्य जगतः प्रतिविशिष्टाय श्रेयसेऽभ्युद्यतः सन्हिंसायां कर्तारं विनियोक्ष्यत इति कुत एतत् । नूनमियमहिंसैव यतोऽस्यां नियुनक्ति कर्तारम् । तदेतदागमप्रत्यक्षमेव यथेयमहिंसेति । अपि चैतदोषधिवनस्पतिपशुमृगपक्षिसरीसृपाः सम्यगुपयुक्ताः सन्तो यज्ञे परमुत्कर्षं प्राप्नुवन्ति । सोऽयमभ्युदय एव संपद्यते न हिंसा । तत्र यदुक्तं मैनं हिंसीरित्याह हिंसन्निति न ह्यसौ हिनस्ति । किं तर्हि । अनुगृह्णाति यज्ञविनियोगार्थं विधानतश्छिन्दन् । तस्मादुपपन्नार्थमेवमपि । तत्र यदुक्तमनुपपन्नार्थत्वादनर्थका मन्त्रा इत्येतदयुक्तमिति[4] ।

यत्पुनरेतदुक्तं 'विप्रतिषिद्धार्था भवन्तीति' । अत्र ब्रूमः । नैष विप्रतिषिद्धोऽर्थः 'एक एव रुद्रोऽवतस्थे' 'असंख्याता सहस्राणि' इति । देवता हि महाभाग्ययोगादेकापि सत्यनेकधा भवत्यनेकापि चैकधा ।

न कश्चिद्विप्रतिषेधः

तदुपरिष्टाद्व्याख्यास्यामो 'माहाभाग्याद्देवतायाः [ निरु० ७ । ४ ] इत्यत्र ।

यत्पुनरेतदुक्तं 'अशत्रुरिन्द्र जज्ञिषे' 'शतं सेना अजयत्साकमिन्द्रः'

१ म. घ. विनियुक्ताः. २ च. प्रतिभत्स्यते. ३ क. ख. तत्र; ब. झ. ट.अतत्र. ४ क. ख. घ. झ. ठ. 'इति' नास्ति. ५ क. ख. च. ठ. महाभाग्य°. ६ घ. झ. ट, ठ. °त्यनेका भव°. ७ ग. च. ज. °नेकधा चैक°.

लौकिकेष्वप्युक्तिष्वेवमतिशयोक्तियुक्तानि विधानानि

इति । अत्र ब्रूमः । 'लौकिकेष्वपि' अर्थवस्तुशब्देषु 'एतत्' एवमेवोच्यमानं दृष्टम् । तद्यथा । 'असपत्नोऽयं ब्राह्मणोऽनमित्रो राजेति' । न हि कश्चिदसपत्नोऽस्ति लोके । उक्तं च । 'मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः । उत्पद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः' इति॥ तथापि स्वल्पसपत्नं दृष्ट्वा केचिदेवंवक्तारो भवन्ति 'असपत्नोऽयं ब्राह्मणः' इति। एवमेव कस्मिंश्चिदतिप्रवृद्धे संशातिते मेवे ह्यन्येषामसारतामभिप्रेत्येदमुक्तं स्यात् 'अशत्रुरिन्द्र जज्ञिषे' यस्त्वमेतमेवमतिप्रवृद्धं 'अहन्नहिं' इति ।

यत्पुनरेतदुक्तं 'शतं सेना अजयदिति'। अत्र ब्रूमः । कुतो हि सेना या इन्द्रो जेष्यति ।न हि देवानां शत्रवः सन्ति ये जेतव्या इति । किं कारणम् । विभवो देवा वशिनोऽविकरणधर्माणश्च परेण महिम्ना युक्ताः । आह । कथं तर्हि 'शतं सेना अजयत्' इत्येतदुक्तम् । उच्यते । रूपकल्पनयैवैषा युद्धप्रवादो स्तुतिः । वक्ष्यति च 'अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते तत्रोपमार्थेन युद्धवर्णा भवन्ति' ( निरु० २ । १६ ) इति । तदेतद्भवता न सम्यग्दृश्यते । सम्यगन्विष्यतां देवतासतत्त्वं नैरुक्तेभ्यस्ततो मन्त्रार्थानविरोधेन सम्यगवभोत्स्यते । नैवमवाक्यतत्त्वज्ञेन मन्त्रार्थोऽवगाहितुं शक्यः । गम्भीरपदार्थो हि वेदः कथमवभोत्स्यते । वेदार्थविबोधविभ्रान्ता एवं हि प्रवादिनः स्वबुद्धिलाघवमाविर्भावयन्तो ब्राह्मणाः सन्तः सर्ववर्णसाधारणानि दर्शनान्तराणि प्रतिपेदिरे। यदुक्तं विप्रतिषिद्धार्थत्वादनर्थका मन्त्रा इत्येतदयुक्तम् । न हीमे विप्रतिषिद्धार्थाः । भवत एषं मतिविभ्रमो मन्दशिक्षितत्वात् । तस्मादर्थवन्त एव मन्त्रा इति ।

युद्धप्रवादः केवलं रूपकम्

---

१ क. ख. घ. झ. ट. ठ. हि. २ ग. ज. °वृद्धे भृशं संशातिते; घ झ. ट. °वृद्धे भृशं शातिते. ३ क. ख. घ. झ. ट. 'हि' नास्ति. ४ घ. ट. युद्धप्रवादो; झ. युद्धप्रवादो. ५ क. ख. ग. ज. घ. झ. ट. ठ. °भोत्स्यसे. ६ क. ख. ज. °र्थो विगाहि°. ७ ग. ज. कथमनलोक्यते कथमवभो°; घ. झ. ट. ठ. कथमवभोत्स्यसे. ८ ट. °र्थाबो°. ९ क. ख. घ. झ. ट. ठ. एव.

*लोकेऽपि हि ज्ञार्थख्यापनम्*

यत्पुनरे[1]तदुक्तं ' जानन्तं संप्रेष्यतीति ' अत्र ब्रूमः । लौकिकेष्वप्यर्थवस्तु शब्देष्वेतदेव स्वाभाव्यं दृष्टम् । तद्यथा । ' जानन्तं ' गुरुं ' अभिवादयते ' स्वगोत्रमभिवदन् । तथा च ' जानते मधुपर्कं प्राह ' त्रिर्मधुपर्को मधुपर्को मधुपर्कः[2] [ आश्व० गृ० सू० १।२४।७ ] इति । तदेतदर्थवत्स्वपि शब्देषु विहितार्थख्यापनार्थ[3]शब्दसामान्यादर्थवन्तो मन्त्रा इति ।

*अदितिः सर्वमितीदृशा गुणवादा लौकिकोक्तिष्वपि*

यत्पुनरेतदुक्तं ' अथाप्याह अदितिः सर्वमिति ' अत्र ब्रूमः । द्विविधा हि शब्दप्रवृत्तिर्मुख्या[4] गौणी चे[5] । तत्रैवं सति यत्र मुख्यासंभवस्तत्र गौण्याश्रीयते । स एष भक्तिवादः स्यात्[6] 'अदितिः सर्वमिति' । यथा कश्चिद्ब्रूयात्किंचि[7]दनेकोपकारे प्रवृत्तं ' त्वमेव मे माता त्वं पिता[8] ' एवमेतदपि द्रष्टव्यम् । लौकिकेष्वपि चार्थवत्सु शब्देषूच्यमानं दृष्टं ' यथा सर्वरसा अनुप्राप्ताः पानीयमिति ' । ततो हि तेषां प्रभव इत्यनया गुणवृत्त्यैवमुच्यते । एवमिहापि गुणवृत्त्या कयाचिददितेः सर्वत्वमुच्यते । यदुक्तमितरेतरविरुद्धं किमपि बह्वत्रेत्येतदयुक्तम् । सर्वमेतदुपपद्यत एव गुणवृत्त्या । तस्मादर्थवन्त एव सर्वे मन्त्रा इति ।

*मन्त्रा अविस्पष्टार्था इत्यज्ञानां प्रलपितम्*

यत्पुनरेतदुक्तं ' अथाप्यविस्पष्टार्था भवन्तीति ' अत्र ब्रूमः । ' नैष स्थाणोरपराधः ' इति । न ह्यत्रे[9] स्थाणुरपराध्यति ' यदेनं ' स्थाणुं ' अन्धो न पश्यति ' यदत्रासावभिहन्यते । किं तर्हि । पुरुष एवापराधी तत्र यदसावचक्षुष्मान् । एवमिहापि नैषं[10] मन्त्राणामपराधो यदशिक्षितेन भवता न विज्ञायन्ते । भवत एवापराधोऽस्ति[12] । भो[11] भवान् सर्वमात्मीयमपराधं मन्त्रेष्वस्मासु चासञ्जयितुमिच्छति । न ते प्रज्ञास्ति किंचित् ।

---

१ क. ख. घ. झ. ट. ठ. ' एतत् ' नास्ति २ क. ख. घ. झ. ट. ' मधुपर्कः ' द्विवारमेव. ३ घ. °तार्थाव्याप°; ट. °तार्थव्याप° ख्या. ४ क. ख. घ. झ. ट. ठ. मुख्यार्था. ५ ग. चेति. ६ क. ख. घ. झ. ' स्यात् ' नास्ति; ट. °वादोऽदितिः° दः स्याद्. ७ घ. झ. ट. किंचित्. ८ क. ख. घ. झ. ट. ठ. त्वं मे पिता. ९ ग. ज. ह्यतस्थाणु°; च. ह्येतत्स्थाणु°. १० क. ख. घ. झ. ट. ठ. नैव. ११ ग. ज. यो भो १२ क. ख. घ. झ. ट. ठ. तव.

१३

'यथा जानपदीषु' कासुचित्प्रवृत्तिष्वितिकर्तव्यतासु कौशलशिक्षाकृतो 'विद्यातः पुरुषविशेषो भवति' पुरुषाणां विशेषः । एवमिहापि मन्त्रार्थशिक्षाकौशलकृतः पुरुषाणां विज्ञानविशेषो भवत्येव । तत्रैवं सति केचित्पुरुषाः सुविस्पष्टार्थानपि मन्त्रान्न शक्नुवन्ति निर्वक्तुमपरे पुनरविस्पष्टार्थानपि शक्नुवन्ति विस्पष्टीकर्तुम् । तदुक्तं 'उत त्वः' [ निरु० १ । १९ ] इत्यत्र । तत्रैवं सति य एते पारोवर्यविदो ब्राह्मणाः । पारोवर्येण विजानत आचार्यपरम्परया ते पारोवर्यविदः । न साक्षात्कृतधर्माण इत्यभिप्रायः । किं तेषाम् । तेषां य एव भूयोविद्यो भवति बहुश्रुतः कश्चित्स एव प्रशस्यते । स एव मन्त्रार्थविज्ञाने प्रशस्यो भवति नेतरो मन्दबुद्धिरशिक्षितः । स हि बहुश्रुतो बहुदृष्टत्वादनेकविषये मन्त्रार्थे न क्वचित्प्रतिबध्यते । न हि तस्याविस्पष्टार्थो नाम कश्चिदस्ति । तस्माद्धेतोः स त्वं बहु शृणु ततः सम्यगवभोत्स्यसे मन्त्रार्थान् । तत्र यदवोचोऽविस्पष्टार्था मन्त्रा न हि तेऽविस्पष्टार्थाः । तांश्चोपरिष्टात्स्पष्टीकृत्य व्याख्यास्यामहे । तवैष मतिं विभ्रमयति संमोहः । तस्मादर्थवन्त एव मन्त्रा इति सिद्धम् । तस्माच्चैतदपि शास्त्रं मन्त्रार्थप्रत्ययायारभ्यमाणमर्थवदेव भवतीति सिद्धः शास्त्रारम्भः । तत्र यदुक्तं 'मन्त्रार्थप्रत्ययायानर्थकं भवतीति' एतदयुक्तम् ।

(मार्जिन: लोके विद्यातः पुरुषविशेषः । विद्वत्सु भूयोविद्यः प्रशस्यते)

इति प्रभिन्नेषु परस्य हेतुषु स्वपक्षसिद्धावुदिते च कारणे ।

अवस्थिता मन्त्रगणस्य सार्थता तदर्थमेतत्स्वलु शास्त्रमर्थवत् ॥ १६ ॥

इति निरुक्तटीकायां षष्ठस्याध्यायस्य पञ्चमः पादः ॥ ५ ॥

---

१ ग. च. ज. घ. झ. ट. °रुषा ये सु°. २ ट. °त्वः पश्यन्नित्यत्र. ३ ठ. परो°. ४ क. ख. घ. झ. ट. ठ. तेषां किं. ५ क. ख. घ. झ. ठ. °विज्ञाता स°; ट. विज्ञाता स° पाठः प्रज्ञाने. ६ ग. ज. प्रतिषिध्यते. ७ क. ख. घ. झ. ट. ठ. मतिं भ्रम°; च. मतिविभ्रमं इति सं°. ८ क. ख. घ. झ. ट. ठ. यदुक्तं यदि मन्त्रार्थ°. ९ घ. झ. ट. °द्धावुद्धिते; ठ. °द्धा उदिते. १० च. °मेतच्छास्त्र° न्नु शा. ११ क. ख. २; ग. २१; घ. झ. ट. ठ. च. ज. अङ्को नास्ति. १२ क. ख. ग. घ. झ. ट. °र्थवदिति । इति निरु°; च. ज. °र्थवादिति निरु°; ठ. °र्थवदिति । इति निरु० टी० ६ ध्यायः.

षष्ठः पादः ।

---

**अथापीदमन्तरेण पदविभागो न विद्यते । अवसाय पद्वते रुद्र मृळेति[1] पद्वद्वसं गावः पथ्यदनमवतेर्गत्यर्थस्यासो[2] नामकरणस्तस्मान्नावगृह्णन्त्यव[3]साया अश्वानिति स्यतिरुपसृष्टो विमोचने तस्मादवगृह्णन्ति दूतो निर्ऋत्या इदमाजगामेति पञ्चम्यर्थप्रेक्षा वा षष्ठ्यर्थप्रेक्षा वाःकारान्तं परो निर्ऋत्या आचक्ष्वेति चतुर्थ्यर्थप्रेक्षैकारान्तं परः संनिकर्षः संहिता पदप्रकृतिः संहिता पदप्रकृतीनि सर्वचरणानां पार्षदान्यथापि याज्ञे दैवतेन बहवः प्रदेशा भवन्ति तदेतेनोपेक्षितव्यं ते चेद्ब्रूयुर्लिङ्गज्ञा अत्र स्म इति । इन्द्रं न त्वा शवसा देवता वायुं पृणन्तीति वायुलिङ्गं चेन्द्रलिङ्गं चाग्नेये मन्त्रेऽग्निरिव मन्यो त्विषितः सहस्वेति[4] तथाग्निर्मान्यवे मन्त्रे त्विषितो ज्वलितस्त्विषिरित्यप्यस्य दीप्ति[5]नाम[6] भवत्यथापि ज्ञानप्रशंसा भवत्यज्ञाननिन्दा च ॥ १७ ॥**

'अथापीदमन्तरेण पदविभागो न विद्यते' । शास्त्रारम्भप्रयोजनाधिकारे वर्तमाने 'अपीदं[7]मन्तरेण मन्त्रेष्वर्थावधारणं नास्ति' इत्युक्ते यदि मन्त्रेत्यादिनानर्थक्यहेतुभिर्बहुभिरानर्थक्य उपपादिते निरुक्तशास्त्रस्य कौत्सेन मन्त्राणामर्थवत्तां[8] स्थापयित्वा परपक्षहेतवः प्रत्युक्ताः । तेषु स्थितमर्थवत्त्वं मन्त्राणाम् । तेषामर्थनिर्वचनायेदमारभ्यमाणमर्थवदित्युपपन्नमर्थवत्त्वं निरुक्तशास्त्रस्य । तदेतत्सर्वमपि चोदकशास्त्रकारव्याजेन प्रसक्तानुप्रसक्तमुक्तं प्रज्ञाया विवृद्धये शिष्यस्य कथं नामासा[9]वविवृद्धप्रज्ञः शब्दार्थन्यायसंकटेषु हेतुसमयानभिज्ञः परैः प्रतिबध्यमानोऽपि पदार्थान्वाक्यार्थांश्चासंमोहेन निर्ब्रूयादिति । एवं तावदेतदन्तरेण मन्त्रार्थप्रत्ययो नास्ति । अथेदमपरमारम्भप्रयोजनमित्येवं विशेषाधिकारार्थोऽयमथशब्दः । अपि मन्त्रार्थप्रत्यय इदमन्तरेण नास्ति नाप्यस्ति यदिदं वक्ष्यमाणमित्यपिशब्द एवं प्रभावने[10] ।

---

१ क. ख. छ. त. द. मृळेति. २ क. ख. छ. द. °स्यासौ; त. °स्यासौ° सो. ३ क. ख. छ. त. द. °ण्हन्ति । अव°. ४ छ. त. द. °सहस्वेत्यथाग्नि°. ५ क. ख. छ. त. दीप्तिर्नाम. ६ क. ख. द. १; छ. त. २२. ७ ठ °मानेथापीद°. ८ ग. °मनर्थवत्तां. ९ क. ख. नामा सा विवृ°; घ. झ, ट. ठ. नामासौ वित्रृ°. १० ठ. संभावने.

> पदविभागोऽर्थज्ञानावलम्बी। अर्थज्ञानं च निरुक्तशास्त्रावलम्बि

आह । किं पुनस्तद्वक्ष्यमाणमिति । उच्यते । ' पदविभागः ' । एवं पदानि वक्तव्यानीत्येतत्पदविभागपरिज्ञानं नास्तीत्यर्थः । किं कारणम् । अर्थवशेन हि पदान्यवतिष्ठन्ते । न चेदमन्तरेणार्थपरिज्ञानमस्ति । तस्मादत एव पदविभागप्रसिद्धिरिति । इदमर्थवत्त्वं मन्त्राणामन्तरेण पदविभागोऽप्याकिंचित्करः । प्रसिद्धश्चैष सर्वशाखासु । तस्मात्पदविभागार्थवत्त्वाय चार्थवन्तो मन्त्रा इति केचिद्वर्णयन्ति ।

> समानसंहितेषु ग्रन्थेष्वर्थकृतः पदविभागः

एवं प्रतिज्ञाय समानसंहितेषु ग्रन्थेष्वर्थहेतुकं पदविभागविशेषं दर्शयति । तद्यथा । ' अवसाय पद्वते रुद्र मृळेति '[1] । पद्वत्पदेवत्पादसंयुक्तम्[2] । ' अवसं पथ्यदनं ' इति निगमप्रसक्तस्य पर्यायवचनम् । 'अवतेर्गत्यर्थस्यासो नामकरणप्रत्ययः '[3] । ' तस्मात् ' असमासत्वादस्य ' नावगृह्णन्ति ' एतत्पदकारा इति शेषः[4] ।

> समानसंहितायामुदाहरणे

मयोभूर्वातो अभि वातूस्रा ऊर्जस्वतीरोषधीरा रिशन्ताम् । पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृळ[5] [ ऋ० सं० १० । १६९ । १ ]॥ सुभरं[6] नाम गौतमः[7] स मयोभूरित्यस्यास्त्रिष्टुभः पूर्वैस्त्रिभिः पादैः गवामाशिषमाशास्योत्तमेन तासामेव रुद्रात्सुखमयाचत । गवामुपस्थाने विनियुक्ता [ आश्व० गृ० २ । १० । ५ ] । मयोभूः मयोभावयिता पाश्चात्यो वातः एता उस्राः अभिवातु आभिमुख्येन वातु । किं च तेन सुखभुवा वातेनानुद्वेजनीयेन[9] स्पृश्यमाना ऊर्जस्वतीः प्रभूतरसाः ओषधीराशिन्तामास्वादयन्तु । आस्वाद्यास्वाद्य च सलवणस्वादमात्माभिप्रेते काल उदकं पिबन्तु । तच्च पीतमोषधिसहितमासां तथा कोष्ठे विपच्यतां रसशोणितमांसमेदोमज्जास्थिक्रमेण यथैताः पीवस्वत्यो[10]

१ क. ख. ग. च. ज. घ. झ. मृळेति. २ क. ख. ज. घ. झ. ट. ठ. °द्वत्पादव°. ३ क. ख. ग. °स्यासौ नाम°. ४ ग. च. ज. शेषः ॥ २६ ॥ मयो°. ५ ग. मयोभूर्वातो० रुद्र मृळ; घ. झ. मयोभूः० रुद्र मृळ; ट. मयोभूः० रुद्र मृळ. ६ क. ख. ग. च. ज. घ. झ. मृळ. ७ ठ. शबलो नाम काक्षीवत ऋषिः स मयो°. ८ ट. गौतमः °शबला ऋषिः कक्षीवतः. ९ ग. ज. यातेन. १० घ. झ ट. ठ. °जनीः येन. ११ ग. ज. ' पीवस्वत्यो भवेयुः ' नास्ति.

भवेयुः पीवगुणयुक्ताः स्थूला बलवत्यो बहुपयस्काः । सति च बहुपयस्त्वे जीवधन्या जीवधनिन्यो रोगदुष्टपातृकाः[1] । हे[2] रुद्र वयमेतासां गवामेतामाशिषमाशास्महे । त्वमप्यस्मै गोलक्षणाय [3]अवसाय पादयुक्ताय मृळ[4] सुखो भव । मैना हिंसीस्त्वमासामीश्वर इत्यभिप्रायः ।

'अवसायाश्वानिति' इदमपरमुदाहरणम् । अस्मिन्पूर्वेण रूपेण सरूपमेव पदमर्थकृताद्विशेषादवगृह्णन्ति । द्वयोः पदयोर्बहूनां वा [5]यदविच्छेदेनोच्चारणं स समासः । तयोरेवार्थ[6]प्रविभागोपप्रदर्शनार्थमवच्छेदेन ग्रहणमवग्रहः । तदेतदवगृह्यते पदम् । 'स्यतिः' धातुः 'विमोचने' अर्थे वर्तते । स पुनः 'उपसृष्टः' उपसर्गेणावेत्यनेनोपसृष्टः संयुक्त इत्यर्थः । यतो धातूपसर्गविभागोपप्रदर्शनार्थमेव तत्पदमवगृह्यतेऽवसायेत्येतत्[7] ।

योनि॑ष्ट[8] इन्द्र नि॒षदे॑ अकारि॒ तमा नि षी॑द स्वा॒नो नार्वा॑ । वि॒मुच्या॒ वयो॑ऽव॒सायाश्वा॑न्दो॒षा वस्तो॒र्वही॑यसः प्रपि॒त्वे [ऋ० सं० १ । १०४ । १]

एतया त्रिष्टुभा कुत्स आङ्गिरस इन्द्रं तुष्टाव । योनिस्ते[9] हे इन्द्र[10] स्थानं ते तव यदिदं निषदे[11] निषदनाय मयाकारि कृतं तं योनिं तत्स्थानं आनिषीद एत्य निश्चयेन सीद । कथं पुनर्निषीद । स्वानो न स्वन्यमान इवार्वा अश्वः । संशब्द्यमान इवाश्व[12]बन्धेनाश्वः । स यथा स्वे स्थाने निषीदेदेवं मया त्वमुप[13]शब्द्यमानः स्तुतिभिरेतास्मिन्मया संस्कृते स्वास्तीर्णे बर्हिषि स्थाने निषीद । कथं पुनर्निषीद । विमुच्यैतान्वयोऽश्वान् । कुतः । रथात् । पुनरपि [14]चैतानवसाय वियुज्य[15] रश्मिभ्योऽश्वान् लब्धोदकयवसान्कृत्वा दोषावस्तोर्वहीयसः । अहनि च रात्रौ च ये केचिद्वहन्ति तेभ्योऽपि वहीयसः शीघ्रतरेण[16] जवेन वोढृतमान् । ततस्त्वं स्वस्थो भूत्वा निषीदेत-

---

१ ठ. °दुष्टयातृकाः. २ घ. झ. ट. हेतु रुद्र. ३ ग. ज. अवसाय पथ्यदनाय पद्वते पाद°. ४ क. ख. ग. च. ज. घ. झ. मृळ. ५ घ. झ. ट. ठ. पदाविच्छे°. ६ क. ख. घ. झ. ट ठ. °वार्थविभागो°. ७ ग. च, ज. °त्येतत् ॥ २७ ॥ योनि°. ८ ग. योनिष्ट इन्द्र निषदे अकारि॰ प्रपित्वे; घ. झ. ट. योनिष्टे प्रपित्वे०. ९ घ. ट. योनिः द्वे इन्द्र°; झ. योनिः हे°; ठ. योनिष्टे हे°. १० ठ. इन्द्र वेद्याख्यं स्थानं°. ११ ग. °यदिदं निषदने निषदनायनि मया°; ज. °यदिदं निषदनायनि मया; च. °यदिदं निषदे निषदनायोपवेशनाय मया°. १२ ठ. °श्वबन्धने यथा स्वे°. १३ घ. झ. ट. त्वमनुशब्द्य°. १४ घ. ट. °रपि वा एतान्; झ. °रपि चा एतान्. १५ क. ख. ग. ज. घ. झ. ट. वियोज्य. १६ ७ क. ख. घ. झ. ट. शीघ्रतमेन.

स्मिन्योनावेतस्मिन् संस्कृते बर्हिषि प्रपित्वे प्राप्तेऽस्माकं त्वद्यजनकाले । मा नो विघ्नं कार्षीरित्यभिप्रायः । एवं तावदिदमवगृह्यमिदमनवगृह्यमित्यर्थपरिज्ञानद्वारेण तस्मादेतन्निरुक्तशास्त्राद्विज्ञायते ।

यान्यपि च खल्वनवगृह्याणि पदानि समानसंहितानि तेषामप्यर्थकृतमेव विभागवैशेष्यं भवति । तद्यथा 'दूतो निर्ऋत्या' इति । पञ्चम्यर्थप्रेक्षा वैतस्मिन्पदे षष्ठ्यर्थप्रेक्षा वा । पञ्चम्यर्थदर्शनं षष्ठ्यर्थदर्शनं वेत्यर्थः । पञ्चम्यर्थोऽत्र दृश्यते षष्ठ्यर्थो वा निरुच्यमाने । अत एतत् 'आःकारातं' पदं निर्ऋत्या इति ।

५ समानसंहितायामनवगृह्यपदेष्वपि पदविभागोऽर्थकृत एव

देवाः कपोत इषितो यदिच्छन्दूतो निर्ऋत्या इदमाजगाम । तस्मा अर्चाम कृणवाम निष्कृतिं शं नो अस्तु द्विपदे शं चतुष्पदे ॥

१० तस्योदाहरणे

ऋ० १०।१६५।१ ) । प्रचेता नामाङ्गिरसः । तेनेयं कपोतसूक्ते दृष्टा । कपोतनिलयनशान्त्यै कपोतपदनिर्हरण एतत्सूक्तम् [ आश्व० गृ० ३ । ७ । ७ ] । त्रिष्टुवेषा । हे देवाः कपोत इषितः प्रेषितो निर्ऋत्याः स्वभूतः तयैवानुप्रेषित

१५ इत्येवं षष्ठ्यर्थः । अथवा निर्ऋत्याः सकाशादेवं पञ्चम्यर्थः । यत्कर्तुमिच्छन्निदमस्मद्गृहमाजगाम यस्य नः पापस्य च पापकर्मणो जन्मान्तरकृतस्यैतत्कपोतगृहनिलयनं तत्पददर्शनं च कुड्यादिषु विपाकलिङ्गं तस्मै कर्मणे तदर्थं युष्मानेवार्चाम । समर्था यूयमेतत्पापं कर्म विपच्यमानमस्माकमपहर्तुं मृदुविपाकं वा कर्तुम् । वयमपि च तस्मै पापाय कर्मणे कृणवाम

२० निष्कृतिं निष्क्रमणं निर्णेजनं तपसैतद्व्रतानुरूपेण । यतो ब्रूमः शं नः सुखं नोऽस्तु द्विपदे चतुष्पदे । युष्मत्प्रसादेन च स्वेन च तपसेत्यभिप्रायः ।

---

१ च. संस्कृतबर्हिषि. २ ठ. एतस्मा°. ३ क. ख. घ. झ. वा अस्मिन्; ट. वा अस्मिन्° एत. ४ घ. झ. ट. ठ. निरुच्यमानोऽत°; च. निरुच्यमाने अत°

२५ नोऽ. ५ ग. इति । २७ । देवाः°; च. ज. इति । २८ । देवाः°. ६ ग. कपोत इषितो०चतुष्पदे; घ. झ. ट. कपोत०चतुष्पदे. ७ क. ख. घ. झ. ट. °शादित्येवं. ८ घ. ट. जन्मांतस्यैतत्क°. ९ घ. झ. ट. 'च' नास्ति. १० क. ख. घ. झ. ट. ठ. पापकर्म. ११ घ. ट. निःक्रमणं. १२ ग. च. ज. निर्नेजनं; ठ.

२९ 'निर्णेजनं' नास्ति, १३ घ. झ. ट. °पसा तद्व्र°. १४ ठ. °पदे शं चतुः°.

'परो निर्ऋत्या आचक्ष्वेति'। एतस्मिन्पदे चतुर्थ्यर्थदर्शनम्। अत एतत्पदमैकारान्तम्[1]। अपेहि मनसस्पतेऽप क्राम परश्चर। परो निर्ऋत्या आ चक्ष्व बहुधा जीवतो मनः [ ऋ० सं० १०। १६४। १ ]॥

प्रचेता आङ्गिरस[3] एतामनुष्टुभमपश्यत्। दुःस्वप्नदर्शने विनियुक्ता। मन इति हि[4] विज्ञानमुच्यते बुद्ध्यादि। तस्य पतिर्मनसस्पतिरात्मा। इह पुनर्मृत्युर्व्याधिर्वा मनसस्पतिः। उभावपि स्वकृतकर्मापेक्षया प्राणिनां बुद्ध्यादिविज्ञानोपसंहारस्येशाते। तयोरन्यतरः[5] संबोध्यते[6]। हे मनसस्पते अपेहि अपगच्छास्मत्तः। मा च त्वमीषदपगम्यास्मत्तः समीप एव स्था अस्माकम्। किं तर्हि। अपक्राम दूरमपेत्य क्राम। अपक्रम्य च परः परतोऽन्यतोऽस्मत्तश्चरापुनरावर्तमानोऽस्मान्प्रति। किं च परः परागत्य यस्यास्त्वं दूतो निर्ऋत्या तस्यै आचक्ष्व। किमिति। बहुधा जीवतो मम[7] मनः। अथवा परः प्रकृष्ट[8] आप्तस्त्वं तस्या निर्ऋत्या दूतो मां प्राप्तोऽविज्ञातमरणकाल एवातिसंमोहात्। अतो ब्रवीमि। तस्यै निर्ऋत्यै गत्वा बहुधानेकप्रकारमाचक्ष्व कथय। जीवतो यादृशं मनो भवति तादृशं मम मनो बुध्द्यधिकरणं[9] ज्ञानं दिनकरकिरणस्पृष्टवृत्ति[10]। न तावत्स[11] मुमूर्षुरित्येतदाचक्ष्व। मुमूर्षोर्ह्युपक्षीणकर्मणो नातिस्पष्टा इन्द्रियवृत्तयो भवन्ति। न च मम तथेत्यभिप्रायः। एवं समानसंहितानामपि पदानामर्थभेदकृतं विभागवैलक्षण्यम्। स[12] चार्थं इदमन्तरेण न विज्ञायते। अत इदमुक्तं 'अथापीदमन्तरेण पदविभागो न विद्यते' इति।

पदविभागप्रसक्तमधुना संहितालक्षणमाह। 'परः संनिकर्षः संहिता' इति। परः प्रकृष्टो यः संनिकर्षः संश्लेषः परस्परेण स्वराणां स्वराधिरूढानां[13] व्यञ्जनानां सा संहितेत्युच्यते। सा च[14]

१ ग. च. ज. °रान्तम्। २९। अपे°. २ ग. मनसस्पते०मनः; ब. ट. मनसस्पते० बहुधा जीवतो मनः; झ. मनः०तो मनः. ३ क. ख. घ. झ. ट. ठ. प्रचेता नाम आङ्गिरस°. ४ क. ख. घ. ट. 'हि' नास्ति. ५ ग. ज. अन्यः सं°. ६ च. संबध्यते. ७ घ. ट. ममतः। अथ°; झ. मम मतः अथ°. ८ क. ख. ग. ज. प्रकृष्ट आप्त°. ९ क. ख. घ. झ. ट. ठ बुध्यादिकरणज्ञानं; च. बुध्याधि°. १० घ. ट. °किरणस्पृष्ट°. ११ घ. झ. न स मुमूर्षुस्तावदित्येत°; ट. न स मुमूर्षुस्तावदित्ये° स्तावत्सपाठः; ठ. तावत्सं मु°. १२ ग. ज. सर्वार्थ°; च. सर्वार्थ° चा. १३ क. ख. घ. झ. ठ. रूढाणां; ट. रूढाणां° ना. १४ ठ. 'च' नास्ति.

**संहितालक्षणम्**

पुनरियं ‘ पदप्रकृतिः संहिता ’ [ ऋ० प्राति० २ । १ ]। अत्र द्विधा वर्णयन्ति । पदानां या प्रकृतिः सेयं पदप्रकृतिः संहिता । किं कारणम् । संहितातो हि पदानि प्रक्रियन्ते । तस्मात्संहितैव प्रकृतिर्विकारः पदानीत्येवमेके मन्यन्ते।

**किं संहिता प्रकृतिः पदानि वा**

अपरे पुनः पदप्रकृतिः संहितेति पदानि प्रकृतिर्[1]स्याः सेयं पदप्रकृतिरिति । किं कारणम् । पदान्येव हि संहन्[2]यमानानि संहिता भवति। तस्मात्पदान्येव हि[3] प्रकृतिर्विकारः संहितेति । एवं च कृत्वा ‘ पदप्रकृतीनि सर्वचरणानां पार्षदानि ’ । सर्वेषां चरणानां सर्वशाखा[4][5]न्तराणामित्यर्थः । किम् । पार्षदानि

**सर्वशाखासु पदानि प्रकृतिः**

स्वचरणपर्षद्येव यैः प्रतिशाखानियतमेव पदावग्रहंप्रगृह्याप्रगृह्य[6]क्रमसंहितास्वरलक्षणमुच्यते तानीमानि पार्षदानि । प्रातिशाख्यानीत्यर्थः । आह । किं तेषामिति । उच्यते । तानि पदप्रकृतीनि । पदं येषु संहितायाः प्रकृतित्वेन चिन्त्यते तानीमानि पदप्रकृतीनि । तेषामपि स एव समय इत्यभिप्रायः ।

आह । किं पुनरत्र साधीयः पदानां प्रकृतित्वं संहिताया विकारत्वमु[7]त वा विकारत्वं पदानां प्रकृतित्वं संहिताया इति। उच्यते संहितायाः प्रकृतित्वं ज्यायः । आह । किं कारणम् । उच्यते ।

**अत्र निर्णयः**

मन्त्रो ह्यभिव्यज्यमानः पूर्वमृषेर्मन्त्रदृशः संहितयैवाभिव्यज्यते न पदैः । अतश्च संहितामेव पूर्वमध्यापयन्त्यनूचाना ब्राह्मणा अधीयते [8]चाध्येतारः । अपि च यज्ञकर्मणि संहितयैव विनियुज्यन्ते मन्त्रा न पदैः । यदि हि पदानि प्रकृतिरभविष्यन्न संहिता पदैरेव मन्त्रोऽभिव्यज्येत पदानि च पूर्वमध्यापयिष्यन्ब्राह्मणा अध्यैष्यन्त [9]चाध्येतारः पदैरेव विन्ययोक्ष्यन्त मन्त्राः कर्मसु । न त्वेतत्सर्व-

---

१ क. ख. घ. झ. ठ. °कृतिर्यस्याः. २ क. ख. घ. झ. ट. च. संहत्यमा°; ठ. संहन्त्यँ°त्य. ३ क. ख. घ. झ. ‘हि’ नास्ति; ट. न्येव ˇप्र° हि. ४ घ. झ. शाखानां; ट. शाखानां° चरणानां. ५ ग. ज. °शाखानूत्तराणा°; च. °शाखान्तूरणा°. ६ ग. ज. प्रगृह्याप्रगृह्यं क्रम°. ७ घ. झ. ट. °रत्वमथवा°. ८ घ. झ. ट. वाध्येतारः; ठ. वाँध्ये° चा. ९ ठ. वाध्ये°.

मस्ति । तस्मादेतैर्विशेषहेतुभिः संहितैव प्रकृतिर्न पदानीति पश्यामः । समयमात्रमितरत्स्वशास्त्रनियतमेव । यदुक्तं पदप्रकृतीनि सर्वचरणानां पार्षदानि तेष्वेव हि व्याख्यायमानेषु पदानां प्रकृतित्वं भवति न सर्वत्रैव । तस्मात्संहितैव प्रकृतिरित्येतदेव साधीय इति ।

याज्ञे कर्मणि मन्त्रा लिङ्गेन विनियुज्यन्ते

'अथापि याज्ञे दैवतेन बहवः प्रदेशा भवन्ति' । अथेदमपरमारम्भप्रयोजनमस्य शास्त्रस्येत्येवं विशेषाधिकारार्थोऽयमथशब्दः । अपीदं वक्ष्यमाणमपि यान्युक्तानीत्येवमपिशब्दः संभावने । आह । किं पुनस्तदिति । उच्यते । याज्ञे कर्मणि प्रवर्तमाने दैवतेन बहवः प्रदेशा भवन्ति । दैवतेन लिङ्गेन बहवो विधिप्रदेशा भवन्ति । तद्यथा । 'उपतिष्ठते व्युच्छन्त्यामैन्द्र्या सह आग्नेय्याग्नीध्रं वैष्णव्या हविर्धानम्' इत्येवमादि । न्यायविदः

न्यायविदां याज्ञिकानां तदेव मतम्

खल्वपि याज्ञिकाः पठन्ति लिङ्गतो मन्त्राणां शेषभावमधिकृत्य 'लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नानम्' [ जै० न्या० ३ । २ । १९ ] इति 'अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात्' [ जै० न्या० ३ । २।२० ] इति चैवमादि ।

तत्रैवं सति 'तेचेद्ब्रूयुर्लिङ्गज्ञा अत्र स्म इति' । ते यद्यत्र ब्रूयुः । किमिति । लिङ्गज्ञा लिङ्गज्ञातारो वयमत्रैतस्मिन्नाम्नाये । लिङ्गतो वयमत्र या यस्मिन्देवता तां विजानीमो विज्ञाय च तद्दैवत एव कर्मणि विनियुञ्ज्महे तं मन्त्रम् । एवं च सति न नो निरुक्तशास्त्रेण प्रयोजनमस्तीति लिङ्गमस्माकं ज्ञापकमिति केचिद्वर्णयन्ति । त एवं ब्रुवन्तो वक्तव्या यदि यूयं लिङ्गतो मन्त्रदेवतां विजानीध्वे 'इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति' इत्येतस्मिन्मन्त्रे का देवतेति । आह । केन पुनरभिप्रायेणास्मिन्मन्त्रे देवता पृच्छ्यत इति । उच्यते । 'वायुलिङ्गं चेन्द्रलिङ्गं

---

१ ठ. °त्रैवमस्मात्सं°. २ ग. ज. साधीयत इति; च. स(सा)धीयत इति. ३ ग. ज. व्युच्छत्यामै°. ४ ग. झ. °क्रमसंख्यानात्कस्य युक्तं°; च. °क्रमसमाख्यानात्काम्येयु°. त्कस्य; ट. °क्रमसंख्यानात्कस्य युक्तं° समाख्यानात्काम्य; ठ. °क्रमसंख्यानकाम्य°. ५ क. ख. °कारे एवं च म°; घ. झ ट. °कारे एव च म°. ६ क. ख. ग. झ. ट. ठ. तां तत्र वि°. ७ क. ख. ग. ज. घ. झ. ट. विनियुञ्ज्महे.

१४

चाग्नेये मन्त्रे ’। अथ तावदयमाग्नेयो[1] मन्त्रः । अथ च तावदेतस्मिन्मन्त्र इन्द्रवायू अपि श्रूयेते । तदेतद्दुःपरिज्ञानं[2] लिङ्गमात्रेण कतमदत्र प्रधानं देवताभिधानं कतमदत्र नैघण्टुकमिति । ते चेद्याज्ञिका लिङ्गमात्रान्निरुक्तमनपेक्ष्य[3] मन्त्रान्कर्मसु विनियुञ्जाना गुणप्रधानभावमजानन्तो देवताभिधानानामेकमन्त्रगतानामन्यदेवतं मन्त्रमन्यदेवते कर्मणि विनियुञ्जीरंस्ततश्चायथाकरणात्कर्मासमृद्धिः स्यात् । न च केवलं कर्मासमृद्धिरेव । किं तर्हि । अपध्वंसोऽपि स्यादेव दुरिष्टहेतुकः । तस्मात्परिज्ञेयं निरुक्तम् । तेन हि गुणप्रधानभावः शक्यते विवेक्तुमेकमन्त्रगतानां[4] देवताभिधानानामिति । तदेतदेवं देवतापरिज्ञानद्वारेण पुरुषस्य प्रतिविशिष्टोपकारकारि । तस्मादुच्यते प्रारब्धुमिति[5] ।

निरुक्तशास्त्रज्ञानं विना केवलं लिङ्गतो मन्त्रविनियोगात्कर्मासमृद्धिरपध्वंसश्च

५

१०

त्वां हि मन्द्रतममर्कशोकैर्ववृमहे[6] महि नः श्रोष्यग्ने । इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति राधसा नृतमाः (ऋ०सं०६।४।७)॥ भरद्वाजस्यार्षम् । आग्नेयी । प्रातरनुवाकाश्विनयोर्विनियुक्ता[7] [आश्व० श्रौ० ४ । १३ ] । हे अग्ने त्वां हि त्वामेव मन्द्रतमं मृदुतमं सुखाराध्यतमम् । त्वं हि देवेषु सर्वेषु मृदुहृदयतमो यतोऽतस्त्वा[8]मेव ववृमहे संभजामहे । केन । अर्कशोकैः । एकपदमेतत् । अर्चनैर्मन्त्रैः शोकैर्दीप्तैर्यथोक्तब्रह्मचर्यजनितवीर्यैः । स नस्त्वं संभज्यमानैस्तैर्मन्त्रैः[9][10] संसेव्यमानो महि महत्स्तोत्रं तैरेव मन्त्रैर्युष्मद्गुणानुस्मृतिसंतानगर्भैरुपग्रथितं श्रोषि शृणु । किं चैवं त्वं महती देवता येन त्वामेवैकं देवता अपि सर्वा इन्द्रमिव च वायुमिव च शवसा बलेन बलैकृतिभिस्तुतिभिरभ्यर्चन्ति[11] किं पुनः स्वैः कर्मभिः । येऽपि च केचिदन्ये नृलोके नृणां मध्ये बलधनश्रुतैर्नृतमास्तेऽपि च त्वामेव पृणन्ति पालयन्ति[12] पूरयन्ति वा राधसा हविर्लक्षणेन धनेन । एवं सदेवमनुष्यस्य जगतः पूज्यस्त्वं न केवलमस्माकमिति ।

लिङ्गबाहुल्याद्देवतापरिज्ञानं दुर्लभम् । तस्योदाहरणम्

१५

२०

२५

---

१ च. ‘ अयं ’ नास्ति. २ घ. ट. दुःपरिज्ञात्तं; ठ. दुष्परि°. ३ क. ख. घ. झ. °कमुपेक्ष्य; ट. °क्तमुपे° मन. ४ क. ख. घ. झ. ट. ठ. विज्ञातुमेक°. ५ ग. च. ज. °मिति । ३० । त्वां°. ६ ग. मंद्रतममर्कशोकै० नृतमाः; घ. झ. ट. मंद्र० तमाः; च. मंद्रतममिति. ७ क. ख. घ. झ. ट. ठ. विनियोगः. ८ ठ. अतस्त्वं. ९ क. ख. घ. झ. ट. ठ. °स्त्वं भज्य°. १० घ. झ. ट. ‘ तैः ’ नास्ति. ११ घ. झ. ट. ठ. बलवतीभिः. १२ ग. ज. ‘पालयन्ति’ नास्ति.

३३

एवमयमाग्नेयो मन्त्रः । स एष लिङ्गमात्रदर्शनेनाविज्ञातप्रधानदेवतो विनियुज्यमान ऐन्द्रे वायव्ये वा कर्मणि कर्तुरभिप्रेतफलसिद्धये नालं स्यात् । कर्मवैगुण्याच्च कर्तुरपध्वंसाय स्यात् । तस्माद्विज्ञेयं मन्त्रदेवतानिश्चयज्ञानाय निरुक्तमिति ।

**अन्यदुदाहरणम्**

' अग्निरिव मन्यो त्विषितः सहस्व ' [ ऋ० सं० १० । ८४ । २ ] इति । यथा पूर्वस्मिन्नाग्नेये वायुलिङ्गमिन्द्रलिङ्गं च ' तथा ' एतस्मिन्नपि ' मान्यवे मन्त्रे ' अग्निलिङ्गं नैघण्टुकम् । एवमनेकदेवतालिङ्गसंकटेषु दुरवधारं देवतातत्त्वमनैरुक्तेनाप्रसिद्धमन्त्रव्याख्यानसमयेन । यदुक्तं लिङ्गज्ञातारो वयमत्र लिङ्गत एव मन्त्रान्कर्मसु विनियोक्ष्यामहे न नो निरुक्तेन प्रयोजनमस्तीत्येतदयुक्तमिति ।

' त्विषिरित्य[1]प्यस्य दीप्तिर्नाम[2] ' अपठितमपि दीप्तिनामसु । न केवलं यान्येव पठितान्यन्यान्यपीति ।

**निरुक्तशास्त्रस्यापरं प्रयोजनम्**

' अथापि ' इदमपरमारम्भप्रयोजनमस्य । आह । किमिति । उच्यते । ' ज्ञानप्रशंसा भवत्यज्ञाननिन्दा च ' । ज्ञानं च प्रशस्यतेऽज्ञानं च निन्द्यते । तत्रैवं सति[3] कथं नामानिन्द्याः स्याम प्रशस्याश्चेति परिज्ञेयं निरुक्तम् । अतो ह्य[4]ध्यात्माधिदैवाधियज्ञाभिधायिनां मन्त्राणामर्थाः परिज्ञायन्ते । ते च परिज्ञाताः सन्तः पुरुषस्योत्तमाय श्रेयसे भवन्ति । तदेवमखिलपुरुषार्थोपकारसमर्थं[5] शास्त्रमिति न्याय्यमारब्धुम्[6] । आह । क्व पुनर्ज्ञानं प्रशस्यतेऽज्ञानं च निन्द्यत इति । उच्यते । लोके[7] शास्त्रे च । लोके तावद्यः कश्चिद्विद्वान्भवति स पूज्यते पुण्यफलैर्विभिर्जनैः । तदेतत्प्रत्यक्षत एव दृष्टम्[8] । शास्त्रेऽपि[9] ॥ १७ ॥

---

१ ग. " अपि " नास्ति. २ क. ख. ग. ज. दीप्तिर्नाम. ३ क. ख. म. ज. °सति वयमनिन्द्याः; घ. झ. ट. ठ. °सति वयं कथं°. ४ क. ख. घ. झ. ट. हि आध्या°. ५ क. ख. घ. झ. ठ. समर्थशास्त्र°. ६ क. ख. °रब्धुम् ॥ १ ॥ आह°. ७ ग. च. ज. लोके वेदे च; घ. झ. ट. लोके वेदे शास्त्रे च. ८ ठ. दृष्टम् ॥ अज्ञाननिन्दा ज्ञानप्रशंसा शास्त्रेपि स्थाणु°. ९ क. ख. घ. झ. ट. ठ. अङ्को न विद्यते; ग. च. ज. ३१.

**स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्। योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा। यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते। अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्। स्थाणुस्तिष्ठतेरर्थोऽर्तेररणस्थो वा ॥ १८ ॥**

स्थाणुरयं भारहार इत्ये[1]वमादि। स्थाणुर्वृक्षः। स यथा पत्रपुष्पफलानामात्मीयानां धारणमात्रेणैव संबध्यते न तज्जैर्गन्धरसरूपस्पर्शोपभोगसुखैः। एवं[2] च किलासावधीत्य वेदं न विजानाति योऽर्थं तस्य वेदस्याध्यय[3]नभारमात्रमेव ह्यसौ बिभर्ति। योऽर्थज्ञ इत्सकलं भद्रमश्नुते। य एवार्थज्ञो भवति न ग्रन्थमात्राध्येता स एव सकलमनवखण्डितं भद्रमश्नुतेऽर्थ[4]परिज्ञानफलमश्नुते प्राप्नोति। किं पुनस्तत्। इह लोके पूज्यतामुपेत्य शिष्टानामितो लोकादन्तकाले नाकमेति। यत्रासुखं किंचिदपि नास्त्याध्यात्मिकमाधिदैविकमाधिभौतिकं वा तत्स्थानमेति निरतिशयम्। कस्मात्पुनरसावीदृशं स्थानमेतीति। इतो यस्मादसौ ज्ञानविधूतपाप्मा। ये हि नाकगमनप्रतिबन्धिनः पाप्मानस्ते तस्य ज्ञानेन विधूताः। अतोऽसावेति नाकम्। उक्तं चान्यत्रापि ' न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ' ( भ० गी० ४। ३८ ] इति। अथवा स्थाणुर्गर्दभः। स यथा चन्दनभारं वहत्येव न[5] तदुपभोगै[6]नाभिसंबध्यत एवं किलासौ यो ग्रन्थमात्राध्येता ना[7]र्थज्ञः। एवं तावदस्मिन् ज्ञानं प्रशस्तम्।

*स्मृतावज्ञाननिन्दा*

*ज्ञानप्रशंसा च*

अथैतास्मिन्नज्ञानं नि[8]न्द्यते। यद्गृहीतं गुरुमुखादज्ञा[9]तं चार्थतः किंचिन्निगदमात्रेणैव नित्यकालं शब्द्यत उच्चार्यते न पुनस्तै[10]रर्थतो विचार्यते।

१ क. ख. ढ. २; छ. तं. २३. २ क. ख. घ. झ. ट. 'एवं' नास्ति. ३ ग. ज. °ध्ययनं भा°. ४ घ. ढ. रर्थज्ञपरिज्ञा°. ५ क. ख. ग. ज. घ. झ. ढ. 'न' नास्ति. ६ क. ख. ग. ज. घ. झ. ट. °भोगैर्नाभि°. ७ ठ. °ध्येतानर्थज्ञः. ८ क. ख. घ. झ. ट. ठ. निन्द्यते। यद्गृहीतमविज्ञातमिति। यद्गृहीतं गुरु°; ग. च. ज. निन्द्यते ॥ ३२ ॥ यद्गृहीतं गुरु°. ९ क. ख. घ. झ. ट. ढ. °दविज्ञातं. १० क. ख. घ. झ. ट. ठ. 'तैः' नास्ति.

आह । किं तस्य । उच्यते । अनग्नाविव शुष्कैधः । शुष्कं काष्ठमनग्नौ प्रदेशे नालं ज्वलनाय प्रकाशाय । एवं यो वेदार्थस्यानभिज्ञोऽध्येता स वेदाध्ययनभारमात्रेणैव संबध्यते न तु तदीयेन फलेन । परिज्ञानं तु श्रेयसा चाभ्युदयेन च युनक्तीति । तस्मादेतत्परिज्ञानायावश्यं निरुक्तशास्त्रमारब्धव्यमिति ।

अज्ञाननिन्दा

स्थाणुशब्दमर्थशब्दं चोदाहरणाप्रसक्तौ निर्वक्ति । 'स्थाणुस्तिष्ठतेः' । स्थितो ह्यसौ नित्यकालमेव भवति न कदाचिदप्यासीदेति[1] । 'अर्थोऽर्तेः' गतिकर्मणः । अर्यते ह्यसावार्थिभिः । 'अरणस्थो वा' । यदा ह्यस्य स्वाम्यरति गच्छतीतो लोकादमुं लोकं तदायमिहैव तिष्ठति नानेनैव सहामुं लोकं गच्छति दीनारादिरर्थः । तत्सामान्यादितरोऽपि शब्दार्थोऽर्थ उच्यते ।

एवं तावच्छिष्टानुगमस्मृतौ ज्ञानं प्रशस्यतेऽज्ञानं च निन्द्यते[2]। न केवलं[3] स्मृतावेव ज्ञानप्रशंसाज्ञाननिन्दा च । किं तर्हि । वेदेऽपि प्रदर्शयति ॥१८॥

---

**उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् । उतो त्वस्मै तन्वं१ वि सस्रे जायेव पत्य उशती सुवासाः ( ऋ० सं० १० । ७१ । ४ ) ॥ अप्येकः पश्यन्न पश्यति वाचमपि च शृण्वन्न शृणोत्येनामित्यविद्वांसमाहार्धमप्येकस्मै तन्वं विसस्र इति स्वमात्मानं विवृणुते ज्ञानं प्रकाशनमर्थस्याहानया वाचोपमोत्तमया वाचा जायेव पत्ये कामयमाना सुवासा ऋतुकालेषु सुवासाः[4] कल्याणवासाः कामयमाना ऋतुकालेषु । यथा स एनां पश्यति स शृणोतीत्यर्थज्ञप्रशंसा[5] । तस्योत्तरा भूयसे निर्वचनाय ॥ १९ ॥**

---

१ क. °प्यासीदिति; घ. झ. ट. ठ. °प्यासीतेति; च. प्यासीदिति° ते. २ क. ख. °न्द्यते॥२॥ न°; ठ. °न्द्यते। न केवलं स्मृतावेव ज्ञानप्रशंसा । इति नि० व्याख्यायां षष्ठाध्याये अष्टादशः खण्डः ॥ न केवलं°. ३ क. ख. घ. झ. ट. ठ. अङ्को नास्ति; ग. च. ज. ३३. ४ छ. त. द. 'सुवासाः कल्याणवासाः कामयमाना ऋतुकालेषु' नास्ति. ५ क. ख. द. ३; छ. त. २४.

उत त्वः पश्यन्न ददर्श वाचमिति विद्यासूक्ते द्वे अप्येते ऋचौ । बृहस्पतेरार्षम् । उतशब्दोऽपिशब्देन समानार्थः । त्वः

वेदेऽज्ञाननिन्दा

एक इत्यर्थः । बहूनामपि समानपृष्ठोदरपाणिपादानां समानमेवाध्ययनमधीयानानामेकः कश्चित्प-
५ श्यन्नपि वाचं मनसा स्वभ्यस्ताध्ययनोऽपि तीक्ष्णविद्यः सन्न पश्यत्येवार्थानभिज्ञत्वात् । स हि तां सम्यक्पश्यति यस्तस्या अर्थं विजानाति । अर्थपरिज्ञानफला हि वागित्यभिप्रायः । एवमेकः शृण्वन्नपि न शृणोत्येवैनां वाचम् । य एव ह्यर्थमवबुध्यते वाचस्तेनैव हि सा सम्यक्श्रुता भवति नेतरेण । इतरो ह्यविद्वान्ध्वनिमात्रमेवोच्चारयति शृणोति वा वाचः । एवमने-
१० नार्धर्चेन 'अविद्वांसमाह' निन्दन्मन्त्रदृक् । सांप्रतमुत्तरेणार्धर्चेनार्थज्ञं प्रशंसन्नाह । उतो त्वस्मै अप्येकस्मै कस्मैचिदर्थज्ञाय

ज्ञानप्रशंसा च

तन्वं शरीरं विसस्रे विस्रंसयति विवृणोतीत्यर्थः । अर्थो वाचः शरीरम् । तं विवृत्यात्मानं दर्शयत्येकस्मै कस्मैचिदर्थज्ञाय । ' अर्थप्रकाशनमाहानया वाचा ' । अनेन तृतीयेन
१५ पादेनेत्यर्थः । कथं पुनर्विवृणुते तन्वमिति । यत ' उपमोत्तमया वाचा " उत्तमेन पादेनोच्यते ' जायेव पत्य उशती सुवासाः ' इत्यनेन । यथा हि जाया विवृतसर्वाङ्गावयवा भूत्वा उशती कामयमाना इष्टाय भर्त्रे प्रेम्णा दर्शयेदात्मानम् । कस्मिन्काले । यदा सुवासा भवति निर्णिक्तवासा भवति निर्णिक्तवासा नीरजस्का ' ऋतुकालेषु ' तदा ह्यतितरां
२० स्त्री पुरुषं प्रार्थयते । अत एतयाऽवस्थयोपमीयते । यथा स पुरुषस्तां यथावत्पश्यति स्त्रियं नेतरो यो घनपटप्रावृतसर्वगात्राम् । एवं स एवैतां वाचं यथावत्पश्यति यः पदशोऽवच्छिद्यैतां विगृह्य वाऽर्थमस्याः पश्यति समस्तव्यस्तम् । एवमस्यामृचीयं ' अर्थज्ञप्रशंसा ' ।

---

१ क. ख. घ. झ. ट. पश्यन्निति । विद्या°. २ च. समानाध्यय°. ३ क. ख.
२५ °रयति वाचम् । एव°; ग. °स्यति शृणोति वाचम् । एव°; घ. ट. स्यन्न मृणोति वाचम् । एव ;° झ. स्यन्नृणोति वाचम् । एव ;° ठ. °रयन्न शृणो°. ४ ग. ज. अप्येकस्मैचिद; घ. अप्येकस्मैविद°; ट. अप्येकस्मैकस्मैचिद°. ५ क. ख. घ. झ. ट. विवृणोत्यात्मा°. ६ घ. ट. °त्येकस्मैचिद°. ७ घ. झ. कथं हि पुन°. ८ ग. ज. ' निर्णिक्तवासा भवति ' नास्ति. ९ घ. झ. ट, °श्यति यः पश्यति यः
३० पदशो°. १० ग. ज. झ. चार्थ°.

अपीयमपरा ऋगस्या एव 'उत्तरा' अस्यैवार्थस्य प्रकृतस्य ज्ञानप्रशंसाख्यस्य फलाभिधानद्वारेण 'भूयसे' बहुतरयामुना फलेनाभिसंबन्धात्प्रतिविशिष्टं ज्ञानमित्येवं निर्विबिच्य निर्धार्य वचनाय निर्वचनाय ।[1] तद्यथा ॥ १९ ॥[2]

---

उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु । अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् [ऋ० सं० १० । ७१ । ५] ॥ अप्येकं वाक्सख्ये स्थिरपीतमाहू रममाणं विपीतार्थं देवसख्ये रमणीये स्थान इति वा विज्ञातार्थं यं नाप्नुवन्ति वाग्ज्ञेयेषु[3] बलवत्स्वप्यधेन्वा ह्येष चरति मायया वाक्प्रतिरूपया[4] नास्मै कामान्दुग्धे वाग्दोह्यान्देवमनुष्यस्थानेषु यो वाचं श्रुतवान्भवत्यफलामपुष्पामित्यफलास्मा अपुष्पा वाग्भवतीति वा किंचित्पुष्पफलेति वार्थं वाचः पुष्पफलमाह याज्ञदैवते[5] पुष्पफले देवताध्यात्मे वा[6] साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्त्संप्रादुरुपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च बिल्मं भिल्मं भासनमिति वैतावन्तः समानकर्माणो धातवो धातुर्दधातेरेतावन्त्यस्य सत्त्वस्य नामधेयान्येतावतामर्थानामिदमभिधानं नैघण्टुकमिदं देवतानामप्राधान्येनेदमिति तद्यदन्यदैवते मन्त्रे निपतति नैघण्टुकं तत्[7] । अश्वं न त्वा वारवन्तम्[8] । अश्वमिव त्वा वालवन्तं वाला दंशवारणार्था भवन्ति दंशो दशतेः । मृगो न भीमः कुचरो गिरिष्ठाः । मृग इव भीमः कुचरो गिरिष्ठा मृगो

---

१ क. ख. घ. झ. ट. ठ. °त्येवं निर्वचनाय । निर्विबिच्य निधार्य वचनं कथनं निर्वचनं तस्मै निर्वच°. २ क. ख. ३; ग. ३४ । २४; च. ज. ३४; घ. झ. ट. अङ्को नास्ति; ठ. इति निरुक्तव्याख्यायां षष्ठाध्याये एकोनविंशः खण्डः. ३ ङ. वाग्न्येयेषु° ग्ये; छ. वाङ्नेयेषु; त. वाज्ञेयेषु° ज्ञे. ४ ठ. °तिभूतया. ५ ठ. देव° दै. ६ क. ख. द. °ध्यात्मे वा ॥४॥ साक्षा°; छ. त. °ध्यात्मे वा ॥२५॥ साक्षा°. ७ कं. ख. द. तत् ॥ ५ ॥ अश्वं; छ. त. तत् ॥ २६ ॥ अश्वं°. ८ ङ वारवन्तं.

मार्ष्टेर्गतिकर्मणो भीमो बिभ्यत्यस्माद्भीष्मोऽप्येतस्मादेव । कुचर इति चरति कर्म कुत्सितमथ चेद्देवताभिधानं क्वायं न चरतीति गिरिष्ठा गिरिस्थायी गिरिः पर्वतः समुद्गीर्णो भवति पर्ववान् पर्वतः पर्व पुनः पृणातेः प्रीणातेर्वार्धमासपर्व

५ देवानस्मिन् प्रीणन्तीति तत्प्रकृतीतरत्सन्धिसामान्यान्मेघस्थायी मेघोऽपि गिरिरेतस्मादेव तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते [1] तदुपरिष्टाद्व्याख्यास्यामो नैघण्टुकानि नैगमानीहेह ॥ २० ॥

उत त्वं सख्ये स्थिरपीतमाहुरिति । अप्येकं अपि बहून् । विदुषः

१० सख्ये सखिभावे । कतरस्मिन् । देवसख्ये । देवानां समानख्यानतायां देवसायुज्य इत्यर्थः । वक्ष्यति हि ' यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्य-[2]मनुभवति ' (निरु० १३ । १३) इति । अथवा

ज्ञानप्रशंसार्थान्या ऋक् । देवसख्ये रमणीये स्थाने । यस्मिन्देवानां सखिभावस्तद्देवसख्यं स्थानम् । तस्मिन्देवसख्ये रमणीये स्थाने देवलोक इत्यर्थः । किमिति । स्थिरं

१५ अविचालिनमप्रच्यवनधर्माणम् । कमेवमाहुः । विपीतार्थं आपीतार्थं गृहीतार्थमित्यर्थः । क एवमाह । इयमेव वाक् ऋक्संज्ञिका । किंच । नैनं हिन्वन्त्यपि वाजिनेषु । एनं वागर्थज्ञं न हिन्वन्ति नानुगन्तुं शक्नुवन्ति । केषु । वाजिनेषु वाग्ज्ञेयेष्वर्थेषु [3] बलवस्त्वपि दुर्ज्ञेयेषु दुरवघटनीयेषु [4] समुद्रपिहितरत्नसं-

२० निभेषु देवतापरिज्ञानादिषु व्याकर्तव्येषु । स हि तान्व्याकर्तुं शक्नोति । नेतरे मन्दबुद्धयो बहवोऽपि समागताः शक्नुवन्ति तानर्थान्व्याकर्तुं यानसौ व्याकरोति । अत एतदुक्तं ' नैनं हिन्वन्त्यपि वाजिनेषु ' इति । एवं तावदर्थज्ञः प्रशस्तः ।

अथेदानीमविद्वानुत्तरेणार्धर्चेन निन्द्यते । अधेन्वा चरति । अधेन्वा ह्येष

२५ चरति [5] । न हि सा वाग्धिनोतीह न परत्र च यस्या अर्थो न परिज्ञायते । तया गृहीतयैव तामधीयान इतश्चेतश्च चरति । तत्प्रधान एव सर्वतः पर्य-

१ क. ख. ६; छ. त. २७; ङ. द. अङ्को नास्ति २ व. ट. 'तस्याः' सकृदेव. ३ ग. ज. वाज्ञेये°; च. वाज्ञेये° ग्ज्ञे. ४ घ. झ. ट. दुरववघघटनीयेषु; च.

२९ दुरवघाटनीयेषु ५ घ. झ. ट. वराति.

टतीत्यभिप्रायः । किं च माययैव चरति गृहीतया। यथा हि कश्चिन्मायया सुवर्णं बिभृयादेवमयमवाचमेतां बिभर्ति । सा तादृशी ध्रियमाणा यार्क्किं करोति । नास्मै कामान्दुग्धे । कतमान् । ये तस्या वाचो दोग्धव्याः । क । देवतास्थानेषु मनुष्यस्थानेषु च । यः किं करोति । य एवं शुश्रुवान् श्रुतवान्भवति । कथम् । अफलामपुष्पामिति । एवं यः श्रुतवान् भवत्यन्येभ्यः सकाशाच्छ्रुत्वा च दृढग्राहेण गृहीत्वावस्थितो भवत्यध्ययनादृते नान्यदस्ति वाचि किंचिन्मृग्यमिति । तस्मै किमिति । अफलैवास्मै अपुष्पा च वाग्भवति । यथैव ह्यसौ पश्यत्यफलेयमपुष्पा चेति तथैव भवतीत्यभिप्रायः। अथवा किंचित्पुष्पफलेति वा । एतदुक्तं भवत्यल्पफलामल्पपुष्पामिति । किं कारणम् । अस्ति ह्यध्ययनमात्रेऽपि किंचिदल्पं[1] फलम् । नासौ परिश्रमो व्यर्थ एवेति भाष्यकाराभिप्रायः। आह। किं पुनर्वाचः पुष्पफलमिति । उच्यते । 'अर्थं वाचः पुष्पफलमाह' एतस्मिन्मन्त्रे मन्त्रदृक् । आह । कः पुनरसावर्थ इति । याज्ञं दैवतमध्यात्ममित्येष वाचः समासतोऽर्थः । स पुनरेष रूपक[2]कल्पनया पुष्पफलविभागेन द्विधा प्रविभज्यते 'याज्ञदैवते पुष्पफले दे[3]वताध्यात्मे वा' इति । यज्ञपरिज्ञानं याज्ञं देवतापरिज्ञानं दैवतमात्मन्यधि यद्वर्तते तदध्यात्मम् । स एष सर्वोऽपि मन्त्रब्राह्मणराशिरेव त्रिधा[4] विभक्तः । तत्रैवं सति यदाभ्युदयलक्षणो धर्मोऽभिप्रेयते तदा याज्ञं पुष्पं दैवतं फलम् । किं कारणम् । पूर्वं हि पुष्पं भवति फलार्थम् । याज्ञमपि च पूर्वं तन्यते देवतार्थं चेत्येतस्मात्सामान्याद्याज्ञं पुष्पं दैवतं फलम् । यदा पुनर्निःश्रेयसलक्षणो धर्मोऽभिप्रेयते तदोभे अपि याज्ञदैवते पुष्पत्वमेव बिभृतः। दैवते हि याज्ञमन्तर्भूतमेव तदर्थत्वादतो न पृथगुच्यते । तत्पुन[5]रे[6]तदधिदैवतं सर्वमपि प्रतिविशिष्टज्ञानेनोपासकेन मुमुक्षुणा निरूप्य चेतसात्मानमेव प्रत्यभिसंपाद्यते कार्यकरणाधिदे[7]वताद्वारेण । सोऽयमेवमधि-

तस्यामेवाज्ञाननिन्दा

वाचः पुष्पफले याज्ञदैवते देवताध्यात्मे वा

१ ग. ज. °दल्पफलम्; ठ. 'दल्पं' ल्पं. २ क. ख. घ. झ. ट. ठ. रूपकल्प°. ३ क. ख. घ. झ. ट. दैवता°. ४ ग. ज. त्रेधा. ५ क. ख. ग. ज. घ. झ. ट. ठ. यत्पुन°. ६ क. ख. घ. झ. ट. ठ. 'एतद्' नास्ति. ७ ग. ज घ. झ. ट. °धिदैवता°.

दैवतमधियज्ञं[1] चोच्छिद्याध्यात्ममेवाभिसंपादयति यथा पुष्पभावमुच्छिद्य पुष्पं फलभावायेति । एवं सोऽयमात्म[2]याज्येवाभिसंपद्यते । तत्रैवं सत्यध्यात्मार्थत्वादधिदैवस्याध्यात्मे[3] च[4] पुरुषार्थस्य निष्ठाना[5]द्दैवतं पुष्पमध्यात्मं फल-[6]मित्येव युक्तम् ।

५ आह । कुतः पुनरिदमायातं निरुक्तशास्त्रं[7] प्रधानमितराणि चाङ्गानीति । उच्यते[8] । 'साक्षात्कृतधर्माण ऋषयो बभूवुः' । साक्षात्कृतो यैर्धर्मः साक्षाद्दृष्टः प्रतिविशिष्टेन तपसा त इमे साक्षात्कृतधर्माणः । के पुनस्त इति । उच्यते । ऋषयः । ऋषन्त्यमुष्मात्कर्मण एवमर्थवता मन्त्रेण [9]संयुक्तादमुना प्रकारेणैवंलक्षणः

साक्षात्कृतधर्मभिरसाक्षात्कृतधर्मभ्यो मन्त्रदानम्

१० फलविपरिणामो भवतीत्यृषयः[10] । 'ऋषिर्दर्शनात्' इति वक्ष्यति ( नि० २ । ११ ) । तदेतत्कर्मणः साक्षात्फलविपरिणामदर्शनमौपचारिक्या वृत्त्योक्तं साक्षात्कृतधर्माण इति । न हि धर्मस्य दर्शनमस्त्यत्यन्तापूर्वो हि धर्मः । आह । किं तेषामिति । उच्यते । 'तेऽवरेभ्योऽसाक्षात्कृत-

१५ तधर्मभ्य उपदेशेन मन्त्रान्संप्रादुः' । ते ये साक्षात्कृतधर्माणस्तेऽवरेभ्योऽवरकालीनेभ्यः शक्तिहीनेभ्यः श्रुतर्षिभ्यः[11] । तेषां हि श्रुत्वा ततः पश्चादृषित्वमुपजायते न यथा पूर्वेषां साक्षात्कृतधर्मणां[12] श्रवणमन्तरेणैव । आह । किं तेभ्य इति । तेऽवरेभ्य उपदेशेन शिष्योपाध्यायिकया वृत्त्या मन्त्रान्ग्रन्थतोऽर्थतश्च संप्रादुः संप्रत्तवन्तः । तेऽपि चोपदेशेनैव[13] जगृहुः ।

२० अथ तेऽपि 'उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासि-

---

१ झ. ट. °वतमाधि°. २ घ. ट. °मात्मा याज्ये°. ३ क. ख. ग. ज. घ. झ. ट. ठ. °स्याध्यात्मस्य. ४ ग. ज. 'च' नास्ति. ५ क. ख. निष्पन्नत्वात्; ग.ज. नि—नत्वात्; ध. झ. ट. न निष्पन्नत्वात्; ठ. न निष्पंनत्वात्. ६ क. ख. फलमित्युक्तम् ॥ ४ ॥ आह°; घ. झ. ट. ठ. फलमित्युक्तं आह°. ७ ग. ज. निरुक्तं शास्त्रप्रधानं; च. निरुक्तं शास्त्रमितरा;° ठ. नैरुक्त°. ८ ग. °ते ॥ २५ ॥ सा°. ९ घ. ट. मन्त्रेण युक्ता°. १० ठ. भवतीति पश्यन्ति त ऋषयः. ११ ग. ज. श्रुतऋषिभ्यः; च. श्रुतर्ऋषिभ्यः. १२ ग. च. ज. घ. ट. ठ. °धर्माणां १३ ग.

२८ घ. झ. 'एव' नास्ति; ट. °शेनै° ज. °नैव.

पुर्वेदं च वेदाङ्गानि च ' इति । उपदेशायोपदे-

सौकर्येणोपदेशग्रहणाय वेदवेदाङ्गानामसाक्षात्कृतधर्मभिः समाम्नानम्

शार्थम् । कथं नामोपदिश्यमानमेते शक्नुयुर्ग्रहीतुमित्येवमर्थमधिकृत्य ग्लायन्तः खिद्यमानास्तेष्वगृह्णत्सु तदनुकम्पया तेषामायुषः संकोचमवेक्ष्य कालानुरूपां च ग्रहणशक्तिं बिल्मग्रहणायेमं ग्रन्थं गवादिदेवपत्न्यन्तं समाम्नातवन्तः । किमेतमेव । नेत्युच्यते । वेदं च वेदाङ्गानि चेतराणीति । कथं पुनः समाम्नासिषुरिति । आह । शृणु । वेदं तावदेकं सन्तमतिमहत्त्वाद्दुरध्येयमनेकशाखाभेदेन समाम्नासिषुः । सुखग्रहणाय व्यासेन समाम्नातवन्तः । तद्यथा । एक-

समाम्नानप्रकारः

विंशतिधा बाह्वृच्यमेकशतधाध्वर्यवं सहस्रधा सामवेदं नवधाथर्वणम् । वेदाङ्गान्यपि । तद्यथा । व्याकरणमष्टधा निरुक्तं चतुर्दशधेत्येवमादि । एवं समाम्नासिषुर्भेदेन ग्रहणार्थम् । कथं नाम भिन्नान्येतानि शाखान्तराणि लघूनि सुखं गृह्णीयुरेते शक्तिहीना अल्पायुषो मनुष्या इत्येवमर्थं समाम्नासिषुरिति ।'

बिल्मशब्दं भाष्यत्रांक्यप्रसक्तं निर्ब्रवीति । यदेतत् ' बिल्म ' इत्युक्तमेतत् ' भिल्मं ' वेदानां भेदनम् । भेदो व्यास इत्यर्थः । ' भासनमिति वा ' । अथवा भासनमेव बिल्मशब्देनोच्यते । वेदाङ्गविज्ञानेन भासते प्रकाशते वेदार्थ इत्यत इदमुक्तं बिल्ममिति । एवं भिदेर्भासतेर्वा बिल्मशब्दः । एवमिदमृषिभ्यो निरुक्तशास्त्रमायातमितराणि चाङ्गानीति परिशोधित आगमः ।

अथेदानीं निघण्टुसमाम्नायविरचना वक्तव्या प्रकरणत्रयविभागेन सुखव्याख्यानार्थमस्य शास्त्रस्य । सेयमुच्यते ।

निघण्टुसमाम्नायस्य प्रकरणत्रयम्

' एतावन्तः समानकर्माणो धातव एतावन्त्यस्य सत्त्वस्य नामधेयानि ' इति । स एवं पदराशिर्नै-

१ क. ख. घ. झ. ट. ठ. °मानमर्थमेते°. २ क. ख. घ. झ. ट. ट. °र्गृहीतुं. ३ क. ख. मित्येतमधि°; घ. झ. ट. °मित्येतवमर्थं°. ४ क. ख. घ. झ. ट. ठ. बिल्मग्रहणं. ५ घ. झ. ट. ठ. भाष्यकारप्र°. ६ क. ख. °मागत°; घ. ट. °मागयात°. ७ घ. झ ठ. ढ. °त्रयसंविभागेन°. ८ ग. च. ज. ठ. °कर्मणो°. ९ च. एकः.

नैघण्टुकम्

घण्टुकं नाम प्रकरणम् । एतावन्त इति या चैषु धातुषु चाख्यातपदेषु प्रतिनियता संख्या साभिप्रेयते । तद्यथा । 'गतिकर्माण उत्तरे धातवो द्वाविंशं शतम्' [ नि० २ । ९ ] 'कान्तिकर्माण उत्तरे धातवोऽष्टादश' [ निरु० ३ । ९ ]
५ इत्येवमादि । एतावन्त्यस्य सत्त्वस्येति नामधेयप्रतिनियता संख्याभिप्रेयते । तद्यथा । 'पृथिवीनामधेयान्येकविंशतिः' [ निरु० २ । ७ ] 'हिरण्यनामान्युत्तराणि पञ्चदश' [ निरु० २ । १० ] इत्येवमादि । यत्रैतावर्थौ प्रायेण चिन्त्येते प्रसङ्गतोऽन्यद्यत्किंचित्तदेतदेवंलक्षणं नैघण्टुकं नाम प्रकरणं गवादि प्राग्जहाशब्दात् [ निघ० अध्या० १—३ ] ।

ऐकपदिकम्

१० अथ पुनर्यत्र 'एतावतामर्थानामिदमभिधानं' इत्यर्थः प्रायेण चिन्त्यते । तद्यथा । 'आदित्योऽप्यकूपारः समुद्रोऽप्यकूपारः [ निरु० ४ । १८ ] इत्येवमादिः । अनवगतसंस्काराश्च निगमा जहादयः प्रायेण चिन्त्यन्तेऽनुषङ्गतोऽन्यद्यत्किंचित्तदेतदेवंलक्षणमैकपदिकं नाम
१५ प्रकरणं जहादि प्रागग्निशब्दात् [ निघ० अध्या० ४ ] ।

दैवतम्

अथ पुनर्यत्र नैघण्टुकं देवतानामास्मिन्मन्त्र इदमन्यदत्र प्राधान्येन वर्तत इत्ययं विभागः प्रायेण चिन्त्यते तदेवंलक्षणं प्रकरणं दैवतं नामाग्निशब्दादि देवपत्न्यन्तम् । ( निघ० अध्या० ५ ) । तान्येतानि
२० त्रीणि प्रकरणानि नैघण्टुकमैकपदिकं दैवतमिति । अनेन प्रकरणत्रयविभागप्रपञ्चेनेदमवस्थितं निरुक्तशास्त्रमिति ।

नैघण्टुकदेवतानाम्नो लक्षणम्

'तद्यदन्यदेवते मन्त्रे निपतति नैघण्टुकं तत्' । इदमुक्तं 'नैघण्टुकमिदं देवतानाम प्राधान्येनेदमिति' । तत्र न ज्ञायते किमिदमुक्तं भवति । तदेतल्लक्षणत उप-
२५ दिश्यत इति पर्युपयुक्तस्तच्छब्दः । यदभिधानमन्यदेवते । अन्या यस्मिन् प्रधानदेवता सोऽयमन्यदेवतः । तस्मिन्नन्यदेवते मन्त्रे स्वमर्थमन्यस्यां प्रधानायां मन्त्रदेवतायां

---

१ घ. झ. ट. चैषु. २ क. ख. ढ. व्याख्यात°; झ. वाख्यानपदेषु. ३ क. ख. ग. ज. नामसु प्रति ; घ. झ. °स्येति या नामसु प्रति°; ट. °स्येति या नामसु प्रति' नामधेय. ४ घ. झ. ट. संख्या साभिप्रे°. ५ ढ. 'एतत्' नास्ति. ६ घ. झ. ट. ढ. तदेतद्देवं.° ७ घ. ट. ठ. दैवमिति. ८ क. ख. ग. च. ज. ढ. °न्यदैव°. ९ क. ख ढ. °न्यदैव°.

न्निगमयत्पतति प्रयुज्यमानमङ्गभावं गच्छति मन्त्रवाक्ये नैघण्टुकं तदित्युच्यते । गुणभूतमित्यर्थः । संज्ञा हि तस्येयमस्मिञ्छास्त्रे । तद्यथा ।

अश्वं न त्वा वारवन्तं वन्दध्यां अग्निं नमोभिः । सम्राजन्तमध्वराणाम्
( ऋ० सं० १ । २७ । १ ) ॥ अश्वामृच्यश्वो

नैघण्टुकदेवतोदाहरणम्

नैघण्टुकोऽग्निः प्रधानम् । शुनःशेपस्यार्षम् । गायत्री । वारवन्तीयानुशंसने विनियुक्ता । साम्नश्च वारवन्तीयस्यैषा योनिः । अश्वं न त्वा अश्वमिव त्वा हे अग्ने अग्निं अग्रेनेतारं देवानां वारवन्तं वालवन्तं वृषाश्वम् । स ह्यातितरां वालवान्भवति वन्द्यते परिचर्यते च न तथान्ये । तमिव त्वां वन्दध्यै वन्दामहे स्तुमो नमोभिर्नमस्कारैरन्नैर्वा हविर्भिरुद्यतैः । क्व पुनरवस्थितं कथं वा वन्दामह इति । सम्राजन्तं दीप्यमानमध्वराणां यज्ञानां मध्येऽवस्थितमुत्तरवेद्यादिषु धिष्ण्येष्वभिप्रेतार्थसिद्धये वन्दामहे ।

वालशब्दस्य निगमप्रसक्तस्य निर्वचनम् । 'वाला दंशवारणार्था भवन्ति' । तैर्हि दंशादयो निवार्यन्ते । दंशशब्दस्य प्रसक्तानुप्रसक्तस्य निर्वचनं 'दंशो दशतेः' इति । दशति ह्यसौ ।

द्वितीयमुदाहरणम् । मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः । सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून्ताळ्हि वि मृधो नुदस्व [ ऋ० सं० १० । १८० । २ ] ॥

तत्रैव द्वितीयोदाहरणम्

जयो नामेन्द्रपुत्रः । तस्येयमार्षम् । त्रिष्टुप् । वैमृधस्य हविषो याज्या [ आश्व० श्रौ० २ । १० ] । इन्द्रोऽस्य प्रधानं मृगो नैघण्टुकः । मृगो न मृग इव व्याघ्रो वा सिंहो वा । भीमो भीषणः कुचरः कुत्सितचरणो हिंस्रः प्राणिवधजीवनः । गिरिष्ठाः पर्वताश्रयः । स यथा

---

१ ग. ज. निगमयत्सभिप्रयुज्य.° २ क ख. °च्छास्त्रे ॥ ५ ॥ तद्य;° ग. °च्छास्त्रे ॥ ३५ । २६ खण्डः ॥ तद्य;° च. ज. °च्छास्त्रे ॥ ३५ ॥ तद्य°. ३ ग. त्वा०मध्वराणाम् ; घ. झ. ट. त्वा०अध्वराणाम्. ४ क. ख. ग. ज. ठ. °अग्रे ने°. ५ घ. झ. ट. देवतानां. ६ घ. झ ट. 'नमोभिः' नास्ति. ७ ठ बाल°. ८ ठ. बाला°. ९ ग. च. ज. °णम् ॥ ३६ ॥ मृगो°. १० ग. च. ज. घ. झ. ट. भीम इति. ११ क. ख. ग. च. ज. ठ. गयो. १२ घ. झ. ट. भीषणं.

कंचिदन्यं प्राणिविशेषं हन्ति तैर[1]नभिभूयमानः । परावतः परस्मादतिदूर[2]-स्थानात्परस्याः दिवः संबन्धिन आगच्छ[3] । एतदर्थमागत्य चेह कर्मणि हे इन्द्रैतदस्मद्वचः कुरु । सृकं यः शत्रुकार्येषु सर्तुं शक्नोति तं पविं वज्रं संशाय तीक्ष्णीकृत्य तिग्मं छेदनायोत्साहवन्तं सुनिशितं कृत्वा ततो विताळ्हि विताडय एतानस्मच्छत्रून् । एकप्रहारवर्जितदेहान्कुरुष्व । यानपि च न हिनस्सि कथंचित्तानपि हिंसकान्विनुदस्व नानाप्रकारं प्रेरयस्व दूरमपुनरागमनाय ।

' अथ चेद्देवताभिधानं ' एतत्कुचर इति ततः ' क्वायं न चरतीति ' सर्वत्र चरतीति । ' गिरिष्ठा मेघस्थायी ' इति च । अनुपक्षीणशक्तयो हि विभवो वेदशब्दा यथाप्रज्ञं पुरुषाणामर्थाभिधानेषु विपरिणममानाः सर्वतोमुखा अनेकार्थान्ब्रुवन्तीत्येतदनेन प्रदर्शितं भवतीत्यथ चेद्देवताभिधानमिति ।

वैदिकशब्दानां सर्वतोमुखत्वम्

मृगादिशब्दान्निगमप्रसक्तान्निर्ब्रवीति । 'मृगो मार्ष्टेर्गतिकर्मणः' । नित्यं ह्यसौ गच्छति । ' भीमो बिभ्यत्यस्मात् ' । सर्व एव ह्यस्माद्बिभेति । भीष्मशब्दं सारूप्यप्रसक्तं निराह ' भीष्मोऽप्येतस्मादेव ' इति । ' कुचर इति चरतिकर्म कुत्सितम् ' । चरति ह्यसौ कर्म कुत्सितं व्याघ्रो वा सिंहो वा । क्वायं न चरतीति देवताभिधानत्वे । 'गिरिः समुद्गीर्णो भवति'[10] । समस्तो ह्यसावुद्गीर्ण इव भूमौ भवति । पर्वतशब्दं पर्यायाख्यानु[11]प्रसक्तं निराह 'पर्ववान्पर्वतः' इति । शिलाशिख[12]रसंधिभिरसौ तद्वान्हि[13] भवति । पर्वशब्दं विग्रहप्रसक्तं निराह । ' पर्व पुनः पृणातेः ' पूरणार्थस्य । पूरयन्ति हि ते शिलाशिखरसंधयोऽखिलं पर्वतम् । ' प्रीणातेर्वा ' तर्पणार्थस्य । तत्पुनरेतत् ' अर्धमासपर्व ' । किं कारणम् । " देवानस्मिन् "

---

१ ठ. तैनाभिभू°. २ ग. ज. ' परावतः.........स्थानात् ' नास्ति. ३ घ. झ. ट. ठ. परस्याःअति°. ४ ग. ज. 'दिव........मागत्य च' नास्ति. ५ घ. झ. ट. आजगन्थ; ठ. आजगन्थ आगच्छ. ६ घ. झ. ट. ठ. °कार्येषु. ७ ग. च. ज. घ. झ. विताळ्हि. ८ ठ. °च मृधः संग्रामयुक्तान् युयुत्सून् न हिन°. ९ ग. ज. प्रब्रुवन्ति; च. स्रवन्ति. १० क. ख. घ. झ. ट. ठ. गिरिः पर्वतः समुद्गी°. ११ क. ख. ग. ज. °ख्यानप्रसक्तं; ठ. पर्यायानुप्रसक्तं. १२ च. शिखर° ख. १३ क. ख. घ. झ. ट. 'हि' नास्ति.

हविर्भिः ' प्रीणन्ति[1] ' । ' तत्प्रकृतीतरत्संधिमात्रसामान्यात् ' । कालसंधिश्च शिलासंधिश्च समानं संधित्वमिति । देवताभिधानपक्षे ' मेघस्थायी ' गिरिष्ठाः । ' मेघाऽपि गिरिरेतस्मादेव ' । असावपि समुद्गीर्णो भवत्यन्तरिक्षलोके ।

**दैवतसंज्ञाया अर्थः**

" तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते । तदुपरिष्टाद्व्याख्यास्यामः । नैघण्टुकानि नैगमानीहेह " । तदेतदुच्यते । सामान्यलक्षणोपलक्षितप्रकरणत्रयविभागेनावस्थितो गवादिर्देवपत्न्यन्तः समाम्नायोऽयमानुपूर्व्या व्याख्यास्यत इति पर्युपयुक्तस्तच्छब्दः । यानि नामानि प्राधान्यस्तुतीनामग्न्यादीनाम् । प्रधानभावेन याः स्तूयन्ते न निपातभाक्त्वेन ता एता प्राधान्यस्तुतयो देवताः । तासां किल यानि नामान्यग्न्यादीनि देवपत्न्यन्तानि तानि सर्वाण्यपि समुदितानि सन्त्येतयैकया सामान्यया प्रकरणसंज्ञ[2]याचक्षत आचार्याः । कतमया । उच्यते दैवतमित्येतया । निरूढा हीयमेतस्मिन्नि[3]घण्टुशब्दसमुदाये संज्ञेत्यभिप्रायः । तत्पुनरेतद्दैवतं प्रकरणमुपरिष्टाव्द्याख्यास्यामोऽस्य शास्त्रस्य । आह । किं कारणमिति[4] । उच्यते । गुणपदेषु व्याख्यातेषु प्रधानदेवतापदानि सुखं व्याख्यास्यन्त इत्यनेनाभिप्रायेण देवतापरिज्ञानतत्फलाभिधाननिष्ठं च कथं नामेदं शास्त्रं स्यादिति । यानि पुनर्नैघण्टुकानि गवादीनि नैगमानि च जहादीनि तानीह प्रकरणद्वये नैघण्टुके चैकपदिके च व्याख्यास्याम इत्येतदेवानुवर्तते । त एते गवादयो देवपत्न्यन्ता निघण्टवः । तदेकदेशो[5] नैघण्टुकं प्रकरणम् । निघण्टुसंज्ञया च व्यवहारो लोके निघण्टुमधीमहे निघण्टुमध्यापयाम इति । शास्त्रे खल्वपि नैघण्टुकं प्रकरणमिति । नैगममित्यैकपदिकम् ।

**त्रयाणां प्रकरणानां व्याख्यानक्रमः**

**निघण्टुनैघण्टुकशब्दयोरर्थः**

---

१ क. ख. घ. झ. ट. ठ. प्रीणन्तीति. २ च. °संज्ञा आच°. ३ क. ख. घ. झ. ट. ठ. °स्मिन्नैवण्टुकशब्द°; ग. ज. °स्मिन्नैवण्टुशब्द°. ४ क. ख. घ. झ. ट. ठ. ' इति ' नास्ति. ५ ग. च. ट. तदैकदेशे.

नैघण्टुकानि च पदानि नैगमानि चेह प्रकरणद्वये व्याख्यास्यामः । अध्या-यपरिसमाप्तिलक्षणार्थः परितोषार्थो वा द्विरभ्यास इति ॥ २० ॥

इति ऋज्वर्थायां निरुक्तवृत्तौ जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ षष्ठोऽध्यायः ॥ ६ ॥

---

* समाम्नायस्तत्रचतुष्ट्वमतोऽन्येऽथनिपातावायुर्वात्वाननूनं नूनंसातत्कर्चांत्वोऽक्षण्वन्तोनिर्ष्ट्क्ष्णासोहविर्भिरितीमान्यथा-पियोयथोहिन्वथापीदमर्थवन्तोऽथापीदं स्थाणुरयमुतत्वः-पश्यन्नुतत्वंसख्ये विंशतिः ।

इति निरुक्ते पूर्वषट्के प्रथमोऽध्यायः ॥ १ ॥

---

## अथ द्वितीयोऽध्यायः ।

---

### तत्र प्रथमः पादः ।

---

हरिः ओम् । अथ निर्वचनं तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां तथा तानि निर्ब्रू-यादथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केन-चिद्वृत्तिसामान्येनाविद्यमाने सामान्येऽप्यक्षरवर्णसामान्या-न्निर्ब्रूयान्न त्वेव न निर्ब्रूयान्न संस्कारमाद्रियेत विशयवत्यो हि वृत्तयो भवन्ति यथार्थं विभक्तीः संनमयेत्प्रत्तमवत्त-मिति धात्वादी एव शिष्येते अथाप्यस्तेर्निवृत्तिस्थानेष्वा-

---

* इयं खण्डशृङ्खला छ. त. द. पुस्तकेषु न विद्यते.

---

१ क. ख. व. झ. ट. ठ. नैघण्टुकानि नैगमानि पदानि चेह°. २ क. ख. घ. झ. ट. ठ. अङ्को नास्ति; ग. च. ज. २७. ३ क. ख. व. झ. ट. ठ. इति निरुक्तटीकायां. ४ ग. षष्ठोऽध्यायः । निरुक्ते प्रथमोऽध्यायः समाप्तः; व. ट. षष्ठस्याध्यायस्य षष्ठः पादः समाप्तः; झ. षष्ठस्य षष्ठः पादः समाप्तः अध्यायः समाप्तः; ठ. षष्ठाध्यायस्य षष्ठः पादः समाप्तिमगमत्. ५ छ. त. द. पुस्तकेष्वियं खण्डशृङ्खला नास्ति. ६ ङ. 'इति॰ध्यायः' खण्डशृङ्खलायाः प्राग्वर्तते; थ. इति नैरुक्ते पूर्व°; छ. द. इति प्रथमोऽध्यायः समाप्तः; त. इति प्रथमोऽध्यायः. ७ छ. विकारेणान्वितौ. ८ क. ख. छ. त. द. °ते ॥ १ ॥ अथा°.

**द्विलोपो भवति स्तः सन्तीत्यथाप्यन्तलोपो भवति गत्वा गतमित्यथाप्युपधालोपो भवति जग्मतुर्जग्मुरित्यथाप्युपधाविकारो भवति राजा दण्डीत्यथापि वर्णलोपो भवति तत्त्वा यामीत्यथापि द्विवर्णलोपस्तृच इत्यथाप्यादिविपर्ययो भवति ज्योतिर्घनो बिन्दुर्वाट्य इत्यथाप्याद्यन्तविपर्ययो भवति स्तोका रज्जुः सिकतास्तर्कित्यथाप्यन्तव्यापत्तिर्भवति ॥ १ ॥**

---

"अथ निर्वचनम्" । नामाख्यातोपसर्गनिपातलक्षणमुक्त्वा शास्त्रारम्भप्रयोजनानि च वेदवेदाङ्गव्यूहं च सप्रयोजनं निघण्टुसमाम्नायविरचनां च प्रकरणत्रयविभागेनोक्त्वा दैवतमुत्कृष्य नैघण्टुकनैगमे प्रकरणे पुरस्कृते 'नैघण्टुकानि नैगमानीह' इति । ते पुनरेते निर्वचनलक्षणमनुक्त्वा न शक्येते व्याख्यातुं यस्मात् 'अथ' एतस्मात्कारणात् 'निर्वचनं' लक्षणतो व्याख्यास्याम इति वाक्यशेषः । अपिहितस्यार्थस्य परोक्षवृत्तावतिपरोक्षवृत्तौ वा शब्दे निष्कृष्य विगृह्य वचनं निर्वचनम् । स एष निर्वचनाभ्युपाय इत्युच्यते । इह द्विविधाः शब्दाः समर्थस्वरसंस्कारा असमर्थस्वरसंस्काराश्च । तत्रैवं सति 'येषु' तावत् 'पदेषु स्वरसंस्कारौ समर्थौ' संगतार्थौ अवैपरीत्येन 'प्रादेशिकेन' च 'गुणेनान्वितौ स्यातां प्रदेशाभिधायिना धातुरूपेणान्वितौ संबद्धावनुगतावभिधेयस्थे धातुरूपे स्यातां 'तानि' तावत् 'तथा' एव यथालक्षणमेव 'निर्ब्रूयात्' । आह । कुतो वा संशय इति । उच्यते । अर्थप्रधानत्वादनादृत्यैव लक्षणमेषु नैरुक्तो निर्ब्रूयात्तन्मा भूदित्यत इदमुच्यते 'येषु पदेषु स्वरसंस्कारौ समर्थौ स्यातां तथा तानि निर्ब्रूयात्' इति ।

निर्वचनशब्दस्यार्थो निर्वचनप्रकाराश्च

केषांचिच्छब्दानां लक्षणशास्त्रानुसारेण निर्वचनम्

---

१ ठ. ड. दण्डीति ॥ अथा°. २ क. ख. छ. त. द. २. ३ ट. नैगमानीह 'ति° है; ठ. ड. नैगमानीहेहेति. ४ ठ. ड. °च नलक्ष°. ५ क. ख. झ. °इति शेषः. ६ क. ख. झ. द्विधा. ७ क. ख. ग. ज. °संस्काराश्च अस°. ८ क. ख. झ. 'संगतार्थौ' नास्ति. ९ ग. ज. ठ. ड. 'च' नास्ति. १० ठ. ड. °धायिना गुणेन धातु°. ११ ग. ज. °न्वितौ स्यातां संबंधावनु°. १२ घ. झ ट. ठ. ड. लक्षणमेवमेषु°.

' अथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद्वृत्ति-सामान्येन ' । अथ पुनरनन्वितेऽर्थे न्याय्यस्वरसंस्कारयुक्तेन शब्देन । यत्र निपुणमन्विष्यमाणः [1] शब्दोऽर्थवान्कल्पयितुं न शक्येत [2] । अन्यथैवार्थो व्यवतिष्ठतेऽन्यथैव शब्दः । प्रादेशिकेन विकारेण विक्रियमाणोऽपि चासौ शब्दो विपरिणम्यमानोऽप्रादेशिक एव स्यादसमर्थ एव तां प्रदेशाख्यामभिधेयसत्त्वस्थां क्रियामभिधातुम् । आह । तत्र किं कर्तव्यमिति । उच्यते । तत्रैवं सत्यर्थनित्यो भूत्वार्थप्रधानः । तद्यथा मुद्गनित्यमेवास्य भोजनमित्युक्ते मुद्गप्रधान-मिति गम्यत एवमिहाप्यर्थनित्य इत्युक्तेऽर्थप्रधान इति गम्यते । अर्थप्राधान्येनानादृत्य स्वरसंस्कारौ परीक्षेत । ततस्तदभिधानं बुद्ध्वा केनचिदर्थवृत्तिसामान्येन क्रियागुणसामान्येनेत्यर्थः । कतमस्य धातोरर्थ-सामान्यमिहास्तीति [3] । ततस्तर्कयित्वा सामान्यं तेन निर्ब्रूयात् । अर्थो हि प्रधानं तद्गुणभूतः शब्दः । तस्मादर्थसामान्यं बलीयः शब्दसामान्यात् ।

केषांचिदर्थसामान्येन

अथ पुनर्यत्रार्थसामान्यमपि नास्ति तत्र ' अविद्यमानेऽर्थसामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयान्नत्वेव [4] न निर्ब्रूयान्न संस्कारमाद्रियेत विशयवत्यो हि वृत्तयो भवन्ति यथार्थं विभक्तीः संनमयेत् ' । स्वरवर्णसामान्ये-नापि निर्ब्रूयादेव । अमुष्मिन्धातावयं स्वरो वर्णो वा मया दृष्टः स एवायमस्मिन्नभिधाने लक्ष्यत इत्येवमुत्प्रेक्ष्य स धात्वर्थः सूत्रबद्ध इव तस्मिन्नभिधान आहत्य स्फारीकृत्य [5] कृत्स्नः प्रकाश-यितव्यः । एवमविद्यमानेऽर्थसामान्ये [6] स्वरवर्णसामान्यमात्रेणापि निर्ब्रूयादेव । न त्वेव न निर्ब्रूयात् । इतरथा ह्यनर्थकमेव निरुक्तशास्त्रं स्यात् । तन्मा भूदित्यत उच्यते लक्षणपराङ्मुखेषु शब्देषु ' न संस्कारमाद्रियेत ' । किं तर्हि । अर्थसामान्यमाद्रियेत शब्दसामान्यं वा । तद्यथा । प्रवीणोदारनि-

केषांचिदक्षरवर्णसामान्येन

१ क. ख. घ. झ. ट. ठ. ड. निपुणमप्यन्विष्य°. २ क. ख. घ. झ. ट. ठ. ड. शक्यते. ३ क. ख. घ. झ. °मान्यमत्रास्ती°; ट. °मान्यमत्रास्ती° मिहा. ४ ट. ड. °ब्रूयादिति । स्वर वर्ण°. ५ च. फारीकृत्य. ६ व. झ, ट. ठ. ड. अर्थस्य सामान्ये.

*अर्थसामान्यस्योदाहरणानि*

स्त्रिंशशब्दा उत्सृष्टस्वार्थाभिधेयसंबन्धाः सन्तः क्रियागुणसामान्यहेतुमात्रमाश्रित्यान्येष्वेवार्थान्तरेषु वर्तन्ते । तद्यथा प्रकृष्टो वीणायां प्रवीणो गान्धर्वे । अत्र ह्यस्य मुख्या वृत्तिः । स एष स्वमर्थमभिधेयमुत्सृज्यैव गान्धर्वमभ्यासपाटवमात्रं सामान्यमाश्रित्य सर्वत्रैवाभिप्रवृत्तः । यो हि यस्मिन्कृतयत्न उत्पन्नकौशलो भवति स तत्रोच्यते प्रवीण इति । तद्यथा । प्रवीणो व्याकरणे प्रवीणो निरुक्त इति । एवमेवोदार इति । प्रागारोसंनिपाताद्व्याहृतमात्रेणैवाकूतेनैव सारथेर्यो वहत्यश्वोऽनड्वान्वा स उद्धाततरत्वादुदारः । तत्र हि समञ्जसा वृत्तिरस्य शब्दस्य । स एष उत्सृज्यैव स्वमर्थमाकूतानुविधायित्वमात्रमेव सामान्यमाश्रित्य प्रवृत्तः । यो हि कश्चित्कस्मैचिदाकूतमेवं लक्षयित्वा प्रागेव प्रार्थनाद्ददाति स उदार इत्युच्यते । एवमेव निस्त्रिंशः । त्रिभिः प्रदेशैर्द्वाभ्यां धाराभ्यामग्रेण च निशितः श्यतीति निस्त्रिंशः खड्गः । तत्र ह्यस्य शब्दस्य समञ्जसा वृत्तिः । स एष छेदनसमानरूपं क्रौर्यसामान्यमाश्रित्य सर्वत्रैवाभिप्रवृत्तः । यो हि लोके क्रूरो भवति स निस्त्रिंश उच्यते । एवमेते क्रियागुणसामान्यमात्रेण वर्तन्ते ।

यथैत एवमन्येऽप्यभ्यूहितव्याः । अभ्यूह्य चैवमर्थसामान्येन निर्वक्तव्याः ।

*नैगमशब्देषु स्वरवर्णसामान्यमेव*

स्वरवर्णसामान्ये तु प्रचुराण्येवोदाहरणानि । सर्व एव हि नैगमाः शब्दा जहादयः स्वरवर्णसामान्यमात्रेणैव निरुच्यन्ते । न च निरुक्ते कारकहारकलावकादिशब्दा व्युत्पाद्यन्ते सुबोधैव

---

१ क. ख. ग. ज. क्रियागुणसामान्यं हेतु°. २ घ. ट. ठ. ड. °हेतुमाश्रि°. ३ ग. च. ज. प्रवृत्तिः. ४ ठ. ड. प्रागारसं°. ५ क. ख. ग. ज. °पाताद्राकूतेनैव; ठ. ड. °पाताद्व्याहृतमात्रेणैव वाक्संकेतेनैव सार°. ६ ठ. ड. उद्धततरत्वा°. ७ क. ख. च. 'एव' नास्ति. ८ ग. ज. निसितः. ९ च. शसतीति°. १० घ. झ. ट. ठ. ड. स निस्त्रिंशः. ११ क. ख. खड्गःमुख्यग्रहणात् । तत्र°; घ. झ. ट. ड. खड्गः मुखग्रहणात् । तत्र°; ठ. खड्गमुख्यग्रहणात् । तत्र° टि. १२ च. 'शब्दस्य' नास्ति. १३ क. ख. घ. झ. ट. ठ. ड. 'अभि' नास्ति. १४ क. ख. घ. झ. ट. ठ. ड. इत्युच्यते. १५ घ. झ. ट. ठ. ड. ' अपि ' नास्ति. १६ च. अभ्युह्य; ट. अभ्युह्यैव° भ्युह्य च ए. १७ घ. झ. ट. ठ. ड. ' च ' नास्ति.

हि तेषां व्युत्पत्तिः प्रसिद्धैव च व्याकरण इति । य एव तु दुर्बोधाः परोक्षातिपरोक्षवृत्तयो बिल्मकुदरोदरवैतसपर्वशब्दादयस्त एव व्युत्पाद्य निरुच्यन्ते । तेषु हि विशेषेणार्थवत्ता निरुक्तस्य।

दुर्बोधशब्दनिर्वचनं हि निरुक्तशास्त्रस्य प्रयोजनं यस्मात्तन्निर्वचनं संशयाकुलम्।

तान्येवार्थसामान्येन वा शब्दसामान्येन वा निर्ब्रूयान्न तेषु स्वरसंस्कारसाद्रियेत । आह । किं कारणमिति । उच्यते । 'विशयवत्यो हि वृत्तयो भवन्ति' । हिरयं हेत्वर्थे । यस्माद्विशेयवत्यो बहुसंशयवत्यः शब्दानामर्थेषु वृत्तयो भवन्ति । नानाभावेनार्थेष्ववस्थिता प्रवृत्तिरित्येवं स्यान्नैवं स्यादिति विचारयन्तः सन्तः प्रतिपक्षसंमोहाच्छेरत इवास्मिन्निति विशयः संशय इति । अत्र केचिदर्थसामान्येन क्वचिद्वर्तन्ते शब्दाः केचित्स्वरसामान्येन केचिद्वर्णसामान्येन । यत एवमतो विभक्तीरपि यथार्थमेव संनमयेद्विपरिणमयेत्पूर्वोत्तरपदप्रकारणाविरोधेन । किं कारणम् ।

निर्वचनार्थं विभक्त्योऽपि विपरिणमयितव्याः

तासामपि हि व्यत्ययो भवत्येव । 'सुपां स्थाने सुपो भवन्ति' इति हि वैयाकरणाः पठन्ति । दर्शयिष्यति चायमपि विभक्तिविपरिणामम् । तद्यथा । 'हृत्सु शोकैर्हृदयानि शोकैः' [ नि० ९ । ३३ ] इत्येवमादि ।

अधुनैवमुक्त्वा विशयवत्यो भवन्तीत्यर्थवशेन व्याकरणेऽपि शब्दविपरिणामो भवतीत्येवं दर्शयति । 'प्रत्तमवत्तमिति

शब्दविपरिणामस्योदाहरणानि । केषांचिद्धातूनामादी एव शिष्येते

धात्वादी एव शिष्येते' इत्येवमादि । 'डुदाञ् दाने' [ धा० ३ । ९ ] । तस्य प्रपूर्वस्य प्रत्तमिति । अत्र दकार आकारश्च धातुः । परो निष्ठाप्रत्ययस्तकारः । तत्रैवं सति 'दोदद्घोः [ पा० ७ । ४ । ४६ ] इति वर्तमाने 'अच उपसर्गात्तः'

१ घ. झ. ट. ठ. ड. 'प्र' नास्ति. २ ग. ज. कुतरोद°; ठ. ड. कुदनोद°. ३ क. ख. घ. झ. ट. ठ. ड. एव हि व्युत्पा°. ४ घ. झ. ट. 'वा' नास्ति. ५ क. ख. घ. झ. ट. ठ. ड. 'स्वर' नास्ति. ६ क. ख. ग. ज. ठ. ड. °साद्रियेत. ७ ग. ज. नाभावेनार्थेष्ववस्थिता प्रवृत्तिरित्येवं स्यादेवं स्यादिति विचारयन्न प्रतिपन्नः संमोहाच्छेरत इवास्मिन्निति विशयः संशयः नानाभावेना° च. [नानाभावेनार्थानवस्थितौ प्रतीत्य चेतसा एवं स्यादेवं स्यादिति विचारयन्नप्रतिपन्नः संमोहाच्छेत इवास्मिन्निति विशयः संशयः] नानाभावेना° ८ ग. च. ज. 'भक्तिपरि°.

[ पा० ७ । ४ । ४७ ] इत्याकारस्य तकारो भवति । झरो झरि सवर्णे" [ पा० ८ । ४ । ६५ ] इति धात्वन्त्यस्य तकारस्य लोपे कृते 'खरि च' [ पा० ८ । ४ । ५५ ] इति तकारस्य चर्त्वे कृते 'परः संनिकर्षः संहिता' [ पा० १ । ४ । १०९ ] इति धातुतकारः प्रत्ययतकारेण साकं संयोगतामुपैति 'हलोऽनन्तराः संयोगः' [ पा० १ । १ । ७ ] इति । ततः प्रादिसमासे कृते 'प्रत्तं' इति भवति । एवमेव 'दो अवखण्डने' [ धा० ४ । ४२ ] इत्यस्यावपूर्वस्य 'अवत्तं' इति । अत्रापि दकार ओकारश्च धातुः परो निष्ठातकारः । अत्र 'आदे च उपदेशेऽशिति' [ पा० ६ । १ । ४९ ] इत्योकारस्याकारे कृते तभावलोपचर्त्वपरगमनप्रादिसमासाः पूर्ववदेव । एवमनयोर्धात्वोरादी एव शिष्येते । यथानयोरेवमन्येषामपि दृष्ट्वा यथासंभवमनुविधेयम्[1] ।

'अथाप्यस्तेर्निवृत्तिस्थानेष्वादिलोपो भवति स्तः सन्तीति'[2] । असँ भुवि' [ धा० २ । ५५] इत्यस्य निवृत्तिस्थानेषु गुणवृद्धिनिवृत्तिस्थानेषु 'क्ङिति' [पा०१।१।५] इति वर्तमाने 'श्नसोरल्लोपः' [ पा०६।४।१११ ] इत्यादिलोपो भवति । योऽयं धात्वादावकार एष लुप्यते । तस्मिन् लुप्ते कथं प्रयोगः । स्तः सन्तीति । एवमन्येषामपि दृष्ट्वाऽनुविधेयं यथासंभवम् ।

आदिलोपः

'अथाप्यन्तलोपो भवति गत्वा गतमिति' । अत्र गमेः क्त्वाप्रत्यये निष्ठाप्रत्यये च परतोऽनुनासिकलोपो भवति 'अनुदात्तोपदेश०' [ ६ । ४ । ३७ ] इत्यधिकृत्य 'क्ङिति' [पा०१।१।५] इति । एवमन्येष्वपि द्रष्टव्यमनुविधेयं च यथासंभवम् ।

अन्तलोपः

'अथाप्युपधालोपो भवति जग्मतुर्जग्मुरिति' । अत्र गमेः अलोपः । 'अलोन्त्यात्पूर्व उपधा' [पा० १ । १ । ६५] इत्यकारस्योपधासंज्ञा । तस्य 'गमहनजनखनघसां लोपः' [ पा० ६ । ४ । ९८ ] इत्युपधालोपः । एवमन्येषामपि द्रष्टव्यमनुविधेयं च यथासंभवम् ।

उपधालोपः

'अथाप्युपधाविकारो भवति राजा दण्डीति' । राजन् दण्डिन्

---

१ क. ख. ग. °धेयम् ॥ १ ॥ अथा°. २ ग. च. ज. असु. ३ च. ङितीति. ४ क, ख. व. झ. ट. ठ. ड. 'अकारस्य' नास्ति.

उपधाविकारः

इति स्थिते 'नोपधायाः' [पा० ६। ४।७] 'सर्वनामस्थाने चासंबुद्धौ' [पा० ६।४।८] इति दीर्घत्वम्। दण्डिन् इत्यत्रापि 'इन्हन्पूषार्यम्णां शौ' [पा० ६।४।१२] 'सौ च' [पा० ६।
५ ४।१३] इति दीर्घत्वम्। 'नलोपः प्रातिपदिकान्तस्य' [पा० ८। २।७] इत्युभयोरपि नकारलोपे कृते राजा दण्डीति। एवमुपधाविकारो भवति।

वर्णलोपः

'अथापि वर्णलोपो भवति तत्त्वा यामीति'। अत्र चकारलोपः। याचामीत्येवमेतद्द्रष्टव्यम्[3]। अयं च छान्दस एव।
१० अत एव च छान्दसत्वादेवमेव याच्ञाकर्मस्वयं पठितः 'यामि मन्महे' [निघ० ३।१९] इति। भाषायां हि[4] याचे इति भवति।

'यामि' इत्यस्योदाहरणम्

'तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः। अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः' [ऋ० सं०
१५ १।२४।११] ॥ अनया त्रिष्टुभोपाकृतः शुनःशेपो वरुणं तुष्टाव। आज्याहुतिरनया साग्निकेषु क्रतुषु समिष्टयजुष उत्तरकालं हूयते। चातुर्मास्येषु च[6] वरुणप्रवासेषु वारुणस्य हविषो याज्यैषा[7] [आश्व० श्रौ० २।१७]। हे वरुण तदहं त्वां
२० वरुणं यामि याच इत्यर्थः। किम्। यन्ममाभिप्रेतम्। कथं पुनर्याचे। ब्रह्मणा ऋग्यजुःसामाख्येन वन्दमानः स्तुवन्। किं च। यदेव त्वं मया याच्यसे तदेवायमपि यजमानो हविर्भिः संस्कृतैः सान्नाय्यादिभिराशास्ते। तावावां भवन्तमेकमेवार्थं याचावहे स्तुतिभिर्हविर्भिश्च। स त्वमहेळमानो[8]ऽक्रुध्यन्। सर्वो हि याच्यमानः क्रुध्यतीत्यत
२५ एवमुच्यते। हे वरुण बोधि बुध्यस्व। बुद्ध्वा चैनमावयोरभिप्रेतार्थं कुरु। उरुशंसेत्येकं पदं संबोधनं च। हे उरुशंस बहुस्तुत्य वरुण मा नोऽस्माकं याचमानानामायुः प्रमोषीः। कुरु नोऽभिप्रेतार्थसिद्धिमित्यभिप्रायः।

---

१ घ. झ. ट. इति हि दी°. २ ग. ज. 'कृते' नास्ति. ३ घ. झ. ट. °त्येवमेव द्रष्ट°. ४ घ. झ. ट. °षायां च या°. ५ ग. च. ज. घ. झ. ट. ठ. ड. यामीत्यनया त्रिष्टुभा°. ६ च. 'च' नास्ति. ७ ठ. ड. 'याज्यैषा' इत्यस्यानन्तरं सर्वा ऋक्पठ्यते. ८ क. ख. ग. च. ज. घ. झ. °महेळमानो°.

' अथापि द्विवर्णलोपस्तृच इति ' । अत्र ऋवर्णरेफयोर्लोपः ।

द्विवर्णलोपः — रेफ एक ऋवर्णोदरं कृमिवदनुप्रविष्टो द्रष्टव्यः । स लुप्यते ऋवर्णेन साकम् ।

' अथाप्यादिविपर्ययो भवति । ज्योतिर्घनो बिन्दुर्वाट्य इति ' । ' द्युत दीप्तौ ' [ धा० १ । ७४१ ] । तस्यादि-

आदिविपर्ययः — व्यापत्त्या ज्योतिः । ' हन हिंसागत्योः ' [ धा० २ । २ ] । तस्य घन इति । ' भिदिर्विदारणे ' [ धा० ७ । २ ] । तस्य बिन्दुः ।

' भट भृतौ ' [ धा० १ । ३०७ ] । तस्य[३] वाट्यः[२] ।

'अथाप्याद्यन्तविपर्ययो भवति स्तोका रज्जुः सिकतास्तर्क्विति' । 'श्चुतिर्[४] क्षरणे ' [ धा० १।४१ ] । तस्याद्यन्तविपर्ययेण

आद्यन्तविपर्ययः — स्तोकाः । ' सृज विसर्गे ' [ धा० ४ । ७२ ॥ ६ । १३४ ] । तस्य[३] रज्जुः । ' कस विकसने ' तस्य सिकताः । ' कृती छेदने ' [ धा० ६ । १५५ ] । तस्य तर्कु ।

'अथाप्यन्तव्यापत्तिर्भवति' ॥ १[५] ॥

---

अथ द्वितीयः पादः ।

---

**ओघो मेघो नाधो गाधो वधूर्मध्विथ्यथापि वर्णोपजन आस्थद्वारो मरूजेति तद्यत्र स्वरादनन्तरान्तस्थान्तर्धातु भवति तद्द्विप्रकृतीनां स्थानमिति प्रदिशन्ति तत्र सिद्धायामनुपपद्यमानायामितरयोपपिपादयिषेत्तत्राप्येकेऽल्पनिष्पत्तयो भवन्ति तद्यथैतदूतिर्मृदुः पृथुः पृषतः कुणारुमित्यथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते दमूनाः क्षेत्रसाधा इत्यथापि नैगमेभ्यो भाषिका उष्णं घृतमित्यथापि प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु[६] शवतिर्ग-**

---

१ घ. ट. ऋवर्णोदरं कृमिवदरं कृमिवद्°; ट. ऋवर्णोदरं कृमिवत् बदरं कृमिवद्°; ङ. ऋषर्ण उदरं कृमिवत् बदरं कृमिवद्°. २ ग. घ. च. ज. वाट्यः. ३ ग. च. ज. ' तस्य ' नास्ति. ४ श्च्युतिरक्षणे. ५ क. ख. ग. २; घ. झ. ट. च. ज. '१' नास्ति; ठ. ड. ॥ १ ॥ इति निरुक्तव्याख्यायां द्वितीया(ऽध्याये) प्रथमः खण्डः. ६ क. ख. छ. त. द. एकेषु ॥ ३ ॥ शव°.

तिकर्मा कम्बोजेष्वेव भाष्यते कम्बोजाः कम्बलभोजाः कमनीयभोजा वा कम्बलः कमनीयो भवति विकारमस्यार्येषु भाषन्ते शव इति दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येष्वेव- मेकपदानि निर्ब्रूयादथ तद्धितसमासेष्वेकपर्वसु चानेकप- ५ र्वसु च पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयाद्दण्ड्यः पुरुषो दण्डपुरुषो दण्डमर्हतीति वा दण्डेन संपद्यत इति वा दण्डो ददतेर्धारयतिकर्मणोऽक्रूरो ददते मणिमित्यभिभाषन्ते दम- नादित्यौपमन्यवो दण्डमस्याकर्षतेति गर्हायां कक्ष्या रज्जुरश्वस्य कक्षं सेवते कक्षो गाहतेः क्स इति १० नामकरणः ख्यातेर्वानर्थकोऽभ्यासः किमस्मिन्ख्यानमिति कषतेर्वा तत्सामान्यान्मनुष्यकक्षो बाहुमूलसामान्यादश्वस्य ॥ २ ॥

---

'ओवो मेघो नाधो गाधो वधूर्मध्विति'। 'वह प्रापणे' [ धा० १ । १०२९]। तस्यान्तव्यापत्त्या ओवः। 'मिह सेचने' [ धा० १ । १०१७ ]। तस्य मेघः। 'णह बन्धने' [ धा० ४ । ६० ]। तस्य नाधः। 'गाहू विलोडने' [ धा० १ । ६५० ]। तस्य गाधः। 'वह प्रापणे' [ धा० १ । १०२९ ]। तस्य वधूः। 'मद तृप्तौ' [ धा० १० । १७२ ]। तस्य मधु।

अन्तव्यापत्तिः

'अथापि वर्णोपजन आस्थत् द्वारो भरूजेति'। 'असु क्षेपणे' [ धा० ४ । १०३ ] । तस्य आस्थत्। 'वृङ् संभक्तौ' [ धा० ९ । ३७ ] । तस्य द्वारः। 'भ्रस्ज पाके' [ धा० ६ । ४ ]। २५ तस्य भरूजः।

वर्णोपजनः

एवं व्याकरणेऽपि लक्षणप्रधाने सत्यर्थवशेन लोपागमौ विपरिणामश्च शब्दानां दृष्टः किमुत निरुक्ते यदर्थप्रधानमेव। तस्मात्साधूक्तं 'अथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येनाविद्यमाने

---

१ छ. भाष्यन्ते. २ क. ख. छ. त. द. ठ. 'दण्डपुरुषो' नास्ति. ३ क. ख. छ. त. द. °र्हायाम् ॥ ४ ॥ कक्ष्या°. ४ ङ. तदस्मिन्. ५ छ. °स्मिन्ख्यान°. ६ ठ. ड. कर्षते°. ७ क. ख. छ. त द. अङ्को नास्ति. ८ ग. च. ज. गाधं. ९ ग. च. ज. घ. ट. वृञ्. १० ग. भ्रस्जौ; ज. भ्रस्जो. १० ठ. ड. नैरुक्ते.

सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयाद्विभक्तीरपि यथार्थं 'संनमयेत्' इति । एवमयमादिमध्यान्तलोप आदिमध्यान्तविकारो वर्णलोपो द्विवर्णलोप आदिविपर्यय आद्यन्तविपर्ययो वर्णोपजनश्छन्दसि भाषायां च द्रष्टव्यः । दृष्ट्वा च यथासंभवमनुविधेयः ।

अतः परं संप्रसारणचिन्ता वर्तिष्यते तदर्थमिदमारभ्यते । 'तद्यत्र स्वरादनन्तरान्तस्थान्तर्धातु भवति तद्विप्रकृतीनां स्थानमिति प्रदिशन्ति'

**संप्रसारणप्रकारेण निर्वचनम्**

इति[1] । संप्रसार्यप्रकृतयश्चासंप्रसार्यप्रकृतयश्चोभयप्रकृतयश्च धातवः । तत्रैवं सत्युभयप्रकृतिषु स्वशास्त्रविषयगतं यद्वक्तव्यं तदिदमुच्यत इति पर्युपयुक्तस्तच्छब्दः । आह । इदमेव[2] तावदुच्यतामुभयप्रकृतीनां किं लक्षणमिति । उच्यते । 'यत्र' यस्मिन्धातौ 'स्वरात्' अकारादेः 'अनन्तरा' अनन्तर्हितान्येन व्यञ्जनेन परा वा पूर्वा वा 'अन्तस्था' यरलवानामन्यतमो वर्णः 'अन्तर्धातु[3]' धातुमध्ये भवति । किं तत्र । एतदेवंलक्षणं

**एके धातवो द्विप्रकृतीनां स्थानम्**

धातुरूपं[4] 'द्विप्रकृतीनां' द्विस्वभावानां शब्दानां स्थानं आश्रयः 'इति' एवमाचार्याः प्रविभागेनोपदिशन्ति । तद्यथा । 'यज देवपूजासंगतिकरणदानेषु' [ धा० १ । १००२ ] इति । अत्र द्वे शब्दप्रकृती भवतः । संप्रसारणपक्षे तावत् 'इष्टवान्[5] इष्टः इष्टिः इष्ट्वा' एताः शब्दप्रकृतयो भवन्ति । असंप्रसारणपक्षे पुनः 'यष्टा यष्टुं यष्टव्यं' इत्येताः ।

'तत्र[6]' एवं सत्येकप्रकारेण 'सिद्धायां' अर्थसिद्धौ 'अनुपपद्यमानायामितरयोपपिपादयिषेत्' उपपादयितुमिच्छेदर्थम् । द्वयोः संप्रसारणासंप्रसारणप्रकृत्योर्यथै[7]वोपपद्यतेऽर्थस्त[8]थैवोपपादयेत् । उ[9]भयथाप्यनुपपद्यमाने[10]ऽर्थे स्वयमुत्पाद्य निर्धार्य यथा यथो-

**द्विप्रकृत्योः प्रयोजनम्**

---

१ क. ख. घ. झ. ट. ठ. ड. 'इति' नास्ति. २ ग. ज. इदमेवमुच्यता°. ३ घ. झ. ट. ठ. ड. °वर्णोऽन्तर्धातुमध्ये. ४ क. ख. घ. झ. °रूपं हि द्विप्र°; ट. °रूपं हि द्विप्र;° ठ. ड. °रूपं तद्द्विप्र°. ५ घ. ट. इष्टवान् इष्टिः इष्ट एता°; च. इष्टवान् इष्ट एता°; झ. ठ. ड. इष्टवान् इष्टिः एता°. ६ ठ. ड. तत्र सिद्धायामिति । तत्र एवं°. ७ ठ. ड. °र्ययैवो°. ८ ठ. ड. °स्तयैवो°. ९ क. ख. घ. झ. ट. ठ. ड. अथवोभय°. १० घ. झ. ट. ठ. ड. °पद्यमानोऽर्थः स्वय°

पपद्येतार्थस्तथा तथोपपादयेदर्थलक्षणशास्त्रविहितेनार्थसाधनोपायेनार्थस्य प्रधानत्वात् ।

' तत्राप्येकेऽल्पनिष्पत्तयो भवन्ति ' । एतस्मिन्नपि संप्रसारणलक्षणे सति ' एके ' धातवः 'अल्पनिष्पत्तयो भवन्ति'।

अल्पनिष्पत्तयो धातवः

अल्पेषु शब्दरूपेषु संप्रसारणप्रकृतिरभिनिष्पद्यते। तदप्युपेक्षितव्यम् । ' तद्यथैतत् ' उदाहरणजातं ' ऊतिः मृदुः पृथुः पृषतः कुणारुं ' इति । अवतेर्गत्यर्थस्य [ धा० १ । ६०० ] क्तिप्रत्यये परे ' च्छ्वोः शूडनुनासिके च ' [ ६ । ४ । १९ ] इति वर्तमाने ' ज्वरत्वरस्रिव्यविमवामुपधायाश्च [ ६ । ४ । २० ] इत्यूठ्भावः क्रियते । तत ऊतिरिति भवति । ' म्रद मर्दने ' [ धा० १ । ७६८ ] । तस्य मृदुः । रेफः संप्रसार्यमाण ऋकारो भवति । एवमेव ' प्रथ प्रख्याने ' [ धा० १ । ७६६ ]। तस्य पृथुः । 'प्रुष स्नेहने' [धा० ९।५६] । तस्य पृषतः। 'क्वण शब्दार्थः' [ धा० १ । ५१ ] । तस्य कुणारुम् । एवमयमपि संप्रसार्यासंप्रसार्यविशेषः परिज्ञेयः शब्दान्निर्ब्रुवता ।

'अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते' । अथापि इदमपरमुपेक्षितव्यमनेन शब्दान् निर्ब्रुवता । आह ।

वेदे वर्तमानाः कृदन्ता भाषायां वर्तमानेभ्यो धातुभ्यो निर्वक्तव्याः

किमिति । उच्यते । भाषिकेभ्यो धातुभ्यः । भाषायां येषां प्रायेण प्रसिद्धप्रयोगास्ते भाषिकास्तेभ्यः । नैगमाः छन्दोविषयाः । कृतः कृत्प्रत्ययान्ताः शब्दाः । 'भाष्यन्ते' विव्रियन्ते निरुच्यन्त इत्यर्थः । तद्यथा ' दमूनाः क्षेत्रसाधा इति ' । ' दम उप-

---

१ ग. ज. 'पादयेदलक्ष°. २ ग. च. ज. °तेनाप्यर्थ°. ३ क. ख. घ. झ. ट. °क्षितव्यम् । तद्यथैतदूतिर्मृदुः पृथुः पृषतः कुणारुमिति । तद्यथा°; ठ. ड. तद्यथैतदूतिर्मृदुरिति । तद्यथा°. ४ क. ख. परतः; ग. ज. घ. ट. पर. ५ क. ख. प्रुष दाहे; ग. परिषस्नेहने; च. प्रुष° पृ; ज. परिषहस्नेहने; घ. ट. पृरुष स्नेहने; झ. पुरुष स्नेहने; ठ. ड. पृष. ६ ग. ज. क्वणशब्दास्तस्य°; घ. झ. ट. ठ. च. क्वणशब्दा तस्य°. ७ क. ख. घ. झ. ट. ' तस्य ' नास्ति. ८ क. ख. घ. झ. ट. ठ. ड. निर्ब्रुवता पुंसा । अथा°. ९ ठ. ड. भाषिकेभ्य इति । अथा°. १० क. ख. घ. झ. ट. °प्रयोगास्ते°; ग. ज. °द्धयोगस्ते°; ठ. ड. °प्रायेण सिद्धप्रयोगास्ते°.

शमे ' [ धा० ४ । ९७ ] । तस्य भाषायां दाम्यत्यनड्वान् दमयत्यनड्वाहं दान्तोऽनड्वानित्येवमादयः प्रयोगा भवन्ति । छन्दसि पुनर्दमूना अग्नि-

यथा दमूनाः क्षेत्रसाधाः

रुच्यते । स भाषाशब्दसामान्येन केनचिन्निर्वक्तव्यो दममना इत्येवमादिना । एवमेव साधतेर्भाषाप्रायो-वृत्तेः ' मित्रं न क्षेत्रसाधसम् ' [ ऋ० सं० ८ । ३१ । १४ ] इत्येवमादयो मित्रमिव क्षेत्रसाधयितारमित्येवमादिना प्रकारेण निर्वक्तव्याः ।

' अथापि नैगमेभ्यो भाषिकाः ' । निगमे छन्दसि ये[3] प्रायोवृत्त्या

नैगमेभ्यो भाषिका व्युत्पाद्या यथा ' उष्णं घृतम् '

प्रसिद्धास्तेभ्यः सामान्यं गृहीत्वा भाषिकाः कृत्प्रत्ययान्ता भाष्यन्ते विक्रियन्ते । तद्यथा । ' उष्णं घृतमिति ' । ' उष दाहे ' [ धा० १ । ६९६ ] । एष प्रायेण च्छन्दसि प्रसिद्धः । प्रत्युष्ट्ं रक्षः प्रत्युष्टा अरातयः ' [ य० वा० सं० १ । ७ तै० सं० १ । १ । २ ] इत्येवमादि । भाषायां पुनरुष्णमिति श्रूयते । स एष नैगमशब्दसामान्येन निर्वक्तव्यः । एवमेव ' घृ क्षरणदीप्त्योः ' [ धा० ३ । १४ ] । तस्य च्छन्दसि " आ त्वा जिघर्मि " [ य० वा० सं० ११ । २३ ] इति प्रसिद्धः प्रयोगः । भाषायां पुनर्घृतमिति श्रूयते । स एवं जिघर्तेरेव छान्दसस्य सामान्येन निर्वक्तव्यः । एवं भाषाविषयेभ्यश्छन्दोविषया निर्वक्तव्याश्छन्दोविषयेभ्यश्च भाषाविषयाः ।

' अथापि ' इदमपरमुपेक्षितव्यमनेन शब्दानिर्बुवता । आह ।

केषुचित्प्रदेशेषु धातुभ्य उत्पन्नान्याख्यातरूपाणि प्रयुज्यन्ते केषुचिद्धातूत्पन्नानि नामानि

किमिति । उच्यते । ' प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु' । एकेषु देशेषु प्रकृतय एव धातुशब्दानां भाष्यन्ते विकृतय एकेषु । धातोराख्यातपदभावेन यः प्रयोगः सा प्रकृतिः । नामीभूतस्य तस्यैव यः प्रयोगः सा विकृतिः ।

---

१ क. ख. ग. ज. साध्यते°. २ क. ख. ग. ज. °साधमित्येव°. ३ घ. झ. ट. ' ये ' नास्ति. ४ घ. झ. ट. ' तद्यथा ' नास्ति. ५ ठ. ड. °मादिः. ६ क. ख. ज. सिद्धः; ग. च. प्रसिद्धप°. ७ च. एव; ठ. ड. एष. ८ क. ख. घ. झ. ट. ठ. ड. अथापि प्रकृतय°. ९ क. ख. ग. ज. घ. झ. ट. प्रदेशेषु. १० क. ख. °कृतिः ॥ ३ ॥ स°.

सै एष ' शवतिर्गतिकर्मा ' गत्यर्थो धातुः 'कम्बोजेष्वेव भाष्यते '।
म्लेच्छेषु प्रकृत्या प्रयुज्यते आख्यातपदभावेन ।

'शवतिः' कम्बोजेषु
'शवः' आर्येषु

शवति गच्छतीत्यर्थः । उदाहरणविशेषप्रसक्तः कम्बोजशब्दो निरुच्यते । ' कम्बोजाः कम्बलभोजाः '। ते हि प्रायेण कम्बलानुपभुञ्जते हिमआयत्वात्तस्य देशस्य । ' कमनीयभोजा वा '। कमनीयानि प्रार्थनीयानि च ते हि द्रव्याण्युपभुञ्जते । प्रचुररत्नो हि स देश इति । कम्बलशब्दं विग्रहप्रसक्तं निर्ब्रवीति । ' कम्बलः कमनीयो भवति ' । प्रार्थनीयो हि स शीतार्तैर्भवति । ' विकारमस्यार्येषु भाषन्ते शव इति '। आर्येषु जनपदेष्वस्यैव शवतेर्विकारं भाषन्ते । मृतकनामधेयभूतमेतं प्रयुञ्जते । कथम् । शव इति । एवमेकेष्वाख्यातस्थ एव प्रयुज्यते नामीभूत एकेष्वित्येतत्प्रकृतित्वं विकारत्वं च । अथवा चेतनावत्स्वेकेषु गमनक्रियायोगिनि द्रव्ये प्रयुज्यत एकेषु पुनश्चेतनारहित एवेत्येतत्प्रकृतित्वं विकारत्वं च ।

द्वितीयमुदाहरणम् । ' दातिर्लवनार्थे प्राच्येषु '। दातिर्धातुराख्यातस्थो लवनार्थे प्राच्येषु जनपदेषु प्रयुज्यते ।

'दातिः' प्राच्येषु
'दात्रं' उदीच्येषु

तद्यथा । व्रीहीन्दाति यवान्दाति । अयमेव नामीभूतः ' उदीच्येषु ' प्रयुज्यते ' दात्रं ' इति । दीयतेऽनेनेति दात्रम् । लूयत इत्यर्थः ।

' एवमेकपदानि निर्ब्रूयात् ' । अनेनैव प्रकारेणैकपदानि निर्ब्रूयाद्भाषानिगमव्यवस्थया रूढिव्यवस्थया वा देशभाषाप्रसिद्धिविभागेन वा ।

आह । एवं तावदतद्धितयुक्तेषु पदेष्वसमासयुक्तेषु निर्वचनम् । अथ पुनर्यानि तद्धितयुक्तानि समासयुक्तानि च पदानि तानि कथं निर्वक्तव्यानि । किं तद्धितयुक्तेषु पूर्वं पदार्थो निर्वक्तव्य उत तद्धितार्थः । समासयुक्तेष्वपि

---

१ ग. स एषः ॥ २ ॥ शव°. २ ठ. ड. °भूते प्रेते प्रयु°. ३ घ. झ. प्रयुज्यन्ते; द. प्रयुज्यन्ते° युञ्जते. ४ च. 'एव' नास्ति. ५ ठ. ड. °भूतः । दात्रमुदीच्येष्विति । उदी°. ६ क ख. घ. झ. ट. °च्येषु जनपदेषु प्रयु°. ७ क. ख. ग. ज. ' एक ' नास्ति; ठ. ड. अनेनैव प्र°. ८ क. ख. ग. ज. °युक्तेषु च निर्व°. ९ क. ख. घ. झ. द. °युक्तेषु पदेषु पूर्वं°

किं पदार्थः पूर्वमुत समासार्थो वा पूर्वमिति ।

तद्धितसमासपदनिर्वचनप्रकारः

उच्यते । 'अथ तद्धितसमासेष्वेकपर्वसु चानेकपर्वसु च पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयात्' ।

अथशब्दो विशेषाधिकारार्थः । 'तद्धिताः' [पा० ४ । १ । ७६ ] इत्यधिकृत्य ये प्रत्यया विहितास्ते तद्धिताः । 'समर्थः पदविधिः' [ पा० २ । १ । १ ] इत्यधिकृत्य ये विहितास्ते समासाः । तेषूभयेष्वपि तद्धितसमासेष्वविशेषेण 'एकपर्वसु चानेकपर्वसु च' एकपदेष्वनेकपदेषु च[1] । तद्यथा । दण्ड्य इत्येकपदस्तद्धितः । वार्ष्यायणिरित्यनेकपदः । अनेकानि ह्येष पदानि स्वात्मन्यन्तर्णीय प्रवर्तते । तद्यथा । वृषस्यापत्यं वार्ष्यः । वार्ष्यस्यापत्यं वार्ष्यायणः । तस्यापि वार्ष्यायणिरिति । एवं समासेष्वप्येकपदेषु चानेकपदेषु चैवं निर्ब्रूयाद्यथा वक्ष्यामः । एकशेषः एकपदः[2] समासः । 'सरूपाणामेकशेष एकविभक्तौ' [ पा० १।२।६४ ) इति । तद्यथा । पुरुषश्च पुरुषश्च पुरुषौ पुरुषश्च पुरुषश्च पुरुषश्च पुरुषा इत्येवम् ।

'द्विगुर्द्वन्द्वोऽव्ययीभावः कर्मधारय एव च ।
पञ्चमस्तु बहुव्रीहिः षष्ठस्तत्पुरुषः स्मृतः' [बृह० २।१०७] ॥

एतेऽनेकपदाः समासाः । तत्र 'संख्यापूर्वो द्विगुः' [ पा० २ । १ । ५२ ] पञ्चपूली पञ्चरथी दशरथीत्येवमादि । 'चार्थे द्वन्द्वः' [ पा० २ । २ । २९ ] । स च पुनर्विभाषयैकवद्भवति । तद्यथा । प्लक्षन्यग्रोधौ अहिनकुलं भीमार्जुनवासुदेवा इत्यादि[3] । उपसर्गनिपातपूर्वकोऽव्ययीभावः । तद्यथा । उपमणिकं अनुसमुद्रं व्यभ्रमित्येवमादि । तुल्यविभक्तिलिङ्गयोरुभयोः पदयोः समानाधिकरणः कर्मधारयः । तद्यथा । कृष्णमृगो रक्ताश्वः श्वेतपताकेत्येवमादि । एतेष्वेकपर्वसु चानेकपर्वसु च तद्धितसमासेषु पूर्वं पूर्वमेव निर्ब्रूयादपरमपरमेव प्रविभज्य विगृह्येत्यर्थः । पूर्वं तद्धितार्थं निर्ब्रूयात्पश्चात्पदार्थम् । समासेष्वपि पूर्वं समासार्थं पश्चात्पदार्थम् ।

तदेतदुदाहरणैरेव दर्शयति । तद्यथा । 'दण्ड्यः पुरुषः[4]' इति ।

१ क. ख. °पदेषु चानेक°. २ च. °कपदमेकसमासः. ३ घ. झ. ट. ठ. ड. इत्येवमादि. ४ घ. झ. ट. पुरुषो दण्डपुरुषो दण्डमर्हतीति वा दण्डेन संपद्यत इति वा इति । दण्ड्य इत्येष°.

तद्धितनिर्वचनस्योदाहरणम् ।

दण्ड्य इत्येष तद्धितः पुरुषशब्दविशेषणम् । पूर्वं तावत्तद्धितार्थं निर्वक्ष्यति ततः पदार्थं निर्वक्ष्यति । कस्मिंश्चिदपराधे दण्डमर्हतीति दण्ड्यः । दण्डेन वा कार्षापणादिना यः संपद्यते संयुज्यते स दण्ड्यः । अधुना पदार्थनिर्वचनम् । 'दण्डो[1] ददतेः' धारयत्यर्थे वर्तमानस्य । धार्यते ह्येषोऽपराधेषु राजभिः । आह । दृष्टः पुनः क्वचित्प्रयोगो ददतेर्धा[2]रयत्यर्थ इति । उच्यते । दृष्टो वेदे लोके च । वेदे तावत् । विश्वे देवाः पुष्करे त्वाददन्त [ ऋ० सं० ७ । ३३ । ११ ] इति । तथा लोके 'अक्रूरो ददते मणिम्[3]' ।

ददतिर्धारणार्थः

अक्रूरो नाम राजा वृष्ण्यन्धकाधिपतिः । स ददते मणिं स्यमन्तकनामानं शिरसा । लोकेऽप्येवं धारणा[4]र्थे ददतिर्भाष्यते । 'दमनात्[5]' दण्डः 'इत्यौपमन्यवः' ह्याचार्यो मन्यते । तेन ह्यदान्तो दम्यते राजभिः । 'तेनादान्तान्दमयेत्' इत्युक्तम् [ गौत० धर्म० ११ । २८ ] । लोके हि प्रसिद्धम्[6] । यः कश्चिददान्तो भवति तमधिकृत्य वक्तारो भवन्ति '[7]दण्डमस्याकर्षत हे सभासदः । तेन संपद्यतामयं ततो दान्तो भविष्यति' इति । [8]एवमयं गर्हायां दृष्टः । एवं च दमनाद्दण्ड इत्यौपमन्यव आचार्यो मन्य[9]ते ।

तद्धितस्यैव द्वितीयमुदाह[10]रणं 'कक्ष्या रज्जुरश्वस्य' इति । कक्ष्या[11] इत्येष तद्धितः । आह । का पुनरियं कक्ष्येति । उच्यते । याश्वस्य संनाहरज्जुः सा कक्ष्येत्युच्यते । एवं कक्ष्याशब्दस्य तत्त्वमुक्त्वाधुना तद्धितार्थं ब्रवीति । 'कक्षं सेवते' । सा[12] हि कक्षं सेवते । कक्षसंयुक्ता भवति । कक्षे भवा वा[13] कक्ष्या । अधुना पदार्थं निर्वक्ति ।

तद्धितस्य द्वितीयोदाहरणम्

---

१ क. ख. घ. झ. ट. ड. दण्डो ददतेर्धारयति कर्मणः । ददतेः°. २ च. ददातेर्धा°. ३ ठ. ड. मणिमित्यभिभाषन्ते । अक्रूरो°. ४ क. ख. घ. झ. ट. ड. ददतिर्धारणार्थे भा°; च. धारणार्थे ददातिर्भा°; ठ. ददातिर्धारणार्थे भा°. ५ घ. झ. ट. ठ. दमनादित्यौपमन्यवः । दमनाद्दण्ड°. ६ ग. ज. °सिद्धं दान्तो यः°. ७ क. ख. घ. झ. ट. ठ. ड. दण्डमस्याकर्षतेति गर्हायाम् । दण्डमस्या°. ८ घ. झ. ट. ठ. ड. इत्येव°. ९ क. ख. °न्यते॥४॥तद्धि°. १० ग. °रणम् । ४ । कक्ष्या°. ११ घ. झ. ट. ठ. ड. 'इति' नास्ति. १२ ग. ज. 'सा हि कक्षं सेवते' नास्ति. १३ च. 'वा' नास्ति.

'कक्षो गाहतेः' विलोडनार्थस्य [ धा० १ । ६६९ ] । कक्षयोरेव हि बलेन विलोडयति स्त्री दध्यादि । अत्र पुनः 'क्स इति नामकरणः'[1] । सर्वमन्यदाद्यन्तविपर्ययादि यथोपप्रदर्शितं यथासंभवं योज्यं तत्र तत्र । 'ख्यातेर्वानर्थकोऽभ्यासः'[2] ककारः । किंख्यः[3] सन्कक्ष इत्युच्यते । अर्थ-वानेव वा ककारः । कथम् । 'किमस्मिन्ख्यानमिति' एवम्[4] । किम-स्मिन्ख्यापनीयमस्ति । न किंचिदप्यदर्शनीयत्वात् । गूहनीयोऽयमित्यर्थः । स एष एवं कृत्वा किंख्यः सन्कक्ष इत्युच्यते । 'कषतेर्वा' [ धा० १ । ६८६ ] । नित्यकालं ह्यसौ स्वेदशीलत्वात्कण्डूं ददाति ततो नखैः कष्यंते[5] यतस्तस्मात्कर्षणक्रियायोगात्[6]कक्षः[7] । 'तत्सामान्यान्मनुष्यकक्षः' । स्त्रीकक्षस्य सामान्यान्मनुष्यकक्षोऽपि कक्ष इत्युच्यते । 'बाहुमूलसामान्या-दश्वस्य[8]' अपि यो बाहुमूलप्रदेशः स कक्ष इत्युच्यते । तं सेवत इति कक्ष्या ।

अन्ये तु ब्रुवते । 'पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयात्'' । पूर्वं पदं पूर्वमेव प्रविभज्य निर्ब्रूयादपरं पदमपरमेवेति ।

पूर्वं पूर्वमित्यादेरपरो व्याख्यामार्गः — एतस्मिन्नेवार्थे[9] कल्प्यमाने पदानामेव पौर्वापर्यं निर्वचने । तद्धितसमासयोस्त्वनियमः पूर्वं वा पश्चाद्वेति । पूर्व एव त्वर्थः साधीयान् ।

उक्तं तद्धितनिर्वचनं[10]लक्षणं सोदाहरणम् । अधुना समासोदाहरणमु-च्यते[11] ॥ २ ॥

---

अथ द्वितीयः पादः ।

---

**राज्ञः पुरुषो राजपुरुषो राजा राजतेः पुरुषः पुरिषादः पुरिशयः पूरयतेर्वा पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्य ।**

---

१ ग. ज. 'तत्र' सकृदेव. २ घ. झ. ठ. ठ. ड. °भ्यासः । ख्यातेरनर्थोऽ-(ठ. ड. र्थकोऽ) भ्यासःककारः. ३ घ. ढ. वङ्यः; ठ. ड. ख्यः. ४ घ. झ. ट. ठ. ड. °इति । एवं किम°. ५ ठ. ड. कृष्यते. ६ ठ. ड. °त्कर्षण°. ७ क. ख. घ. झ. ठ. ड. °त्कक्ष इत्युच्यते । तत्सा°. ८ क. ख. घ. झ. ट. ठ. ड. °मान्या-दश्वस्य । अश्वस्यापि°. ९ क. ख. घ. झ. ठ. ड. 'एव' नास्ति; ठ. स्मिन्नर्थे° चेवा. १० च. °निर्वचनं सोदा°. ११ क. ख. ग. च. ज. घ. झ. ट. अङ्को नास्ति; ठ. ड. ॥ २ ॥ इति निरुक्तटीकायां द्वितीयाध्याये द्वितीयः खण्डः ॥ अधुना समासोदाहरणमुच्यते । राज्ञः°.

यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति किंचित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वमित्यपि निगमो भवति । विश्वकद्राकर्षो वीति चकद्र इति श्वगतौ भाष्यते द्रातीति गतिकुत्सना कद्रातीति द्रातिकुत्सना चकद्राति कद्रातीति सतोऽनर्थकोऽभ्यासस्तदस्मिन्नस्तीति विश्वकद्रः कल्याणवर्णरूपः कल्याणवर्णस्येवास्य रूपं कल्याणं कमनीयं भवति वर्णो वृणोते रूपं रोचतेरेवं तद्धितसमासान्निर्ब्रूयान्नैकपदानि निर्ब्रूयान्नावैयाकरणाय नानुपसन्नायानिदंविदे वा नित्यं ह्यविज्ञातुर्विज्ञानेऽसूयोपसन्नाय तु निर्ब्रूयाद्यो वालं विज्ञातुं स्यान्मेधाविने तपस्विने वा ॥ ३ ॥

---

समासनिर्वचनस्योदाहरणम्

' राज्ञः पुरुषो राजपुरुषः ' । राज्ञ इत्युक्ते सर्वं स्वं गम्यते षष्ठीसामर्थ्यात् । तथा पुरुष इत्युक्ते सर्वः स्वामी गम्यते निर्देशसामर्थ्यात् । अथेदानीं राजपुरुष इत्युक्ते राजा पुरुषमन्येभ्यः स्वामिभ्यो विनिवर्त्य स्वात्मनि संयुनक्ति । पुरुषोऽपि राजानमन्येभ्यः स्वेभ्यो निवर्त्य स्वात्मना संयुनक्ति । ता उभावप्यन्योन्यविमिश्रपदार्थकौ मिथःसंस्पृष्टपदार्थौ समस्येते । अथेदानीं राजपुरुष आनीयतामित्युक्ते न राजानमानयन्ति नापि पुरुषमात्रं नाप्युभयम् । किं तर्हि । राजस्वामिकं पुरुषमानयन्ति । एवं समासार्थः । कुतः पुनरेतद्राजस्वामिकमिति । प्रधानोपसर्जने हि सहभूते विवक्षितमेकमर्थं ब्रूतः ।

---

१ ड. कश्चित्. २ क. ख. छ. त. द. °वाति ॥ ५ ॥ वि°. ३ क. ख. छ. विश्वक°. ४ क. ख. छ. त. द. ६. ५ घ. झ. सर्वस्वं. ६ घ. झ. ट. ठ. ड. स्वामिभ्यः. ७ क. ख. झ. ठ. ड विनिवर्त्य; घ. ट. निर्वर्त्य. ८ झ. ठ. ड. स्वात्मनि. ९ घ. झ. °क्ति । पुरुषोऽपि राजान्येभ्यः स्वामिभ्यो विनिवर्त्य स्वात्मना संयुनक्ति । ता°. १० क. ख. ज. संसृष्टः°; ग. संभृष्ट°; घ. ट. संसृस्पृष्ट°.

राजपुरुषशब्दावधुना विग्रहप्रसक्तावाह । 'राजा राजतेः[1]' दीप्त्यर्थस्य [ धा० १ । ८४७ ] । दीप्यते ह्यसौ पञ्चानां लोकपालानां वपुषा । 'पुरुषः पुरिषादः' । पूः शरीरं बुद्धिर्वा । तयोरसौ विषयोपलब्ध्यर्थं सीदतीति[2] पुरिषादः[3] पुरुषः । 'पुरिशयः[4]' । अथवा तयोरसौ शेते विशेषेणास्त इति पुरिशयः सन्पुरुष इत्युच्यते । 'पूरयतेर्वा' । पूर्णमनेन पुरुषेण सर्वगतत्वाज्जगदिति पुरुषः । 'पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्य[5]' । अन्तरित्यन्तरपुरुषाभिप्रायेणैवमुच्यते प्रासङ्गिकम् ।

पूरयतेः पुरुष इत्यर्थ उपनिषच्छ्लोकः

निगमश्च भवति । यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति किंचित्[6] । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् [ श्वेता० उप० ३ । ९ ॥ महाना० उप० १० । ४ ] ॥ यस्मात्परमपरं वा न किंचिदप्यस्ति यस्माच्च न किंचिदप्यणीयो नापि ज्यायोऽन्यदस्ति स एव सर्वमित्यभिप्रायः । वृक्ष इव स्तब्धो नित्यमसंकोचविकाशधर्मा दिवि द्योतनवति स्वात्मनि सर्वर्द्धिभावेन[7] तिष्ठति यस्तेन पुरुषेणेदं पूर्णं सर्वं जगदिति[8] ।

समासस्य द्वितीयमुदाहरणम्

समासस्यैव द्वितीयमुदाहरणं[9] 'विश्वकद्राकर्षः' इति । विश्वकद्रमाकर्षतीति विश्वकद्राकर्षः । आह । कः पुनरयं विश्वकद्र[10] इति । वीति[11] चकद्र इति शब्दद्वयं श्वगतौ भाष्यते । श्वभिः साकं यो गच्छति मनुष्यस्तस्मिन्भाष्यते[12] । अत्र पुनर्द्रातीति गतिकुत्सना । 'द्रा कुत्सायां गतौ' [ धा० २।४४ ] इत्युक्तम् । इदं हि तस्य कुत्सितगतित्वं यदस्य[13] श्वभिः सह गमनम्[14] । इदानीं कद्रातीति द्राति-

---

१ क. ख. घ. झ. ट. ठ. ड. राजतेः । राजतेर्दी°. २ ग. ज. 'इति' नास्ति. ३ ग. ज. पुरिषाद इति पुरुषः; च. 'पुरिषादः' नास्ति. ४ च. झ. 'पुरिशयः' नास्ति. ५ च. 'पूर......प्रेत्य' नास्ति. ६ ठ. ड. कश्चित्. ७ क. ख. घ. झ. सर्वविभागेन; च. सर्वर्द्धिभावेन° वि; ट. सर्वविभागेन° र्द्धिभावे. ८ क. ख. °दिति ॥ ५ ॥ समा°. ९ ग. °णम् । ५ । वि°. १० क. ख. घ. झ. ट. ठ, ड. इति । वीति चकद्र इति श्वगतौ भाष्यते । वीति°. ११ घ. झ. ट. वीतीति. १२ क. ख. घ. झ. ट. ठ. ड भाष्यते । द्रातीति गतिकुत्सना । अत्र°. १३ ठ. ड. यदसौ श्वभिः सह गच्छति । कद्रातीतिद्रागतिकुत्सना । इदा°. १४ घ. झ. ट. गतिः । कद्रातीति द्रातिकुत्सना । इदा°.

कुत्सना । कुत्सितकुत्सनेत्यर्थः । इदमेव तावत्तस्य कुत्सितत्वं यदसौ श्वभिः सह गच्छति । इदमपरं कुत्सिततरं यद्गत्वा श्वभिः सत्त्वानि हन्ति । तस्मात्कद्रातीति कुत्सितकुत्सनेत्युपपद्यते । अथेदानीं च इत्येष कद्रातीत्येवमेव सतः शब्दस्वरूपस्यानर्थक एवाभ्यासः । यदेवोक्तं भवति कद्रातीति तदेव चकद्रातीति । तदस्मिन्द्वितयमप्यस्ति कुगतित्वं कुत्सिततरगतित्वं च नानाप्रकारमिति विश्वकद्रः श्वजीवनः पुरुषः । तमपराधे कस्मिंश्चिद्वर्तमानमन्यो य आकर्षति स विश्वकद्राकर्षः । अन्ये तु ब्रुवते । श्वैव विश्वकद्रः । तस्यैव हि स्वभावत एव हिंस्रत्वाद्गतिः कुत्सिता । स च पुनः पादविकलोऽतस्तस्य कुत्सितकुत्सितत्वम् । वीत्युभयोरर्थयोर्मत्वर्थः । तमाकर्षति यः पुरुषः स विश्वकद्राकर्षः ।

अधुना रूपसमासं दर्शयति । ' कल्याणवर्णरूपः ' । कल्याणवर्णं सुवर्णं तस्येव यस्य रूपं स कल्याणवर्णरूपः । अग्निरन्यो वा कश्चित् ।

रूपसमासस्योदाहरणम्

कल्याणादिशब्दान्विग्रहप्रसक्तान्निर्ब्रवीति । 'कल्याणं कमनीयं भवति' । प्रार्थ्यते हि तत्सर्वेणैव । ' वर्णो वृणोतेः ' । आवृणोति हि स आश्रयम् । ' रूपं रोचतेः ' । तद्धि रोचिष्णु भवति । ' एवं तद्धितसमासान्निर्ब्रूयात् ' इत्युपसंहारवचनम् ।

' नैकपदानि निर्ब्रूयात् ' । प्रकरणोपपदरहितानि सन्ति केवलान्येव परेणाभिद्रोहबुद्ध्या पृच्छ्यमानानि न निर्ब्रूयान्न निर्वक्तव्यानीति । किं कारणम् । तेषां प्रकरणादुपपदाद्वार्थः शक्यतेऽवधारयितुम् । सोऽसौ प्रकरणानभिज्ञोऽन्यथैव निर्ब्रूयात्ततश्च प्रत्यवायेन योगादपहास्यश्च स्यात् । तद्यथा । ' जहा ' इत्येतदेकं पदं प्रकरणोपपदरहितं न विज्ञायते किं ' हन्तेः ' उत ' ओहाक्त्यागे' [ धा० ३ । ८ ] इत्यस्य धातोः स्यादिति । तत्पुनरेतत् ' मा न एकस्मिन्नागसि मा द्वयोरुत त्रिषु । वधीर्मा शूर भूरिषु' [ ऋ० सं०

निर्वचनं कथं कर्तव्यं कथं न

१ घ, ट. कुत्सितकुत्सितत्वं; ठ. ड. कुत्सितकुत्सिततत्वं. २ घ. झ. ट. कुत्सिततरत्वं. ३ घ. झ. ट. श्वभिः सह सत्त्वानि°. ४ क. ख. घ. झ. ट. ठ. ड. °पद्यते। चकद्रातीति कद्रातीति सतोऽनर्थकोऽभ्यासः । अथे°. ५ क. ख. घ. झ. ट. ठ. ड. °तीति । तदस्मिन्नस्तीति विश्वकद्रः । त°. ६ ग. च. ज. ' अतः ' नास्ति. ७ क. ख. ग. ज. °पहारश्च. ८ ग. च. ज. घ. झ. ट ठ. ड. एकस्मिन्नित्येतस्यां°.

८ । ४५ । ३४ ] इत्येतस्यां पूर्वस्यामृचि यदेतद् 'मा वधीः' इति पदमेतस्माद्गम्यते हन्तेः स्यादिति । किं कारणम् । विज्ञातप्रकरणोपपदस्य हि समञ्जसं ह्युपाकरणं न्याय्यमित्येवमनवगतसंस्काराणामेकपदानां प्रकरणादर्थावधारणमुपपदाद्वा शक्यते कर्तुम् । अत इदमुक्तं 'नैकपदानि निर्ब्रूयात्' इति ।

'नावैयाकरणाय' इति । उक्तं निर्वचनलक्षणम् । अधुना यस्मै निर्वक्तव्योऽयमुक्तनिर्वचनलक्षणः समाम्नायस्तस्य लक्षणं कस्मै न कर्तव्यम् । वक्तव्यमिति तदर्थमिदमारभ्यते 'नावैयाकरणाय' । यस्तावदवैयाकरणस्तस्मै न निर्वक्तव्योऽयं समाम्नायः । न ह्यसावलक्षणज्ञत्वाद्व्युत्पाद्य निरुच्यमानमेतद्बुध्येत ततो व्यर्थ एव श्रमः स्यादिति । किंच ।

**अवैयाकरणाय**

'नानुपसन्नाय' । किमपि महदद्भुतमनेन कृतं यद्व्याकरणमधीतमित्येतावता गौरवेण वैयाकरणायापि न निर्ब्रूयात् । धर्मो हि सर्वथैवापरित्याज्यस्तस्माद्वैयाकरणायापि सम्यगुपसन्नाय परां शिष्यवृत्तिमास्थितायैव निर्ब्रूयात् । नैवमेवे । किंच ।

**अनुपसन्नाय**

'अनिदंविदे वा' । वैयाकरणोऽपि जडः कश्चिदसमर्थ एव वेदितुं स्यात् । बहु वेदितव्यमत्रास्ति देवतादि किंचित् । तस्माद्वैयाकरणायापीदं वेदितुमसमर्थायानिदंविदे नैव निर्ब्रूयात् । अथवा । इदमित्यात्मपर्यायवाचि । इदंविद आत्मविदे योगिने । स ह्यात्मज्ञानविधूतकल्मषोऽल्पेनैव यत्नेन बोद्धुं सूक्ष्मानर्थाञ्शक्त इतीदंविदे निर्ब्रूयात् । अथवा । यत्किंचिच्छास्त्रमिदमिति निर्दिश्यते । येन ह्यन्यत्किंचिदश्रुतपूर्वं शास्त्रं तस्मै न निर्ब्रूयादिदं निरुक्तशास्त्रमनास्फालितकुड्मलाय नाक्षालितहृदयकुड्मलाय ।

**अनिदंविदे**

१ क. ख. घ. ट. ठ. ड. किमतिमह°. २ ग. ज. 'नैवमेव' नास्ति. ३ ग. ज. 'वैयाक......किंचित्' इदं वाक्यं 'तस्मात्...निर्ब्रूयात्' इत्यस्य पश्चाद्वर्तते. ४ च. ट. एवं. ५ क. ख. ठ. तस्मै वै°. ६ घ. ट ठ. ड. 'यत्नेन' नास्ति. ७ क. ख. घ. ट. ठ. °श्रुतं पूर्वशास्त्रं; ड. °श्रुतं पूर्वं शास्त्रं. ८ क. ख. घ. ठ. ड. [ झ. पत्रं गलितं ]. अनास्फालितहृदयकुड्म°; ग. ज. अनास्फुलितकुड्म°. ९ घ. ट. ठ. अनाक्षालित°.

किं कारणम्। ‘ नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया ’। यो हि न विजानाति नावबुध्यते तस्याविज्ञातुर्नित्यकालमेव विज्ञानेऽसूया। स ह्यनवबुध्यमान आत्मीयदोषमाचार्य[1] एवासजति[2] स्वयमेव तावदयं नावबुध्यते किमस्मान् बोधयिष्यतीति । एतस्मात्कारणादश्रुतपूर्वान्यशास्त्रायाखिन्नमनसे[3] नेदं निर्ब्रूयात्।

अज्ञस्य विज्ञानेऽसूया

‘ उपसन्नाय तु निर्ब्रूयाद्यो वालं विज्ञातुं स्यान्मेधाविने तपस्विने वा ’। य एव तु मेधावी स्यादन्यजन्मान्तरानुभावितया प्रज्ञया युक्तो यो वा तपस्वी कामं ताभ्यामवैयाकरणाभ्यामपि निर्ब्रूयादेव। न हि तयोरसाध्यं किंचिदस्ति । तपसा हि स्वयमपि वेदार्थः प्रादुर्भवेदेव यथा मन्त्राः प्रादुरभूवन् पूर्वेषामृषीणाम् । मेधाव्यपि च स्वयमप्युत्प्रेक्षितुं शक्नुयात्किमुतोच्यमानमवबोद्धुम् । यो वान्यः कश्चिदलं पर्याप्तो विज्ञातुमेतच्छास्त्रं भवेद्दृढग्राही स्थिरबुद्धिस्तस्मै निर्ब्रूयादेव सर्वथा यतात्मने[4] विदितवेदाङ्गाय वेदार्थब्राह्मणाय। अनुपसन्नायैव न निर्ब्रूयाद्यद्यपि तपस्वी मेधावी दृढग्राही वा। उक्तं हि। ‘ यश्चान्यायेन निर्ब्रूयाद्[5]यश्चान्यायेन पृच्छति । तयोरन्यतरो मृत्युं विद्वेषं वाधिगच्छति[6]’॥ अथाप्येतमर्थमधिकृत्योदाहरन्ति ॥ ३ ॥[7]

उपसन्नाय निर्वचनं कर्तव्यम्। मेधाविने तपस्विने च

---

**विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि। असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम्। य आतृणत्त्यवितथेन[8] कर्णावदुःखं कुर्वन्नमृतं संप्रयच्छन्। तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत्कतमच्चनाह । अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा। यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत्। यमेव विद्याः शुचिमप्रमत्तं**

---

१ क. ख. घ. ट. ठ. ड. आत्मीयं दोषं. २ ठ. ड. °सज्जाति. ३ घ. °शास्त्राय। खिन्न°; ट. ठ. ड. °शास्त्राय खिन्न°. ४ ग. ज. यतात्मानं विदितवेदाङ्गवेदार्थब्राह्मणं. ५ च. विब्रू°. ६ क. ख. °गच्छति ॥ ६ ॥ अथा°. ७ घ. ट. ठ. ड. च. ज. अङ्को नास्ति ; ग. ६. ८ छ. °विदृथेन.

**मेधाविनं ब्रह्मचर्योपपन्नम् । यस्ते न द्रुह्येत्कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन्निति निधिः शेवधिरिति॥४॥**

---

## इति द्वितीयाध्यायस्य प्रथमः पादः ।

---

अनृजवेऽसूयकायायताय विद्या न देयेत्यर्थे गाथाः

विद्या ह वै ब्राह्मणमाजगामेति । विद्या किल कामरूपिणी भूत्वा विद्याधिदेवता वा संयतात्मानं विदितवेदाङ्गवेदार्थं ब्राह्मणं प्रति कंचिदाजगाम । तमेत्य प्रह्वीभूतोवाच । किमिति । गोपाय मा रक्ष माम् । ततस्तेऽहं गुप्ता सती शेवधिर्भविष्यामि सुखनिधानमित्यर्थः । आह कुतः पुनस्त्वां रक्षामि । असूयकायानृजवेऽयताय । असूयकः परापवादशीलः । अनृजुः यस्य मनोवाग्देहेष्वसमाः प्रवृत्तयः । अयतो विप्रकीर्णेन्द्रियः । यत्किंचनकार्यशुचिः । एवंलक्षणाय न मां ब्रूयास्त्वम् । किं तथा भविष्यति । वीर्यवती तथाहं तव स्यां भवेयमित्यर्थः ।

यो विद्यां ददाति स मातापितृसदृशः

य आतृणत्त्यवितथेन । अधुना शिष्योपदेशमाह । य आतृणत्ति आभिनत्ति अपिहिताविव सन्तौ कर्णौ विवृणोति अवितथेन सत्येन ब्रह्मणा । कथं पुनरातृणत्ति । अदुःखं कुर्वन् । यो हि किंचिदातृणत्ति स दुःखयति । अयं पुनः सुखमातृणत्ति । किंच । अमृतत्वप्राप्तिहेतुं ज्ञानं संप्रयच्छन् । य आतृणत्ति तस्मै किमिति । उच्यते । तं मन्येत पितरं मातरं च । नेतरौ मातापितरावित्यभिप्रायः । उक्तं च । ' उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता । प्रेत्य चेह च विप्रस्य ब्रह्मजन्म हि शाश्वतम् ' [ म० सं० २ । १४६ ]॥ तस्मै मातापितृभूताय गुरवे न द्रुह्येत्कतमच्चनाह कदाचिदपि । आपद्यपि कष्टायामित्यभिप्रायः ।

---

१ क. ख. छ. त. द. ७. २ ङ. थ. ध. ठ. ड. 'इति......पादः ' नास्ति. ३ ठ. ड. कथं. ४ ठ. ड. रक्षामि । उच्यते । असू°. ५ ग. ज. ब्रूयात् स्त्वम्; घ. ब्रूयां रिः अ किं°; ट. ब्रूयास्त्र रि. अ किं°. ६ ठ. ड. हेतुं. ७ ग. ज. मन्ये. ८ क. ख. घ. ट. ठ. ड. ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम्.

अधुनेतरान् दुष्टशिष्यान् विद्याभिशपन्त्याह[1] । अध्यापिताः[2] सन्तो ये गुरुं प्रति नाद्रियन्ते नादरं कुर्वन्ति । के[3] पुनस्त इति । उच्यते । विप्रा मेधाविनः सन्तो गृहीतविद्याः ।

ये गुरुं नाद्रियन्ते ते श्रुतफलं नाप्नुवन्ति

कथं पुनर्नाद्रियन्ते । वाचा मनसा कर्मणा वा । आह । किं तेषामिति । उच्यते । यथैव ते तस्य[4] गुरोर्न भोजनीया न[5] भोज्याः न भोजनार्हास्तथैव तांस्तच्छ्रुतमपि न भुनक्ति न पालयति । श्रुत[6]फलेन न संयुनक्तीत्यर्थः ।

अधुना यस्मै वक्तव्या तस्य लक्षणं ब्रवीति । यमेव विद्यां[7] जानीयास्त्वं शुचिमप्रमत्तं यमनियमेषु मेधाविनं च ब्रह्मचर्येणोपपन्नम् । किंच । यस्ते न द्रुह्येन्न द्रोहमुपगच्छेत्कतमच्चनाह कदाचिदपि सर्वास्वप्यापत्सु गोपायमानः तस्मै मां ब्रूयास्त्वं निधिपाय गोप्त्रे ब्रह्मन् ।

विद्या कस्मै देया

आह । निधिः क इति । उच्यते । शेव[8]धिरिति । शेवं[9] इति सुखं[10]नाम । सुखनिधानमित्यर्थः । ब्रह्म[11]कोशो हि निधिः सुखानां कृत्स्नस्य जगतो यज्ञद्वारेण । अत इदमुक्तं निधिः शेवधिरिति ॥ ४[12] ॥

इति निरुक्तवृत्तौ सप्तम[13]स्याध्यायस्य प्रथमः पाद[14]ः ॥

---

**अथातोऽनुक्रमिष्यामो गौरिति पृथिव्या नामधेयं यद्दूरं गता भवति यच्चास्यां भूतानि गच्छन्ति गातेर्वौकारो नाम-**

---

१ क. ख. घ. ट. ठ. ड. अभिशपन्ती विद्या इदमाह. २ क. ख. घ. ट. ठ. ड. अध्यापिता ये गुरुं नाद्रियन्त इत्यादि । अध्या°. ३ घ. ट. 'के पुनस्त इति' नास्ति; ठ. ड. आह । कतमे इति. ४ ग. ज. 'तस्य' नास्ति. ५ घ. ट. 'न भोज्याः' नास्ति; च. 'न' नास्ति. ६ ठ. ड. श्रुतं फले°. ७ घ. ट. ठ. ड. विद्याः शुचिमप्रमत्तमिति ( ठ. ड. 'इति' नास्ति ) यमेव विद्या जानीया°. ८ ग. ज. सेवधि°. ९ ग. ज. सेव. १० च. सुषनाम. ११ क. ख. घ. ट. ठ. ड. ब्रह्मलोको. १२ क. ख. ७; घ. ट. च. ज. अङ्को नास्ति; ठ. ड. °रीति । इति निरुक्त°. १३ ग. ज. सप्तमाध्यायस्य; घ. द्वितीयस्याध्या°; ट. द्वितीयस्याध्या° सप्तम; ठ. ड. °निरुक्तटीकायां द्वितीयाध्यायस्य चतुर्थः खण्डः । इति द्वितीयाध्यायस्य प्रथमः पादः. १४ घ. ट. पादः समाप्तः.

करणोऽथापि पशुनामेह भवत्येतस्मादेवाथाप्यस्यां ताद्धितेन कृत्स्नवन्निगमा भवन्ति गोभिः श्रीणीत मत्सरमिति पयसो मत्सरः सोमो मन्दतेस्तृप्तिकर्मणो मत्सर इति लोभनामाभिमत्त एनेन धनं भवति पयः पिबतेर्वा प्यायतेर्वा क्षीरं क्षरतेर्घसेर्वेरो नामकरण उशीरमिति यथांशुं[1] दुहन्तो अध्यासते गवीत्यधिषवणचर्मणोंऽशुः शमष्टमात्रो भवत्यननाय शं भवतीति वा चर्म चरतेर्वोच्चृत्तं भवतीति वाथापि चर्म च श्लेष्मा च गोभिः संनद्धो असि वीळ्[2]यस्वेति रथस्तुतावथापि स्नाव च श्लेष्मा च गोभिः संनद्धा पतति प्रसूतेतीषुस्तुतौ ज्यापि गौरु[3]च्यते गव्या चेत्ताद्धितमथ चेन्न गव्या गमयतीषूनिति ॥ ५ ॥

' अथातोऽनुक्रमिष्यामः ' । ' समाम्नायः समाम्नातः स व्याख्यातव्यः ' इति प्रतिज्ञातम् । सा च पुनरियं व्याख्या सामान्या वैशेषिकी च । तत्र सामान्या सर्वनाम्नामिदं सामान्यलक्षणमिदमाख्यातानामिदमुपसर्गाणामिदं निपातानामिति । सोऽयमनयैवंप्रकारया व्याख्यया कृत्स्नः समाम्नायो व्याख्यातः । तदनुप्रक्तान्येव च शास्त्रारम्भप्रयोजनान्युक्तानि । आगमश्च परिशोधितः । वेदवेदाङ्गव्यूहश्च सप्रयोजन उक्तः । निघण्टुसमाम्नायविरचना चोपदिष्टा प्रकरणत्रयविभागेन । निर्वचनलक्षणं चानेकप्रपञ्चमुक्तम् ।

अथेदानीं विशेषव्याख्यया प्रतिपदमयं समाम्नायो व्याख्यातव्यस्तदधिकारार्थोऽयम् ' अथ ' शब्दः । ' अतः ' शब्दः क्रमे हेतौ वा । सामान्यव्याख्यानादनन्तरं विशेषव्याख्यानमेवावसरप्राप्तमित्येवं क्रमे । अथवा हेतौ । यस्मात्सामान्यतः समाम्नायो व्याख्यातोऽत इदानीं विशेषतः 'अनुक्रमिष्यामः' आनुपूर्व्येण क्रमिष्यामो वर्णयिष्यामः । व्याख्ययेति शेषः ।

आह । किंलक्षणा पुनरसौ व्याख्येति । उच्यते । तत्त्वपर्यायभेदसंख्यासंदिग्धोदाहरणतन्निर्वचनविभागेन यदाख्यानं सा व्याख्या नैघण्टुके प्रकरणे । तद्यथा । तत्त्वं 'गौरिति पृथिव्या नामधेयम्' इत्येवमादि ।

व्याख्यालक्षणम्

१ क. ख. छ. त. द. यथा । अंशुं°. २ क. ख. छ. त. द. वीळयस्व. ३ क. ख. द. १; छ. त. ८. ४ ग. च. ज. चोद्दिष्टा. ५ ग. ज. °त्रयप्रविभा°. ६ क. ख. °संदिग्धसंदिग्धो°. ७ घ. ट. ठ. ड. यद्वा व्याख्यानं.

पर्यायवचनं प्रसिद्धेनाभिधानेनाप्रसिद्धस्यार्थस्य ख्यापनम् । तद्यथा । 'पृथिव्या नामधेयं गौरिति' । भेदो व्युत्पत्तिरिति समानार्थः । तद्यथा । 'यद्दूरं गता भवति' इत्येवमादि । संख्या । तद्यथा । 'पृथिवीनामधेयान्येकविंशतिः' । संदिग्धं 'तत्र निर्ऋतिर्निरमणादृच्छतेः कृच्छ्रापत्तिरितरा सा पृथिव्या संदिह्यते' इत्येवमादि । संदिग्धोदाहरणं 'य ईं चकार' इत्येवमादि । तन्निर्वचनं 'बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजकाः' इत्येवमादि । एवंप्रकारया व्याख्ययेदं नैघण्टुकप्रकरणं[1] व्याख्यास्यते ।

पृथिव्यभिधायकगोशब्दव्युत्पत्तिः

'गौरिति पृथिव्या नामधेयम्' । आह । यस्मात्कारणाद्द्रव्ये शब्दनिवेशो नैरुक्तानां तदुच्यतां कारणं केन कारणेन गोशब्दः पृथिव्यां संनिविष्ट इति । उच्यते । यस्मादियं[2] 'दूरम्' अध्वानं प्रति 'गता भवति' । न ह्यस्या अन्त उपलभ्यते । यस्मात् 'चास्यां भूतानि गच्छन्ति' आधारभूतायाम् । एवं कर्तृकारकमधिकरणं वा योज्यम् । 'गातेर्वा' । 'गाङ् गतौ' [ धा० १ । ९५० ] इत्यस्य धातोः । 'ओकारो नामकरणः' प्रत्ययः ।

गौरिति पशुनाम

'अथापि' गौरित्येतत् 'पशुनाम भवतीह' एव कारकद्वये तस्मादेव धातुद्वयाद्गमेर्गातेर्वा । 'अथाप्यस्यां' एव पशुगवि 'ताद्धितेन' प्रयोगेणाकृत्स्नायां सत्यां 'कृत्स्नवन्निगमा भवन्ति' । तद्यथा । 'गोभिः श्रीणीत मत्सरमिति' गोरेकदेशस्य[3] 'पयसः' कृत्स्नवत्प्रयोगः । तदेतच्छिष्यबुद्धिव्युत्पादनार्थमनेकप्रकारशब्दवृत्तिविषयोपप्रदर्शनं[4] क्रियते कथं नामोपदर्शितशब्दवृत्तिविषयोऽसंमुह्यन्मन्त्रार्थान्निर्ब्रूयादिति[5] ।

पयोर्थे गोशब्दप्रयोगः

आ धावता सुहस्त्यः शुक्रा गृभ्णीत मन्थिना । गोभिः श्रीणीत मत्सरम् ।

[ ऋ० सं० ९ । ४६ । ४ ] । इमां गायत्रीमयास्य आङ्गिरसोऽपश्यत् । ग्रावस्तुतौ विनियुक्ता[6] [ आश्व० श्रौ० ५ । १२ ] । हे अध्वर्यव एभिर्ग्रावभिः संस्कृत एष सोमः । ते

१ ग. ज. नैघण्टुकं प्र°. २ घ. ट. यस्मादिदं. ३ घ. ट. गौरेक°. ४ ग. ज. °प्रकारं. ५ क. ख. ठ. ड. °संमुह्य मन्त्रा°. ६ घ. ट. ठ. ड. °स्तुतौ नियुक्ता.

यूयं हे[1] सुहस्त्यः सुवर्णेनालंकृतहस्ताः । किम् । आधावत । गृभ्णीत गृह्णीतैतौ शुक्रामन्थिनौ ग्रहावनतिक्रान्तकालम्[2] । किंच । गोभिर्गोभ्योऽभि[3]-निष्पन्नेन क्षीरेण श्रीणीतैनं मत्सरं मादयितारं सोमं मैत्रावरुणग्रहतामुपगतं शृतशीतेन तृतीयसवनेन[4] वा पूतभृत्याशिरेण । ततोऽनतिक्रान्तकालं जुहुत । एवमत्र विधानादशक्यत्वाच्च गोभिः श्रयणस्य[5] गव्येन पयसेति गम्यते ।

'मत्सरः[6] सोमो मन्दतेस्तृप्तिकर्मणः' । तृप्यन्ति ह्यनेन देवताः । शब्दसामान्यप्रसङ्गप्रसक्तमुच्यते । 'मत्सर इति लोभनाम' । तेन ह्याविष्टो धनाभिमुख्येन मत्तो भवति । पर्यायाख्यानप्रसक्तं निरुच्यते । 'पयः पिबतेर्वा' पानार्थस्य [ धा० १ । ९२५ ] । पीयते हि तत् । 'प्यायतेर्वा' वृद्ध्यर्थस्य [ धा० १ । ४८८ ] । तेन हि वर्धन्ते प्राणिनः । प्रसक्तानुप्रसक्तं निरुच्यते । 'क्षीरं क्षरतेः' श्च्योतनार्थस्य [ धा० १ । ४१ ] । श्च्योतते[7] हि तदूधसः । 'घसेर्वा । ईरो नामकरण'[8]—प्रत्ययः । अदेर्घस्लृ आदेशः क्रियते [ पा० २ । ४ । ३७ ] । अतस्तेनैव सिद्धरूपेण निर्दिश्यते 'घसेर्वेरो नामकरणः' इति । धात्वन्तरमिति वा केचित् [ धा० १ । ७१६ ] । ज्ञापकं च ददाति 'उशीरमिति' । 'वश कान्तौ' [ धा० २ । ७० ] । तस्य कृतसंप्रसारणस्यैरप्रत्ययेनोशीरमिति भवति । तद्धि सौगन्ध्याक्रान्तं भवति ।

'अंशुं दुहन्तो अध्यासते गवीत्यधिषवणचर्मणः' कृत्स्नवदभिधायकः ।

अधिषवणचर्मार्थे प्रयोगः

ते सोमादो हरी इन्द्रस्य निंसतेऽशुं दुहन्तो अध्यासते गवि । तेभिर्दुग्धं पपिवान्त्सोम्यं मध्विन्द्रो वर्धते प्रथते वृषायते [ ऋ० सं० १० । ९४ । ९ ] । एषा जगती ।

अर्बुदो नाम काद्रवेयः सर्प ऋषिस्तस्यार्षम् । ग्रावस्तुतौ विनियुक्ता [ आश्व० श्रौ० ५ । १२ ] । त एते ग्रावाणः सोमादः सोमभक्षयितारो यदाभिषवकर्मणि प्रवर्तन्तेऽथ तदा हरी इन्द्रस्याश्वौ यज्ञागमनार्थमेतेषां शब्दमुपश्रुत्य संस्कृतं सोमं मन्वानौ रथे योगमिच्छन्तौ

१ घ. ट. ठ. ड. 'हे' नास्ति. २ घ. ट. ठ. ड. °नतिक्रान्तिकालं. ३ च. 'अभि' नास्ति. ४ घ. ट. ठ. ड. सवनेन वा°. ५ क. ख. श्रपणस्य. ६ ठ. ड. पयसो मत्सरः°. ७ च. च्योतते. ८ क. ख. घ. ट. ठ. ड. °करणः । अदे°.

आत्मना ऋजीषं भक्षयिष्यन्ताविन्द्रं च सोमं पाययिष्यन्तौ स्वयमेव निंसते नीचैर्नमेते युक्तौ आवां हे[3] इन्द्र गच्छ यज्ञायतनं संस्कृतः सोम इति। तदैव[4] च ऋत्विजोऽपि त्वरमाणा इन्द्रोपस्थानकालमभ्यग्रं मन्यानाः अंशुं सोमांशुमभिषुत्य दुहन्तः प्रपूरयन्तो गव्यधि गोरुपरि गोरवयवेऽधिषवे-
५ णचर्मणि एतत्कर्म कुर्वाणा इन्द्रं प्रतीक्षमाणा आसते। अथ स इन्द्र एत्य तेभिः दुग्धमृत्विग्भिः प्रक्षारितं[6] पपिवान्पीतवान्सोम्यं मधु सोममयम्। तेन[7] तृप्तस्तत्पानानन्तरं वर्धते वीर्येण। प्रथते च शरीरेण विस्तीर्यते। विस्तीर्णश्च स्वेन वीर्येण मेघं विदार्य वृषायते वर्षं प्रवर्तयते। तदिदं सर्व-मपि वर्षादि जगदनुग्राहकमैन्द्रं कर्माभिषवद्वारेण सोमाभिषवग्रावाधीन-
१० मित्येवं ग्रावस्तुतिः।

निगमप्रसक्तं निरुच्यते। 'अंशुः शमष्टमात्रो भवति'। व्याप्तमात्रो हि स यजमानेन तस्यैव शं भवति सुखो भवति। इष्टसोमो ह्यनृणोऽह-मिति विगतमनोदुःखो भवति। अननाय[9] जीवनाय शं सर्वेषां भूतानां भवति सुखो भवतीति वा। यज्ञो हि वर्षप्रवृत्तिहेतुस्ततश्च[10] सर्वभूतानि सुखं
१५ जीवन्ति। व्याख्यानप्रसक्तं निरुच्यते। 'चर्म चरतेर्वा'। चरितं हि तत्सर्व-स्मिञ्छरीरे गतमित्यर्थः। 'उच्चृत्तम्' उत्कर्तितं शरीरादिति वा।

'अथापि चर्म च श्लेष्मा च' गोशब्देनोच्यत इति शेषः। 'गोभिः संनद्धो असि वीळयस्व[11] [ ऋ० ६। ४७। २६ ] इति रथस्तुतौ'। स हि चर्मणावनद्धो

चर्मश्लेष्मार्थे प्रयोगः

२० भवति। श्लेष्मणा च तस्यारादयः संश्लेषितौ[12] भवन्ति।

'अथापि स्नाव च श्लेष्मा च' गोशब्देनोच्यते। 'गोभिः संनद्धा पतति प्रसूता [ ऋ० सं० ६। ७५। ११ ] इतीषुस्तुतौ'। सा हि स्नाव्ना वेष्टिता भवति श्लेष्मणा च संश्लेषिता।

स्नावश्लेष्मार्थे प्रयोगः

२५ १ च. 'च' नास्ति. २ ग. ज. युक्त्वौ; च. युक्त्वा तौ. ३ च. 'हे' नास्ति. ४ ग. ज. तथैव. ५ ग. ड. °धिषणवच°; ज. °धिषवच; ट. ठ. धिषवेणेच°. ६ ठ. ड. प्रक्षालितं. ७ च. 'तेन' नास्ति. ८ ट. ड. °नुग्रहकारकमैन्द्रं. ९ क. ख. घ. ट. ठ. ड. अननाय शं भवतीति वा। अननाय जीव°. १० क. ख. घ. ट. ठ. ड. वर्षे प्रवृ°. ११ क. ख. ग. च. ज. घ. ड. वीलय°. १२ ग. ज.
३० संश्लेष्मकाः; च. संश्लेष्मकाः° स; घ. सश्लेषिता°; ट. सश्लेषिता° ष्मका.

'ज्यापि गौरुच्यते'[1]। सा पुनर्यदि 'गव्या ताद्धितम्' अभिधानम्। 'अथ' पुनः 'न गव्या गमयतीषूनिति'[3] गौरन्यद्रव्यमयी[2] ॥ ५ ॥

---

वृक्षेवृक्षे नियता मीमयद्गौस्ततो वयः प्रपतान्पूरुषादः। वृक्षे वृक्षे धनुषि धनुषि वृक्षो व्रश्चनाद्वृत्वा क्षां तिष्ठतीति वा क्षा क्षियतेर्निवासकर्मणो[4] नियता मीमयद्गौः शब्दं करोति मीमयतिः शब्दकर्मा ततो वयः प्रपतन्ति पुरुषानदनाय विरिति शकुनिनाम वेतेर्गतिकर्मणोऽथापीषुनामेह भवत्ये- तस्मादेवादित्योऽपि गौरुच्यते। उतादः परुषे गवि। पर्ववति[5] भास्वतीत्यौपमन्यवोऽथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्यमादित्यतोऽस्य दीप्तिर्भव- तीति। सुषुम्णः[6] सूर्यरश्मिश्चन्द्रमा गन्धर्व इत्यपि निगमो भवति। सोऽपि गौरुच्यते। अत्राह गोरमन्वतेति तदुप- रिष्टाद्व्याख्यास्यामः सर्वेऽपि रश्मयो गाव उच्यन्ते ॥ ६ ॥

---

वृक्षेवृक्षे नियता मीमयद्गौस्ततो वयः प्र पतान्पूरुषादः। अथेदं विश्वं भुवनं भयात इन्द्राय सुन्वदृषये च शिक्षत्[7]

ज्यार्थे प्रयोगः [ ऋ० सं० १० । २७ । २२ ] । वसुक्र- स्येन्द्रपुत्रस्येयमार्षम्[8] । त्रिष्टुबैन्द्री । महाव्रते मरुत्वतीये शस्यते [ ऐ० आ० ५ । १ । १ ]। इन्द्रो भगवानैश्वर्ययोगा- त्संग्रामेष्वनेकबाहुर्भूत्वानेकानि धनूंष्यादत्ते[9]। तानि मन्त्रदृग्दृष्ट्वैवमाह। वृक्षेवृक्षे

---

१ घ. ट. गौरित्युच्यते. २ ग. ज. गौरन्यद्द्रव्य°; घ. ट. गोरन्य°; ठ. ड. गोरन्यत्द्रव्य°. ३ क. ख. १; ग. ८; घ. ट. च. ज. अङ्को नास्ति; ठ. ड. इति निरुक्तव्याख्यायां २ ध्याये ५ खण्डः. ४ क. ख. छ. त. द. 'वृत्वा क्षां००० कर्मणो' इति नास्ति. ५ छ. त. द. पर्ववती°. ६ क. ख. छ. त. द. सुषुम्णः°. ७ क. ख. द. २; छ. त. ९. ८ ग. वृक्षेवृक्षे० । अथेदं विश्वं भुवनं० शिक्षत् ॥ ॥ ३ ॥ वसु°. ९ च. °ष्याधत्ते.

वृक्षावयवे धनुषि धनुषि। यावन्तीन्द्रेण गृहीतानि धनूंषि तेषु सर्वेषु प्रत्येकं नियता निबद्धा गौः गव्या गमयित्री वा शराणामिन्द्रबाह्वाकृष्टा मीमयत् मीमयति शब्दं करोति । जात्यभिप्रायेणैकवचनम् । ततः शब्दकरणानन्तरमेव प्रपतन्ति वयः । अथवा ततः ततो धनुषो वयः पक्ष्यवयवपत्रसं-
५ बन्धादिषवो वयः पक्षिणः । अथवा वेतेर्गतिकर्मणः । साक्षादेव इषवो वयो न गुणवृत्त्या । तेन प्रपतान्प्रपतन्ति पुरुषानदनाय भक्षणाय । ते हि शत्रूणां प्राणान्भक्षयन्ति । अथायमेवमतिप्रभाव इन्द्र इति ज्ञात्वा विश्वं सर्वं भुवनं भूतजातं यावत्किंचिदधिकृतं कर्माणि भयाते बिभेति । अथ बिभ्यत्किं करोति । इन्द्राय इन्द्रार्थं सुन्वत् अभिषवमुचिते काले
१० कुर्वत् ऋषये च ऋत्विजे शिक्षत् दक्षिणां ददत् इन्द्रोन्मुखमादरवदास्ते सर्वमन्यत्परिहाय । य एवंप्रभाव इन्द्रस्तं वयमभिप्रेतार्थसिद्धये स्तुमः ।

निगमप्रसक्तं निराह 'वृक्षो व्रश्चनात्' इति । स हि वृश्च्यते छिद्यत इन्धनार्थम् । मन्त्रव्याख्याने गतार्थत्वान्न शेषो विव्रियते । एवं तावदेकदेशे कृत्स्नवदभिधानं भवतीति प्रदर्शितम् ।

१५ अथेदानीमन्येष्वर्थान्तरेषु गोशब्दोऽभिप्रसृतो बह्वष्विव्यतत्प्रसङ्गतो दर्शयति । एतद्द्वयैकपदिके वक्तव्यमिह तु गोशब्दप्रसक्तमुच्यते । नआदित्योऽपि गौरुच्यते' एतस्मिन्मन्त्रे । उतादः परुषे गवि सूरश्चक्रं हिरण्ययम्। न्यैरयद्रथीतमः [ ऋ० सं० ६ । ५६ । ३ ] भरद्वाजस्येयमार्षम् । गायत्री । पौष्णे सूक्ते । पूषा पुनरादित्यो नैरुक्तानां दृष्टया । अन्यत्र
२० 'इयं वै पूषा' [ मै०सं० २ । ५ । ५ ॥ ३ । ७ । ६ । काठ०सं० ७ । ९ ] इति भूमिरुच्यते । उतादः । उत अपि अथ इति च्छन्दसि समानार्थाः । अपि चक्रमीरयत्यपि रसानादत्तेऽपि आदित्यार्थे प्रयोगः तमांस्यपहन्ति । अदः अमुष्मिन्नादित्यमण्डले परुषे पर्ववति । अहोरात्रादिपर्वभिस्तद्वति । अथवा
२५ भास्वति । भासा तद्वतीत्यौपमन्यवः । गवि गमनशीले मुहूर्तमप्यनवस्था-

१ घ. ट. ठ. ड. नियतानिबद्धानि गौ°. २ ठ. ड. 'ततः' सकृदेव. ३ क. ख. ते; च. 'तेन' नास्ति. ४ ग. ज. घ. ठ. ड. ददाति; ट. ददाति° दत्. ५ ठ. ड. °त्परिहाराय. ६ घ. ट. उतादः । रथीतमः । भर°. ७ घ. ट. °मीरययदपि°; ठ. ड. °मीरयदपि°. ८ घ. ट. ठ. ड. °रात्रादि-
३० भिस्तद्वति. ९ क. ख. घ. ट. ठ. ड. भासा तद्वतीति । अहोरात्रादिपर्ववतीत्यौ°.

यिनि सूरः सूर्योऽवस्थितः पूषा आदित्यमण्डलान्तःपुरुषस्तदेव पर्ववद्वा-स्वद्वा चक्रं चकनं क्रमणं वा गमनशीलं मण्डलं हिरण्ययं[1] हिरण्मयं तेजोमयं चक्रं चक्राकृति न्यैरयत् । नियतगमनवृत्तिना[3] मार्गेण नित्यकालमीरयत्युदयास्तमयमध्यंदिनकालोपलक्षणार्थम् । अथवामुष्मिन्मण्डलेऽवस्थितः[4] पर्ववति मण्डलान्तःपुरुषः सूर्यो भगवान् चक्रं क्षणलवनिमेषत्रुटिमुहूर्ताहोरात्रार्धमासमासर्त्वयनसंवत्सरलक्षणं[5] कालचक्रं सर्वभूतहारि हिरणमयं हैरणमयं[6] सर्वभूतस्थितिविनाशहेतुं[7][8] न्यैरयत् नित्यमीरयति । कीदृशः पुनः स सूर्यो य ईरयति । रथीतमः । अन्येऽपि रथिनः सन्ति । अयं तु मुहूर्तमप्यनवस्थितरथ इत्यतो रथीतमः । य एवंगुणयुक्तः पूषा तं वयमभिप्रेतार्थसिद्धये स्तुमः ।

'अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते' । एको रश्मिरादित्यस्य सुषुम्नो[9] नाम चन्द्रमसि प्रत्यवस्थितो दीप्यते । 'तदेतेन' मन्त्रार्थविदा मन्त्रानुपेत्य 'ईक्षितव्यं' द्रष्टव्यम् । येयमस्य चन्द्रमसो 'दीप्तिः' ज्योत्स्ना इयमादित्यरश्म्यनुग्रहादेव 'अस्य भवति' । अम्मयं[10] हि चन्द्रमसो मण्डलं तत्तेजःसंबन्धाद्दीप्तिमद्भवति । ततः सर्वा दिशः प्रकाशयति । यथा चैतदेवं तथा 'सुषुम्नः[11] सूर्यरश्मिश्चन्द्रमा गन्धर्व इत्यपि निगमो भवति' ।

आदित्याच्चन्द्रमसो दीप्तिः

सुषुम्णः[12] सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम । स नं इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा [ य० वा० सं० १८।४० ]॥

तदभिवादिनी ऋक्

राष्ट्रभृत्सु[13] [ शत० ब्रा० ९ । ४ । १ ॥ कात्या० श्रौ० १८।५।१६ ]।

१ ग. ज. 'हिरण्ययं' नास्ति. २ क. ख. ठ. ड. 'हिरणमयं' नास्ति. ३ क. ख. घ. ट. ठ. ड. °गमनवृत्ति°. ४ घ. ट. ठ. ड. लेऽनवस्थितः. ५ क. ख. घ. झ. ट. ठ. ड. लवक्षणनिमे°. ६ ग. ज. हिरणमयं; घ. ट. ठ. ड. हिरण्मयं. ७ क. ख. ग. ज. घ. ट. ठ. ड. °भूतविनाशस्थितिहे°. ८ ग. ज. घ. ट. ठ. ड. °हेतु. ९ क. ख. ग. च. ज. सुषुम्णो. १० क. ख. अस्मद्धुपरि यच्च°; ग. च. ज. अब्मयं; ठ. ड. अस्मयं. ११ क. ख. ग. घ. ज. सुषुम्णः. १२ घ. ट. सुषुम्नः; ग. च. ज. ठ. ड. मन्त्रो न पठ्यते. १३ घ. ट. ठ. ड. °भृत्सु हग्तग्रहहोमे अप्य°.

अध्ययमप्यन्ये बहव इत्यपिशब्दः । सुषुम्नः सुष्ठुसुख इत्यर्थः । सर्वभूतानि नित्यमसौ ह्लादयति । कोऽसाविति । सूर्यरश्मिः सूर्यान्निःसृत्य चन्द्रमसं प्रति गतः । चन्द्रमाः गन्धर्वः । सति सुषुम्नगमने गोशब्दवाच्यता । तस्य गोमतश्चन्द्रो धारयिता गन्धर्वः । स हि तस्य प्रतिष्ठा । स न इदं सोऽस्माकमिदं ब्रह्म क्षत्रं च पातु रक्षतु । किं च तस्मै सुषुम्नाय सूर्यरश्मये स्वाहा शोभनमिदमाभिमुख्येनाहां हविराज्यलक्षणमस्तु । स चेदं वाट् वेतु पिबत्वित्यर्थः ।

सुषुम्णाख्यरश्मेः गौरिति नाम

'सोऽपि' सुषुम्णो रश्मिरेक एव 'गौः' इति 'उच्यते'। यथासौ गौस्तथेदमुदाहरणम् 'अत्राह गोरमन्वतेति'। 'तत्' पुनरेतत् 'उपरिष्टात्' ऐकपदिके 'व्याख्यास्यामः' [ निरु० ४।२५ ]। 'सर्वेऽपि रश्मयो गाव उच्यन्ते'। यथैतदेवं तथेमृगुदाह्रियते ॥ ६ ॥

---

**ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि [ ऋ० सं० १ । १५४ । ६ ] । तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो भूरिशृङ्गा बहु-**

---

१ क. ख. ग. ज. ठ. ड. सुषुम्णः. २ ग. च. ज. ठ. सुष्टुसुख; घ. ट. ड. सुष्टुसुम्नः सुष्टुसुख°. ३ क. ख. घ. ट. ठ. ड. सर्वाणि भूता°. ४ च. ज. निसृत्य; घ. ट. 'निःसृत्य' इत्यस्य पश्चात्सर्वा ऋग्दीयते. ५ क. ख. च. ज. सुषुम्णग°; ग. 'सति... धारयिता गन्धर्वः' नास्ति. ६ क. ख. घ. ज. ट. ठ. ड. तस्य गन्धर्वस्य सतश्चन्द्रो°. ७ घ. ट. 'सोऽस्माकमिदं' नास्ति. ८ क. ख. ग. ज. सुषुम्णाय. ९ क. ख. घ. ट. °स्वाहा सु शोभन°. १० क. ख. घ. ट. ठ. ड. °नाह । हवि°. ११ घ. तथैवमृ° ट. तथैवमृ° थेय. १२ क. ख. ग. घ. ज. °दाहरणम् ; ट. दाहरणं° ह्रियते. १३ ग. ९; घ. ट. च. ज. अङ्को नास्ति; ट. ड. °ह्रियते । इति नैरुक्तव्याख्यायां २ ध्याये षष्ठः खण्डः. १४ क. ख. छ. त. द. 'भूरिशृङ्गा' नास्ति.

शृङ्गा भूरीति बहुनो नामधेयं प्रभवतीति सतः शृङ्गं श्रयतेर्वा शृणातेर्वा शम्नातेर्वा शरणायोद्गतमिति वा शिरसो निर्गतमिति वायासोऽयनास्तत्र तदुरुगायस्य विष्णोर्महागतेः परमं पदं परार्ध्यस्थमवभाति भूरि पादः पद्यतेस्तन्निधानात्पदं पशुपादप्रकृतिः प्रभागपादः प्रभागपादसामान्यादितराणि पदान्येवमन्येषामपि सत्त्वानां संदेहा विद्यन्ते तानि चेत्समानकर्माणि समाननिर्वचनानि नानाकर्माणि चेन्नानानिर्वचनानि यथार्थं निर्वक्तव्यानीतीमान्येकविंशतिः पृथिवीनामधेयान्यनुक्रान्तानि तत्र निर्ऋतिर्निरमणादृच्छतेः कृच्छ्रापत्तिरितरा सा पृथिव्या संदिह्यते[1] तयोर्विभागस्तस्या एषा भवति ॥ ७ ॥

ता वां वास्तूनीति[2] । दीर्घतमस आर्षम् । वैष्णवी । त्रिष्टुप् । यूपावध्नौने[3] विनियुक्ता [ आप० श्रौ० ७ । १० । ७ ] सोमातिरेके[4]शस्त्रे [ आश्व० श्रौ० ६ । ७ ] च । वामिति दम्पती अभिप्रेत्य द्विवचनम् । तानि युवाभ्यामर्थाय वास्तूनि[5] निवासस्थानानि उश्मसि कामयामहे गमध्यै गमनाय यत्र येषु स्थानेषु । किम् । गावो रश्मयो भूरिशृङ्गा बहुदीप्ता अयासः अयना मुहूर्तमप्यनवस्थायिनः ।

रश्म्यर्थे गोशब्दस्य प्रयोगः

किंच । अत्राह तेषु[6] स्थानेषु तत्पदमुरुगायस्योरुगमनस्य महागतेर्भगवतो विष्णोः परमं पदमादित्यमण्डलस्थानम्[7] । स्थाने हि पदसंज्ञा । पदस्थ इति लोकेऽपि[8] वक्तारो भवन्ति । अवभाति अर्वागिदं सर्वं कृत्वा भाति दीप्यते । भूरि बह्वित्यर्थः । इति समस्तार्थः ।

अथैकपदनिरुक्तम् । 'भूरीति' एतत् 'बहुनो नामधेयम्' । 'प्रभवति' हि तद्बह्वधापि दीयमानम् । 'शृङ्गं श्रयतेः' । तद्ध्याश्रितं भवति शिरसि । 'शृणातेर्वा' हिंसार्थस्य [ धा० ९ । १६ ] । तेन हि हिनस्ति । 'शिरसो निर्गतमिति वा' शृङ्गम् । परमेऽर्धे स्थितं परार्ध्यस्थम् ।

---

१ क. ख. द. ३; छ. त. १०. २ घ. ट. 'इति' नास्ति. ३ घ. ट. ठ. ड. °धानाविनि.° ४ च. °तिरिक्तशस्त्रे°; ठ. ड. °तिरेके शस्त्रे°. ५ ग. ज. वास्तूनि इति निवास°. ६ ग. स्थानेषु तेषु. ७ क. ख. घ. ट. ठ. ड. मण्डलं स्थानं स्थाने हि°; ग. ज. °मण्डलस्थाने हि. ८ च. 'अपि' नास्ति.

अथवा परमर्यद्धर्या युक्ते स्थाने स्थितं परार्ध्यस्थम् । ' पादः पद्यतेः ' गत्यर्थस्य [ धा० ४ । ६३ ] । पद्यते हि तेन । ' तन्निधानात्पदं ' यदुत्पद्यते तत्सरूपमेव पांसाधन्यत्र वा तत्पदमित्युच्यते पशोर्मनुष्यस्य वा । ' पशुपादप्रकृतिः ' चतुर्भागसामान्यात् ' प्रभागपादः ' दीनारादिपादः । ' प्रभागपादसामान्यादितराणि ' ग्रन्थपदानि क्षेत्रपदानि वा । विभागो हि तेष्वपि समान एव । प्रसक्तानुप्रसक्तमिदमुक्तम् ।

अधुनोपसंहरति । ' एवमन्येषामपि सत्त्वानां ' यानि नामानि तेषु ' संदेहा विद्यन्ते ' न केवलं गोशब्दे पदशब्दे वा । तेषु त्वेतदौत्सर्गिकं निर्वचनलक्षणं द्रष्टव्यम् । ' तानि ' यदि सामान्यक्रियया युक्तानि ततः 'समाननिर्वचनानि' एव कर्तव्यानि । अथ पुनः ' नानाकर्माणि ' ततो ' नानानिर्वचनानि ' । एवं ' यथार्थं निर्वक्तव्यानीति ' ।

संदेहपदानां निर्वचनप्रकारः

अधुनैवमुक्तयोदाहरणैरेव तत्र संदेहपदान्यनुक्रम्य मन्त्रेष्वेव दर्शयन्नाह । 'इमान्येकविंशतिः पृथिवीनामधेयान्यनुक्रान्तानि ' । ' तत्र निर्ऋतिर्निरमणादृच्छतेः कृच्छ्रापत्तिरितरा ' । लोकेषु हीदं सर्वं भूतजातमन्तर्भूतं यदभिधानानि यदाश्रयक्रियावचनाश्च शब्दा निघण्टव उच्यन्ते । तेषां च पृथिवी प्रथमा । तस्मात्तत आरम्भः । एकविंशतिरिति संख्या । पृथिवीनामधेयानि । स्वार्थे धेयप्रत्ययः । नामैव नामधेयम् । अनुक्रान्तानि आनुपूर्व्येण पठितानीत्यर्थः । एकविंशतिर्यान्यनुक्रान्तान्येभ्योऽन्यान्यपि यानि कानिचित्स्युस्तान्युपलभ्य निर्वक्तव्यानि । तद्यथा कु इत्येतदसमाम्नातं पृथिव्या नामधेयम् । उक्तं हि ' नाग्निचिन्नरकं याति न सद्वादी न कुप्रदः ' इति । तत्रैतस्मिन्नेकविंशके नामगणे ' निर्ऋतिः ' इत्येतदभिधानं ' निरमणात् ' । निविष्टानि रमन्तेऽस्यां भूतानीति निर्ऋतिः पृथिवी रमेर्धातोः । ' ऋच्छतेः इतरा कृच्छ्रापत्तिः ' दुःखसंज्ञिका । निर्ऋतिः पाप्मा । ' सा ' पुनरियं समाननामधेयत्वात्समानश्रुतित्वात् ' पृथिव्या संदिह्यते ' ।

' निर्ऋतिः ' इत्येतस्य संदेहपदस्य निर्वचनम्

१ च. परमयार्द्धर्या. २ च. ज. परार्द्धस्थं; ठ. ड. परार्ध्यस्य. ३ क. ख. घ. ट. ठ. ड. तेषु हि त्वेत°. ४ क. ख. घ. सर्वभूत°. ५ क. ख. घ. ठ ड. सत्पुत्रो; ट. सत्पुत्रो° द्वादी. ६ घ. ट. ठ. ड. एकविंशतिके. ७ क. ख. घ. ट. ठ. ड. °संज्ञका ८ च. °श्रुतत्वात्.

' तयोः ' समाननामधेयत्वे सत्येव कर्मकृतो भेदो ' विभागः ' । एका निविष्टानां भूतानां रमयित्री । एका पुनः कृच्छ्रमापादयित्री । एवं नाना-कर्माण्यभिधानानि निर्वक्तव्यानि ।

' तस्याः ' कृच्छ्रापत्तेः पृथिव्या[2] ' एषा ' निर्वाचिका ऋक् ' भवति ' ॥ ७ ॥[3]

---

य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात् । स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिमाविवेश ( ऋ० सं० १ । १६४ । ३२ ) ॥ बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजका वर्षकर्मेति नैरुक्ता य ईं चकारेति करोतिकिरती संदिग्धौ वर्षकर्मणा न सोऽस्य[4] वेद मध्यमः स एवास्य वेद मध्यमो यो ददर्शादित्योपहितं स मातुर्योनौ मातान्तरिक्षं निर्मीयन्तेऽस्मिन् भूतानि योनिरन्तरिक्षं महानवयवः परिवीतो वायुनायमपीतरो योनिरेतस्मादेव परियुतो भवति बहुप्रजा भूमिमापद्यते वर्षकर्मणा शाकपूणिः संकल्पयांचक्रे सर्वा देवता जानामीति तस्मै देवतोभयलिङ्गा प्रादुर्बभूव तां न जज्ञे तां पप्रच्छ विविदिषाणि[5] त्वेति सास्मा एतामृचमादिदेशैषा मद्देवतेति ॥ ८ ॥

---

य ईं चकारेति । दीर्घतमस आर्षम् । त्रिष्टुप् । महाव्रते वैश्वदेवे शस्त्रे शस्यते [ ऐ० आ० ५ । ३ । २ ] । ' अयं स शिङ्क्ते ' [ ऋ० सं० १ । १६४ । २९ ] इतीयमप्यनयैव समानार्षविनियोगा । जगती । द्वे अप्येते अस्यवामीये । कश्चित् । बह्वपत्यो दरिद्रः पुरुषः । स दुष्पोषत्वादपत्यानां व्यापन्नत्वाद्दुःखं ' कृच्छ्रमापद्यते ' । सा या तस्य कृच्छ्रापत्तिः सैवैतस्यामृचि निर्ऋतिशब्देनोच्यते ' इति ' एष परिव्राजका-

---

१ क. ख. घ. ट. ठ. ड. °धेयत्वेऽपि सत्येष कर्म°. २ क. ख. घ. ट. ठ. ड. पृथिव्या अपि एषा°. ३ क. ख. ३; घ. ट. च. ज. अङ्को नास्ति; ठ. ड. भवति इति निरुक्तव्याख्यायां २ ध्याये सप्तमः खण्डः. ४ क. ख. छ. त. द. सो अस्य. ५ क. ख. द. ४; छ. त. ११.

नामस्यामृचि संक्षेपार्थः । स एष विस्तरेण प्रदर्श्यते । यः करोति गर्भं न सोऽस्य गर्भस्य तत्त्वं 'वेद'। केवलं त्वसौ कामार्तः पुत्रार्थी वा करोत्येव गर्भम् । य ईं ददर्श यश्चैनं पश्यति हिरुग् अन्तर्हितमेतस्मिन् जठरे एतस्मिन् वा शरीरे जन्तुं तस्मात्तस्यैव एष गर्भो याथात्म्यतः प्रत्यक्षो भवत्यध्यात्मशास्त्रदृष्ट्या नेतरस्य गर्भकर्तुः। स पुनरेवं गर्भो मातुर्योनौ गर्भाशयस्थाने अन्तः उदरे पुष्यति स मातुरशितपीतलीढभक्षितेन चतुर्विधाहारेण । ततः परिवीतो जरायुणा परिवेष्टितो यथाकालं जायते । अथैवं बहुशः प्रजायमानः स गर्भकर्ता गर्भतत्त्वमजानानो निर्ऋतिं दुःखमाविवेश आविशतीत्यर्थः । एवं गर्भतत्त्वापरिज्ञानाद्यो गर्भं करोति स दुःखमापद्यते । यस्त्वध्यात्मदृष्ट्या गर्भतत्त्वं वेद स गर्भकर्मणो निवर्तते । स निर्ऋतिं नापद्यते । एवमस्यामृचि निर्ऋतिर्देवतेत्येष परिव्राजकार्थः । अन्ये तु ब्रुवते । यः करोति गर्भं स गर्भभूतो जन्मान्तरेषु बहुषु प्रजायमानो जन्ममरणसंतानानुबद्धां निर्ऋतिमाविशति । यो रेतः सिञ्चति तद्भूयो भूयो जन्मान्तरेषु बहुशः प्रजायमानो जन्ममरणसंतानाननुभवतीत्युक्तम् ॥

*तत्पदस्योदाहरणम्*

*ऋचो गर्भाधानार्थे निर्ऋतिशब्दस्य दुःखमित्यर्थः*

'वर्षकर्मेति नैरुक्ताः'। वर्षकर्मैतदुच्यते निर्ऋतिश्चात्र भूमिरुच्यत एवं नैरुक्ता मन्यन्ते । यः करोति वर्षं यो वा किरति क्षिपति । कः पुनरसौ । मेघः । स हि वर्षस्य कर्ता विक्षेप्ता वा । मेघाद्धि वर्षं प्रवर्तते । किं तस्य । न सोऽस्य वर्षस्य तत्त्वं वेद कुतोऽप्येतदुदकं मय्यागच्छति यन्मया विसृज्यते किं वोदकस्य तत्त्वमिति । केवलं त्वसौ विसृजत एवोदकम् । य ईं ददर्श य एव पश्यत्येतद्वर्षं हिरुगिन्नु तस्मादन्तर्हितमन्तरिक्षलोके तस्मात्तस्येत्यर्थः । तस्यैव प्रत्यक्षं तद्याथात्म्यतो वर्षं नेतरस्य मेघस्य मध्यस्थानस्य । स एव ह्यस्य वर्षस्य सत्तत्त्वं वेद यो ददर्श यः

*वर्षार्थे पृथिवीत्यर्थः*

---

१ क. ख. घ. ट. पुनरेष; ग. ज. पुनरेवं. २ क. ख. °हारपरिणामे ततः°; घ. ट. ठ. ड. °हारपरिणामेन ततः°. ३ क. ख. °नुभवविद्धां; घ. °नुविद्धां; ट. °नुविद्धां° ब. ४ ग. ज. तद्भूय एवं भवतीत्युक्तम् । वर्ष°; च. तद्भूय एव यो भूयो ज°. ५ घ. ट. ठ. ड. संतानान्यनुभ°. ६ ग. ज. सतत्त्व°. ७ घ. ट. ठ. ड. तत्त्वं.

मध्यस्थादित्य[1]रश्म्यन्तर्गतं वर्षमनभिव्यक्तम् । कश्चासौ । इ[2]न्द्रः । असावपि हि मध्यम एव । तत इदमुक्तं 'न सोऽस्य वेद मध्यमः' मेघः 'स एवास्य वेद मध्यमः' इन्द्र इति । स एव महानुदकसंख्याय इन्द्रप्रत्यक्षो मातुरन्तरिक्षलोकस्योदकाभिव्यक्त्याशयस्थाने परिवीतः परिवेष्टितः सौर्येण रश्मिजा[3]लेन वायुना च मेघोदरान्तर्गतः प्रावृट्काले वर्षभावेनाभिव्यक्तो बहुप्रजा बहुशः प्रजायमानो निर्ऋतिं भूमिमाविशतीति समस्तार्थः ।

अथैकपदनिरुक्तम् । 'करोतिकिरती संदिग्धौ' धातू 'वर्षकर्मणा' संबध्येते । उभयथापि ह्युपपद्यते यः करोति यो वा क्षिपति । 'मातान्तरिक्षम्' । एतस्मिन् हि 'भूतानि निर्मीयन्ते' । एतद्धयवकाशदानेन विशिष्टमुपकारं करोति भूतानां जायमानानाम् । 'योनिरन्तरिक्षम्' । आकाशस्यैव प्रदेशविशेषः कश्चित् । स वायुसंयुतः सन्नुदकयोनिभावं पुष्णाति । तदे[4]तत् 'वायुना' तस्य संयवनं दृष्ट्वोक्तं 'परियुतो भवति' इति । शब्दसारूप्यप्रसक्तमुच्यते । 'अयमपीतरः' स्त्रीयोनिः 'एतस्मादेव' । असावपि 'परियुतः' एव 'भवति' स्नाव्ना मांसेन च ।

शब्दगतिविभुत्वाद्दचां विविधार्था विविधविनियोगाश्च

एवमेतस्मिन्मन्त्रे नैरुक्तानां निर्ऋतिशब्देन भूमिरुच्यते परिव्राजकानां कृच्छ्रा[5]पत्तिः । तदेवं मन्त्रेषु शब्दगतिविभुत्वादुभयमप्युपपद्यत एव । तद्यथा । 'दधिक्राव्णो अकार्[6]षिम्' [ ऋ० सं० ४ । ३९ । ६ ] इत्येष मन्त्रोऽग्न्युपस्थानेऽग्निहोत्रे [ मैत्रा० सं० १ । ५ । ६ ] । अयमेव चाग्निष्टोमे 'दधिक्राव्णो अकार्[7]षिमित्याग्नीध्रे[8] भक्षयन्ति' [ आश्व० सू० १२ । १२ ] इति दधिभक्षणे । तथा चाश्वमेधे 'दधिक्राव्णो अकारिषं[9]मित्युत्थितायां सर्वा जपन्ति' इत्यश्वसंनिधावेतं पत्न्यो जपन्ति महिष्यामुत्थितायाम् । तत्रैवं सति प्रतिविनियोगमस्यान्येना[10]न्येनार्थेन भवितव्यम् । त एते वक्तुरभिप्रायवशादर्थान्यत्वमपि भजन्ते मन्त्राः । न ह्येतेष्वर्थस्येयत्तावधारणः

---

१ क. ख. घ. ट. ठ. ड. °दित्यस्य र°; क. ख. अन्तर्गतः. २ घ. ट. ड. °सौ अन्तर्गत इन्द्रः; ठ. °सौ अन्तर्गतं वेदः इन्द्रः. ३ ग. ज. रश्मिजातेन वायु°. ४ ठ. ड. 'तदेतत्.........मुच्यते' नास्ति. ५ ग. ज. कृत्स्नापत्तिः. ६ च. अकार्षं. ७ ग. च ज. अकार्षं. ८ क. ख. घ. ट. ठ. ड. °ग्नीध्रे दधि भक्ष°. ९ ग. ज. °मित्युत्थायां. १० क. ख. घ. ट. ठ. ड. 'अन्येन' सकृदेव.

मस्ति । महार्था ह्येते दुष्परिज्ञानाश्च । यथाश्वारोहवैशेष्यादश्वः साधुः साधुतरश्च वहत्येवमेते वक्तृवैशेष्यात्साधून्साधुतरांश्चार्थान्स्रवन्ति । तत्रैवं सति लक्षणोद्देशमात्रमेवैतस्मिञ्छास्त्रे निर्वचनमेकैकस्य क्रियते । क्वचिच्चाध्यात्माधिदैवाधियज्ञोपदर्शनार्थम् । तस्मादेतेषु यावन्तोऽर्था उपपद्येरन्नधिदैवाध्यात्माधियज्ञाश्रयाः सर्व एव ते योज्याः । नात्रापरोधोऽस्ति ।

एवमेव संदेहाधिकारमुपजीवन्नाह । 'शाकपूणिः संकल्पयांचक्रे सर्वा देवता जानामीति' । शाकानि यः पूणयति संहन्ति स शाकपूणः । तस्यापत्यं शाकपूणिराचार्यः । स संकल्पयाचक्रे संकल्पं कृतवान् । किमिति । सर्वा देवता जानामीति । 'तस्मै' संकल्पमेवं कृतवते 'देवतोभयलिङ्गा' द्विलिङ्गा स्त्रीपुंलिङ्गाथवा मध्यस्थानलिङ्गा द्युस्थानलिङ्गा च 'प्रादुर्बभूव' प्रादुर्भूतवती । 'तां' पुरतोऽवस्थितां सतीं 'न जज्ञे' न ज्ञातवान् किमियं स्त्री स्यादथवा पुरुष इत्यथवा किमयमन्तरिक्षस्थानाथवा द्युस्थानेति । 'ताम्' अजानन् 'पप्रच्छ विविदिषाणि' वेदितुमिच्छामि त्वां किमसि पुरुषोऽथवा स्त्रीत्यथवा किमस्यन्तरिक्षस्थानाथवा द्युस्थानेति । 'सा' एवं पृष्टा सती 'अस्मै' शाकपूणये 'एतामृचमादिदेश' आदिष्टवती । किमिति । 'एषा मद्देवतेति' । अस्यामृच्यहं देवतेति त्वं च नैरुक्तो मामेतस्या ऋचः सकाशादर्थगत्यावधारयेति । कतमा पुनरसावृगिति । उच्यते ॥ ८ ॥

(Margin: शाकपूणेर्ज्ञानगर्वोक्तिः; अस्यामृचि का देवतेत्याह्वानम्)

---

१ क. ख. घ. ट. ठ. ड. °वैशिष्ट्याद°. २ च. 'वहति' नास्ति. ३ घ. °द्देशमात्रैवैत°; ट. °द्देशमात्रैवैत° त्रमे. ४ ग. ज. 'ते' नास्ति. ५ ग. च. ज. °परोधो°. ६ घ. ट. ठ. ड. संदेहाविकार°. ७ च. जानामीति° नी. ८ क. ख. 'द्विलिङ्गा' नास्ति; घ. ट. ठ. ड. 'द्विलिङ्गा स्त्रीपुंलिङ्गा' एतत् 'मध्यस्थानलिङ्गा' इत्यस्य पश्चाद्वर्तते. ९ क. ख. घ. 'प्रादुर्भूतवती' नास्ति; ट. °भूव°तां° प्रादुर्भूतवती. १० क. ख. ग. ज. घ. ट. ठ. ड. किमियं मध्यस्थाना°. ११ ग. ज. °देश सा आदि°. १२ घ. ट. °मेनस्या°. १३ क. ख. घ. ट. ठ. ड. °दर्थावगत्या°. १४ क. ख. ४; ग. ११; घ. झ. ट. ठ. ड. च. ज. अङ्को नास्ति.

अ॒यं स शि॑ङ्क्ते॒ येन॒ गौर॒भीवृ॑ता॒ मिमा॑ति मा॒युं ध्व॒सना॑-वधि॑ श्रि॒ता । सा चि॒त्तिभि॒र्नि हि च॒कार॒ मर्त्यं॑ वि॒द्युद्भ॑-वन्ती॒ प्रति॑ व॒व्रिमौ॑हत [ ऋ० सं० १ । १६४ । २९ ] ॥

अयं स शब्दायते येन गौरभिप्रवृत्ता मिमाति मायुं शब्दं करोति मायुमिवादित्यमिति वा वागेषा माध्यमिका ५
ध्वंसने मेघेऽधिश्रिता सा चित्तिभिः [1]कर्मभिर्नीचैर्निकरोति मर्त्यं विद्युद्भवन्ती प्रत्यूहते वव्रिं वव्रिरिति रूपनाम वृणो[2]तीति सतो वर्षेण प्रच्छाद्य पृथिवीं तत्पुनरादत्ते ॥ ९ ॥

[3]इति द्वितीयाध्यायस्य द्वितीयः पादः ।

---

अयं स शिङ्क्त इति । अयं स मेघः शब्दायते शब्दमिव करोति । १०
न च तावदसौ शब्दं करोति । [4]अयं च तावन्माध्यमिकायां वाचि तत्स्थायां शब्दं कुर्वत्यां तत्साहचर्याद्विज्ञायते स एव शब्दं करोतीति । येन मेघेन किं कृतमिति । येन गौरभीवृता । येन माध्यमिका वागभिप्रच्छादिता सती मिमाति मायुं निर्मिमीते निर्वर्तयति मायुम् । शब्दं करोतीत्यर्थः । ' मायुः काकुत् ' इति च वाङ्नामसु पठितम् [ निघ० १५
१ । ११ ] । अथवा मायुरादित्यो भवति सर्वभूतनिर्माता । तमिवात्मानं निर्मिमीते । क्वावस्थिता । ध्वंसने । उदकध्वंसने उदकस्रंसने मेघेऽध्याश्रिता । अयं तावदर्धर्चो मेघान्तर्वर्तिन्या वाचोऽनभिव्यक्तविद्युद्रूपाया अभिधायकः । मेघ- २०
रूपत्वात्पुरुषत्वाभिप्रायः । अथ चोयमुत्तरः स्त्रीत्वाभिप्रायः । यैवंलक्षणा वाग्मेघरूपा मेघशरीरा वा [5]सा चित्तिभिः [6]स्वैश्चटचटाशब्दकर्मभिः नि हि चकार नीचैः

एकस्मिन् पक्षे प्रथमोऽर्धर्चोऽव्यक्तविद्युद्रूपाया वाचोऽभिधायकः । मेघस्य प्राधान्यात्पुरुषत्वाभिप्रायः

---

१ क. ख. छ. त. द. 'कर्मभिर्नीचै.' नास्ति. २ क. ख. द. ५; छ. त. १२.
३ ङ. थ. घ. ठ. ङ. 'इति...पादः' नास्ति; छ. इति द्वितीयः पादः. ४ च. अथ. २६
५ क. ख. घ. ट. ठ. ङ. वायं. ६ च. स्वैश्च चट°.

करोति मर्त्यं मनुष्यम् । सर्वो हि बिभ्यत्तस्या आसीदत्यवनमति वा । कदा पुनर्निकरोति मर्त्यमिति । उच्यते । विद्युद्भवन्तीति । विद्युदात्मना व्याख्येनाभिनिर्वर्तमाना । तदा हि दारुणश्चटचटाशब्दो भवतीति विशेषेण भयंकरो न तथा विद्युद्रहितः । सैवमात्मानमाविष्कृत्य विद्युद्रूपेण विक्षिप्य सर्वासु दिक्ष्वात्मानं वर्षेण प्रच्छाद्य पृथिवीं ततो वर्षव्युपरमे प्रत्यूहते वव्रिं प्रत्युपसंहरति रूपमात्मीयम् । अदृश्यं करोतीत्यर्थः । 'वव्रिरिति रूपनाम' । तेऽध्यावृत्य[2] स्वमाश्रयं वर्तते । यस्मिन्पक्षे[3] मध्यस्थानलिङ्गा द्युस्थानलिङ्गा वेति[4] तस्मिन्पक्षे मेघरूपत्वमविवक्षितमेत्र वाचो विद्युद्रूपत्वं च । किं त्वेतावद्विवक्षितम् । मेघाश्रया शब्दवती भूत्वा माध्यमिका वाग्विद्युदात्मना स्थित्वा वर्षेण प्रच्छाद्य पृथिवीं तद्वर्षमुदकरूपभूतं जलाशयेभ्य[5] आदित्यात्मना स्थित्वा पुनरादत्ते विद्युदात्मना मध्यस्थाने स्थित्वा वर्षत्यादित्यात्मना द्युस्थाने स्थित्वा पुनरादत्त इत्यभिप्रायः । वक्ष्यति हि 'तमकुर्वंस्त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवि' [ नि० ७ । २८ ] इति । सेयमेकैव देवता मध्यस्थाना विद्युद्रूपा द्युस्थाना वादित्यरूपेत्ययमेवंलक्षणो देवतातत्त्वसंदेह उपेक्षितव्यो मन्त्रदर्शनाच्च निर्वक्तव्य[6] इत्ययं मन्त्रसंक्षेपार्थः ।

(द्वितीयो व्यक्तविद्युद्रूपाया अभिधायकः । विद्युत्प्राधान्यात्स्त्रीत्वाभिप्रायः)

(द्वितीयपक्षे मेघविद्युद्रूपे गौणे । मेवस्थावाक्शब्दं कृत्वा वर्षं करोत्यादित्यात्मना च वर्षजलमाकर्षति)

(संदेहकारणम्)

'सा पृथिव्या संदिह्यते' [निरु० २।७] इत्यनेन संदेहसामान्येनोदाहृतमिदमत्र मतं शाकपूणेरित्येवमादि । अनुक्रमणं त्वधिकृतम् । तस्मिन्गोशब्द एको निरुक्तः प्रकारोपप्रदर्शनार्थम्[7] । इतराण्यप्यभ्यूह्य[8] निर्वक्तव्यानि । तद्यथा । ग्मा

१ च. मर्तं. २ क. ख. ग. ज. तव्द्यावृत्य; घ. ट. ठ. ड. ताव्द्यावृत्य. ३ क. ख. घ. ट. ठ. ड. यस्मिंस्तु पक्षे. ४ ग. ज. चेति. ५ क. ख. ग. ज. घ. ट. ठ. ड. °येभ्यश्चादित्या°. ६ च. निर्णेक्तव्यः. ७ क. ख. घ. ट. ठ. ड. °रोपदर्श°. ८ ग. ज. °प्यभ्युह्य°.

गमनात् । अस्यां गच्छन्ति[1] भूतानीति ग्मा[2] ज्मा जमनात्[3] । जमन्ति गच्छन्त्यस्यां भूतानीत्येवमादि ।

नैघण्टुकांस्तु याञ्छन्दान्प्रत्यर्थं गणशः स्थितान् ।
छन्दोभ्योऽन्विष्य तत्त्वार्थान्निर्ब्रूयाद्योगतस्तु तान् ॥ ९ ॥[4]

इति निरुक्तवृत्तौ सप्तमोऽध्यायस्य[5] द्वितीयः पादः[6] ।

---

**हिरण्यनामान्युत्तराणि पञ्चदश हिरण्यं कस्माद्ध्रियत आयम्यमानमिति वा ह्रियते जनाज्जनमिति वा हितरमणं भवतीति वा हृदयरमणं[7] भवतीति वा हर्यतेर्वा स्यात्प्रेप्साकर्मणोऽन्तरिक्षनामान्युत्तराणि षोळशान्तरिक्षं[8] कस्मादन्तरा क्षान्तं भवत्यन्तरेमे इति वा शरीरेष्वन्तरक्षयमिति[9] वा तत्र समुद्र इत्येतत्पार्थिवेन समुद्रेण संदिह्यते समुद्रः कस्मात्समुद्द्रवन्त्यस्मादापः समभिद्रवन्त्येनमापः संमोदन्तेऽस्मिन्भूतानि समुदको भवति समुनत्तीति[10] वा तयोर्विभागस्तत्रेतिहासमाचक्षते देवापिश्चार्ष्टिषेणः शंतनुश्च कौरव्यौ भ्रातरौ बभूवतुः स शंतनुः कनीयानभिषेचयांचक्रे देवापिस्तपः प्रतिपेदे ततः शंतनो राज्ये द्वादश वर्षाणि देवो न ववर्ष तमूचुर्ब्राह्मणा अधर्मस्त्वया चरितो ज्येष्ठं भ्रातरमन्तरित्याभिषेचितं तस्मात्ते देवो न वर्षतीति स शंतनुर्देवापिं शिशिक्ष राज्येन तमुवाच देवापिः पुरोहितस्तेऽसानि याजयानि च त्वेति तस्यैतद्वर्षकामसूक्तं तस्यैषा भवति ॥ १०[11] ॥**

---

१ च. अस्यां ग (ज?) मंति गच्छ°. २ क. ख. घ. ट. ठ. ड. 'इति ग्मा' नास्ति. ३ च. ज्मा यमनाद्यमन्ति गच्छ°. ४ ग. १२; इतरेषु अङ्को नास्ति. ५ घ. ट. सप्तमस्याध्याय°. ६ च. पादः समाप्तः. ७ क. ख. छ. त. द. 'हृदयरमणं भवतीति वा' नास्ति. ८ क. ख. त. षोडशां°; छ. षोलशा°; द. षोडशा° ळ. ९ छ. त. द. °ष्वन्तरिक्षय°. १० छ. त. द. समुनत्ती°. ११ क. ख. द. १; छ. त. १२.

'हिरण्यनामान्युत्तराणि पञ्चदश' । हिरण्यस्य नामानि हिरण्यनामानि। उत्तराणि । कुतः । प्रकृतेभ्यः पृथिवीनामभ्यः । पृथिव्यामेव हिरण्यमुत्पद्यते । अतः पृथिव्यभिधानानन्तरं हिरण्यनामानि समाम्नातानि । कियन्ति पुनस्तानि । पञ्चदश । पञ्च च दश च पञ्चदश यानि समाम्नातानि । असमाम्नातान्यपि सन्ति हाटकसुवर्णचामीकरशातकुम्भादीनि । कतमानि पुनस्तानि समाम्नातानीति । उच्यते । 'हेम चन्द्रं रुक्मम्' [ निघ० १।२ ] इत्येवमादीनि । हितं ममेदमिति सर्व एवैतन्मन्यते तस्माद्धेम । चन्द्रं चन्दतेः कान्तिकर्मणः [ धा० १ । ६८ ] । सर्व एव ह्येतत्कामयते । रुक्मं रोचतेर्ज्वलत्यर्थस्य [ धा० १।७४६ ] । तद्धि रोचिष्णु भवतीति । एवमूहितव्यं सर्वत्र निर्वचनम् ।

आह । 'हिरण्यं कस्मात्' । उच्यते । 'ह्रियते आयम्यमानमिति वा' । आयम्यमानं ह्रियत एव शिल्पिभिः कटकरुचकस्वस्तिकादिभावेन विस्तीर्यमाणम् । 'ह्रियते जनाज्जनमिति वा' । तेन हि व्यवहारः क्रियते । ततस्तन्नैकत्रावतिष्ठते ह्रियत एव सर्वदा । 'हितरमणं भवतीति वा' । यस्य हि तद्भवति तस्य हितं च दुर्भिक्षादिषु तद्भवति रमणं चेति । तेन हि गृहीतेन मूषकोऽपि रमते किमुत मनुष्यः । 'हर्यतेर्वा स्यात्प्रेप्सार्थस्य' । तद्धि सर्वैरेव प्रार्थ्यते लोके ।

अनुक्रमेण 'अन्तरिक्षनामान्युत्तराणि षोडश' । षट् च दश च षोडश । कतमानि पुनस्तानि । 'अम्बरं वियद् व्योम' [ निघ० १।३ ] इत्येवमादीनि । अम्बरमम्बुर्वद्भवति । नानाभावेन सर्वतो वियातमिति वियत् । नानाप्रकारमेतद्भवति भूतानीति व्योम । एवमाद्यभ्यूहितव्यम् ।

आह । 'अन्तरिक्षम्' एव तावत् 'कस्मात्' इति । उच्यते । 'अन्तरा' हीदं द्यावापृथिव्योरवस्थितं 'क्षान्तं' च 'भवति' । पृथिव्यन्तमित्यर्थः । अथ 'वा अन्तरा' द्यावापृथिव्यौ

---

१ क. ख. °यत इत्यतः°; घ. ट. ठ. ड. °मुपपद्यत इत्यतः°. २ च. 'पञ्चदश' नास्ति. ३ ग. ज. 'पञ्च च दश च' नास्ति. ४ च. आयाम्यमानं. ५ क. ख. घ. ट. ठ. ड. 'हि' नास्ति ६ क. ख. ग. ज. मूषिको°. ७ क. ख. लोकानुक्रमेणैव । अन्त°; ग. ज. लोकानुक्रमेणान्त°; घ. ट. ठ. ड. लोकेऽनुक्रमेणैवान्त°. ८ ग. च. ज. षोलश. ९ क. ख. घ. ट. ठ. ड. अम्बुमत्. १० घ. ट. अभ्युहितव्यं. ११ च. 'तावत्' नास्ति.

इमे[1] क्षियति निवसति ' इति ' अन्तरिक्षम् । अथ ' वा शरीरेषु ' एतदेव ' अन्तर् ' मध्येऽवस्थितम् ' अक्षयम् ' इतराणि पृथिव्यादीनि भूतानि क्षीयन्ते तस्मादक्षयत्वादन्तरिक्षम् ।

**समुद्र इति संदेहपदम्**

' तत्र ' तस्मिन् षोडशकेऽन्तरिक्षनामसमुदाये ' समुद्रः ' इत्येतदभिधानमुभयाभिधायित्वात्[2] ' पार्थिवेन समुद्रेण' एतेन जलाशयेन ' संदिह्यते ' । एतदत्र संदेहपदम् ।

आह । ' समुद्रः कस्मात् ' इति । उच्यते । ' समुद्द्रवन्त्यस्मादापः ' वीचितरङ्गसीकरादिभावेन । ' समभिद्रवन्त्येनमापः ' । सर्वा एव ह्यापो निम्नानुसारित्वात्समुद्रमेवाभिमुख्येन द्रवन्ति । स हि निम्नो भवति । ' संमोदन्तेऽस्मिन्भूतानि ' । संहृष्यन्ति जलचराणि सत्त्वानि बहूदकत्वात् । ' समुदको भवति ' । उदं[3] इत्युदकनाम । तदस्मिन्संहतमिति समुद्रः । ' समुनत्तीति वा ' । संक्लेदयतीत्यर्थः । अतो हि प्रसृतैरम्भोभिः सर्वमिदं संक्लिद्यते ।

**यस्यामृचि समुद्रशब्दो द्वयोरर्थयोः प्रयुज्यते तन्निदानभूत इतिहासः**

' तयोर्विभागः ' यस्मिन्नुदाहरणे लक्ष्यते ' तत्रेतिहासमाचक्षते ' आचार्या निदानभूतम्[4] । इति हैवमासीदिति यः कथ्यते स इतिहासः । कतमः पुनरसाविति । उच्यते । ' देवापिश्चार्ष्टिषेणः ' इत्येवमादि[5] । ' देवापिश्चार्ष्टिषेणः शंतनुश्च ' आर्ष्टिषेण एव ' कौरव्यौ ' कुरुवंशप्रभवौ ' भ्रातरौ बभूवतुः ' । तयोरेको यः ' कनीयान् शंतनुः ' नाम[6] स आत्मानम् ' अभिषेचयांचक्रे ' अभिषेचितवानित्यर्थः । सोऽभिषिक्तः सन् राजा बभूव । इतरः पुनर्ज्येष्ठो ' देवापिस्तपः प्रतिपेदे ' । स किल तीव्रेण तपसा ब्राह्मणत्वमापेदे[7] विश्वामित्रवत् । ' ततः ' तेनापचारेण ज्येष्ठातिक्रमजेन ' शंतनो राज्ये[8] ' राष्ट्रे ' द्वादश वर्षाणि देवो न

---

१ व. 'इमे' नास्ति; ट. पृथिव्यो॰क्षिय॰ इमे. २ क. ख. घ. ट. ठ. ड. ॰दभिधानमुभयाभिधानम् । उभयाभि॰. ३ क. ख. घ. ट. ठ. ड. उद्र॰. ४ क. ख. ग. ज. निदानभूतः. ५ क. ख. ठ. ॰मादीनि; घ. ट. ड. ॰मादीति ६ घ. ट. ठ. ड. ॰न्तनुर्नामवान्सः॰ ७ क. ख. घ. ब्राह्मण्यमा॰; ट. ब्राह्मण्यमा॰ णत्व. ८ ग. ज. ' राज्ये ' नास्ति

ववर्ष ' । अवर्षति देवे शंतनुम् ' ऊचुः ' उक्तवन्तो ' ब्राह्मणाः ज्येष्ठं भ्रातरमन्तरित्य ' अतिक्रम्य ' अभिषेचितम् ' अभिषेक आत्मनः कारितो यतस्त्वया ' तस्मात् ' तेन मर्यादातिक्रमेण ' ते ' तव राज्ये ' देवो न वर्षति ' प्राप्तकालं प्रतिपद्यस्व ' इति ' । ' सः ' एवमुक्तः ' शंतनुः-
५ र्देवापिं शिशिक्ष ' पुनः पुनः शशासाभिगमितवानित्यर्थः । कथम् । ' राज्येन ' अभ्युद्यतेन । तेनाभ्यर्थमानो ' देवापिरुवाच ' काममहं ' पुरोहितस्तेऽसानि ' भवानि ' याजयानि च ' त्वां वार्षिकेण कर्मणा । न च राजा भविष्यामि भवानेवास्तु राजेत्यभिप्रायः । ' तस्य ' देवापेः एतत् वर्षकामस्य ' सूक्तम् ' आविरभूत् । तत्र ' तस्य ' समुद्राभि-
१० धानस्य संदिग्धस्य प्रविभागोपदर्शनाय ' एषा ' निर्वाचिका ऋग् ' भवति ' ॥ १० ॥

---

आर्ष्टिषेणो होत्रमृषिर्निषीदन्देवापिर्देवसुमतिं चिकित्वान् । स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि [ ऋ० सं० १० । ९८ । ५ ]॥ आर्ष्टिषेण ऋष्टिषेणस्य
१५ पुत्र इषितसेनस्येति वा सेना सेश्वरा समानगतिर्वा पुत्रः पुरु त्रायते निपरणाद्वा पुन्नरकं ततस्त्रायत इति वा होत्रमृषिर्निषीदन्नृषिर्दर्शनात्स्तोमान्ददर्शेत्यौपमन्यवस्तद्यदेनांस्तपस्यमानान्ब्रह्म स्वयंम्भ्वभ्यानर्षत्त ऋषयोऽभवंस्तदृषीणामृषित्वमिति विज्ञायते [ तै० आ० २ । ९ ] देवापिर्देवा-
२० नामाप्त्या स्तुत्या च प्रदानेन च देवसुमतिं देवानां कल्याणीं मतिं चिकित्वांश्चेतनावान् । स उत्तरस्मादधरं समुद्रम् । उत्तर उद्धततरो भवत्यधरोऽधोरोऽधो न धावतीत्यूर्ध्वगतिः प्रतिषिद्धा तस्योत्तरा भूयसे निर्वचनाय ॥ ११ ॥

---

१ ग. ज, पुनर शशास न अभि°; ठ. ड. ' पुनः ' सकृदेव. २ घ. ट. वार्षिकेन. ३ क. ख. १; घ. ट. च. ज. अङ्को नास्ति; ठ. ड. °भवति । इति निरुक्तटीकायां द्वितीयाध्याये दशमः खण्डः. ४ क. ख. छ. त. द. ' त ऋषयोऽभवन्' नास्ति. ५ क. ख. द. २; छ. त. १४.

२८

आर्ष्टिषेणो० वर्ष्या अभि । त्रिष्टुप् । एतया देवानस्तौत् । आर्ष्टिषेण[1] ऋष्टिषेणस्य पुत्र इषितसेनस्येति[2] वा ।

**द्व्यर्थसमुद्रपदोदाहरणम्**

अन्यकल्पान्तरीणोऽन्यकल्पान्तरीणस्यैव शंतनोर्वर्षार्थीये कर्मणि होतृत्वे वृतो होत्रं[3] कर्म प्रति निषीदन् उपविष्टवान् । ततो देवापिः नाम नाम्ना देवसुमतिं देवानां कल्याणीं मतिमुदकसंप्रदानाभिमुखीं कर्तुं चिकित्वान् जानानः । स हि तथास्तौ[4]द्यथा देवानामुदकसंप्रदानाभिमुखी मतिरभूत् । ततः परितुष्टेषु देवेषु स देवापिः उत्तरस्मादधरम् उत्तरस्मादन्तरिक्षाख्यात्समुद्रादधरं समुद्रं पार्थिवं प्रति । एष विभागः समुद्रयोः । अपो दिव्याः प्रशस्ताः सस्यसंपत्करीः असृजदक्षारयत् । किंलक्षणाः । वर्ष्या वर्षभूताः । अभि सर्वभूतानामुपरि । स देवाप्यधिकारे वर्तमान एतदकरोत् । अन्यस्मिन्कल्पे देवापिर्ममाप्येतदेवमेवास्त्वित्येवं वर्तमानेनाभिसंबध्यत इति समस्तार्थः ।

अथैकपदनिरुक्तम् । ऋष्टिरायुधविशेषः । तद्बहुला सेना यस्य सोऽयमृष्टिषेणः । इषितसेनो वा नित्यमेव प्रेषितसेनः शत्रून्प्रति । ' सेना सेश्वरा ' । इनेतीश्वरनाम । तेन हि सा नित्यमेव संयुक्ता भवति । ' समानगतिर्वा ' । समानमेकमर्थमुद्दिश्य जयाख्यमिति[5] सेना । ' पुत्रः पुरु त्रायते ' । बह्वपि यत्पित्रा पापं कृतं भवति ततोऽयं त्रायत इति पुत्रः । ' निपरणाद्वा ' । निपृणाति ददाति[6] ह्यसौ पिण्डान्पितृभ्य इति पुत्रः । अथवा ' पुत् ' इति नरकस्थानमुच्यते । ' ततस्त्रायत इति ' पुत्रः । ' ऋषिर्दर्शनात् ' । पश्यति ह्यसौ सूक्ष्मानप्यर्थान्[7] । ' स्तोमान्ददर्शेत्यौपमन्यवः ' । मन्त्राः स्तोमाः । तानसौ तारकेण ज्ञानेन पश्यतीत्येवमौ[8]पमन्यव आचार्यो मन्यते । ब्राह्मणमपि[9] चैतस्मिन्नर्थे दर्शयति । ' तद्यदेनांस्तपस्यमानान् ब्रह्म ' इत्येवमादि । तदेतदुच्यते[10] यत्तदृषीणामृषित्वम् । यद्यस्मादेनांस्तपस्यमनांस्तप्यमानान्ब्रह्म ऋग्यजुःसामाख्यं स्वयंभु अकृतकमभ्यागच्छत् । अनधीतमेव तत्त्वतो ददृशुस्तपोविशेषेण ।

---

१ ठ. ड. आर्ष्टिषेण इति । त्रिष्टु°. २ च. ' इति ' नास्ति. ३ ग. च. हौत्रं. ४ च. तथा तथा. ५ थ. ट. जयाख्यमेति सेना. ६ क. ख. घ. ट. निद्ददाति. ७ क. ख. ग. ज. ' अपि ' नास्ति. ८ क. ख. घ. ट. ' एवं ' नास्ति. ९ ठ. ड. ' एतत् ' नास्ति. १० च. ' तप्यमानान् ' नास्ति.

तदृषीणामृषित्वमित्येवं ब्राह्मणेऽपि विचार्यमाणे ज्ञायते । ' देवापिर्देवाना-
माप्त्या ' । स हि स्तुतिभिर्देवानाप्नोति हविःसंप्रदानेन च । ' उत्तर
उद्धततरः ' । उद्धततरोऽसौ भवत्युपरिष्टादवस्थानात्[1] । 'अधरः अधोऽरः'[2] ।
किमुक्तं भवति । अध एवासावरति । ' अधः ' पुनः ' न धावति ' ।
५ तस्य ह्यधोगतित्वादेव ' ऊर्ध्वगतिः प्रतिषिद्धा ' ।

' तस्योत्तरा भूयसे निर्वचनाय ' । किमुक्तं भवति । तस्यैवार्थस्य
प्रकृतस्य यथोत्तरस्मात्समुद्राद्वृष्टिमयाचत देवेभ्यो देवापिर्यथा च पौरोहि-
त्यमकरोद्यथा वायाज्ञयच्छंतनुं वर्षार्थीयेन कर्मणा । भूयसे बहुतराय निर्व-
चनाय निर्विविच्य वचनाय[3] ॥ ११ ॥

१०

---

**यद्देवापिः शंतनवे पुरोहितो होत्राय वृतः कृपयन्नदी-
धेत् । देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अय-
च्छद् [ऋ० सं० १० । ९८ । ७] ॥ शंतनुः शं तनोऽस्त्विति
वा शमस्मै तन्वा अस्त्विति वा पुरोहितः पुर एनं दधति
१५ होत्राय वृतः कृपायमाणोऽन्वध्यायद्देवश्रुतं देवा एनं
शृण्वन्ति वृष्टिवनिं[4] वृष्टियाचिनं रराणो रातिरभ्यस्तो बृहस्प-
तिर्ब्रह्मासीत्सोऽस्मै वाचमयच्छद्बृहदुपव्याख्यातम्[5] ॥ १२ ॥**

**इति[6] द्वितीयाध्यायस्य तृतीयः पादः ।**

---

२० यद्देवापिरिति । यत् यस्माद्देवापिः शंतनवे राज्ञे पुरोहितः । पुरोहितो

देवापेः पौरोहित्येऽन्या ऋक्

ह्येवाग्निकर्मणि[7] व्याप्रियते । स पुरोहितः सन्
देवापिर्होत्राय होतृकर्मणे वर्षार्थीये कर्मणि वृतः
सन्कृपायमाणो राज्ञे[8]ऽदीधेत्[9] अन्वध्यायत्
वृष्टिर्भवेदिति । तं देवश्रुतं देवापिमेनं वृष्टिवनिं वृष्टियाचिनं मत्वा रराणो

---

२५ १ च. °ष्टाद्रुपस्थानात्. २ ग. ज. आधारः. ३ क. ख. २; ग. १४; च १५;
ठ. ङ. °वचनाय।इति निरुक्तटीकायां द्वितीयाध्याय एकादशः खण्डः. ४ क. ख.
छ. त. द. °वृष्टिवनिं ' नास्ति. ५ क. ख. द. ३; छ. त. १५. ६ ड. थ. ध.
' इति...पादः ' नास्ति; त. इति द्वितीयाध्याये द्वितीयः पादः. ७ च. ह्येकाग्नि-
२९ क°. ८ क. ख. ग. ज. राज्ञः. ९ घ. ट. अदिधेत्.

ददत्। इह बृहस्पतिस्तस्मिन्नेव कर्मणि ब्रह्मत्वेऽवस्थितः। सोऽस्मै वर्षसा-धिकां वाचमयच्छददादित्यर्थः। तया वाचा तदनुगृहीतया देवान्स्तुत्वा तेभ्यो वर्षमलभतेति समस्तार्थः।

अथैकपदनिरुक्तम्। 'शंतनुः' कस्मादिति। उच्यते। स हि कंचिद्रोगार्तं दृष्ट्वा ब्रवीति हे 'तनो शं' तव 'अस्त्विति'। ततोऽसा-वगदो भवति। अथवा 'शमस्तु तन्वा' इत्येवमसावाशास्ते। शमिति सुख-नाम। तनुः शरीरम्। तदसौ नित्यं शरीरायाशास्ते। 'पुरोहितः'। शान्तिकपौष्टिकाभिचारिकेषु कर्मसु 'पुर एनं दधति' राजानः। पुरस्कु-र्वन्तीत्यर्थः। 'देवश्रुतं देवाः' हि 'एनं' स्तुतीरुच्चारयन्तं 'शृण्वन्ति' इति देवश्रुत् तं देवश्रुतम्। 'रराणः' इति 'रातिः' दानार्थः 'अभ्यस्तः'। 'बृहदुपव्याख्यातम्' 'बृहदिति महतो नामधेयं परिवृढं भवति' [ निरु० १। ७ ] इति।

मन्त्रनिदानद्वारेण धर्मोऽयमत्र दर्शितो ज्येष्ठे तिष्ठति कनीयसो राज्य-प्राप्तिर्धर्मातिक्रमो धर्मातिक्रमे च देवो न वर्ष-तीति।

**नैरुक्तकृतोऽस्या ऋचोऽर्थः**

नैरुक्तपक्षे ऋष्टिषेणो मध्यमस्तदपत्यमयमग्निः पार्थिव आर्ष्टिषेणो देवापिः शंतनवे सर्वस्मै यजमानायेति योज्यम्। बृहस्पतिर्वाचस्पतिरिति मध्यमः। स्तनयित्नुल-क्षणां वाचमित्यर्थः॥ १२॥

इति निरुक्तवृत्तौ सप्तमाध्यायस्य तृतीयः पादः।

---

**साधारणान्युत्तराणि षड् दिवश्चादित्यस्य च यानि त्वस्य प्राधान्येनोपरिष्टात्तानि व्याख्यास्याम आदित्यः कस्मादादत्ते रसानादत्ते भासं ज्योतिषामादीप्तो भासेति वादितेः पुत्र इति वाल्पप्रयोगं त्वस्यैतदार्चाभ्याम्नाये सूक्तभाक्सूर्यमादितेयमदितेः पुत्रमेवमन्यासामपि देवताना-**

---

१ घ. ठ. ठ. ढ. 'सः' नास्ति. २ घ. ट. ड. वर्षसो वाचं°; ट. वर्षसो वाच° साधिकां. ३ ग. ज. किंचि°. ४ क. ख. ग. ज. घ. ट. ठ. ड. शमस्मै तन्वा°. ५ ग. च. ज. परिवृल्हं. ६ ग. 'च' नास्ति; ज. °क्रमेत्र देवो°. ७ ग. ज. °वर्षतीति नित्यपक्षे। ऋष्टि°. ८ क. ख. ग. ज. देवापिः स शन्त°. ९ क. ख. ३; ग. १५; घ. ट. ठ. ड. च. ज. अङ्को नास्ति. १० घ. ट. सप्तमस्याध्यायस्य. ११ च. पादः समाप्तः. १२ क. ख. छ. त. द. 'अदितेः पुत्रमेवं' नास्ति.

मादित्यप्रवादाः स्तुतयो भवन्ति तद्यथैतन्मित्रस्य वरुणस्यार्यम्णो दक्षस्य भगस्यांशस्येत्यथापि मित्रावरुणयोः । आदित्या दानुनस्पती[1] दानपती । अथापि मित्रस्यैकस्य । प्र स मित्र मर्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति
५ व्रतेनेत्यपि निगमो भवत्यथापि वरुणस्यैकस्य । अथा वयमादित्य व्रते तव । व्रतमिति कर्मनाम[2] निवृत्तिकर्म वारयतीति सत इदमपीतरद्व्रतमेतस्मादेव वृणोतीति[3] सतोऽन्नमपि व्रतमुच्यते यदावृणोति शरीरम् ॥ १३[4] ॥

---

१० लोकाभिधानाधिकारेणेदमुच्यते[5] । 'साधारणान्युत्तराणि षड् दिवश्चादित्यस्य च' इति । समानं ध्रियन्त इति साधारणानि । नामानीत्यधिकारो वर्तत एव । उत्तराणि प्रकृतमपेक्ष्य । किं वात्र[6] प्रकृतम् । अन्तरिक्षनामानि । तेभ्य इमान्युत्तराणि । कियन्ति पुनस्तानि । षट् । कयोः पुनः साधारणानि । दिवश्चादित्यस्य च । कतमानि पुनस्तानि । 'स्वः पृश्निः
१५ नाकः' [निघ० १।४] इत्येवमादीनि । 'यान्यस्य[7]' आदित्यस्य 'प्राधान्येन' वर्तन्ते प्रधानस्तुतिभाञ्जि नामानि 'सविता भगः सूर्यः[8] पूषा' इत्येवमादीनि 'तान्युपरिष्टाद्व्याख्यास्यामः' सप्तदशेऽध्याये [ निरु० १२ । १२–१८ खण्डेषु ] । इमानि तु नैघण्टुकानि संसृष्टरूपाणि च द्युनामभिः साकमित्यत इह नैघण्टुकप्रकरणे निरुच्यन्ते ।

२० आह । 'आदित्यः' एव तावत् 'कस्मात्' आदित्य उच्यते[9] । शृणु । 'आदत्ते' ह्यसौ 'रसान्' रश्मिभिरित्यादित्यः । 'आदत्ते भासं ज्योतिषाम्' । तदुदये हि चन्द्रादीनां प्रभानाशो भवति । अन्यग्रहापेक्षमेतत्[10] । 'आदीप्तो भासेति वा' । सर्वतो ह्येष भासा आदीप्त आवृतो[11] भवति । 'अदितेः पुत्र इति वा' । अदितिर्देवमाता तस्याः
२५ पुत्रः । सोऽयमादितेयः सन्नादित्य इत्युच्यते ।

---

१ छ. त. द. °स्पती । दान°. २ क. ख. °नाम वृणोतीति सत°. ३ क. ख. °देव निवृत्तिकर्म वारयतीति सतो°. ४ क. ख. द. १; छ. त. १६. ५ घ. ट. °च्यते ॥ १ ॥ साधा°. ६ क. ख. ग. ज. घ. ट. ठ. ड. चात्र. ७ क. ख. घ. ट. ठ. ड. यानि त्वस्य. ८ ग. च. ज. 'सूर्यः' नास्ति. ९ घ. ट. ठ. ड. इत्युच्यते.
३० १० ग. ज. अवग्रहा°; च. अवग्रहा° न्य. ११ ग. ज. घ. ट. आवृत्तो.

' अल्पप्रयोगं त्वस्यैतदार्चाभ्याम्नाये सूक्तभाक्सूर्यमादितेयम् ' इति । अल्पप्रयोग[1]विषयम् । ' तु ' शब्दो विशेषणार्थः ।

आदितेय इत्यल्पप्रयोगं सूक्तभाक्च

एतदेवाल्पप्रयोगविषयमितराणि सवितृभगपूषो[2]-दीनि बहुप्रयोगविषयाण्यस्यादित्यस्य । काल्प-प्रयोगविषयम् । आर्चो[3]भ्याम्नाये । ऋचो यस्मि-न्नाम्ना[4]ये अभि उपर्युपर्याम्नाताः सोऽयमार्चो[5]भ्याम्नायो दा[6]शतयः । तस्मिन्न-ल्पप्रयोगविषयमेतददितेः पुत्रत्वाभिप्रायमभिधानम् ' आदितेयः ' इति । सूक्तभा[7]गेव चै[8]तदभिधानं न हविर्भाक् । न ह्यादितेय इत्यनेन नाम्ना हविराध्वर्यवे चोदितपूर्वमस्ति । यथा चै[9]तत्सूक्तमेव नैघण्टुकवृत्त्या भजते तथेदमुदाहरणं ' सूर्यमादितेयम् ' इति ' [10]यदेदेनमदधुर्यज्ञियासः ' [ ऋ० सं० १० । ८८ । ११ ] इत्यस्यामृचि । अन्ये तु मन्यन्ते । आदित्य इत्येतदेवाल्पप्रयोगमिति । तत्र त्वेतद्विरुद्ध्यते

अल्पप्रयोगमित्यादेरन्यद्विवरणम्

सूक्तभागिति । हविरपि ह्यनेनाभिधानेन चोद्यते ' आदित्यं बहुरूपमालभेत ' [ मैत्रा० सं० २ । ५ । ११ ] इति । ' [11]तस्य पशोरेतत्षळे[12]र्च-मादित्यो देव उदगात्पुरस्तात् ' [ मैत्रा० सं० ४ । १४ । १४२ ] इति । अ[13]थैवैवमन्यथा वाक्यद्वयप्र[14]विभागेन स्यात् । ' अल्पप्रयोगं त्वस्यैतदार्चा-भ्याम्नाये ' । आदित्य इति हविर्भाक्सूक्तभाक्च । अल्पहविःसूक्त[15]-विषयमित्यर्थः । इदं त्वन्यत्सूक्तमेव नैघण्टुकवृत्त्या भजते न कदाचिदपि हविः । तद्यथा । 'सूर्यमादितेयम् ' इति ।

आदित्यशब्दप्रसक्तमाह ' एवमन्यासामपि देवतानाम् ' इति । देवता-

---

१ घ. ट. ठ. ड. ° प्रयोगस्य विष°. २ ग. ज. पूषाप्रभृतीनि; च. पूषाप्रभृ-वीनि° षन्. ३ ठ. ड. अर्चाभ्या°. ४ क. ख. घ. ठ. ड. ' आम्नाये ' नास्ति; ट. यास्मिन्नभ्युं° न्नाम्नाय अभि उ°. ५ ग. च. ज. 'यमर्चाभ्या°. ६ च. दाशतयी. ७ घ. भागे एव°; ट. भागे एव°. ८ ग. च. ज. च तद्°. ९ क. ख. घ. ट. ठ. ड. त्वेत°. १० ठ. ड. सर्वा ऋक् पठ्यते. ११ क. ख. घ. ट. ठ. ड. तस्य च पशो°. १२ ट. षळर्चमा°. १३ क. ख. घ. ट. ठ. ड. अथ चैत्र°. १४ क. ख. घ. ठ. ' प्र ' नास्ति; ट. °द्वयेऽवि° प्र. १५ क. ख, घ. ट, ठ. ड. °सूक्तभाग्वि-षय°.

आदित्यनाम्नान्या अपि देवता अभिधीयन्ते ।

भेदपक्षमपेक्ष्येदमुच्यते । 'आदित्याभिधानप्रवादाः स्तुतयो भवन्ति' । 'तद्यथैतत्' उदाहरणजातं 'मित्रस्य वरुणस्यार्यम्णो दक्षस्य भगस्यांशस्येति' ।

यथा 'इमा गिरः' इत्यस्यां मित्रावरुणार्यमदक्षभगांशाः

इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि । शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः [ ऋ० सं० २ । २७ । १ ] ॥ अस्यामृचि सर्व एवादित्यप्रवादया स्तुत्या स्तूयन्ते ।

'अथापि मित्रावरुणयोः' आदित्यप्रवादाः स्तुतयो भवन्ति । तद्यथा । 'आदित्या दानुनस्पती । दानपती' । 'ता

'ता सम्राजा' इत्यस्यां मित्रावरुणौ

सम्राजा घृतासुती आदित्या दानुनस्पती । सचेते अनवह्वरम्' [ ऋ० सं० २ । ४१ । ६ ] ॥ गायत्रीयं गृत्समदेन दृष्टा । अभिप्लवस्य षडहस्य द्वितीयेऽहनि प्रउगं नाम शस्त्रम् । तत्र 'अयं वां मित्रावरुणा सुतः सोमः' [ ऋ० सं० २ । ४१ । ४ ] इत्येष तृचः शस्यते [आश्व० श्रौ० ७ । ६ ] तस्योत्तमैषा । ता सम्राजा तौ संदीप्तौ घृतासुती । तौ हि घृतमुदकमासुवाते वर्षकर्मणा जनयतः । आदित्यौ अदितेः पुत्रौ दानुनस्पती दानानामीशाते । तौ यजमानैः सम्यक्स्तुतिभिर्हविर्भिश्च संसेवितौ सन्तौ प्रतिसंसेवेते यजमानानभिमतैर्दानैः । अनवह्वरम् अनवरुध्यमानावित्यर्थः । यजमानविशेषणं चायुक्तम् । न कृतघ्नौ शक्तौ च दातुमित्येवं मित्रावरुणावत्र स्तूयेते ।

'अथापि मित्रस्यैकस्य' आदित्यप्रवादा स्तुतिर्भवतीति । तद्यथा ।

---

१ घ. ट. ठ. ड. देवताभेदमपेक्ष्य. २ ग. च. ज. घ. ट. घृतस्नूरित्यस्यां. ३ ठ. ड. प्रसम्रा°; ग. ता सम्राजा० वह्वरं. ४ घ. ट. ड. षलहस्य; ठ. षळहस्य. ५ च. प्रयुगं. ६ ठ. ड. 'तौ हि' नास्ति. ७ ग. ज. अनवह्वरं । यजमानविशेषणं चायुक्तं । अनवरुध्यमानावित्यर्थः । न कृत°; घ. ट. ठ. ड. °नवनुध्य°. ८ च. 'यजमानविशेषणं चायुक्तं' नास्ति. ९ क. ख. ग. ज. ठ. ड. 'इति' नास्ति. १० ग. च. तद्यथा । १७ ।; व. ट. तथा.

२८

'प्र स मित्र' इत्यस्यां मित्रः

प्र स मित्र मर्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति व्रतेन । न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात् [ ऋ० सं० ३ । ५९ । २ ] ॥ [1]अप्ययमप्यन्ये बहवो निगमा इत्यपिशब्दः । प्र स मित्रेति विश्वामित्रेण दृष्टा । त्रिष्टुप् । मैत्रस्य चरोः पुरोनुवाक्या [ आश्व० श्रौ० ३ । १२ ] । प्रास्तु प्रकर्षेणास्तु भवतु हे मित्र[2] आदित्य अदितेः पुत्र स मर्तः स[3] मनुष्यः प्रयस्वान् अन्नवान् । यः किं करोति । यस्तुभ्यं शिक्षति ददाति व्रतेन कर्म[4]णा निर्वपणप्रोक्षणादिना संस्कृत्येदं हविश्चरुलक्षणम् । किंच । एवमतिमहाप्रभावस्त्वं येन स[5] मर्त्यो यस्तव यष्टा त्वोतः त्वत्परिग्रहे वर्तमानस्त्वया रक्षितो न केनचित्प्रत्यनीकभूतेनातिबलेनापि शत्रुणा हन्यते हिंस्यते । न चाह[6]तोऽपि सन्[7] जीयते वशीक्रियते केनचित् । न केवलं शत्रूणामनाधृष्यः । नचैनं त्वोतं सन्तमंहोऽपि पापमपि अश्नोति न व्याप्नोति । यदन्तितः अन्तिकात्समीपात् । यत्स्वशरीरादेव वाङ्मनश्चेष्टानिमित्तमुत्पद्यते पापं तदुत्पत्तिसमकालमेव त्वदनुग्रहादपध्वस्यते । तत[8]स्तन्नैनं व्याप्नोति । न च केवलमन्तिके[9] यत्तदुत्पद्यते तदेवैनं न व्याप्नोति । किं तर्हि । यदपि दूरात्पुत्रभ्रातृजायादिद्वारेणैनमास्कन्दति तदपि नैनमभिव्याप्तुं शक्नोति त्वोतं सन्तम् । एवं महानुभावस्त्वम् । ततस्त्वां स्तुम इत्यभिप्रायः ।

'अथापि वरुण[10]स्यैकस्य' आदित्यप्रवादा स्तुतिर्भवति । तद्यथा 'अथा वयमादित्य व्रते तव' इति ।

आदित्यनाम्ना वरुणस्य स्तुतिः

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय । अथा वयमादित्य व्रते तवानागसो अदितये स्याम [ ऋ० सं० १ । २४ । १५ ] ॥ अनया त्रिष्टुभोपाकृतः शुनःशेपो वरुणं

---

१ क. ख. घ. ट. ठ. ड. 'अपि' नास्ति. २ घ. ट. ड. मित्रस्यादित्य°. ३ ठ. ड. 'स' नास्ति. ४ ठ. ड. कर्मणा यागाख्येन निर्व°. ५ घ. ट. ठ. ड. 'स' नास्ति. ६ ग. ज. वाहतो; घ. ट. ठ. च. च हतो°. ७ घ. ट. स न जीय°. ८ क. ख. ठ. ड. ततस्त्वैनं न; घ. ततस्त्वेनं न; ट. ततस्त्वेनं न व्या° स्तन्नैनं. ९ क. ख. घ. ट. ठ. ड. केवलं यदन्तिके उत्प°. १० ग. च. ज. घ. ट. वरुणेति । अनया°.

स्तुतयाऽऽत्मानं मोचयिष्यन् । वरुणप्रघासेष्ववभृथेष्टौ वारुणस्य निष्काष-
हविषः पुरोनुवाक्येयम् । हे वरुण त्रिषु स्थानेषु अधो मध्ये उपरिष्टाच्च
वयं त्वया बद्धाः स्वैः पाशैर्यतो[2] ब्रूमः । स्तुत्या हविषा चोपसृतस्त्वमस्माभिर-
तस्तावदुत्तमं पाशमुपरिष्टादवस्थितमस्मदस्मत्त उच्छ्रथय ऊर्ध्वमेव श्लथय ।
५ उच्छ्रथ्य च विमुञ्चास्मानपीडयन्[3] । योऽपि चायमधमस्ते पाशोऽस्मासु
वर्तत एतमप्यवाञ्चमेव श्रथयावमुञ्च । तथा च योऽप्ययं मध्यमस्ते पाशोऽस्म-
न्मध्ये वर्तत एतमपि तथैवावस्थितमनभिसर्पयन्नूर्ध्वमधो वा अदुःखयन्न-
स्मान्विश्रथय विमुञ्च । अथैवं त्वया वयं सर्वविमुक्तपाशाः सन्तो हे
आदित्य अदितेः पुत्र वरुण अनागसः अपापाः संशुद्धसर्वकिल्बिषाः ।
१० एतदेव हि यौष्माकीणं पाशत्रयमागः । तेन विमुक्ताः सन्तस्तवैव व्रते
तवैव परिचरणकर्मणि अदितये चात्मनोऽदीनत्वाय अनुपक्षयाय आदरवन्तः
स्थिताः स्यामेत्याशीः ।

निगमप्रसक्तमुच्यते । 'व्रतमिति कर्मनाम वृणोतीति' एवं कर्तरि
कारके 'सतो' वृणोतेः । तद्धि कर्म शुभमशुभं वा कृतं सदावृणोति
१५ कर्तारम् । 'इदमपीतरद् व्रतमेतस्मादेव निवृत्तिकर्म' यमनियमाख्यं बाहिर्वै-
दिकमान्तर्वेदिकं वा यदग्निसंनिधावुप्रेयते । तत्पुनः 'वारयतीति' एवं
'सतः' । तद्विषयेषु प्रवर्तमानं पुरुषं स्त्र्यादिषु वारयति । तदनुस्मृत्य
स पुरुषो निवर्ततेऽवकीर्णी भविष्यामीत्येतस्माद्भयात् । 'अन्नमपि व्रतमु-
च्यते' । तदपि 'आवृणोति शरीरं' रसशोणितमांसमेदोमज्जास्थिभावेन
२० विपरिणममानम् । आदित्यशब्दप्रसक्तानुप्रसक्तमिदमुक्तम् । अधुना प्रकृत-
मेवोच्यते ॥ १३ ॥[10]

---

१ क. ख. वारुण्यामिष्ट्यां ह;° ग. ज. वरुणस्य तुषनिकासह°; घ. ट. वारुण्य-
निष्काषह°; च. वारुणस्य ऊँबे निष्काषह°; ट. ड. वारुणनिष्काषह°. २ क. ख.
२५ घ. ट. ठ. यतोऽतो ब्रूमः. ३ घ. ट. ठ. ड. °पीडयत्. ४ ग. ज. एनम°; घ.
एतमप्येवमेव°; ट. एतमप्येवमेव° प्यवाञ्च. ५ घ. ट. ठ. ड. °माख्यं वा बाहि°
( ठ. ड. बहि° ). ६ ग. च. ज. वर्तमानं. ७ ग. च. ज. °नु स्मृत्वा. ८ घ. ट.
ठ. ड. तदस्यावृणोति. ९ क. ख. °मुक्तम् ॥ १ ॥ अधु°; ठ. ड. °मुक्तम् ॥
इति निरुक्तवृत्तौ १३ खण्डः । अधु°; ग. ज. °प्रसक्तमुक्तम्. १० क. ख. ग. च.
३० ज. घ. ट. ठ. ड. अङ्को नास्ति.

स्वरादित्यो भवति सु अरणः सु ईरण स्वृतो रसान्त्स्वृतो भासं ज्योतिषां स्वृतो भासेति वैतेन द्यौर्व्याख्याता[1] । पृश्निरादित्यो भवति प्राश्नुत एनं वर्ण इति नैरुक्ताः संस्प्रष्टा रसान्त्संस्प्रष्टा भासं ज्योतिषां संस्पृष्टो भासेति वाथ द्यौः संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च[2] । नाक आदित्यो भवति नेता रसानां[3] नेता भासां ज्योतिषां प्रणयोऽथ द्यौः कमिति सुखनाम तत्प्रतिषिद्धं प्रतिषिध्येत न वा अमुं लोकं जग्मुषे[4] किंचनाकम् । न वा अमुं लोकं गतवते किंचनासुखं पुण्यकृतो ह्येव तत्र गच्छन्ति[5] । गौरादित्यो भवति गमयति रसान्गच्छत्यन्तरिक्षेऽथ द्यौर्यत्पृथिव्या अधि दूरंगता भवति यच्चास्यां ज्योतींषि गच्छन्ति । विष्टबादित्यो भवत्याविष्टो रसानाविष्टो भासं ज्योतिषामाविष्टो भासेति वाथ द्यौराविष्टा ज्योतिर्भिः पुण्यकृद्भिश्च[7] । नभ आदित्यो भवति नेता रसानां नेता भासां ज्योतिषां प्रणयोऽपि[8] वा भन एव स्याद्विपरीतो न न भातीति वैतेन द्यौर्व्याख्याता[9] ॥ १४ ॥

इति[10] द्वितीयाध्यायस्य चतुर्थः पादः ।

---

'स्वरादित्यो भवति' इति[11] । 'सु अरणः' सुगमन इत्यर्थः । अथवा सुष्ठु तमांसि ईरयति नाशयतीत्यर्थः । अथवा विशेषणविशेष्यभावेनैते वाक्ये स्याताम् । किमुक्तं भवति 'सु अरणः' इति । उच्यते[12] । 'सु ईरणः'[13] इत्येवम् । 'स्वृतो रसान्' । सुष्ठु रसानादातुम् ऋतो गतो

---

१ छ. त व्याख्याता ॥ १७ ॥ पृश्नि॰; द. व्याख्याता ॥ २ ॥ पृश्नि॰. २ छ. त. कृद्भिश्च॰ ॥ १८ ॥ नाक॰; द. कृद्भिश्च ॥ ३ ॥ नाक॰. ३ क. ख. छ. त. द. 'रसानां नेता' नास्ति. ४ क. ख. छ. त. द. जग्मुषे. ५ छ. त. ॰गच्छन्ति ॥ १९ ॥ गौ॰; द. गच्छन्ति ॥४॥ गौ॰. ६ छ. त. गच्छन्ति ॥ २० । विष्ट॰; द. गच्छन्ति ॥ ५ ॥ विष्ट॰. ७ छ. त. ॰कृद्भिश्च ॥ २१ ॥ नभ॰; द. ॰कृद्भिश्च ॥ ६ ॥ नभ॰. ८ छ. त. द. प्रभवोऽपि. ९ क. ख. २; छ. त. २२; द. ७. १० ड. थ. ध. 'इति००० पादः' नास्ति. ११ क. ख. घ. ट. ठ. ड. 'इति' नास्ति. १२ घ. ट. उच्यते । सु ईरण इत्युच्यते । सु॰. १३ म. च. ज. ईरणेत्येवम्.

भौमानान्तरिक्षांश्च । ' स्तृतो भासं ज्योतिषाम् ' । सुष्टु ग्रहनक्षत्रादीनां ज्योतिषां भासमादातुम्[1] ऋतो गतः । 'स्तृतो भासेति वा' । सुष्टु परिगतो भासेति वा । सर्वतो ह्येष परिगतो दीप्त्या भवति ।

' एतेन द्यौर्व्याख्याता ' । उक्तं हि ' तानि चेत्समानकर्माणि समाननिर्वचनानि' [निरु० २ । ७] इति । सापि हि सु अरणा शोभनगमना[2] भवति । शोभनं वा अस्यामर्यत इत्येवमादि यथासंभवं योज्यम्[3] ।

' पृश्निरादित्यो भवति ' । आह । कस्मात् । उच्यते । ' प्राश्नुत एनं वर्ण इति नैरुक्ताः ' । प्राश्नुते प्रकर्षेण व्याप्नोति एनम् आदित्यं वर्णः प्रोज्ज्वल इति नैरुक्ता मन्यन्ते । ' संस्प्रष्टा रसान् ' । स हि नित्यकालमेव रसानां संस्प्रष्टा भवति । तस्य हि तदेव कर्म । वक्ष्यति ' अथास्य कर्म रसादानम् ' [ निरु० ७ । ११ ] इति । ' संस्प्रष्टा भासं ज्योतिषाम् ' । आदित्यसंस्पर्शादेव ग्रहनक्षत्रचन्द्रमसां भासो नश्यन्ति । ' संस्पृष्टो भासेति वा ' । दीप्त्या ह्येष सर्वतः संस्पृष्टो भवति । आह । ' अथ द्यौः ' कस्मात्पृश्निरिति[4] । उच्यते । सापि हि संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च[5] ' ।

' नाक आदित्यो भवति ' । आह । कस्मात् । उच्यते । ' नेता भासाम्[6] ' । नेता ह्यसौ भासां सर्वासु दिक्षु । 'ज्योतिषां' च ' प्रणयः ' । अस्यैव हि भगवतो रश्मिजालप्रान्तोपलग्नं ज्योतिश्चक्रं बंभ्रमीति[7] । ' अथ द्यौः ' कस्मान्नाकः इति । उच्यते । ' कमिति सुखनाम ' । आह । ततः किमिति । शृणु । 'तत्प्रतिषिद्धं' सत्पुनरपि ' प्रतिषिध्यते ' । आह । किमिति[8] । उच्यते । तत्प्रतिषिध्यमानम् ' अकं ' भवति । असुखमित्यर्थः । पुनरपि च प्रतिषिध्यमानं ' नाकं ' भवति । ततो द्विः प्रतिषेधः प्रकृतिमापादयति[9] । नाकमित्युक्ते सुखमिति प्रतीयते । ब्राह्मणमपि चैतस्मिन्नर्थे[10] भवति । ' न वा अमुं लोकं जग्मुषे किंचनाकम् ' [ काठ० सं० २१ । २ ] इति । आह । किमुक्तं भवति ।

१ ग. च. ज. ' भासं ' नास्ति. २ ग. ज. शोभनगता. ३ ग. योज्यम् । १७। पृश्नि°. ४ क. ए. घ. ट. ठ. ड. ' इति ' नास्ति. ५ ग. °द्भिश्च ॥ १८॥ नाक°. ६ ग. ज. ट. ठ. ड. भासां ज्योतिषां. ७ क. ख. बभ्रमीति; ग. ज. बभ्रम्यते; च. बंभ्रम्यते; ट. ड. बभ्रमिति. ८ ग. ज. किमिद उच्य°. ९ क. ख. घ. ट. ठ. ड. प्रकृतिमापा°. १० घ. ट ठ. ड. °न्नर्थेष्वेव भवति.

अमुमेव द्युलोकं जग्मुषे गतवते न किंचन[1]नाकं किंचिन्नासुखमित्यर्थः ।
किं कारणम् । य एव हि ' पुण्यकृतो ' भवन्ति ते ' एव हि तत्र गच्छन्ति ' ।
न च पुण्यकृतां दुःखेन भवितुं न्याय्[2]यम् ।

' गौरादित्यो भवति ' । आह । कस्मात् । उच्यते । ' गमयति '
ह्यसौ ' रसान् ' आत्मानं प्रति । उपक्षयं वा गमयति । किंच ।　५
' गच्छत्यन्तरिक्षे ' स एवात्मना । ' अथ द्यौः ' कस्माद्द्यौरिति । उच्यते ।
यत् यस्मादियं द्यौः ' पृथिव्या अधि ' उपरि ' दूरम् ' अध्वानं ' गता
भवति ' । किंच । ' यत् ' यस्मात् ' चास्यां ज्योतींषि ' ग्रहनक्षत्र-
तारकादीनि ' गच्छन्ति ' तस्मा[3]द्द्यौः ।

' विष्टवादित्यो भवति ' । आह । कस्मात् । उच्यते । आभिमुख्येन　१०
ह्येष ' रसान् ' भौमानान्तरिक्षांश्च विष्टः[4] ' प्रविष्टो रश्मिभिरादातुम् ।
किंचाभिमुख्येन विष्टः प्रविष्टो ' भासं ज्योतिषां ' ग्रहादीनाम् । अथवा-
यमेवाभिमुख्येन ' आविष्टो भासेति वा ' । सर्वतो ह्येष संदीप्तो भवति ।
आह । ' अथ द्यौः ' कस्माद्विष्टविति । उच्यते । इयमपि ह्याविष्टा
ज्योतिर्भिः ग्रहनक्षत्रादिभिः । ये चान्ये [5]पुण्यकृतस्तैश्च । तस्माद्विष्ट[6]विति ।　१५

' नभ आदित्यो भवति ' । आह । कस्मात् । उच्यते । ' नेता '
ह्येष ' भासां ' सर्वासु दिक्षु । ' ज्योतिषां ' च ' प्रणयः ' । व्याख्या-
तमेतत् । अपि वा भन एव स्याद्विपरीतः[7] ' । भनः भासनः सन् नभ
इत्युक्तो विपर्ययेण । ' न न भातीति वा ' । न न भाति भात्येवेति नभः ।[8]
' एतेन द्यौर्व्याख्याता ' । सापि ह्यादित्यवन्नेत्री भासामित्यादि योज्यम् ॥१४॥[9]　२०

इति निरुक्तवृत्तौ सप्तमाध्[10]यायस्य चतुर्थः पा[11]दः ।

---

## रश्मिनामान्युत्तराणि पञ्चदश रश्मिर्यमनात्तेषामादितः साधारणानि पञ्चाश्वरश्मिभिर्दिङ्नामान्युत्तराण्यष्टौ दिशः

---

१ ग. ज. किंचन नाकं. २ ग. न्याय्यम् ॥ १९ ॥ गौ°. ३ ग. °स्माद्द्यौः　२५
॥ २० ॥ विष्ट°. ४ क. ख. घ. ट. ठ. ड. आविष्टः. ५ घ. ट. ठ. ड.
सुपुण्यकृतः. ६ ग. °विति ॥ २१ ॥ नभ°. ७ च. °रीतो नभः । भास°.
८ घ. ट. ठ. ड. ' हि ' नास्ति. ९ क. ख. २; ग. २२; घ. ट. ठ. ड. च.
ज. अङ्को नास्ति. १० घ. ट. सप्तमस्याध्यायस्य. ११ च. पादः समाप्तः.　२९

कस्माद्दिशतेरासदनादपि वाभ्यशनात्तत्र काष्ठा इत्येतदनेकस्यापि सत्त्वस्य नाम भवति काष्ठा दिशो भवन्ति क्रान्त्वा स्थिता भवन्ति काष्ठा उपदिशो भवन्तीतरेतरं क्रान्त्वा स्थिता भवन्त्यादित्योऽपि काष्ठोच्यते क्रान्त्वा ५ स्थितो भवन्त्याज्यन्तोऽपि काष्ठोच्यते क्रान्त्वा स्थितो भवत्यापोऽपि काष्ठा उच्यन्ते क्रान्त्वा स्थिता भवन्तीति स्थावराणाम् ॥ १५ ॥

---

आदित्यसंबन्धेनैव 'रश्मिनामान्युत्तराणि पञ्चदश'। 'रश्मिर्यमनात्' १० उदकस्याश्वानां वा। 'तेषां पञ्च' यानि 'आदितः' तानि 'साधारणानि अश्वरश्मिभिः'। कतमानि पुनस्तानि। खेदयः किरणाः इत्येवमादीनि। खे दयन्ते खे गच्छन्तीति खेदयः। किरणाः। ते हि विक्षिता भवन्ति।

'दिङ्नामान्युत्तराण्यष्टौ'। आदित्योपलक्षणा एव हि दिश इत्या- १५ दित्यनामभ्य उत्तराणि दिङ्नामानि। कियन्ति पुनस्तानि। अष्टौ। कानि। 'आता आशा उपराः' इत्येवमादीनि। आता आगता ह्येतास्तं तमर्थं प्रति भवन्ति। आशा अभ्यश्नुवते ह्येताः सर्वमेव यावदस्ति किंचित्। उपराः सर्वमेव ह्येता उपगम्य रता भवन्तीत्युपराः। आह। 'दिशः कस्मात्'। 'दिशतेः' अतिसर्जनार्थस्य [ धा० ६ । ३ ]। २० अतिसृज्यन्ते ह्यासु हविरादीनि देवतानाम्। अथवा 'आसदनात्'। तं तमर्थं प्रत्येता आसन्ना भवन्ति। 'अपि वाभ्यशनात्'। अभ्यश्नुवते ह्येतास्तं तमर्थम्।

'तत्र' तस्मिन्नष्टके दिङ्नामगणे 'काष्ठा इत्येतन्नामानेकस्यापि सत्त्वस्य भवति'। तद्यथा। 'काष्ठा दिशो भवन्ति'। आह। २५ किं कारणमिति। उच्यते। क्रान्त्वा ह्येतास्तं तमर्थं प्रति गत्वा स्थिता भवन्ति। न हि तदस्ति यत्रैता न सन्ति। 'काष्ठा उपदिशो भवन्ति'।

---

१ ङ. °भ्यसना°. २ क. ख. छ. त. द. 'नाम' नास्ति. ३ क. ख. द. १; छ. त. २३. ४ च. 'पंच' नास्ति. ५ ग. च ज. दयन्ति. ६ ग. च. ज. तमर्थं प्रति. ७ घ. ट. ठ. ड. तत्र काष्ठा इत्येतदनेकस्यापि सत्त्वस्य नाम भवति। तत्र तस्मिन्नष्टके°. ८ घ. दिग्नाम°; ट. दिग्नाम° ङ्ना. ९ क. २१ ख. घ. ट. ढ. ड. क्रान्त्वा स्थिता भवन्ति। क्रान्त्वा ह्येता°.

ता[1] अपि हीतरेतरं क्रान्त्वा दिग्भिः साकं स्थिता भवन्ति । 'आदित्योऽपि काष्ठोच्यते' । असावपि[2] स्वं स्थानं क्रान्त्वा गत्वा[3] स्थितो भवति । आज्यन्तोऽपि[4] शरपथान्तः काष्ठोच्यते । असावपि स्वप्रदेशं क्रान्त्वा गत्वा स्थितो भवति । 'आपोऽपि काष्ठा उच्यन्ते' । ताः पुनर्द्वय्यः[5] स्थावराश्चास्थावराश्च । तत्र 'क्रान्त्वा' गत्वा जलाशयमेताः 'स्थिता भवन्तीति स्थावराणां' काष्ठात्वम् । अस्थावराणां पुनः क्रामन्त्येवैता न क्वचित्तिष्ठन्तीति काष्ठा मेध्या[6] आपः[7] । मन्त्रोऽपि चैतस्मिन्नेवार्थे भवति ॥ १५[8] ॥

---

**अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् । वृत्रस्य निण्यं[9] वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः [ ऋ० सं० १ । ३२ । १० ]॥ अतिष्ठन्तीनामनिविशमानानामित्यस्थावराणां काष्ठानां मध्ये निहितं शरीरं मेघः शरीरं शरीरं शृणातेः शम्नातेर्वा वृत्रस्य निण्यं निर्णामं विचरन्ति विजानन्त्याप इति दीर्घं द्राघतेस्तमस्तनोतेराशयदाशेतेरिन्द्रशत्रुरिन्द्रोऽस्य शमयिता वा शातयिता वा तस्मादिन्द्रशत्रुस्तत्को वृत्रो मेघ इति नैरुक्तास्त्वाष्ट्रोऽसुर इत्यैतिहासिका अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते तत्रोपमार्थेन युद्धवर्णा भवन्त्यहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च विवृद्ध्या शरीरस्य स्रोतांसि निवारयांचकार तस्मिन्हते प्र[10]स्यन्दिर आपस्तदभिवादिन्येषर्ग्भवति[11] ॥ १६ ॥**

---

१ क. ख. घ. ट. ठ. ड. इतरेतरं क्रान्त्वा स्थिता भवन्ति । ता अपि°. २ क. ख. घ. ट. ठ. ड. क्रान्त्वा स्थितो भवति। असावपि'. ३ घ. ट. ठ. ड. 'गत्वा' नास्ति. ४ घ. ट. ठ. ड. आज्यन्तोऽपि काष्ठोच्यते । आज्यन्तोऽपि शर°. ५ घ. ट. ठ. ड. द्वय्या. ६ क. ख. ग ठ. मेध्या. ७ क. ख. ठ. ड. पुस्तकेषु. 'आपः' इत्यस्यानन्तरं खण्डसमाप्तिः. ८ क. ख. १; ग. २३; घ. ट. ठ. ड. च. ज. अङ्को नास्ति. ९ छ. त. द. 'निण्यं' नास्ति. १० क. ख. छ. द. प्रशस्य°; त. प्रशंस्य° स. ११ क. ख. द. २; छ. त. २४.

अतिष्ठन्तीनामिति । हिरण्यस्तूपस्येयमार्षम् । दासपत्नीरिति च । त्रिष्टुभावेते । अग्निष्टोमे निष्केवल्यं नाम शस्त्रं तत्र निविद्धानीयं यत्सूक्तं तत्रैते द्वे अपि शस्येते [आश्व० श्रौ० ५।१५] । न तिष्ठन्तीत्यतिष्ठन्त्यः । तासामतिष्ठन्तीनां मेघोदरान्तर्गतानामपाम् । ता हि मेघे गच्छति गच्छन्त्येव तदाधारत्वात् । अनिवेशनानामनिविशमानानाम् । न हि ताः क्वचिन्निविशन्ते यावज्जलाशयं नाप्नुवन्ति । तासामेवंविधानां काष्ठानां मध्येऽवस्थितानां बाह्यतो मेघाख्यं निहितमवस्थापितं धात्रा शरीरमावृत्यापस्तासामेव गुप्त्यै । ताः पुनस्तस्य[1] मेघस्य वृत्रस्य[2] निण्यं निर्णामं यत्रासौ[3] नीचैर्नमति[4] तं प्रदेशं विजानन्तीव यतस्तेन प्रदेशेन विचरन्ति प्रचरन्ति । निम्नानुसारिण्यो हि ताः । असावपि वृत्रस्तासु प्रक्षरन्तीषु तत्प्रक्षरणनिरोधं[5] चिकीर्षुः स्वशरीरविवृद्धया दीर्घं तमः । स हि तमः संतत्व एव[6] धूमादिप्रभवत्वात् । यावन्तं[7] प्रदेशं निम्नमनुसरन्त्यो मेघस्य ताः स्रुता[8] भवन्ति निपित्सन्त्यस्ततो[9] बहुतरमसौ वर्धते तदवरुरुत्सया । एवं दीर्घं तम आतत्याशयत्[10] आशेते इत्यर्थः । कः पुनरेवमाशयत् । इन्द्रशत्रुरिति समस्तार्थः ।

अथैकपदनिरुक्तम् । ‘ शरीरं शृणातेः ’ हिंसार्थस्य [ धा० ९। १६] । हिंस्यते हि तत् । ‘ शम्नातेर्वा ’ हिंसार्थस्यैव । ‘ दीर्घं द्राघतेः ’ वृद्ध्यर्थस्य [ धा० १।११४ ] । वृद्धं हि तद्भवति । ‘ तमस्तनोतेः ’ । तेन हि सर्वमेव ततं भवति । ‘ आशयत् ’ आङ्पूर्वस्य ‘ शेतेः ’ । ‘ इन्द्रशत्रुः इन्द्रोऽस्य शमयिता वा ’ हन्तेत्यर्थः । ‘ शातयिता वा ’ हन्तैव । धात्वन्यत्वमर्थैकत्वम् ।

इह मन्त्रे वृत्र[11] इत्येतच्छ्रुतम् । तदेतन्निगमानुप्रसक्तं[12] विचार्यत इत्युपयुक्तस्तच्छब्दः । आह । को वृत्रः । उच्यते । ‘ मेघ इति नैरुक्तास्त्वाष्ट्रोऽसुर

---

१ घ. ट. ठ. ड. ‘ तस्य ’ नास्ति. २ क. ख. घ. ट. ठ. ड. वृत्रस्य मेघस्य. ३ क. ख. घ. ठ. ड. येनासौ; ट. येनासौ° यत्र पाठः; ग. ज. येत्रासौ. ४ ग. च. ज. नीचैर्णमति. ५ घ. ट. ड. °रणानिरो°; ठ. °रणानिरो° ण. ६ क. ख. घ. ट. ठ. ड. तमः स्वत एव°. ७ ग. च. ज. यावत्तं. ८ क. ग. ताः स्तुताः; च. ताः स्नुताः° स्तु; घ. ट. ठ. ड. तां स्तुताः. ९ घ. ट. निःपित्सन्त्यपित्सयन्ति ततो; ठ. ड. निःपित्स्यन्त्यः ततो°. १० क. ख. आवृत्या°; च. आतत्य आवृत्याशयत्. ११ घ. ट. ठ. ड. वृत्रं. १२ ग. च. ज, तदेव तान्नि°.

इत्यैतिहासिकाः' । निरुक्तमधीयते विदुश्च ये ते नैरुक्ताः । आह । यदि मेघो वृत्रो य ए[1]षु मन्त्रेषु[2] संग्रा[3]मः श्रूयते तत्र त[4]त्र कः समाधिरिति । उच्यते । 'अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते तत्रोपमार्थेन युद्धवर्णा भवन्ति' । अपां च मेघोदरान्तर्गतानां ज्योतिषश्च वैद्युतस्योद्भूतवृत्तेर्मिश्रीभावकर्मणो वर्षकर्म जायते । तेन हि वैद्युतेन ज्योतिषा वा[5]य्वावेष्टितेनेन्द्राख्येनोपताप्यमाना आपः प्रस्यन्दन्ते वर्षभावाय प्र[6]कल्पन्ते । तत्रैवं सत्युदकतेजसोरितरेतरप्रतिद्वंद्वभूतयोरुपमार्थेन रूप[7]ककल्पनया युद्धवर्णा भवन्तीति । यु[8]द्धरूपकाणीत्यर्थः । न ह्यत्र यथाभूतं युद्धमस्ति । न हीन्द्रस्य शत्रवः केचन सन्ति । मन्त्रोऽपि चैतस्मिन्नर्थेऽस्ति नेन्द्रस्य शत्र[9]वः । 'यदचरस्तन्वा वावृधा[10]नो बलानीन्द्र प्रब्रुवाणो जनेषु । मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं न नु पुरा विवित्से [ ऋ० सं० १०।५४।२]॥

> को वृत्रः । मेघ इति नैरुक्तास्त्वाष्ट्रोऽसुर इत्यैतिहासिकाः

> वृत्रस्य मेघत्वे प्रमाणम्

> इन्द्रस्य न कोऽपि शत्रुरित्यर्थे ऋक्

वामदेव[11]पुत्रस्य बृहदुक्थस्यार्षम् । त्रिष्टुप् । व्यू[12]ढस्याष्टमेऽहनि निष्केवल्ये शस्यते [ आश्व० श्रौ० ८ । ७ ] । यदचरस्त्वं नानाप्रकारं तन्वा वावृधानः शरीरेण विग्रहवान् भूत्वा वावृधानः पुनः पुनर्वर्धमानः । कथं पुनरचरः । बलानीन्द्र प्रब्रुवाणो जनेषु । बलान्यात्मीयानि वीर्याणि हे इन्द्र प्रब्रुवाण इव प्रकथयन्निव । क । जनेषु । किं त्वं तथैव । न । मायेत्सा ते यानि यु[13]द्धान्याहुः । माया सा तव । ऐश्वर्ययोगात्तथा वा[14]न्यथा वा भवसि । न ते त[15]व निजं रूप-

---

१ क. ख. ग. ज. घ. ट. ठ. ड एषः. २ घ. ट. ठ. ड. °षु तत्र तत्र संग्रा°. ३ ग. ज. संग्रामे श्रू°; च. संग्रामे श्रू° मः. ४ क. ख. घ. ट. 'तत्र' सकृदेव. ५ च. वाय्वाविष्टेन. ६ क. ख. कल्प्यन्ते; घ. ट. ठ. ड. कल्पन्ते; च. प्रकल्प्यन्ते. ७ क. ख. घ. ट. ठ. ड. रूपकल्प°. ८ क. ख. घ. ट. ठ. ड युद्धे रू°; सर्वेषु लिखितपुस्तकेषु 'रूपकानि' इति पाठः. ९ च. शत्रवः । २० ।. १० ग. वावृधानो० विवित्से ॥ १४ ॥ वाम°. ११ ठ. ड. °देवस्य पुत्रस्य; च°. देवस्य पुत्रस्य. १२ ठ. व्यूळ्हस्या°; ड. व्यूल्हस्या°. १३ ग. ज. 'यानि युद्धान्याहुः' नास्ति. १४ ग. ज. चान्य°. १५ ग. ज. 'तव' नास्ति.

मेकमवधृतमस्तीत्यभिप्रायः । यानि च युद्धान्याहुरैतिहासिका नानारूपाण्युपप्रदर्शयन्तः सापि च तव मायैव । किं कारणम् । नाद्य शत्रुस्तवास्ति प्रत्यनीकभूतो न नु पुरा नापि पुरा कश्चिदासीत् । यावद्वीर्यं किंचित्क्वचिदस्ति सर्वं तत्त्वमेव । 'वीर्यं वै प्राणो वीर्यमिन्द्र इति ह विज्ञायते' [ मैत्रा० सं० १ । ६ । ९ ] । कुतस्ते शत्रुर्येन साकं युध्येथाः । एतच्च त्वमपि विवित्से वेत्स्येव न केवलमहमित्यभिप्रायः । एवमेतस्मिन्मन्त्रे मायामात्रत्वमेव युद्धमिति श्रूयते । 'विज्ञायते च तस्मादाहुर्नैतदस्ति यद्दैवासुरमिति' [ शत० ११ । १ । ६ । ९ ] । तस्मात्साधूक्तम् 'अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते तत्रोपमार्थेन युद्धवर्णा भवन्ति' । आह । किं वृत्रवदेव युद्धरूपाणि भवन्ति । नेत्युच्यते । 'अहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च' । तुशब्दः समुच्चयार्थो द्रष्टव्यः । वृत्रवच्चाहिवच्चेति मन्त्रवर्णा मन्त्रलिङ्गानि भवन्ति ब्राह्मणवादाश्च शाखान्तरेषु भवन्ति तदप्युपेक्षितव्यम् । 'तस्मिन्' अहिवृत्राख्ये मेघे 'हते प्रसस्यन्दिरे' प्रस्यन्दितवत्य 'आपः' । 'तदभिवादिन्येषा' तस्यार्थस्याभिमुख्येन वादिन्येषा 'ऋग्भवति' ॥ १६ ॥

(margin notes: एतस्मिन्नेवार्थे ब्राह्मणवाक्ये; मन्त्रेषु ब्राह्मणेषु च मेघोऽहिरित्यपि वर्ण्यते)

---

**दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः । अपां बिलमपिहितं यदासीद् वृत्रं जघन्वाँ अप तद्ववार [ ऋ० सं० १ । ३२ । ११ ] ॥ दासपत्नीर्दासाधिपत्न्यो दासो दस्यतेरुपदासयति कर्माण्यहिगोपा अतिष्ठन्नहिना गुप्ता अहिरयनादेत्यन्तरिक्षेऽयमपीतरोऽहिरेतस्मादेव निर्ह्रसितोपसर्ग आहन्तीति । निरुद्धा आपः**

१ घ. ट. ठ. ड. 'एकं' नास्ति. २ घ. ट. ठ. ड. यावद्वर्णं; ट. यावद्वर्णं° द्वीर्यं. ३ ट. ठ. 'तत्' नास्ति. ४ क. ख. व. ट. ठ. ड. युयोधिथ. ५ क. ख. ग. ज. तदाहु°. ६ क. ख. ग. ज. यद्देवा°. ७ क. ख. घ. ट. ठ. ड. चः समु°. ८ ठ. ड. तदभिवादिन्येषग्भवति । तदभि°. ९ क. ख. २; ग. २४; घ. ट. च. ज. अङ्को नास्ति; ठ. ड. °वति । इति निरुक्तटीकायां द्वितीयाध्याये षोडशः खण्डः.

**पणिर्नेव गावः । पणिर्वणिग्भवति पणिः पणनाद्वणिक्पण्यं नेनेक्ति । अपां बिलमपिहितं यदासीत् । बिलं भरं भवति बिभर्तेर्वृत्रं जघ्निवानपववार तद् वृत्रो वृणोतेर्वा वर्ततेर्वा वर्धतेर्वा यदवृणोत्तद् वृत्रस्य वृत्रत्वमिति विज्ञायते यदवर्तत तद् वृत्रस्य वृत्रत्वमिति विज्ञायते यदवर्धत तद् वृत्रस्य वृत्रत्वमिति विज्ञायते[1] ॥ १७ ॥**

**[2] इति द्वितीयाध्यायस्य पञ्चमः पादः ॥**

---

*अहिशब्देन मेघवाचिका ऋक्*

दासपत्नीरहिगोपा[3] अतिष्ठन्निति । दासपत्नीरापः । अहिगोपा मेघगोपाः । अतिष्ठन् स्थितवत्यो निरुद्धास्ता दासपत्नीरापः । यथा केनचित्पणिना वणिजा कस्मिंश्चिद्द्वीप्यन्तरे[4] विक्रयार्थं गावो निरुद्धास्तिष्ठेयुरेवं स्थितवत्यः । ताः पुनरेवं[5] निरुद्धाः सत्यस्तेन मेघेन तासामपां यद्बिलं निर्गमनद्वारमपिहितमासीत्तेन[6] मेघेन तद्यदेन्द्रस्तं मेघं वृत्रं निजघ्निवान् अहँन्हत्वा[7] चापववारापावृतवान् अथ तदा तस्मिन्निहतेऽपावृते च द्वारे ता आपः प्रसस्यन्दिरे[8] वर्षभावेनेति समस्तार्थः ।

अथैकपदानिरुक्तम् । ‘ दासपत्नीर्दासाधिपत्न्यः ’ । दासः कर्मकरः । तं हि ता अधिष्ठाय पान्ति रक्षन्ति । स हि कर्मणा श्रान्तस्तासु पीतासु विश्रान्त आप्यायितो भवति । विग्रहप्रसक्तं निरुच्यते । ‘ दासो दस्यतेः ’ [ धा० ४ । १०७ ] । स हि ‘ उपदासयति ’ उपक्षपयति[9] कृष्यादीनि ‘ कर्माणि ’ । ‘ अहिगोपाः ’ अहिना गुप्ताः । ‘ अहिः ’ कस्मात् । उच्यते । ‘ अयनात् ’ । ‘ एति ’ ह्यसौ ‘ अन्तरिक्षे ’ । शब्दसामान्यान्निरुच्यते । ‘ अयमपीतरोऽहिः ’ सर्पः ‘ एतस्मादेव ’ । असावपि ह्येति । अथवा ‘ निर्ह्रसितोपसर्गः ’ स्यात् । कथम् ।

---

१ क. ख. द. ३; छ. त. २५. २ ड. थ. ध. ठ. ड. त. ‘ इति० पादः ’ नास्ति; छ. इति पञ्चमः पादः; द० इति नैरुक्तस्य द्विती°. ३ ठ. ड. दासपत्नीरिति । दासपत्नीरहि°. ४ ठ. ड. °स्मिंश्चिद् द्वीपान्तरे. ५ ग. ज. पुनः खे निरु°. ६ क. ख. निर्गमद्वारं; ग. च. ज. निर्गमणद्वारं. ७ घ. ट. ठ. ड. अहनत्. ८ ग. ज. ‘ प्र ’ नास्ति. ९ क. ख. घ. ट. ठ. ड. उपक्षयति.

'आहन्ति' असौ भोगेनेत्यहिः । आङ्पूर्वस्य हन्तेः । स पुनरयमुपसर्गं निह्रस्य ह्रस्वं कृत्वाहिरित्युच्यते । 'पणिर्वणिग्भवति' इति पर्यायेण तत्त्ववचनम् । 'पणिः पणनात्' । पणति ह्यसौ व्यवहारं करोति । पर्यायप्रसक्तं निरुच्यते । 'वणिक् पण्यम्' । वणिजो यद्द्रव्यं तत्पण्यम् । तदसौ 'नेनेक्ति' नित्यकालं शुचि करोति मूल्यार्हं स्यादिति । 'बिलं भरं भवति' बिभर्तेर्धातोः । भ्रियते हि तदुदकादिभिः । 'वृत्रो वृणोतेर्वा वर्ततेर्वा वर्धतेर्वा' इत्येषां धातूनामन्यतमस्य । ब्राह्मणमपि चैतस्मिन्नर्थे भवति । 'यदवृणोत्' अन्तरिक्षमुदकं वा महत्त्वात् 'तद्वृत्रस्य वृत्रत्वमिति' एवं ब्राह्मणेऽपि विचार्यमाणे ज्ञायते । अथवा 'यदवर्तत तद्वृत्रस्य वृत्रत्वमिति' । त्वष्टुरिन्द्रशत्रुर्वर्धस्वेत्यनेनालभ्यमानः सोमो यदसुररूपेणावर्तत । अथवा यदवर्तयदिन्द्रेण हतो वृत्रो मेघः अपां बिले अपावृतेऽपो वृष्टिभावेनावर्तयत्प्रावर्तयत् 'तद्वृत्रस्य वृत्रत्वम्' । अथवा 'यदवर्धत' असावतिमात्रप्रमाणं 'तद्वृत्रस्य वृत्रत्वं' स्यादिति ॥ १७॥

इति निरुक्तवृत्तौ सप्तमाध्यायस्य पञ्चमः पादः ।

---

**रात्रिनामान्युत्तराणि त्रयोविंशती रात्रिः कस्मात्प्ररमयति भूतानि नक्तंचारीण्युपरमयतीतराणि ध्रुवीकरोति रातेर्वा स्याद्दानकर्मणः प्रदीयन्तेऽस्यामवश्याया उषोनामान्युत्तराणि षोळशोषाः कस्मादुच्छतीति सत्या रात्रेरपरः कालस्तस्या एषा भवति ॥ १८ ॥**

---

'काष्ठा इत्येतदनेकस्यापि सत्त्वस्य भवति' [ निरु० २।१५] इत्यत आरभ्य दिङ्नामप्रसक्तानुप्रसक्तमुक्तम् । प्रकृतमिदानीमुच्यते । 'रात्रि-

---

१ क. ख. घ. ट. ठ. ड. 'इति' नास्ति. २ क. ख. घ. ट. ठ. ड. भूतं. ३ घ. ट. ठ. ड. °त्येतेषां. ४ क. ख. ग. ज. 'तद्वृत्रस्य......णावर्तत । अथवा यदवर्तयत्' नास्ति. ५ घ. ट. ठ. ड. त्वष्टेन्द्र°. ६ च. 'अथवा...... प्रावर्तयत्तद्वृत्रस्य वृत्रत्वं' नास्ति. ७ क. ख. ३; ग. २५; घ. ट. ठ. ड. च. ज. अङ्को नास्ति. ८ घ. ट. सप्तमस्याध्यायस्य. ९ घ. ट. पादः संपूर्णः; ठ. ड. पादः समाप्तः. १० क. ख. थ. द. षोडशो°; छ. त. षोलशो°, ड. षोधशो°. ११ क. ख. द. १; छ. त. २६. १२ घ. ट. ठ. ड. °सक्तमिदमुक्तं.

नामान्युत्तराणि त्रयोविंशतिः ' । रात्रेर्नामानि उत्तराणीति प्रकृतेभ्यो दिङ्नामभ्यः । तमःसंतत्त्वा[2] हि रात्रिः । तस्य च तमसो दिक्ष्वेवात्मलाभो भवति । अतो दिङ्नामभ्य उत्तराणि रात्रिनामानि । कियन्ति पुनस्तानि । त्रयोविंशतिः । त्रीणि[3] च विंशतिश्च त्रयोविंशतिः । कतमानि पुनस्तानि । 'श्यावी क्षपा शर्वरी' इत्येवमादीनि । श्याववर्णा हि रात्रिरिति श्यावी । स्वैः ५ स्वैः कर्मभिरहनि क्षीणान्प्राणिन इयं स्वापेन पातीति क्षपा । अस्यां हि सुप्ताः पुनर्नवा[4] इव प्राणिनः प्रातरुत्तिष्ठन्ति । शरणमस्यां स्वापार्थं त्रियत इति शर्वरी इत्येवमादि सर्वत्र योज्यम् । आह । ' रात्रिः कस्मात् ' इति । उच्यते । इयं ह्यागच्छन्ती प्रकर्षेण ' रमयति ' । कानि । ' भूतानि नक्तंचारीणि[5] ' पिशाचादीनि । तानि हि विगतेऽहनि रात्र्यामुपस्थितायां १० प्राप्तोऽयं[6] विहारसमय इति प्रकर्षेण रमन्ते । 'उपरमयतीतराणि ध्रुवीकरोति' । इतराण्यपि दिवाचारीणि सैवोपरमयति । तस्यां ह्युपस्थितायां दिवाचराणि भूतानि मनुष्यादीनीतिकर्तव्यताभ्य उपरमन्ति उपरम्य च स्थिरीभवन्ति निवासाय । ' रातेर्वा स्याद्दानकर्मणः ' दानार्थस्य । आह । किमस्यां प्रदीयते । उच्यते । ' प्रदीयन्तेऽस्यामवश्यायाः '[7] । अवश्यमायन्तीत्यवश्या- १५ यास्तुषारा इत्यर्थः । ते हि रात्रौ निपतन्ति ।

' उषोनामान्युत्तराणि षोळश'[8] । उषसो नामानि । रात्रेरेव ह्यपरः काल उषआख्यो भवतीति रात्रिनामभ्य उत्तराणि उषोनामानि । कियन्ति पुनस्तानि । षोडश । षट् च दश च[9] । कतमानि पुनस्तानि । ' विभावरी सूनरी ' इत्येवमादीनि । विविधांमियं[10] भासं वृणोतीति २० विभावरी । शोभनं नराणामस्यामुत्थानं भवतीति सूनरीत्येवमादि निर्वचनं योज्यम् । आह । ' उषाः कस्मात् ' इति । उच्यते[11] । 'उच्छतीति सत्याः ' । उच्छी विवासे [ धा० १।२१६ ] । विवासयति हीयं तमांसि । तस्मादुच्छतीत्येवमस्या एतस्मिन् कर्मणि सत्याः कर्तरि कारक

२५ १ क. ख. घ. ट. ठ. ड. °मानि रात्रिनामानि । उत्त°. २ क. ख. °सतन्त्रा; घ. °सतत्रा, ट. सतत्रॉ° त्वा. ३ घ. ट. ठ. ड. 'त्रीणि च...विंशतिः' नास्ति. ४ ग. च. ज. पुनर्णवा. ५ ग. च. ज. नक्तंचराणि. ६ च. प्राप्तायां वि°. ७ ग. ज. °श्यायाः । विप्रुषः तुषा°; च. °श्यायाः । मुष्वाःइत्य°. ८ क. ख. ग. ज. घ. ट. षोड्श; च. षोलश; ड. षोधश. ९ क. ख. घ. ट. ठ. ड. च षोडश। कृत°. १० घ. ट. ठ. ड. विविधां भासमियं वृणो°. ११घ. ट. ठ. ड. 'उच्यते' नास्ति. ३०

उषा इत्येतदभिधानं भवति । आह । का पुनरियमुषा इति । उच्यते । ' रात्रेरपरः कालः ' स उषा इत्युच्यते । आह । कथमेतद्गम्यते[1] रात्रेरपरः काल उषा इति । उच्यते । ' तस्याः '[2] उषसो रात्र्यपरकालत्वे ' एषा ' निर्वाचिका ऋग् ' भवति ' ॥ १८ ॥

---

५

**इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा । यथा प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारैक् [ ऋ० सं० १ । ११३ । १ ] ॥ इदं श्रेष्ठं ज्योतिषां ज्योतिरागमच्चित्रं प्रकेतनं प्रज्ञाततममजनिष्ट विभूततमं यथा**

**१० प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्यैवं रात्र्युषसे योनिमरिचत्स्थानं[3] स्त्रीयोनिरभियुत एनां गर्भस्तस्या एषापरा भवति ॥ १९ ॥**

---

इदं श्रेष्ठमिति । आङ्गिरसस्य कुत्सस्येयमार्षमुत्तरां[4] च । उभे अपि त्रिष्टु-

१५ भावेते । प्रातरनुवाकाश्विनयोः शस्येते[5] [ आश्व० श्रौ० ४ । १४ ] ।

*उषसो रात्र्यपरकालत्वे ऋक्*

इदमुषोलक्षणं ज्योतिः श्रेष्ठमादित्यादीनां ज्योतिषामिति निर्धारणे षष्ठी । आदित्यो हि तापकः प्रकाशकः । चन्द्रमा अर्ध्यतिशीतः[6] प्रकाशकश्च । इदं पुनर्नात्युष्णं नातिशीतं प्रकाशकं चेत्ये-

२० वमादित्यादीनामिदमेव श्रेष्ठम् । आगादागच्छतीत्यर्थः । चित्रं चायनीयं पूजनीयं दर्शनीयं वा श्रेष्ठत्वादेव । प्रकेतनं प्रज्ञाततमं प्रकाशतमम् । अजनिष्ट जातमित्यर्थः । जातं सदागच्छति सर्वासु दिक्षु । विभ्वा विभूततमम् । इदमतिमहत्त्वाद्विभूततमं विस्तीर्णतममितराणि परिच्छिन्नतराणि ज्योतींष्यपेक्ष्य । किंच । यथा प्रसूता प्रकर्षेण

२५ सूता प्रसवमनुप्राप्ता । सूतिशब्दः प्रसवार्थः । रात्रिरादित्यस्य प्रसवायादित्योत्सृष्टे देशे जायत एवमेव रात्रिरुषसोऽपि जन्मार्थं योनिं स्थानमवकाश-

---

१ क. ख. घ. ट. ठ. ड. °मेतदुच्यते रात्रे°. २ क. ख. १; ग. २६; च. २२; घ. ट. ज. अङ्को नास्ति; ठ. ड. °भवति । इत्यष्टादशः खण्डः. ३ क. ख. द. २; छ. त. २७. ४ घ. ट. ठ. ड. ' उत्तरां च ' नास्ति. ५ ग. ज. शस्यते । च; च.

३० शस्येते । चं. ६ घ. ट. अथ त्रिशीतः.

मुषस आत्मलाभायारैक् आरेचयति । ददातीत्यर्थः । यथोषा आदित्यस्य जन्मनो हेतुस्तदनन्तरजन्मत्वादेवं रात्रिरुषसो जन्मनो हेतुरित्येवमस्यामृचि रात्रेरेवापरः काल उषःसंज्ञित[1] इति गम्यते । स्थानं योनिशब्देनोच्यते । यद्धि यस्मिन्निधीयते तत्तेन साकं युतं भवति । मिश्रीभूतमित्यर्थः । इयमपीतरा ' स्त्रीयोनिरेतस्मादेव ' । किं का[2]रणम् । ' अभियुतो ' हि ' गर्भ एनां ' भवति । आमिश्रीभूत इत्यर्थः । पूर्वत्र ' अयमपीतरो योनिरेतस्मादेव । किम् । परियुतो भवति ' [ निरु० २ । ८ ] इति परियवनक्रियासामान्येन निरुक्तो योनिशब्दः ।

योनिशब्दः किमर्थं पुनर्व्युत्पाद्यते

इह पुनः ' अभियुत एनां गर्भः ' इति मिश्रीभावसामान्येन । उभयलिङ्गत्वं चास्योपदर्शितमिह स्त्रीलिङ्गं तत्र पुंलिङ्गमिति । ' तस्याः ' उषस एषापरा ऋग् ' भवति ' अस्यैवार्थस्य दृढतायै रात्रेरपरः काल उषा उच्यत[3] इति ॥ १९ ॥

---

**रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः । समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने [ ऋ० सं० १ । ११३ । २ ] ॥ रुशद्वत्सा सूर्यवत्सा रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः सूर्यमस्या वत्समाह साहचर्याद्रसहरणाद्वा रुशती श्वेत्यागात् । श्वेत्या श्वेततेररिचत्कृष्णा सदनान्यस्याः कृष्णवर्णा रात्रिः कृष्णं कृष्यतेर्निकृष्टो वर्णोऽथैने संस्तौति समानबन्धू समानबन्धने अमृते अमरणधर्माणावनूची अनू[4]च्यावितीतरेतरमभिप्रेत्य द्यावा वर्णं चरतस्ते एव द्यावौ द्योतनादपि वा द्यावा चरतस्तया स[5]ह चरत इति स्यादामिनाने आमि[6]न्वाने अन्योन्यस्याध्यात्मं कुर्वाणे अहर्नामान्युत्तराणि**

---

१ ङ. °संज्ञ इति. २ ग. ज. ' किं कारणम्......किम् ' नास्ति. ३ क. ख. २; ग. २८; च. २३; घ. ट. ज. अङ्को नास्ति; ठ. ड. ॥ १९ ॥ इति निरुक्तटीकायां पूर्वषट्के द्वितीयाध्याय एकोनविंशतिः खण्डः. ४ क. ख. छ. त. द. ' अनूच्यौ ' नास्ति. ५ क. ख. छ. त. द. ' सह ' नास्ति. ६ क. ख. छ. त. द. ' आमिन्वाने ' नास्ति.

**द्वादशाहः कस्मादुपाहरन्त्यस्मिन्कर्माणि तस्यैष निपातो भवति वैश्वानरीयायामृचि ॥ २० ॥**

---

रुशद्वत्सा[2] रोचिष्णुवत्सा। सूर्यो हि रोचिष्णुः। तम् ' अस्या वत्समाह ' मन्त्रदृक् ' साहचर्यात् ' । मातृसहचरो हि वत्सो भवति । अयमपि चानयोषसा सह चरतीत्येतस्मात्सामान्याद्वत्सं इत्युच्यते[3] । ' रसहरणाद्वा ' । यथा हि मातुरूधसः क्षीराख्यस्य रसस्याहर्ता भवति वत्स एवमेषोऽप्यौषसिकानामवश्यायाख्यानां रसानामाहर्ता भवति रश्मिभिरित्येतस्मात्सामान्याद्वत्सत्वम् । रुशती रोचनशीलात्मनापि। 'श्वेत्या श्वेततेः' धातोः। 'श्विता वर्णे' इत्येतस्य [ धा० १ । ७४३ ]। श्वेतवर्णेत्यर्थः। या चैवंलक्षणोषाः सा आगादागच्छति। आगतायाश्च तस्यां अपि[6] आरैक् आरेचयति कृष्णवर्णा रात्रिः। किमारेचयति । सदनानि स्थानान्यस्या उषसः। येष्वेवमुषा स्थानेष्वागता सत्यासीदति तान्यारेचयति रात्रिः। एवं तावदयमर्धर्चो रात्र्युषसोर्विभक्तस्तुतिः। 'अथ' अनेनोत्तरेणार्धर्चेन एते[8] रात्र्युषसी 'संस्तौति'। 'समानबन्धू' एते रात्र्युषसी 'समानबन्धने'। समानमनयोर्बन्धनम् । आदित्यस्येयं ह्यस्तमयं प्रति रात्रिर्बद्धा संश्लिष्टोदयं प्रत्युषाः। एवं समानबन्धू । 'अमृते अमरणधर्माणौ' । न हि रात्र्युषसी म्रियेते। ' अनूची इतीतरेतरमभिप्रेत्य ' । इतरेतरसंश्लिष्टे हीमे[9] 'द्यावा' वर्णं 'चरतः' । ' ते एवं[10] ' रात्र्युषसी 'द्यावौ द्योतनात्' । उषा हि स्वेन प्रकाशेन द्योतते। रात्रिरपि स्वेन तमोवीर्येण नक्षत्रगणेन वा स्वमधिकारं[11] प्रति द्योतते। एवं हि द्यावेति द्विवचनम्। अथ ' वा ' तृतीयान्तमेकवचनमेतत् 'स्यात्' द्यौः। 'तया द्यावा सह' युक्ते तया सह स्पर्धमाने चरतो गच्छतः। कथं च[12] पुनश्चरतः। आमिनाने[13] ।आङ्यर्थे।

(Marginal gloss beside lines 5–9: उषसो रात्र्यपरकालत्वेऽपरा ऋक्)

---

१ क. ख. द. ३; छ. त. २८. २ ठ. ड. °वत्सेति रोचि°. ३ क. ख. घ. ट. ठ. ड. ' इति ' नास्ति. ४ ग. ज. क्षीराख्यरसस्य. ५ क. ख. घ. ट. ठ. ड. श्वेतो वर्ण एत्यस्यां सा श्वेत्या। श्वेतवर्णे°; ग. ज. श्वितो वर्णत्येतस्या श्वेतवर्णे°. ६ क. ख. घ. ठ. ठ. ड. ' अपि ' नास्ति. ७ क. ख. घ. ट. ठ. ड. येष्वित्यमुषा°. ८ ग. ज. ' एते ' नास्ति. ९ क. ख. घ. ट. ठ. ड. ह्येते. १० ठ. ड. एवं. ११ घ. ट. ड. स्वस्वमधि°; ठ. स्वं स्वमधि°. १२ क. ख. घ. ट. ठ. ड. ' च ' नास्ति. १३ घ. ट. ठ. ड. वर्णं रूपं आमिमाने.

उषा अपि रात्रेरधि आत्मानं निर्मिमीते रात्रिरप्युषसः । इतरेतरसंश्लिष्टे ह्यीमे रात्र्युषसी । तस्मादेवमुच्यते[1] 'अन्योन्यस्याध्यात्मं कुर्वाणे' इति[2] ।

उषःशब्द[3]तत्त्वावधारणार्थं प्रसक्तावेतौ मन्त्रावुपवर्णितौ । प्रकृतमिदानी-मुच्यते । 'अहर्नामान्युत्तराणि द्वादश' । अह्नो नामान्यहर्नामानि । 'उत्तराणि' प्रकृतेभ्य उषोनामभ्यः । उषस एवानन्तरमहर्भवति । तस्मादुषोनामभ्य उत्तराण्यहर्नामानि । कियन्ति पुनस्तानि । द्वादश । द्वे च दश च द्वादश । कानि पुनस्तानि । 'वस्तोः द्युः भानुः' इत्येवमादीनि । वस्ते ज्योतिरेतदिति वस्तोरित्युच्यते । यथैव हि श्रुतं मन्त्रे तथैवेह समाम्नातम् । द्युः । द्योतते ह्येतज्ज्योतिषा । भानुः । भासते ह्येत[4]ज्ज्योतिषेत्येवमादि योज्यम् । आह[5] । 'अहः कस्मात्' । उच्यते । 'उपाहरन्त्यस्मिन्कर्माणि' । न हि तथा रात्रावनुतिष्ठन्ति कर्माणि कर्मकरा यथाहनि । 'तस्य' अह्नः 'एष निपातो भवति' नैघण्टुक-वृत्त्या 'वैश्वानरीयायां' वैश्वानरदेवतायाम् 'ऋचि' । अहःशब्दो हि रात्रिमहश्चोभयमभिधत्ते । अतः संदेहपदम् । तस्यैष विभागोऽ-स्यामृच्युपपदविशेषात्प्रदर्श्यते ॥ २०[6] ॥

---

**अहश्च कृष्णमहरर्जुनं च वि वर्तेते रजसी वेद्याभिः । वैश्वानरो जायमानो न राजावातिरज्ज्योतिषाग्निस्तमांसि [ऋ०सं०६।९।१]॥अहश्च कृष्णं रात्रिः शुक्लं चाहरर्जुनं विव-र्तेते रजसी वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिर्वैश्वानरो जाय-मान इवोद्यन्नादित्यः सर्वेषां ज्योतिषां राजावाहन्नग्निर्ज्यो-तिषा तमांसि मेघनामान्युत्तराणि त्रिंशन्मेघः कस्मान्मे-हतीति सत आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिरुपर उपलो मेघो भवत्युपरमन्तेऽस्मिन्नभ्रा-ण्युपरता आप इति वा तेषामेषा भवति ॥ २१[7] ॥**

---

१ ठ. ड. °मुच्येते. २ ठ. ड. 'इति' नास्ति. ३ घ. ट. ठ. ड. °शब्द-त्वावधा°. ४ च. 'एतत्' नास्ति. ५ घ. ट. ठ. ड. 'आह' नास्ति. ६ क. ख. ३; ग. २८; च. २४; घ. ट. ज. अङ्को नास्ति; ठ. ड. °ऋचि ॥ इति निरुक्तभाष्ये २० खण्डः समाप्तः, ७ क. ख. द. ४; छ. त. २९.

अहश्च कृष्णमिति । भरद्वाजस्येयमार्षम् । त्रिष्टुप् । पृष्ठयस्य षष्ठेऽहन्याग्निमारुते शस्त्रे शस्यते [ आश्व० श्रौ० ८ । ८ ] । अहश्च कृष्णं रात्रिः शुक्लं चाहरर्जुनम् । अर्जुनशब्दो हि शुक्लपर्यायः । विवर्तेते विपर्ययेण वर्तेते । रात्रिरतीताहरायातमहरतीतं रात्रिरायातेत्येवम् । रजसी रञ्जके । ज्योतिषा हि भूतान्यहो रञ्जयति तमसा रात्रिः । वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिः । न हि तासां प्रवृत्तीनामन्तोऽस्त्यहनि च रात्रौ च प्राणिनाम् । अतस्ता वेदितव्या एव भवन्ति बहुत्वात् । न हि विदिता नाम ताः कदाचित् । किंच । वैश्वानरोऽग्नि[1]रपाहरत् [2]अपहन्ति स्वेन ' ज्योतिषा तमांसि ' । कथं पुनरपहन्ति । जायमानो न राजा जायमान इव उद्यन्निव सर्वभूतानां राजादित्यः । [3]यथाभ्युद्यन्नादित्यस्तमांस्यपहन्ति दिवैवमग्निरपि रात्राववपहन्तीत्य[4]ग्निरादित्येन तमोपघातं प्रत्युपमीयते ।

' अहन् ' शब्दस्य नैघण्टुकवृत्तिः

' मेघनामान्युत्तराणि त्रिंशत् ' । मेघानां नामानि मेघनामानि । तान्युत्तराणि प्रकृतेभ्योऽहर्नामभ्यः । मेघा ह्यहनि च[5] रात्रौ च[6]विशेषेण भवन्त्यतो रात्र्यु[7]षोऽहर्नामभ्य उत्तराणि मेघनामानि । कतमानि पुनस्तानि । 'अद्रिः ग्रावा गोत्रः ' इत्येवमादीनि । अद्रिः । आदारयितव्यो ह्य[8]सौ भवत्युदकार्थमित्यद्रिः । ग्रावा गृणातेर्वा गृह्णातेर्वा । गृणात्यसौ शब्दं करोति गृहीतं वोदकमनेनेति ग्रावा । गौर्वागत्रेति गोत्र इत्येवमाद्यभ्यूहितव्यं पर्वतनामत्वेऽपि यथासंभवं योज्यम् ।

आह । ' मेघः कस्मात् ' । उच्यते । ' मेहति ' सिञ्चत्यसौ । एवं कर्तरि कारके ' सतः ' अस्यैतदभिधानं भवति मेघ इति । तेषां मेघनाम्नाम् ' आ उपर उपल इति ' प्राक् उपर उपल इत्येताभ्यां यानि नामानि तानि ' साधारणानि पर्वतनामभिः ' । तदेषां प्रकरणोपपदाभ्यां विशेषोऽवधार्यः । ' आ उपर इत्येतस्मात् ' इति वक्तव्ये

१ ग. ज. °ग्निरवाहन् अप°. २ घ. ट. ठ. ड. अपहरन्ति. ३ क. ख. घ. ट. ठ. ड. यथा ह्युद्य°. ४ घ. ट. ठ. ड. ' इति' नास्ति. ५ क. ख. ग. ज. 'च' नास्ति. ६ घ. ट. °चाविशेषग भ°; ठ. ड. °चाविशेषणं भ°. ७ क. ख. घ. ट. ठ. ड. ' उषः ' नास्ति. ८ क. ख. घ. ट. ठ. ड. °तव्यो भवति ह्यसावुद°. ९ च. °षोऽप्यवधार्यः.

" आ उपर उपल इत्येताभ्यां ' इ[1]त्युक्तम् । उभावपि ह्येतौ समाननिर्वचनौ शब्दावेकस्मिन्निरुक्ते निरुक्तौ भविष्यत इति श्लोश्चाविशेषख्यापनार्थम् । ' उपर उपलो मेघो भवति ' । उपर इति उ[2]पल इति च मेघ उक्तो भवति । उपरशब्दादारभ्य मेघनामान्येव न पर्वतनामानि ।

आह । उपरः कस्मात् । उच्यते ।'उप'गम्योपगम्य '[3]रमन्तेऽस्मिन्नभ्राणि' । अथ ' वा ' ' उप'गम्यास्मिन्रता आपो भवन्ति ' इति ' उपरः । उपलोऽप्येतस्मादेव श्लोरविशेषेण । आह । कथं पुनर्गम्यते उपरश[4]ब्देन मेघ एवोच्यते न प[5]र्वतः । उच्यते । 'तेषां' मेघानामुपरशब्दवाच्यत्वे विशेषलिङ्गवाचिका ' एषा ' ऋक्[6] ' भवति ' ॥ २१ ॥

---

**देवानां माने प्रथमा अतिष्ठन्कृन्तत्रादेषामुपरा उदायन् । त्रयस्तपन्ति पृथिवीमनूपा द्वा बृबूकं वहतः पुरीषम् ( ऋ० सं० १० । २७ । २३ ) ॥ देवानां नि[7]र्माणे प्रथमा अतिष्ठन्माध्यमि[8]का देवगणाः प्रथम इति मुख्यनाम प्रतमो भवति [9]कृन्तत्रमन्तरिक्षं विकर्तनं मेघानां विकर्तनेन मेघानामुदकं जायते । त्रयस्तपन्ति पृथिवीमनूपाः । पर्जन्यो वायुरादित्यः शीतोष्णवर्षैरोषधीः पाचयन्त्यनूपा अनुवपन्ति लोकान्त्स्वेन स्वेन कर्मणायमपीतरोऽनूप एतस्मादेवानूप्यत उदकेनापि वान्वाबिति स्याद्यथा प्रागिति तस्यानूप इति स्याद्यथा प्राचीनमिति । द्वा बृबूकं वहतः पुरीषम् । वाय्वादित्या उदकं बृबूकमित्युदकनाम ब्रवीते[10]र्वा शब्दकर्मणो भ्रंशतेर्वा पुरीषं पृणातेः पूरयतेर्वा[11] ॥२२॥**

**[12]इति द्वितीयाध्यायस्य षष्ठः पादः ।**

---

१ घ. ट. ठ. ड. ' इति ' नास्ति. २ क. ख. घ. ट. ठ. ड. °इति च उप°. ३ घ. ट. ठ. ड. आरमन्ते. ४ घ. ट. ठ. °शब्दे मेघ°; ड. शब्दो मेघ°. ५ क. ख. घ. ट. ठ. ड. पर्वत इति. ६ क. ख. ४; ग. २९; च. २५; घ. ट. ज. अङ्को नास्ति. ठ. ड. भवति । इति निरुक्तभाष्ये सप्तमाध्याय एकविंशतिः खण्डः. ७ द. निर्वाणे. ८ क. ख. माध्यमिका. ९ क. ख. छ. त. द. 'कृतन्त्रमन्तरिक्षं विकर्तनं मेघानां ' नास्ति. १० छ. त. द. ठ. ड. ' वा ' नास्ति. ११ क. ख. ५; छ. त. ३८. १२ ड. थ. घ. ठ. ड. ' इति...पादः ' नास्ति; छ. इति षष्ठः पादः; त. इति द्वितीयाध्याये तृतीयः पादः; द. इति नैरुक्तस्य द्विती°.

देवानां मान इति । वसुक्रस्यैन्द्रस्येयमार्षम्[1] । त्रिष्टुप् । महाव्रते[2] शस्यते [ऐ० आ० ५ । १ । १ ] । देवानां दानादिगुणयुक्तानां माने[3] निर्माणे । यदा देवाः सृष्टाः प्रजापतिना तदैत एव माध्यमिका[4] देवगणाः प्रथमाः अतिष्ठन् । एतेऽपि हि दानादियोगाद्देवा उच्यन्ते । प्रथमाः प्रतमाः प्रकृष्टतमा मुख्या इत्यर्थः । मेघाभावे हि सर्वमेवेदं जगद्वर्षाभावान्न स्यात् । तस्मादेत एव प्रकृष्टतमा अतिष्ठन् अवस्थितवन्तः[5] । सृष्टौ हि सर्वदेवानामेत एवाग्रे सृष्टा इत्यभिप्रायः । किंच । कृन्तत्रात् उत्कृत्तात्प्र-[6]देशादेषां मेघानामिन्द्रेण उपरा आप उदायन् आगता[7] आगच्छन्ति च । किं कारणम् । 'विकर्तनेन[8] मेघानामुदकं जायते' । उपराशब्देनात्रो-[9]दकमुक्तम् । तात्स्थ्यात्ताच्छब्द्यं[10] मञ्चक्रोशनवत्[11] । उपरेषु मेघेषु या आपस्ता उपचारादुपरा[12] इत्युच्यन्ते । किंच यदाभिरुपराभिरद्भिरोषधयः[13] प्ररोहिता[14] भवन्त्यथ तदा त्रयस्तपन्ति । त्रयः पर्जन्यादयस्तपन्ति पृथिवीलोके[15] । अनूपाः । ते ह्यनुवपन्ति लोकान् । स्वेन स्वेन कर्मणा यथाकालमनुगृह्णन्ति । एतदनुवपनं लोकानां यद्वर्षादिभिः पर्जन्यादयो यथार्थमोषधीः पाचयन्ति । किंच । द्वा बृबूकं वहतः पुरीषम् । द्वौ वाय्वादित्यौ वहत आक्षिपत इतः पृथिवीलोकाद् बृबूकमुदकम् । किंलक्षणम् । पुरीषं प्रीणयितृ पूरयितृ[16] वा ।

' अयमपीतरः ' नद्यनूपः समुद्रानुपो वा ' एतस्मादेव ' वपतेर्धातोः । असावपि[17] ' अनूप्यते ' प्रकीर्यते[18] नित्यकालम् 'उदकेन' । ' अपि

१ क. ख. घ. ट. ठ. ड. °क्रस्येन्द्रपुत्रस्येय°. २ क. ख. घ. ट. ठ. ड. °व्रते मरुत्वतीये शस्य°. ३ क. ख. घ. ट. ठ. ड. माने विमाने नि°. ४ क. ख. माध्यमिका. ५ क. ख. घ. ट. ठ. ड. 'अव' नास्ति. ६ क. ख. घ. ट. ठ. ड. उत्कृष्टात्. ७ क. ख. घ. ट. ठ. ड. आगतवत्यः. ८ क. ख. घ. ट. ठ. ड. °र्तनेनैव हि मेघा°. ९ क. ख. घ. ट. ठ. ड. उपरशब्दे°. १० च. तात्स्थ्ये ता°. ११ क. ख. घ. ट. ठ. ड. मञ्चाः क्रोशन्त इतिवत्. १२ च. 'उपचारात्' नास्ति. १३ क. ख. ग. ज. घ. ट. ठ. ड. यदा ताभिरु°. १४ ग. ज. पुरोहिताः; घ. ट. ड. प्रोहिताः; ठ. प्रहिताः. १५ ग. ज. पृथिवीं लोक अनू°; घ. ट. ठ. ड. पृथिवीं पृथिवीलोकं । अनू°. १६ घ. ट. ड. °पूरयितृ वा अतः अयम°; ठ. °पूरयितृ वा यतः अयम°. १७ क. ख. घ. ट. ठ. ड. °वपि हि अनू°. १८ क. ख. घ. ट. ठ. ड. अनुप्रकीर्यते.

वा[1] ' एवमन्यथा 'स्यात्' आप्नोतेः । अन्वाप्यतेऽसावुदकेनेति 'अन्वाप्' । ' यथा[2] ' पुरस्तादञ्चतीति ' प्राक् ' । ' तस्य ' अन्वाविल्येतस्य सतः ' अनूप इति[3] ' एव शब्दः ' स्याद्यथा प्राचीनमिति ' । प्रागित्येवं सतः प्राचीनम् । ' बृबूकमिति उदकनाम ' इति पर्यायवचनेन तत्त्वाभिधानम् । ' ब्रवीतेर्वा ' शब्दार्थस्य [ धा० २ । ३४ ] । शब्दकारि हि तद्भवति । ' भ्रंशतेर्वा[4] ' । भ्रंशयति[5] [ धा० ४ । ११९ ] हि तन्मेघादिति ॥ २२ ॥[6]

इति निरुक्तवृत्तौ सप्तमाध्यायस्य षष्ठः पादः[7] ॥

---

**वाङ्नामान्युत्तराणि सप्तपञ्चाशद्वाक्कस्माद्वचेस्तत्र सरस्वतीत्येतस्य नदीवद्देवतावच्च निगमा भवन्ति तद्यद्देवतावदुपरिष्टात्तद्व्याख्यास्यामोऽथैतन्नदीवत् ॥ २३ ॥[8]**

---

वाङ्नामान्युत्तराणि[9] सप्तपञ्चाशत् । मेघनामप्रसक्तो ' देवानां माने' इत्येष मन्त्रो व्याख्यातः । प्रकृतमिदानीमुच्यते वाङ्नामानीति । वाचो नामानि वाङ्नामानि । उत्तराणि प्रकृतेभ्यो मेघनामभ्यः । मेघेष्वेव हि भूयसी वाग्भवतीति मेघनामभ्य उत्तराणि वाङ्नामानि भवन्ति । कियन्ति पुनस्तानि । सप्तपञ्चाशत् । कानि पुनस्तानि । ' श्लोकः धारा इला ' इत्येवमादीनि । श्रूयत इति श्लोकः । ध्रियते तं तमर्थमवधारयितुमिति धारा । तं तमर्थं प्रतीयमीट्टे गच्छतीति इलेत्येवमाद्यभ्यूहितव्यम्[10] । आह । ' वाक्कस्मात् ' । उच्यते । ' वचेः ' धातोः । उच्यतेऽनयेति वाक् । ' तत्र सरस्वतीत्येतस्य ' । तत्र तस्मिन्सप्तपञ्चाशत्के वाङ्नामगणे सरस्वतीत्येतस्य नाम्नो 'नदीवद्देवतावच्च निगमा भवन्ति' । नद्यर्थयुक्ताश्च देवतार्थयुक्ताश्चेत्यर्थः । तत्रैवं सति ' यत् ' अभिधानं ' देवतावत् ' ' तत् ' अधिकृत्य ' उपरिष्टाद्व्याख्यास्यामः ' षोडशेऽ-

सरस्वतीत्येतस्य नदीवद्देवतावच्च निगमाः

---

१ घ. ट. ठ. ड. च. °अपि चैव°. २ क. ख. घ. ट. ठ. ड. 'यथा' नास्ति. ३ क. ख. घ. ट. ठ. ड. इत्येष शब्द°. ४ च. भ्रंसतेर्वा°. ५ ग. च. ज. भ्रस्यति. ६ क. ख. ५; ग. ३०; घ. ट. च. ज. अङ्को नास्ति; ठ. ड. इति द्वाविंशतिः खण्डः. ७ घ. ट. पादः संपूर्णः; च. ठ. ड. पादः समाप्तः. ८ क. ख. द. १; छ. त. ३१. ९ च. वाग्नामा°; ठ. ड. ' वाङ्नामान्युत्तराणि सप्तपञ्चाशत् ' नास्ति. १० क. ख. घ. ट. ठ. इडेत्ये°.

ध्याये ' पावका नः सरस्वती ' इत्येतस्मिन्मन्त्रे [ निरु० ११।२६ ][2]।
' अथ ' पुनः यत्र[1] नदीवत् तद्व्याख्यायते ॥ २३ ॥

---

इयं शुष्मेभिर्बिसखा इवारुजत्सानु गिरीणां तविषेभि-
५ रूर्मिभिः । पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमा वि-
वासेम धीतिभिः (ऋ०सं०६।६१।२)॥ इयं शुष्मैः शोषणैः
शुष्ममिति बलनाम शोषयतीति सतो बिसं बिस्यतेर्भेदनक-
र्मणो वृद्धिकर्मणो वा सानु समुच्छ्रितं भवति समुन्नुन्न-
मिति वा महद्भिरूर्मिभिः पारावतघ्नीं पारावारघातिनीं
१० पारं परं भवत्यवारमवरमवनाय सुप्रवृत्ताभिः शोभनाभिः[3]
स्तुतिभिः सरस्वतीं नदीं[4] कर्मभिः परिचरेमोदकनामान्यु-
त्तराण्येकशतमुदकं कस्मादुनत्तीति सतो नदीनामान्युत्त-
राणि सप्तत्रिंशन्नद्यः कस्मान्नदना इमा[5] भवन्ति शब्दवत्यो
बहुलमासां नैघण्टुकं वृत्तमाश्चर्यमिव प्राधान्येन तत्रेतिहा-
१५ समाचक्षते विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरोहितो
बभूव विश्वामित्रः सर्वमित्रः सर्वं संसृतं सुदाः कल्याणदानः
पैजवनः पिजवनस्य पुत्रः पिजवनः पुनः स्पर्धनीयजवो
वामिश्रीभावगतिर्वा स वित्तं गृहीत्वा विपाट्छुतुद्र्योः
संभेदमाययावनुययुरितरे स विश्वामित्रो नदीस्तुष्टाव गाधा
२० भवतेत्यपि द्विवदपि बहुवत्तद्यद्द्विवदुपरिष्टात्तद्व्याख्यास्या-[6]
मोऽथैतद्बहुवत् ॥ २४ ॥

---

इयं शुष्मेभिरिति । भरद्वाजस्यार्षम् । जगती[7] । इयं सरस्वती नदी
शुष्मेभिर्बलैः । किं करोति । बिसखा इवारुजत् । यथा बिसखानको[8]
बिसाननादरेणैव मृदुत्वात्खनत्येवमियमनादरेणैव[9] यदपि सानु भवति समु-[10]

२५ १ क. ख. घ. ट. ठ. ड. यन्नदीव°. २ क. ख. १; ग. ३१; च. २६; घ. ठ. ठ. ड. ज. अङ्को नास्ति. ३ क. ख. छ. त. द. ' शोभनाभिः ' नास्ति. ४ क. ख. छ. त. द. ' नदीं ' नास्ति. ५ क. ख. छ. त. द. ' इमाः ' नास्ति. ६ क. ख. द. २; छ. त. ३२. ७ ठ. ड. जगतीछन्दः पृष्ठ्यः षळहे (ड. षण्हे) चतुर्थेऽहनि व्यूळ्हप्रक्षे प्रउगतृचे विनियुक्तेयम् । इयं°. ८ क. ख. ग. ज. घ. ट. ठ. ड. बिसमना°. ९ घ. झ. ट. ड, °त्वात् वनत्ये°; ठ. °त्वात् रुजत्ये°. १०
३१ ग. च. ज. समुच्छूतं.

च्छ्रितं वज्रसंघातकल्पं गिरीणां शिखरं तदपि तविषेभिर्महद्भिरूर्मिभिर्बिसखानक इवानादरेणैव रुजति[1] भनक्तीत्यर्थः । येयमेवंगुणविशिष्टा तामेतां वयं पारावतघ्नीं पारावारघातिनीम् । सा ह्यूर्मिभिः पारं चावारं[2] चोभे अपि हन्ति । अवसे अवनाय रक्षणायात्मनः । कथं नाम रक्षेदसावस्मानित्येतमर्थं पुरस्कृत्य सुवृक्तिभिः सुप्रयुक्ताभिः[3] स्तुतिभिः स्वरसौष्ठवादियुक्ताभिः । किम् । सरस्वतीमाविवासेम धीतिभिः । सरस्वतीमभिमुख्येनावस्थिताः[4] परिचरेम । धीतिभिः कर्मभिः स्तुतिभिश्चानेकप्रकाराभिरित्यर्थः । एष समस्तार्थः ।

अस्यामृचि सरस्वतीत्येतन्नदीवदभिधानम्

अथैकपदनिरुक्तम् । ‘ शुष्ममिति बलनाम ’ । तद्धि ‘ शोषयतीति सतः ’ । सत इति कारकावधारणम् । विपर्ययेणापि ह्यभिधानानामर्थो भवत्येवं मन्यमानो भाष्यकारो बलनामसु पठितमपि सदेतदभिधानमेवमाह शुष्ममिति बलनामेति । ‘ बिसं बिस्यतेर्भेदनकर्मणः ’ । तद्धि[5] भिद्यते । ‘ वृद्धिकर्मणो वा ’ । वर्धते हि तत् । ‘ सानु ’ समस्तं हि तद् ‘उच्छ्रितं’[6] भवति । अथ ‘वा’ समस्तमूर्ध्वं ‘नुन्नं’ प्रेरितं भवति । ‘पारं परं भवति’ अवरस्मात्[7]कूलादेव[8] । अवारमवरं[9] भवति परस्मात्कूलात् ।

अस्यामृचि तविषेभिः ऊर्मिभिः पारावतघ्नीमित्येतद्विशेषलिङ्गं[10] नदीसत्त्वं पश्यता भाष्यकारेण ‘ अथैतन्नदीवत् ’ इत्युक्त्वेयमृगुपात्ता[11] सरस्वतीशब्दस्य नद्यभिधाय[12]कत्वे । इयं पुनर्मैत्रायणीयके[13] ‘ उतस्यानः सरस्वती ’ इत्यस्य षडर्चस्योत्तमा । एतच्च पुनः षडर्चं षडर्चानुक्रमेण पश्वनुक्रमेण च ‘ सारस्वतीं धेनुष्टरीमालभेत यः क्षेत्रे पशुषु वा

एतन्न नदीवदभिधानं किंतु देवतावदित्यर्थे मैत्रायणीसंहिताप्रमाणम्

१ च. आरुजति. २ क. ख. ग. ज. चावारं उभे°; घ. झ. ट. ठ. ड. चावरं चोभे°. ३ क. ख. सुप्रवृत्ताभिः स्तु°; घ. झ. ट. ठ. ड. सुप्रवृत्ताभिः सुप्रयुक्ताभिः स्तु°. ४ घ. झ. ट. ठ. ड. °ख्येन संस्थिताः. ५ च. ‘ हि ’ नास्ति. ६ ग. च. ज. उच्छृतं. ७ ग. ज. अपरस्मात्; च. अपरस्मात्° व. ८ क. ख. झ. ट. ठ. ड. ‘ एव ’ नास्ति. ९ च. अबरमव°. १० क. ख. °द्विशिष्यलिङ्गं; ग. °द्विषयलिङ्गं; ज. °द्विलयलिङ्गं. ११ च. उपात्तातः सर°. १२ घ. झ. ठ. ड. तदभिधायकत्वे; ट. तदभि° नद्य; च. नद्यभिधायकत्वं. १३ ग. च. ज. मैत्रावरुणीयके.

विवदेत ' [ मैत्रा० सं० २।५।४ ] इत्येतस्य पशोः संपद्यते । सेयमनेन प्रकारेण सारस्वतस्य पशुहविषो याज्या भवति। एवं च सतीदमपि देवतावद्देवेत्येतदापद्यते। न ह्यदेवतेज्यते। तदेतदेवं कृत्वा भाष्यकारेण यदुक्तं 'तद्देवतावदुपरिष्टात्तद्व्याख्यास्यामोऽथैतन्नदीवत्' इति तद्विरुध्यते । तत्रोक्तः समाधिः [ निरु० २ । ८ वृत्तिः ]। विभवो ह्यनुपक्षीणशक्तयो मन्त्रशब्दाः। प्रदर्शनमात्रमेतत्क्रियते सर्वथैव मन्त्रशब्दानां योऽर्थ उपपद्यते स योज्यो यथासंभवमिति। देवतापक्षे विनियोगानुविधानाभिप्रायेण सरस्वती माध्यमिका वाक्। सा गिरीणां मेघानां सानूनि भञ्जत्यूर्मिभिः स्तनयित्नुभिः पारावारे द्यावापृथिव्यौ हन्तीति योज्यम्। तविषेभिरूर्मिभिः महद्भिरित्येवमादि योज्यम् । ' सुप्रवृत्ताभिः स्तुतिभिः सरस्वतीं कर्मभिः परिचरेम ' गतार्थम्।

भाष्यकारस्य मैत्रायणीसंहितया विरोधे कः समाधिः

देवतापक्षे ऋङ्निरूपणम्

'उदकनामान्युत्तराणि एकशतम्' । उदकस्य नामान्युदकनामानि। उत्तराणि प्रकृतेभ्यो वाङ्नामभ्यः। मेघाश्रया हि वाग्मेघोत्थं चोदकं स्तनयित्नुशब्दपूर्वकं चेति वाङ्नामभ्य उत्तराण्युदकनामानि । कियन्ति पुनस्तानि। एकशतम्। एकं च शतं च । कतमानि पुनस्तानि। ' अर्णः क्षोदः क्षद्म ' इत्येवमादीनि । अरणशीलमर्णः । क्षिप्रमुनत्तीति क्षोदः । क्षीणमन्नं करोतीति क्षद्मेत्येवमाद्यभ्यूहितव्यम्। आह । ' उदकं कस्मात् ' । उच्यते । ' उनत्तीति सतः ' । तद्धि यत्र गच्छति तत्रोनत्ति क्लेदयति । ' उन्दी क्लेदने ' [ धा० ७ । २० ] । सत इति कारकावधारणं पूर्ववत्।

' नदीनामान्युत्तराणि सप्तत्रिंशत् ' । नदीनां नामानि नदीनामानि। उत्तराणीति प्रकृतेभ्य उदकनामभ्य उत्तराणि नदीनामानि। कियन्ति पुनस्तानि । सप्तत्रिंशत् । कानि पुनस्तानि । ' अवनयः यव्याः खाः

१ क. ख. घ. ट. ठ. ड. °सतीयमपि°. २ च. ' यः ' नास्ति. ३ क. ख. भञ्जयत्यू°. ४ क. ख. घ. झ. ट. ठ. ड. शतं चैकशतम् । कत°. ५ क. ख. घ. झ. ट. ठ. ड. क्षीरिण°. ६ ग. ज. ' आह...पूर्ववत् ' नास्ति. ७ ग. ज. ' नदीनां नामानि ' नास्ति. ८ घ. झ. ' इति ' नास्ति; ट. उत्तराणि ˇ प्रकृ° इति. ९ क. ख. यव्हाः.

सीराः ' इत्येवमादीनि । अवनतेन[1] निम्नेन प्रदेशेन यान्तीत्यवनयः । यातव्या[2] भवन्तीति यव्याः । खातव्या भवन्तीति खाः । सरन्तीति सीराः । एवमादि योज्यम् ।

नदीनां प्राधान्येन देवतात्वे मन्त्रा अल्पाः। नैघण्टुकवृत्तिर्बहुला

आह । ' नद्यः कस्मात् ' । उच्यते । ' नदनाः ' ह्येता ' भवन्ति ' ' शब्दवत्यः ' शब्दसंयुक्ताः । किंच । ' बहुलमासां ' नदीनामन्यदेवतेषु मन्त्रेषु नैघण्टुकं वृत्तम् अप्रधानम् । ' आश्चर्यमिव प्राधान्येन' । क्वचिदेव नदीदेवतो मन्त्रः स्यात् । 'तत्रेतिहासमाचक्षते ' । यस्मिन्सूक्ते प्रधाना नद्य एव तत्रेमं निदानभूतमितिहासमाचक्षते[3] वदन्त्याचार्याः ।

प्राधान्येन यत्र देवतात्वं तस्य सूक्तस्य निदानभूत इतिहासः।

' विश्वामित्रो ' नाम ' ऋषिः सुदासः पैजवनस्य ' राज्ञः ' पुरोहितो बभूव ' । ' विश्वामित्रः सर्वमित्रः ' । सर्वस्यैव हि स मित्रं सर्वमेव वा तस्य मित्रमिति विश्वामित्रः । ' सर्वम् ' इति किमुक्तं भवति । उच्यते । तद्धि ' संसृतं[4] ' संगतं भवत्येकस्मिन् । ' सुदाः कल्याणदानः[5] ' । तस्य हि नित्यमेव प्रशस्तं दानं भवति । ' पैजवनः पिजवनस्य पुत्रः ' । ' पिजवनः पुनः स्पर्धनीयजवः[6] ' । तस्य हि स्पर्धार्हो जवो वेगः । अथ ' वा अमिश्रीभावगतिर्वा ' । न तस्य मिश्रीभूतपूर्वा गतिरन्यैर्वेगवद्भिरतिशैघ्र्यात् । तस्य पैजवनस्य विश्वामित्रः पुरोहितो बभूव । ' सः ' पौरोहित्योपार्जितं ' वित्तं[7] ' धनं ' गृहीत्वा विपाट्छुतुद्र्योः[8] ' नद्योः ' संभेदं ' संगममागतवान्[9] । यत्र विपाट्छुतुद्र्यौ इतराभिः सिन्ध्वाद्याभिर्नदीभिः संभिन्ने एकीभूते[10] इत्यर्थः । 'अनुययुरितरे' तदनुयायिनस्तस्करा वा । ' स विश्वामित्रः ' तास्तितीर्षुः ' नदीस्तुष्टाव गाधोदकाः ' यूयं ' भवतेति ' एतमर्थं पुरस्कृत्य । कथं पुनस्तुष्टाव । ' अपि द्विवत् ' अपि द्विवचन-

१ घ. ट. ठ. ड. अवनुतेन. २ क. ख. व्ह्यन्त्यो यान्तीति यव्ह्यः. ३ क. ख. ग. ज. °क्षत इति आचा°. ४ क. ख. घ. झ. ट. ठ. ड. °संसृतं भवति संगतमेक° ५ च. कल्याणदाता. ६ ग. ज. स्पर्धं तव्यत्तव्यानीयर इति स्पर्धनीयः शब्दो निःपन्नः । नीयजवो वा । तस्य°. ७ ग. ज. ' वित्तं ' नास्ति. ८ घ. झ. ट. °पाट्शुतु°. ९ क. ख. घ. झ. ट. ठ. ड. संगममागत्यौ आग°. १० च. एकभूते.

विश्वामित्रेण कृता नदीस्तुतिः केषुचिन्मन्त्रेषु द्विवचनसंयुक्ता केषुचिद्बहुवचनसंयुक्ता

संयुक्तैर्मन्त्रैः । 'अपि बहुवत्' बहुवचनसंयुक्तैर्मन्त्रैः । तत्रैवं सति 'यद् द्विवत्' द्विवचनवत् 'तदुपरिष्टात्' चतुर्दशेऽध्याये प्रपर्वतानामित्येतस्यामृचि 'व्याख्यास्यामः' [ निरु० ९ । ३९ ] । 'अथ' पुनः 'एतद्बहुवत्' व्याख्यायते ॥ २४ ॥

---

**रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्तमेवैः । प्र सिन्धुमच्छा बृहती मनीषावस्युरह्वे कुशिकस्य सूनुः [ ऋ० सं० ३ । ३३ । ५ ]॥ उपरमध्वं मे वचसे सोम्याय सोमसंपादिन ऋतावरीर्ऋतवत्य ऋतमित्युदकनाम प्रत्यृतं भवति मुहूर्तमेवैरयनैरवनैर्वा मुहूर्तो मुहुर्ऋतुर्ऋतुरर्तेर्गतिकर्मणो मुहुर्मूढ इव कालो यावदभीक्ष्णं चेत्यभीक्ष्णमभिक्षणं भवति क्षणः क्षणोतेः प्रक्ष्णुतः कालः कालः कालयतेर्गतिकर्मणः प्राभिह्वयामि सिन्धुं बृहत्या महत्या मनीषया मनस ईषया स्तुत्या प्रज्ञया वावनाय कुशिकस्य सूनुः कुशिको राजा बभूव क्रोशतेः शब्दकर्मणः क्रंशतेर्वा स्यात्प्रकाशयतिकर्मणः साधुविक्रोशयितार्थानामिति वा नद्यः प्रत्यूचुः ॥ २५ ॥**

---

अस्यामृचि बहुवचनसंयुक्ता । विश्वामित्रेण नद्य उच्यन्ते पारगमनाय साहाय्यं कुरुतेति

रमध्वं मे वचस इति । त्रिष्टुभ एताः ।. उपरमध्वं मे । उपेत्ययमुपसर्गो मन्त्रस्य मध्यादाकृष्य भाष्यकारेण रमध्वमित्यनेन क्रियापदेन योजितः । उपरमध्वं मे मम वचसे सोम्याय सोमस्य संपादिने । सोमा ह्यनेनास्मद्वचसा देवतानामन्नभूता बहवः संपादिताः । ता यूयमस्मै प्रतिविशिष्टाय वचसे सत्यतार्थं कथं नाम सत्यमिदं स्यादित्येवमर्थमुपरमध्वम् । मन्दवेगा गाधाश्च भवतेत्यभिप्रायः । हे ऋता-

१ च. 'द्विवत्' नास्ति. २ ठ. ड. °स्यामः । इति निरुक्तभाष्ये द्वितीयाध्याये २४ खण्डः. ३ क. ख. २; ग. ३२; च. २१; घ. ट. ठ. ड. ज. अङ्को नास्ति. ४ ड. 'सोमसंपादिने' नास्ति. ५ क. ख. छ. त. द. मूढ इव°. ६ क. ख. द. ३; छ. त. ३२. ७ घ. ट. ठ. ड. मन्त्रमध्यात्. ८ ग. ज. सौम्याय.

वरीः उदकवत्यः । कियन्तं पुनः कालमुपरमध्वम् । मुहूर्तमेवैः । मुहूर्तम् । न च नित्यमेव मन्दवेगतां गाधोदकतां वा प्रार्थये । किं तर्हि । यावदुत्तरेयमहं तावदेवेत्यभिप्रायः । एवैः एभिरुदकैरतिप्रवृद्धैरुपरमध्वम् । 'अवनैर्वा' । कामैरेतैरस्मत्प्रार्थनाविशेषैरुत्तरेम गृहान्गच्छेम वित्तं प्रापयेमेत्येवमादिभिर्निमित्तैः प्रार्थ्यमाना अस्माभिरुपरमध्वम् । अथ 'वा अयनैः' चित्रैर्गमनैर्वेगवद्भिर्यैर्यूयमभिप्रवृत्तास्तैरुपरमध्वं मुहूर्तम् । यदैवमविशेषेणोच्यमाना न शुश्रुवुस्तदैकामुद्दिश्य प्रवर्तते[1] वक्तुम् । प्रसिन्धुमच्छ । अच्छ अभेः स्थाने । अह्वे इत्येतत्पदमाकृष्य प्राभिह्वयामीत्येवं योजितं भाष्यकारेण । किं प्राभिह्वयामि । सिन्धुम् । केन । बृहती मनीषा । बृहत्या[2] मनीषया मनस ईषया मनःपूर्विकया स्तुत्येत्यर्थः । अथवा प्रज्ञया । कमर्थमिच्छन्प्राभिह्वयामि । अवस्युः अवनमिच्छन् । गमनमित्यर्थः । कुशिकस्य सूनुरहमिति पितुरपि गौरवान्मम गौरवमेताः कुर्युरिति समस्तार्थः ।

अथैकपदनिरुक्तम् । 'ऋतमित्युदकनाम' । तद्धि देशं देशं 'प्रत्यृतं भवति' । गतमित्यर्थः । 'मुहूर्तो मुहुर्ऋतुः' । एवं विगृह्य ऋतुशब्दं तावन्निर्ब्रवीति । 'ऋतुरर्तेः' गत्यर्थे वर्तमानस्य । स हि गच्छत्येव । अधुना मुहुःशब्दं निर्ब्रवीति 'मुहुर्मूढ[3] इव कालः' अल्पत्वात् । मूढ इव यः काल ऋतुः स मुहूर्त इत्युच्यते । किंच । 'यावत्' एव च[4] 'अभीक्ष्णं' तावान्मुहूर्तः । यावांश्च मुहूर्तस्तावदेवाभीक्ष्णमित्यर्थः । सारूप्यप्रसक्तं निरुच्यते । 'अभीक्ष्णमभिक्षणं[5] भवति' । तद्धि क्षणमाभिमुख्येन स्थितं भवति । 'क्षणः क्षणोतेः' हिंसार्थस्य [ धा० ८ । ३ ] । स हि 'प्रक्ष्णुतः' प्रकर्षेण हिंसितः 'कालः' अल्पत्वात् । 'कालः कालयतेर्गतिकर्मणः' । स हि सर्वाण्येव भूतानि कालयति । क्षयं नयतीत्यर्थः । 'कुशिको राजा' इति[6] तत्त्ववचनम् । 'क्रोशतेः' वा शब्दार्थस्य [ धा० १ । ८५६ ] । स हि साध्वेव क्रियतामित्येवं नित्यकालमेव क्रोशयति । 'क्रंशतेर्वा स्यात्' प्रकाशयत्यर्थस्य । स हि प्रकाशयिता साधूनां धर्माणामात्मनैव प्रकाशः[7] । अथ 'वा' साधुषु ब्राह्मणेषु 'विक्रोशयितार्थानां' दातेत्यर्थः ।

१ क. ख. घ. झ. ट. ठ. ड. प्रवृते. २ ग. ज. बृहत्या महत्या. ३ क. ख. घ. झ. मूल्ह इव; ट. मूळ्ह इव. ४ क. ख. घ. झ. ट. ठ. ड. 'च' नास्ति. ५ घ. झ. ट. ठ, ड. अभीक्षणमभि°. ६ घ. झ. ट. ठ, ड. 'इति' नास्ति. ७ क. ख. घ. झ. ट. ठ. ड. प्रकाशकः.

एवमुक्तवन्तं 'नद्यः प्रत्यूचुः' ॥ २५ ॥[1]

---

इन्द्रो॑ अ॒स्माँ अ॑रद॒द्वज्र॑बाहु॒रपा॑ह॒न्वृ॒त्रं प॑रि॒धिं न॒दी॒नाम् । दे॒वो॑ऽनयत्सवि॒ता सु॑पा॒णिस्तस्य॑ व॒यं प्र॑स॒वे या॑म उ॒र्वीः [ ऋ० सं० ३ । ३३ । ६ ] ॥ इन्द्रो अस्मानरदद्वज्रबाहू रदतिः खनतिकर्मापाहन् वृत्रं परिधिं नदीनामिति व्याख्यातम् । देवोऽनयत्सविता सुपाणिः कल्याणपाणिः पाणिः पणायतेः पूजाकर्मणः प्रगृह्य पाणी देवान्पूजयन्ति । तस्य वयं प्रसवे याम उर्वीः । उर्व्य ऊर्णोतेर्वृणोतेरित्यौर्णवाभः प्रत्याख्यायान्तत आशुश्रुवुः ॥ २६ ॥[2]

---

इन्द्रो अस्माँ अरददिति । अरदत् अखनदित्यर्थः । 'रदतिः खनतिकर्मा'[3] । कथं पुनरखनत् । अपाहन्वृत्रम्[4] । अपोऽवधीन्मेघम् । परिधिं नदीनां परिधारयितारं नदीनां नदनानामपाम् । स हि निपतन्तीरपो निरुणद्धि । तमिन्द्रो वज्रेण हन्ति । तस्मिन्हते पृथिवीं प्राप्यापो यथानिम्नानुसारिण्यः खातानि कुर्वत्यो[5] वहन्ति । तैः खातैर्वयं गच्छामः । एवं कृत्वास्मानिन्द्रोऽरदत् । एवं च कृत्वा स एव चेन्द्रो[6] देवः सविता सर्वार्थप्रसविता[7] वर्षद्वारेणास्माननयत्समुद्रम्[8] । सुपाणिः प्रशस्तपाणिरित्यर्थः । यत एवं[9] सोऽस्माकं खनिता नेता चातस्तस्येन्द्रस्य प्रसवे अनुज्ञायामादेशे वर्तमाना वयं यामो गच्छामः । उर्वीः ऊर्णुवत्यः संभजमाना वा तानि तानि देशान्तराण्यम्भोभिः । सोऽस्माकमीश्वरः । स एवास्मानाज्ञापयितुमर्हति[10] न त्वमित्यभिप्रायः ।

(तासां प्रत्यादेशरूपे प्रतिवचनम्)

'पाणिः पणायतेः' [ धा० १ । ४४० ] पूजार्थस्य । 'प्रगृह्य पाणी' संयतौ कृत्वा ततो 'देवान्पूजयन्ति' इति ।

---

१ क. ख. ३; ग. २३; घ. झ. ट. च. ज. अङ्को नास्ति; ठ. ड. °त्यूचुः ॥ इति निरुक्तभाष्ये द्वितीयाध्याये पञ्चविंशतिः खण्डः. २ क. ख. ट. ४; छ. त. २४. ३ घ. झ. ट. कर्मा । वज्रबाहुः । वज्रयुक्तो बाहुर्यस्यासौ । कथं°. ४ ग. ज. अघ्नन्; च. अहन्. ५ क. ख. घ. ट. ठ. ड. च. कुर्वन्त्यो. ६ क. ख. घ. झ. ट. ठ. ड. 'च' नास्ति. ७ घ. ज. ट. ठ. ड. सर्वार्थस्य प्रस°. ८ घ. वर्षाद्वारे°; ट. वर्षद्वारेर्ष°. ९ क. ख. ड. यत एव; ग. ज. य एव. १० क. ख. एवस्मान्; घ. झ. ट. ठ. ड. एव चास्मान्

'प्रत्याख्याय' एवं तमृषिम् 'अन्ततः' सूक्तस्य अन्ततः अन्तेऽनयर्चा 'आशुश्रुवुः' । ता नद्यः श्रुतवत्य इत्यर्थः । तदा च श्रुतं भवति यदा तद्वचः क्रियते । श्रूयमाणमपि हि तन्नैव श्रुतं भवति यन्न क्रियते ॥ २६ ॥

---

आ ते कारो शृणवामा वचांसि ययाथ दूरादनसा रथेन । नि ते नंसै पीप्यानेव योषा मर्यायेव कन्या शश्वचै ते [ ऋ० सं० ३ । ३३ । १० ] ॥ आशृणवाम ते कारो वचनानि याहि दूरादनसा च रथेन च निनमाम ते पाययमानेव योषा पुत्रं मर्यायेव कन्या परिष्वजनाय निनमा इति वाश्वनामान्युत्तराणि षड्विंशतिस्तेषामष्टा उत्तराणि बहुवदश्वः कस्मादश्नुतेऽध्वानं महाशनो भवतीति वा तत्र दधिक्रा इत्येतद्दधत्क्रामतीति वा दधत्क्रन्दतीति वा दधदाकारी भवतीति वा तस्याश्ववद्देवतावच्च निगमा भवन्ति तद्यद्देवतावदुपरिष्टात्तद्व्याख्यास्यामोऽथैतदश्ववत् ॥ २७ ॥

---

आ ते कारो शृणवाम । आभिमुख्येनावस्थिताः सत्यः श्रृणवाम हे कारो स्तोमानां कर्तः । किमाश्रृणवाम । वचांसि वचनानि । श्रुतानि चैतानि तावकानि वचांसि यतो ब्रूमः । ययाथ याहि त्वम् अनसा शकटेन सह रथेन च । कस्मात्पुनरेवमादरवत्यो ब्रूमो ययाथेति । इतो यस्माद्दूरादायातस्त्वं परिश्रान्तस्तस्मात्कारुण्यं नस्त्वयि । तेन वयमेता नि ते नंसै 'निनमाम ते' नीचैर्नमाम ।

पारगमनायानुमतिः साहाय्याश्रावणं च

१ क. ख. तत्; घ. झ. ट. ठ. ड. ततः. २ च. अन्ततः. ३ ग. ज. प्रतिशुश्रुवुः च. प्रतिशुश्रुवुः° आ. ४ क. ख. घ. झ. ट. 'च' नास्ति. ५ क. ख. २६; ग. २३; च. २९; घ. झ. ट. ज. अङ्को नास्ति. ६ क. ख. द. ५; छ. त. ३५. ७ ठ. ड. °वामेति । आभि. ८ क. ख. घ. झ. ट. अतो. ९ ग. ज. शकटेन च सह. १० क. ख. घ. झ. ट. याहीति; ग. ज. यथाययेति; च. यया । ययेति.

गाधोदका भवामेत्यर्थः । कथं पुनर्निनमाम । पीप्यानेव योषा । पाययमानेव योषा पुत्रं यथा निनमेदेवं वयं तव निनमाम । एवमुक्त्वा पुत्रोपमया कदाचिदयं क्रोधमियादिति मन्वानाः सत्यः पतिकन्यासंबद्धा[1]मन्यामुपमामुपाददिरे । मर्यायेव कन्या शश्वचै ते । मर्याय मनुष्याय कन्या
५ नवोढा शश्वचै ते परिष्वैजनाय[2] । कथं नाम परिष्वजेत मामयमित्यभिप्रायेण यथा सा निनमेदेवं वयं तव निनमाम । निनभै इति वा । यदि वा निनमाम इत्येवं [3]विपरिणामो निनंसै इत्येतस्य पदस्याथवा निनमै इति ।

'अश्वनामान्युत्तराणि षड्विंशतिः'। अश्वस्य नामान्यश्वनामानि।
१० उत्तराणि प्रकृतेभ्यो नदीनामभ्यः । अब्जा एव ह्यश्वाः । एवं ह्युक्तम् । 'अप्सु जाता अश्वाः स्वादेवैनान्योनेर्जनयन्ति' इति । तस्मान्नदीनामभ्य उत्तराण्यश्वनामानि । कियन्ति पुनस्तानि । षड्विंशतिः । षडधिका विंशतिः । कतमानि पुनस्तानि । 'अत्यः हयः अर्वा' इत्येवमादीनि । अतति गच्छतीत्यत्यः । हयति गच्छैति[4] हन्ति वाध्वानमिति हयः । ईरण-
१५ वानर्वा । गमनवानित्यर्थः । एवमादि । 'तेषाम्' अश्वनाम्नामष्टौ यानि 'उत्तराणि' अव्यथयै[5] इत्येवमादीनि तानि बहुवचनसंयुक्तानीत्यर्थः । आह । 'अश्वः कस्मात्' । उच्यते । स हि 'अश्नुतेऽध्वानम्' । व्याप्नोतीत्यर्थः । 'महाशनो वा भवतीति' । स हि बहु भुङ्क्ते । 'तत्र' तस्मिन्षड्विंशकेऽश्वाभिधानगणे 'दधिक्रा इत्येतत्' पदं संदिग्धम् ।
२० तत्पुनरेतत् 'दधत्क्रामतीति' । अथ 'वा' धारयन्नयमश्वारोहं क्रामतीति दधिक्राः । अथ 'वा' धारयन्नयमश्वारोहं[6]

दधिक्रा इत्येतत्संदिग्धं पदम् 'क्रन्दति' शब्दं करोति 'इति' दधिक्राः । अथ 'वा' दधद्धारयन्नैश्वारोहम् 'आकारी' आकारवान् 'भवतीति' दधिक्राः । स ह्यधि-
२५ रूढेऽश्वारोह आकुञ्चितग्रीवो विप्रुष्पितसर्वगात्र आकृतिमान् भवति ।

'तस्य' दधिक्राशब्दस्य 'अश्ववत्' अश्वसंयुक्ताः 'देवतावत्'

---

१ च. संबन्धाबद्धाम°. २ ग. च. ज. परिस्वजनाय. ३ क. ख. घ. झ. ट. ठ. ड. 'वि' नास्ति; ग. ज. °त्येव विपरि°. ४ क. ख. घ. झ. ट. ठ. ड. गच्छतीति. ५ ग. ज. अव्ययः; च. व्यथयः. ६ क. ख. घ. झ. ट. ठ. ड. °रयन्नयमश्वा°.
३० 

तस्याश्ववद्देवतावच्च निगमाः

देवतासंयुक्ताः 'च निगमा भवन्ति' । 'तत्' एतदुच्यते । 'यद्देवतावत्' अस्य दधिक्राशब्दस्य 'तदुपरिष्टात्' पञ्चदशेऽध्याये 'आ दधिक्राः शवसा' इत्यस्यामृचि 'व्याख्यास्यामः' [ निरु० १० । ३१ ] । 'अथ' पुनर्यत् 'अश्ववत्' अस्य तत् 'एतत्' व्याख्यायते ॥ २७ ॥[1]

---

**उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि । क्रतुं दधिक्रा अनु संतवीत्वत्पथामङ्कांस्यन्वापनीफणत् [ ऋ० सं० ४ । ४० । ४ ] ॥ अपि स वाजी वेजनवान्क्षेपणमनु तूर्णमश्नुतेऽध्वानं ग्रीवायां बद्धो ग्रीवा गिरतेर्वा गृणातेर्वा गृह्णातेर्वापिकक्ष आसनीति व्याख्यातं क्रतुं दधिक्राः कर्म वा प्रज्ञां वा । अनु संतवीत्वत् । तनोतेः पूर्वया प्रकृत्या निगमः । पथामङ्कांसि पथां कुटिलानि पन्थाः पततेर्वा पद्यतेर्वा पन्थतेर्वाङ्कोऽञ्चतेरापनीफणदिति फणतेश्चर्करीतवृत्तं दशोत्तराण्यादिष्टोपयोजनानीत्याचक्षते साहचर्यज्ञानाय ज्वलतिकर्माण उत्तरे धातव एकादश तावन्त्येवोत्तराणि ज्वलतो नामधेयानि नामधेयानि ॥ २८ ॥**[2]

---

उत स्य वाजीति । गौतमपुत्रस्य वामदेवस्यार्षम्[3] । जगती । वाजपेये वाजियुक्तं रथमधिरुह्य यजमानोऽनुवाकं जपति तत्रैषा [ तै० सं० १ । ७ । ८ ] । उत स्यः अपि सः इत्यर्थः । वाजी वेजनवान् । 'ओविजी भयचलनयोः' [ धा० ७ । २३ ] । भयवान् । परेभ्यो भयदाता । परेषां हि तं दृष्ट्वा भयमुत्पद्यते । चलनवान् वा । स हि नित्यं चलनशीलः । क्षिपणिं क्षेपणमनु कशाघातमनु तुरण्यति तूर्णमश्नुतेऽध्वानम् । व्याप्नोतीत्यर्थः । अपि कशाप्रहारमनु तुरण्य-

अस्यामृच्यश्ववत्प्रयोगः

---

१ क. ख. ५; ग. ३५[4]; व. ट. ठ. ड. च. ज. अङ्को नास्ति. २ क. ख. द. ६; छ. त. ३६. ३ क. ख. घ. झ. ट. ठ. ड. °वस्येयमार्षम्. ४ घ. झ. ट. ठ. ड. ३०.

त्यप्यनाहत एवेत्यपिशब्दः । किंच । ग्रीवायामुरसि वध्रेण[1] बद्धः अपि कक्षे कक्षायाम् । अप्यासनि[2] मुखे खलीनेन बद्धः । एवमनेकेषु स्थानेषु बद्धस्तथापि तुरण्यत्येव । अन्यो ह्येकस्मिन्नपि प्रदेशे बद्धः स्पन्दितुमपि[3] न शक्नोति किमुत त्वरितुम् । किंच क्रतुमात्मीयं गमनकर्म प्रज्ञां वाश्वारोहस्य संततनोति । काममभिप्रेतेनार्थेन शीघ्रगामित्वाद्दधिक्रा अश्वोऽनुसंतनोतीत्यर्थः । किंच । यान्यपि च कानिचित्पथां कुटिलानि[4] मार्गाणाम् अङ्कांसि अञ्चितानि कुटिलानि तान्यपि सन्त्यनुलोमानीव[5] कुर्वन्नाशुगामित्वादाभिमुख्येन पुनः पुनर्वा भृशं वा फणति गच्छतीत्यर्थः । एष समस्तार्थः ।

अथैकपदनिरुक्तम् । 'ग्रीवा गिरतेर्वा' गिलनार्थस्य [ धा० ६ । १२९ ] । तया हि गिलत्यन्नम्[6] । गृणातेर्वा शब्दार्थस्य [धा० ९ । २६] । तया हि शब्दो गीर्यते । गृह्णातेर्वा । तया ह्युदकादि गृह्यते तस्यामेव वा गृह्यते यः शृङ्खलीक्रियते । 'अनुसंतवीत्वत्' इति 'तनोतेः' धातोः 'पूर्वया प्रकृत्या निगमः' । षड्विधो हि धातुः । 'प्रकृत्यन्तः सनन्तश्च यङन्तो यङ्लुगेव च । ण्यन्तो ण्यन्तसनन्तश्च[7] षड्विधो धातुरुच्यते' ॥ आसां षण्णां धातुप्रकृतीनां या पूर्वा प्रकृतिस्तयैष निगमो न सन्प्रकृतीत्यादीनामन्यतमया । 'पन्थाः पततेर्वा [धा० १ । ८७०] पद्यतेर्वा [धा० ४ । ६३] पन्थतेर्वा[8]' [ धा० १०।४२ ] । त्रयोऽपि ह्येते गत्यर्थाः । एतेषां[9] मन्यतमस्य । अङ्कोऽञ्चतेः गत्यर्थस्य [ धा० १ । ८८७ ] । 'आपनीफणदिति फणतेः' [ धा० १।८४६ ] गत्यर्थस्य चर्करीतान्तत्वेन[10] वृत्तम् ।

षट्प्रकारो धातुः। अनुसंतवीत्वदिति पूर्वया प्रकृत्या निगमः

दश यानि 'उत्तराणि' नामानि तान्यश्वनामसंबन्धेनैवोच्यन्ते । तान्यपि ह्यश्वानामेव[11] । तानि पुनः 'आदिष्टोपयोजनानीति' एवम् 'आचक्षते' आचार्याः । इदमिन्द्रस्याश्वानां नामेदमग्नेरिदमादित्यस्येत्येवमादिष्टोपयोजनानि । कतमानि पुनस्तानि । 'हरी

आदिष्टोपयोजनान्यश्वनामानि

१ ग. ज. वरत्रद्व्रण; घ. झ. ट. ठ. ड. वरत्रेण. २ क. ख. घ. झ. ट. ठ. ड. अथासनि. ३ क. ख. घ. झ. ट. ठ. ड. चलितु°. ४ क. ख. घ. झ. ट. ठ. ड. 'कुटिलानि' नास्ति; ग. ज. °निचित् । यथा कुटिलानि मार्गा°. ५ क. ख. घ. झ. ठ. ठ. ड. सन्ति तान्यप्यनुलो°. ६ ग. च. ज. गिलतेऽन्नम्. ७ घ. ट. °सनन्त्यश्च. ८ ग. च. ज. पन्थतेर्वा पद्यतेर्वा. ९ क. ख. घ. ट. ठ. ड. एषां. १० च. चर्करीतान्तेन. ११ क. ख. घ. झ. ट. ठ. °नामेवेति.

इन्द्रस्य ' इत्येवमादीनि । हरी हरितवर्णाविन्द्रस्याश्वौ । रोहितावग्नेः[1] । रोहितवर्णावित्येवमादि ।

'ज्वलतिकर्माण उत्तरे धातव एकादश ' । य एव ह्यश्ववन्तो भवन्ति त एव ज्वलन्तीव तेजसा । ततोऽश्वनामभ्य उत्तरे ज्वलत्यर्था धातवः । कतमे पुनस्त इति । ' भ्राजते भ्राशते[2] भ्राश्यति[3] ' इत्येवमादयः । ५

' तावन्त्येवोत्तराणि ' ' जमत् कल्मलीकिनं जञ्झणाभवन्[4] ' इत्येवमादीनि ' ज्वलतो नामधेयानि ' । जमति गच्छतीति जमत् । कमहं मलिनं शोधयामीति कल्मलीकिनम् । जनं[5] जनं भावयतीति ' जञ्झणाभवन्[6] ' इत्येवमादि । ज्वलतो नामधेयानीत्यध्यायपरिसमाप्त्यर्थो द्विरभ्यासः ॥ २८[7] ॥ १०

इति[8] ऋज्वर्थायां निरुक्तवृत्तौ जम्बुमार्गाश्रमवासिन[9] आचार्यभगवद्दुर्गस्य[10] कृतौ सप्तमोऽध्यायः[11] ॥ ७ ॥

---

**अथ[1] निर्वचनमो[2] घो[3] राज्ञो विद्या[4] हवा अथा[5] तोऽनुक्रमिष्यामो वृक्षे[6] वृक्षेत[7] वांवास्तूनिर्थ[8] ईचकारायं[9] सं शिङ्क्ते हिरण्य[10] नामा[+] न्यार्ष्टिषेणो[11] यद्देवापिः[12] साधारणानि[13] स्वरादित्यो[14] रश्मिनामा[15] न्यातिष्ठन्तीनां[16] दास[17] पत्नी[18] रात्रिनामानि[19] दृश्रेष्ठं[20] रुशद्वत्साहश्वे[21] कृष्णं देव[22] नामानेवाङ्[23] नामानीयं[24] शुष्मेभीरमध्व[25] न इन्द्रो[26] अस्माना[27] तेक्षारो[28] तस्यवाज्यष्टाविंशतिः ॥** १५

**इति निरुक्ते पूर्वषट्के द्वितीयोऽध्यायः ॥ २ ॥** २०

---

१ क. ख. घ. झ. ट. ठ. ड. रोहितोऽग्नेः. २ घ. झ. ट. भ्लाशते. ३ ग. ज. भ्लाश्यते; घ. झ. ट. च. भ्राश्यते. ४ च. °भवम्. ५ क. ख. घ. ट. ' जनं ' सकृदेव. ६ ग. च. ज. भवम्. ७ क. ख. ७; ग. ३६; घ. झ. ट. ठ. ड. च. ज. अङ्को नास्ति. ८ घ. झ. ट. 'इति' नास्ति. ९ क. ख. घ. झ. ट. ठ. ड. °श्रमनिवा°. १० ग. च. ज. °दुर्गकृतौ. ११ घ. झ. ठ. ठ. ड. च. °ध्यायः समाप्तः. + ङ. °नामान्युत्तराण्यार्ष्टि°. २५

# अथ तृतीयोऽध्यायः ।

## तत्र प्रथमः पादः ।

**ॐ । कर्मनामान्युत्तराणि षड्विंशतिः कर्म कस्मात्क्रियत इति सतोऽपत्यनामान्युत्तराणि पञ्चदशापत्यं कस्मादपततं भवति नानेन पततीति वा तद्यथा जनयितुः प्रजैवमर्थीये ऋचा उदाहरिष्यामः ॥ १ ॥** ५

'कर्मनामान्युत्तराणि षड्विंशतिः' । कर्मणो नामानि कर्मनामानि[1] । १० उत्तराणीति प्रकृतेभ्यो ज्वलन्नामधेयेभ्यः[2] । ज्वलत्येव ह्यग्नौ कर्माणि क्रियन्त इति ज्वलन्नामभ्य उत्तराणि कर्मनामानि । कियन्ति पुनस्तानि । 'षड्विंशतिः'[3] । षडधिका विंशतिः षड्विंशतिः । कतमानि पुनस्तानि । 'अपः अप्नः दंसः' [ निघ० २ । १२ ] इत्येवमादीनि । आप्यते पुरुषेणैतदाप्नोति वा पुरुषमेतदित्यपः । अप्नः इत्येतदप्याप्नोतेरेव । एवमादि १५ योज्यम् । आह । 'कर्म कस्मात्' । उच्यते । 'क्रियत इति सतः' । सत इति कारकावधारणार्थमिति ।

'अपत्यनामान्युत्तराणि पञ्चदश' । अपत्यस्य नामान्यपत्यनामानि । उत्तराणीति प्रकृतेभ्यः कर्मनामभ्यः । सर्वकर्मणां ह्यपत्योत्पादनकर्मैव प्रधानमृणापाकरणद्वारेणेति कर्मनामभ्य उत्तराण्यपत्यनामानि । कियन्ति २० पुनस्तानि । पञ्चदश । कतमानि पुनस्तानि । 'तुक् तोकम् तनयम्'[4] [ निघ० २ । २ ] इत्येवमादीनि । तुक् तकतेर्धातोस्तुज्यतेर्वा[5] । तोकं तुद्यतेः । तनयं तनोतेरिति वक्ष्यति [ निरु० १० । ७ ] । आह । 'अपत्यं कस्मात्' । उच्यते । 'अपततं भवति' । पितुः सकाशादपेत्य पृथगिवै[6] ततं भवति । अथ 'वानेन' जातेन सता पितरो नरके 'न २५ पतन्तीति' अपत्यम् ।

अत्र पुनर्विवदन्ते । द्वयोः संनिपाते किं क्षेत्रिणोऽपत्यमुत बीजिन

१ ग. ज. 'कर्मनामानि' नास्ति. २ ग. च. ज. ज्वलतिनाम°. ३ क. ख. झ. 'षड्विंशतिः' नास्ति. ४ ठ. ड. तनयः. ५ घ. ट. °स्तुजजतेः; च. °स्तुज्यतेः° ज्य. ६ ग. ज. °थगेव. ३०

अपत्यं क्षेत्रिणो बीजिनो वेति प्रश्नः

इति । ' तत् ' एतदुच्यते । ' यथा जनयितुः ' एव ' प्रजा ' भवतीति ' एवमर्थीये ऋचावुदाहरिष्यामः ' ॥ १ ॥

---

५ **परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम । न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मा पथो वि दुक्षः [ ऋ० सं० ७।४।७ ] ॥ परिहर्तव्यं हि नोपसर्तव्यमरणस्य रेक्णोऽरणोऽपार्णो भवति रेक्ण इति धननाम रिच्यते प्रयतो नित्यस्य रायः पतयः स्याम । पित्र्यस्येव १० धनस्य । न शेषो अग्ने अन्यजातमस्ति । शेष इत्यपत्यनाम शिष्यते प्रयतोऽचेतयमानस्य तत्प्रमत्तस्य भवति मा नः पथो विदूदुष इति तस्योत्तरा भूयसे निर्वचनाय ॥ २ ॥**

---

' परिषद्यं हि ' 'न हि ग्रभाय' इति चैते त्रिष्टुभौ । वसिष्ठाग्निसंवादे वसिष्ठेन हतपुत्रेणाग्निरभ्यर्थितः[3] पुत्रं मे देहीति । १५

क्रीतकक्रित्रिमादीनि नैव स्वापत्यानि

तेन किलासौ प्रत्युक्तः क्रीतकक्रित्रिमदत्तकादीनां पुत्राणामन्यतमं कुरुष्व पुत्रमिति । स एवमुक्त एताभ्यामृग्भ्यामन्यजान्पुत्रान्निन्दन्नौरसं पुत्रं ययाचे। परिषद्यं० वि दुक्षः इति। परिषद्यं हि परिहरणीयं परित्याज्यं परिहर्तव्य- २० मित्यर्थः । किं पुनस्तत् । अरणस्य रेक्णः । अरणस्यापगतार्णस्यापगतोदकसंबन्धस्य परकुलजस्य रेक्णो यदपत्याख्यं धनं तत्परिहर्तव्यम् । न पुत्रत्वेन परिकल्पयितव्यमित्यर्थः । न हि तत्पुत्रत्वेन कल्प्यमानमपि पुत्रकार्येष्ववतिष्ठते परकीयत्वात् । यत एवमतो ब्रूमः । नित्यस्य रायः पतयः स्याम । पित्र्यस्येव धनस्य । यथा हि यदेव पित्र्यं धनं पुत्रत्वे भवति तस्यैव २५ ह्युपर्यगौणं स्वामित्वं भवत्येवं यदेव स्वयंजातमपत्यं भवति तदेव मुख्यं

---

१ क. ख. ग. ज. ' इति ' नास्ति. २ ठ. ड. ॥ १ ॥ इति निरुक्तवृत्तौ तृतीयाध्याये प्रथमः खण्डः. ३ ग. ज. °रभ्यर्चितः. ४ च. क्रीतकृत्रि°. ५ घ. ट. सर्वा ऋक् पठ्यते. ६ क. ख. घ. झ. ट. ठ. ड. ' परिहर्तव्यं ' परिहरणीयमित्यस्य २९ प्राग्वर्तते. ७ क. ख. °कुलजातस्य; ट. °कुलजैस्य° जात.

स्वबीजजातमेव स्वापत्यं नान्यबीजजातम्

भवति नेतरत्क्षेत्रजं वा[1] क्रीतकं वा। यत एवमतो ब्रूमः। यदेव नित्यमात्मीयमगौणं स्वयमुत्पादितं पुत्राख्यं रायो[2] धनं तस्यैव वयं पतयः[3] पालयितारः स्याम। मा परकीयस्येत्य[4]भिप्रायः। कस्मात्पुनरेवं ब्रूमहे। इतो यस्मान्न शेषो अग्ने[5] अन्यजातमस्ति । नास्ति शेषो नास्त्यपत्यमन्येन जातं हे अग्ने। य एव जनयति तस्यैव हि तद्भवति नेतरस्येत्यभिप्रायः। अचेतानस्य य एव ह्यचेतयमानो भवत्यविद्वान्प्रमादी तस्यैवाचेतनस्य प्रमत्तस्याश्रुतवतो धर्मं[6] परितोषमात्रं भवति ममेदमपत्यमिति। नापत्यकार्येऽवतिष्ठते। यत एवमतो ब्रूमः। मा पथो विदुक्षः। मास्मानेतस्मात्पितृपितामहप्रपितामहानुसंततात्पथो मार्गादेन केनचित्प्रत्याख्यानद्वारेण विदूदुषस्त्वम्[7]। देहि नः पुत्रमौरसमित्यभिप्रायः। इति [8]समस्तार्थः।

अथैकपदनिरुक्तम्। 'अरणोऽपार्णः'। अपगतोदकसंबन्ध इत्यर्थः। 'रेक्ण इति धननाम'। तद्धि 'रिच्यते' अतिरिच्यत इतो लोकादमुं लोकं 'प्रयतो' म्रियमाणस्येत्यर्थः। 'शेष इत्यपत्यनाम'। तद्धि 'शिष्यते' इहैव लोकेऽवतिष्ठते पितुरमुं लोकं 'प्रयतो' गच्छत इत्यर्थः।

एवमस्यामृचि 'न शेषो अग्ने अन्यजातमस्ति' इत्यनेन विशेषलिङ्गेनोपपन्नमेतद्भवति जनयितुरेव प्रजा भवति न क्षेत्रिणो नापि क्रेतुरन्यस्य वा कस्यचिदिति। एवं चैष शब्दार्थ उपपद्यते यस्मादेवापेत्य ततं भवति तस्यैवापत्यमिति । अनेनैव [9]चापत्यशब्दनिर्वचनप्रसङ्गेनैष मन्त्रो व्याख्यातः। उत्तरं च सावशेषमपत्यशब्दे[10]प्रसक्तानुप्रसक्तमेवोच्यते। 'तस्योत्तरा भूयसे निर्वचनाय' ॥[11] २ ॥

---

१ च. 'वा' नास्ति; ठ. ड. वा क्रीतं वा. २ ट. रायो° राः. ३ ग. ज. पतयः' पालयितार इत्यस्य पश्चाद्वर्तते. ४ घ. झ. ठ. ड. °स्येत्यर्थः; ट. °स्येत्यर्थः° भिप्रायः. ५ सर्वेषु पुस्तकेषु विरामः 'जातम्' इत्यस्य पश्चाद्वर्तते नात्र. ६ क. ख. धर्मात्; घ. झ. ट. ठ. ड. धर्मान्. ७ क. ख. घ. झ. ट. ड. °दुषः। त्वं देहि. ८ ठ. मन्त्रार्थः. ९ च. 'च' नास्ति. १० क. ख. घ. झ. ट. ठ. ड शब्दे प्र°. ११ ठ. ड. इति २ निरुक्तवृत्तौ तृतीयाध्याये द्वितीयः खण्डः.

न हि ग्रभायारणः सुशेवोऽन्योदर्यो मनसा मंतवा उं । अधा चिदोकः पुनरित्स एत्या नो वाज्यभीषाळेतु नव्यः [ ऋ० सं० ७ । ४ । ८ ]॥ न हि ग्रहीतव्योऽरणः सुसुखतमोऽप्यन्योदर्यो मनसापि न मन्तव्यो ममायं पुत्र इत्यथ स ओकः पुनरेव तदेति यत आगतो भवत्योक इति निवासनामोच्यत ऐतु नो वाजी वेजनवानभिषहमाणः सपत्नान्नवजातः स एव पुत्र इत्यथैतां दुहितृदायाद्य उदाहरन्ति पुत्रदायाद्य इत्येके ॥ ३ ॥

---

न हि ग्रभायेति । न हि ग्रहीतव्यो नात्मीयः कर्तव्यः पुत्रो ममायमित्यनेनाभिप्रायेण । कः पुनरसौ नात्मीयः कर्तव्यः । अरणोऽपार्णोऽपगतोदकसंबन्धोऽन्यकुलजः । यद्यपि सुशेव एव स्यात्सुखतमः परिचरिता हितैषी तथाप्यन्योदर्योऽन्येनोदीरिताद्रेतसो जातोऽन्यजायोदरसंभूतो वा । यो हि स्वस्यां जायायां संभवति स स्व एवोदरे संभूतो भवति । 'अर्धो ह वा एष आत्मनो यज्जायेति विज्ञायते [ शत० ब्रा० ५ । २ । १ । १० ] । तस्माद्योऽन्यजायोदरसंभूतः स मनसापि न मन्तव्यो ममायमिति किं पुनः पुत्रत्वे परिकल्पयितव्य इति । किं कारणं मनसापि न मन्तव्य इति । अधा चिदोकः पुनरित्स एति । अधशब्दोऽथशब्दस्यार्थे वर्तते । स च हेत्वर्थः । यस्मादोकः स्वं निवासस्थानं स्वं वंशं बहुनापि कालेन स एति तद्वंश्य एव भवति तस्मादपुत्र एवासौ । यत एवमतो ब्रवीमि । आ नो वाज्यभीषाळेतु नव्यः । ऐतु आगच्छतु नो वाजी वेजनवान्परेभ्यो भयदाता अभीषाट् अभिषहमाणः अभिभवन्

(अन्यजायोदरसंभूतं स्वापत्यमिति न कदापि मन्तव्यम्)

(तादृशमपत्यं स्वं वंशमेव गच्छति)

१ क. ख. छ. त. द. °षालेतु. २ क. ख. द. °तव्यो अर°; त°. तव्यो अर°. ३ क. ख. छ. त. द. °ममायमित्यथ°. ४ क. ख. ग. ज. व. झ. ट. नात्मीयीकर्त°. ५ ठ. ड. °चरता. ६ व. झ. ट. ठ. ड. स्वस्य. ७ च. °शब्दार्थे. ८ क. ख. ग. च. ज. घ. °षालेतु. ९ ग. ज. ठ. ड. एतु.

सपत्नान् नव्यो नवजातः । शिशुरित्यर्थः । स एव पुत्र आगच्छतु । किं नः परकीयैः पुत्रैः संकल्पितैरित्यर्थः ।

'अथैतां दुहितृदायाद्य उदाहरन्ति' । इदमुक्तमपत्यं यस्मात्पितुः सकाशात्ततं भवति तस्मादपत्यमिति । तदिदमुभयोरपत्यत्वं[1] प्राप्नोति दुहितुः पुत्रस्य च । दुहिताऽपि ह्यपत्यैव तता भवति पितुः सकाशात् । तत्रैवं सत्युभयोर्दुहितृपुत्रयोरपत्यकार्याणि दायाद्यादीनीत्य[2]विशेषेण प्राप्नुवन्ति । तदिदं विचार्यते । तदधिकारार्थोऽयमथशब्दः । एतामृचं शासद्वह्निरित्यादि या वक्ष्यमाणा तां दुहितृदायाद्येऽर्थे उदाहरन्ति धर्मविदः । अस्यामृचि वक्ष्यमाणायां दुहितुरपि दायाद्यत्वमस्तीति दृश्यते । पुत्रदायाद्य इत्येके । एके पुनर्धर्मविदो मन्यन्ते यत्पैतृकं वित्तं तत्पुत्रस्यैव दायाद्यं न दुहितुरिति । यथा दुहितापि दायाद्यमर्हति तथेयमृ[3]ग्भिरुच्यते[4] ॥ ३ ॥

शासद्वह्निरित्येषा ऋग्दुहितृदायाद्ये कैश्चिदुदाह्रियते पुत्रदायाद्ये कैश्चित् ।

---

**शासद्वह्निर्दुहितुर्नप्त्यं गाद्विद्वाँ ऋतस्य दीधितिं सपर्यन् । पिता यत्र दुहितुः सेकमृञ्जन्त्सं शग्म्येन मनसा दधन्वे [ ऋ० सं० ३ । ३१ । ११ ] ॥ प्रशास्ति वोढा[5] संतानकर्मणे दुहितुः पुत्रभावं दुहिता दुर्हिता दूरे हिता दोग्धेर्वा नप्तारमुपागमद्दौहित्रं पौत्रमिति विद्वान् प्रजननयज्ञस्य रेतसो वा[6]ङ्गादङ्गात्संभूतस्य हृदयादधिजातस्य मातरि प्रत्यृतस्य विधानं पूजयन्नविशेषेण मिथुनाः पुत्रा दायादा इति तदेतदृक्श्लोकाभ्यामभ्युक्तम्[7] । अङ्गादङ्गात्संभवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतमित्यविशेषेण पुत्राणां दायो भवति धर्मतः । मिथुनानां**

---

१ ग. ज. °पत्यत्वं दुहितृपुत्रयोः प्राप्नोति दुहि°. २ क. ख. 'इति' नास्ति; घ. °दीनि न्य इत्यपि°; ट. °दीनि इ॒त्य॑वि॑° न्य. ३ घ. ट. ठ. ड. °मृङ् निरु°. ४ ठ. ड. ३ इति निरुक्तवृत्तौ तृतीयाध्याये तृतीयः खण्डः. ५ क. ख. छ. त. द. वोल्हा. ६ क. ख. छ. त, द. वा अङ्गा°. ७ छ. त. द. °भ्युक्तम् ॥ ४ ॥ अ°.

विसर्गादौ मनुः स्वायंभुवोऽब्रवीत् । न दुहितर इत्येके तस्मात्पुमान् दायादोऽदायादा स्त्रीति विज्ञायते तस्मात्स्त्रियं जातां परास्यन्ति न पुमांसमिति च स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते न पुंसः पुंसोऽपीत्येके शौनःशेपे दर्शनात् । अभ्रातृमतीवाद इत्यपरम् । अमूर्या यन्ति जामयः सर्वा लोहितवाससः । अभ्रातर इव योषास्तिष्ठन्ति हतवर्त्मनः॥ अभ्रातृका इव योषास्तिष्ठन्ति संतानकर्मणे पिण्डदानाय हतवर्त्मान इत्यभ्रातृकाया[2] अनिर्वाह औपमिकस्तस्योत्तरा भूयसे निर्वचनाय ॥ ४ ॥

---

शासद्वह्निरिति । एषा त्रिष्टुबैन्द्रे सूक्ते विश्वामित्रेण दृष्टा । माध्यंदिने सवन उक्थपर्यायेष्वच्छावाकस्य यच्छस्त्रमभिजिद्विश्वजिदादिष्वाहीनिकेष्वहः[3]स्वहीनसूक्तं नाम तत्रेयं शस्यते [आश्व०श्रौ० ७।४]। 'न जामये तान्वः' इतीयमप्यनयैव समानार्षविनियोगदैवतच्छन्दस्का । शासद्वह्निः प्रशास्ति प्रख्यापयति। प्रज्ञापयतीत्यर्थः । कः पुनरसौ प्रशास्ति किं वा प्रशास्तीति। वोढा । य उद्वोढा स्त्रिया भवति स तस्यां या जायते दुहिता तस्याः पुत्रभावं प्रशास्ति संतानकर्मणेऽर्थाय । ' दुहिता दुर्हिता ' । सा हि यत्रैव दीयते तत्रैव दुर्दत्ता भवति । ' दूरे ' वा सती सा पितुः ' हिता ' पथ्या भवतीति दुहितेत्युच्यते। ' दोग्धेर्वा ' । सा हि नित्यमेव पितुः सकाशाद् द्रव्यं दोग्धि प्रार्थनापरत्वात् । आह । कथं

दुहिता दायाद्यमर्हतीत्यर्थे ऋक्

पुनर्गम्यते प्रशास्ति वोढा संतानकर्मणे दुहितुः पुत्रभावमिति । उच्यते । इतो यस्मात् नप्त्यं गात् नप्तारमुपागमदुपागच्छति चेतसा । दौहित्रं दुहितृपुत्रं पौत्रमिति पौत्रो ममायमित्येवमुपागच्छति । न चापुत्रस्य पुत्रः पौत्रः स्यात् । उपागच्छति च दुहितुः पिता पौत्रो ममायमिति दौहित्रम् । तस्माद् दुहितापि पुत्र एव यस्याः पुत्रः पौत्रो ममायमित्येवं चेतसोपगम्यते। विद्वाँ ऋतस्य दीधितिं सपर्यन् । विद्वान्कस्य । ऋतस्य प्रजननयज्ञस्य।

---

१ छ. त. द. अमूरित्यर्धं नास्ति. २ छ. त. द. ५. ३ क. ख. ठ. ड. °दिष्वहीनकेषु. ४ ग. च. ज. 'दैवत' नास्ति. ५ क. ख. ग. ज. दुर्हिता. ६ च. वोल्हा. ७ क. ख. घ. ट. ठ. ड. 'पुत्रः' नास्ति.

ऋत इत्येतदपठितं यज्ञनाम । दीधितिं विधानमित्यर्थः । प्रजननयज्ञविधानमविशेषेण सपर्यन्पूजयन्नित्यर्थः । यथैव हि पुत्रजन्मने[1] प्रजननयज्ञस्तम्यते तथैव हि दुहितृजन्मनेऽपि । यैरेव हि मन्त्रैर्येनैव च विधानेन पुत्रगर्भ आधीयते तैरेव मन्त्रैस्तेनैव च विधानेन दुहितृगर्भोऽपि । अथवा ऋतशब्देन रेत उच्यते । तद्ध्यङ्गादङ्गा[2]त्संभूतं सर्वगात्रेभ्यो हृदयानुस्मरण[3]निमित्तेन गर्भजन्मने मातरि प्रसृतं[4] प्रवृत्तं भवति रेतः । तस्य रेतसो[5] विधानमविशेषेण पूजयन् स वोढा दौहित्रं पौत्रो ममायमित्येवमुपागच्छति चेतसा । येनैव हि विधानेन पुत्रजन्मने रेत उत्सृज्यते तेनैव हि दुहितृजन्मनेऽपि । तत्रैवं सति रेतउत्सर्गविध्यविशेषात्प्रजननयज्ञाविशेषाद्वा 'अविशेषेण मिथुनाः' पुरुषाः स्त्रियश्चोभयेऽपि 'दायादा' इत्येवमेके धर्मविदो मन्यन्ते । तदेतत् 'ऋक्श्लोकाभ्याम् अभि' आभिमुख्येन 'उक्तं मिथुनाः पुत्रा दायादा इति' 'अङ्गादङ्गात् संभवसि' [ कौषी० आर० ४ । ११ ] 'अविशेषेण पुत्राणाम्' इत्येताभ्याम् ।

पुत्रा दुहितरश्चोभयेऽपि दायादा इत्यृक्श्लोकाभ्यामुच्यते

शासद्वह्निरित्येतस्या ऋचः प्रथमोऽर्धर्चो व्याख्यातः । पिता यत्र दुहितुरित्ययं द्वितीय उपरिष्टादस्य पादस्य[6] व्याख्यास्यते । अनयोरर्धर्चयोरन्तरा[7] तदेतदृक्श्लोकाभ्यामभ्युक्तमित्यत आरभ्य प्रसक्तानुप्रसक्तं दायाद्यधर्माश्रितमेव पूर्वोत्तरपक्षसंबन्धादाचारगतं बहु व्याख्यायते मन्त्रविषयख्यापनायेदृशोऽपि मन्त्राणां विषयो भवतीति धर्मसंविज्ञानाय[8] च । सर्व एवायमेवंप्रकारो धर्मो मन्त्रेभ्य एव निर्बभावित्येतदेतेन प्रकारेण ख्यापितं भवति ।

लोकव्यवहारोऽपि मन्त्राणां विषयो भवति

अङ्गादङ्गात्संभवसी[9]त्येतामृचं प्रवासादेत्य पुत्रस्य मूर्धनि जपति[10] । [ आश्व० गृ० १ । १५ । ११ ॥ मान० गृ० १ । १८ । ६ ]

---

१ क. ख. घ. झ. ट. ठ. ड. °जनने. २ क. ख. घ. झ. ट. ठ. ड. °दङ्गायत्संभूतं तत्सर्व°. ३ च. °नुसरण°. ४ च. प्रसृतं. ५ ग. इति । ४ । अङ्गा°. ६ घ. ट. ठ ड. 'पादस्य' नास्ति. ७ घ. ट. ठ. ड. च. °रन्तरा । तदे°. ८ ठ. ड. 'सं' नास्ति. ९ घ. ट. 'अङ्गात्' सकृदेव. १० क. ख. ग. ज. घ. ट. ठ. ड. जपन् जिघ्रति । अनु°.

जनुष्टुबेषा । स पुत्र उच्यते । हे पुत्र अङ्गादङ्गात्संभवसि त्वं हृदयाच्चाधिजायसे । यत्तदुक्तम् ' अङ्गादङ्गात्संभूतस्य हृदयादधिजातस्य ' इति तदेतदनेनापि स्पष्टार्थतरेण मन्त्रेणोच्यत इति पूर्वस्यास्पष्टार्थतायां स्पष्टीकरणार्थोऽयं मन्त्रः । तत्र हि ' ऋतस्य दीधितिं सपर्यन् ' इत्यत्र ऋतस्य ' प्रजननयज्ञस्य रेतसो वा विधानमविशेषेण पूजयन् ' इत्युक्तम् । तत्पुनरेतदस्पष्टम् । इह पुनरङ्गादङ्गात्संभवसि हृदयादधिजायस इत्येवमुच्यते । तत्रैवं सति यथैवं पुमानङ्गादङ्गात्संभवति हृदयाच्चाधिजायते तथैव दुहितापीत्यविशेष उपपद्यते । तस्मात्साधूक्तम् ' अविशेषेण मिथुनाः पुत्रा दायादा ' इति। आत्मा वै पुत्रनामासि । यस्मादङ्गादङ्गात्संभूतस्त्वं हृदयादधिजातस्तस्मादात्मैव त्वम् । ममैवावयवभूत इत्यभिप्रायः । केवलं तु पुत्रनामा त्वमहं पितृनामैतावानावयोर्विशेषः । नाममात्रं भिन्नमित्यभिप्रायः । स त्वं जीव शरदः शतमित्याशीः । सर्वस्मिन्नपि संवत्सरे शरद्येव दुर्जीव्यं प्रचुररोगत्वाच्छरदः। तस्माच्छरदैवोपलक्ष्य संवत्सरशतमेतदायुराशास्यते ।

(५) अङ्गादङ्गादित्यनेन दुहितुः पुत्रत्वं स्पष्टीक्रियते

' अविशेषेण पुत्राणां दायो भवति धर्मतः । मिथुनानाम् ' । क एवमाह । ' मनुः स्वायंभुवः ' । स्वयंभुवोऽपत्यं स्वायंभुवः । कस्मिन् काले स एवमाह । ' विसर्गादौ ' सृष्ट्यादावित्यर्थः । पूर्वमर्धं श्लोकस्य ऋज्वेव । एवमेताभ्यामप्यृक्श्लोकाभ्यामुक्तमविशेषेण पुत्रस्य दुहितुश्च दायादत्वम् ।

(२०) सर्वेषामप्यपत्यानां दायाद्यार्हत्वमित्यर्थे मनुवचनम्

" न दुहितर इत्येके ' । न दुहितरो दायाद्यमर्हन्तीत्येवमेके धर्मविदो मन्यन्ते । ब्राह्मणमपि चैतस्मिन्नर्थे दर्शयति । ' तस्मात्पुमान् दायादः स्त्र्यदायादेति ह विज्ञायते ' । ' यद्दच्छन्ति स्थालीं न दारुमयं तस्मात्पुमान्दायादोऽदायादा स्त्रीति विज्ञायते ' [मैत्रा० सं० ४ । ६ । ४ ] । एतस्मिन् ब्राह्मणे

(२५) दुहितरो न दायाद्यार्हा इत्यर्थे ब्राह्मणवचने

१ क. ख. घ. ट. ठ. ड. ' एतत् ' नास्ति. २ ग. ज. पूर्वस्यामस्प°. ३ ग. ज. पुनः पुनरङ्गा°. ४ ख. झ. ट. ठ. ड. यथैवं; च. यथैवंव°. ५ च. पुत्रदायादा°. ६ ख. झ. ट. ठ. ड. अहं तु. ७ घ. झ. ट. ठ. ड. दुर्जीवा । प्रचु°. ८ क. ख. घ. झ. ट. ठ. ड. °रदेवो°. ९ च. °दाया स्त्री°.

विचार्यमाणे ज्ञार्यते न दुहितरो दायाद्यमर्हन्ति पुमानेवार्हतीति । 'तस्मात्स्त्रियं जातां परास्यन्ति न पुमांसमिति च ' [ मैत्रा० सं० ४।६। ४ ] । एतद्-परं दर्शनं दुहितुरदायादत्वं लिङ्गतो दर्शयति । अथ यत्स्थालीं परास्यन्ति हवनकर्मणो न तया जुह्वति न दारुमयं परास्यन्ति हवनकर्मणो दारुमये-नैव जुह्वति तस्मात्कारणात्स्त्रियं जातां परास्यन्ति ५

**स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते न पुंसः**

परस्मै प्रयच्छन्ति । तस्मात्पुमानेव पैतृकस्य वित्त-स्येष्टे न दुहिता। किंच। ' स्त्रीणां दानविक्रयाति-सर्गा विद्यन्ते न पुंसः ' । प्रदीयते हि परस्मै स्त्री विक्रीयते च वैवाहिकेन शुल्केन । ' विक्र-यं चाप्यपत्यस्य मतिमान्कोऽनुमंस्यते । स्वल्पो वाथ बहुर्वापि विक्रयस्तावदेव १० सः ॥ ' इति भगवता वासुदेवेनोक्तं सुभ-

**महाभारते कन्याविक्रयनिषेधः । स्त्रीविक्रये ब्राह्मणवचनम्**

द्राहरणे । तथा च ब्राह्मणमपि दर्शयति चातु-र्मास्येषु । ' अनृतं वा एषा करोति या पत्युः क्रीता सत्यन्यथान्यैश्चरति ' [ मैत्रा० सं० १ ।। १०।११] इति । तस्माच्छुल्केन प्रदानं विक्रयः[2] १५ कन्याया इत्युपपद्यते । अतिसर्गः परित्यागः । परित्यज्यते हि कन्या स्वबन्धुभिः स्वयंवरे यो बलिष्ठः स गृह्णात्विति यो वा तुभ्यं रोचते तं वृणीष्वेति । स एष क्षत्रियाणामेव स्वयंवरधर्मो नेतरेषां वर्णानामिति । स पुनरयमितरेषामपि वर्णानामदायार्हत्वे[3] कन्याया लिङ्गं भवति । तस्मान्न दायाद्यमर्हति कन्येति । २०

' पुंसोऽपीत्येके शौनःशेपे दर्शनात् ' । यदुक्तं दानविक्रयातिसर्गैर्हेतु-भिरदायादत्वं स्त्रिया इत्यनैकान्त[4] एषः । पुंसोऽपि[6]

**दानविक्रयातिसर्गाः पुंसोऽपि**

हि[5] दानविक्रयातिसर्गा विद्यन्त एव । पुरुषोऽपि परस्मै दीयते[7] । एवं ह्युक्तं ' दत्तक्रीतककृत्रिम-क्षेत्रजौरसाः पुत्राः' इति । तथा च ' शौनःशेपे २५

---

१ व. झ. ट. ठ ञ. च. ज्ञायत इति. २ ठ. ड. °प्रदानं दानविक्रयः. ३ क. ख. अदायाद्यार्हत्वे; ग. ज. अदायादार्हत्वे; ठ. ड. अदायादत्वे; व. अदायार्दवें; ठ. अदायार्दत्वे° र्ह. ४ ठ. ड. अनेकान्त. ५ क. ख. ग. ज. ठ. ड. ' हि ' नास्ति. ६ क. ख. ग. ज. घ. ट. ठ. ड. °पि हि पर° ७ च. दीयत एव ह्युक्तं. २९

दर्शनात्'। शौनःशेप आख्याने बह्वृचानां [ ऐ० ब्रा० अध्या० ३३ ]। भारते च शुनःशेपस्य विक्रयो दृष्टो 'विक्रीतं मध्यमं मन्ये' इत्येवमादि। तथा च परित्यागोऽपि दृष्टो यथा विश्वामित्रेण मधुच्छन्दआदीनाम् [ ऐ० ब्रा० ३३। ६ ]। तस्मादनैकान्तिकत्वादेतेषां[1] हेतूनामुभयोरपि दायाद्यत्वमित्येवमेके मन्यन्ते।

शासद्वह्निरितीयमृगभ्रातृमतीपरा

'अभ्रातृमतीवाद इत्यपरम्'। आचार्यमतमिति वाक्यशेषः। यैवाभ्रातृका भवति कन्या सैव पित्र्यं धनमर्हति[3] नेतरा सभ्रातृका। पुरुषेषु हि पितुः पिण्डदातृषु तिष्ठत्सु न स्त्री धनमर्हति। सा हि परकीयं वंशं वर्धयति न स्वम्। तस्मादसौ नार्थभागिनी। अभ्रातृकायां पुनरयं विशेषः। अभ्रातृकापितुरन्यः पुत्रो नास्तीति दौहित्रः पिण्डदानादिषु कार्येष्ववतिष्ठत इति भवत्यर्थभागिन्यभ्रातृका दुहिता। तदुक्तं 'पितोत्सृजेत्पुत्रिकामनपत्योऽग्निं प्रजापतिं चेष्ट्वास्मदर्थमपत्यमिति संवाद्य' [ गौ० ध० २८। १६ ] 'अभिसंधानमात्रं पुत्रिका इत्येकेषाम्' [ गौ० ध० २८। १७ ]।

अस्मिन्नर्थे गौतमवचने

निगममप्येतस्मिन्नर्थ उदाहरन्ति 'अभ्रातर इव योषास्तिष्ठन्ति हतवर्त्मनः' इति। निगमस्य समासतोऽर्थमाह। 'अभ्रातृका इव योषास्तिष्ठन्ति संतानकर्मणे पिण्डदानाय हतवर्त्मान इति'। अस्यामृचि 'अभ्रातृकायाः' कन्यायाः 'अनिर्वाहः' अनिर्वहणम्। विवाहनिषेध इत्यर्थः।

अथर्ववेदीया ऋक्च

'औपमिकः' उपमया दर्शितोऽभ्रातर इवेति। 'अमूर्या यन्ति जामयः सर्वा लोहितवाससः। अभ्रातर इव योषास्तिष्ठन्तु हतवर्त्मनः' [ अ० सं० १। १७। १ ]। इयमथर्वणाम्। प्रसवमार्गवहनरोगिणी या स्त्री भवति तस्यास्तत्प्रतीकारकर्मणि विनियुज्यते। अमूर्या यन्ति स्रवन्ति नाड्यो रक्त-

१ ठ. ड. °देनेकान्ति. २ क. ख. घ. झ. ट. ठ. ड. °देवैषां. ३ घ. झ. ट. ठ. ड. °मर्हतीति. ४ क. ख. घ. झ. ट. ठ. ड. अभ्रातृकायाः पितु°; च. अभ्रातृकापि पुनरन्यः°. ५ ठ. ड. निगममित्येतस्मि°. ६ च. 'इति' नास्ति. ७ क. ख. ग. च. ज. ठ. ड. तिष्ठन्ति; ट. तिष्ठन्तु° न्ति.

मजस्रमविरताः स्त्रिय इवातिलोहितवस्त्राः सर्वा एतास्तिष्ठन्तु उपरमन्तु
हतलोहितवहनमार्गा अस्य मन्त्रस्य वीर्येण । कथं पुनस्तिष्ठन्तु । अभ्रातर
इव योषाः । यथा काश्चिदभ्रातृका योषा हतभर्तृवंशमार्गास्तिष्ठन्ति संता-
नकर्मणे पिण्डदानाय एवमेता नाड्यस्ति-
अत्राभ्रातृकाया　ष्ठन्त्विति । एवमस्यामृच्यभ्रातृकाया अनिर्वाह　५
विवाहनिषेधः　उपमया लिङ्गतो दर्शितः ।
'तस्य' अनिर्वाहस्य[1] 'उत्तरा' ऋक् 'भूयसे' बहुतराय निर्वि-
विच्य 'वचनाय' ॥ ४ ॥

---

अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धना-　१०
नाम् । जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते
अप्सः [ ऋ० सं० १ । १२४ । ७ ] ॥ अभ्रातृकेव पुंसः
पितॄनेत्यभिमुखी संतानकर्मणे पिण्डदानाय न पतिं गर्ता-
रोहिणीव धनलाभाय दाक्षिणाजी[2] गर्तः सभास्थाणुर्गृ-
णातेः सत्यसंगरो भवति तं तत्र यापुत्रा यापतिका सारो-　१५
हति तां तत्राक्षैराघ्नन्ति[3] सा रिक्थं लभते श्मशानसंच-
योऽपि गर्त उच्यते गुरतेरपगूर्णो भवति श्मशानं श्मशयनं
श्म शरीरं शरीरं शृणातेः शम्नातेर्वा श्मश्रु लोम श्मनि श्रितं
भवति लोम लुनातेर्वा लीयतेर्वा नोपरस्याविः[4]कुर्याद्यदुप-
रस्याविः[4]कुर्याद्गर्तेष्ठाः स्यात्प्रमायुको यजमान इत्यपि　२०
निगमो भवति । रथोऽपि गर्त उच्यते गृणातेः स्तुतिक-
र्मणः । स्तुततमं यानम् । आरोहथो वरुण मित्र गर्तमि-
त्यपि निगमो भवति । जायेव पत्ये कामयमाना सुवासा
ऋतुकालेषूषा हसनेव दन्तान् । विवृणुते रूपाणीति चतस्र　२५
उपमा नाभ्रात्रीमुपयच्छेत तोकं ह्यस्य तद्भवतीत्यभ्रातृकाया
उपयमनप्रतिषेधः[5] प्रत्यक्षः पितुश्च पुत्रभावः पिता यत्र

---

१ ग. ५; ठ. ड. ४ इति निरुक्तभाष्ये तृतीयाध्याये चतुर्थः खण्डः समाप्तः.
२ छ. दाक्षिणायाजी; त. दाक्षिणाऽजी° या; दाक्षिणाजा [ सायणभाष्ये ].
३ छ. त. द. तत्राक्षेणाघ्न°. ४ क. ख. छ. त. द. आविष्कु°. ५ छ. °यमनः　३०
प्राति°; त. यमनोऽप्राति°; द. यमनः प्राति°.

**दुहितुरप्रत्ताया रेतःसेकं प्रार्जयति संदधात्यात्मानं संगमेन मनसेत्यथैतां जाम्या रिक्थप्रतिषेध उदाहरन्ति ज्येष्ठं पुत्रिकाया इत्येके ॥ ५ ॥**

---

५ अभ्रातेव पुंस एति। दीर्घतमःपुत्रस्य कक्षीवत आर्षम्। त्रिष्टुबौषसी। प्रातरनुवाकाश्विनयोः शस्यते [ आश्व० श्रौ० ४ । १४ ]। अभ्रातेव पुंसः। यथा अभ्रातृका कन्या दत्तापि सती पित्रा ऊढापि भर्त्रा पुनः पुंसः पितॄनेव पितृवंशमेव अभिमुखी एति संतानकर्मणे पिण्डदानार्थम्। न पतिवंशमित्यर्थः। सा हि पितृवंशं पुत्रैः पौत्रैश्च वर्धयति न भर्तृवंशमिति। तस्मादभ्रातृका पैतृकं दायाद्यमर्हतीत्युपपद्यते। गर्तारुगिव सनये धनानाम्। गर्तारोहिणीव काचिद्दाक्षिणात्या स्त्री। सा यथा गर्तः सभास्थाणुस्तमारोहति। अक्षनिवपनपीठमुपविशतीत्यर्थः। तत्र गता सत्यपुत्रा रिक्थं लभते। कितवा दापयन्ति रिक्थमिति दाक्षिणात्येषु देशरीतिः। सनये लब्धये धनानाम्। एवमुषाः अपरकाले रात्र्यां नभ आरोहति। किंच। जायेव पत्य उशती सुवासाः। यथा जाया पत्ये भर्त्रे सुवासा भूत्वा ऋतुकालेष्वात्मानं दर्शयत्येवमुषा आत्मानं दर्शयति जनानाम्। किंच। उषा हस्रेव निरिणीते अप्सः। यथा हसनस्वभावा स्त्री हसनस्वभावाद्दन्तानात्मनो दर्शयत्येवमुषा अप्यात्मनोऽन्तर्भूतानि सर्वद्रव्याणां रूपाणि विवृणुते। शार्वरेण तमसा दिग्धानि सर्वद्रव्याणि स्वेन प्रकाशोदकेन धौतानीव करोति।

विवाहनिषेधे ऋक्

१० 

१५ 

२०

'चतस्रः' एताः 'उपमाः' अस्यामृचि। अभ्रातेव पुंस इत्येका। गर्तारोहिणीवेति द्वितीया। जायेव पत्य इति तृतीया। हस्रेवेति चतुर्थी। २५ अत्र प्रथमयोपमया 'अभ्रातेव पुंसः' इत्यनयाभ्रातृकाया अनिर्वाहो

---

१ छ. त. द. ६. २ ठ. ड. इति. ३ ग. ज. गौतमपुत्रस्य; च. गोतमपुत्रस्य; घ. झ. दीर्घतमसः पु°; ट. दीर्घतमसः पुत्रस्य° दे. ४ क. ख. घ. झ. ट. ठ. ड. पुंसः प्रतीची पितृ°. ५ ग. ज. दाक्षिणा स्त्री; च. दाक्षिणाजा स्त्री° त्या. ६ २९ क. ख. घ. झ ट. ड, ड. हस्रना स्त्री.

अभ्रातेव पुंस इत्यनयोपमयाभ्रातृकाया विवाहनिषेधः

लिङ्ग्यते । यथाभ्रातृका पितॄनेव प्रत्येति न पतिमेवमुषा आदित्यमेव प्रत्येति । एवमभ्रातृका कन्यापि[1] यस्मिन्नेव वंश उत्पन्ना भवति तमेव प्रकाशयति वर्धयति न भर्तृवंशमित्येवमुपमया नासावुद्वोढव्येत्येतदुपदर्शितं भवति पुत्रार्थत्वाद्विवाहस्य । तस्मादवर्धयितृत्वाद्भर्तृवंशस्य वर्धयितृत्वाच्च[2] पितृवंशस्याभ्रातृका पितृदायाद्यमर्हतीत्युपपद्यते ।

निगमप्रसक्तस्य तत्त्वमाचष्टे ' गर्तः सभास्थाणुः ' इति । अक्षनिवपनपीठमित्यर्थः । ' गृणातेः ' [ धा० ९ । २६ ] । स हि ' सत्यसंगरो भवति' । संगीर्यते हि तत्र सत्यमिदमत्र पतितमिदमत्र न पतितमित्येवम् । प्रायेण कितवास्तत्रानृतं ब्रुवते । ' तम् ' एवंलक्षणं गर्तमारोहति या स्त्री सा गर्तारुगित्युच्यते । तदेतद्गर्तस्य सभास्थाणोरारोहणं रिक्थलाभहेतुर्दाक्षिणात्येष्वपुत्राया[3] अपतिकायाः स्त्रियाः प्रसिद्धम् । तयैव प्रसिध्या निरुच्यते । देशसमाचारव्यवस्थयापि कचिन्मन्त्रार्थो निर्वक्तव्य इत्येतदनेन प्रदर्शितं भवति । तं ' तत्र याऽपुत्रा यापतिका सारोहति ' । तं सभास्थाणुं तत्र कितवमध्येऽवस्थितं यापुत्रा स्त्री यापतिका सारोहति । तस्मिन्नुपविशतीत्यर्थः । ततः ' सा ' भर्तृबन्धुभ्यः सकाशात् ' रिक्थं लभते ' यस्तस्या भर्तृसक्तो धनांशस्तम् । एवमसौ सनये लब्धये धनानां गर्तमारोहति ।

देशाचारानुरोधेन मन्त्रार्थो निर्वक्तव्यः

गर्तशब्दप्रसक्तमुच्यते । ' श्मशानसंचयोऽपि गर्त उच्यते ' । ' गुरतेः ' उद्यमनार्थस्य [ धा० ६ । ११६ ] । स हि लोकविनाशायाभ्युद्यत इव भवति । यानि [4]हि तत्र पिशाचादीनि[5] सत्त्वान्याश्रितानि भवन्ति तानि जनमरण[6]माशासते । म्रियमाणेषु जनेषु तानि प्रमुदितानि भवन्ति । ' श्मशानं [7]श्मशयनम् ' इत्याख्यानप्रसक्तमुच्यते । तत्र हि श्म शेत इति श्मशयनं सत्तत्[8] श्मशानमित्युच्यते । श्मशब्दार्थमाह । ' श्म शरीरम् ' इति । तद्धि तत्र शेते । तत्र हि तन्निक्षिप्यते मृतस्य सतः ।

१ क. ख. ग. ज. ' अपि ' नास्ति. २ ग. ज. ' च ' नास्ति. ३ घ. ट. ठ. ड. च. °पुत्रकाया. ४ घ. इ; ट. इ तत्र° हि; ठ. ड.°यानीह. ५ ग. ज. शिवादीनि; घ. झ. ट. ठ. ड. पिशाचशिवादीनि. ६ ग. ज. °मरणकामान्याशा°; झ. जननमरणमाशा;° ठ. ड. जननमरणमाशास्ते. ७ च. श्मशयं. ८ च. तं.

'शरीरं शृणातेः शम्नातेर्वा'। कृतव्याख्यानमपि [ निं० २ । १६ ] पुनराह मुख्यत्वादस्य। तत्रौपमिकं वृत्रसंबन्धात्। न हि वृत्रस्य मुख्यं शरीरम्। श्मशब्दप्रसक्तं निराह। 'श्मश्रु लोम' इति। तद्धि 'श्मनि' शरीरे 'श्रितं भवति'। पर्यायप्रसक्तमाह। 'लोम लुनातेः' [ धा० ९ । ११ ]। तद्धि लूयते। 'लीयतेर्वा' [ धा० ४ । ३३ ]। तद्धि शरीरे लीयते तत्र।

निगममपि चात्रोदाहरन्ति 'श्मशानसंचयोऽपि गर्त उच्यते' इति। 'नोपरस्याविष्कुर्याद्यदुपरस्याविष्कुर्याद्गर्तेष्ठाः स्यात्प्रमायुको यजमानः' इति। उपर इति यूपस्यातष्टः प्रदेश उच्यते। 'पञ्चभागोपरा यूपाः' इति ह्युक्तम्। तदतष्टं यूपस्य नाविष्कुर्यादित्यर्थः। पांसुभिस्तदवच्छादनीयं बर्हिषा च। यदि पुनरुपरस्य कंचिदप्यवयवमाविःकुर्याद्गर्तेष्ठाः गर्तप्रतिष्ठः श्मशानप्रतिष्ठः प्रमायुकः प्रमरणधर्मा पुरैव यथाविहितादायुषो यजमानः स्यादित्यपि निगमो भवति। अप्ययमप्यन्ये बहव इत्यपिशब्दः।

'रथोऽपि गर्त उच्यते'। 'गृणातेः' स्तुत्यर्थस्य [ धा० ९।२६]। तद्धि 'स्तुततमम्' अश्वादिभ्यो यानेभ्यः। सुखतरं हि तेन गम्यते।

रथोऽपि गर्त इत्यर्थे ऋक्

रथोऽपि गर्त इत्यस्मिन्नर्थे 'आरोहथो वरुणमित्र गर्तमित्यपि निगमो भवति'। 'हिरण्यरूपमुषसो व्युष्टावयःस्थूणमुदिता सूर्यस्य। आ रोहथो वरुण मित्र गर्तमतश्चक्षाथे अदितिं दितिं च' [ ऋ० सं० ५।६२।८ ]॥ श्रुतविदात्रेय एतया त्रिष्टुभा मित्रावरुणावस्तौत्। राजसूयेऽभिषेचनीयो नाम क्रतुः। तत्र यजमानस्य रथमारुरुक्षतो गृहीतेषुधनुष्कौ बाहू अनयाभिमन्त्र्येते। तावेवात्र मित्रावरुणावभिप्रेतावधिदेवताभिप्रायेण। एवं ह्याह। 'मित्रोऽसीतीममभिमन्त्रयते मित्रस्य ह्येतद्रूपं वरुणोऽसीतीमं वरुणस्य ह्येतद्रूपम्' [ मैत्रा० सं० ४ । ४ । ३ ]।

१ च. शृतं. २ क. ख. °सक्तं निराह; ट. °सक्तमाह° कंनिरा. ३ क. ख. ठ. ड. लीयते । तत्र निग°. ४ क. ख. ठ. ड. 'अत्र' नास्ति; ट. चात्रो° च. ५ ड. °विःष्कुर्या°. ६ ग. च. ज. 'उपर इति' नास्ति. ७ क. ख. घ. झ. ट. ठ. ड. °तष्टप्रदेशः. ८ ज. °विः कुर्या°. ९ क. ख. ग. ज. पांशुभि°; च. पांशुभि° सु. १० घ. झ. ट. ठ. ड. च. किंचि°. ११ क. ख. °विष्कुर्या°. १२ घ. ट. ठ. ड. पुरैवः य°. १३ ठ. ड. 'आरोहथो० भवति' नास्ति. १४ ग. च. ज. घ. झ. ट. व्युष्टौ। श्रुतवि°. १५ क. ख. °यति; ट. °यते° ति; ठ. ड. °यतेति मित्र°.

४ । ४ । ३ ] इति । तावुच्येते । हे मित्र हे वरुण हिरण्यवर्णं हिरण्यसदृशवर्णम् । उषसो व्युष्टौ उषसो व्युच्छेदकाले उदिता चोदयकाले सूर्यस्य यौ युवामेतस्मिन्काल एवंरूपमयःस्थूणमयोमयस्थूणं स्वं रथमारोहथस्तौ युवां ब्रवीमि ममैतं रथं गर्तमेतस्मिन्विधावङ्गभूतं तत्तद्रूपमेव सांप्रतमारोहतम् । तत एतमारुह्य चक्षाथे। कुरुतमित्यर्थः । अदितिं दितिं च । अदीनमनुपक्षीणमात्मपक्षं दीनं चापक्षीणममित्रपक्षमित्यर्थः ।

गर्तः सभास्थाणुरित्यत आरभ्य प्रसक्तानुप्रसक्तमुक्तम् । जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्स इत्ययमप्यर्धर्चः पूर्वमेव व्याख्यातो भाष्यकारव्याख्यानुक्रमं भित्त्वाऽस्माभिस्तथा ह्यग्वाक्यस्यास्यैकवाक्यतानवच्छिन्ना भवेदिति । 'चतस्र उपमाः' इति यदुक्तं भाष्यकारेण तदपि परिसंख्याय ता उपमा उपपादिता अस्माभिः ।

एवमभ्रातेव पुंस एति प्रतीचीत्यनेन पादेनास्यामृच्यनिर्वाहो दर्शितः । अन्यत्रापि चोक्तं ' नाभ्रातृकामुपयच्छेत तोकं ह्यस्य तद्भवति इति ' ।

पूर्वत्र लिङ्गत उपयमनप्रतिषेधः । अत्र पुनः प्रत्यक्षः

अयमस्मिन्वाक्ये ' नाभ्रातृकामुपयच्छेतेति प्रत्यक्ष एवोपयमनप्रतिषेधः ' । विवाहार्थे पाणिग्रहणप्रतिषेधः इत्यर्थः । पूर्वयोर्हि मन्त्रयोरुपमया लिङ्गतो विवाहप्रतिषेधो दर्शितः । एतस्मिंस्तु वाक्ये साक्षादेव प्रतिषेध आहत्यविधानेनैव 'नाभ्रातृकामुपयच्छेत ' इति । अत एतदुक्तम् 'उपयमनप्रतिषेधः प्रत्यक्षः' इति । आह । किमुपयमनप्रतिषेध एव । नेत्युच्यते । ' पितुश्च पुत्रभावः ' प्रत्यक्षः श्रूयते । कथम् । ' तोकं ह्यस्य तद्भवति ' । तोकमित्यपत्यनाम । यदपत्यमभ्रातृकायाः पितुर्भवति नेतरस्य वोढुरिति । एवमितरस्य विवाहप्रतिषेध एवं तेनेत्युच्यते पुत्रभावादितरस्य च पुत्रिकापितुरपत्यप्राप्तेरिति । तस्मादुपपन्नं भवति । यैवाभ्रातृमती सैव पैतृकं धनमर्हति नेतरेति ।

१ घ. ट. हिरण्यरूपरूपं; झ. ' हिरण्यवर्णं ' नास्ति; ठ. ड. हिरण्यस्तूपरूपं. २ ठ. ड. ' अयोमयस्थूणं ' नास्ति. ३ क. ख. ग. ज. ममाप्येवं. ४ ग. ज. एवमारु°. ५ ग. ज. °स्यैकतानव°. ६ ग. ज. तत्पितुः. ७ क. ख. ग. ज. घ. ट. ठ. ड. °एव नेत्यु. ८ क. ख. घ. ट. ठ. ड. °प्राप्तिरिति.

अथवा योऽसौ शासद्वह्निरित्यस्या ऋच उत्तरोऽर्धर्च उत्कृष्टः[1] स एवा-भ्रातृकावादपक्षेणैव निरुच्यते । पूर्वोऽपि च शासद्वह्निरित्ययमभ्रातृमती-वादपक्षेणैव योजयितव्यः । एष एव हि स्थितः पक्षः । तस्या एव ह्यभ्रातृमत्या यः पुत्रो भवति तमेव पुत्रिकाविधानेन कृताभिसंधित्वात्पौत्रो ममायमित्यपुत्रः सन्मातामह उपगच्छति नेतरान्भ्रातृमतीपुत्रान् । अन्यथा हि सर्व एव वोढारोऽपुत्राः स्युः । ततो विवाहपरिश्रमो व्यर्थ एव स्यात् । अथवा सर्व एव लोको द्व्यामुष्यायणः स्यात्[2] । किंच । पुत्रिकापितुरपि याँ[3] भार्या साऽप्यन्यस्य दुहितेति तस्यामपि या जायते सापि मातामहस्यैव नेतरस्य पुत्रिकापितुः स्यात् । अनिष्टं चैतत्सर्वम् । तस्माद्यैवाभिसंधिपूर्वकं धर्मेण पुत्रिका क्रियते तस्या एव पुत्रो मातामहस्य भवति न सर्वस्या इति । सैव च दायाद्यार्हा नेतरा भ्रातृमत्यः । अत इदमुच्यते पिता यत्र दुहितुरिति । पिता यत्र यस्मिन्काले दुहितुरप्रत्तायाः । प्राक्प्रदानादित्यर्थः । रेतःसेकं रेतसः सेक्तारं यो दुहितरि रेतः सिञ्चति तं जामातरं प्रार्जयति प्रसाधयति प्रकल्पयति । उपावर्तय-[4]तीत्यर्थः । तदा तस्मै तां दुहितरं दद्त्किं करोतीति । संशग्म्येन मनसा दधन्वे । संदधात्यभिसंदधात्यात्मानं यदत्रापत्यमुत्पत्स्यते तन्ममेति ।

(मार्जिन टिप्पणी: शासद्वह्निरित्ययमप्यर्धर्चोऽभ्रातृमतीवादपक्षेणैव योजयितव्यः)

(मार्जिन टिप्पणी: तस्मिन्नेवार्थे शासद्वह्निरित्यस्या उत्तरोऽर्धर्चः)

कथं पुनरभिसंदधात्यात्मानमिति । संशग्म्येन मनसा । संगमेन मनसा विगतापुत्रत्वसंतापेन चेतसा । नाहमपुत्र इयमेव पुत्रिका मम पुत्रः । यो ह्यस्यामुत्पत्स्यते स पौत्रो मम भविष्यतीत्येवं सुखेन मनसा संदधात्यात्मानं तस्यां पुत्रिकायाम् । तत्रैवं सति यस्तस्यामेव कृतपुत्रिकाधर्मिण्यामुत्पद्यते दौहित्रस्तमेव नप्ता ममायमित्येवमुपगच्छति मातामहो न सर्वानेव दौहित्रान्भ्रातृमत्या अपि संतानकान्[5] । स एव च मुख्यया वृत्त्या मातामहस्य पौत्रा[6] भवति नेतरे भ्रातृमतीपुत्राः । ते हि गौण्या वृत्त्या जनयितुः पितुः पौत्राः[7] सन्तो मातामहस्य पौत्रा इत्युच्यन्ते कदाचिल्लोके शास्त्रे वा ।

१ क. ख. उत्सृष्टः. २ क. ख. घ. ट. ठ. ड. एव स्यात्. ३ ग. ज. 'या' नास्ति ४ ट. उपाँ° प. ५ ग. ज. संतकात्; च. संतँकान्° तान; ट. संतँनिकान्° का. ६ घ. ट. ठ. ड. 'पौत्रो० लोके शास्त्रे' नास्ति. ७ क. ख. पुत्राः.

तत्रैवं सत्यङ्गादङ्गात्संभवस्यात्मा वै पुत्रनामासीत्येवमादिषु गौणं दुहितुः पुत्रत्वमुच्यते । किंच । यदि दुहिता पुत्रेणाविशिष्टैव स्यात्ततो दुहितेति विशेषसमाख्या[1] नैव स्यात् । अस्ति चेयम् । तस्माद्विशिष्टतरः पुत्रो दुहितुः सकाशादित्युपपद्यते । यदपि चोक्तम् 'अविशेषेण पुत्राणां दायो[2] भवति' इति तदप्यभ्रातृमतीपक्षे द्रष्टव्यम् । अथवा

अङ्गादङ्गादित्यत्र दुहितुः पुत्रत्वं गौणम्

मनुवचनमभ्रातृमतीपक्षे योज्यम्

वेदस्मृत्योर्विरोधे वेददृष्ट एव धर्मो ज्यायान्न स्मृतिदृष्टः । तस्मिंश्च वेदे ' अथैतां जाम्या रिक्थप्रतिषेध उदाहरन्ति ' धर्मविदो येयमृग्वक्ष्यमाणा 'न जामये तान्वः' इति । अथशब्दो विशेषाधिकारार्थः । ' ज्येष्ठं पुत्रिकाया इत्येके ' । ज्येष्ठमपत्यं यत्पुत्रिकायास्तदेव मातामहस्य नेतराणि । जनयितुरेवेत्येवमेके मन्यन्ते । अथवा ज्येष्ठं पुत्रिकाया इत्येक इति । यदोत्सृष्टायां पुत्रिकायां पुत्रिकापितुरन्ये पुत्रा जायेरंस्तदा विभागकाले ज्येष्ठं धनभागं पुत्रिकायै[3] दद्याद्यथाभागमितरान्पुत्रान्विभजेदभागा एव त्वितरा दुहितर इति । तदेतदनयर्चा निरुच्यते यथा दुहितॄणां[4] भागो नास्तीति ॥[5] ५ ॥

वेदस्मृत्योर्विरोधे वेददृष्टो धर्म एव ज्यायान्

न जामये तान्व इतीयमृक् स्त्रिया रिक्थप्रतिषेधे

ज्येष्ठं पुत्रिकाया इत्यस्य द्वावर्थौ

---

**न जामये तान्वो रिक्थमारैक्चकार गर्भं सनितुर्निधानम् । यदी मातरो जनयन्त वह्निमन्यः कर्ता सुकृतोरन्य ऋन्धन् [ ऋ० सं० ३ । ३१ । २ ] ॥ न जामये भगिन्यै जामिरन्येऽस्यां जनयन्ति[6] जामपत्यं जमतेर्वा स्याद्गतिकर्मणो निर्गमनप्राया[7] भवति तान्व आत्मजः पुत्रो रिक्थं**

---

१ ठ. ड. °समानाख्या. २ क. ख. ग. ज. ' धन ' नास्ति. ३ क. ख. घ. ट. पुत्रिकायै च; ग. ज. ठ. ड. पुत्रिकायैव. ४ ट. दुहितॄणां° भ्रातृमतीनां; ठ. ड. भ्रातृमतीनां दुहितॄणां. ५ ग. ६; ज. ८; ठ. इति निरुक्त० पञ्चमः खण्डः; ड. ५ खण्डः. ६ छ. त. द. जनयन्त्यजैनमपत्यं. ७ छ. द. निर्गमनःप्राय°.

**प्रारिचत्प्रादाच्चकारैनां गर्भनिधानीं सनितुर्हस्तग्राहस्य यदिह[1] मातरोऽजनयन्त वह्निं पुत्रमवह्निं च स्त्रियमन्यतरः संतानकर्ता भवति पुमान् दायादोऽन्यतरोऽर्धयित्वा जामिः प्रदीयते परस्मै ॥ ६ ॥**

**इति[3] तृतीयाध्यायस्य प्रथमः पादः ॥**

---

न[4] जामये भगिन्यै तान्वः आत्मजः । आत्मनो धियो जातः स[5] आत्मजः । स किं करोतीति । रिक्थमारैक् ।

दुहितॄणां भागो नास्तीत्यर्थे ऋक्

रिक्थं पैतृकं धनं न[6] प्रादान्न प्रददाविति । किं तर्हि तस्याः करोतीति । उच्यते । चकार गर्भं सनितुर्निधानम् । करोति[7] गर्भनिधानं सनितुर्हस्तग्राहस्य भगिनीभर्तुः । प्रसवसमर्थां करोति पुष्णातीत्यर्थः[8] । किंच । यदी[9] मातरो यत्पुत्रद्वयमिह[10] मातरो जनयन्ति वह्निं च वध्वा वोढारं पुत्रमवह्निं चावोढ्रीं स्त्रियं तयोर्द्वयोरपि वोढ्रवोढ्रोः[11] पुत्रयोरन्यतर एकतरः कर्ता भवति संतानकर्मणः । कतमः । यः पुमान् । स एव च दायादो दायाद्यार्हो नेतरः कन्याख्यः । किंच । तयोरुभयोरपि सुकृतयोः सुतरामेकेनापि प्रयत्नेन कृतयोरुत्पादितयोरन्य ऋन्धन् अन्यतरोऽर्धयित्वा सुकृतोऽपि सुपुष्टोऽपि सन् जाम्याख्यो भगिन्याख्यः प्रदीयते परस्मै । न कस्यांचिदप्यवस्थायामसावात्मीयो भवतीत्यभिप्रायः । एवमस्यामृचि न जामये तान्वो रिक्थमारैगिति न दुहितरो रिक्थभागिन्यो भवन्ति नैताः संतानकर्मणि पितुरुपतिष्ठन्ते वर्धयित्वा ह्येताः परस्मै दीयन्ते तस्मादभागा एता इति ।

यत्पुनरेतदुक्तं[12] पुंसोऽपि दानातिसर्गविक्रया विद्यन्त इति तत्कदाचि-

---

१ क. ख. छ. त. द. यदी मा°. २ छ. त. द. ७. ३ ड. थ. ध. 'इति..... पादः' नास्ति; छ. इति प्रथमः पादः; त. इति तृतीयोऽध्यायः प्रथ°; द. इति नैरुक्तस्य तृती°. ४ ठ. ड. न जामय इति । न जाम°. ५ घ. ट. ठ. ड. स च. ६ घ. ट. 'न' नास्ति. ७ क. ख. ग. ज. 'करोति गर्भनिधानं' नास्ति. ८ ज. 'पुष्णाति' नास्ति. ९ च. यदि. १० क. ख. च. 'इह' नास्ति. ११ क. ख. वोढ्रवोढ्र्योः; घ. ट. ठ. ड. वोढ्रोः. १२ क. ख. च. 'एतद्' नास्ति.

पुंसां दानातिसर्गविक्रया न नैसर्गिकाः

त्केनचिन्निमित्तेन भवति । स्त्री तु निसर्गेणैव दीयते विक्रीयते विसृज्यते[1] वा । सा हि परार्थमेवोत्पद्यते तस्मादसममिति ॥ ६[2] ॥

इति निरुक्तवृत्तौ[3] अष्टमाध्यायस्य प्रथमः पादः ॥

---

**मनुष्यनामान्युत्तराणि पञ्चविंशतिर्मनुष्याः कस्मान्मत्वा कर्माणि सीव्यन्ति मनस्यमानेन सृष्टा मनस्यतिः पुनर्मनस्वीभावे मनोरपत्यं[4] मनुषो वा तत्र पञ्चजना इत्येतस्य निगमा भवन्ति ॥ ७ ॥**

---

प्रसक्तानुप्रसक्तमिदमुक्तं 'तद्यथा जनयितुः प्रजा[5]' इत्येवमादि । प्रकृतमिदानीमुच्यते ।

' मनुष्यनामान्युत्तराणि पञ्चविंशतिः ' । मनुष्याणां नामानि मनुष्यनामानि । उत्तराणि प्रकृतेभ्योऽपत्यनामभ्यः । अपत्यान्येव हि विवृद्धानि सन्ति मनुष्या इत्युच्यन्ते । कियन्ति पुनस्तानि । पञ्चविंशतिः । पञ्च च विंशतिश्च पञ्चविंशतिः । कतमानि पुनस्तानि । मनुष्याः नराः [निघ० २।७] इत्येवमादीनि । नृत्यन्ति कर्मस्विति नरा इत्येवमादि । आह । ' मनुष्याः कस्मात् ' । उच्यते । 'मत्वा' ज्ञात्वा तत एते 'कर्माणि सीव्यन्ति' । संतक्षन्तीत्यर्थः[6] । अथवा ' मनस्यमानेन ' प्रजापतिना ' सृष्टाः ' । ' मनस्यतिः पुनः ' अयं धातुः ' मनस्वीभावे ' । मनस्वीभावो नाम प्रहृष्टता । हृष्यता[7] प्रजापतिनैते सृष्टाः । अथवा ' मनोरपत्यं ' मनुष्याः । ' मनुषो वा ' अपत्यं मनुष्याः ।

' तत्र पञ्चजना इत्येतस्य निगमा भवन्ति ' संदिग्धाः[8] ।

पञ्चजनशब्दः संदिग्धः

तत्रेयमृगुदाहरणम्[9] । तद्यथा ॥ ७[10] ॥

---

१ ग. ज. अतिसृज्यते. २ ग. ७; ड. ६ इति निरुक्ततृतीयाध्याये षष्ठः खण्डः ६. ३ ठ. ड. इति ऋज्वर्थायां निरुक्तटीकायामष्ट°. ४ क. ख. द. १; छ. त. ८. ५ ठ. ड, प्रजैवमर्थीय इत्ये°. ६ घ. ट. ठ. ड. संतन्वन्ती°. ७ क. ख. घ. ट. ठ. ड. प्रहृष्यता. ८ ठ. ह. °दिग्धाः । इति निरुक्तपूर्वषट्के तृतीयाध्याये सप्तमः खण्डः. ९ ग. ज. ' ऋक् ' नास्ति. १० क. ख. १; ग. ९; ज. ९; घ. ह. ठ. ड. च. अङ्को नास्ति.

तदद्य वाचः प्रथमं मंसीय येनासुराँ अभि देवा असाम। ऊर्जाद उत यज्ञियासः पञ्चजना मम होत्रं जुषध्वम् [ ऋ० सं० १० । ५३ । ४ ] ॥ तदद्य वाचः परमं मंसीय येनासुरानभिभवेम देवा असुरा असुरता स्थानेष्वस्ता स्थानेभ्य इति वापि वासुरिति प्राणानामास्तः शरीरे भवति तेन तद्वन्तः सोऽदेवानसृजत तत्सुराणां सुरत्वमसोर-सुरानसृजत तदसुराणामसुरत्वमिति विज्ञायते । ऊर्जाद उत यज्ञियासः । अन्नादाश्च यज्ञियाश्चोर्गित्यन्ननामोर्जयतीति सतः पक्वं सुप्रवृक्णमिति वा । पञ्चजना मम होत्रं जुष-ध्वम् । गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवो निषादः कस्मान्नि-षदनो[1] भवति नि[2]षण्णमस्मिन्पापकमिति नैरुक्ताः । यत्पाञ्च-जन्यया विशा । पञ्चजनीनया विशा पञ्च पृक्ता संख्या स्त्रीपुंनपुंसकेष्वविशिष्टा बाहुनामान्युत्तराणि द्वादश बाहू कस्मात्प्रबाधत आभ्यां कर्माण्यङ्गुलिनामान्युत्तराणि द्वाविं-शतिरङ्गुलयः कस्मादग्रगामिन्यो भवन्तीति वाग्रगालि-न्यो भवन्तीति वाग्रकारिण्यो भवन्तीति वाग्रसा[3]रिण्यो भवन्तीति वाङ्कना भवन्तीति वा[4]ञ्चना भवन्तीति वापि वाभ्य[5]ञ्चनादेव स्युस्तासामेषा भवति[6] ॥ ८ ॥

---

तदद्य वाचः[7] प्रथमं मसीयेति । सौ[8]चीकस्याग्नेरार्षम् । तस्य विश्वैर्देवैः संवादः[9] । तत्रेयम् । होतृजपे विनियुक्ता [ आश्व० श्रौ० १ । २ ] ।

---

१ क. ख. छ. त. द. ' निषदनो भवति ' नास्ति. २ छ. त. निःषण्ण°. ३ क. ख. छ. त. द. ' अग्रसारिण्यो भवन्तीति वा' नास्ति. ४ क. ख. वाञ्चना; त. वाञ्चना° अ. ५ छ. द. °भ्यञ्जना°; त. °भ्यञ्जना° अ. ६ क. ख. द. २; छ. त. ९. ७ क. ख. घ. ट. वाच० जुषध्वम्; ठ. ड. वाच इति. ८ च. सूचीकस्य. ९ क. ख. घ. ट. ठ. ड. °देवैः सह संवादः.

पञ्चजनशब्दवती ऋक्

तद्वीर्यं 'वाचः परममुत्कृष्टमहमद्य मंसीय मन्ये। जान इत्यर्थः। येन वीर्येण किमिति। येनासुरानभिभवेम वयं देवाः। ऊर्जादोऽन्नमक्षयितारः। अपि च हे यज्ञियासो यज्ञसंपादिनो देवा यूयमपि च हे पञ्चजना मनुष्या निषादपञ्चमा वर्णा ममेदं होत्रं जुषध्वमासेवध्वमनुगृह्णीध्वमिति समस्तार्थः। ५

अथैकपदनिरुक्तम्। 'असुरा असुरताः स्थानेषु'। ते हि न सुष्ठु रताः स्थानेषु। चपला इत्यर्थः। अथ 'वा अस्ताः स्थानेभ्यः'। प्रच्याविता देवैरित्यर्थः। 'अपि वासुरिति प्राणनाम'। स हि 'अस्तः' क्षिप्त इव 'शरीरे भवति'। तस्य हि तत्र नित्यमवस्थानमित्यभिप्रायः। 'तेन' हि 'तद्वन्तो भवन्ति'। रो मत्वर्थे। अथवेदमन्यद्ब्राह्मणोक्तं निर्वचनं स्यात्। 'सोर्देवानसृजत'। सुरिति प्रशस्तनाम। प्रशस्तादात्मनः प्रदेशात्प्रजापतिः सुरानसृजत। उर्ध्वेभ्यः प्राणेभ्यः। तदुक्तम्। 'ऊर्ध्वमुदतृणत्पूर्वपक्षः पञ्चदशस्तेन देवानसृजत' [ मैत्रा० सं० १।९।३ ] 'तत्सुराणां सुरत्वम्' इति विज्ञायते। एवमेव प्रातिलोम्येन 'असोरसुरानसृजत'। असुरिति प्रशस्तप्रतिषेधः। अप्रशस्तादात्मनः प्रदेशात्प्रजापतिरसुरानसृजत। तदुक्तम्। 'अवाङ्वातिरदपरपक्षस्तेनासुरानसृजत' [ मैत्रा० सं० १।९।३ ] इति। ऊर्जाद उत यज्ञियासः। अन्नादाश्च यज्ञियाश्च। 'ऊर्गित्यन्ननाम'। तद्धि 'ऊर्जयति'। बलिष्ठं करोतीत्यर्थः। अथ 'वा पक्वम्' एतत् 'सुप्रवृक्णं' भवति 'इति' ककाररेफसामान्यात्पचेर्व्रश्चतेर्वा स्यात्। द्वयोरपि वा। तद्धि पक्वं सत् मृदुत्वात्सुच्छेद्यं भवति। १० १५ २०

पञ्चजनशब्दस्यार्थौ

निषादनाम्ना कोऽभिधीयते

पञ्चजना मम होत्रं जुषध्वम्। एतदत्र संदेहपदमेकमुद्धृत्य प्रदर्शितम्। 'गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके' मन्यन्ते। 'चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः'। निर्षद्य निषद्य हन्तीति प्राणिवधजीवनः। अथवा 'निषण्णमस्मिन्पापकमिति' निषादः। सौधन्वना इत्येके २५

१ व. ट. ठ. ड. °त्कृष्टं महदद्य°. २ च. मसीय. ३ व. ट. ठ. ड. हे देवाः. ४ क. ख. व. ट. असृजत्. ५ ग. ज. सुप्रवृक्कं. ६ घ. ट. ठ. ड. °त्सुछेद्यं. ७ च. 'प्र' नास्ति. ८ ग. ज्र. निषिद्य निषिद्य. ९ ज. प्राणिगन्धजीवनः.

मन्यन्ते । स च रथकारः । तस्य हि[1] भिन्नकालमाधानं श्रूयते । ' वर्षासु रथकारः ' । ऋभूणां त्वेति रथकारस्येति च[2] मन्त्रभेदः [ तै० ब्रा० १ । १ । ४ ] । सौधन्वना ऋभवः [ ऋ० सं० १ । ११० । ४ ॥ ३ । ६० । ४ ] इति च मन्त्रलिङ्गात् ।

५ यथा तु पञ्चजनशब्देन मनुष्या एव निषादपञ्चमा वर्णा उच्यन्ते तथैव[3] निगमः[4] । ' यत्पाञ्चजन्यया विशेन्द्रे घोषा असृक्षत । अस्तृणाद्बर्हणा विपो३ऽर्यो मानस्य स क्षयः [ ऋ० सं० ८ । ६३ । ७ ] ॥

पञ्चजनशब्देन निषादपञ्चमा वर्णा यस्यामुच्यन्ते सा ऋक्

प्रगाथेन दृष्टेयमनुष्टुबैन्द्री । पृष्ठयस्य पञ्चमेऽहनि १० मरुत्वतीयशस्त्रस्य प्रतिपदेषा [ आश्व० श्रौ० ७ । १२ ] । यदा पञ्चजनीनया विशा पञ्चजनसमुदायलक्षणया सहितैः स्तोतृभिर्ऋत्विग्भिरवर्षतीन्द्रे वर्षार्थिभिर्घोषाः स्तुतीरसृक्षतासृज्यन्त । निषादपञ्चमा वर्णा आर्ताः सन्तो वर्षाभावेऽस्तुवतैवेन्द्रं वर्ष भगवन्नित्येवमर्थयन्तः । अत इदमुक्तं यदा पाञ्चजन्यया विशा सह घोषा ऋत्विग्भिर१५ सृज्यन्तेति । तदा किमिति । तदोपश्रुत्य स इन्द्रस्ताभिः प्रह्लादितचेता अस्तृणादहन्वर्षार्थं मेघान्बर्हणा परिवृद्धेन वधेन परिवृद्धानि वा मेघजालानि । विपो विपाटयिता मेघानां मेधावी वा । अर्य ईश्वरः कृत्स्नस्य जगतः । कस्मात्पुनरस्तृणात् । यस्मान्मानस्य स क्षयः । मानस्य दर्पस्य वीर्यस्य[5] बलस्य स क्षयो निवासस्तस्मादस्तृणात् । अवीर्यो हि स्तूयमानः[6] २० परितुष्टोऽपि किं कुर्यात् । अथवा मानस्य सत्कारस्य पूजायाः स इन्द्रः क्षयो निवासो भाजनमिति मन्वानैः[7] स्तोतृभिर्वर्षार्थिभिः सत्कृतस्तान्वर्षप्रदानेन प्रतिसत्कारयिष्यन्नस्तृणान्मेघान्[8] । अपि वास्य[9] जगन्निर्माणस्य देवादेः स्थावरान्तस्य स इन्द्रः क्षयो निवास आश्रयो यस्मात्ततो मेघानस्तृणात् । अनावृष्टिद्वारेणास्य जगतो विनाशो मा भूत्कथं नामेत्यनेनाभि[10]-२५ प्रायेण ।

---

१ क. ख. घ. ट. ठ. ड. ' हि ' नास्ति. २ च. ' च ' नास्ति. ३ क. ख. घ. ट. ठ. ड. तथैव; ग. तथैवं° ष. ४ ग. ज. निगमः । १० । यत्पा°. ५ क. ख. घ. ट. ठ. ड. बलस्य वीर्यस्य. ६ क. ख. घ. ट. ठ. ड. °मानः किं कुर्यात्परितुष्टोऽपि ७ घ. ठ. ठ. ड. मत्वा तैः. ८ ठ. ड. प्रतिसंस्कार°. ९ ठ. ड. ' अस्य ' ३० नास्ति. १० क. ख. व. ट. ठ. ड. नामेत्यभिप्रायः.

'पञ्च पृक्ता संख्या' । सा हि 'स्त्रीपुंनपुंसकेष्वविशिष्टा' एव भवति । तद्यथा । पञ्च स्त्रियः पञ्च पुरुषाः पञ्च कुलानीति । एवं पञ्चशब्दे स्त्रीपुंनपुंसकेषु विशेषो नास्ति ।

'बाहुनामान्युत्तराणि द्वादश' । बाह्वोर्नामानि बाहुनामानि । उत्तराणि प्रकृतेभ्यो मनुष्यनामभ्यः । मनुष्याणामेव हि बाहवो भवन्तीति मनुष्यनामभ्य उत्तराणि बाहुनामानि । कियन्ति पुनस्तानि । द्वादश । द्वे[1] च दश च द्वादश । कानि[2] पुनस्तानि । 'आयती[3] च्यवाना[4] अभीशू' [ निघ० २ । ४ ] इत्येवमादीनि । आभिश्रीभवतः[5] कर्मभिरेताविति आयती । च्यावयितारौ कर्मणां च्यवाना । अभीशू अभ्यश्नुवाते कर्माणीत्येवं योज्यम्[6] । आह । 'बाहू कस्मात्' । उच्यते । 'प्रबाधत आभ्यां[7]' प्रकर्षेण बाधते प्रक्षेपयत्याभ्यां 'कर्माणि' । १०

'अङ्गुलिनामान्युत्तराणि द्वाविंशतिः' । अङ्गुलीनां नामान्यङ्गुलिनामानि । उत्तराणि प्रकृतेभ्यो बाहुनामभ्यः । बाह्वोरेवं[8] ह्यङ्गुलयो भवन्तीति बाहुनामभ्य उत्तराण्यङ्गुलिनामानि । कियन्ति पुनस्तानि । द्वाविंशतिः । द्वे च विंशतिश्च[9] द्वाविंशतिः । कतमानि पुनस्तानि । 'अग्रुवः अण्व्यः क्षिपः' [ निघ० २ । ५ ] इत्येवमादीनि । बाह्वग्रेऽवस्थिता अवन्त्येताः कर्माणीत्यग्रुवः । अण्व्यः परिमाणत एताः । क्षिप्यत आभिः क्षेतव्यं द्रव्यमिति क्षिप इत्येवमादि । आह । 'अङ्गुलयः कस्मात्' । उच्यते । 'अग्रगामिन्यो[10] भवन्ति' । अग्रे ह्येताः कर्मसु गच्छन्ति । अथवा 'अग्रगालिन्यो भवन्ति' अग्रे ह्येता गलन्ति उदकानि । 'अग्रकारिण्यो वा भवन्ति' । अग्रे ह्येताः कर्माणि कुर्वन्ति । 'अङ्कना भवन्तीति वा' । यो[11] ह्येताभिरभिहन्यतेऽसावङ्कित इव भवति । 'अपि वाभ्यञ्चनादेव स्युः' । एता हि तं तमर्थमाभिमुख्येनाञ्चन्ति गच्छन्ति । ये तु 'अभ्यञ्जनाः' इत्यधीयते[12] तेषामभ्यज्यत आभिरित्यङ्गुलयः ।

---

१ ग. ज. द्वौ च°; घ. ट. ठ. ड. द्वौ दश द्वादश. २ क. ख. घ. ट. ठ ड. कतमानि. ३ च. आयुती. ४ च. च्यवना. ५ घ. ट. ठ. ड. आभिश्रीयभवतः. ६ ग. ज. एवं योज्यं. ७ क. ख. घ. ट. ठ. ड. आभ्यां कर्माणि प्रक°. ८ ग ज. °रेवं. ९ घ. ट. 'च द्वाविंशतिः' नास्ति. १० च. अग्रगामिन्यो. ११ क. ख. घ. ट. ठ. ड. तथाहि यो°. १२ क. ख. अभिधीयन्ते; ग. ज. ठ. ड. अभिधीयते.

' तासाम् ' अङ्गुलीनाम् ' एषा ' निर्वाचिका ऋक् ' भवति ' ॥ ८[1] ॥

---

दशावनिभ्यो दशकक्ष्येभ्यो दशयोक्त्रेभ्यो दशयोजनेभ्यः । दशाभीशुभ्यो अर्चताजरेभ्यो दश धुरो दश युक्ता वहद्भ्यः [ ऋ० सं० १० । ९४ । ७ ] ॥ अवनयोऽङ्गुलयो भवन्त्यवन्ति कर्माणि कक्ष्याः प्रकाशयन्ति कर्माणि योक्त्राणि योजनानीति व्याख्यातमभीशवोऽभ्यश्नुवते कर्माणि । दश धुरो दश युक्ता वहद्भ्यः । धूर्धूर्वतेर्वधकर्मण इयमपीतरा धूरेतस्मादेव विहन्ति वहं धारयतेर्वा कान्तिकर्माण उत्तरे धातवोऽष्टादशान्ननामान्युत्तराण्यष्टाविंशतिरन्नं कस्मादानतं भूतेभ्योऽत्तेर्वात्तिकर्माण उत्तरे धातवो दश बलनामान्युत्तराण्यष्टाविंशतिर्बलं कस्माद्बलं भरं भवति बिभर्तेर्धननामान्युत्तराण्यष्टाविंशतिरेव धनं कस्माद्धिनोतीति सतो गोनामान्युत्तराणि नव क्रुध्यतिकर्माण उत्तरे धातवो दश क्रोधनामान्युत्तराण्येकादश गतिकर्माण उत्तरे धातवो द्वाविंशशतं क्षिप्रनामान्युत्तराणि षड्विंशतिः क्षिप्रं कस्मात्संक्षिप्तो विकर्षोऽन्तिकनामान्युत्तराण्येकादशान्तिकं कस्मादानीतं भवति संग्रामनामान्युत्तराणि षट्चत्वारिंशत्संग्रामः कस्मात्संगमनाद्वा संगरणाद्वा संगतौ ग्रामाविति वा तत्र खल इत्येतस्य निगमा भवन्ति ॥ ९[2] ॥

---

दशावनिभ्य[3] इति । अवनय इत्येवमादीनि नद्यादिनामभिः संदिह्यन्ते तदर्थमियमुदाह्रियते । त्रिष्टुबेषा । अर्बुदस्य काद्रवेयस्य सर्पस्यार्षम् । ग्रावस्तुतौ विनियुक्ता । [ आश्व० श्रौ० ५ । १२ ] दशभिरवनिभिर्य

अङ्गुलिवाचकानि बहुविधानि नामानि

---

१ क. ख. २; ग. च. ज. ११; घ. ट. अङ्को नास्ति; ठ. इति निरुक्तवृ° अष्टमः; ड. इति निरुक्तभाष्ये पूर्वषट्के तृतीयाध्यायेऽष्टमः खण्डः समाप्तः. २ क. ख. द. ३; छ. त. १०. ३ घ. ट. दशावनिभ्यो० वहद्भ्यः । अवनय°; ठ. ड. ' दशावनिभ्य इति ' नास्ति. ४ क. ख. घ. ट. ठ. ड. °मिदमु°.

यस्यां प्रयुज्यन्ते सा ऋक्

उपचर्यन्ते ग्रावाणः सोमाभिषवकर्मणि प्रवृत्ते ते दशावनयस्तेभ्यो दशावनिभ्यो हे ऋत्विजो यूयमभ्यर्चत । स्तुतीः प्रोच्चारयतेत्यर्थः । एवमेव दशभिः कक्ष्याभिर्य उपचर्यन्ते ते दशकक्ष्यास्तेभ्यो दशकक्ष्येभ्योऽर्चत । दशभिर्योक्त्रैर्य उपचर्यन्ते ते दशयोक्त्रास्तेभ्यो दशयोक्त्रेभ्योऽर्चत । दशभिर्योजनैरुपचर्यन्ते ये ते दशयोजनास्तेभ्यो दशयोजनेभ्योऽर्चत । दशभिरभीशुभिरुपचर्यन्ते ते दशाभीशवस्तेभ्यो दशाभीशुभ्योऽर्चत । अजरेभ्योऽजरणधर्मभ्यो[2] दश धुरो य एते ग्रावाणस्तेभ्योऽर्चत । दशभिर्दशभिरङ्गुलीभिर्य एते युक्ता वहन्ति ग्रावाणस्तेभ्य एभ्यो दश युक्ता वहद्भ्योऽर्चतेति समस्तार्थः ।

अथैकपदनिरुक्तम् । 'अवनयोऽङ्गुलयो भवन्ति' । ता हि 'अवन्ति कर्माणि' रक्षन्ति भक्षयन्ति वा । क्षपयन्तीत्यर्थः । 'कक्ष्याः' अप्यङ्गुलय एव[3] । ता हि 'प्रकाशयन्ति कर्माणि' । प्रकटीकुर्वन्तीत्यर्थः । 'योक्त्राणि' इत्येतत्पदं 'योजनानीति' अनेन पदेन 'व्याख्यातम्' । योजनानीत्येतन्निगदसिद्धमेव । 'अभीशवः' अप्यङ्गुलय एव । ता हि 'अभ्यश्नुवते कर्माणि' । व्याप्नुवन्तीत्यर्थः । अनेकैर्नामभिरङ्गुलय एवोक्ता अनेकक्रियाशक्त्युपप्रदर्शनाय[4] । एते ग्रावाण एवमनेकक्रियायोगिनीभिरङ्गुलीभिर्गृहीताः । तदर्थमर्चतेति । 'धूर्धूर्वतेर्वधकर्मणः' । ध्वरति धूर्वतीति वधकर्मसु पठितः[5] [ निघ० २ । १९ ] । 'इयमपीतरा धूः' अनडुदादिसंबन्धिनी[6] 'एतस्मादेव' धातोर्वधकर्मणः । सापि हि[7] 'विहन्ति वहम्[8]' अनडुहोऽश्वस्य वा । 'धारयतेर्वा' । सा हि धारयत्यश्वमनड्वाहं वा ।

'कान्तिकर्माण उत्तरे धातवोऽष्टादश' । स खल्वयं पुरुषो व्याख्यातः सपादः साङ्गुलिः[9] । 'तं खलु काम एव प्रथममाविवेश' इत्युत्तरे कान्त्यर्था इत्यर्थः । यदपि ह्यकान्तं भवति तदप्यङ्गुलीभिरेव[10] कान्तं क्रियत इत्यतोऽ-

---

१ क. ख. घ. ट. ठ- ड. य उपचर्यन्ते ते°. २ च. °धर्मेभ्यः. ३ ग. ज. 'अप्यङ्गुलय एव' नास्ति. ४ च. 'प्र' नास्ति. ५ क. ख. घ. ट. ठ. ड. पठितम्. ६ क. ख. घ. ट. ठ. ड. अनडुहादि. ७ क. ख. घ. ट. ठ. ड. 'हि' नास्ति. ८ च. वहनं. ९ क. ख. ग. ज. घ. ट. ठ. ड. साङ्गुलः. १० घ. ट. अङ्गुलिभि°.

ज्वलतिनामभ्य उत्तरे कान्तिकर्माणः समाम्नाताः । कियन्तः पुनस्ता इति । अष्टादश । अष्टौ च दश च । कतमे पुनस्त इति । 'वश्मि उश्मसि अवष्टि ' [ निघ० २ । ६ ] इत्येवमादयः ।

'अन्ननामान्युत्तराण्यष्टाविंशतिः' । अन्नस्य नामान्यन्ननामानि । उत्तराणि प्रकृतेभ्यः कान्तिकर्मभ्यः । अन्नमेव हि कान्तं सर्वभावेभ्यो ५ भवतीति कान्तिकर्मभ्य उत्तराण्यन्ननामानि । कियन्ति पुनस्तानि । अष्टौ च विंशतिश्चाष्टाविंशतिः । कतमानि पुनस्तानि । 'अन्धः वाजः पाजः प्रयः पृक्ष' [निघ० २ । ७] इत्येवमादीनि । अन्ध इत्ययं निर्वक्ष्यति [निरु० ५।१ ]। वाजयितव्यं पूजयितव्यमेतद्भोजनायोपस्थितं भवतीति वाजः । १० पीयत इति पाजः । प्रयः पानादेव । आह । 'अन्नं कस्मात्' । उच्यते । आभिमुख्येन ह्येतत् 'नतं' प्रह्वीभूतं भवति भोजनाय भूतानाम् । 'अत्तेर्वा' । 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते' इति ह्युक्तम् [ तै० उ० २ । २ ] ।

'अत्तिकर्माण उत्तरे धातवो दश' । अन्नमेव ह्यद्यत इत्यन्ननामभ्य १५ उत्तरेऽत्तिकर्माणः समाम्नाताः । कियन्तस्त इति । दश । कतमे पुनस्ते । 'आवयति भर्वति बभस्ति' [ निघ० २ । ८ ] इत्येवमादयः ।

'बलनामान्युत्तराण्यष्टाविंशतिः' । बलस्य नामानि बलनामानि । उत्तराणि प्रकृतेभ्योऽत्तिकर्मभ्यः । य एव ह्यदन्ति त एव बलवन्तो भवन्तीत्यत्तिकर्मभ्य उत्तराणि बलनामानि समाम्नातानि । कियन्ति पुन- २० स्तानि । अष्टाविंशतिः । अष्टौ च विंशतिश्च । कतमानि पुनस्तानि । 'ओजः पाजः शवः' [ निघ० २ । ९ ] इत्येवमादीनि । ओज ओजतेर्वोब्जतेर्वेत्येवमादि । आह । 'बलं कस्मात्' । उच्यते । तद्धि 'भरं भवति' । भ्रियते हि स यो बलिष्ठो भवति । 'बिभर्तेः' वा । ह्यन्येषां भर्ता भवति ।

२५ 'धननामान्युत्तराण्यष्टाविंशतिरेव' । य एव हि बलवन्तो भवन्ति त एव धनं प्राप्नुवन्तीति बलनामभ्य उत्तराणि धननामानि । कियन्ति

---

१ च. ट. ठ. ड. °ज्वलिना°. २ क. ख. च. ट. ठ. ड. चाष्टादश । कत°. ३ क. ख. घ. ङ. अष्टाविंशतिः । अष्टौ°. ४ च. 'पाजः' नास्ति. ५ ग. ज. पयः. ६ घ. ट. ठ. ड. भजनाय. ७ क. ख. घ. ट. ठ. ड. 'हि' नास्ति. ८ ग. च. अ. 'कियन्तस्त इति । दश' नास्ति. ९ च. °तेर्वौब्जते°, १० ग. ज. भरतं; च. भृतं.

पुनस्तानि । अष्टाविंशतिरेव । धननामान्युत्तराण्यष्टाविंशतिरिमान्यप्यष्टाविंशतिरेवेत्येवशब्दः । कतमानि पुनस्तानि । 'मघं रेक्णः रिक्थं वेदः' [ निघ० २ । १० ] इत्येवंप्रभृतीनि । रिच्यत इति रेक्णः । अतिरिच्यमानमेतदिहैव[2] तिष्ठति म्रियमाणस्येति रिक्थम् । विद्यते लभ्यत एतदिति वेदः । इत्येवमादि । आह । 'धनं कस्मात्' । उच्यते । 'धिनोतीति' एवं 'सतः' शब्दस्य कर्तरि कारके । सत इति कारकावधारणम् । धिनोतिस्तर्पणार्थः [ धा० १ । ५९३ ] ।

'गोनामान्युत्तराणि नव' । गवां नामानि गोनामानि । उत्तराणि प्रकृतेभ्यो धननामभ्यः । गाव एव हि प्रकृष्टं[3] धनमिति धननामभ्य उत्तराणि गोनामानि । कियन्ति पुनस्तानि । नव । कतमानि पुनस्तानि । 'अघ्न्या उस्रा उस्रिया' [ निघ० २ । ११ ] इत्येवमादीनि । अघ्न्या अहन्तव्या भवतीत्येवमादि निर्वचनम् । उक्तनिर्वचनो हि[4] गोशब्दः [ निरु० २ । ५ ] । अतो गौः कस्मादिति न ब्रवीति ।

'क्रुध्यतिकर्माण उत्तरे धातवो दश' । धनार्थमेव हि गवार्थं च क्रोधो भवतीति गोनामभ्य उत्तरे क्रुध्यर्थाः समाम्नाताः । कतमे पुनस्त इति । 'रेळते[5] हेळते' [ निघ० २ । १२ ] इत्येवमादयः ।

क्रुध्यर्थसंबन्धेनैव 'क्रोधनामान्युत्तराणि' । कियन्ति पुनस्तानि । एकादश । कतमानि पुनस्तानि । 'हेळः[6] हरः ह्वणिः त्यजः' [ निघ० २ । १३ ] इत्येवमादीनि । हे अरे इत्यनेनाविष्टो ब्रवीति[7] हेडः । नीचैरनेन नरकं प्रति ह्रियन्ते प्राणिन इति ह्वणिः । त्यजत्यनेनाविष्टो[8] धर्मं जहातीति त्यज[9] इत्येवमादि ।

'गतिकर्माण उत्तरे धातवो द्वाविंशं शतम्' [ निघ० २ । १४ ] । क्रुद्धा एवं[10] सन्तः सुतरां गच्छन्तीति क्रोधनामभ्य उत्तरे गच्छतिकर्माणः[11] समाम्नाताः ।

---

१ क. ख. च. 'अपि' नास्ति. २ क. ख. घ. ट. ठ. ड. 'त्येवमादीनि. ३ च. प्रकृष्टधनं. ४ च. 'हि' नास्ति. ५ क. ख. घ. रेलते हेलते; ग. च. ज. रेडते हेडते. ६ क. हेडः; ग. च. ज. घ. हेलः. ७ ग. ज. ब्रवीतीति. ८ घ. ट. त्यजः । त्यजत्य°; ठ. ड. त्यजः । त्यज इत्यने°. ९ च. 'नाविशिष्टो°. १० च. एव हि. ११ क. ख. घ. ट. ठ. ड. गतिकर्मा°.

‘ क्षिप्रनामान्युत्तराणि षड्विंशतिः ’ । गतिसंबन्धादेव क्षिप्रनामान्युत्तराणि समाम्नातानि । कियन्ति पुनस्तानि । षड्विंशतिः । षट् च[1] विंशतिश्च । कतमानि पुनस्तानि । ‘ नु मक्षु द्रवत् ’ [ निघ० २ । १५ ] इत्येवमादीनि । नुन्न इव हि[2] क्षिप्रं गच्छतीति नु । मां क्षिणोति मां क्षिणोतीति सर्व एव क्षिप्रगामिनं मन्यन्त इति मक्षु । द्रवद्द्रवतेरेवेत्येवमादि । आह । ‘ क्षिप्रं कस्मात् ’ । उच्यते । [3]विक्रुष्टो विक्षिप्तोऽर्थः ‘ संक्षिप्तः ’ सत्क्षिप्रमुच्यते[4] ।

‘ अन्तिकनामान्युत्तराण्येकादश ’ । य एव हि क्षिप्रं गच्छति स एवाभिप्रेतस्यार्थस्य[5]ान्तिके समीपे भवतीति क्षिप्रनामभ्य उत्तराण्यन्तिकनामानि । कतमानि पुनस्तानि । ‘ तळित्[6] आसात्[7] ’ [ निघ० २ । १६ ] इत्येवमादीनि । ताड्यतेऽस्मिन्प्रदेशेऽत्रस्थित इति तडिदित्युच्यते । अन्तिकः प्रदेशो य आसन्नः स आसादित्येवमादि योज्यम् । आह । ‘ अन्तिकं कस्मात् ’ । उच्यते । तद्धि ‘ आनीतं भवति ’ संनिकृष्टत्वात् ।

‘ संग्रामनामान्युत्तराणि षट्चत्वारिंशत् ’ । संग्रामस्य नामानि[8] उत्तराणि प्रकृतेभ्योऽन्तिकनामभ्यः । अन्तिकीभूतानामेव हि संग्रामो भवतीत्यन्तिकनामभ्य उत्तराणि संग्रामनामानि । कियन्ति पुनस्तानि । षट्चत्वारिंशत् । षट् च चत्वारिंशच्च षट्चत्वारिंशत् । कतमानि पुनस्तानि । ‘ रणः विवाक् नदनुः[9] ’ [ निघ० २ । १७ ] इत्येवमादीनि । रणन्त्यस्मिञ्शूरा इति रणः । विविधां[10] शूराणामत्र वाग्भवतीति विवाक् । नदन्त्यस्मिन् शूरा इति नदनुरि[11]त्येवमादि योज्यम् । आह । ‘ संग्रामः कस्मात् ’ । उच्यते । ‘ संगमनाद्वा ’ । संगच्छन्ते हि[12] परस्परेण तत्र योधाः । ‘ संगरणाद्वा ’ । संगृणन्ति संशब्दायन्ते[13] शूरास्तत्र परस्परेण । ‘ संगतौ ग्रामाविति वा ’ । ग्राम इति संघात उच्यते[14] । तौ हि परस्परविजिगीषया समागतौ तत्र भवतः ।

---

१ ठ. ड. ‘ च ’ नास्ति. २ क. ख. घ. ट. ठ. ड. ‘ हि ’ नास्ति. ३ च. विप्रकृष्टो°. ४ घ. ट. ठ. ड. °प्रमित्युच्यते. ५ क. ख. घ. ट. ठ. ड. °प्रेतार्थस्य. ६ क. ख. ग. घ. च. ज. ट. तडित्. ७ ग. ज. घ. ट. आसा इत्ये°. ८ क. ख. घ. ट. ठ. ड. °नामानि संग्रामनामानि । उत्त°. ९ ग. ज. नदनु इत्ये°; घ. ट. च. नदन इत्ये°. १० च. विविधाः शूरास्तेषामत्र°. ११ ग. च. ज. घ. ट. ठ. ड. नदन इत्ये. १२ ग. ज. ‘ हि ’ नास्ति. १३ ग. च. ज. संशब्दयन्ति. १४ क. ख. घ. ट. ठ. ड. इत्युच्यते.

'तत्र' षट्चत्वारिंशके संग्राम नामगणे 'खल इत्येतस्य' नाम्नो 'निगमाः' संदिग्धा 'भवन्ति'। इतरोऽपि खलशब्दः संदिग्धः धान्यखलः खल इत्युच्यते। संग्रामोऽपि च। तत्रैवं[2] सस्यस्यामृचि वक्ष्यमाणायां 'खले न पर्षान्' इति व्यपदेशाद्विभागो लक्ष्यते सस्यखलसंग्रामखलयोः ॥ ९[3] ॥ ५

---

अभी[3]दमेकमेको अस्मि नि[4]ष्षाळभी द्वा किमु त्रयः करन्ति। खले न पर्षान्प्रतिहन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः [ ऋ० सं० १०। ४८। ७ ]॥ अभिभवामीदमेकमेकोऽस्मि निःषहमाणः सपत्नानभिभवामि द्वौ १० किं मा त्रयः कुर्वन्त्येक इता संख्या द्वौ द्रुततरा संख्या त्रयस्तीर्णतमा संख्या चत्वारश्चलिततमा संख्याष्टावश्नोतेर्नव न वननीया नावाप्ता वा दश दस्ता दृष्टार्था वा विंशतिर्द्विर्दशतः शतं दशदशतः सहस्रं सहस्वदयुतं नि[6]युतं प्रयुतं तत्तदभ्यस्तमम्बुदो[7] मेघो भवत्यरणमम्बु तद्दोऽम्र्बुदोऽम्बु[8]भद्धातीति वाम्बुमद्भवतीति वा स यथा महान् १५ बहुर्भवति वर्षस्तदिवार्बुदम्। खले न पर्षान्प्रतिहन्मि भूरि। खल इव पर्षान्प्रतिहन्मि भूरि खल इति संग्रामनाम खलतेर्वा स्खलतेर्वायमपीतरः खल एतस्मादेव समास्कन्नो भवति। किं मा निन्दन्ति शत्रवोऽनिन्द्राः। य २० इन्द्रं न वि[10]विदुरिन्द्रो ह्यहमस्म्यनिन्द्रा इतर इति वा[11] व्याप्तिकर्माण उत्तरे धातवो दश तत्र द्वे नामनी आक्षाण आश्नुवान आपान आप्नुवानो वधकर्माण उत्तरे धातवस्त्रयस्त्रिंशत्तत्र वि[12]यात इत्येतद्वियातयत इति वा वियातयेति वा। २५

---

१ क. ख. च. °रिंशत्के. २ च. तस्यैवं. ३ क. ख. ३; ग. च. ज. १२; घ. ट. अङ्को नास्ति; ठ. ड. ९। इति निरुक्तभाष्ये तृतीयाध्याये नवमः खण्डः. ४ ङ. थ. ठ. ड. निःषाळभी; छ. निःषालभी; त. द. निष्षालभी. ५ क. ख. त. द. निष्षह°. ६ छ. त. द. प्रयुतं नियुतं. ७ क. ख. छ. त. द. °मर्बुदो°. ८ छ. त. द. 'अम्बुदः' नास्ति. ९ छ. त. द. °म्बुमद्भवतीति वाम्बुमद्धातीति वा. १० क. ख. छ. त. द. °न विदु°. ११ छ. 'वा' नास्ति; द. इति व्याप्ति° वा. १२ छ. वियातय.

**आखण्डल प्रहूयसे । आखण्डयितः खण्डं खण्डयतेस्ताडि-दित्यन्तिकवधयोः संसृष्टकर्म ताडयतीति सतः ॥ १० ॥**

---

अभी३दमेक० निन्द्राः । वैकुण्ठस्येन्द्रपुत्रस्येयमार्षम् । जगती । दशरात्रस्य नवमेऽहनि निष्केवल्ये शंस्यते [ आश्व० ८।७ ] । आध्यात्मिको मन्त्रः । इदं तावज्जगदेक एवाहमभ्यस्मि अभिभवामि अभिभूय च वर्ते । अस्य सर्वस्याहमेकोऽधिपतिरित्यभिप्रायः । कथं पुनरभिभवाम्यहमेतत् । एकमेको निष्षाट् निःषहमाणः सपत्नान् । शत्रून्निश्चयेनाधिकं वाभिभवामीत्यर्थः । सहतिरभिभवार्थश्छन्दसि । कथं पुनरभिभवन्सपत्नानहमस्य जगत आधिपत्ये वर्ते । यत एकं तावदागतं सन्तमेक एवाभिभवामि सपत्नम् । अभी द्वा । द्वावप्यागतौ सन्तावेक एवाभिभवामि । किमु त्रयः करन्ति । त्रयोऽपि युगपदागताः सन्त एकाकिनोऽपि मम किं कुर्वन्ति । न किंचिदपीत्यभिप्रायः । किंच । खले न पर्षान्गाह्यमाने हन्यमाने । गम्यमानोऽत्र एकः खलशब्दः उपमानमुपमासंबन्धात् । यथा खले खलस्थाने कर्षकेण पर्षान्बहूनपि संचितान्पूलानप्रतिबन्धेन क्षुद्येरन्नेवमहमपि भूरीनपि शत्रूनागतान्क्षणादेव तैरप्रतिबध्यमानो हन्मि । तमेवंप्रभावं सन्तं मां किं निन्दन्ति शत्रवः । नाहं निन्दार्हः स्तव्योऽहमित्यभिप्रायः । अपि चानिन्द्राः ये मामिन्द्रं न विदुर्याथात्म्यतस्ते कथमविज्ञायैव मां निन्दन्ति । नैतन्न्याय्यमित्यभिप्रायः । अनिन्द्रा इतर इति वा । अथवानिन्द्राः सन्त आत्मना कथमिन्द्रं सन्तं मां निन्दन्ति । ननु नामेन्द्रत्वेनैवाहमतिरिक्तस्तेभ्योऽथ कथमितरे मां निन्दन्ति । अनिन्द्राः सन्तो न लज्जन्तीत्यभिप्रायः । इति समस्तार्थः ।

अस्यामृचि खलशब्दोऽर्थद्वयवाची

---

१ क. ख. छ. त. द. °यितः । तलिदि° ( क. ख. तडिदि° ). २ छ. त. द. तालयती°. ३ क. ख. द. ४; छ. त. ११. ४ च. ठ. ड. °मेकमिति । वैकु;° ज. सर्वा ऋक् पठ्यते. ५ क. ख. घ. ट. ठ. ड. भवामि; ग. ज. वर्ते भवामि. ६ ग. घ. ट. ठ. ड. निष्पाट्. ७ क. ख. घ. ट. निष्षह°. ८ क. ख. घ. ट. ठ. ड. यावत्. ९ घ. ट. ड. एवामि । किमु°; ठ. एवास्मि । किमु°. १० ग. ज. 'गाह्यमाने हन्यमाने' नास्ति. ११ क. ख. घ. ट. ठ. ड. गम्यमानेऽन्ने एक°. १२ ग. ज. 'उपमानं' नास्ति. १३ ग. च. ज. उपमानसंबन्धात्. १४ च. कर्षान्. १५ ग. च. ज. मल्लान्. १६ ग. ज. क्षुद्येर°, १७ क. ख. ग. ज. न तु.

अथैकपदनिरुक्तम् । ' एक इता संख्या ' गता । संख्यात्वं प्रातेस्त्वर्थः । द्व्यादिकं वा परं गता । ' द्वौ द्रुततरा संख्या ' एकस्याः सकाशात् । ' त्रयस्तीर्णतमा संख्या ' द्वयोः सकाशात् । प्रसक्तानुप्रसक्तमुच्यते । 'चत्वारश्चलिततमा संख्या' त्रिभ्यः सकाशात् । 'अष्टावश्नोतेः' । ते हि सप्तसंख्येयां व्याप्य वर्तन्ते । ' नव ' इति या संख्या सा ' न वननीया ' न संभजनीया भवति । नवसंख्यायुक्तायां हि तिथौ न कश्चिदप्यारम्भः क्रियते । ' दश ' इति या संख्या सा ' दस्ता ' । दशान्तैव हि संख्या भवति । ' दृष्टार्था वा ' । दृष्टार्थैव हि दशानामुपरि पुनः पुनर्दृश्यते संख्या । तद्यथा । एकादशेत्येवमादि । तस्माद्दृष्टार्थदर्शनाद्दशेत्युच्यते । ' विंशतिर्द्विदशतः ' । द्विर्दश विंशतिरित्युच्यते । ' शतं दश दशतः ' । दश दशतः समुदिताः शतमुच्यन्ते । ' सहस्रं सहस्वत् ' । सह इति बलनाम तेन तद्वत् । दुर्बलानामपि सहस्रं समुदितं बलवदेव भवति संघातबलीयस्त्वात् । ' अयुतं नियुतं प्रयुतं तत्तदभ्यस्तम् ' । सहस्रं दशकृत्वोऽभ्यस्तमयुतम् । आमिश्रीभूतमयुतमित्युच्यते । अयुतमपि दशकृत्वोऽभ्यस्तं नियुतमित्युच्यते । नियुतमपि दशकृत्वोऽभ्यस्तं प्रयुतमित्युच्यते । अथार्बुदशब्दनिर्विवेक्षया अम्बुशब्दं निर्वक्ति । ' अरणशीलं ' गमनशीलम् ' अम्बु तद्दः ' तस्य दाता मेघः सः ' अम्बुदः ' इत्युच्यते । ' स यथा ' उदकभावमापद्यमानो ' महान् बहुर्भवति वर्षस्तादिवार्बुदम् ' । तदपि वर्षदिव यद्बहु द्रव्यजातं भवति तदर्बुदमित्युच्यते । ' खल इति संग्रामनाम स्खलतेर्वा ' भ्रंशयत्यर्थस्य [धा० १ । ५४९] । भ्रंशयन्ति हि तत्र योधाः । ' खलतेर्वा ' हिंसार्थस्य । हिंस्यन्ते हि तत्र परस्परेण । ' अयमपीतरः खलः ' धान्यखलः ' एत-

१ क. ख. घ. ट. ठ. ड. °वापीयं ग°. २ क. ख. ग. ज. संख्या; ठ. ड. संख्याकां. ३ क. ख. घ. ट. ठ. ड. दशकृत्वोऽभ्यस्ता या दश ताः समुदिताः शतमित्युच्यन्ते । सहस्रं°; ट. पुस्तके पुस्तकस्थोऽपि पाठः प्रान्ते लिख्यते. ४ घ. ट. ठ. ड. ' नियुतं प्रयुतं ' नास्ति. ५ च. निर्विविक्षया. ६ क ख. घ. ट. ठ. ड. ' तद्दः ' नास्ति; ट. °अम्बु-तस्य° तद्दः. ७ क. ख. घ. ट. तदिव वर्षन् यद्ब°; ग. ज. तादि वर्षन् तदपि°. ८ क. ख. घ. ट. ठ. ड. खलतेर्वा. ९ ग. च. ज. भ्रस्यत्य°. १० ग. च. ज. भ्रस्यन्ति. ११ क. ख. घ. ट. ठ. ड. स्खलतेर्वा. १२ क. ख. ग. ज. घ. ट. ठ. ड. हिंस्यन्ते.

स्मादेव ' । तत्रापि हि भ्रंश्यन्ति[1] चूर्ण्यमानानि धान्यानि । हिंस्यन्ते वा । चूर्ण्यन्त इत्यर्थः । अथवा ' समास्कन्नः ' असौ ' भवति ' विप्रकीर्णो[2] धान्यैः ।

' व्याप्तिकर्माण उत्तरे धातवो दश ' । संग्रामे हीतरेतरं व्याप्नुवन्ति योधा इति संग्रामनामभ्य उत्तरे व्याप्तिकर्माणः[3] । कतमे पुनस्त इति । 'इन्वति ननक्षे' [ निघ० २ । १८ ] इत्येवमादयः । 'तत्र' दशके व्याप्तिकर्मधातुगण एते ' द्वे नामनी ' भवतः ' आक्षाणः ' इति च 'आपानः' इति च । तत्र ' आक्षाण आश्नुवानः[4] ' । यो ह्यश्नोति व्याप्नोति स आक्षाण इत्युच्यते[5] । तथा[6] च य आप्नोति स आप्नुवानः सन् ' आपानः ' इत्युच्यते ।

' वधकर्माण उत्तरे धातवस्त्रयस्त्रिंशत् ' । संग्रामे हीतरेतरं व्याप्य ततो घ्नन्तीति व्याप्तिकर्मभ्य उत्तरे वधकर्माणः समाम्नाताः । कियन्तः । त्रयस्त्रिंशत् । कतमे पुनस्त इति । 'दभ्नोति श्नथति[7] ध्वरति धूर्वति' [ निघ० २ । १९ ] इत्येवमादयः । ' तत्र ' वधकर्मधातुमध्ये ' वियात इत्येतत् ' नाम । तत्पुनरेवं निर्वक्तव्यम् । ' वियातयते ' नानाप्रकारं यातयते यः शत्रून् स वियातः । अथ ' वा ' एवमन्यथा स्यात् । ' वियातय[8] ' एवमुच्यते यः स्तोतृभिः[9] स वियातः । आखण्डल इत्येतदपि नामैव । निगममपि चात्र दर्शयति । ' आखण्डल प्रहूयसे ' । आभिमुख्येनावस्थितो यः खण्डयति मेघान् स आखण्डयिता तस्य संबोधनं हे ' आखण्डयितः ' ।

इरिम्बिठिर्नाम कण्वो मन्त्रदृक् । तस्येयमार्षम् । गायत्री । ऐन्द्री रात्रिपर्यायेषु महारात्रिके[10] पर्याये होतुरियं शस्त्रे विनियुक्ता[11] [ आश्व० श्रौ० ५ । १० ] । शाचिगो[12] शाचिपूजनायं रणाय ते सुतः । आखण्डल प्रहूयसे ' [ ऋ० सं० ८ । १७ । १२ ] ॥ शाचिगो इति चैकं[13] पदम् । शचीति कर्मनाम [ निघ० २ । १ । २२ ] । तस्य शच्या-

१ ग. च. ज. भ्रस्यन्ति. २ क. ख. घ. ट. ठ. ड. विप्रकीर्णैः. ३ घ. ट. ठ. ड. °कर्माणः । कियन्तस्ते । दश । कतमे°. ४ च. अश्नुवानः. ५ च. ' इति ' नास्ति. ६ घ. ट. ठ. ड. यथा. ७ ग. च. ज. ' श्नथति ' नास्ति. ८ च. वियातयत्येव°. ९ ग. घ. ट. ठ. ड. ज. स्तोतृभिः शत्रून्स°. १० क. ख. मध्यमरात्रिपर्याये°; घ. ट. मध्यरात्रिपर्याये°. ११ ग. च. ज. °युक्ता । १३ । शाचिं°. १२ ग. ज. शाचिगो शाचिपूजन । शाचिगो इति°; घ. ट. शाचिगो० प्रहूयसे. १३ ठ. ड. ' च ' नास्ति.

ह्यस्य कर्मणो येयमिष्टि:[1] पशुसोमादिलक्षणा संततिः सा शाचिः । अथवा स्वार्थिक एव तद्धितः स्यात् । शच्येव शाचिः । तां प्रत्याहूयमानो यो गच्छति स शाचिगुरिन्द्रः । तस्य संबोधनं हे[2] शाचिगो इति । तथैव[3] शाच्या य आगतः सन् पूज्यते स शाचिपूजनः । तस्य संबोधनं हे शाचिपूजन । हे[2] आखण्डल आखण्डयितः शत्रूणां मेघानां वा । इयमस्माभिः प्रस्तुता शची यां प्रति ते नित्यमिष्टमागन्तुं यया च पूज्यसे त्वमागतः सन् । किंच । एतस्यां च शच्यामस्मिन्कर्मण्ययं रणाय रमणाय[4] ते तव सुतोऽभिषुतः सोमो यतोऽस्माभिस्त्वं प्रहूयसे प्रकर्षेणादरवद्भिर्हूयस आहूयसे । स एवमेतज्ज्ञात्वास्मदनुग्रहायानतीतकालमागन्तुमर्हसीत्यभिप्रायः ।

आखण्डलशब्देऽल्पतरं वक्तव्यं बहुतरं तडिच्छब्द इति क्रमभेदेनैतौ[5] निरुच्येते । ' तडिदित्यन्तिकवधयोः संसृष्टकर्म ' । तडिदित्येतच्छब्दरूपमन्तिकाभिधायि वधाभिधायि चेत्येकमेव ह्येतदुभाभ्यामर्थाभ्यां संप्रयुज्यत । विद्युदपि च तडिदित्युच्यते । सा पुनः कर्तरि कारके ' ताडयतीति सतः' । यथा त्वन्तिकनामेदं तथेयमृगुदाहरणम् ॥ १०[6] ॥

---

**त्वया वयं सुवृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्या ददीमहि । या नो दूरे तळितो[7] या अरातयोऽभि सन्ति जम्भया ता अनप्नसः [ ऋ० सं० २ । २३ । ९ ] ॥ त्वया वयं सुवर्धयित्रा[8] ब्रह्मणस्पते स्पृहणीयानि वसूनि मनुष्येभ्य आददीमहि याश्च नो दूरे तळितो[9] याश्चान्तिकेऽरातयोऽदानकर्माणो वादानप्रज्ञा वा जम्भय ता अनप्नसोऽप्न इति रूपनामाप्नोतीति सतो विद्युत्तडिं[10]द्भवतीति शाकपूणिः सा**

---

१ क. ख. ग. ज. घ. ट. ठ. ड. °मिष्टिपशु°. २ च. ' हे ' नास्ति. ३ क. ख. घ. ट. तथैव शाच्यां; ठ. ड. तस्यैव शाच्यां. ४ ग. ज. घ. ट. ठ. ड. ' रमणाय ' नास्ति. ५ क. ख. घ. ट ठ. ड. °भेदतो निरुच्यते; ग. ज. °भेदेनेतौ निरुच्यते. ६ क. ख. ४; ग ११/१४; च. ज. १४; घ. ट. अङ्को नास्ति; ठ. ड. °रणं । इति निरुक्तवृत्तौ भगवद्दुर्गकृतौ ( ड. पुस्तके ' भगवद्दुर्गकृतौ ' नास्ति ) तृतीयाध्याये दशमः खण्डः. ७ क. तडितो; छ. त. द. तळितो. ८ ङ. छ. °र्धयित्वा. ९ क. ख. तडितो; छ. त. द. तळितो. १० छ. त. द. तळिद्भ°.

ध्नवताडयति दूराच्च दृश्यतेऽपि त्विदमन्तिकनामैवाभिप्रेतं स्यात् । दूरे चित्सन्तळिदिवाति रोचसे । दूरेऽपि सन्नन्तिक इव सन्दृश्यस इति वज्रनामान्युत्तराण्यष्टादश वज्रः कस्माद्वर्जयतीति सतस्तत्र कुत्स इत्येतत्कृन्ततेर्ऋषिः कुत्सो भवति कर्ता स्तोमानामित्यौपमन्यवोऽत्राप्यस्य वधकर्मैव भवति ५ तत्सख इन्द्रः शुष्णं जघानेत्यैश्वर्यकर्माण उत्तरे धातवश्चत्वार ईश्वरनामान्युत्तराणि चत्वारि तत्रेन इत्येतत्सनित ऐश्वर्येणेति वा सनितमनेनैश्वर्यमिति वा ॥ ११ ॥

---

१० त्वया वयं सुवृधा ब्रह्मणस्पत इति । गृत्समदस्यार्षम् । जगती । प्रवर्ग्ये विनियुक्ता [आश्व० ४।६] । हे ब्रह्मणस्पते त्वया वयं सुष्ठु वर्धयित्रा वर्धिता अनुगृहीताः सन्तो वसु वसूनि यानि यानि स्पार्हा स्पृहणीयानि तानि तानि मनुष्या मनुष्येभ्यस्तानभिभूयाददीमहि । किंच । यानो दूरे तळितो याश्च नो दूरेऽध्वन्यवस्थिता अरातयो याश्चान्तिके ।

तडिच्छब्दोऽत्रान्तिकाभिधायी

१५ तडिच्छब्दस्यान्तिकाभिधायित्वम् । दूरे चान्तिके च या अरातयोऽरातिसेना । रातिर्दानार्थः । अस्माकमभिमतानर्थान्ददतो ये निवारयन्ति ते अरातयः । अदानप्रज्ञा वा । न दातव्यमस्माभिरित्येवं येषां प्रज्ञा ते अदानप्रज्ञाः । द्विविधा हि शत्रवः । दुःखसंनाश्याः सुखसंनाश्याश्च । तत्र २० ये दुःखसंनाश्यास्तेऽदानप्रज्ञाः । ये अदानकर्माणस्ते सुखसंनाश्याः । ते चोभयेऽपि दूरे चान्तिके चावस्थिता भवन्ति । तान्दूरान्तिकावस्थितानुभयानपि जम्भय स्तम्भय निश्चेष्टान्कुरु त्वं ब्रह्मणस्पते । किंच अनप्नसोऽरूपांश्चैतान्कुरु । 'अप्न इति रूपनाम' । तद्व्याप्तोत्याश्रयम् ।

---

१ छ. त. द. °तालयति. २ क. तडिदि°; छ. त. द. तलिदि°. ३ द. °द्वज्रय°. २५ ४ छ. °वोऽथाप्य°. ५ क. ख. द. ५; छ. त. १२. ६ क. ख. घ. ट. वयं० अनप्नसः; ठ. ड. वयमिति । गृ°. ७ च. प्रवर्गे. ८ घ. ट. ठ. ड. स्पार्हाणि स्पृह°. ९ ग. ज. °स्तानि अभि°; ठ. ड. °स्तानभिभूय ददी°. १० क. ख. तडितो; ग. च. ज. घ. तलितो. ११ घ. ट. ठ. ड. 'नो' नास्ति. १२ क. ख. घ. ट. ठ. ड. 'वा' नास्ति. १३ क. ख. घ. ट. ठ. ड. °भिरेभ्य इत्ये°. १४ घ. ट. ठ. ड. °दानकर्माणः. १५ ग. च. ज. सुखसंनाम्या दुःखसंनाश्याश्च (च. °नाम्याश्च). १६ च. °संनाम्यास्ते°. १७ ग. च. ज. 'ये अदा...संनाश्याः' नास्ति. १८ ग. ३२ ज. ठ. ड. तद्व्याप्तो°.

'विद्युत्तडिद्भवतीति शाकपूणिः' आचार्यो मन्यते । किं कारणम् । सा ह्यवताडयति अशनिरूपेण । 'दूरात्' एव 'च' दृश्यते । तस्मान्न तस्यान्तिकनामाभिसंबन्धोऽस्ति । 'अपि त्विदम्' अपरेणोदाहरणेन 'अन्तिकनामैवाभिप्रेतं स्यात्' । 'दूरे चित्सन्तळि[1]दिवातिरोचसे' । 'दूरेऽपि सन्नन्तिक इव' अवस्थितो 'दृश्यसे इति' । अत्र दूरेऽपि सन्नन्तिक इवेति स्फुटतरमन्तिकाभिधानत्वम् । न तथा पूर्वस्मिन्मन्त्रे 'या नो दूरे तळितः[2]' इति । एवमन्तिकनामत्वेन वा विद्युन्नामत्वेन वा वधनामत्वेन वा प्रकरणोपपदे अवेक्ष्य यथासंभवं निर्वक्तव्य[3]म् ।

'यो विश्वतः सुप्रतीकः[4] सदृङ्ङसि दूरे चित्सन्तळिदिवा[5]ति रोचसे । रात्र्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव' [ ऋ० सं० १ । ९४ । ७ ] ॥ एषा जगती । आग्नेयी । कुत्सेन दृष्टा । महाव्रत आग्निमारुते शस्त्रे [ ऐ० आ० १ । ५ । ३ ] अभिप्लवस्य च षष्ठेऽहन्याग्निमारुत एव [ आश्व० श्रौ० ७ । ७ ] च शस्यते । यस्त्वं

अस्यामृचि तडिच्छब्दोऽन्तिकाभिधाय्येव

हे अग्ने विश्वतः सर्वतः सुप्रतीकः सुदर्शनः शोभनदर्शनः । अपि च[6] सदृङ् । यतो[7] यतो दृश्यसे ततस्ततः समानदर्शनस्तुल्य एव लक्ष्यसे । अपि च । दूरेऽपि सन्नतिभ्राजिष्णुत्वात्तडिदिवान्तिक इवावस्थितोऽतिरोचसे[8]ऽतिरोचिष्णुर्दृश्यसे । अपि च । यदेतद्रात्र्याश्चिद्रात्र्या अपि संततम्[10] अन्धः अध्यानलक्षणं तमो यत्र ध्यातुमपि दुःखं शक्यते किमुत द्रष्टुमेतदप्यतीत्य हे देव सर्वभूतदीपयितव्य पश्यस्येव त्वम् । न तेऽस्माकमिव तेनान्धेनापि तमसा प्रतिबध्यते दर्शनम् । तस्य तवैवंगुणयुक्तस्य हे अग्ने वयं सख्ये सखिभावे परिचरणकर्मणि आ उत्तमादुच्छ्वासात्कृताध्यवसायाः सन्तो मा केनचिद्व्याधिना शत्रुणा वा रिषाम । मास्मान्कश्चिद्धिंसीत्त्वदनुध्यानादेवेत्यभिप्रायः ।

'वज्रनामान्युत्तराण्यष्टादश' । यो हि हन्यते स[11] वज्रेणैवेति वध-

१ क. ख. ग. च. ज. तडिदि°; घ. तळिदि°. २ क. तडितः; ग. च. ज. घ. तळितः. ३ ग. च. ज. °व्यम् ॥ १५ ॥ यो°. ४ ग. ज. °प्रतीकः । एषा°; घ. ट. °प्रतीकः० वयं तव. ५ क. तडिदि°; च. तळिदि°. ६ घ. ट. ठ. ड. 'च' नास्ति. ७ च. 'यतः' सकृदेव. ८ च. दृश्यसे. ९ घ. ट. 'रोचसे । अतिरोचसे अतिरोचिष्णु°. १० च. संततमन्धः° संतत; ठ. ड. सतत°. ११ ग. ज. 'स' नास्ति.

कर्मभ्य उत्तराणि वज्रनामानि । कियन्ति पुनस्तानि । अष्टादश । अष्टौ च दश च । कतमानि पुन स्तानि । 'दिद्युत् नेमिः हेतिः' [ निघ० २ । २० ] इत्येवमादीनि । दिद्युत् द्यतेर्वा द्योततेर्वा । पुनः पुनरतिशयेन वा द्यत्यवखण्डयति द्योतते दीप्यते वा सा दिद्युत् । अवनामयति खण्डयति प्रहारेणेति नेमिः । हेतिर्हन्तेरित्येवमादि । आह । 'वज्रः कस्मात्' । उच्यते । 'वर्जयति' । वियोजयति प्राणैः प्राणिनः । 'तत्र कुत्स इत्येतत्' संदेहपदम् । ऋषिरपि कुत्स इत्युच्यते । तत्पुनरेतद्यदा वज्रनाम तदा 'कृन्ततः' । कृत्यतेऽनेनेति कुत्सः । यदा पुनरेतदृष्यभिधानं तदा 'कर्ता स्तोमानामित्यौपमन्यवः' आचार्यो मन्यते । 'अत्राप्यस्य वधकर्मैव' अभिप्रेतं स्यात् । अत्राप्येतदृषौ वर्तमानमभिधानमस्य ऋषेर्वधकर्मैव वधार्थसंयुक्तमेव स्यात् । किं कारणम् । 'तत्सख इन्द्रः शुष्णं जघान' । तेन स्तूयमानो विवृद्धबलः शुष्णं शोषयितारं रसानामसुरं मेघं वा जघान । मेघो हि शुष्णः । तदुदये हि धान्यान्युदकग्राहनिमित्तेन शुष्यन्ति ।

कुत्स इत्येतत्संदेहपदम्

'ऐश्वर्यकर्माण उत्तरे धातवश्चत्वारः' । घ्नतामेव हि वज्रेणायुधेनैवैश्वर्यं भवतीति वज्रनामभ्य उत्तरे ऐश्वर्यकर्माणः । कतमे पुनस्त इति । 'इरज्यति पत्यते क्षयति राजति' [ निघ० २ । २१ ] ।

'ईश्वरनामान्युत्तराणि चत्वारि' । ऐश्वर्यसंबन्धेनैवोच्यन्ते । कतमानि पुनस्तानि । 'राष्ट्री अर्यः नियुत्वान् इनः' [ निघ० २ । २२ ] । 'तत्र इन इत्येतत्' अभिधानमेवं व्युत्पाद्यम् । 'सनितः' संभक्तः 'ऐश्वर्येणेति वा' । अथ वा 'सनितं' संभक्तं 'अनेनैश्वर्यमिति' । अधुना मन्त्रमपि व्याचष्टे यस्मिन्नेतदीश्वरनाम इन इति ॥ ११[9] ॥

---

यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति ।

---

१ च. द्युतेर्वा. २ ग. च. ज. 'पुनः...दिद्युत्' नास्ति. ३ ग. च. ज. एत्येतत्. ४ ग. ज. 'औपमन्यव आचार्यो मन्यते' नास्ति. ५ च. तत्रा°. ६ क. ख. घ. ट. ठ. ड. जघानेति. ७ क. ख. घ. ट. ठ. ड. 'इति' नास्ति. ८ क. ख. ग. च. ज. घ. ट. क्षियति. ९ क. ख. ५; ग. $\frac{१२}{१६}$ च. ज. १६; क. ठ. अङ्को नास्ति; ठ. ड. इति । इति निरुक्तभा० तृ० एकादशः खण्डः.

इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्राविवेश [ऋ०सं० १।१६४।२१] । यत्र सुपर्णाः सुपतना आदित्यरश्मयोऽमृतस्य भागमुदकस्यानिमिषन्तो वेदनेनाभिस्वरन्तीति वाभिप्रयन्तीति वेश्वरः सर्वेषां भूतानां गोपायितादित्यः स मा धीरः पाकमत्राविवेशेति धीरो धीमान्पाकः पक्तव्यो भवति विपक्वप्रज्ञ आदित्य इत्युपनिषद्वर्णो भवतीत्याधिदैवतमथाध्यात्मं यत्र [1]सुपर्णाः सुपतनानीन्द्रियाण्यमृतस्य भागं ज्ञानस्यानिमि[2]षन्तो वेदनेनाभिस्वरन्तीति वाभिप्रयन्तीति वेश्वरः सर्वेषामिन्द्रियाणां गोपायितात्मा स मा धीरः पाकमत्राविवेशेति धीरो धीमान्पाकः पक्तव्यो भवति विपक्वप्रज्ञ आत्मेत्यात्मगतिमाचष्टे ॥ १२[3] ॥

[4]इति तृतीयाध्यायस्य द्वितीयः पादः ।

---

यत्रा सुपर्णा इति । त्रिष्टुब्वेषा । वैश्वदेवे[5] सूक्ते दीर्घतमसा दृष्टा । [6]तृतीयसवने वैश्वदेवे शस्त्रे[7] शस्यते [ ऐ० आ० ५ । ३ । २ ] । वैश्वदेवेषु हि सूक्तेष्वेकदेवता बहुदेवताश्च मन्त्रा भवन्ति तदप्युपेक्षितव्यम् । यत्र यस्मिन्मण्डलेऽवस्थिताः सुपतना आदित्यरश्मयः । ते हि शोभनमर्थमुद्दिश्य तमोऽप[8]घातलक्षणं पतन्ति । अथवा शोभ[9]मानाः पतन्तीति सुपर्णाः । ते किं कुर्वन्ति । उच्यते । अमृतस्य भागमुदकस्यामरणधर्मिणो भागं भजनीयमंशमादाय पृथिवीलोकात्तेनान्विताः सन्तः सर्वभूतान्यभिस्वरन्ति । स्वृ शब्दोपतापयोः [धा० १ । ९३२ ] । अभितप[10]न्तीत्यर्थः । अथवाभिस्वरन्त्यादित्यमण्डलम् ।

यत्रा सुपर्णा इत्येतस्यामृचि 'इन' शब्दस्याधिदैवतपरोऽर्थः

---

१ छ. त. द. 'सुपर्णाः' नास्ति. २ छ. त. द. °मिषन्ति. ३ क. ख. द. ६; छ. त. १३. ४ ङ. थ. ध. ठ. ड. 'इति०००पादः' नास्ति; छ. इति द्वितीयः पादः; त. इति तृतीयाध्याये द्वि°; द इति नैरुक्तस्य तृ°. ५ ठ. ड. °देवसूक्ते. ६ क. ख. घ. ट. ठ. ड. महाव्रते तृतीय°. ७ च. 'शस्त्रे' नास्ति. ८ क. ख. घ. ट. ठ. ड. तमोविघात°. ९ घ. ट. ठ. ड. शोभनाः. १० ग. ज. घ. ट. ठ. ड. अभिपतन्ती°.

आभिमुख्येन रसान्गृहीत्वा प्रयान्ति । [1]कथं पुनः प्रयान्ति । अनिमेषम्[2] अनिमिषमाणा इव । आदरवन्त इत्यर्थः । विदथा वेदनेन विज्ञानेन स्वकर्माधिकारयुक्तेनान्विताः सन्त इदमेवास्माभिः कर्तव्यं रसा[3]दानादिलक्षणं कर्मेत्यभिस्वरन्ति । यत्रैतदेवंलक्षणं कर्म कुर्वन्त्यादित्यरश्मयस्तत्र किमिति । उच्यते । इनो विश्वस्य भुवनस्य गोपाः । इन ईश्वरः । इनो ह्यसावादित्य ऐश्वर्येण भवति । विश्वस्य भुवनस्य भूतस्य भवति । किंच । गोपाः गोपायिता । आदित्यो मण्डलान्तरपुरुषो यस्तत्र मण्डलेऽवस्थितः स मा धीरो धीमान्प्रतिविशिष्टया बुद्ध्यान्वितः । बुद्धिरेव हि तस्य शरीरम् । [4]पाकः पक्तव्यः । पक्तव्यप्रज्ञो विपक्वप्रज्ञः सम्यग्दर्शनोऽनुग्राह्यतया आविवेशाविशतु । इतिकरणः [5]प्रकरणप्रदर्शनार्थ एवमयमुपनिषद्वर्णो ' मन्त्रो भवतीति ' । य[6]द्विज्ञानमुपगतस्य सतो गर्भजन्मजरामृत्यवो [7]विनिश्चयेन सीदन्ति सा रहस्या विद्योपनिषदित्युच्यते । उपनिषद्भावेन वर्ण्यत इति उपनिषद्वर्णः । ' अधिदैवतम् ' उक्तम् ।

अथाध्या[8]त्मिकच्यते । अधिदैवतमध्या[9]त्ममित्येतौ शब्दौ व्याख्यातौ [ नि० १ । २० ] । यत्र यस्मिञ्शरीरे सुपतनानीन्द्रियाण्यवस्थितानि स्वेषु स्वेष्वायतनेषु कृष्णसारादिषु । किं कुर्वन्ति । उच्यते । अमृतस्यामरणधर्मणो ज्ञानस्य भागं भजनीयं स्वं स्वं रूपादिलक्षणमंश[10]मादाय विदथा वेदनेन विज्ञानेन युक्तान्यभिस्वरन्ति । न हीन्द्रियाणां चैतन्यमस्तीति । तानि ह्यचेतनानि चेतनस्य पुरुषस्य कर्तुर्विज्ञानमयस्य करणानि । तदधिष्ठात्र्यस्तु देवताश्चेतनाः । तदभिप्रायेणोच्यते विदथा वेदनेन विज्ञानेनेति । किं कुर्वन्ति । अभिस्वरन्ति अभि[11]तपन्ति । विष[12]येविज्ञानं पुरुषस्य भोक्तुः

तत्रैव तस्याध्यात्मपरोऽर्थः

१ क. ख. ठ. ड. 'कथं पुनः प्रयान्ति' नास्ति. २ च. अनिमिषं. ३ ठ. ड. रसदाना°. ४ ग. ज. पाकः। पक्तव्यः प्रज्ञं । विपक्व । प्रज्ञः; च. पाकं पक्तव्य प्रज्ञो कः. ५ ग. च. ज. ' प्रकरण ' नास्ति. ६ क. ख. घ. ठ. ड. यद्वा ज्ञान° ; ट. यद्वा ज्ञान° द्वि; च. तद्विज्ञान°. ७ क. ख. घ. ट. ठ. ड. ' वि ' नास्ति. ८ घ. ट. ठ. ड. °ध्यात्ममु°. ९ क. ख. घ. ट. ठ. ड. °वतमथाध्यात्म°. १० क. ख. घ. ट. ठ. ड. °क्षणं रसमा°. ११ क. ख. अभिप्रयन्ति; ग. ज. अभिपतन्ति. १२ क. ख. घ. ट. ठ. ड. विषयविज्ञानेन पुरुषस्यापि भोक्तुर्दुःखं कुर्वन्ति.

पटुं[1] कुर्वन्ति । अथवा अभिस्वरन्ति बुद्धिमाभिमुख्येन विषयवि[2]ज्ञानमादाय बाह्यप्रत्ययाधानार्थं स्वरन्ति । गच्छन्तीत्यर्थः । तत्र किमिति । उच्यते । तत्र योऽवस्थित ईश्वर इनः सर्वेषामिन्द्रियाणां गोपायिता य आत्मा स मा धीरो धीमान् पाकः पक्[3]व्यः पक्तव्यप्रज्ञो विपक्वप्रज्ञः सम्यग्दर्शी सर्वज्ञः । सोऽत्रैव हि देहेऽवस्थितो बुद्ध्यधिदै[4]वताभावेन तैजसाख्यो मामाविवेश आविशत्वनुग्राह्यतया । स मामत्रैवावस्थितोऽनुगृह्णात्वित्यर्थः । तदनुग्रहाद्धि[5] सम्यग्दर्शनं प्रकाशते । तदाशास्यत इति 'आत्मगतिमाचष्टे' । एवमयमात्मविज्ञानमाचष्टे मन्त्रः ।

अधिदैवेऽध्यात्मे चैक एव पुरुषः । देवताध्यात्मे वा पुष्पफले इत्यस्यैवमुपपत्तिः

यत्[6]तदुक्तं 'देवताध्यात्मे वा पुष्प[7]फले' इति [ निरु० १ । २० ] तदेवमुपपाद्यं तत्र[8] तत्र । एक एव ह्यसावादित्यमण्डले चाधिदैवते[9]ऽध्या[10]त्मे च बुद्ध्यधिदेवताभूतः । स एव तत्र तत्रोपेक्षितव्यः । तस्मादमुष्मादादित्यमण्डलाद्ये रश्मयः प्रसर्पन्ति ते विश्वेदेवा इति । 'रश्मयो वै विश्वेदेवाः' इति ह्युक्तम् । अध्यात्मेऽपि हृद्याकाशाद्यानीन्द्रियाणि प्रसर्पन्ति त एव रश्मयः । अध्यात्मे त एव च[11] विश्वेदेवा इत्युक्तम् । एवं तत्र तत्र योज्यम् । प्रकारमात्रमेवेदमुपप्रदर्शितं भाष्यकारेणेति ॥ १२[12] ॥

[13]इति निरुक्तवृत्तावष्[14]टमाध्यायस्य द्वितीयः पादः ।

---

१ ग. ञ. पटूकु°; च. पंटुं कु° उप. २ व. ट. ठ. ड. 'वि' नास्ति. ३ ग. ज. पक्तव्यः प्रज्ञं । असम्यग्दर्शिनमसर्वज्ञं विपक्वप्रज्ञः; च. पक्तव्यो विपक्वप्रज्ञः. ४ क. ख. व. ट. ठ. ड. °धिदैवतभा°. ५ घ. ट. ठ. ड. °हाद्यस्य सम्य°. ६ क. ख. घ. ट. ठ. ड. 'तत्' नास्ति. ७ ग. ज. पुष्पफलं; च. पुष्पफलमिति० ले इ. ८ क. ख. घ. ट. ठ. ड. 'तत्र' सकृदेव. ९ ग. ज. वाधिदैवते; च. चाधिदैवे. १० घ. ट. ठ. ड. आध्यात्मे. ११ क. ख. घ. ट. ठ. ड. 'च' नास्ति. १२ क. ख. ६; ग. १३; घ. ट. च. ज. अङ्को नास्ति; ठ. १२ इति निरुक्तवृत्तौ तृतीयाध्याये द्वादशः खण्डः; ड. १२ खण्डः. १३ ग. च. ज. घ. ट. ठ.ड. 'इति निरुक्तवृत्तौ' नास्ति. १४ घ. ट. °ष्टमस्याध्या°. ठ. अष्टमस्य द्विती°.

बहुनामान्युत्तराणि द्वादश बहु कस्मात्प्रभवतीति सतो ह्रस्वनामान्युत्तराण्येकादश ह्रस्वो ह्रसतेर्महन्नामान्युत्तराणि पञ्चविंशतिर्महान्कस्मान्मानेनान्याञ्जहातीति शाकपूणिर्महनीयो भवतीति वा तत्र ववक्षिथ विवक्षस इत्येते वक्तेर्वा वहतेर्वा साभ्यासाद्गृहनामान्युत्तराणि द्वाविंशतिर्गृहाः कस्माद्गृह्णन्तीति सतां परिचरणकर्माण उत्तरे धातवो दश सुखनामान्युत्तराणि विंशतिः सुखं कस्मात्सुहितं खेभ्यः खं पुनः खनते रूपनामान्युत्तराणि षोळश[1] रूपं रोचतेः प्रशस्यनामान्युत्तराणि दश प्रज्ञानामान्युत्तराण्येकादश सत्यनामान्युत्तराणि षट् सत्यं कस्मात्सत्सु तायते[2] सत्प्रभवं भवतीत्ति वा[3] अष्टा उत्तराणि पदानि पश्यतिकर्माण उत्तरे[4] धातवश्चायतिप्रभृतीनि च नामान्यामिश्राणि नवोत्तराणि पदानि सर्वपदसमाम्नानायाथात उपमा यदतत्तत्सदृशमिति गार्ग्यस्तदासां कर्म ज्यायसा वा गुणेन प्रख्याततमेन वा कनीयांसं वा प्रख्यातं वोपमिमीतेऽथापि कनीयसा ज्यायांसम् ॥ १३[5] ॥

---

'बहुनामान्युत्तराणि द्वादश'। ईश्वराणामेव बहु भवतीतीश्वरनामभ्य उत्तराणि बहुनामानि । कियन्ति। द्वादश। द्वे च दश च[6]। कतमानि पुनस्तानि । 'उरु तुवि पुरु' [ निघ० ३ । १ ] इत्येवमादीनि । उरु विस्तारे । यद्धि बहु भवति तद्विस्तीर्णं भवति। तुवि वृद्धौ। यद्धि बहु भवति वृद्धं[7] तद्भवतीति तुवि[8]। पुरु प्राप्तं च सर्वतो भवति । पूरितमिव हि बहुना सर्वं भवतीति पुरु । इत्येवमादि योज्यम्। आह । 'बहु कस्मात्'। उच्यते[9] । 'प्रभवति' ह्येतद्बहुभ्योऽपि दीयमानम् ।

१ क. ख. षोडश; छ. त. द. षोलश. २ छ. जायते. ३ छ. त. वा । १४। अष्टा°; द. वा । १ । अष्टा°. ४ छ. त. द. 'उत्तरे' नास्ति. ५ क. ख. १; छ. त. १५; द. २. ६ क. ख. घ. ट. ठ. ड. च द्वादश. ७ क. ख. घ. ट. ठ. ड. तद् वृद्धं भव°. ८ ग. ज. °तुवि । प्राप्तं; घ. ठ. ठ. ड. °तुवि । प्राप्त्यर्थं च°. ९ ग. ज. 'उच्यते' नास्ति.

बहुनामसंबन्धेनैव 'ह्रस्वनामान्युत्तराणि'। कियन्ति । एकादश । कतमानि पुनस्तानि । 'कुवित् रिहं[1] ह्रस्वः' [ निघ० ३ । २ ] इत्येवमादीनि । कुत्सितमिव हि तद्विज्ञायतेऽल्पत्वादिति कुवित् । लीढमिव हि तदल्पत्वाद्भवतीति रिढम्[2] । आह । 'ह्रस्वः' कस्मात् । उच्यते । ह्रसितो हि भवति स महतः सकाशात् । ५

ह्रस्वसंबन्धेनैव 'महन्नामान्युत्तराणि पञ्चविंशतिः'। ह्रस्वापेक्षयैव हि महत्त्वं भवति । कियन्ति पुनस्तानि । पञ्चविंशतिः । कानि[3] पुनस्तानि । 'मंहः[4] ब्रध्नः ऋष्वः' [ निघ० ३ । ३ ] इत्येवमादीनि । आह । 'महान्' कस्मात्' । उच्यते । 'मानेनान्यान्' ह्रस्वान् जहातीति 'शाकपूणिः' आचार्यो मन्यते । अथ 'वा मंहनीयः' पूजनीयो 'भवतीति' महान् । १०
बृहत्त्वाद्बृंहणत्वाद्वा ब्रध्नः । ऋष्वः रेषणवानित्यादि योज्यम् । 'तत्र' तस्मिन् महन्नामगणे[5] 'ववक्षिथ विवक्षसे' इत्येते आख्याते । ते पुनरेते[6] वक्तेर्वा वहतेर्वा धातोः 'साभ्यासात्' ।

य एव हि महान्तस्त एव गृहिणो भवन्तीति महन्नामभ्य 'उत्तराणि गृहनामानि' । कियन्ति पुनस्तानि । 'द्वाविंशतिः' । कतमानि पुनस्तानि । १५
'गयः कृदरः हर्म्यम्'[7] [निघ० ३ । ४] इत्येवमादीनि । गम्यत एतादिति गयः । कृदरः[8] कृतदरः[9] । हर्म्यं हरणमित्येवमादीनि । आह । 'गृहाः कस्मात्' । उच्यते । ते हि यावदेव किंचिदाह्रियते तत्[10]सर्वमेव 'गृह्णन्ति' दुःपूरत्वात् ।

गृहेष्वेवावस्थिताः परिचर्यन्ते परिचरन्ति वेति[11] गृहनामभ्य 'उत्तरे परिचरणकर्माणो धातवः' समाम्नाताः । कियन्तः पुनस्त इति[12] । दश । २०
कतमे पुनस्त इति[12] । इरज्यति[13] विधेम सपर्यति [ निघ० ३ । ५ ] इत्येवमादयः ।

---

१ क. ख. रिहं; ग. च. ज. रिल्हं; घ. ट. ठ. ड. लीढं. २ क. ख. रिहम्; घ. ट. ठ. ड. लीढं. ३ क. ख. घ. ट. कतमानि. ४ क. ख. महत्. ५ ग. ज. २५
महर्नामगणे. ६ क. ख. घ. ट. पुनरुभे. ७ घ. ट. ठ. ड. कृदरः गर्तः हर्म्यम्. ८ घ. ट. ठ. ड. 'गम्यते...मादीनि' नास्ति. ९ क. ख. कृतदरः कृदरः; च. कृत०रः° द. १० ग. च. ज. 'तत्' नास्ति. ११ घ. ट. ठ. ड. चेति. १२ क. ख. घ. ट. ठ. ड. 'इति' नास्ति. १३ ग. च. ज. इरध्यति; घ. ट. इरत्यति. ३०

परिचर्यमाणानामेव हि सुखं भवतीति परिचरणकर्मभ्य 'उत्तराणि सुखनामानि'। कियन्ति पुनस्तानि। विंशतिः। कतमानि पुनस्तानि। 'शिम्बाता शतरा शातपन्ता' [ निघ० ३ । ६ ] इत्येवमादीनि। शिम्बाता[1]। सुखानुबन्धाद्धि[2] ह्रदमग्नानामिव शरीरं शीतीभवति[3]। शतरा। शीतलतरमिव हि जलादपि सुखम्। शातपन्ता। शान्ततापमेव[4] हि सुखमित्येवमादि[5]। आह। 'सुखं कस्मात्'। उच्यते। सुष्ठु हितमेतत् 'खेभ्यः' इन्द्रियेभ्यः। 'खं पुनः' इन्द्रियं 'खनतेः' धातोः। अवदीर्णमेव हि तस्य श्रोत्रादेः[6] कर्णाद्यायतनं भवति।

'रूपनामान्युत्तराणि षोडश'। य एव हि सुखिनस्त एवं[7] रूपवन्तो भवन्तीति[8] सुखनामभ्य उत्तराणि रूपनामानि। कियन्ति पुनस्तानि। षोडश। षट् च दश च[9]। कतमानि पुनस्तानि। 'निर्णिक् वव्रिः वर्पः' [ निघ० ३ । ७ ] इत्येवमादीनि। निर्णिक्त[10]मिव हि तद्भवति तैजसत्वात्। विवृणोत्याश्रयमिति वव्रिरित्येवमादि। 'रूपं रोचतेः'। दीप्यमानमिव हि तत्प्रकाशं[11] भवति।

'प्रशस्यनामान्युत्तराणि दश'। य एव हि रूपवन्तस्त एव प्रशस्या भवन्तीति रूपनामभ्य उत्तराणि प्रशस्यनामानि। कियन्ति पुनस्तानि। दश। कतमानि पुनस्तानि। 'अस्रेमाः अनेद्यः अनिन्द्यः' [ निघ० ३ । ८ ] इत्येवमादीनि। अस्रेमाः[12] अपाप इत्यर्थः। अनेद्यः अनिन्दनार्हः। इत्येवमादि योज्यम्।

'प्रज्ञानामान्युत्तराण्येका[13]दश'। य एव हि प्रज्ञावन्तस्त एवं[14] प्रशस्या भवन्ति य एव च[15] प्रशस्यास्त एव हि प्रज्ञावन्तो भवन्तीति प्रशस्य-

---

१ घ. ट. शिंवाता. २ क. ख. घ. ट. ठ. ड. °नुसंबन्धा°. ३ घ. ट. ठ. ड. °भवतीति. ४ ग. ज. शान्ततापता ( ज. त ) पमेव°; च. शान्ततापतमेव° पानामि. ५ क. ख. ध. ट. 'इति' नास्ति. ६ क. ख. घ. ट. ठ. ड. 'श्रोत्रादेः' नास्ति. ७ क. ख. घ. ट. ठ. ड. एव हि. ८ ग. च. ज. 'इति' नास्ति. ९ घ. ट. ठ. ड, च षोडश. १० ग. च. ज. निर्निक्तं°; घ. ट. ठ. ड. निर्णिक्। निर्णिक्त°. ११ च. °काशकं. १२ क. ख. घ. ठ. ठ. ड. अस्रेमाः। स्रिवु गतिशोषणयोः (धा०४।३)। न स्रीव्यति गच्छत्यकीर्तिमित्यस्रेमाः। अपाप इत्यर्थः। क्षयरहितो वा। अने°. १३ च. द्वादश. १४ क. ख. घ. ट. ठ. ड. एव हि. १५ क. ख. घ. ट. ठ. ड. हि; च. 'च' नास्ति.

नामभ्य उत्तराणि प्रज्ञानामानि । कियन्ति पुनस्तानि । ऐकादश[1] । एकं[2] च दश च[3] । कतमानि पुनस्तानि । ' केतः केतुः चेतः ' [ निघ० ३ । ९ ] इत्येवमादीनि । कित ज्ञाने [ धा० ३ । १९ ] । तस्य केतः । केतुरपि तस्यैव ।

' सत्यनामान्युत्तराणि षट् ' । य एव हि प्रज्ञावन्तस्त एव हि सत्यवादिनो भवन्तीति प्रज्ञानामभ्य उत्तराणि सत्यनामानि । कियन्ति पुनस्तानि । षट् । कतमानि पुनस्तानि । 'बट् श्रत् सत्रा' [निघ० ३।१०] इत्येवमादीनि । बद्धमिव संबद्धं सद्भूतेनार्थेन[4] भवतीति बट् । श्रवणार्हमेतद्भवतीति[5] श्रत् । एवमादि । आह । ' सत्यं कस्मात् ' । उच्यते । ' सत्सु तायते ' । सत्स्वेव हि तत्तायते विस्तीर्यते[6] । न हि सतां समीपे शक्यमनृतं वक्तुम् । अथ ' वा सत्प्रभवं भवति[7] ' । य एव हि सन्तस्त एव हि सत्यं वदन्ति ।

' पश्यतिकर्माणो धातवश्चायतिप्रभृतीनि च नामानि ' इत्यस्य द्विविधं विवरणम्

' अष्टौ ' यानि ' उत्तराणि पदानि ' चिक्यदित्येवमादीनि[8] [ निघ० ३ । ११ ] ते पश्यत्यर्थाश्च[9] ' धातवश्चायतिप्रभृतीनि च ' तान्येव ' नामानि ' भवन्ति । तानि पुनरेतानि ' आमिश्राणि ' । संसृष्टानीत्यर्थः । तेषां प्रकरणोपपदाभ्यां विशेषावधारणं भवति तत्र कुत्र[10] किंचिन्नाम कुत्र किंचिदाख्यातमित्येवमेके[11] मन्यन्ते । अन्ये[12] पुनः ' चिक्यत्[13] चन विचर्षणिः विश्वचर्षणिः ' इत्येतानि नामानि । यान्यन्यानि परिशिष्टानि ते धातवः । तानि पुनरेतानि पूर्वाचार्यप्रामाण्यादामिश्राणि पठ्यन्त इत्येवं मन्यन्ते ।

' नव[14] ' यानि ' उत्तराणि पदानि' 'हिकं सुकं नुकम्[15] ' इत्येवमादीनि ' आकृतम् ' इत्येवमन्तानि [ निघ० ३ । १२ ] सर्वपदसमाम्नानाय ।

---

१ च. द्वादश. २ च. द्वे. ३ क. ख. घ. ट. ठ. ड. च एकादश. ४ ग. ज. संबद्धं सत्यभूते°; घ. ट. ठ. ड. संबन्धं सत्यभूते°. ५ च. °र्हमेतद्भ° मेव. ६ च. विस्तार्यते. ७ ठ. भवतीति. ८ च. चिक्यमित्ये°. ९ क. ख. घ. ट. ठ. ड. 'च' नास्ति. १० क. ख. घ. ट. ठ. ड. ' कुत्र ' नास्ति. ११ ठ. ड. ' एवं ' नास्ति. १२ घ. ट. ठ. ड. अन्ये तु पुनः । किम् । चिक्य°. १३ च. चिक्यत्° क्यं. १४ घ. ट. ठ. ड. नव च. १५ ग. च. ज. 'नुकं' नास्ति.

कथं नाम सर्वं चतुर्विधं पदप्रकारमेतस्मिन्समाम्नाये समाम्नातं स्यादित्येवमर्थम् । एष्वेव हि नवसु समाम्नातेषूभये निपातोपसर्गा दर्शिता भवन्ति।

'अथात उपमाः' । अथ इदानीम् अतः अनन्तरमुपमा भवन्ति । तद्यथा । 'इदमिव इदं यथा अग्निर्नये चतुरश्चिद्ददमानात् ब्राह्मणा व्रतचारिणः वृक्षस्य नु ते पुरुहूत वयाः जार आ भगम् मेषो भूतोऽभि यन्नयः तद्रूपः तद्वर्णः तद्वत् तथा' [ निघ० ३ । १३ ] । एता उपमाः । सामान्यलक्षणमासां ब्रवीति । 'यदतत्तत्सदृशमिति गार्ग्यः' ।

गार्ग्यकृतमुपमालक्षणम्

यत्किंचिदर्थजातम् अतद्भवति तत्सरूपं च । यथा । अनग्निः खद्योतोऽग्निसरूपश्च[1] । सोऽग्निनोपमीयतेऽग्निरिव खद्योत इति । एवमेतत्तत्सरूपेण[2] गुणेन गुणसामान्यादुपमीयत इत्येवं गार्ग्य आचार्यो मन्यते । 'तदासां कर्म' । स आसामुपमानामर्थो यदप्रसिद्धतरगुणस्य कस्यचित्प्रसिद्धतरगुणेनान्येन गुणप्रकाशनम् । क्वचित्पुनरात्मनाप्युपमानं[3] भवत्येव । तद्यथा[4] । 'वायुरात्मोपमगतिः' । 'तथा करोति सैन्यानि यथा कुर्याद्धनंजयः' इति । 'ज्यायसा वा गुणेन प्रख्याततमेन वा कनीयांसं वाऽप्रख्यातं वोपमिमीते' । ज्यायसा उत्कृष्टेन[5] गुणेन यो यस्मिन्

तदेव यास्ककृतम्

द्रव्य उत्कृष्टो गुणस्तेन कनीयांसम् अनुत्कृष्टगुणमुपमिमीते[6] । तद्यथा । सिंहो माणवकः । सिंहे शौर्यमुत्कृष्टमनुत्कृष्टं माणवके[7] । तेनोपमिमीते सिंह इव माणवको विक्रान्त इति । प्रख्याततमेन वाऽप्रख्यातमुपमिमीते[8] । तद्यथा । प्रख्याततमश्चन्द्रमा अप्रख्यातो माणवकः । तं तेनोपमिमीते चन्द्र इव कान्तो माणवक इति । 'अथापि' क्वचित्कनीयसा गुणेन 'ज्यायांसम्' अपि सन्तमुपमिमीते[9] । तदेतच्छन्दस्येव द्रष्टव्यम् । आह । किमुदाहरणम् । उच्यते ॥ १३[10] ॥

---

१ ग. ज. °ग्निरूप°. २ ठ. ड. एवमेत°. ३ ग. च. ज. पुनआत्म°. ४ क. ख. घ. ट. ठ. ड. 'तद्यथा' नास्ति. ५ ग. ज. घ. ट. वा उत्कृष्टेन. ६ क. ख. घ. ट. ठ. ड. °पमीयते. ७ क. ख. घ. ट. ठ. ड. °मुत्कृष्टं माणवकमेतेनोप°. ८ घ. ट. ठ. ड. पमीयते. ९ घ. ट. °पमिमीयते. १० क. ख. १; ग. १७/१५; च. १७; घ. ज. ट. ड. अङ्को नास्ति; ठ. ॥ १३ ॥ इति । निरुक्तवृत्तौ तृतीयाध्याये त्रयोदशः खण्डः.

**तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीताम् । तनूत्यक्तनूत्यक्ता वनर्गू वनगामिनावग्निमन्थनौ बाहू तस्कराभ्यामुपमिमीते तस्करस्तत्करो भवति यत्पापकमिति नैरुक्तास्तनोतेर्वा स्यात्संततकर्मा भवत्यहोरात्रकर्मा वा । रशनाभिर्दशभिरभ्यधीताम् । अभ्यधीतामित्यभ्यधातां ज्यायांस्तत्र गुणोऽभिप्रेतः ॥ १४[३] ॥**

५

---

तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीताम् । इयं ते अग्ने नव्यसी मनीषा युक्ष्वा रथं न शुचयद्भिरङ्गैः [ ऋ० सं० १० । ४ । ६ ] ॥ त्रितस्येयमाप्त्यस्यार्षम् । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते [ आ०सू० ४ । १३ ] । तनूत्यजा तनूत्यक्ता चौर्याभिप्रायेण हर्तव्यं वा मर्तव्यं वेति कृताध्यवसायौ तस्करौ वनर्गू वनगामिनौ मार्गमोषकौ प्रसृतौ । ताभ्यामुपमिमीते । तौ यथोपमार्थत्वेन सुपुष्टौ भवतो न तथा ग्रामतस्करौ । तौ यथा कंचिदध्वगं बध्नीयातां रज्ज्वैवमेतावस्मद्बाहू रशनाभिरङ्गुलीभिर्दशभिर्दशसंख्यायोगिनीभिरभ्यधीतां प्रतिनिबध्नीतः । अभिनिबध्य चाग्निमन्थनयोक्त्रेणाधरारण्युत्तरारणीभूतं त्वां तस्कराविव कंचिदध्वगं गाढं बद्ध्वा सुभृशमाकर्षतः । किमर्थं पुनरेवं मथ्यसेऽस्माभिः । हे अग्ने इयं यस्मान्नव्यसी नवतरा अन्यैः स्तोतृभिरदृष्टपूर्वा युष्मद्गुणैः संस्कृत्य विवक्षिता तव मनीषा स्तुतिः प्रधानसंयुक्ता । स त्वमेतज्ज्ञात्वा एवमभिमथ्यमानोऽस्माभिर्युक्ष्व योजयात्मानमरणी प्रति अरणिभ्यां शुचयद्भिर्दीप्यमानैः स्वैरङ्गैर्ज्वालाख्यैः । कथंपुनर्योजय । रथं न । यथा कश्चित्कुत-

(अस्यामृचि ज्यायांसौ बाहू कनीयोभ्यां तस्कराभ्यामुपमीयेते)

१० १५ २०

---

१ क. ख. छ. त. द. °स्तत्करोति यत्पाप°. २ क. ख. छ. त. द. 'अभ्यधीतामिति' नास्ति. ३ क. ख. २; छ. त. १६; द. ३. ४ ग. ज. °त्यजेव तस्करा । त्रित°; घ. ट. °त्यजेव त०रङ्गैः । त्रित°; ठ. ड. °त्यजेव । त्रित°. ५ ग. ज. तन्वं त्यक्त्वा; च. तनूं त्यक्त्वा. ६ ग. ज. °थोपमानं ता(ग. ती)र्थत्वेन. ७ घ. ट. ठ. ड. 'दशभिः' नास्ति. ८ क. ख. घ. ट. ठ. ड. °बध्नीताम्. ९ च. °रेव मथ्य°. १० ग. ज. °प्रदान°. ११ ग. ज. अरणीभ्यां.

२५ २९

श्विदाजिगमिषुः शीघ्रं रथं योजयेदेवमेवावतरणाय त्वमात्मानमाभ्यामरणी-भ्यां योजय। मा नो यज्ञविघ्नं कार्षीरित्यभिप्रायः। 'तनूत्यक्तनूत्यक्तौ' इत्यर्थः। 'वनर्गू वनगामिनौ'। तत्र हि तयोश्चौर्यं सिध्यति। एवम-स्यामृचि 'अग्निमन्थनौ बाहू' प्रशस्तौ 'तस्कराभ्याम्' अप्रशस्ता-भ्यामुपमिमीते' मन्त्रदृक्।

५ 'तस्करस्तत्' एव करोति यत् एव 'पापकं' भवतीत्येवं 'नैरुक्ताः' मन्यन्ते। वैयाकरणानां पुनरन्यथापि स्यात्। स हि 'संततकर्मा भवति'। रात्रौ ग्रामे मुष्णाति दिवारण्य एवम् 'अहोरात्रकर्मा'। एतदेव चं तत्संततकर्मत्वम्। रशनाभिर्दशभिरभ्यधीताम् इति। एवमत्र बाह्वोः 'ज्यायान् गुणोऽभिप्रेतः' तयोः प्रशस्तत्वात्।

१० अप्रशस्तत्वात्तस्करयोः कनीयान्। द्वितीयमुदाहरणमेतस्मिन्नेवार्थे। 'अथापि कनीयसा ज्यायांसम्' इति ॥ १४ ॥

---

**कुह स्विद्दोषा कुह वस्तोरश्विना कुहाभिपित्वं करतः कुहोषतुः। को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ [ ऋ० सं० १०।४०।२ ]॥ क्वस्विद्रात्रौ भवथः क्व दिवा क्वाभिप्राप्तिं कुरुथः क्व वसथः को वां शयने विधवेव देवरं देवरः कस्माद्द्वितीयो वर उच्यते विधवा विधातृका भवति विधवनाद्वा विधावनाद्वेति चर्मशिरा अपि वा धव इति मनुष्यनाम तद्वियोगाद्विधवा देवरो दीव्यतिकर्मा मर्यो मनुष्यो मरणधर्मा योषा यौतेरा-कुरुते संहस्थानेऽथ निपाताः पुरस्तादेव व्याख्याता यथेति**

१५

२०

---

१ क. ख. घ. ट. ठ. ड. 'आत्मानं' नास्ति. २ क. ख. ग. ज. घ. ट. ठ. ड. °रणीभ्यां. ३ क. ख. घ. ट. यज्ञे विघ्नं. ४ ग. च. ज. °त्यक्तेत्यर्थः. ५ घ. ट. 'च' नास्ति. ६ क. ख. घ. ट. ठ. ड. °शस्तत्वाच्च तस्क°. ७ क. ख. २; ग. १६/१८; च. ज. १८; घ. ट. अङ्को नास्ति; ट. ड. ॥ १४ ॥ इति निरुक्तवृत्तौ ( ङ. नैरुक्तभाष्ये ) तृतीयाध्याये चतुर्दशः खण्डः. ८ छ. त. द. °प्राप्तिं. ९ छ. त. 'देवरः कस्माद् द्वितीयो वर उच्यते' नास्ति. १० छ. सधस्था° ह्य; त. सधस्था° ह; द. सधस्था°.

२५

२९

**कर्मोपमा । यथा वातो यथा वनं यथा समुद्र एजति । भ्राजन्तो अग्नयो यथा । आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा । आत्माततेर्वाप्तेर्वापि वाप्त इव स्याद्याव-द्व्याप्तिभूत इति । अग्निर्न ये भ्राजसा रुक्मवक्षसः । अग्निरिव ये मरुतो[1] भ्राजमाना रोचिष्णूरस्का भ्राजस्वन्तो रुक्मवक्षसः ॥ १५[2] ॥**

---

कुह स्विद्दोषेति कक्षीवतो दुहिता घोषा नाम । तस्या इयमार्षम् । आश्विनी । जगती । प्रातरनुवाकाश्विनयोः शस्यते [ आश्व० श्रौ० ४ । १५ ] । हे अश्विनौ कुहस्विद्दोषा । क्व नु युवां रात्रौ भवथः । कुह वस्तोः । क्व[3] वा दिवा भवथो युवां येन नापि रात्रावस्माकं दर्शनमुपगच्छथो नापि दिवा । स्विदिति परिदेवनायामीर्ष्यायां वा ।

अस्यामृचि देवरेण कनीयसा ज्यायांसावश्विनावुपमीयेते विधवया च यजमानः

क्व वामभिपित्वम् अभिप्राप्तिं[4] स्नानभोजनाद्यर्थं कुरुथः । कुह वोषतुर्वसथः । सर्वथा न विज्ञायते वामागमनप्रवृत्तिः । किंच । को वां शयुत्रा । कतमो युवां यजमानः शयुत्रा शयने । किम् । विधवेव देवरम् । यथा विधवा मृतभर्तृका काचित्स्त्री शयने रहस्यतितरां यत्नवती देवरमुपचरति । स हि परकीयत्वान्नार्या दुरा-राध्यतरो[5] भवतीति[6] यत्नेनोपचर्यते न तथा निजो भर्ता । तस्मात्तेनोपमी-येते अश्विनौ । मर्यं[7] मनुष्यं देवरं सैव मृतभर्तृका योषा आ कृणते आभि-मुख्येन कुरुते । को वामेवमाभिमुख्येन सहस्थाने समाने सहयोगिना-त्मना कृत्वा परिचचार येनेह नोपगतवन्तौ स्थोऽस्मद्दर्शनमिति । एव-मस्यामृचि देवरेण कनीयसा ज्यायांसावश्विनावुपमीयेते विधवया च यजमानः ।

' विधवा विधातृका भवति '[8] । धाता धारयिता पोषयिता वा[9] भर्ता ।

---

१ छ. तं. द. ' मरुतो भ्राजमाना रोचिष्णूरस्का ' नास्ति. २ क. ख. २; छं. त. १७; द, ४ ३ घ. झ. ठ. ड. ' क्व ' नास्ति; ट. °वस्तो वा° स्तोः क्व वा; ग. ज. ' वा ' नास्ति. ४ ग. ज. °भिप्राप्तं. ५ ग. च. ज. दुराराधतरो. ६ क. ख. घ. झ. ट. ' इति ' नास्ति. ७ क. ख. घ. झ. ट ठ. ड. तथा मर्यं. ८ ग. च. ज. °भवति । धवो भर्ता स तस्या°. ९ ट. वा भर्ता ' धवो.

स तस्या विगत इति विधवा । " विधवनाद्वा " । सा हि भर्तृमरणेन विधूता कम्पितेव भवति । " विधावनाद्वा " । सा हि भर्तुरभावादननु-रुध्यमाना तत्र तत्र विधावतीत्येवं चर्मशिरा आचार्यो मन्यते । ' अपि वा धव इति मनुष्यनाम " । तद्वियोगाद्विधवा । ' देवरः ' इत्येष शब्दो

५ दीव्यत्यर्थः । स हि भर्तुर्भ्राता नित्यकालमेवं तया भ्रातृभार्यया देवनार्थं नियत इति देवर इत्युच्यते । " मर्यो मनुष्यः ' । स हि ' मरणधर्मा "। ' योषा यौतेः " मिश्रणार्थस्य [ धा० २ । २३ ] । सा हि मिश्रयत्या-त्मानं पुरुषेण साकम् । ' आकुरुते सहस्थाने ' समानस्थाने । आभि-मुख्येनात्मनः कुरुते परिचरणाय ।

१० 'अथ निपाताः' । ज्यायसा कनीयान्कनीयसा च ज्यायानुपमीयत इति सामान्यमुक्तम् । अथानन्तरं ये निपाताः समाम्नाता यथा ' अग्निर्न ये ' इत्येवमादयस्ते स्वावसरप्राप्ताः । ते च पुनः ' पुरस्तादेव व्याख्याताः ' [ निरु० १ । ४—११ ] सामान्यतः । विशेषत इदानीमुदाहरणतो व्याख्यायन्ते । तत्र ' यथेति ' एषा ' कर्मोपमा ' । किमुदाहरणम् ।

१५ यथेति कर्मोपमा । तस्या उदाहरणम् ' यथा वातो यथा वनं यथा समुद्र एजति । एवा त्वं दशमास्य सहावेहि जरायुणा ' [ ऋ० सं० ५ । ७८ । ८ ] ॥ सप्तवध्रिरात्रेयोऽपश्यदेना-मनुष्टुभम् । गर्भानुमन्त्रणे विनियुक्ता । यथा वातवनसमुद्रा एजन्ते कम्पन्त एवं त्वं हे दशमास्य दशमाससंभूत गर्भ एतस्मान्मातुरुदराद्दुःखयन्नेतामेजंश्चलन् अवेहि अर्वाङ् एहि सह जरा-

२० युणा उल्बेन । प्रजायस्व मा स्थास्त्वमेतस्मिन्नुदर इत्यभिप्रायः ।

अपरमुदाहरणम् । ' अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु ।

---

१ क. ख. घ. झ. ट. ठ. ड. 'विधवा' नास्ति. २ क. ख. ग. ज. °दनुरु°. ३ ठ. ड. चर्मशिरेति । चर्म°. ४ ग. च. ज. दीव्यतीत्यर्थः. ५ ग. ज. °मेवं. ६ ग. च. ज. आकृणुते. ७ घ. ट. ठ. ड. समास्थाने. ८ घ. झ. ट. ठ. ड. 'च' नास्ति. ९ क. ख. ब. झ. ट. °स्ते चत्वारोऽनस°. १० ग. च. ज. °णम् । १९ । यथा°. ११ क. ख. घ. झ. ट. ठ. ड. °श्यत् । एषा अनुष्टुप्. १२ ग. ज. चलयन्. १३ घ. झ. ट. अवाङ्. १४ ग. च. ज. °णम् । २० । अदृ°. १५ ग. च. ज. घ. झ. ट. केतव इति । चस्क°.

भ्राजन्तो अग्नयो यथा ।' [ऋ० सं० १ । ५० । ३ ] ॥ प्रस्कण्वस्यार्षम् । गायत्री । सौर्योऽनयातिग्राह्यो गृह्यते पृष्ठ्यस्य षष्ठेऽहनि [ मैत्रा० सं० १ । ३ । ३३ ] । अदृश्रमस्य केतवः । रश्मयः विविधा दृश्यन्तेऽस्य भगवतः सूर्यस्य । प्रज्ञानसतत्त्वास्ते हि तमोऽपहत्य सर्वप्राणिनां प्रज्ञानमभिव्यञ्जयन्तीति त एव केतव इत्युच्यन्ते लक्षणया । अथवा प्रकाशसतत्त्वास्त इति साक्षादेव केतुशब्दस्तेषु स्यात् । केतुरिति विज्ञानमुच्यते । विज्ञानं च पुनः प्रकाशः । प्रकाशसतत्त्वाश्चैत इति केतव उच्यन्ते । अथवा केतव इव सर्वतोदिशमुच्छ्रिता आदित्यमण्डले । ध्वजो हि केतुरित्युच्यते । के पुनस्त इति । रश्मयः । ते किं कुर्वन्ति य एवमुच्छ्रिता इति । उच्यते । जनान् अनु तिष्ठन्ति गच्छन्ति तमांस्यपहन्तुमन्यांश्चोपकारान्कर्तुमोषधिपाकादीन् । कथं पुनरनुतिष्ठन्ति । भ्राजन्तो दीप्यमानाः । कथम् । अग्नयो यथा । येन प्रकारेणाग्नयो भ्राजन्ते तथा भ्राजन्तोऽनुतिष्ठन्ते ।

तस्या एवान्यदुदाहरणम्.

अपरमुदाहरणम् । ' यदिमा वाजयन्नहमोषधीर्हस्त आदधे । आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ।' [ ऋ० सं० १० । ९७ । ११ ] ॥ आथर्वणो भिषक् । तेनेयमोषधिसूक्ते दृष्टा । अनुष्टुप् । एतेन पुनरुपतप्तो दीक्षित एकविंशतिभिर्यवदर्भपिञ्जूलमिश्राभिरद्भिरभिषिच्यत उपतापशान्त्यर्थम् [आश्व० श्रौ० ६।९] । अनेनैव सूक्तेनाग्निचयनेक्षेत्रं ग्राम्यारण्याभिरोषधिभिर्न्युप्यते [ मैत्रा० सं० ३ । २ । ९ ॥ तै० सं० ५ । २ । ५ ] । यद्यदाहमिमा ओषधीर्हस्ते आदधे आधाय च संनिकर्षेऽपि तिष्ठामि रोगिण एता ओषधीः वाजयन् पूजयन् । स्तुवन्नित्यर्थः । अथ तदैव तदनन्तरमेव पुरैव तासामोषधीनां

तस्या एव तृतीयमुदाहरणम्.

१ घ. झ. ट. ठ. ड. सौरी । सौर्योऽ°. २ ग. च. ज. ' रश्मयो विविधाः ' नास्ति. ३ क. ख. ग. ज. इत्युच्यन्ते. ४ च. इति. ५ क. ख. घ. झ. ट. ठ. ड. ' इति ' नास्ति. ६ ग. च. ज. °णम् । २१ । यदि°. ७ ग. च. ज. घ. ट. °यन्नहमिति । आथ° (ग. ज. अथ°). ८ झ. ठ. अथ°. ९ क. ख. °पिञ्जूलीमिश्रा°; घ. झ. ट. ठ. ड. °पिञ्जूलीभिर्मिश्रा°. १० घ. झ. ट. ठ. ड. उपशान्त्य°. ११ ग. ज. °नैवं च. १२ घ. झ. ट. ठ. ड. °चयनादूर्ध्वं क्षेत्रग्राम्या°. १३ च. प्रपूजयन्.

प्रयोगादस्मं[1]स्तुत्युन्नीतमोषधिवीर्यमसह्यं मन्वान आत्मा यक्ष्मस्य यक्ष्मणो नश्यति रोगस्यापुनरागमनाय । कथं पुनर्नश्यति । यथा जीवगृभो जीवग्राहस्य पुरैव हननादहतस्यैव जीवो नश्येद्विषादादेवैवमात्मा रोगस्यापि पुरैवौ[2]षधिप्रयोगान्नश्यतीत्यभिप्रायः ।

निगमप्रसक्तमुच्यते । ' आत्माततेर्वा ' । सर्वमेव हि तेनाततं[3] भवति सर्वगतत्वात्[4] । ' आप्तेर्वा ' । सर्वमेव हि तेन व्याप्तं भवति सर्वगतत्वादेव । ' अपि वाप्त इव स्याद्यावद्व्याप्तिभूत इति ' । अपि चैवमन्यथा स्यात् । आप्तो व्याप्त इव ह्यसौ कार्यकरणेन[5] स्यात् । किं च सर्वगतत्वेऽपि सति यावन्मात्रमेव तस्य कार्यकरणेन व्याप्यते तावन्मात्रभूत एवासौ लक्ष्यते । तावन्मात्रे हि प्रदेशे तस्य चैतन्यशक्तिरभिव्यज्यते तप्तायसि[6] दर्भमुष्टिप्रक्षेपादग्न्यभिव्यक्तिवदिति[7] । सूक्ष्मेण हि स्थूलं[8] व्याप्यते न स्थूलेन सूक्ष्मम् । स्थूलं च कार्यकरणम्[9] । सूक्ष्म आत्मा । तस्मादिवशब्दः ।

' यथा ' ' अग्निर्न ये ' ' चतुरश्चिद्ददमानात् ' इत्येष समाम्नायानुक्रमः [ निघ० ३ । १३ ] । अत्र[10] ' अग्निर्न य ' इत्यस्य निघण्टुसूत्रस्य[11] ' दुर्मदासो न सुरायाम् ' [ निरु० १ । ४ ] इत्यनेनैव गतार्थतेति मन्यमानाः केचिदत्र निगमं नाधीयते । अपरे पुनः समाम्नायानुक्रमोऽयमिति मन्यमाना एतं[12]मत्र निगममधीयते । 'अग्निर्न ये भ्राजसा रुक्मवक्षसो[14] वातासो न स्वयुजः सद्यऊतयः । प्रज्ञातारो न ज्येष्ठाः सुनीतयः सुशर्माणो न सोमा ऋतं यते[13] [ ऋ० सं० १० । ७८ । २ ] ॥ भार्गवस्य स्यूमरश्मे[15]रियमार्षम् । मारुती । जगती[16] । अग्निरिव ये

उपमावाचकस्य नेतिनिपातस्योदाहरणम्

१ क. ख. °दस्मात्सुनीत°; ग. ज. °दस्मान्स्तुत्यु°. २ ग. ज. °रैवोषधि°. ३ च. °नाततं° त; ठ. °नाततं. ४ क. ख. घ. झ. ट. ठ. ड. सर्वगत्वात्. ५ क. ख. घ. झ. ट. ठ. ड. कार्यकारणसंघातेन; च.कार्यकरणेन° संघाते. ६ ग. ज. घ. झ. ट. ठ. ड. तप्तायःशिलादर्भ°. ७ च. °वदिति° द; घ. झ. ट. ठ. ड. °दिति हि। सूक्ष्मेण°. ८ घ. ट. ठ. ड. स्थूलं च व्या°. ९ क. ख. घ. झ. ट. ठ. ड. कार्यकरणम्. १० क. ख. घ. झ. ट. ठ. ड. ' अत्र ' नास्ति. ११ क. ख. घ. झ. ट. ठ. ड. °ण्टुतन्त्रस्य. १२ घ. झ. ट. ठ. ड. एतमेवं. १३ ग. च. ज. °यते ॥ २२ ॥ अग्नि°. १४ ग. च. ज. घ. ट. ठ. ड. °वक्षसः । भार्गवस्य°. १५ क. ख. त्रसद्दस्योरि°. १६ ग. च. जगती.

भ्राजिष्णुतया रोचनाः[1] । यथा केचित्प्रकर्षेण[2] रुक्मवक्षसो रोचिष्णूरस्काः मरुतः । किं च वातासो न स्वयुजः सद्यऊतयः । वाता इव स्वयुजः । स्वेन स्वेनानुग्रहेणानुरूपेणानुग्राह्याणां स्तोतृणां योजयितारो ये ते स्वयुजः । किं तेषाम् । वाता इव ते सद्यऊतयः । शीघ्रगतय इत्यर्थः । किंच । प्रज्ञातारो न ज्येष्ठाः सुनीतयः । यथा केचित्प्रकर्षेण ज्ञातारः[3] सुनीतयः स्युः प्रशस्तया नीत्यान्विता एवमेतेऽपि मरुतः । बलप्रधाना हि ते इत्यतः प्रज्ञावद्भिरुपमीयन्ते । सुशर्माणो न सोमा ऋतं यते । सुसुखाः सुबन्धव इव सन्तु सोमाः सोम्याः ऋतं यते ऋतं यज्ञं कर्तुमिच्छते यजमानाय । य एवंगुणयुक्ता मरुतो भवन्ति तान् वयमभिप्रेतार्थसिद्धये स्तुम इति वाक्यशेषः ।

चिदित्ययमपरो निपात उपमार्थीयो भवति । पुरस्तादप्ययमुक्तः दधिचिदित्युपमार्थे[4] ' [ निरु० १ । ४ ] । इदानीं तु समाम्नायविशेषव्याख्यानावसरप्राप्तस्य[5] छान्दसमुदाहरणमस्य प्रदर्श्यते । कतमत्पुनस्तदिति । उच्यते[6] ॥ १५ ॥

———

**चतुरश्चिद्ददमानाद्बिभीयादा निधातोः । न दुरुक्ताय स्पृहयेत् [ ऋ० सं० १ । ४१ । ९ ] ॥ चतुरोऽक्षान्[7] धारयत इति तद्यथा कितवाद्बिभीयादेवमेव दुरुक्ताद्बिभीयान्न दुरुक्ताय स्पृहयेत्कदाचिदा इत्याकार उपसर्गः पुरस्तादेव व्याख्यातोऽथाप्युपमार्थे दृश्यते । जार आ भगम् । जार इव भगमादित्योऽत्र जार उच्यते रात्रेर्जरयिता स एव भासां तथापि निगमो भवति । स्वसुर्जारः शृणोतु न इत्युषसमस्य स्वसारमाह साहचर्याद्रसहरणाद्वापि त्वयं मनुष्यजार एवाभिप्रेतः स्यात्स्त्रीभगस्तथा स्याद्भजतेर्मेष इति भूतोपमा । मेषो भूतो३ऽभि यन्नयः । मेषो मिषतेस्तथा पशुः पश्यतेरग्निरिति रूपोपमा । हिरण्यरूपः स हिरण्यसंदृगपान्नपात्सेदु हिरण्यवर्णः । हिरण्यवर्णस्येवास्य**

---

१ घ. झ. ट. ठ. ड. रोचमानाः. २ क. ख. घ. झ. ट. ठ. ड. केनाचित्यक°. ३ घ. झ. ट. ठ. ड. ज्ञातारः । ज्येष्ठाः पूज्याः सुनी°. ४ घ. झ. ट. ठ. ड. °दित्ययमुप°; च. 'इति' नास्ति. ५ घ. ट. ठ. ड. °सरे प्राप्त°. ६ क. ख. ३; ग. च. ज. २३; घ. ट. अङ्को नास्ति; ठ. ड. १५ । इति निरुक्तवृत्तौ (ड. निरुक्तभाष्ये) तृतीयाध्याये पञ्चदशः खण्डः. ७ छ. त. द. चतुरश्चिद्धारय°.

**रूपं था इति च । तं प्रत्नथा पूर्वथा विश्वथेमथा । प्रत्न इव पूर्व इव विश्व इवेम इवेत्ययमेततरोऽमुष्मादसावस्ततरोऽस्मादमुथा यथासाविति व्याख्यातं वदिति सिद्धोपमा । ब्राह्मणवद् वृषलवत् । ब्राह्मणा इव वृषला इवेति वृषलो वृषशीलो भवति वृषाशीलो वा ॥ १६ ॥**

---

चतुरश्चिद्ददमानात्[1] । मित्रावरुणार्यम्णां तृचे घोरपुत्र एतां गायत्रीमपश्यत् । चतुरोऽक्षान्धारयमाणात्कितवात्कितवो बिभीयात्किमपि पतिष्यते तदन्यद्वा किंचिद्येन मामयं जेष्यतीति । निहितेषु न तथा भयं भवति यथा कितवस्य प्राङ् निधानात् । एवं सर्वदैव दुरुक्ताद्बिभीयात् । उद्विजेदित्यर्थः । तथा तथा वर्तेत यथा यथा दुरुक्तं न शृणुयान्न ब्रूयात् । दुरुक्ते हि वरुणो देवता । तस्मान्न दुरुक्ताय स्पृहयेत्कदाचिदपि । किंतु सूक्तमेव हि शृणुयाद्ब्रूयाच्च । तत्र हि मित्रो देवतार्यमा च ।

चित् इत्यस्योपमार्थे उदाहरणम्

' ब्राह्मणा व्रतचारिणः ' इत्येतदुपरिष्टाद्व्याख्यास्यते ' संवत्सरं शशयाना ' इत्येतस्मिन्मन्त्रे चतुर्दशेऽध्याये [ निरु० ९ । ६ ] ।

'वृक्षस्य नु ते पुरुहूत वयाः' इत्येतत्पुरस्ताद्व्याख्यातम् [निरु० १।४] ।

'आ इत्याकार उपसर्गः' । स पुनरेष ' पुरस्तादेव व्याख्यातः' 'आ इत्यर्वागर्थे' [ नि० १ । ३ ] इति । ' अथापि ' अयमेवाकारः कदाचित् ' उपमार्थे ' अपि ' दृश्यते ' । तद्यथा । ' जार आ भगम् ' इति । किमुक्तं भवति । 'जार इव भगम्' इति । आह । कोऽयमत्र जार इत्युच्यते । ' आदित्योऽत्र जार उच्यते ' अस्मिन्मन्त्रे ।

आ इत्ययं कदाचिदुपमार्थे

---

१ छ. त. द. ' वृषलो० शीलो वा ' नास्ति. २ क. ख. ४ ( १६ ); छ. त. १८; द. ५. ३ क. ख. चतुर स्पृहयेत् । मित्रा°; घ. ट. चतुराश्विद० स्पृहयेत् । मित्रा°; ठ. ड. चतुराश्विदिति । मित्रा°. ४ क. ख. °वात् योऽन्यः कितवो बिभी°; ग. ज. °वात् यो बिभी°. ५ क. ख. ट. ठ. ड. यति; °च. पिपिति° प. ६ ग. ज. कितवप्राङ्°. ७ क. ख. घ. झ. ट. ' एव ' नास्ति.

स हि 'रात्रेर्जरयिता' । तदुदये हि रात्रिर्जीर्यति[1] । विपरिणमतीत्यर्थः । 'स एव भासाम्' । चन्द्रादीनां या भासस्ता अपि स एव उद्यन् जरयति[2] ।

'उदीरय पितरा जार आ भगमियक्षति हर्यतो हत्त इष्यति । विवक्ति वह्निः स्वपस्यते मखस्तविष्यते असुरो वेपते मती'[3]

आ इत्यस्योपमार्थे उदाहरणम्

[ ऋ० सं० १०।११।६ ] ॥ अङ्गपुत्रो[4] हविर्धान[5] एतया जगत्या अग्निमस्तौत् । पितृमेधे विनियुक्ता । हे भगवन्नग्ने सर्वगतं सन्तमविशेषस्थ[6]मात्मानं विशेषात्मलाभाय उदीरय उद्गमयैवारणी पितरौ प्रति । अथवा द्यावापृथिव्यौ[7] पितरौ स्यातामहोरात्रे वा । ते प्रति विशेषात्मलाभायोपज्वलय त्वमात्मानम् । कथं च पुनरुदीरय । जार आ भगम् । जार इव भगम् । जार आदित्यो यथा भगं भजनीयं भौममान्तरिक्षं च रसं स्वं वा ज्योतिरूर्ध्वमीरयत्येवं त्वमात्मानं पितरौ प्रत्युदीरय । कस्मात्पुनरेवमादरवान्ब्रवीमि । यस्मादेष यजमानः इयक्षति यष्टुमिच्छति देवान्हर्यतः हवींषि प्रेप्सतः । न च त्वदृत इज्या शक्येयम्[8] । त्वमेव हि प्रतिविशिष्टं यज्ञसाधनम् । सर्वमन्यत्त[9]वैव गुणभूतम् । किंच । अयं यजमानो हत्तः हृदयेन इष्यति इच्छत्यात्मनोऽभिलषितान्कामान् । न च देवाननिष्ट्वा शक्यास्ते प्राप्तुमित्यतो ब्रवीमि देवयागाय यजमानकामप्राप्तये चोदीरय त्वमात्मानमिति । किंच । अयमपि वह्निः यज्ञवोढा होता स्वपस्यते यजमानायाभीष्टकामोपपिपादयिषया देवतितर्पयिषया च[10] तत्तृप्तये जगदनुग्रहाय च ऋत्विग्भिः कर्म क्रियमाणमिच्छते[11] विवक्ति । अतो ब्रवीम्यात्मानमभ्युदीरय पितरौ प्रति विशेषात्मलाभाय । किंच[12] । मखस्तविष्यते

१ क. ख. घ. झ. ट. ठ. ड. जीर्यते. २ ग. च. ज. जरयति । २४ । उदी°. ३ घ. ट. पितरा ०वेपते मती. ४ ग. ज. भगम् । अङ्ग°. ५ क. ख. अङ्गिरःपुत्रो; ठ. ड. आङ्गिरस अङ्ग°. ६ क. ख. घ. झ. ट. ठ. ड. °मशेषस्थ°. ७ च. 'द्यावा' नास्ति. ८ क. ख. घ. शक्येज्येयम्; ग. ज. °दृते ज्या श°; झ. शक्येज्येयम् । इत्या शक्यते पाठः । त्वमे°; ट. शक्येज्येय° इज्या शक्यते इति पाठान्तरम्. ९ क. ख. ग ज. घ. झ. ट. ठ. ड. 'तत्' नास्ति. १० क. ख. ग. ज. घ.झ. ट. ठ. ड. °मिच्छति विवक्ति च । अतो°. ११ च. विवक्ति मखः सांनाय्यं । अभ्युदीरिते पितरौ प्रति°. १२ च. 'किंच । मखः' नास्ति; ट. मख° मरुः साचाय्यं इति पाठान्तरम्.

परिसमाप्तिं यास्यत्युपक्रमादारभ्यापवर्गात् । अतो ब्रवीम्युदीरय त्वमात्मान- मिति । किंच । अयमप्यध्वर्युः असुरः असुमान्प्रज्ञावान् अतिकुशलोऽ- स्मिन्यज्ञकर्मणि वेपते मती मत्या वेपते प्रोत्कम्पमानहृदय आस्ते सादरः प्रह्वीभूतोऽपि नामायमुदीरयेदात्मानं ततोऽहमेन- यज्ञकर्म तनुयामिति । अतो ब्रवीम्युदीरय त्वमात्मानमिति । अपि वा असुरो ब्रह्मा । स हि त्रयीविद्योपजनितप्रज्ञानः । अपि वोद्गाता असुरः । स हि प्राणेनासुना तद्वान् । उद्गानस्य प्राणवृत्त्यधीनत्वाद्विशेष- णम् । अपि वा यज्ञाधिदैवतैवान्वादिश्येतासुर इत्यनेन तस्या आनन्त- र्यात् । अपि वा सर्व एवैते यजमानादयोऽन्वादिश्येरन् सर्वेषां प्रकृतत्वा- दसुराः । असुरो वेपत इति सर्व एते यजमानादयोऽसुमन्तो मतिभिर्वेपन्ते प्रोत्कम्पमानहृदया आसते युष्मदात्मोदीरणप्रतीक्षा अपि नामायमग्निरु- दीरयेदात्मानं ततो नोऽभिप्रेतार्थसाफल्यं स्यादिति । अतो ब्रवीम्युदीरय त्वमात्मानमरण्यादीनां पितॄणामन्यतमौ पितरौ प्रति । अपि वैतावेव पितरौ दम्पती यजमाना- वग्न्याधेयेन तत्र जननसंबन्धेन पितरौ । हे भगवन्नग्ने तावेतौ यज्ञफलविपरिणामकाल एतस्मिन्प्रत्युपस्थिते देवयानेन वा पितृयानेन वा मार्गेणोदीरयोद्गमय यथाप्रार्थितफलप्राप्तये । समान- मन्यदक्शेषं पूर्वेणैवार्थेन ।

(मार्जिन: असुर इति कोऽभिधीयते ; अग्नेः कौ पितरौ)

यथादित्यो जारशब्देनोच्यते 'तथापि' अयं 'निगमो भवति' इति । अन्येऽपि बहवः इत्यपिशब्दः । 'मातु- र्दिधिषुमब्रवं स्वसुर्जारः शृणोतु नः । भ्रातेन्द्रस्य सखा मम' [ ऋ० सं० ६ । ५५ । ५ ]॥ एषा गायत्री । भरद्वाजस्यार्षम् । 'एहि वां

(मार्जिन: अस्यामृच्यादित्यो जारः)

१ ग. च. ज. 'असुरः' नास्ति. २ क. ख. घ. झ. ट. ठ. ड. उद्गातृत्वस्य. ३ क. ख. घ. ट. °दिश्यतेऽसुर°. ४ क. ख. झ. असुरः असुराः वेपते वेपन्त इति । सर्वे°; घ. ट. ठ. ड. असुरा वेपते वेपन्त इति । सर्वे°. ५ ग. ज. सुम- तिभि°; च. सुमतिभि. ६ क. ख. घ. झ. ट. ठ. ड. पत्नीयजमाना°. ७ क. ख. घ. °वति । अथान्ये°; झ. °वति । यथान्ये°; ट. °वाते । अथान्ये° इत्य. ८ ग. च. ज. °शब्दः । २५ । मातु°.

विमुचो नपादाघृणे ' [ ऋ० सं० ६ । ५५ ] इत्येतस्मिन्पौष्णे सूक्ते । मातुः दिधिषुम् । माता रात्रिरादित्यस्य । स हि भगवान् रात्र्या जघने प्रातरुदेति कुमार इव स्त्रियाः प्रसवकाले । तेन ज्ञायते रात्रेरेवासौ जायत इति । अतो रात्रिर्माता । [1]तस्याः स एवं धारयिता रोद्धा । तं मातुर्दिधिषुं धारयितारमहम् अब्रवम् उक्तवानस्मि यन्मेऽभिप्रेतम् । स

आदित्यस्य होतुश्च कीदृशं सख्यम्

एव चादित्यो मम सखा समानख्यानः । यथैवाहमेतस्मिन्यज्ञे जगदनुग्राहके कर्मण्यभिप्रवृत्त एवमसावपि तापप्रकाशपाकरसादानवर्षादिलक्षणे कर्मणि जगदनुग्राहकेऽभिप्रवृत्त इत्येतस्मादावयोः समानख्यानत्वम्[2] । स य एवं मम समानख्यानो[3] मध्यमस्य च इन्द्रस्य भ्राता उदकभागहर्ता । अथवा मध्यमस्यैवोदकेन भर्तव्यः । तेन ह्यसौ दीप्यते । स पुनः किं करोतु । यच्च पूर्वमहमब्रवं तच्च साधयतु , यच्च सांप्रतं वयं ब्रूमस्तच्च शृणोतु[4] नः । श्रुत्वा तदपि साधयत्वित्यभिप्रायः ।

आदित्यस्य का स्वसा कथं च

स्वसुर्जार इत्येतस्मिन्मन्त्रे स्वसृशब्देन मन्त्रदृक् ' उषसमाह ' । आह[5] । केन पुनः सामान्येनेति । उच्यते । ' साहचर्याद्रसहरणाद्वा[6] ' । भ्राता स्वस्रा साकं बाल्ये नित्यमेव चरति तथा चोषसा साकमादित्य इत्येतत्सामान्यम् । आदित्यो[7] हि पूषा । ' अथ[8] यद्रश्मिपोषं पुष्यति तत्पूषा भवति ' इति हि वक्ष्यति [ निरु० १२ । १६ ] । तस्मात्पौष्णे[9] एतस्मिन्मन्त्रे जारत्वमेतद्[10]आदित्यस्य दर्शितम् । रसहरणाद्वोषाः स्वसास्या[11]दित्यस्य । भ्रातृस्वस्रोः सह[12]भोजनाभिप्रायं सामान्यम् ।

---

१ ग. च. ज. तस्य. २ क. ख. घ. झ. ट. ठ. ड. °त्वम् । यत एवं°. ३ क. ख. घ. झ. ट. ठ. ड. °ख्यानः अतो मध्य°. ४ क. ख. घ. झ. ट. ठ. ड. °णोतु । श्रुत्वा च तद्°. ५ घ. झ. ट. ठ. ड. अथ केन°. ६ ग. च. ज. °चर्याद्वा रस°. ७ घ. झ. ट. ठ. ड. °दित्योऽपि हि°. ८ ट. अथवाद्र° य; ठ. ड. अथवा रश्मि°. ९ क. ख. घ. झ. ट. °स्मात्पूष्ण ए°. १० च. °रत्वमित्येतदा°. ११ क. ख. घ. झ. ट. ट. ड. ' अस्य ' नास्ति. १२ क. ख. घ. झ. ठ. ड. संभोज°; ट. संभोज° सह.

'अपि त्वयं मनुष्यजार एवाभिप्रेतः स्यात् ' । अप्यादित्यस्त्वेवेपि मनुष्यजारः पारजायिक इत्यपिशब्दः । अयमेवास्मिन्मन्त्रे ' उदीरय पितरा जार आ भगम् ' इत्यभिप्रेतो मन्त्रदृशो नैरुक्तानां वा स्यात् । "तथा" पुनः सति 'स्त्रीभगः' एव 'स्यात्'। भगः ' भजतेः ' सेवनार्थस्य [ धा० १ । १०२३ ] । स हि सेव्यते मैथुनार्थिभिः पुरुषैः । जारो मनुष्यः । स हि परकीयां स्त्रियं भोगेन सर्वाङ्गिकेण निर्दयो भूत्वा जरयति विपरिणामयति म्लानरूपां करोति न तथा निजो भर्ता । तं च दृष्ट्वा तद्दर्शनेनैवोदीरित एव स्त्रिया भग उपस्थः पुरुषशिश्नसंप्रयोगोत्कण्ठतयार्द्रीभवति । तथैवमरणियोक्त्रादिहस्तानस्मान्युष्मन्निमथिषून्दृष्ट्वोदीरय त्वमात्मानं हे भगवन्नग्ने इत्येवं योज्यं जारशब्दे मनुष्यविषये सति ।

अत्र जारशब्देन मनुष्यजार एवाभिप्रेतः स्यान्नादित्यः

' मेष इति भूतोपमा ' । मेष इत्येषा भूतशब्देनोपमा । ' मेषो भूतोभि यन्नयः ' इत्येष निगमः । निगमप्रसक्तमुच्यते । ' मिषो मिषतेः ' दर्शनार्थस्य । पर्यायप्रसक्तमुच्यते । ' तथा पशुः पश्यतेः ' इति । पश्यति ह्यसौ । ' इत्था धीवन्तमद्रिवः काण्वं मेध्यातिथिम् । मेषो भूतोऽभि यन्नयः ' [ ऋ० सं० ८ । २ । ४० ] ॥ काण्वस्यैव मेधातिथेरार्षम् । ऐन्द्री गायत्री । हे अद्रिवः अद्रिवन् वज्रिन् इत्था अमुना प्रकारेण मेषो भूतः । ' इत्थम् ' अनेन शब्देनामुनेत्येतच्छब्दपर्यायवाचिनाभिगमनप्रकारमेतस्मादेव मन्त्रदृग्दर्शनाद्विज्ञायाभिनयेन मन्त्रदृग्वर्तमानः काण्वो मेधातिथिर्दर्शयति । हे अद्रिवन् एवमन्यैकल्पान्त-

भूतोपमाया उदाहरणम् ।

१ क. ख. घ. झ. ट. ठ. ड. ' तु ' नास्ति. २ च. °ङ्गिकेन. ३ क. ख. घ. झ. ट. ठ. ड. दृष्टान्तदर्शनेनैवो°. ४ क. ख. घ. झ. ट. °वोदीरय । यथैव स्त्रिया°; ठ. ड. °वोदीरित एव । यथैव स्त्रिया°. ५ ग. ज. ठ. ड. °योगात्कण्ठ°; घ. झ. °योगात् आर्द्री°; ट. योगात् आर्द्री° कण्ठतया. ६ ग. च. ज. ह्यसौ ॥ २६ ॥ इत्था°. ७ ग. च. ज. °द्रिवः । काण्व°; घ. झ. ट. °द्रिवः० भि यन्नयः; ठ. ड. ऋङ् न पठ्यते. ८ क. ख. ग. ज. मेध्याति°; च. मेध्याति° धा. ९ क. ख. घ. झ. ट. ठ. ड. °तिथेरियमार्षम्. १० च. कण्वो. ११ ग. ज. मेध्याति°; च. मेध्याति° धा. १२ घ. झ. ठ. °मन्यत्कल्पा°.

र्णमेव मेध्यातिथिं धीवन्तं कर्मवन्तं प्रज्ञावन्तं वा अभियन् आहूतो यज्ञे कर्मण्याभिमुख्येनाभ्युद्यतैर्महद्भिर्दायैः यन् गच्छन् आह्वानसमन्तरमेवाविलम्बमानो मेषो भूतो मेष इव किंचिदप्युत्तरमब्रुवन् तं गौरवावनतमित्था अनेन प्रकारेण अयस्त्वम् आसधानसि । न च तदस्माकमप्रत्यक्षम् । एतस्मादेव मन्त्रदर्शनादखिलं तद्विजानीमो वयं यतोऽतो ब्रूमः । अपवृत्ते तस्मिन्काण्वे मेध्यातिथौ सहान्यमन्वन्तरीणैरधिकारिभिरिदानीमस्य मनोरन्तरेऽन्यमेधातिथिप्रापकेण कर्मणा मेधातिथिपदं तदहं प्राप्तवान् । सोऽहं ब्रुवे । यास्ताः काण्वमेधातिथिद्वारेण स्तुतयो नित्याः प्रादुर्भवन्ति ताः एताः सांप्रतमपि वर्त्तन्ते । स त्वमेताः शुश्रूषुर्हवींषि चास्मत्प्रत्तानि प्रतिजिघृक्षुः पूर्वकाण्वमेधातिथिवदस्मानप्यभ्येहि किमर्थं वा नाभ्येषीत्यभिप्रायः ।

'अग्निरिति' एषा 'रूपोपमा'। "हिरण्यरूपः स हिरण्यसंदृगपां नपात्सेदु हिरण्यवर्णः । हिरण्ययात्परि योनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै"

[ ऋ० सं० २ । ३५ । १० ] ॥ गृत्समदस्येयमार्षम् । त्रिष्टुप् । अपांनपाद्देवता । कुम्भेष्टकोपधानेऽग्निचयने विनियुक्ता [ मैत्रा० सं० २ । १३ । १ । ] । हिरण्यरूपः हिरण्यसमानरूपः ।

रूपोपमाया उदाहरणम्

अपि च । सः अपांनपात् मध्यस्थानो वैद्युतोऽग्निरादित्यस्य पुत्रोऽपां नप्ता । प्रावृट्काले घर्मार्तानां प्रजानामन्नार्थिनीनां च हिरण्यसंदृक् हिरण्यमिव संदृश्यमानः प्रीतिजनकः । अपि च । स एव हिरण्यवर्णः हिरण्यमिव वरणीयः प्रार्थनीयो भूतानाम् । य एवंगुणयुक्तोऽपांनपात्स किं करोतीति । हिरण्ययात्तेजोमयात् योनेः आदित्याख्याद्विनिर्गम्य परिनिषद्य

---

१ च. मेध्यााति° धा. २ ग. ज. धीमन्तं. ३ ठ. ड. अभिनयन्. ४ च. 'अतो' नास्ति. ५ क. ख. घ. झ. ट. ठ. ड. 'अन्य.' नास्ति. ६ ग. ज. मेध्याति°; च. मेध्याति° धा°. ७ ग. ज. घ. झ. ट. ठ. ड. मेध्याति°; च. मेध्याति° धा. ८ घ. झ. ट. ठ. ड. 'ताः' नास्ति. ९ ग. च. ज. °पमा ॥ २७ ॥ हिर°. १० ग. च. ज. घ. ट. ठ. ड. °संदृगिति । गृत्स°. ११ क. घ. झ. ठ. अपान्नपात्. १२ घ. ट. ठ. ड. मध्यमस्था°. १३ घ. ट. ठ. हिरण्मया°; ठ. ड. अस्मात्पदात्प्राक् 'हिरण्ययात्परि' इत्यर्धर्चं पठ्यते. १४ क. ख. घ. ट. आदित्याद्विनिर्गत्य ( घ. ट. °र्गम्यत्य ).

सर्वतो निपद्य मध्यस्थाने व्याप्यान्तरिक्षलोकमभ्रजालेन। हिरण्यदाः इत्येकं पदं विसर्जनीयान्तम्। हिरण्यदाः हिरण्यदाता। सोऽपांनपात् परिनिषद्य ददति ददातु अन्नम् अन्नहेतु उदकम् अस्मै यजमानायेति। 'समुद्राद्दूर्मिर्मधुमाँ उदारदित्यादित्यमुक्तं मन्यन्ते' [ निरु० ७। १४ ] इत्येतस्माद्दर्शनादपां पुत्र आदित्यः 'आदूतो अग्निमभरद्विवस्वतः' [ ऋ० सं० ६। ८। ४ ] इत्यतश्चादित्यस्यापि वैद्युतोऽग्निः पुत्र इत्येवमसावपांनपात् अपां नप्ता।

'था' इत्ययं चोपमाशब्दः। आह। किमुदाहरणम्। उच्यते। 'तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम्। प्रतीचीनं वृजनं दोहसे गिराशुं जयन्तमनु यासु वर्धसे' [ ऋ० सं० ५। ४७। १ ]॥ अवत्सारः पञ्चदशर्चं सूक्तमपश्यद्वैश्वदेवम्। तस्मिन् वैश्वदेवे सूक्ते प्रथमामेवैतां जगतीमपश्यत्। वैश्वदेवेषु च सूक्तेष्वेकदेवता अपि मन्त्रा भवन्त्येव। बाह्वृच्ये वाजपेये सप्तदशे शस्त्रे विनियुक्तेयम् [ आश्व० श्रौ० ९। ९। ११ ]। चरकाध्वर्यवः पुनरनया मन्थिनं गृह्णन्ति [ मैत्रा० सं० १। ३। ११ ]। तेषां पुनः श्रुतिः। 'प्रजापतेर्वा एते चक्षुषी यच्छुक्रामन्थिनावसावादित्यः शुक्रश्चन्द्रमा मन्थी' [ मैत्रा० सं० ४। ६। ३॥ काठ० सं० २७। ८ ] इति। एवं चन्द्रदैवतोऽयं मन्त्रः। अपि वा 'तस्मै सूर्याय सुतमाजुहोत' [ मैत्रा० सं० १। ३। १२ ] इति हवनमन्त्रे सूर्यश्रवणात्सूर्यदैवतोऽयम्। शौनकस्तु दाशतये समाम्नाये मन्त्रदेवता अनुक्रममाणः 'को नु वां मित्रावरुणौ' [ ऋ० सं० ५। ४१ ] इत्यत आरभ्य 'वैश्वदेवान्येकादशसूक्तानि' [ बृहद्दे० ५। ३६ ] इत्यवोचत्। तेषां 'तं प्रत्नथा' इत्येतच्चतुर्थं सूक्तम्।

(अस्य मन्त्रस्य तासु तासु शाखासु भिन्ना भिन्ना देवताः)

(देवताविषये शौनकमतम्)

१ घ. ट. ठ. ड. 'सर्वतो निषद्य' नास्ति. २ घ. ट. ठ. ड. ददाति. ३ घ. ट. ठ. ड. 'च' नास्ति. ४ च. वोपमा°. ५ ग. च. ज. उच्यते ॥ २९॥ तं°. ६ ग. च. ज. ठ. ड. पूर्वथा विश्वथेमथेति। अव°; घ. ट. पूर्वथेति। अव°. ७ ठ. ड. °त्सारऋषिः पञ्च°. ८ ग. ज. चन्द्रदेव°. ९ क. ख. घ. झ. ट. ठ. ड. हविराजु°. १० क. ख. ग. ज. सूर्यदेव°. ११ क. ख. घ. ट. ठ. ड. 'इति' नास्ति.

तेन तन्मत्या वैश्वदेव एष मन्त्रः स्यात् । वाजसनेयिनां पुनरनया शुक्रो गृह्यते [वा० सं० ७ । १२ । शत० ब्रा० ४ । १ । ६ । ९ ] । स च 'सा प्रथमा संस्कृतिः' इत्यनेनैन्द्रेण हूयते [ शत० ब्रा० ४ । १ । ६ । २७ ] । तेन तेषाम्[1]प्यैन्द्र एव । चारके पुनराध्वर्यवे श्रुतिः शुक्रामन्थिनोः । 'तस्मा[2]देतावन्यदेव[3]त्यौ गृह्येते अथेन्द्राय हूयेते' [ मैत्रा० सं० ४ । ६ । ३ ] इति । ते[4]न ज्ञायते यद्यपि हवनमन्त्र ऐन्द्रो[5] मन्थिनस्तथापि ग्रहणमन्त्रो नैन्द्र इति । स एष सर्वथाप्येवं दुरवधारदेवतो मन्त्रोऽनिरुक्तदेवतालिङ्गत्वात् । शण्डामर्कयोस्त्वसुरपुरोधसोः संमोहनार्थमनेनानिरुक्तदेवतालिङ्गेन मन्त्रेणान्यतरः शुक्रामन्थि[6]नोर्गृह्यते । 'शण्डामर्कौ वा असुराणां पुरोहितावास्ताम्' इत्युपक्रम्य 'तावेतौ शुक्रामन्थिनाववृ[7]णाताम्' इत्युक्त्वा 'तावपनुद्याथेन्द्रायाजुहवुः' [ मैत्रा० सं० ४ । ६ । ३ ] इत्युक्तम् । तस्मात्तावनेनानिरुक्तदेवतालिङ्गेन मन्त्रेण संमोह्येते । सौम्यो वा स्यादयम् । सोमो ह्युच्यते मन्थिपात्रेण शुक्रपात्रेण गृह्यमाणो गृहीतो वा सप्तदशशस्त्रशंसनाभिप्राये[8]र्ण । हे भगवन् सोम तमिन्द्रं वा वैश्वदेवं गणं वा ज्येष्ठराजं ज्येष्ठदीप्तिम् । अथवा ज्येष्ठः श्रेष्ठः सर्वेषां देवानामिन्द्रः स यस्य राजा सोऽयं ज्येष्ठराट् वैश्वदेवगणस्तं ज्येष्ठराजम् । बर्हिषदम् । बर्हिष्याहूतो यज्वभिर्यः सीदति स बर्हिषत् तं बर्हिषदम् । स्वरिव यो दृश्यते सः स्वर्दृक् तं स्वर्दृ[9]शम् । सूर्यसमानदर्शनमित्यभिप्रायः । आशुं शीघ्रं जयन्तं जेतव्यानसुरादीन् । तमेवंगुणसंयुक्तमिन्द्रं वैश्वदेवं वा गणं हे सोम यासु[10] यास्वनुवर्धसे पुनः पुनः संक्रियसे स त्वं क्रियासु तासु तास्वे[11]वस्थितस्त्वं गिरा स्तुत्या सहितस्त्वं प्रतीचीनं यज्ञाभिमुखमिन्द्रं वैश्वदेवं वा गणमवस्थाप्य स्ववीर्येण तर्पयित्वास्मै यजमानाय वृजनं[12] धनं दोहसे धोक्षि प्रक्षारयसि । क[13]थं पुनर्धोक्षीन्द्रं वैश्वदेवं वा गणम् । प्रत्नथा

---

१ क. ख. घ. ट. ठ. ड. °प्यमैन्द्र°. २ ग. ज. तस्मादेव तौ अन्य°; ठ. ड. तस्मादेव तावन्य°. ३ क. ख. घ. ट. ठ. ड. °वन्यदेवतौ गृ°; ग. च. ज. °वन्यदैवत्यौ. ४ ग. च. ज. तेन न ज्ञा°. ५ ग. च. ज. °मन्त्र एव ऐन्द्रो. ६ ग. ज. घ. ट. ठ. ड. °मन्थिनो गृह्य°. ७ सर्वेषु पुस्तकेषु 'आवृणेथाम्' इति पाठः । 'अवृणाताम्' इति मैत्रायणीपाठः. ८ ठ. ड. °प्रायेण' इत्यनन्तरं सर्वा ऋक् पठ्यते. ९ ठ. ड. स्वर्दृशः. १० च. 'यासु' सकृदेव. ११ घ. ट. तास्वेव स्थि°. १२ ग. च. ज. वृजिनं. १३ घ. ट. ठ. ड. कथं च पुनः.

चिरन्तना इव । ये महर्षयो भृग्वादयस्तेषां यथा दुग्धवानसि तथास्माकमपि धोक्षि । अपि च । पूर्वेषां स्रष्टॄणां यथा दुग्धवानसि तथास्माकमपि धोक्षि[1] । अपि च । विश्वथा ऋषिपुत्रकाणामृषीणां च सर्वेषां यथा दुग्धवानसि तथास्माकमपि धोक्षि । अपि च । इमथा यथा वर्तमानकालीनानां
५ यजमानानां धोक्षि तथैवास्माकमपीति । एवमेष यथाभिमतदैवतं योज्यः ।

इमथेत्येतस्मात्प्रसक्तमुच्यते । 'अयम्' इत्यस्य शब्दस्य का व्युत्पत्तिरिति । 'एततरः' ह्यागततर आसन्नतरो यः[2] 'अमुष्मात्' दूरस्थाद्भवति सोऽयमित्युच्यते । आह । 'असौ' इत्यस्य का व्युत्पत्तिरिति ।
१० उच्यते । 'असावस्ततरोऽस्मात्' क्षिप्ततर इव विप्रकृष्टत्वाद्भवति । आह । कुतः क्षिप्ततरः । उच्यते । 'अस्मात्' एततरात् । असावित्येतस्मात्प्रसक्तमुच्यते । 'अमुथा यथासाविति व्याख्यातम्' । अमुथेत्येतद्यथासावित्यनेन व्याख्यातम् । य एवार्थोऽसावित्यनेन शब्देनोक्तो भवति स एवार्थोऽमुथेत्यनेनाप्युक्तो भवति ।

१५ 'वदिति' एषा 'सिद्धोपमा' । सिद्धैवैषोपमा लोके । आह । कथं कृत्वा । उच्यते । 'ब्राह्मणवद्वृषलवत्' । ब्राह्मणवदधीते वृषलवच्चाक्रोशतीति[3] । छान्दसमुदाहरणं ब्रवीति ॥ १६[4] ॥

---

**प्रियमेधवदत्रिवज्जातवेदो विरूपवत् । अङ्गिरस्वन्महिव्रत**
२० **प्रस्कण्वस्य श्रुधी हवम् [ ऋ० सं० १ । ४५ । ३ ] ॥ प्रियमेधः प्रिया अस्य मेधा यथैतेषामृषीणामेवं प्रस्कण्वस्य शृणु ह्वानं प्रस्कण्वः कण्वस्य पुत्रः कण्वप्रभवो यथा प्राग्रमर्चिषि भृगुः संबभूव भृगुर्भृज्यमानो न देहेऽङ्गारेष्वङ्गिरा अङ्गारा अङ्कना अञ्चना[5] अत्रैव तृतीयमृच्छतेत्यूचुस्तस्मा-**

२५ १ क. ख. ग. ज. 'अपि० धोक्षि' नास्ति. २ क. ख. घ. ट. ठ. ड. 'यः' नास्ति. ३ क. ख. 'शतीति ॥ ४ ॥ छा°; ठ. ड. °शतीति ॥ १६ ॥ इति निरुक्तभाष्ये ( ड. नैरुक्तभाष्ये ) तृतीयाध्याये षोडशः खण्डः । छा°. ४ ग. च. ज. २९ ( १८ ); इतरेष्वङ्को नास्ति. ५ छ. त. द. 'अञ्चना' नास्ति.

दात्रिर्न त्रय इति विखननाद्वैखानसो भरणाद्भारद्वाजो विरूपो नानारूपो महिव्रतो महाव्रत इति ॥ १७[1] ॥

इति[2] तृतीयाध्यायस्य तृतीयः पादः ॥

---

' प्रियमेधवत् ' इति । एषा प्रस्कण्वस्यार्षम् । अनुष्टुप् । आग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते [ आश्व० श्रौ० ४ । १३ । ७ ] । हे जातवेदः महिव्रत महाव्रत महाकर्मन् । महद्ध्यस्य भगवतोऽग्नेर्जातवेदसः कर्म हविर्वहनादिलक्षणम् । तेनैवमामन्त्र्यते महिव्रतेति । यथैतेषामृषीणां प्रियमेधादीनां श्रुतवानसि पूर्वमाह्वानं शृणोषि वैवं ममापि प्रस्कण्वस्य शृण्वाह्वानमित्याशीः । एषं[3] समस्तार्थः ।

सिद्धोपमाया उदाहरणम्

अथैकपदनिरुक्तम् । ' प्रियमेधः प्रिया अस्य मेधाः ' । यज्ञाः इत्यर्थः । यष्टुमिति वाक्यशेषः । ' प्रस्कण्वः कण्वस्य पुत्रः ' । प्रशब्दस्य तद्धितार्थत्वं निराह ' कण्वप्रभवः ' । कण्वस्यापत्यमित्यर्थः । ' यथा ' प्रगतमग्रं ' प्राग्रम् ' इत्युच्यते गतशब्दलोपं कृत्वैवमिहापि ' कण्वप्रभवः ' इति वक्तव्ये भवशब्दलोपं कृत्वा व्यत्ययेन च प्रस्कण्व इत्युक्तम् । ' भृगुर्भृज्यमानो न देहे ' । प्रजापतिना किल शुक्रमात्मीयमादायाग्नौ हुतम् । ततः ' अर्चिषि ' ज्वालायां भृगुः ' नाम महर्षिः ' संबभूव ' । व्यपगतेऽर्चिषि ' यः अङ्गारेषु ' संबभूव सोऽङ्गिरा नामाभवत्[4] । विग्रहप्रसक्त० मुच्यते । ' अङ्गारा अङ्कनाः ' । ते हि यत्र निधीयन्ते[5] तदङ्कितं भवति । तस्मिन्नुत्पन्ने द्वितीये ' अत्रैव तृतीयमृच्छतेत्यूचुः ' ये पूर्वोत्पन्नास्ते । ' तस्मात् ' अत्रैव तृतीय इत्येतस्मादनुव्याहारात् ' अत्रिः ' अभवत् । अथवैवमन्यथा स्यात् । अत्रिः । प्रतिषेधार्थोऽत्राकारः । कथम् । ' न त्रयः ' एवात्र । किं तर्हि । खन्यतामेतदग्निस्थानं चतुर्थोऽप्यत्र भविष्यतीत्येवमनुव्याहारादत्रिरभवत् । व्युदुह्याग्निं तस्मिन्नग्निस्थाने खाते य उत्पन्नः सः ' विखननाद्वैखानसः ' एवं[6] नाम्ना अभूत् बभूव । 'अर्चिःषुं[7] अङ्गारेषु

---

१ क, ख. द. ५; छ. त. १९. २ ड. थ. ध. ' इति० पादः ' नास्ति; छ. इति तृतीयः; त. इति तृतीयाध्याये तृ°; द. इति नैरुक्तस्य तृ°. ३ घ. ट. ठ. ड. एवं. ४ च. नामा भवति° म. ५ घ. ट. ठ. ड. ' नि ' नास्ति; च. यत्र धीय°नि. ६ क. ख. ग. ज. एव. ७ ग. ज. आर्चिषि.

अत्रैव तृतीयं विखननाद्वैखानसः' इत्यनयैवानुपूर्व्यैतानि निर्वचनान्युपपादयितुं शक्यन्ते। तस्मान्मन्त्रपाठविपर्यासेनैतानि निरुक्तानि। 'विरूपो नानारूपः' इति[1] ऋज्वेव[2]। 'महिव्रतो महाव्रत इति' अर्थः। व्रतमिति कर्मनाम॥ १७॥

५ इति[3] निरुक्तवृत्तौ अष्टमाध्यायस्य तृतीयः पादः[4]॥

---

**अथ लुप्तोपमान्यर्थोपमानीत्याचक्षते सिंहो व्याघ्र इति पूजायां श्वा काक इति कुत्सायां काक इति शब्दानुकृतिस्तदिदं शकुनिषु बहुलं न शब्दानुकृतिर्विद्यत इत्यौपमन्यवः काकोऽपकालयितव्यो भवति तित्तिरिस्तरणात्तिलमात्रचित्र इति वा कपिञ्जलः कपिरिव जीर्णः कपिरिव जवत ईषत्पिङ्गलो वा कमनीयं शब्दं पिञ्जयतीति वा श्वाशुयायी शवतेर्वा स्याद्गतिकर्मणः श्वसितेर्वा सिंहः सहनाद्धिंसेर्वा स्याद्[5]विपरीतस्य संपूर्वस्य वा हन्तेः संहाय हन्तीति वा व्याघ्रो व्याघ्राणाद्व्यादाय[6] हन्तीति वा॥ १८॥**

---

'अथ लुप्तोपमान्यर्थोपमानीत्याचक्षते'। उपमाधिकारो वर्तते। 'यदतत्तत्सदृशमिति'[7] [निरु० ३। १३] इत्येतदुपक्रान्तम्। तत्र शब्दवत्यश्चोपमा भवन्ति लुप्तोपमाशब्दाश्चेति[8]। तत्र 'अग्निर्न ये' इत्येवमादिभिः शब्दैरुपमिमित्सितानामर्थानां[9] समानरूपैरर्थैरुपमानं क्रियत इत्येतदनुक्रान्तम्। अथेदानीं येषु पदेषु लुप्यन्ते उपमाशब्दा इवादयस्तान्यवसरप्राप्तानि व्याख्यास्यामः। तानि पुनरेतान्यर्थोपमानीत्येवमा-[10]

अर्थोपमालक्षणम्

---

[1] ग. ज. °विरूपो नाम इति°. [2] क. ख. ५; ग. १९; इतरेष्वङ्को नास्ति. [3] ग. च. ज. 'इति निरुक्तवृत्तौ' नास्ति; ठ. इति निरुक्तवृत्तौ तृतीयाध्याये सप्तदशः खण्डः ॥ १७॥ आदितो निघण्टुमारभ्याष्टमाध्यायस्य तृतीयः पादः. [4] ड. पादः। इति निरुक्तभाष्ये तृतीयाध्याये सप्तदशः खण्डः. [5] छ. त. द. 'स्यात्' नास्ति. [6] क. ख. द. १; छ. त. २०. [7] क. ख. घ. ट. ठ. ड. यदेत°. [8] क. ख. ग. ज. 'इति' नास्ति. [9] ग. °मितिसि-ताना°; ज. °मितिसनिताना°; च. °मिमीषिताना °त्सि. [10] क. ख. घ. ट. ठ. ड. °पुनरिमान्य°.

चक्षत आचार्याः । निरूढा हीयं तेषु संज्ञेत्यभिप्रायः । तानि च पुनरसमाम्नातान्येव निघण्टुसमाम्नाये । तेषु वक्तुरभिप्रायगता एत एवोपमाशब्दा अर्थतो लिङ्गयन्त इत्यर्थोपमा इत्युच्यन्ते । तान्येतानि भाष्यस्य विस्तरविषयत्वादसमाम्नातान्यपि सन्त्यवसरप्राप्तानि प्रदर्श्यन्ते । तद्यथा ।

पूज्यवाचकान्युपमानानि

'सिंहो व्याघ्र इति पूजायाम्' । यो हि पूज्यो भवति स उच्यते सिंहो देवदत्त इति । अत्र न सिंह एव देवदत्तः । किं तर्हि । सिंहगुणस्तत्र कश्चिदस्ति शौर्यादिः[1] । तदभिधानीयं वाक्यं कृत्वोपमाशब्दानामिवादीनामन्यतममनुच्चारयन्नेवं[2] ब्रवीति 'सिंहो देवदत्तः' इति । यत्तदनुच्चारणमुपमाशब्दस्य स एव लोप इत्युच्यते ।

कुत्सावाचकानि च

'श्वा काक इति कुत्सायाम्' । यो हि लौल्यादिदोषसमन्वयेन कुत्सनीयो भवति स एवमुच्यते श्वायमिति । अत्रापि श्वेवायमितीवशब्दस्य[3] लोपो द्रष्टव्यः । धाष्ट्र्यादिदोषसमन्वयेन[4] यः कुत्स्यते स काकोऽयमित्युच्यते । काकादिशब्दानुदाहरणप्रसक्तान् निर्ब्रवीति 'काक इति शब्दानुकृतिः' । अनुकरणमनुकृतिः । शब्द-

काकादिनामानि शब्दानुकृतिमूलानि

स्यानुकृतिः शब्दानुकृतिः । यादृशमेवासौ शब्दं करोति तयैवानुकृत्या[5] तस्य नामापि भवति । स हि काकुंकाक्निति[6] वाश्यते[7] तस्मात्स काक इत्युच्यते । 'तदिदम्' एवं शब्दानुकृतिहेतुकं नाम 'शकुनिषु' एव । 'बहुलं' प्रायेणेत्यर्थः । 'न शब्दानुकृतिर्विद्यत इत्यौपमन्यवः' । शकुनिष्वपि न शब्दानुकृतिहेतुकं नाम विद्यत इत्यौपमन्यव आचार्यो मन्यते । किं कारणम् । व्यभिचारित्वात् ।

१ क. ख. घ. ट. ठ. ड. °र्यादिः । अतस्तदभिधानेनोपमार्थं कृत्वा°; ग. ज. °र्यादिः । तदभिप्राये धानीयं वाक्यं°. २ क. ख. घ. ट. ठ. ड. °न्नेव. ३ ग. ज. शब्दलोपो°. ४ क. ख. घ. ट. ठ ड. °दोषसमुच्चयेन; च. 'दोष' नास्ति. ५ क. ख. घ. ट. ठ. ड. तथैवा°. ६ ग. ज. काकु काक्के°; घ. ट. काकुं काकु इति; ठ. काकुक्काकिति; ङ. काकुक्काक्किति. ७ ग. च. ज. ड. वाश्यति.

शब्दानुकृतिर्न विद्यत इत्यौपमन्यवः

श्यामा दर्वी पुच्छः प्लवो हंस इत्येवमादिषु शब्दानुकरणहेतुको नामधेयप्रतिलम्भो नास्ति। शकुनिपक्षेऽपि शब्दानुकारो न विद्यते । बहवो ह्येवंप्रकारा अन्यक्रियार्जैर्नामभिरन्विताः

५ शकुनयः । तत्र यदुक्तं ' तदिदं शकुनिषु बहुलम् ' इत्येतदयुक्तम् । आह । तर्हि कथं काकस्यान्यक्रियाहेतुको नामधेयप्रतिलम्भ इति । उच्यते । स हि ' काकः अपकालयितव्यो भवति ' उपघातभयात् । स हि यद्यत्स्पृशति तत्तदुपहन्तीत्यपकाल्यते । तस्मात्काक इत्युच्यते । शकुनित्वसामान्यप्रसक्तमुच्यते । ' तित्तिरिस्तरणात् ' । ' तॄ प्लवने ' [ धा० १।

१० ९९४ ] । उत्प्लुत्यासौ गच्छति । ' तिलमात्रचित्र इति वा ' । अथवा तिलमात्रचित्रः स भवतीति तित्तिरिः । ' कपिञ्जलः कपिरिव जीर्णः ' । यादृशो हि कपिर्मर्कटो जीर्णः सन्वर्णतो भवति तादृशोऽसावपीति कपिञ्जल इत्युच्यते । अथ ' वा कपिरिव जवते ' कपिञ्जलः । ' ईषत्पिङ्गलः ' इति ' वा ' कपिञ्जलः । अथ ' वा कमनीयं ' प्रार्थनीयं

१५ मङ्गल्यं मधुरं वा ' शब्दं पिञ्जयति ' अभिव्यनक्तीति कपिञ्जलः । ' एवमादीनि शकुनिनामधेयानि ' एवमादिना प्रकारेणाशब्दानुकृतिपूर्वकत्वे सति निर्वक्तव्यानि । ' श्वाशुयायी ' । शु इति क्षिप्रनाम । क्षिप्रमसौ शीघ्रत्वादेतीति श्वा । ' शवतेर्वा गतिकर्मणः ' । स हि नित्यमेव गच्छति । ' श्वसितेर्वा ' गतिकर्मण एव । ' सिंहः सहनात् ' । अभि-

२० भवति ह्यसावन्यान्प्राणिविशेषान् । ' संपूर्वस्य वा हन्तेः ' उपसर्गस्यैत्वेन । ' संहाय हन्तीति वा ' । वैयाकरणानामेषा व्युत्पत्तिः । ' व्याघ्रो व्याघ्राणात् ' । विविधमसौ जिघ्रति व्याघ्रः । तस्य हि घ्राणेन्द्रियं पटु भवति । स हि घ्रात्वाघ्राय हन्ति । घ्राणेन्द्रिये हि तस्य विशिष्टं ज्ञानम् । ' व्यादाय हन्तीति वा ' । स किल व्यादाय वक्त्रं विवृतं कृत्वा ततो

२५ हन्ति । अथवा ' व्यादाय हन्तीति ' । यः किल प्रथमे ग्रहे न शङ्कित-

---

१ क. ख. ग. ज. घ. ट. ठ. ड. °क्रियार्थैर्नाम°. २ क. ख. ग. ज. घ. ट. ठ. ड. कथं तर्हि. ३ घ. ट. ठ. ड. तत्तदप्रह°. ४ घ. ट. ठ. ड. °वते योऽसौ कपि°. ५ क. ख. घ. ट. ठ. ड. ' एव ' नास्ति. ६ घ. ट. ठ. ड. °सर्गस्यात इच्यत्ययेन । संहा° ७ क. ख. घ. ट. ठ. ड. जिघ्रतीति. ८ क. ख. ग. ज. भवतीति.

३० त. ९ क. ख. °ग्रहे शङ्कित°; ठ. ड. शंकित°.

स्तेन हन्तुं भवति मृगो वान्यो वा कश्चित्तमसावमर्षाद्विकृष्य तस्मिन्नेव प्रदेशे प्रथमग्रहस्थान आनीय ततो हन्ति । सिंहो व्याघ्रः श्वा काक इत्येवमनुक्रम्यार्वाचीनान्येतानि पदानि निरुक्तान्ययमपि निर्वचनप्रकारोऽस्तीति प्रदर्शनार्थम् । सिंहव्याघ्रशब्दयोस्त्वनुलोममेव निर्वचनमनुलोमव्याख्योपप्र[4]दर्शनार्थम् । एवं ह्युभे अपि प्राप्ती दर्शिते भवतः ॥ १८ ॥ ५

---

अर्चतिकर्माण उत्तरे धातवश्चतुश्चत्वारिंशन्मेधाविनामान्युत्तराणि चतुर्विंशतिर्मेधावी कस्मान्मेधया तद्वान्भवति मेधा मतौ धीयते स्तोतृनामान्युत्तराणि त्रयोदश स्तोता स्तवनाद्यज्ञनामान्युत्तराणि पञ्चदश यज्ञः कस्मात्प्रख्यातं यजतिकर्मेति नैरुक्ता याच्ञो भवतीति वा यजुरुन्नो भवतीति वा बहुकृष्णाजिन इत्यौपमन्यवो यजूंष्येनं नयन्तीति वर्त्विङ्नामान्युत्तराण्यष्टावृत्विक्कस्मादीरण ऋग्यष्टा भवतीति शाकपूणिर्ऋतुयाजी भवतीति वा याच्ञाकर्माण उत्तरे धातवः सप्तदश दानकर्माण उत्तरे धातवो दशाध्येषणाकर्माण उत्तरे धातवश्चत्वारः स्वपितिसस्तीति द्वौ स्वपितिकर्माणौ कूपनामान्युत्तराणि चतुर्दश कूपः कस्मात्कुपानं भवति कुप्यतेर्वा स्तेननामान्युत्तराणि चतुर्दशैव स्तेनः कस्मात्संस्त्यानमस्मिन्पापकमिति नैरुक्ता निर्णीतान्तर्हितनामधेयान्युत्तराणि षट् निर्णीतं कस्मान्निर्णिक्तं भवति दूरनामान्युत्तराणि पञ्च दूरं कस्माद्द्रुतं भवति दुरयं वा पुराणनामान्युत्तराणि षट् पुराणं कस्मात्पुरा नवं भवति नवनामान्युत्तराणि षळेव नवं कस्मादानीतं भवति ॥ १९ ॥ १० १५ २०

---

१ क. ख. घ. ट. ट. ड. 'वा' नास्ति. २ च °व्याख्योपमादर्श°. ३ ग. ज. 'हि' नास्ति. ४ क. ख. १; ग. २०; ठ. ह. १८ इति निरुक्तवृत्तौ [ड. निरुक्तभाष्ये ] तृतीयाध्याये अष्टादशः खण्डः; इतरेष्वङ्को नास्ति. ५ क. ख. छ. त. द. 'स्तोता स्तवनात्' नास्ति. ६ क. ख. षडेव; छ. त. द. षलेव. ७ क. ख. द. २; छ. त. २१.

'अर्चतिकर्माण उत्तरे धातवश्चतुश्चत्वारिंशत्'। अर्चतिकर्माणः अर्चत्यर्थाः पूजयत्यर्थाः। उत्तरे उपमाशब्देभ्यः। पूजायामवश्यंभाविन्युपमेत्युपमाशब्देभ्योऽनन्तरमर्चतिकर्माणः समाम्नाताः। कियन्तः पुनस्ते। चतुश्चत्वारिंशत्। कतमे पुनस्ते। 'अर्चति गायति' [ निघ० ३ । १४ ] इत्येवमादयः।

य एतेऽर्चतिकर्माण एतैर्हि मेधाविन एवार्चन्ति। एत एवाधिक्रियन्ते। तैस्त एव हि स्तोतुं शक्नुवन्ति। नेतरेऽमेधसः। तस्मादर्चतिकर्मभ्यः 'उत्तराणि मेधाविनामानि'। कियन्ति पुनस्तानि। 'चतुर्विंशतिः'। कतमानि पुनस्तानि। 'विप्रः धीरः विग्रः' [ निघ० ३ । १५ ] इत्येवमादीनि। विविधानर्थानस्य प्राप्तुं प्रज्ञेति विप्रः। धीः प्रज्ञा। तद्वान्धीरः। रो मत्वर्थे। विगृह्य सदसि कथयतीति विग्रः। इत्येवमादि। आह। 'मेधावी कस्मात्'। उच्यते। स हि 'मेधया तद्वान् भवति'। आह। 'मेधा' कस्मात्। सा हि 'मतौ धीयते'। मतिर्बुद्धिः। तस्यां या पुरुषशक्तिरभिव्यज्यते सा मेधा इत्युच्यते।

य एव मेधाविनस्त एव स्तोतुं शक्नुवन्तीति मेधाविनामभ्यः 'उत्तराणि' स्तोतृनामानि। कियन्ति पुनस्तानि। 'त्रयोदश'। कतमानि पुनस्तानि। 'रेभः जरिता कारुः' [ निघ० ३ । १६ ] इत्येवमादीनि। रेभो रेभतेः स्तुत्यर्थस्य [ धा० १ । ३८५ ]। जरिता जरतेः स्तुत्यर्थस्यैव। कारुः कर्ता स्तोमानामित्येवमादि योज्यम्। प्रत्यक्षवृत्तित्वादस्य शब्दस्य नोक्तं स्तोता कस्मादिति।

यज्ञेष्वेव ह्यतिशयेन देवतानां स्तुतयः प्रयुज्यन्त इति स्तोतृनामभ्यः 'उत्तराणि यज्ञनामानि'। कियन्ति पुनस्तानि। 'पञ्चदश'। कतमानि पुनस्तानि। 'यज्ञः वेनः अध्वरः मेधः' [ निघ० ३ । १७ ] इत्येवमादीनि। आह 'यज्ञः कस्मात्'। उच्यते। यदेतत् 'प्रख्यातं यजतिकर्म' लोकवेदयोरेतदेव भावसाधनशब्देनोच्यते यजनं यज्ञ इति। अथ वा याञ्चो भवतीति यज्ञः। याच्यते ह्यत्र। 'यज्ञो वै देवानामन्नं समभूत्तं भूत्याः समभावयन्निति ह विज्ञायते'। तस्माद्याचनाद्यज्ञः। अथ

---

१ ठ. ड. °रिंशदिति। अर्च°. २ ग. च. ज. 'उत्तरे' नास्ति. ३ घ. ट. ठ. ड. तैस्त एवा°. ४ क. ख, व. ट. ठ. ड. एत एव°. ५ क. ख. ग. ज. घ. ट. ठ. ड.° साधनेन शब्दे.

'वा यजुर्भिः' अयम् 'उन्नः' इव[1] संक्लिन्न इव 'भवति' बहुत्वादत्र यजुषाम् । अथवा 'बहुकृष्णाजिन इत्यौपमन्यवः' । यद्यदत्र दृश्यते प्रतिविशिष्टं साधनं किंचित्तत्तत्कृष्णाजिनमिति यज्ञः । सोमे तावदजिनद्वयं यजमानेऽप्यजिनद्वयमवहन्यमानेषु हि हविःष्वजिनं घर्मपात्रेष्वप्यजिनमेवं[2] बहुकृष्णाजिनम्[3] । अथ 'वा यजूंष्येनम्' उपक्रमादारभ्यान्तं 'नयन्तीति' यज्ञः । वनतिः कान्त्यर्थः । काम्यन्ते हि यज्ञाद्ग्रामपशुस्वर्गादयः । तस्मात्स वेनः यज्ञ इत्युच्यते । ममेदं दास्यतीत्येवं यज्वभिस्तत्फलं[4] प्रार्थ्यत इति मेधः । इत्येवमादि । ५

यज्ञसंबन्धेनैव 'ऋत्विङ्नामान्युत्तराण्यष्टौ' । ऋत्विजां नामानि ऋत्विङ्नामानि । कियन्ति पुनस्तानि । अष्टौ । कतमानि पुनस्तानि । १० 'भरताः कुरवः' [ निघ० ३ । १८ ] इत्येवमादीनि । भ्रियन्ते दक्षिणाभिस्ते[5] इति भरताः । कुर्वन्ति कर्माणीति कुरवः । इत्येवमादि । आह । 'ऋत्विक्कस्मात्' । उच्यते । ईरणः । ईरयिता हि स स्तुतीनां भवतीति ऋत्विक् । 'ऋग्यष्टा भवतीति शाकपूणिः' । ऋग्भिर्ह्यसौ यजतीति ऋत्विक् । 'ऋतुयाजी भवतीति वा' । स हि काले[6] काले देवता यजतीति वा । १५ ऋतौ याजयतीति वा । स हि काले[7] काले एव याजयते[8] नाकाले ।

ऋत्विक्संबन्धेनैव 'याच्ञाकर्माण उत्तरे धातवः सप्तदश' । कतमे पुनस्त इति । 'ईमहे यासि मन्महे' [ निघ० ३।१९ ] इत्येवमादयः ।

याच्ञासंबन्धेनैव 'दानकर्माण उत्तरे धातवो दश' । कतमे पुनस्त इति । 'दाति दाशति दासति[9]' [ निघ० ३ । २० ] इत्येवमादयः । २०

दानसंबन्धेनैव 'अध्येषणाकर्माण उत्तरे धातवश्चत्वारः' । कतमे पुनस्त इति । 'परिस्रव पवस्व' [ निघ० ३ । २१ ] इत्येवमादयः । सत्कृत्य[10] प्रार्थनाध्येषणेत्युच्यते ।

---

१ क. ख. घ. ट. ठ. ड. 'इव' नास्ति. २ क. ख. घ. ट. ठ. ड. चर्मोपार्जितं घर्मपा°. ३ क. ख. घ. ट. ठ. ड. °कृष्णाजिनः. ४ क. ख. घ. ट. ठ. ड. °ज्वभिरस्मात्फलं; ग. ज. °ज्वभिस्तस्मात्फलं. ५ ग. ज. भ्रियन्ति. ६ क. ख. घ. ट. ठ. ड. 'ते' नास्ति. ७ क. ख. ग. ज. 'काले' सकृदेव. ८ क. ख. घ. 'काले' सकृदेव. ९ च. दासते १० क. ख. घ. ट. ठ. ड. °सत्कृत्य दातृभिर्दातुं मतिग्रहीतॄणां प्रार्थ°.

याच्यमानो हि सर्व एवं स्वपितीत्यधेषणाकर्मभ्य उत्तरौ 'स्वपिति-कर्माणौ'। कतमौ पुनस्ताविति। स्वपिति सस्ति इति [ निघ० ३। २२ ]। स्वशब्देनैवोच्चार्य द्विग्रहणमवधारणार्थमेतावेव 'द्वौ' निगमे न पुनस्तृतीयोऽस्तीति। अल्पत्वाद्वा द्विग्रहणम्।

५ कूपमेव ह्याश्रित्य मरौ सुप्यते। सुप्तः कूप इव पतितो भवतीति वा। स्वपितिकर्मभ्यामनन्तराणि कूपनामान्युच्यन्ते। कियन्ति पुनस्तानि। 'चतुर्दश'। कतमानि पुनस्तानि। 'वव्रः काटुः खातः' [ निघ० ३। २३ ] इत्येवमादीनि। व्रियते ह्यसावुदकार्थमिति वव्रः। कमुदक-मत्रेति कार्टुः। इत्येवमादि। आह 'कूपः कस्मात्'। उच्यते। 'कुपानं

१० भवति'। यत्र ह्यसौ भवति तत्र कुत्सितं पानं भवति साधनापेक्षत्वात्। 'कुप्यतेर्वा'। यत्संबन्धात्तत्रोदकार्थिनः कुप्यन्ति।

'स्तेननामान्युत्तराणि चतुर्दशैव''। कूपमाश्रित्य मुष्णन्ति स्तेना इत्यतः कूपनामभ्य उत्तराणि स्तेननामानि। कियन्ति पुनस्तानि। चतुर्दशैव। कतमानि पुनस्तानि। 'त्रिपुः रिपुः' [ निघ. ३।

१५ २४ ] इत्येवमादीनि। परेभ्यो धनान्यपहृत्यातिशयेनासावात्मानं भृत्यांश्च तर्पयतीति त्रिपुः। लिम्पत्यसावात्मानं पापेनेति रिपुः। इत्येवमादि। आह। 'स्तेनः कस्मात्'। उच्यते। 'संस्त्यानं' संहतम् 'अस्मिन् पापकं कर्म भवति' इति' एवं 'नैरुक्ताः' मन्यन्ते। वैयाकरणानामन्यथापि स्यादित्यभिप्रायः।

२० 'निर्णीतान्तर्हितनामधेयान्युत्तराणि षट्'। निर्णीतस्य चान्तर्हितस्य नामधेयानि निर्णीतान्तर्हितनामधेयानि। उत्तराणि प्रकृतेभ्यः स्तेन-नामभ्यः। स्तेना एवं ह्यन्तर्हिता भवन्तीत्येष संबन्धः स्तेननाम्नामन्तर्हित-नाम्नां च। कतमानि पुनस्तानि। 'निण्यं सस्वः सनुतः' ( निघ.३।२५ ) इत्येवमादीनि। निर्णीतमिव निण्यम्। सुप्तमिव सस्वः। सन्ततमिव सनु-ताः। इत्येवमादीनि।

---

१ क. ख. घ. ट. ठ. ड. अपि. २ ग. च. ज. 'वा' नास्ति. ३ ग. च. ज. वव्रिः; ट. वम्रः. ४ क. ख. ज. कातुः. ५ च. संबन्धात्त°. ६ ग. च. ज.

२८ यस्मिन्. ७ ठ. ड. इव. ८ च. निलीनमिव; ठ. ड. निर्णीतमेव.

'दूरनामान्युत्तराणि पञ्च' । अन्तर्हितं यद्भवति दूरं इव हि तद्भवतीत्येष संबन्धः । कतमानि पुनस्तानि । 'आके पराके पराचैः' [ निघ. ३ । २६ ] इत्येवमादीनि । आ कियतो देशादेतद्वर्तत इति विज्ञातव्यमेतद्भवतीत्याके । पराके पराक्रान्ते । पराङ्मुखमञ्चितं पराचैरित्येवमादि । यथैव श्रुतानि छन्दसि तथैवैतानि समाम्नातानि । आह । 'दूरं कस्मात्' । उच्यते । 'द्रुतं' हि तत् 'भवति' अध्वनो महत्त्वात् । 'दुरयं वा' । दुःखं हि तद्गम्यते । प्राप्यत इत्यर्थः ।  ५

दूरसंबन्धेनैव 'पुराणनामान्युत्तराणि षट्' । समानं हि कालाध्वनोर्महत्त्वं दूरपुराणयोः । कतमानि पुनस्तानि । 'प्रत्नं प्रदिवः प्रवयाः' [निघ० ३।२७] इत्येवमादीनि । प्राक्तनं प्रत्नम् । प्राग् द्युतिमदासीदिति प्रदिवः । प्रकृष्टवयाः प्रवयाः । इत्येवमादि । आह । 'पुराणं कस्मात्' । उच्यते । तद्धि 'पुरा नवं भवति' न वर्तमानकाले ।  १०

'नवनामान्युत्तराणि षडेव पुराणसंबन्धेनैव । कतमानि पुनस्तानि । 'नवं नूनं नूतनम्' [ निघ० ३ । २८ ] इत्येवमादीनि । आह । 'नवं कस्मात्' । उच्यते । तद्धि सद्य एव कुतश्चित् 'आनीतं भवति' । क्षिप्रोत्पन्नं नूतनमित्येवमादि ॥ १९ ॥  १५

---

**द्विश उत्तराणि नामानि प्रपित्वेऽभीक इत्यासन्नस्य प्रपित्वे प्राप्तेऽभीकेऽभ्यक्ते । आपित्वे नः प्रपित्वे तूयमा गहि । अभीके चिदु लोककृदित्यपि निगमौ भवतः । दभ्रमर्भकमित्यल्पस्य । दभ्रं दभ्नोतेः सुदम्भं भवत्यर्भकमवहृतं भवति । उपोप मे परामृश मा मे दभ्राणि मन्यथाः । नमो महद्भ्यो नमो अर्भकेभ्य इत्यपि निगमौ भवतः । तिरः सत इति प्राप्तस्य तिरस्तीर्णं भवति सतः संसृतं भवति । तिरश्चिदर्यया परिवर्तिर्यातमदाभ्या । पात्रेव भिन्दन्त्सत एति रक्षस इत्यपि निगमौ भवतः । त्वो नेम इत्यर्धस्य त्वोऽपततो नेमोऽपनीतोऽर्धं हरतेर्विपरीताद्धारयतेर्वा स्यादुद्धृतं भवत्यृध्नोतेर्वा स्यादृद्धतमो विभागः । पीयति त्वो अनु त्वो**  २० २५

१ क. ख. व. ट. ठ. ड. दूरवत्तद्भ°. २ ग. च. ज. षलेव. ३ क. ख. २; ग. २१; ठ. ड. १९ इति निरुक्तवृत्तौ [ ड. निरुक्तभाष्ये ] तृतीयाध्याये एकोनविंशः खण्डः; इतरेष्वङ्को नास्ति.  ३०

गृणाति । नेमे देवा नेमेऽसुरा इत्यपि निगमौ भवतः । ऋक्षाः स्तृभिरिति नक्षत्राणां नक्षत्राणि नक्षतेर्गतिकर्मणो नेमानि क्षत्राणीति च ब्राह्मणमृक्षा उदीर्णानीव ख्यायन्ते स्तृभिस्तीर्णानीव ख्यायन्ते । अमी य ऋक्षा निहितास उच्चा । पश्यन्तो द्यामिव स्तृभिरित्यपि निगमौ भवतः । वम्रीभिरुपजिह्विका इति सीमिकानां वम्र्यो वमनात्सीमिका स्यमनादुपजिह्विका उपजिघ्र्यः । वम्रीभिः पुत्रमग्रुवो अदानम् । यदत्त्युपजिह्विका यद्वम्रो अतिसर्पतीत्यपि निगमौ भवत ऊर्दरं कृदरमित्यावपनस्योर्दरमुद्दीर्णं भवत्यूर्जे दीर्णं वा । तमूर्दरं न पृणता यवेनेत्यपि निगमो भवति । तमूर्दरमिव पूरयति यवेन कृदरं कृतदरं भवति । समिद्धो अञ्जन्कृदरं मतीनामित्यपि निगमो भवति ॥ २० ॥

---

'द्विश उत्तराणि नामानि'। द्वे द्वे द्विशः । उत्तराणि 'प्रपित्वे अभीके' [ निघ० ३ । २९ ] इत्येवमादीनि । व्याख्यातानि पृथिवीनामभ्य आरभ्य एकैकस्यार्थस्य बहूनि नामधेयानि । इदानीमेकैकस्य द्वे द्वे नामनी वाचके समाम्नाते प्रपित्वे अभीक इत्येवमादीन्याद्यावापृथिवीनामभ्यो यावत् ।

अधुनैवमुक्त्वा सामान्यतो विशेषतः एकैकं व्युत्पाद्य उदाहरणैरेव दर्शयति । तद्यथा । 'प्रपित्वे अभीके इत्यासन्नस्य' एते नामनी भवत इत्येवमादि । प्रपित्वे प्राप्ते इत्यर्थः । 'अभीके अभ्यक्ते'। आभिमुख्येनाञ्चिते अभ्यागते । इदानीमुदाहरणे ब्रवीति । 'आपित्वे नः' 'अभीके चित्' ' इति निगमौ भवतः '।

यथा गौरो अपां कृतं तृष्यन्नेत्यवेरिणम् । आपित्वे नः प्रपित्वे

---

१ छ त. भवतः २२। वम्री°; द. भवतः। ३ ।वम्री.° २ क.ख.छ त.द. 'वम्रीभिः° अदानं' नास्ति. ३ क. ख. छ. त. द. निगमो भवत्यूर्दरं°. ४ क. ख. ३; छ. त. द. अङ्को नास्ति. ५ क. ख. घ. ट. ठ. ड. उत्तराणीति प्रपि°. ६ घ. ट. ठ. ड. 'इति' नास्ति ७ घ. ट. °दीनि व्याख्या°; ठ. ड. °दीनि व्याख्यातानि। पृथि°. ८ क. ख. घ. ट ठ. ड. एकैकार्थस्य. ९ क. ख. घ. ट. ठ. ड. विशेषेण. १० च. चेत्. ११ ग. च. °वतः । ३० । यथा°. १२ ग. च. ज. कृतं । ऐन्द्रं; घ. ट. कृतं० सचा पिब.

तूयमा गहि कण्वेषु सु सचा पिब' [ ऋ० सं०
प्रपित्वे इत्यस्योदाहरणम् ८ । ४ । ३ ] ॥ ऐन्द्रीयषा । बृहती ।
देवातिथेः काण्वस्यार्षम् । महाव्रते बृहतीसहस्रे
शस्यते [ ऐ० आ० ५ । २ । ४ ] । हे इन्द्र यथा
येन प्रकारेण गौरः गौरमृगः अवेरिणमपगतार्णमपगतोदकं मरुदेशं ५
हित्वा तृष्यन् तृषा बाध्यमानः अपा कृतमपानीयमापानयोग्यं यत्र नास्ति
स्वल्पोदकत्वात्तत्र कृतमुदकेन वा कृतं जलाशयस्थानं तडागमन्यद्वा
शीघ्रमेत्येवं त्वमप्येतस्मिन्नापित्वे आपानकाले प्रपित्वे प्राप्ते तूयं क्षिप्रमा-
गहि आगच्छ । आगत्य च य एष सोमः कण्वेषु एष्वृत्विक्षु वर्तते तमेभि-
रेव ऋत्विग्भिः सचा साकं सु सुष्ठु सह स्थित्वा पिबेति संयोगेन तृष्यन् । १०

'प्रोष्वस्मै पुरोरथमिन्द्राय शूषमर्चत । अभीके चिदु लोककृत्सङ्गे समत्सु
वृत्रहास्माकं बोधि चोदिता नभन्तामन्यकेषां
'अभीके' इत्यस्य ज्याका अधि धन्वसु' [ ऋ० सं० १० ।
१३३ । १ ] ॥ सुदासः पैजवनस्येयमार्षम् ।
अतिच्छन्दाः । सर्वपृष्ठायां मैत्रायणीयके देवताव्यत्ययागे शाक्वरस्यैन्द्रस्य १५
चरोर्याज्यैषा रैवतस्य पुरोनुवाक्या [ मैत्रा०सं० २।३।७॥४।१२।४ । ] ।
बाह्वृच्ये पुनरियमेत्र षोडशिनः षोडशिशस्त्रे शस्यते [ आश्व० श्रौ० ६ ।
२ । ६ । ] । हे स्तोतारः प्रो प्रकर्षेण सु प्रशस्ताभिः स्तुतिभिः अस्मै
इन्द्राय तुष्ट्यर्थं पुरोरथम् अग्रतोरथमेतत् शूषं बलम् अर्चत स्तुत ।
कं च पुनरर्थमभिसंधायार्चतेति । अभीके चिदु लोककृत् । अभीके अभ्यागते २०
एतस्मिन् सङ्गे सङ्ग्रामकाले प्राप्तेषु समत्सु संभक्षयितृषु उद्यतायुधेषु शत्रुषु
लोककृत् स्थानकृत् एषु वृत्रहा शत्रुहन्ता इन्द्रो भविष्यतीत्येतमर्थम-
भिसंधाय प्रार्चतास्मै यूयमिन्द्राय पुरोरथं शूषमिति । एवमन्यान्स्तोतॄ-
न्संबोध्यात्मनापि प्रववृते वक्तुम् । हे भगवन्निन्द्रास्माकं बोधि बुध्यस्वैताः
स्तुतीर्मा परेषाम् । बुद्ध्वा चैताः चोदिता अनुज्ञाता जनस्य भव । नभन्तां २५

१ घ. ट. गौरमृतः. २ ग. ज. अविरणम्. ३ च. कृतं पानीययोग्यं नास्ति. ४ च. °त्वात् । अपानीयमात्रकृतम् उद°. ५ च. अपान°. ६ घ. ट ठ. ड. सह संयोगेन. ७ ग. तुष्यन् । ३१ । [illegible]; ज. तुष्यन् । २१ । पो°; च. तृष्यन् । ३१ । प्रो°. ८ ग. च. ज. °रथं । सुदासः°; घ. ट. ठ. ड. °रथं ० धन्वसु. ९ क. ख. ग. ज. ठ. मैत्रावरुणीयके. १० क. ख. घ. ट. ठ. ड. °व्यत्यये यागे. ११ क. ख. ग. ज. 'षोडशिनः' नास्ति. १२ घ. ट. °मिन्द्रस्य. ३१

मा भूवन्नन्यकेषाम् अन्येषां[1] ज्याकाः ज्याः अधिधन्वसु । अवतत-ज्यधनुषो हतसर्वोद्यमा एते अस्मद्द्विषो युष्मदनुग्रहाद्भवन्त्वित्यभिप्रायः ।

'दभ्रमर्भकमित्यल्पस्य' एते नामनी । 'दभ्रं दभ्नोतेः' वधार्थस्य तद्धि 'सुदम्भं भवति' सुच्छेदं भवत्यल्पत्वात् । 'अर्भकमवहृतम्' । ह्रस्वमित्यर्थः । 'उपोप मे परामृश' 'नमो महद्भ्यो' 'इत्यपि

५ निगमौ भवतः' ।

'उपोप मे परा मृश मा मे दभ्राणि मन्यथाः । सर्वाहमस्मि रोमशा गन्धारीणामिवाविका' [ ऋ० सं० १।१२६ ।

'दभ्रम्' इत्यस्य ७ । ]॥ भावयव्यस्येयमार्षम् । अनुष्टुप् । भाव-

१० यव्यमेव सा भर्तारं तेनानुपेयमाना ब्रवीति ।

हे राजन् उपगम्य उपश्लिष्य च मे मम परामृश यः प्रदेशः पुरुषेण स्त्रियाः परामर्ष्टव्यः । किंच मा मे दभ्राणि मन्यथाः । अल्पकानि लोमानि मा मन्यथाः । जानेऽहमेतद्यथालोमिकाया उपगमः प्रति[10]षिद्धः स्मृतौ 'नाजात-लोम्न्योपहासमिच्छेत्' [ गोभि० गृ० ३ । ५ । ३ ] इति । यतस्ते[11]

१५ वेदयामि सर्वाहमस्मि रोमशा । सर्वेष्वेवावयवेषु ममोत्पन्नानि रोमाणि येषु स्त्रीणामुत्पद्यन्ते । कथं च पुनरहमस्मि रोमशा । गन्धारीणामिवाविका । गन्धारदेशजातानामविकानां मध्ये या सुष्ठु रोमशा भवेत्तथाहमस्मि रोमशा। निःशङ्को मामुपगच्छेत्यभिप्रायः[12] ।

'नमो महद्भ्यो नमो अर्भकेभ्यो[13] नमो युवभ्यो नम आशिनेभ्यः ।

२० यजाम देवान्यदि शक्नवाम मा ज्यायसः शंसमा

'अर्भकम्' इत्यस्य वृक्षि देवाः' [ ऋ० सं० १ । २७ । १३ ]॥ त्रिष्टुप् । शुनःशेपस्यार्षम् । होतृजपे विनियोगः [ आश्व० श्रौ० १ । ४ । ९ ] । नमो महद्भ्यः नमो महत्परिमाणेभ्यो देवेभ्यः । नमो अर्भकेभ्यः अल्पपरिमाणेभ्यः । नमो युवभ्यः यौवनवद्भ्यः ।

२५ नम आशिनेभ्यः व्यापिभ्यः । यजाम देवानेतस्मिन्नुपस्थिते यागकाले यदि शक्नवाम । अल्पश्रुतविज्ञाना वयमत एव ब्रूमो यदि शक्नवामेति । वयमीदृशाः

---

१ च. 'अन्येषां' नास्ति. २ ग. ज. °ततधनु°. ३ ठ. ड. °ल्पस्येति । एते°. ४ ठ. ड. महद्भ्यो नमो अर्भकेभ्य इत्य°. ५ ग. ज. °वतः । ३२ । उपो°. ६ ग. च. ज. मे परामृश । भाव°; घ. ट. मे० विका । भाव°. ७ ठ. ड. °मार्षम् । रोमशा ऋषिका । अनु°. ८ ग. च. घ. परामृष्टव्यः; ज. पराम्रष्टव्यः; ट. परामृष्टव्यः° प्र. ९ च. लोमकानि. १० च. प्रतिनिषिद्धः. ११ घ. ट. यतोऽतस्ते°. १२ ग. °प्रायः । ३३ । नमो°. १३ ग. च. ज. व. ट. अर्भकेभ्यः । त्रिष्टुप्.

सन्तो युष्मान्ब्रूमहे । हे ज्यायंसो देवा युष्माकमेव शंसितारं सन्तमल्पे वा महति वा कस्मिंश्चिद्दुःशस्ते मा वृक्षि मा अस्मान् छिन्त यज्ञफलात् । को हि नाम नापराध्यतीत्यभिप्रायः ।

'तिरः सत' इति प्राप्तस्य एते नामनी भवतः । अप्राप्तस्यैकेऽधीयते । तथापि योज्यम् । 'तिरस्तीर्णं' हि तद् 'भवति' दूरमध्वानम् । 'सतः संसृतं भवति' एकीभूय सृतं भवति । 'तिरश्चिदर्यया परिवर्तिर्यातमदाभ्या' 'पात्रेव भिन्दन्त्सत एति रक्षसः' 'इत्यपि निगमौ भवतः' ।

अश्विनावेह गच्छतं नासत्या मा वि वेनतम् । तिरश्चिदर्यया परिवर्तिर्यातमदाभ्या माध्वी मम श्रुतं हवम् ' [ ऋ० सं० ५ । ७५ । ७ ] ॥

पङ्क्तिराश्विनी । अवस्योरात्रेयस्यार्षम् । प्रातरनुवाकाश्विनयोः शस्यते [ आश्व० श्रौ० ४ । १५ । १ ] । हे अश्विनौ नासत्यौ आगच्छतं युवाम् इह अस्मिन्यज्ञे सोमं पातुं मम । किंच । मा विवेनतं मा विगतकामौ भूतं युवामाहूयमानौ मया । किंच तिरश्चिदर्यया । तिरोऽपि अप्राप्तेऽपि दूर एव स्थाने यद्यवस्थितौ स्थस्तथापि अर्यया ईश्वरयापि स्वगत्या देवगत्या शीघ्रमायातम् । द्विवचनं वा सावग्रहत्वात्पदस्य । किंच परिवर्तिर्यातम् । यद्यपि क्वचिदनिर्वृत्तौ स्थस्तथापि परिवर्तनं कृत्वा तत आयातम् । हे अदाभ्या अहिंस्यौ अनुपहिंसितौ । अथवा अदब्धया अनुपहिंसितया गत्या आयातम् । हे माध्वी मधुसोममिश्रं पेयं ययोः । श्रुतं शृणुतं हवम् आह्वानम् । श्रुत्वा चाविलम्बमानौ शीघ्रमायातमित्यभिप्रायः ।

'तिरः' इत्यस्य

'इन्द्रो यातूनामभवत्पराशरो हविर्मथीनामभ्या विवासताम् । अभीदु शक्रः परशुर्यथा वनं पात्रेव भिन्दन्त्सत एति रक्षसः ' [ ऋ० सं० ७ । १०४ । २१ ] ॥

'सतः' इत्यस्य

वसिष्ठस्यार्षम् । जगती । इन्द्रो यातूनां यातु-

१ क. ख. घ. ट. ठ. ड. ज्यायसो ज्यायांसो देवा° . २ ठ. ड. °मास्मात्वाञ्छितयज्ञ° . ३ ग. °वतः । ३४ । आश्वि० . ४ ग. च. ज. नासत्या । पङ्क्ति° ; ध. ट. नासत्या० हवम् . ५ ठ. ड. इयमवस्यो° . ६ क. ख. घ. ट. ठ. ड. 'अपि' नास्ति. ७ क. ख. घ. ट. ठ. ड. शीघ्रयायातम्. ८ च. ट. °दानवृत्तौ° भिप्रस्थितौ पाठः. ९ क. ख. अदाभ्यया, ट. अदब्धया° दाभ्य. १० क. ख. ठ. ड. ययोस्तौ मम° ; ट. ययोः ˘ श्रुतं° तौ मम. ११ ग. °प्रायः । ३५ । इन्द्रो° .

धानानाम् अभवत् पराशरः पराशातयिता । कीदृशानां पुनर्यातूनामभवत्पराशातयितेति । हविर्मथीनां हवींषि ये मथ्नन्ति तेषाम् । अभ्याविवासतामभ्युद्वासयताम् । यज्ञोत्सादकानामित्यर्थः । अथवा विवासतिः परिचर्यायां स्यात् । ये त्वामिन्द्रं परिचरन्ति तेषां ये यातवस्तेषामेव पराशातयितेति । योऽयमेवंलक्षण इन्द्रः सोऽस्माभिराराधितः परिचर्यया अभ्येति अभ्येतु अस्मान्प्रति । शक्रः शक्तः सर्वयातूनां पातने । कथं पुनरभ्येतु । परशुहस्तो यथा कश्चिद्वनं छिन्दन्नभ्येयाद्यथा पात्राणि कौलालानि लगुडेनाप्रतिषिध्यमानो भिन्दन्कश्चिदभ्येयादेवमभ्येतु रक्षसो भिन्दन् सतः प्रदेशात् । दूरादित्यर्थः ।

'त्वो नेम' इति एते नामनी अर्धस्य । 'त्वः अपततः' । अपेत्य ततः अपततः । 'नेमः अपनीतः' । अपभज्य नीतः । पृथक्कृत इत्यर्थः । 'अर्धं हरतेर्विपरीताद्धारयतेर्वा स्यात्' । 'उद्धृतं' हि तद् 'भवति' । 'ऋध्नोतेर्वा स्यात्' । 'ऋद्धतमः' अभिसंपन्नतमः 'विभागः' भवति । 'पीयति त्वो अनु त्वो गृणाति' 'नेमे देवा नेमेऽसुराः' 'इत्यपि निगमौ भवतः' ।

'त्वः' इत्यस्य बोधा मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः । पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तन्वं वन्दे अग्ने' [ ऋ० सं० १ । १४७ । २ ] ॥ त्रिष्टुप् । दीर्घतमस आर्षम् । आग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते । [ आश्व० श्रौ० ४ । १३ । ७ ] । हे भगवन्नग्ने यविष्ठ युवतम बोध बुध्यस्व मे मम अस्य वचसो मंहिष्ठस्य दातृतमस्य पूजयितृतमस्य वा महत्तमस्य वा प्रकृष्टैर्भवद्गुणैः संभृतस्य । हे स्वधावः अन्नवन् ये गुणा अस्य वचसस्तान्बोध । किंच । इदमपरं शृणु । उभयेषां प्राजापत्यानां देवासुराणां द्वेधा विभक्तानां पीयति त्वः हिनस्त्येकमर्धमसुराख्यम् । अनु त्वः अनुगृणात्येकमर्धं देवाख्यम् । अनुष्टौतीत्यर्थः । तत्रैवं सत्युभयथा विप्रतिपन्नेषु प्राजापत्येषु वन्दारुः वन्दनशीलस्तेऽहं वन्दे दैवं पक्षमाश्रितो हित्वासुरं तवैतां

१ ग. ज. °सति परि°. २ म. च. ज. °ये त्वामिन्द्रं.°. ३ क. ख. ग. ज. यातने. ४ ट. प्रतिषिध्य' ब. ५ ग. ज. °वतः । ३६ । बोधा°. ६ ग. च. ज. वचसो । त्रिष्टु°; घ. ट. वच० त्रिष्टु°. ७ ब. ट. ठ. ड. °नुस्तौती°.

तन्वं तनूं ज्वलनदहनप्रकाशीकरणसमर्थौ नित्यकालमेव प्रातर्मध्यंदिने सायं च वन्दे । स्तौमीत्यर्थः । तथास्य ममैवं भक्तस्य बुध्यस्व । अस्य वचसो ये गुणास्तांश्च बुद्ध्वा प्रसादमभिमतेनार्थेन नः कुरुष्वेत्यभिप्रायः ।

' नेमे ' इत्यस्य ' नेमे देवा नेमेऽसुराः ' इति ब्राह्मणवाक्यमेवेदं वाजपेये मैत्रायणीयानाम् [ मैत्रा० सं० १ । ११ । ९ ] । अर्धतो देवा अर्धतोऽसुरा आसन्नित्यर्थः । 5

' ऋक्षाः स्तृभिरिति नक्षत्राणां ' नामनी । नक्षत्रशब्दं पर्यायाभिधानप्रसक्तं निर्ब्रवीति । ' नक्षत्राणि नक्षतेर्गतिकर्मणः ' गत्यर्थे वर्तमानस्य । एतानि हि नित्यमेव गच्छन्ति । 'नेमानि क्षत्राणीति च ब्राह्मणम्' । नेमानि क्षत्राणि धनानि । क्षत्रमिति धननाम [ निघ० २ । ९ । ९ । ] । किं तर्हि । धनसरूपाण्येतानि सूर्यरश्म्यनुवेधादम्मयानि सन्ति हिरण्मयानीव भ्राजन्त इति तु ब्राह्मणम् । तुशब्दार्थे चशब्दः । ' ऋक्षा उदीर्णानीव ' एतानि उदीरितानीव केनचिदूर्ध्वं[1] गमितानीव ' ख्यायन्ते ' । दृश्यन्त इत्यर्थः । ' स्तृभिः स्तीर्णानीव ख्यायन्ते ' । दृश्यन्ते[2] । 10

' ऋक्षाः ' इत्यस्य ' अमी य ऋक्षा निहितास[3] उच्चा नक्तं ददृश्रे कुह चिद्दिवेयुः । अदब्धानि वरुणस्य व्रतानि[4] विचाकशच्चन्द्रमा नक्तमेति' [ ऋ० सं० १।२४।१० ] ॥ शुनःशेपस्यार्षम् । त्रिष्टुप् । वारुणी । वरुणश्चास्यां सूर्य उच्यते । 15

अमूनि यानि नक्षत्राणि निहितासः निहितानि अवस्थापितानि उच्चा । उच्चैरित्यर्थः । किंच । तानि नक्तं ददृश्रे । रात्रावेवैतानि दृश्यन्ते । कुह चिद्दिवेयुः । न विज्ञायन्ते[5] क्व चिद्दिवैतानि गच्छन्तीति । किमेतत्स्यात् । अदब्धानि अनुपहिंसितानि वरुणस्य आदित्यस्यैतानि व्रतानि कर्माण्याश्चर्यभूतानि स्युः । किमन्यद्भविष्यति । स हि भगवानादित्य एतानि कुतश्चिदानयन्नित्रास्तं गच्छति पुनश्चैतान्यपनयन्[6]निवोदेति । तदेवं दर्शनमदर्शनं वैतेषां सूर्यकृतमेव । यदपि[7] चैतद्विचाकशद्दीप्यमानश्चन्द्रमा नक्तमेति तदप्यस्यैव भगवतः 20 25

१ ठ. ड. °दूर्ध्वगामिनानीव. २ ग. च. ज. दृश्यन्ते । ३७ । अमी°. ३ ग. च. ज. निहितास उच्चा । शुनः°; घ. ट. निहितासः । शुनः° . ४ ठ. ड. नक्तमेति । अमी य ऋक्षा इत्येषा शुनः°. ५ क. ख. विज्ञायन्ते हि क्व°; घ. ट. ठ. ड. विज्ञायन्तेऽह्नि क्व°; च. विज्ञायन्ते क्व°. ६ ठ. ड. °श्चैतान्यानय°. ७ घ. ट. ठ. ड. यद्यपि. 30

सूर्यस्य कर्म । अयमेव हि चन्द्रमसि दीप्तिमादधान इवास्तं गच्छति पुनश्चाक्षिपन्निव चन्द्रमसो दीप्तिमुदेति । योऽयमेवंस्वभावो वरुणस्तं वयमभिप्रेतार्थसिद्धये स्तुमः स इदं नामास्माकं करोत्विति[1] ।

ऋतावानं विचेतसं पश्यन्तो द्यामिव स्तृभिः । विश्वेषामध्वराणां हस्कर्तारं दमेदमे ' [ ऋ० सं० ४ । ७ । ३ ] ॥ गौतमपुत्रस्य वामदेवस्यार्षम् । अनुष्टुप् । आग्नेयी । ऋतावानं यज्ञवन्तं विचेतसं विभूतप्रज्ञानं विश्वेषां सर्वेषाम् अध्वराणां यज्ञानां हस्कर्तारं हसनकर्तारम् ।

'स्तृभिः' इत्यस्य

उपज्वलिते हि तस्मिन्प्रहसित इव यज्ञश्चारुरूपो भवति । अथवा हस्कर्तारं स्पर्धाकर्तारम् । उपज्वलिते हि तस्मिन् भ्रातृव्ययज्ञैः सह संस्पर्धन्त इव यज्ञाः । तमेवंगुणयुक्तमग्निं पश्यन्तो वयमनेकधा विहृतं दमेदमे यज्ञगृहे यज्ञगृहे तासु तासु क्रियासु व्यापृतं स्तुमः । किंच । योऽनेकधा दीप्यमानो द्यामिव स्तृभिः नक्षत्रैः पृथिवीं चित्ररूपां वेदीं वा करोति स नोऽभिष्टुतोऽभिप्रेतानर्थान् साधयत्वित्यभिप्रायः ।

' वम्रीभिरुपजिह्विका इति ' एते ' सीमिकानां ' नामनी भवतः । या एताः पिपीलिका उच्यन्ते लोके ता इमाः सीमिकाः । ' वम्र्यो वमनात् ' । ता हि वमन्त्युदकं येन मृदार्द्रीभवति । ' सीमिकाः स्यमनात् ' । स्यमन्ति हि ताः । नित्यमेव गच्छन्तीत्यभिप्रायः । ' उपजिह्विकाः उपजिघ्र्यः ' । उपजिघ्रन्ति हि ताः । पटु हि तासां घ्राणेन्द्रियं भवति । द्वयोरपि नाम्नोरेकैंनिगर्मः ।

यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति । सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य ॥ तैत्तिरीयके पठ्यते [ तै० सं० ४ । १ । १० । १ । ] । यदत्त्युपजिह्विका । भार्गवस्य प्रयोगस्येयमार्षम् । उख्येऽग्नौ समिदनया हूयते [ मान० श्रौ० ६ । १ । ३ ] । यत्

' वम्रः ' ' उपजिह्विका ' इत्यनयोः

१ म. ज. °त्विति ।३८। ऋता°. २ ग. च. ज. घ. ट. विचेतसं गौतम°. ३ ठ. ड. विभूतज्ञानं. ४ ग. °प्रायः । २१ । वम्री°. ५ घ. ट. °ह्विकानां । एते नाम°. ६ क. ख. घ. ट. ठ. ड. इत्युच्यन्ते. ७ क. ख. ग. ज. रेक एवं नि°. ८ ग. °गमः । ३८ । यद°. ९ ग. ज. ' यदत्ति० पठ्यते ' नास्ति. १० ट. ड. यदचीति । भार्ग°. ११ ग. च. ज. प्रउगस्ये°.

यद्यर्थे । अत्ति भक्षयति उपजिह्विका अन्तरनुप्रविश्य यच्चातिसर्पति आर्द्रया मृदा परिवेष्टयन्नेव वम्रः । बहिर्न शक्नोत्यत्तुं खदिरसारादि । सर्वं तदुभयजातीयमपि तव हे भगवन्नग्ने घृतमस्तु । तच्च त्वं घृतीभूतं जुषस्व संसेवस्व हे यविष्ठय युवतमे ।

' ऊर्दरं कृदरमित्यावपनस्य ' एते नामनी भवतः । उप्यते यस्मिन्यवादि धान्यं कुशूलेऽन्यत्र वा वैणवादौ कस्मिंश्चित्तदूर्दरमिति कृदरमिति च । यदावपनमाहुः प्राकृतेन लौकिकास्तदावपनमित्युच्यते । ' ऊर्दरम् ' ऊर्ध्वं हि तद् ' दीर्णं भवति ' । अथ ' वा ऊर्जे ' तदर्थाय ' दीर्णं ' भवति । ऊर्गित्यन्ननाम । तद्धुत्तये हि तच्छुषिरीभूतं भवति । शुषिरमित्यर्थः । ' तमूर्दरं न पृणता ' ' समिद्धो अञ्जन् ' इति निगमौ[11] । 5 10

' अध्वर्यवो यो दिव्यस्य वस्वो यः पार्थिवस्य क्षम्यस्य राजा । तमूर्दरं न पृणता यवेनेन्द्रं सोमेभिस्तदपो वो अस्तु ' [ ऋ० सं० २ । १४ । ११ । ] ॥ गृत्समदस्येयमार्षम् । त्रिष्टुप् ।

'ऊर्दरम्' इत्यस्य

ऐन्द्री । हे अध्वर्यवो य इन्द्रो दिव्यस्य द्युलोकाश्रयस्य वस्वो वसुनो धनस्य यश्च पार्थिवस्य अन्तरिक्षलोकाश्रयस्य । पृथिवीत्यन्तरिक्षनामसु पठितम् [ निघ० १ । ३ । ९ । ] । यश्च क्षम्यस्य भूम्याश्रयस्य राजा अधिपतिस्तमेवंगुणयुक्तमिन्द्रम् ऊर्दरं न ऊर्दरमिव पृणत पूरयत यवेन । यथा कश्चिन्मनुष्य ऊर्दरं यवेन पूरयेत्तथा यूयमिन्द्रं सोमैः पूरयत । तदपो वोऽस्तु । तद्वः कर्मास्तु सर्वमन्यन्मुक्त्वेत्यभिप्रायः । 15 20

' समिद्धो अञ्जन्कृदरं मतीनां घृतमग्ने मधुमत्पिन्वमानः । वाजी वहन्वाजिनं जातवेदो देवानां वक्षि प्रियमा सधस्थम् ' [ य० वा० सं० २९ । १ ॥ तै० सं० ५ । १ । ११ ] ॥ आप्रीसूक्तमाध्वर्यवेऽश्वमेधे । तत्रेयं

'कृदरम्' इत्यस्य

---

१ ग. च. ज. घ. ठ. ड. °सारादि सर्वं । तदु°. २ ग. °तम । ३९ । ऊर्द°. ३ घ. ट. ऊर्दनं. ४ घ. ठ. ड. कुसूले; ट. कुसूले° शू. ५ ग. ज. ' तत् ' नास्ति. ६ ग. ज. °र्दरमिति वा यमाहुः प्राकृ° ; च. °र्दरमिति वापमाहुः प्राकृ° आवपन. ७ घ. ट. °दीर्णमेवति; ठ. ड. °दीर्गमेवेति. ८ ग. ज. तत्सुषि°. ९ ठ. ड. पृणता यवेन. १० ठ. ड. अञ्जन्कृदरं मतीनामिति. ११ ग. च. ज. °गमौ । ४० । अध्व° १२ ग. च. ज. घ. ठ. ठ. ड. वस्वो । गृत्स°. १३ ग. च. ज. °प्रायः । ४१ । समि°. १४ घ. ट. ठ. ड. अञ्जन्नित्याप्रीसूक्त°; च. ऋक् न पठ्यते. 25 31

प्रथमा औप्री । हे भगवन्नग्ने समिद्धः संदीप्तस्त्वम् अञ्जन्गमयन्नात्मानं प्रति कृदरम् आवपनं मतीनाम् । देवानां हि सर्वेषां घृतमावपनं मतीनाम् । ते हि तत्र सर्वा[3] मतीः प्रक्षिपन्ति ममेदं स्यादिति । तदेवंगुणयुक्तं घृतं मधुमत् मधुस्वादयुक्तं पिन्वमानः । पिबन्नित्यर्थः । अथवा देवान्प्रति प्रक्षारयन् वाजी आत्मना वेजनवान् चलनवान्परेभ्यो वा भयदाता । हे जातवेदो वहन्नेनमाश्वमेधिकं वाजिनमुच्यसे अस्माभिः । प्रियमेतं वाजिनं देवानां समानं[10] स्थानमाभिमुख्येन शीघ्रतरं वक्षि वह । प्रापयेत्यर्थः ॥[11]२०॥

---

रम्भः पिनाकमिति दण्डस्य । रम्भ आरभन्त एनम् । आ त्वा रम्भं न जिव्रयो ररम्भेत्यपि निगमो भवत्या[12]रभामहे त्वा जीर्णा इव दण्डं पिनाकं प्रतिपिनष्टयेनेन कृत्तिवासाः पिनाकहस्तोऽवततधन्वेत्यपि निगमो भवति[13] मेना ग्ना इति स्त्रीणां स्त्रियस्त्यायतेरपत्रपणकर्मणो मेना मानयन्त्येना ग्ना गच्छन्त्येनाः । अमेनांश्चिज्जनिवतश्चकर्थ । ग्नास्त्वाकृन्तन्नपसोऽतन्वतेत्यपि निगमौ भवतः शेपो वैतस इति पुंस्प्रजननस्य । शेपः शपतेः स्पृशतिकर्मणो वैतसो वितस्तं भवति । यस्यामुशन्तः प्रहराम शेपम् । त्रिः स्म माह्नः श्नथयो वैतसेनेत्यपि निगमौ भवतो[14]ऽयैनेत्युपदेशस्य । अया ते अग्ने समिधा विधेमेति स्त्रियाः । एना वो अग्निमिति नपुंसकस्य । एना पत्या तन्वं १ सं सृजस्वेति पुंसः । सिषक्तु सचत इति सेवमानस्य । स नः सिषक्तु यस्तुरः । स नः सेवतां यस्तुरः । सचस्वा नः स्वस्तये । सेवस्व नः स्वस्तये । स्वस्तीत्य-

---

१ घ. ट. ठ. ड. 'आप्री' इत्यस्यानन्तरमृक्पठ्यते. २ क. ख. घ. ट. अग्ने भगवन्. ३ च. सर्वमतीः°. ४ घ. ट. ममेदं ममेदं स्या°. ५ क. ख. घ. ठ. ड. वहन्; ट. वहन्° क्षारय; ग. च. प्रक्षचयन्. ६ ग. ज. वाजी वहन् आत्म°; घ. 'वाजी' नास्ति. ७ क. ख. घ. ट. ठ. ड. वलनवान्. ८ घ. ट. भयप्रदाता. ९ च. °मेधिवाजि°. १० क. ख. घ. ट. ठ. ड. समानस्थान°. ११ क. ख. ३; ठ. ड. °त्यर्थः । इति निरुक्तवृत्तौ (ड. नैरुक्तभाष्ये) तृतीयाध्याये विंशतितमः खण्डः । २० । (ड. अङ्को नास्ति); इतरेष्वङ्को नास्ति. १२ क. ख. छ. त. द. °वति । आर°. १३ छ. त. भवति । २३ । मेना°; द. भवति । ४ । मेना°. १४ क. ख. छ. त. द भवतः । अयै°.

विनाशिनामास्तिरभिपूजितः स्वस्तीति भ्यसते रेजत इति भयवेपनयोः । यस्य शुष्माद्रोदसी अभ्यसेताम् । रेजते अग्ने पृथिवी मखेभ्य इत्यपि निगमौ भवतः । द्यावापृथिवीनामधेयान्युत्तराणि चतुर्विंशतिस्तयोरेषा भवति ॥ २१ ॥

---

'रम्भः पिनाकमिति दण्डस्य' एते नामनी । 'रम्भ आरम्भत एनम्' अस्खलनार्थम् । 'आ त्वा रम्भं' 'कृत्तिवासाः पिनाकहस्तः' इति निगमौ । 5

आ त्वा रम्भं न जिव्रयो ररम्भा शवसस्पते । उश्मसि त्वा सधस्थ आ" [ ऋ० सं० ८ । ४५ । २० ] ॥ काण्वस्य त्रिशोकस्यार्षम् । ऐन्द्री । गायत्री । अतिरात्रे महाव्रते [ ऐ० आ० ५ । २ । ३ ] च शस्यते । हे भगवन्निन्द्र आरभामहे वयं त्वां रम्भं न दण्डमिव जिव्रयः । जीर्णा इत्यर्थः । यथा वृद्धाः केचिद्दण्डमारभेरन्नवष्टम्भनार्थमेवमारभामहे त्वां हे भगवन् शवसस्पते बलस्य पते । त्वं न आश्रय इत्यभिप्रायः । किंच । उश्मसि त्वा कामयामहे त्वां नित्यमेव सधस्थे समान एवैकस्मिन्स्थाने यज्ञायतनेऽवस्थितं त्वामाभिमुख्येन यष्टुं स्तोतुं वेत्यभिप्रायः । 10 15

(रम्भ इत्यस्य)

'पिनाकं प्रतिपिनष्ट्यनेन' । हन्तीत्यर्थः । 'एष ते रुद्र भागस्तेनावसेन परो मूजवतोऽतीहि । अवततधन्वा पिनाकहस्तः कृत्तिवासाः' ॥ एष ते रुद्र भागस्तेनेति त्रैयम्बकाः पुरोडाशा अनेन मन्त्रेण वृक्ष आसज्यन्ते । हे भगवन् रुद्र एष ते तत्र भागः । तेनावसेन तेन पथ्यदनेन परः 20

(पिनाक इत्यस्य)

---

१ छ. त. द. °नाशनामा°. २ क. ख. छ. त. द. सु अस्ती°. ३ क. ख. ४; छ. त. २४; द. ४. ग. च. ज. °गमौ । ४२ । आ°. ५ ग. ज. घ. ट. जिव्रयः । काण्व°. ६ ग. ज. काण्वस्य त्रिकोशस्या°; च. भरद्वाजस्यार्षम्. ७ घ. ट. ठ. ड. °न्निन्द्र ररम्भ आर°. ८ ग. ज.° त्यर्थः । ४३ । एष;° घ. ट. च. °त्यर्थः । ४२ । एष°. ९ ठ. ड. भागस्तं जुषस्व तेनाव°. १० ठ. ड. °वतोऽतीह्यवत°.

परस्तान्मूजवतः पर्वतात् अतीहि अतिगच्छ । मात्रैव स्थाः । कथं च पुनरतीहि । पिनाकहस्तो भूत्वा कृत्तिवासाश्चर्मवासा अवततधन्वा चैवमतीहि ।

"मेना ग्ना इति" एते "स्त्रीणां" नामनी । पर्यायाभिधानप्रसक्तमुच्यते । "स्त्रियः स्त्यायतेः" अपत्रपणार्थस्य लज्जनार्थस्य । लज्जन्ते[1] हि ताः ॥ "मेना मानयन्त्येनाः" पुरुषाः । "ग्ना गच्छन्ति हि एनाः" मैथुनेन धर्मेण ॥ ५ "अमेनांश्चिद्" "ग्नास्त्वा कृन्तन्" इति निगमौ[2] ।

मेना इत्यस्य

"आ प्र द्रव हरिवो मा वि वेनः[3] पिशङ्गराते अभि नः सचस्व । नहि त्वदिन्द्र वस्यो अन्यदस्त्यमेनांश्चिज्जनिवतश्चकर्थ[4] [ ऋ० सं० ५।३१।२ ] ॥ अवस्योरात्रेयस्यार्षम् ॥ त्रिष्टुप् । ऐन्द्री । हे हरिव आभिमुख्येनास्मा-

१० न्प्रकर्षेण द्रव । किंच । मा वि वेनः मा विगतकामो भूरस्मत्तः । हे पिशङ्गराते शोभनदान अभिसचस्व नः । किंच । नह्यन्यद्देवतान्तरं त्वत्तः प्रतिविशिष्टतरमस्ति यत्प्रतिपद्येमहि हे भगवन्निन्द्र वस्यो वसुमन् । किं कारणम् । अमेनांश्चित् अस्त्रीकानपि स्तोतॄञ्जनिवत एव स्त्रीमत एव

१५ चकर्थ । करोषीत्यर्थः । यस्मात्त्वमेवंगुणविशिष्टस्तस्माच्च त्वामेव स्तुम इत्यभिप्रायः ॥

ग्ना इत्यस्य

"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि ग्नास्त्वा कृन्तन्नपसोऽतन्वत धियोऽवय[5]न्वरुणस्त्वा नयतु देवि दक्षिणे बृहस्पतये वासस्ते-

२० नामृतत्वमशीय मयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे । क इदं कस्मा अदात्कामः कामायादात्कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविशत्कामेन त्वा प्रतिगृह्णामि कामैतत्ते" ॥ वाससः प्रतिग्रहमन्त्रेऽनुषङ्ग एष मैत्रायणीयके[6] [ १ । ९ । ४ ] । तद्वास[7] उच्यते । हे वासः देवस्य सवितुरादित्यस्य प्रसवे तेन प्रसूतोऽभ्यनुज्ञा-

२५ तोऽहं त्वां प्रतिगृह्णामि । अश्विनोर्देवयोर्बाहुभ्यां प्रतिगृह्णामि मैता-

---

१ क. ख. घ. लज्जान्ति. २ ग. ञ. °गमौ । ४४ । आ प्र०; च. °गमौ । ४५ । आप्र°. ३ ग. च. ज. घ. ट. वेनः । अवस्यो°. ४ च. जनिमत°. ५ क. ख. ग. ज. °तन्वत षयित्र्योऽवय°; घ. ट. ठ. ड. धियो वयित्र्योऽवय°. ६ क. ख. घ. ट. ठ. ड. °यणीयके ताण्ड्यब्राह्मणे च अन्यास्वपि शाखासु ।

३० तद्वा०; ग. ज. मैत्रावरुणीयके तद्वा°. ७ ठ. ड. तत्तद्वास°.

भ्यामेव बाहुभ्यां स्वाभ्याम् । पूष्णो देवस्य हस्ताभ्यां प्रतिगृह्णामि । किंच । ग्नास्त्वा कृन्तन् । स्त्रीभिस्त्वं कर्तितं[1] सूत्रकरणाभिप्रायेण । अपसः अल्पका अनुपजातपुंस्त्वा जननासमर्थाः कुविन्दपुत्रकास्त्वामतन्वत । ते हि कुविन्दानां परिकर्मकराः । धियोऽवयन्धीमन्तो बुद्धिमन्तः कुश[2][3]लास्त्वामवयन् । कुविन्दा उतवन्तः । तदेवमभिनिष्पन्नं त्वां मह्यं बृहस्पतये बार्हस्पत्य आत्मन्यवस्थिताय वरुणो देवताविशेषो ददाति उदकपूर्वकं त्वं दीयसे । सोऽहमेवंगुणयुक्तस्त्वां प्रतिगृह्यामृतत्वममृतभावं यथाभिसंहितमेव अशीय अश्नुयाम् । त्वं प्रतिगृह्यमाणं मा मे[6] मानस्यावखण्डनं कार्षीरित्यभिप्रायः । किंच । मयः सुखं दात्रे भूयाद्भवतु । सुखं मह्यं प्रतिग्रहीत्रे । किंच । कः प्रजापतिरयं कस्मै प्रजापतये एवादात् ददाति । योऽप्ययं ददाति सोऽप्ययं यश्चादातायमपि प्रजापतिरेवेत्यभिप्रायः । वक्ष्यति हि ' क ईषते तुज्यते कः ' इति [ निरु० १४ । २६ ] इति । किंच । कामः कामायैवादात्ददाति । पुण्यं भविष्यतीत्यनेन कामेन दाता ददाति आच्छादनं भविष्यतीतीतरः प्रतिगृह्णाति । एवं कामो दाता कामः प्रतिग्रहीता । स काम उच्यते । हे काम एतत्ते वासः सकामो भवेति ।

' शेपो वैतस इति ' एते नामनी ' पुंस्प्रजननस्य ' । ' शेपः शपतेः ' स्पृशत्यर्थे वर्तमानस्य । स्पृश्यते हि तेन स्त्री । ' वैतसो वितस्तं भवति ' । उपक्षीणं तद्भवति प्रागनुस्मरणात्स्त्रियाः । ' यस्यामुशन्तः प्रहराम ' " त्रिः स्म माह्नः ' इति निगमौ ।

---

१ क. ख. घ. ट. ठ. ड. कर्तितः तन्तुकरणा°. २ क. ख. धीमत्यो बुद्धिमत्यः कुश°; घ. ट. ठ. ड. धीमन्त्यो बुद्धिमन्त्यः कुश°. ३ क. ख. घ. ट. ठ. ड. कुशला वयित्र्यस्त्वा°. ४ क. ख. घ. ट. ठ. ड. कुविन्दस्त्रियः कृतवंत्यः (क ख. कृतःवत्यः); ग. ज. कुविन्दा कृतवन्तः. ५ घ. ट. ठ. ड. त्वं हि प्रतिगृह्यमाणवासः तव प्रसादान्ममैवमेतत्स्यात् । अमृतत्वभावान्मम मा खण्डनं°. ६ ग. ज. मा मे मा मे तस्य मान°. ७ क. ख. घ. ट. ठ. ड. °वतु । मयः सुखं°; च. सुखं मम प्रति° ८ क. ख. घ. ट. ठ. ड. °ग्रहीत्रे च. ९ क. ख. ग. ज. °प्ययं दातायम°; घ. ट. ठ. ड. °प्ययं दाता अयमपि प्रतिग्रहीता प्रजा°. १० ग. ज. 'दाता' नास्ति. ११ क. ख. घ. ट. ठ. ड. स एव काम°. १२ ग. ज. °गमौ । ४५ । तां°.

'तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या३ वपन्ति। या न ऊरू उशती विश्रयाते यस्यामुशन्तः प्रहराम शेपम्' [ ऋ० सं० १०। ८५। ३७ ]॥ सूर्याया आर्षम्। कन्याप्रथमोपगमे विनियोगः। हे भगवन् पूषन् तासीरयस्व योनिं यस्यां योनौ बीजं शुक्रं मनुष्या वपन्ति। त्वत्कृतयोनिपोषे बीजमेतस्यामर्थवत्स्यात्। त्वदधीनो हि योनिपोष इत्यभिप्रायः। येयमस्माकमूरू उशती कामयमाना स्त्री विश्रयाते नानाप्रकारमाश्रयते तस्या या योनिस्तामीरयस्व उद्गमय। बीजग्रहणाय सुपुष्टां कुरुष्व। यस्यां योनौ उशन्तः पुत्रजन्म कामयमानाः प्रहराम प्रतिप्रक्षिपेम शेपम्।

५ शेप इत्यस्य

१० त्रिः स्म माह्नः श्नथयो वैतसेनोत स्म मेऽव्यत्यै पृणासि। पुरूरवोऽनु ते केतमायं राजा मे वीर तन्व१ स्तदासीः [ऋ०सं०१०।९५।५]॥ उर्वश्या आर्षम्। त्रिष्टुप्। सा पुरूरवसा मा गास्तिष्ठेत्युक्ता सत्यनयर्चा पुरूरवसं प्रत्यब्रवीत्। हे पुरूरवः त्रिः स्म माह्नः त्रिरह्नो मामवधीस्त्वं वैतसेन शिश्नदण्डेन पूर्वम्। उत स्म मे अपि च यावान् कश्चिदभिलाषो मम मनस्यासीत्तं सर्वमेत्र त्वमव्यत्यै पृणासि व्यतिपूरितवानेवासि। अतस्तवाहमन्वायमनुगतवती केतम्। चेतसा अनुकूला तवाहमभवमित्यर्थः। किंच। हे वीर तदा तथानुकूलायाः सत्या राजा ईश्वरस्त्वमस्यास्तन्वा अस्य मच्छरीरस्य तदा आसीः नेदानीम्। त्वं संप्रति न तथा वर्तसे यथा पूर्वमतस्त्वयेदानीं नाहं समेष्य इत्यभिप्रायः।

वैतस इत्यस्य

१५

२०

'अयैनेति' एते नामनी 'उपदेशस्य'। स पुनरुपदेशः स्त्रीपुन्नपुंसकेषु भिन्नलिङ्गोऽतस्त्रिष्वपि प्रदर्श्यते।

---

१ ग. च. ज. °वतमामेरयस्व। सूर्याया°; घ. ट. °वतमा० शेपम्. २ ग. च. ज. शेपम्। ४६। त्रिः°. ३ ग. च. ज. श्नथयो वैतसेन। उर्वश्या°; घ. ट. श्नथ० २५ स्तदासी°. ४ घ. ट. ठ. ड. मा मामवधी°. ५ क. ख. घ. ट. ठ. ड. °स्तन्वो मच्छरी°. ६ क. ख. घ. ट. ठ. ड. °आसीः तदानीं त्वं। संप्रति न तथा°; ग. ज. °आसीः तदानीं त्वं मां संप्रति प्रति न तथा वर्तसेव यथा°; च. °आसीः। नेदानीं त्वं संप्रति तथा वर्तते°. ७ क. ख. घ. ट. ठ. ड. भिन्नो भवति। अतस्त्रि°. २९ ८ ग. च. ज. °र्श्यते। ४७। तत्र°.

तत्र 'अया ते अग्ने समिधा विधेम प्रति स्तोमं शस्यमानं गृभाय । दहाशसो रक्षसः पाह्य१स्मान्द्रुहो निदो मित्रमहो अवद्यात्' [ऋ० सं० ४ । ४ । १९ ] ॥ इति 'स्त्रियाः' उपदेशः ।

'अया इत्यस्य स्त्रियामुपदेशः

वामदेवस्येयमार्षम् । त्रिष्टुप् । राक्षोघ्ने कर्मणि विनियोगः । हे भगवन्नग्ने अया अनया समिधा ते तव विधेम परिचर्यां कुर्मः । स त्वमेवमस्माभिः परिचर्यमाणः शृणु यत्कुरुष्व । प्रतिगृभाय प्रतिगृह्णीष्वेमं स्तोमं स्तोत्रमस्माभिः शस्यमानमुच्चार्यमाणं दह एतान् अशसः अशंसितॄन् अस्तोतॄनात्मनो द्रुहश्च द्रोग्धॄनस्माकमेतान् राक्षसान्निदः निन्दितॄंश्च । किंच । पाहि रक्षास्मान्हे मित्रमहः मित्राणां पूजयितः अवद्यादवदनीयात्कर्मणः । पाहि पापादित्यर्थः ।

'एना वो अग्निं नमसोर्जो नपातमा हुवे । प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतम्' [ ऋ० सं० ७ । १६ । १ ]॥ इति 'नपुंसकस्य' उपदेशः ।

एना इति नपुंसकस्य

वसिष्ठस्यार्षम् । बृहती । प्रातरनुवाकाश्विनयोः शस्यते [ आश्व० श्रौ० ४ । १३ ] । एना वः अनेन युष्माकं नमसा अन्नेनाभ्युद्यतेन ऊर्जोनपातम् अपां पौत्रम् अथवा अन्नस्यैव पौत्रम् । आहुतिभ्य आपोऽद्भ्योऽग्निरेनया प्रणाडिकयान्नस्य पौत्रोऽग्निः । तमूर्जोनपातमग्निमाहुवे आह्वये । किंलक्षणम् । प्रियमिष्टं देवानां च मनुष्याणां च चेतिष्ठमतिशयेन चेतनावन्तम् अरतिम् अलंमतिं पर्याप्तमतिं स्वध्वरं शोभनयज्ञं विश्वस्य यजमानगणस्य एष योऽधिकृतः कर्मणि तस्य दूतम् । हे ऋत्विग्यजमानास्तं वं आशासमृद्धयेऽहमाह्वये । स चाहूतो देवान्प्रति दूत्यं करिष्यतीत्यभिप्रायः ।

---

१ ठ. ड. 'तत्र' नास्ति. २ ग. च. ज. घ. ट. विधेमेति स्त्रियाः°. ३ क. ख. रक्षो°; ग. ज. रक्षोघ्नक°; च. राक्षो° र. ४ क. ख. घ. ट. ठ. ड. 'गृहाणेमं°. ५ क. ख. घ. ट. ठ. ड. दोग्धॄ°. ६ क. ख. घ. ठ. ठ. ड. 'पाहि' नास्ति. ७ ग. च. ज. °त्यर्थः । ४८ । एना°. ८ ग. च. ज. घ. ट. अग्निमिति नपुंसक°. ९ क. ख. घ. ट. ठ. ड. अन्नानां पौत्रं; ग. ज. अपौत्रं. १० क. ख. घ. ट. ठ. ड. अलमतिं. ११ क. ख. ग. ज. दौत्यं.

" एना पत्या तन्वं संसृजस्वेति पुंसः " उपदेशः । इह प्रियं प्रजया ते समृध्यतामस्मिन्गृहे गार्हपत्याय जागृहि । एना पत्या तन्वं संसृजस्वाधा जिव्री विदथ मा वदाथः ' [ ऋ० सं० १० । ८५ । २७ ] ॥ सूर्याया आर्षम् । जगती । वधूरनया गृहान्प्रवेश्यते [ आश्व० गृ० १ । ८ । ८ ] । सोच्यते । हे वधु इहैतस्मिन्गृहे प्रजया युक्तायाः सत्यास्तव यत्प्रियं तत्समृध्यताम् । किंच । अस्मिन्गृहे त्वं गार्हपत्याय जागृहि । गृहपतिभावायावहिता भवेत्यर्थः । किंच । एना पत्या अनेन भर्त्रा सह स्वां तनुं संसृजस्व मिश्रीकुरु । अथैवं सौमनस्ये वर्तमानौ जिव्री जीर्णौ यावत्तावदवियुज्यमानौ परस्परेण विदथं यज्ञम् अभिमुख्येनावस्थितौ सन्तौ यज्ञसंबद्धानि वचांसि वदतमित्याशीः ।

तस्यैव पुंसः

५

१०

' एना वो अग्निं नमसा ' ' एना पत्या ' इति समानेऽप्येनाशब्दे स्वरान्ते एतस्मिन्नुपपदविशेषादेकस्य नपुंसकविषयत्वमेकस्य पुरुषविषयत्वम् । एकत्र नम इत्युपपदमेकत्र पतिशब्दः ।

१५ ' सिषक्तु सचते इति ' एते नामनी ' सेव्यमानस्य ' । " स नः सिषक्तु ' ' सचस्वा न ' इति निगमौ ।

' यो रेवान्यो अमीवहा वसुवित्पुष्टिवर्धनः । स नः सिषक्तु यस्तुरः ॥ [ ऋ० सं० १ । १८ । २ ] ॥ मेधातिथेरार्षम् । अग्न्युपस्थाने विनियुक्ता [ मान० श्रौ० १ । ६ । २ । ११ ] । सोमानं स्वरणमित्यस्या ब्राह्मणस्पत्याया

२० इयमनन्तरा । तेनेयमपि ब्राह्मणस्पत्यैव स्यात् । उक्तं चाह्वरकाणां 'ब्राह्मणस्पत्याभिरग्निमुपतिष्ठेत ' इति । हे भगवन् ब्रह्मणस्पते यो रेवान्रयिमान्धनवान् अमीवहा अभ्यमनहा रोगहा वसुवित् वसुनो धनस्यापूर्वस्यापि लब्धा यश्च पुष्टिवर्धनः धनपोषस्य वर्धयिता

सिषक्तु इत्यस्य

२५ १ ग. च. ज. °देशः । ४९ । इह° . २ ग. च. ज. प्रजया समृध्यतामिति । सूर्या° ; घ. ट. प्रजया॰ वदाथः. ३ ग. ज. त्रिष्टुप्. ४ ग. ज. °या विहिता. ५ क. ख. घ. ट. ठ. ड. तन्वं तनुं. ६ क. ख. घ. ट. ठ. ड. एकस्मिं°. ७ ग. च. ज. सिषक्ति. ८ ग. च. ज. गमौ । ५० । यो°. ९ ग. च. ज. घ. ट. अमीवहेति । मेधा°. १० ठ. ड. सोमानं स्वरणमिति सर्वा ऋक् पठ्यते. ११ ठ. ३० ड. ' इति ' नास्ति. १२ ठ. ड. ' च ' नास्ति.

सोऽस्मान्सिषक्तु सेवतां पुत्रो युष्मत्प्रसादाद्यश्च तुरः तूर्णकारी । पटुरित्यर्थः ।

" स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये " [ ऋ० सं० १ । १ । ९ ] ॥ मधुच्छन्दस आर्षम् । अग्न्युपस्थाने विनियुक्ता [ मान० श्रौ० १ । ६ । २ । ९ ] । हे भगवन्नग्ने यं त्वां वयं परिचरामः सोऽस्माकं त्वं पितेव सूनवे पुत्राय सूपायनः सूपगमनः सूपचारो भव । उपचीर्णश्च सचस्वा नः स्वस्तये सेवस्व नः स्वस्तये स्वस्त्ययनाय ।

सचतेरित्यस्य

निगमप्रसक्तमुच्यते । ' स्वस्तीति एतत् ' अविनाशिनः ' अर्थस्य ' नाम ' । अन्ये त्वधीयते ' अविनाशनाम ' इति । तेषामविनाशस्यैव नाम । तत्त्वमुक्तमधुना व्युत्पत्तिं ब्रवीति । ' अस्तिः ' अयम् ' अभिपूजितः ' सुपूर्वः सन्नुच्यते स्वस्तीति ।

' भ्यसते रेजते इति ' एते नामनी ' भयवेपनयोः ' । ' यस्य शुष्माद्रोदसी ' ' रेजते अग्ने पृथिवी ' इति ' निगमौ ' । यो जात एवेति । उपरिष्टाच्छेषः [ निरु० १० । १० ] ।

' प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम् । ये सहांसि सहसा सहन्ते रेजते अग्ने पृथिवी मखेभ्यः ' [ ऋ० सं० ६ । ६६ । ९ ] ॥ भरद्वाजस्येयमार्षम् । त्रिष्टुप् । चातुर्मास्ये वैश्वदेवे पर्वणि याज्या [ आश्व० श्रौ० २ । १६ ] । ' आग्निमारुतीं पृश्निमालभेत वृष्टिकामः ' [ मैत्रा० सं० २ । ५ । ७ ] इत्यस्य पशोरियं षडर्चे च [ मैत्रा०सं० ४ । १० । ३ ] । हे स्तोतारः प्रभरध्वं चित्रमर्कं चायनीयं स्तोमं गृणते स्तुवते स्तनयित्नुशब्देन कृत्स्नं जगदुपशब्दयते तुराय त्वरमाणाय स्वतवसे स्वात्मबलावष्टम्भिने मारुताय गणाय । कीदृशानां पुनर्मरुतां गणाय प्रभरध्वमिति । ये मरुतः सहसा स्वेन बलेन सहांसि

रेजते इत्यस्य

---

१ ग. च. ज. °त्यर्थः । ५१ । स°. २ क. ख. घ. ठ. ठ. ड. 'त्वं पितेव' नास्ति. ३ ठ. ड. °पुत्राय पितेव सूपा°. ४ ग. °गमौ ॥ ५२ ॥ यो°. ५ ठ. ड. सर्वा ऋक् पठ्यते. ६ च. ज. °च्छेषः ॥५२॥ प्र°. ७ ग. च. ज. गृणते तुराय । भरद्वा°; घ. ट. गृणते । मखेभ्यः. ८ ग. च. ज. गणो यस्मै प्रभ°.

परेषां बलान्यभिभवन्ति रेजते बिभेति कम्पते वा येभ्यो मरुद्भ्यः पृथिवी मखेभ्यः । महद्भ्य इत्यर्थः । य एवंगुणयुक्ता मरुतस्तेषां यो गणस्तस्मै प्रभरध्वं चित्रमर्कम् । त्वमपि हे अग्ने वहैतद् द्रव्यं तेभ्यः । यदा तावन्मारुतमेव केवलं हविस्तदैवमग्निप्रधानः । यदा पुनराग्निमारुतं तदा प्रभरध्वं
५ चित्रमर्कमग्नये मारुताय च गणायेति स्तोतॄन्संबोध्य ततोऽग्निं ब्रवीति । हे भगवन्नग्ने शृणु त्वमप्येतमर्कमेवंगुणयुक्तैर्मरुद्भिः सहेति ।

'द्यावापृथिवीनामधेयानि' एभ्यः 'उत्तराणि' द्विसंबन्धेनैवोच्यन्ते । कियन्ति पुनस्तानि । 'चतुर्विंशतिः' । कतमानि पुनस्तानि । 'स्वधे पुरन्धी' [ निघ० ३ । ३० ] इत्येवमादीनि । सर्वस्यास्य
१० भूतग्रामस्य धारयित्र्यौ स्वधे । पुरन्धी पुरु बहु धारयित्र्यौ इत्येवमादि योज्यम् । द्विवचनेन युक्तानि द्यावापृथिव्योर्नामानि । तयोः साहचर्याख्यापिका 'एषा' ऋग् 'भवति' । साहचर्ये हि सति द्विवचनयोग उपपन्नरूपो भवति नाम्नाम् ॥ २१ ॥

---

**कतरा पूर्वा कतरापरायोः कथा जाते कवयः को वि वेद ।**
१५ **विश्वं त्मना बिभृतो यद्ध नाम वि वर्तेते अहनी चक्रियेव [ ऋ० सं० १ । १८५ । १ ] ॥ कतरा पूर्वा कतरापरैनयोः कथं जाते कवयः क एने विजानाति सर्वमात्मना बिभृतो यद्धैनयोः कर्म विवर्तेते चैनयोरहनी अहोरात्रे चक्रयुक्ते इवेति द्यावापृथिव्योर्महिमानमाचष्ट आचष्टे ॥ २२ ॥**

२० **इति तृतीयाध्यायस्य चतुर्थः पादः ॥**

---

कतरा पूर्वा कतरेति । अगस्त्यस्यार्षम् । त्रिष्टुप् । पृष्ठ्याभिप्लवयोः षष्ठेऽहनि [ आश्व० श्रौ० ७ । ७ ] महाव्रते च तृतीये सवने

१ ग. ज. मरुद्भ्य इ°. २ ग. °युता म°. ३ ग. ज. द्रष्टव्यं. ४ घ. ट. ठ.
२५ ड. सह गृह्णाणेति. ५ घ. ट. ठ. ड. धारयित्र्यो. ६ ठ. ड. 'बहु' नास्ति. ७ क. ख. ग. घ. ट. ठ. ड. °ख्यायिका. ८ क. ख. ४; ग. ५३ । २४ खण्डः; च. ज. ५३; घ. ट. अङ्को नास्ति; ठ. ॥ २१ ॥ इति निरुक्तवृत्तौ तृती० एकविंशतिः खण्डः; ड. ॥ २१ ॥ इति ऋज्वर्थायां निरुक्तटीकायां तृतीयाध्याये एकविंशतिः खण्डः. ९ क. ख. ५; छ. त. २५; द. ६ । २५. १० ङ. थ. घ. ठ. ड.
३० 'इति० पादः' नास्ति.

[ ऐ० आ० ५ । ३ । ३ ] वैश्वदेवे शस्त्रे शस्यते । स्वयमेव ताव-
द्वितर्कयन्नुत्पन्नसंशयो मन्त्रदृगब्रवीति । कतरानयोः द्यावापृथिव्योः पूर्वा
कतरा त्वपरा । न हि पौर्वापर्यमनयोः स्फुटं लक्षयितुं शक्यते । केन प्रकारेणैते जाते स्याताम् । किं पौर्वापर्येणोत युगपद्भवेताम् । अपि तावत् हे कवयः को विवेद । कः चिद्विस्पष्टं जानीति ।

द्यावापृथिव्योः साहचर्यख्यापिका ऋक्

अहं त्वेतावच्छक्नुयामागमाद्वक्तुं तस्मादुद्भूतस्य हिरण्मयस्याण्डस्यैते शकले इति । एवं ह्याह । ' ते ऑण्डकपाले रजतं च सुवर्णं चाभवतां तद्यद्रजतं सेयं पृथिवी । यत्सुवर्णं सा द्यौः ' [ छा० उ० ३ । १९ । १—२ ] इति । तेन ज्ञायतेयुगपदेवैते उत्पन्ने स्यातामिति । किंच । विश्वं सर्वं त्मना आत्मनैव बिभृतो धारयतः । यद्ध नाम यदर्थमनयोर्नाम नमनं यस्माद्भूतग्रामधारणार्थमेते नैते परिणामत्वेन तत्सर्वमेते बिभृतः । किंच । विवर्तेते च विपर्ययेण वर्तेते चैनयोरेवान्तर्भूते अहोरात्रे चक्रियेव चक्रयुक्ते इव । चक्रयुगलमिव अवियोगेन संयुक्ते संबद्धे इत्यर्थः । मन्त्रव्याख्यानेन गतार्थमेतद्भाष्यमिति ' द्यावापृथिव्योर्महिमानमाचष्ट आचष्ट ' इत्येतत् । अनेन मन्त्रेण द्यावापृथिव्योर्महिमानं माहाभाग्यं मन्त्रदृगाचष्टे ।

एवमेतन्नैघण्टुकं प्रकरणं परिसमाप्तम् । अतःपरमैकपदिकं भवति यस्यायमादिः ' एकार्थमनेकशब्दमित्येतदुक्तम् ' इत्येवमादि ॥ २२ ॥[10]

[11] इति श्रीजम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ
ऋज्वर्थायां निरुक्तवृत्तौ अष्टमोऽध्यायः[12] ॥ ८ ॥

---

१ घ. ट. कतराः अन°; ठ. ड. कतरा अन°. २ क. ख. घ. ट. ठ. ड. कश्चिदपि विस्प°. ३ क. ख. घ. ट. ठ. ड. न जानाति. ४ क. ख. घ. ट. ठ. ड. अण्ड°. ५ क. ख. ग. ज. घ. ट. ठ. ड. °मेतेन विपरिणा°. ६ क. ख. ग. च. ज. ड. महा°. ७ ग. °प्तम् । ५४ । अतः°. ८ ग. ज. तस्या°. ९ ठ. ड. °तदुक्तमथ यान्यनेकार्थान्येकशब्दानि तान्यतोनुक्रमिष्याम इति ॥ २२ ॥ इति श्री°. १० क. ख. ५; ग. २५; च. ज. ५४; इतरेष्वङ्को नास्ति. ११ ग. च. ज. ' इति श्री ' नास्ति. १२ च. ड. °ध्यायः समाप्तः; ठ. °ध्यायः समाप्तः । द्वाविंशतितमः खण्डः । निघण्टुमारभ्याष्टमोऽध्यायः.

कर्मनामानिपरिषद्यंनहिग्रभायशासद्रुह्विरभ्रांतेवनजामयेमनुष्य-नामानितदद्यदशावनिभ्योऽभीदंत्वयावयंयत्रासुपर्णावहुनामानित-नूत्यजेवकुहस्विच्चतुराश्चित्मियमेधवदथलुप्तोपमान्यर्चतिद्विशोरम्भः कतरापूर्वा द्वाविंशतिः * ।

इति निरुक्ते पूर्वषट्के तृतीयोऽध्यायः ॥ ३ ॥

---

* १ छ. त. द. खण्डशृङ्खला नास्ति.

---

८ १ ठ. निरुक्तपूर्व; ° ड. नैरुक्तपूर्व°. २ ड. °ध्यायः समाप्तः.

# अथ नैगमं काण्डम् ।

## चतुर्थोऽध्यायः ।

### प्रथमः पादः ।

---

हरिः ॐ३म् । एकार्थमनेकशब्दमित्येतदुक्तमथ यान्यनेकार्थान्येकशब्दानि तान्यतोऽनुक्रमिष्यामोऽनवगतसंस्कारांश्च निगमांस्तदैकपदिकमित्याचक्षते जहा जघानेत्यर्थः ॥ १ ॥

---

'एकार्थमनेकशब्दमित्येतदुक्तम्' । किमर्थमिदमुच्यते । न हि यद्यद्वृत्तं[1] तत्तद्वक्तव्यमिदं वृत्तमिदं वर्तिष्यत इति । यद्यद्वृत्तं तत्तदनुक्तमपि प्रतीयते यच्च वक्ष्यमाणमिति । आह । संक्षेपतो निगमनाय यदुक्तं यद्वा वक्तव्यं प्रतिजानीष्वे[2] । समासविस्तराभ्यां हि सुखमाधस्यं प्रकरणमवधारयिष्यामहे । गृहीता[3]र्थसंक्षेपाच्च विस्तरेणोत्तरग्रन्थमुच्यमानं सुखमवभोत्स्यामहे । अपि चोक्तमन्यत्रापि 'विस्तीर्य हि म[4]हज्ज्ञानमृषिः संक्षेपतोऽब्रवीत् । इ[5]ष्टं हि विदुषां लोके समासव्यासधारणम्' [महाभा० आदि० १।६५] ॥

*व्याख्यातस्य विषयस्य संक्षेपेण कथने कारणम्*

शृणु समासतो यदुक्तं यच्च वक्तव्यम् । 'एकार्थमनेकशब्दम्' इत्येतत्पुरस्तात्सूचितम् 'एतावन्तः समानकर्माणो धातव एतावन्त्यस्य सत्त्वस्य नामधेयानि' इत्यनेन वाक्येन [ निरु० १ । २० ] । यदेतत् 'गौरिति पृथिव्या नामधेयम्' [ निरु० २।९ ] इत्यत आरभ्य नामाख्यातोपसर्गनिपातानां प्रपञ्चनं च तत्त्वपर्या[6]र्थभेदसंख्यासंदिग्धोदाहरणतन्निर्वचनव्याख्याप्रविभागेनोक्तं[7] स ए[8]ष नैघण्टुकस्य प्रकरणस्य निगम[9]व्याजेन सर्वथाप्यर्थः संक्षेपत उक्तः । शास्त्रसंबन्धश्चैवमनुसृतो भविष्यति प्रकरणद्वयस्य चास्यैवमपुनरुक्तता प्रदर्शिता भविष्यतीत्यनेनाभिप्रायेणैकार्थमनेकशब्दमित्यु-

---

१ च. °द्वृत्तं ˇ तत्त° यच्च वक्ष्यमाणं. २ क. ख. ग. जं. °जानीथ; घ. ट. ड. °जानीय्य; च. °क्तव्यं ˇ प्रतिजानीज्य [ षे ]° तत्; ठ. प्रतिजनिष्य समा°. ३ क. ख. ग. ज. ठ. ड. गृहीतार्थं सं°. ४ क. ख. तमज्ञान°; ट. मैहैज्ज्ञान° तमज्ज्ञा. ५ क. ख. इत्थं; ट. इष्टं° त्थं. ६ क. ख. ग. ज. व. ट. ठ. ड. तत्त्वभेदपर्याय. ७ ग. ज. °नोक्तमित्युक्तं । नैव°. ८ क. ख. एव; ट. एवं° व. ९ ग. ज. निगमनव्या°.

कर्म् । एकोऽर्थः पृथिव्यादिरनेकेषां गवादिशब्दानां यत्र तत्त्व-भूतः कथ्यतेऽनेके च गवादिशब्दाः पृथिव्यादेरेकस्यार्थस्य यत्राभिधा-यिनः कथ्यन्ते तदिदमेकार्थमनेकशब्दं प्रकरणम् । अत्रैकेनार्थेनानेके शब्दा लक्ष्यन्तेऽनेकैः शब्दैरेकोऽर्थः । ततो लक्षितलक्षणया वृत्त्या प्रकरणं लक्ष्यते । अत्र पुनर्यद्यपि गतिकर्मणां द्वाविंशतिशतसंख्यानामविशिष्टं गमनमेकोऽर्थ उक्तस्तथापि प्रसिद्ध्यनुपरोधाय कसति लोठते श्चोतते इत्येवमादयः प्रतिनियतसत्त्वगमनविषया एव द्रष्टव्याः । तद्यथा य एवोत्कटिक उरसा वा गच्छति स एव कसतीत्युच्यते नेतरो य ऊर्ध्वो गच्छति । तथा च य एव निम्नेन प्रदेशेन कश्चिद-चेतनो लोष्टादिरन्यो वा चेतनः पुरुषादिरकामकारेण गच्छति स एव लोठत इत्युच्यते नान्यः । तथा च । यदेव द्रवद्रव्यं किंचित्स्रवति तदेव श्चोतत इत्युच्यते नान्यत् । एवं गच्छतिकर्मणामेकार्थत्वेऽपि सति प्रसिद्धिसामर्थ्या-द्गमनविशेषेषु यथार्थं विनिवेशो द्रष्टव्यः । देशान्तरप्राप्तिस्तु चलनपूर्विका सर्वेषां समानं कार्यमित्यत एकार्थत्वमेषामुक्तम् । सामान्यशब्दाश्च कांचिद्विशे-षवाचिनो भवन्ति विशेषशब्दाश्च क्वचित्सामान्यवाचिनस्तदप्युपेक्षितव्यम् ।

(एकार्थानामनेकेषां शब्दानां विशिष्टोऽर्थो यथा गत्यर्थानाम्)

'एकार्थम्' अनेन समासतो नैघण्टुकं प्रकरणमनुसृतम् । अथेदानीं यद्व्याख्यातव्यं तत्समासतः प्रतिज्ञायते । 'यान्यनेकार्थान्येकशब्दानि' पुर-स्तात्समासतः सूचितान्येतावतामर्थानामिदमभिधानमित्येवं [ निरु० २।५ ] 'तान्यतः' परम् 'अनुक्रमिष्यामो' व्याख्ययेत्यभिसंबन्धः । किंलक्षणा पुनरिह व्याख्येति । तदुच्यते 'तत्त्वं पर्यायशब्देन व्युत्पत्तिश्च द्वयोरपि । निगमो निर्णयश्चेति व्याख्येयं नैगमे पदे' ॥ यान्ये-तानि दयत्यकूपारादीनि पदान्यनेकैरर्थैरुपदयादान-दहनहिंसादिभिरर्थवन्ति यानि चैतान्यर्थजातान्युप-दयादानदहनहिंसादीन्येकशब्दवाच्यानि तान्येव-मितरेतरविशेषणविशेष्यभावलक्षणोपलक्षितान्येकप्रकरणतामुपगतान्येवंप्रका-रैकपदिकप्रकरणव्याख्ययानुक्रमिष्यामः । वर्णयिष्याम इत्यर्थः । अत्रार्थ-

(व्याख्याया लक्षणम्)

१ ग. ज. 'इत्युक्तं' नास्ति. २ घ. ट. ठ. ड. ज. लोष्टादि°. ३ ग. ज. स एवं; च. सं एवं. ४ ग. ज. प्रसिद्धसा°. ५ ग. ज. °नुव्रतं; च. °नुवृतं° सु. ६ घ. ट. यातान्येता°.

स्याप्रतीयमानस्य पर्यायाभिधानेन विभज्य प्रतिपादनं व्याख्या । शब्दस्यापि व्युत्पादनं व्याख्या । एवमेते द्वे व्याख्ये । तयोरर्थपरिज्ञानमेकस्याः कार्यं शब्दपरिज्ञानमेकस्याः । तदेतदुभयमप्येकैकस्मिन्नैगमे पदे यथासंभवं व्याख्यास्यते । आह । किमनेकार्थान्येव केवलान्यस्मिन्प्रकरणे व्याख्यायन्ते । नेत्युच्यते । अनवगतसंस्कारांश्च निगमान् । अनवगतसंस्कारान् अविज्ञातसंस्कारानित्यर्थः । येषां प्रकृतिप्रत्ययादिसंस्कारो न साकल्येन ज्ञापितस्तांश्च निगमांस्तत्रैव व्याख्यास्यामः । पूर्वाणि चानेकार्थान्यनवगतसंस्कारांश्चेति चशब्दः । तदेतदेवंप्रकारं प्रकरणं यत्रैतदुभयं व्याख्यायते 'तदैकपदिकमिति' अनेन नाम्नान्येऽप्याचार्या 'आचक्षते'। निरूढा ह्ययमस्मिन्प्रकरणे संज्ञेत्यभिप्रायः। पूर्वस्मिन्प्रकरणे गणशः पदानां विरचनामपेक्ष्यैतदैकपदिकमुच्यते । अत्र ह्येकैकमेव पदं समाम्नातम् । तद्यथा । 'जहा निधा' इत्येवमादीनि । यत्र पुनः क्वचिदनेकान्यपि समाम्नातानि तद्यथा 'देवो देवाच्या कृपा' 'सोमो अक्षाः' इत्येवमादीनि तत्रैव तत्प्रयोजनं वक्ष्यामः ।

ऐकपदिकप्रकरणविषयः

ऐकपदिकमित्यस्य नाम्नः प्रयोजनम्

एवं प्रकरणार्थं संक्षेपतः प्रतिज्ञाय क्रमेण[3] वर्णवृत्तित्वाच्च प्रथमं यत्पदं तदुपादीयते 'जहा' [ निघ० ४ । १ । १ ] इति । आह । किमेतदनवगतसंस्कारमुतानेकार्थम् । उच्यते । अनवगतसंस्कारम् । कथम् । शृणु[4] । जघानेत्येवमवस्थितेनावगतसंस्कारेण योऽर्थ उच्यते स च जहेत्यनेनानुपपन्नसंस्कारेणोक्तो भवति । अत्र हन्तेर्जहातेश्च संदेह इति भाष्यकारेणावधृतं 'जघानेत्यर्थः' इति । आह । कुतः पुनर्विशेषावधारणं हन्तेरेवात्र रूपं न पुनर्जहातेरिति । उच्यते । निगमात् । कतमः पुनरसौ निगम इति ॥ १ ॥[5]

१ क. ख. 'ज्ञायते; च. ट. ज्ञापितं° यते. २ क. ख. घ. ठ. ड. 'मान् अत्रैव; च. °मान् तत्रैव° अ; ट. °मानत्रैव° मान् त. ३ ग. च. ज. क्रमवर्णवृ°. ४ ग. ज. 'शृणु' नास्ति; च. कथं °जघाने° शृणु. ५ ठ. ड. ॥ १ ॥ इति नैरुक्तटीकायां चतुर्थाध्याये प्रथमः खण्डः.

**को नु मर्या अमिथितः सखा सखायमब्रवीत् । जहा को अस्मदीषते [ ऋ० सं० ८ । ४५ । ३७ ] ॥ मर्या इति मनुष्यनाम मर्यादाभिधानं वा स्यान्मर्यादा मर्यैरादीयते मर्यादा मर्यादिनोर्विभागो मेथतिराक्रोशकर्मापापकं जघान कमहं जातु कोऽस्मद्भीतः पलायते निधा पाश्या भवति यन्निधीयते पाश्या पाशसमूहः पाशः पाशयतेर्विपाशनात् ॥ २ ॥**

---

को नु मर्येति । त्रिशोकस्येयमार्षम् । गायत्री । महाव्रते महदुक्थे तृचाशीतिषु शस्यते [ ऐ० आ० ५ । २ । ३ ] । अस्यामृचि जहेत्यस्य शब्दस्य पूर्वोत्तरपदाविरोधप्रकरणशब्दसारूप्यार्थोपपत्तिभिः संस्कारानवगमेऽपि सति हन्तेरेव विशेषेणार्थोऽवतिष्ठते न जहातेः । कथमिति । शृणु[2] । मा[3] न एकस्मिन्नागसि वधीः हे शूर मा द्वयोरागसोर्वधीः । अपि च त्रिष्वप्यागस्सु मा वधीः । भूरिष्वपि च बहुतरेष्वप्यपराधेषु मा वधीरित्येतस्मिन्प्रकरणे ब्रवीति[4] 'को नु मर्याः' इति । हे मर्या मनुष्या युष्मानेव तावत्पृच्छामि अमिथितः अनाक्रुष्टः परुषमपि वा किंचिदनुक्तः अपि च सखा समानख्यानः सखायमेव समानख्यानमेवं[5] सन्तं यथा भवतामहं यज्ञे समानख्यान एवं सन्तमब्रवीत् । को न्वेवमाह अमिथितः[6] अनाहतः अनाक्रुष्टो ब्रूयाद्यः कश्चिद्यथा यूयमनाहताः सन्तो मां ब्रूत मा वधीरिति । जहा को अस्मदीषते । अपापकशब्दोऽत्र भाष्यकारेणाध्याहृतः प्राग्जहाशब्दस्यार्थोपद्योतनार्थम् । अपापकं सन्तं कमहं जघान हतवान् जातु । कदाचिदित्यर्थः । 'अपापकं कमहं जातु' इति सर्वमेतदध्याहृतं भाष्यकारेण जहाशब्दस्य निराकाङ्क्षीकरणार्थमधस्ताच्चोपरिष्टाच्च । एवं हि जहाशब्दः परिसमाप्तार्थो भवति । न कदाचिदपि कश्चिदपापको मया हतपूर्व[7] इति पापकारिणं तु हन्मीत्यभिप्रायः । ते यूयमपापा एवाजस्रं

'जहा' इत्यनवगतसंस्कारम्

---

१ छ. त. द. 'मर्यैरादीयते' नास्ति. २ क. ख. ठ. ड. 'शृणु' इत्यस्यानन्तरं 'मा न एकस्मिन्' [ऋ० सं० ८ । ४५ । ३४] इत्यृक्पठ्यते. ३ ठ. ड. हे शूर इन्द्र नोऽस्मान् एकस्मिन्नागसिं अपराधे मा वधीः मा हिंसीः । मा द्वयोः°. ४ ग. ज. ब्रवीरिति; च. ब्रवीरिति. ५ ठ. ड. °मेवं सन्तं. ६ ग. ज. 'अमिथितः' नास्ति. ७ ग. ज. हतः पूर्व°; च हतः पूर्व° त.

भूयास्थ न वो हनिष्यामि । यत्पुनरेतदुक्तं भवद्भिः 'भूरिष्वप्यागस्सु मास्मान्वधीः' इति कथमागस्कारी न हन्यते । श्वा पुरोडाशं समवलिह्यान्न च कस्यचित्कस्मिंश्चिदपि स्वता[1] स्यात्सर्वं वासमञ्जसमेव स्याद्यदि पापकारिणो न हन्येरन् । अथ मनुष्यानपापानपि त्वं हंस्येवेत्यत्र ब्रूमः । कोऽस्मदस्मत्तोऽपापकारी सन् भीतः ईषते । पलायत इत्यर्थः । न कश्चिदप्यपापकारी मत्त उद्विजमानः पलायते । स हि शुद्धेन चेतसाभिमुख एव मामभ्येति । य एव तु पापकारी भवति स एवात्मापराधशङ्कितया बुद्धयास्मत्तो भीतः पलायत इत्यभिप्रायः । अत्रापि कोऽस्मदित्येतस्मात्पञ्चमीयोगादीषतेर्गमनमात्रसामान्यवाचिनः सतो गमनविशेषे[2] पलायनेऽवस्थानम् । यो हि यस्माद्बिभेति स तस्मात्पलायते । भीतशब्दश्चात्राध्याहृतो न ह्यभीतः कश्चित्पलायत इति । एष समस्तार्थः ।

अथैकपदनिरुक्तम् । 'मर्या इति' मनुष्यनामसु पठितम् ( निघ० २ । ३ । १२ ) । इहापि चैतत् 'मनुष्यनाम' एव । तस्योक्ता व्युत्पत्तिः 'मर्यो मनुष्यो मरणधर्मा' ( निरु० ३ । १५ ) इति । अथ 'वा मर्यादाभिधानम्' एतदत्र 'स्यात्' न मनुष्यनाम । यदा मर्यादाभिधानमेतदभिप्रेतं भवति तदैवमर्थवत्तास्य योजयितव्या । 'मर्यादा मर्यैरादीयते' । कां न्वेषा[3] मर्यादा यतो धर्मज्ञाः सन्तो यूयमनाहता अनाक्रुष्टाश्चासदभियोगं सख्योयः[4] सन्तो मम सख्युर्दत्तं मा वधीरिति । नैतन्न्याय्यमित्यभिप्रायः । 'मर्यादा मर्यादिनोर्विभागः' । मृतौ[5] या भूमिरुपक्षीणा सा मर्येत्युच्यते । विषयान्त इत्यर्थः । आदिरन्यस्य विषयस्योपक्रम उच्यते । मृतायाश्च[6] भूमेरादेश्च विभागकारिणी या भूमिः सा मर्यादेत्युच्यते । 'मेथतिराक्रोशकर्मा' । चतस्रः पत्न्योऽश्वमभिमेथन्तीति प्रसिद्धमश्वमेधे मेथतेराक्रोशकर्मत्वम् । लोकेऽपि च श्यालो[7] मेथनक इत्युच्यते । स ह्यभीक्ष्णमाक्रुश्यते आक्रोशति च सः ।

'अपापकम्' इत्यस्य भाष्यपदस्यापरो व्याख्यामार्गः । को न्वेवं ब्रूयादपापकं सन्तं मा वधीरिति । जघान कमहं जातु पापकमपापकं वा ।

---

१ क. ख. घ. ट. ठ. ड. श्वता; च. स्वता° श्व. २ घ. ट. ठ. ड. °विशिष्टे. ३ ग. ज. त्वेषा. ४ ग. सख्याय; च. सख्योयः° खा; ज. संख्यायः. ५ क. ख. ठ. ड. संश्रिता; च. ट. मृता° संश्रि. ६ क ख. संश्रितायाः°; ट. मृता° श्रि; ठ. ड. श्रितायाः°. ७ क. ख. ग. ज. शालो; घ. ठ. ड. स्यालो; च. स्यौलो° श्या; ट. श्यालो °शा.

कोऽस्मद्भीतः पलायते । न कश्चिदपि । सौम्योऽहमित्यभिप्रायः । बलकृतिसंबन्धादिन्द्र एवायं त्रिशोकः स्याद्यस्येयमार्षम् ।

‘जहा’ इत्यस्य निर्वचने निर्णयः

एवमेतस्मिन्मन्त्रे प्रकरणपूर्वोत्तरपदाविरोधशब्दसारूप्यार्थोपपत्तिभिर्हन्तेरेव विशेषेणार्थोऽवतिष्ठते न जहातेः । जहातौ ह्येतस्मिन्कल्प्यमाने प्रकरणं पूर्वोत्तराणि च पदानि विरुध्यन्ते शब्दसारूप्येऽपि सति । तस्मान्नात्र जहातेरवकाशोऽस्ति । पारिशेष्याद्धन्तेरेतद्रूपमित्युपपन्नं भवति । एवमेव सर्वेष्वेवानवगतसंस्कारेषु योज्यम् ।

‘निधा’ ( निघ० ४ । १ । २ ) इत्येतत्पदमनवगतसंस्कारावसरप्राप्तं व्याख्यानीयमैकपदिकव्याख्याधर्मेण । प्रकृतानुवृत्त्या ‘स व्याख्यातव्यः’ ( निरु० १ । १ ) इति तदभिधानाभिधेयनिगमनिर्वचनानुक्रमप्रवृत्त्या ब्रूमः । ‘निधा पाश्या भवति’ इति पर्यायेण तत्त्ववचनम् । यो वालमयः स्नायुमयो वा पाशसमूहः पक्षिग्रहणार्थः स पाश्येत्युच्यते । अधुना

निधाशब्दस्य पाश्याशब्दस्य च निर्वचनम्

द्वावप्येतौ शब्दौ निर्वक्ति निधाशब्दं पाश्याशब्दं च । ‘यत्’ यस्मादियं ‘निधीयते’ नीचैर्धार्यते[1] पक्षिग्रहणार्थं तस्मान्निधिरिति वा[2] प्राप्ता निधानीति वा । सेयमेवं प्राप्ता सती निधेत्यनवगतसंस्कारेणोच्यते । पाश्याशब्दं पर्यायाभिधानप्रसक्तं निर्ब्रवीति प्रत्ययोत्पादनार्थं ‘पाश्या पाशसमूहः’ इति । पदान्निष्कृष्य तद्धितार्थो निरुक्तः । अधुना पदार्थं निर्वक्ति । ‘पाशः पाशयतेर्विपाशनात्’[3] । तेन हि विविधमतिशयेन वा पाश्यते । बध्यत इत्यर्थः । अधुना यस्मिन्मन्त्रे निधाशब्दः पाशसमूहवाची तमानीय ब्रवीति निधाशब्दनिगमनार्थम्[4] । कतमः पुनरसौ मन्त्र इति ॥ २[5] ॥

---

**वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः । अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्य१स्मान्निधयेव बद्धान्** ( ऋ०

---

१ क. ख. घ. ट. ठ ड. धार्यते. २ क. ख. ग. ज. ‘वा’ नास्ति. ३ ग. ज. °यतेर्बन्धनार्थस्य विपा°; च. °यतेर्बन्धनार्थस्य विपा°. ४ क. ख. ग. °निगमार्थं; च. °निगमार्थ° मना. ५ ठ. ड. २ ॥ इति ऋज्वर्थायां निरुक्तटीकायां चतुर्थाध्याये द्वितीयः खण्डः.

सं० १० । ७३ । ११ ] । वयो वेर्बहुवचनं सुपर्णाः सुपतना आदित्यरश्मय उपसेदुरिन्द्रं याचमाना अपोर्णुह्याध्वस्तं चक्षुश्चक्षुः ख्यातेर्वा चष्टेर्वा पूर्धि पूरय देहीति वा मुमुग्ध्यस्मान्पाशैरिव बद्धान् पार्श्वतः श्रोणितः शितामतः पार्श्वं पर्शुमयमङ्गं भवति पर्शु स्पृशतेः संस्पृष्टा पृष्ठदेशं पृष्ठं स्पृशतेः संस्पृष्टमङ्गैरङ्गमङ्गनादञ्चनाद्वा श्रोणिः श्रोणतेर्गतिचलाकर्मणः श्रोणिश्चलतीव गच्छतो दोः शिताम भवति दोर्द्रवतेर्योनिः शितामेति शाकपूणिर्विपितो भवति श्यामतो यकृत्त इति तैटीकिः श्यामं श्यायतेर्यकृद्यथाकथा च कृत्यते शितिर्मांसतो मेदस्त इति गालवः शितिः श्यतेर्मांसं माननं वा मानसं वा मनोऽस्मिन्त्सीदतीति वा मेदो मेद्यतेः ॥ ३ ॥ ५ १०

---

वयः सुपर्णा इति । शाक्त्यस्य[2] गौरिवीतेरियमार्षम् । त्रिष्टुप् । अग्निष्टोमे मरुत्वतीयस्य[3] शस्त्रस्य परिधानीयैषा निविद्धानीये सूक्ते [ आश्व० श्रौ० ५ । १४ ] । वय आदित्यरश्मयः । वेतेर्गत्यर्थस्य नामीभूतस्य बहुवचनं विः वी वयः इति । सुपर्णाः सुपतनाः एत एव उपसेदुः उपसीदन्ति व्युष्टायां रात्रावहन्यहनि । कमुपसेदुः । इन्द्रम् आदित्यम् । प्रियमेधाः प्रिययज्ञास्त एव यज्ञसहचारित्वात् । उद्गतेषु[4] हि तेषु यज्ञास्तायन्ते । ऋषयस्त एव अर्षणात्[5]प्रकाशकत्वात् । नाधमानाः[6] आदित्यमुपसेदुः । कमर्थं याचमाना इति । अपोर्णुहि अपावृणु जनानामेतद् ध्वान्तम् आध्वस्तमाच्छादितं तमसा चक्षुः । पूर्धि पूरय । युष्मदननुगृहीतमसकलमिवैतेषां जनानामेतच्चक्षुः । तत्पूर्धि । सकलं कुर्वित्यर्थः । अथवा पूर्धि देहीति यदुक्तं स्यात् । अस्तं हि गच्छता त्वयैतेषां जनानामात्तमिव[7] यच्चक्षुस्तत्पुनरुद्यंस्त्वमेतेभ्यो जनेभ्यो देहि । कथं च पुनर्देहि । मुमुग्ध्यस्मान्मुञ्चास्मान्निधया पाशसमूहेन पक्षिण इवैतस्मिन्मण्डले बद्धान्यावदेतदशोभं[8] १५ २०

निधाशब्दयुक्तो निगमः

२५

---

१ ठ. ड. °मङ्कना°. २ ठ. ड. शाक्तस्य. ३ क. ख. घ. ट. ठ. ड. °त्वतीयशस्त्रस्य. ४ क. ग. घ. ट. ठ. ड. उद्गतेषूदितेषु हि°; च. उद्गतेषु ˇ हि° उदितेषु. ५ ग. घ. ज. ऋषणात्; च. ट. ऋर्षणात्° अर्ष. ६ क. ख. घ. °मानास्त आ°; ट. नाधमानाः° याच. ७ क. ख. घ. ट. ठ. ड. °मात्तमि°. ८ क. ख. घ. ट. ठ. ड. °देतत्तावदृशे°; च. °देत ˇदृशे° त्ताव.

तमो नाशयित्वैतेषां जनानामेतच्चक्षुर्देव्याः सकलं वा कुर्मः । एवं ह्येतत्त्वयैव दत्तं भविष्यतीत्यभिप्रायः । एतमर्थं याचमाना उपसेदुः ।

'चक्षुः ख्यातेर्वा' दर्शनार्थस्य 'चष्टेर्वा' दर्शनार्थस्यैव । एवमेतस्मिन्मन्त्रे 'मुमुग्ध्यस्मान्निधयेव बद्धान्' इत्येतेषां पदानां मध्ये वर्तमानस्य तृतीयान्तस्य ५ निधाशब्दस्य पाशसमूहादन्यः कोऽर्थः स्यात् । 'मुमुग्धि बद्धान्' इत्येतौ शब्दौ येन बद्धा यस्माच्च मुच्यन्ते तदर्थाभिधायिनं शब्दमाकाङ्क्षतः । तत्रैवं सति वरमविद्यमानस्याध्याहाराद्विद्यमानस्य निधाशब्दस्यानयोः शब्दयोर्मध्ये वर्तमानस्याकाङ्क्षितार्थाभिधायित्वकल्प नेतिनिधाशब्दः पाशसमूहाभिधायित्वेऽवतिष्ठते । इतरथा ह्ययमितरैः पदैरसंबध्यमानोऽनर्थक एव १० स्यात् । तस्मादेवं सर्वत्रानवगतसंस्काराणामप्रसिद्धार्थानां पदानां सामर्थ्यादाकाङ्क्षितरूप एवार्थेऽवस्थानं भवति । तदुपपाद्यं सर्वत्र । ग्रन्थातिगौरवभयात्तु संक्षेपतोऽत्र दर्शयिष्यामः ।

'शिताम' [ निघ० ४ । १ । ३ ] इत्येतदनवगतम् । अनुपन्यस्यैव पदमभिधेयं चानुक्त्वैव निगममेव प्रथमं पठत्याचार्यो विप्रतिपत्त्या- १५ नेकार्थत्वमस्येति । 'पार्श्वतः श्रोणितः शितामतः' इति निगमः । पशुहविषः प्रैषोऽयं[2] मन्त्रशेषः । कतमः पुनरसौ प्रैषः[3] । 'होता यक्षदिन्द्राग्नी छागस्य हविष आत्तामद्य मध्यतो मेद

शिताम इति

उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभो घस्तां नूनं घासे अज्राणां यवसप्रथमानां सुमत्क्षराणां

२० शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करत एवेन्द्राग्नी जुषेतां हविर्होतर्यज' [ तै० ब्रा० ३ । ६ । ११ ] इति । सर्व एव गद्यः । वामदेवस्यार्षम् । मैत्रावरुणो ब्रवीति । होता यक्षत् । होता यजत्वित्यर्थः । तेन चेज्यमानाविन्द्राग्नी अस्माद्धविषः पश्वाख्यात् यदेतन्मेद उद्भृतम् उद्भृतम् २५ अस्यां स्रुच्याहितम् । 'तस्मान्मेदः पर्यस्यति श्रपयति त्रेधा मेदः करोति' इति ह्युक्तम् । एतन्मेदोऽद्य एतस्मिन्नहनि सद्यः उद्भृतम्[6] आत्तां भक्षये-

१ क. ख. घ. झ. ट. °धायकत्वक°; च. धायित्वक° वक. २ क. ख. ज. घ. झ. ट. ठ. ड. प्रैषेयं. ३ ग. च. ज. प्रैषः । ३ । होता°. ४ ग. च. ज. घ. ट. ठ. ड. °दिन्द्राग्नी इति । सर्व°. ५ क. ख. झ. 'उद्भृतं' नास्ति. ६ ग. ज. ३० उद्भृतं.

ताम् पुरा द्वेषोभ्यः हविर्मथिभ्यः पिशाचादिभ्यः पुरा पौरुषेय्या गृभः अर्वागिडावदानात् । इडा हि पुरुषार्थं गृह्यते । प्राक्तस्माद् ग्रहणादिन्द्राग्नी घस्तां भक्षयेतां नूनं निश्चयेन एतस्मिन् घासे घसनकाले भक्षणकाले प्राप्ते अज्राणाम् अनभिभूतानां रक्षोभिः । आदरेण प्रतिविशिष्टैर्मन्त्रैः संस्कृतानाम् । अथवा घासेअज्राणाम् इत्येकं पदम् । तदायमर्थः । घासे हि सति पशवो न जीर्यन्त इति घासेअज्राः । यवसप्रथमानाम् । यवसः अशनम् । तस्यानेकप्रकारस्य श्रेष्ठत्वादेतान्येव देवतृप्तये प्रथमानि । तेषां यवसप्रथमानाम् । सुमत्क्षराणाम् । स्वयमेवैतानि भक्ष्यमाणानि स्वादुत्वादुदरं प्रति क्षरन्तीति सुमत्क्षराणि । एषां सुमत्क्षराणाम् । शतरुद्रियाणां बहुस्तुतीनाम् । अथवा शतरुद्रियाणां बहुशो रुग्णानाम्[2] । अग्निष्वात्तानाम् अग्निपाकेन मृदुत्वात्स्वादूकृतानाम् । पीवोपवसनानां पीव्ना छागेनोपवस्तानाम् । अथवा पीवानं छागमुपगम्योषितानाम् । पार्श्वतोऽङ्गादवत्तानां श्रोणितोऽवत्तानां शितामतोऽवत्तानाम् उत्सादतश्चोच्छेदनस्थानात्[3][4] अङ्गादङ्गादवत्तानाम् । करतः कुरुतामिन्द्राग्नी तृप्तिमेतेषामेवंलक्षणानामवदानानाम् । हे होतः यथैताविन्द्राग्नी जुषेताम् आसेवेतामेतद्धविस्तथा त्वमपि यज ।

निगमप्रसक्तमुच्यते । 'पार्श्वं पर्शुमयमङ्गं भवति' । पर्शवो वङ्क्रय उच्यन्ते । तन्मयं हि तद्भवति पार्श्वपटलम्[5] । आह । पर्शुः कस्मात् । उच्यते । 'पर्शुः स्पृशतेः' । आह । किमनया स्पृष्टमिति । उच्यते । 'संस्पृष्टा पृष्ठदेशं' प्रति भवति । आह । 'पृष्ठं' कस्मात् । उच्यते । 'स्पृशतेः' एव । तद्धि 'संस्पृष्टमङ्गैः' । आह । अङ्गं कस्मात् । उच्यते । अङ्कितं हि तत्कायेन[6] भवति । गतमित्यर्थः । 'अञ्चनाद्वा' । अञ्चतिरपि गत्यर्थ एव । धात्वन्यत्वमर्थैकत्वम् । पार्श्वशब्दप्रसक्तानुप्रसक्तमुक्तम् । अधुना श्रोणिशब्दं निगमप्रसक्तं निर्ब्रवीति । 'श्रोणिः श्रोणतेः' धातोः गतिचलाकर्मणः । गतिनिमित्तं चलनं यस्य कर्म सोऽयं गतिचलाकर्मा । तस्य गतिचलाकर्मणः । किं कारणम् । 'श्रोणिश्चलतीव स्थानात्पशोः' गच्छतः' ।

१ ग. ज. प्रवितिष्टैर्म°; च. प्रविशिष्टैर्म°. २ च. रुग्णाना° द्रा. ३ ग. ज. उछाद°; च. उछाँद° त्सा. ४ ग. ज. °श्चोच्छेदस्था°. ५ च. °वति पार्श्वमाह° पटल. ६ क. ख. झ. कालेन; घ. ठ. ड. कालन; ट. कालेन° ये; ग. ज. कार्येण; च. कार्येण° येन.

शितामशब्दस्य तत्त्वमाचष्टे । 'दोः शिताम भवति' । बाहुरित्यर्थः । आह । दोः कस्मात् । उच्यते । 'दोर्द्रवतेः' ।

शितामशब्दस्य बाहुरित्यर्थः

तस्य हि प्राणेन पशुर्द्रवति । श्रितमंसभावेनैतत्कार्ये[1] भवतीति शिताम । यदा[2] दोर्विषयः शितामशब्दस्तदैवं निर्वक्तव्यः । आह । कयोपपत्त्या दोः शितामशब्देनोच्यते । शृणु । पशोर्हि बाह्यानि चावदानान्याभ्यन्तराणि च भवन्तीति । तत्र पार्श्वे श्रोण्यावंसाविति बाह्यानि जिह्वाहृद्यकृदादीन्याभ्यन्तराणि । तत्रैवं सति पार्श्वतः श्रोणित इत्येतयोरन्तरा वर्तमानः शितामशब्दः किमन्यद्दोष्णोऽभिदध्यात् । प्रायोऽपि हि नियामको भवति । एवं बाह्यावदानप्राये च शितामशब्दो वर्तत इति दोर्विषयः कल्प्यते । 'योनिः शितामेति शाकपूणिः' आचार्यो मन्यते । तत्र योनिरनवदानीयैव । योनिसमानदेशस्तु गुदो नामा-

योनिरिति शाकपूणिः

वदानमस्ति स योनिशब्देनोच्यते । स च गुदो 'विषितो भवति' । 'विष्लृ व्याप्तौ' । (धा० ३ । १३) । व्याप्तः स पुरीषेण भवति । अथवा विषितमांसो विपुषितमांसो विस्रस्तमांसः स भवति । आह । कयोपपत्त्या शाकपूणेर्मते योनिः शितामशब्देनोच्यत इति । शृणु । स हि श्रोण्यनन्तरो भवति । श्रोण्यनन्तरं च शितामशब्द उच्यते 'श्रोणितः शितामतः' इति । शब्दसारूप्यमपि च किंचिदस्ति विषितो भवति शितामेति । अनयोपपत्त्यानेन च शब्दसारूप्येण योनिः शितामेति शाकपूणिर्मन्यते । 'श्यामतो यकृत्त इति तैटीकिः' आचार्यो मन्यते । यदुक्तं भवति श्यामत इति तदुक्तं भवति शितामत इति ।

यकृदिति तैटीकिः

एवं हि बहुतरं शब्दसारूप्यं लक्ष्यते । एवं च सति यकृत्त एतदवदानं चोदितं स्यादिति गम्यते । किं कारणम् । तद्धि श्यामम् । '[3]श्यामं श्यायतेः' [ धा० १ । ९८८ ] धातोः । तद्धि संपर्कादुपपद्यते । आह । 'यकृत्' कस्मात् । उच्यते । तद्धि मृदुत्वात् 'यथाकथंचित्' अयत्नेनैव 'कृत्यते' । छिद्यत इत्यर्थः ।

---

१ क. ख. घ. झ. ट. ठ. ड. °तत्कार्ये. २ ग. ज. 'शिताम यदा दोर्विषयः' नास्ति. ३ क. ख. च. 'श्यामं' नास्ति.

'शितिमांसतो मेदस्त इति गालवः' आचार्यो मेद इति गालवः मन्यते । श्वेतान्मांसात् शितिमांसतः । कतमत्पुनस्तच्छ्वेतं मांसमिति । उच्यते । मेदः। तस्माद्यदुक्तं भवति शितिमांसत इति तदेवोक्तं भवति शितामत इति । एवमपि बहुतरं शब्दसारूप्यमस्ति । 'शितिः श्यतेः' तनूकरणार्थस्य ( धा० ४ । ३९ ) । परो हि विवेकस्तेजसो मेदस्येवावतिष्ठते । 'मांसं माननं वा'। य एव हि मान्यो भवति तदर्थमेतत्संस्क्रियते । 'मानसं वा'। सुमनसा हि तदुपादीयते । अथवा य एव हि मनस्विनो भवन्ति तैरुपादीयते । 'मनोऽस्मिन्सीदतीति वा'। सर्वस्यैव हि मांसे मनः सीदति । 'मेदो मेद्यतेः' स्नेहनार्थस्य [ धा० ४ । १३७ ]। १०

एवमेष शितामशब्दोऽनवगताभिधेयोऽनवगतसंस्कारो भवति । एवमेतस्मिन्प्रकरणेऽन्यान्यप्यनवगतसंस्काराण्युपेक्षितव्यानि[2] । उक्तं हि

अनेकार्थस्य कारणानि प्रकारा वा

'शब्दरूपं पदार्थश्च व्युत्पत्तिः प्रकृतिर्गुणः ।
सर्वमेतदनेकार्थे दशानवगमे गुणाः'
[ बृहद्दे० २ । १०८ ]॥ १५

अनवगतपदानां दश कारणानि प्रकारा वा । ईदृशानामाभिधेयमपेक्ष्य निर्वचनं कर्तव्यम्

कतमे पुनस्त इति । पदजात्यभिधेयस्वरसंस्कारगुणविभागक्रमविक्षेपाध्याहारव्यवधानानि। तेषु चाभिधेयमपेक्ष्य निर्वचनं कर्तव्यम् । उक्तं हि

'धातूपसर्गावयवगुणसत्त्वं द्विधातुजम् ।
बह्वेकधातुजं वापि पदं निर्वाच्यलक्षणम्' [बृहद्दे० २ । १०३]॥ २०

'धातुजं धातुजाज्जातं समर्थार्थजमेव वा ।
वाक्यजं व्यतिकीर्णं च निर्वाच्यं पञ्चधा पदम्' [बृहद्दे० २।१०४] इति॥

पदजात्यनवगतं 'त्व' इति यथा नाम निपातो वेति । अभिधेयान-

१ क, ख, ग, ज, 'अपि' नास्ति. २ च. °तव्यानि° नीति. २४

अनवगतपदवर्गाणामुदाहरणानि

वगतं 'शिताम' इति यथा। स्वरानवगतं 'वने न वायो' इति यथा। संस्कारानवगतम् 'ईर्मान्तासः' इति यथा। गुणानवगतम् 'करूळती' इति यथा। विभागानवगतं 'मेहना' इति यथा। क्रमानवगतम् 'उपरमभ्वं मे वचसे' इति यथा। विक्षेपानवगतं 'द्यावा नः पृथिवी' इति यथा। अध्याहारानवगतं 'दानमनसो नो मनुष्यान्' इति यथा। व्यवधानानवगतं 'वायुश्च नियुत्वान्' इति यथा। एकमपि पदं पदद्वितयं क्रियते 'पुरुषादः पुरुषानदनाय' इति यथा। पदद्वितयमपि चैकं पदं क्रियते 'गर्भनिधानीं सनितुः' इति यथा। आख्यातमपि च नाम क्रियते 'सर्वाणीन्द्रस्य धनानि विभक्ष्यमाणाः' इति यथा।

एवमेषु निगमेषु शब्दार्थसंकरोऽनेकप्रकार उपेक्ष्यः। दृष्टानुविधानाच्छन्दसि यथासंभवमनुविधेयः। 'मेहना' [ निघ० ४।१।४ ] इत्यनवगतम्। मंहनीयमित्यवगमः ॥ ३ ॥

---

**यदिन्द्र चित्र मेहनास्ति त्वादातमद्रिवः। राधस्तन्नो विदद्वस उभयाहस्त्या भर [ऋ० सं० ५।३९।१]॥ यदिन्द्र चित्र चायनीयं मंहनीयं धनमस्ति यन्म इह नास्तीति वा त्रीणि मध्यमानि पदानि त्वया नस्तद्दातव्यमद्रिवन्नद्रिरादृणात्येनेनापि वात्तेः स्यात्ते सोमाद इति ह विज्ञायते राध इति धननाम राध्नुवन्त्येनेन तन्नस्त्वं वित्तधनोभाभ्यां हस्ताभ्यामाहरोभौ समुब्धौ भवतो दमूना दममना वा दानमना वा दान्तमना वापि वा दम इति गृहनाम तन्मनाः स्यान्मनो मनोतेः ॥ ४ ॥**

---

यदिन्द्र चित्र मेहनेति निगमः। अत्रेर्भौमस्यार्षम्। अनुष्टुप्। हे इन्द्र

---

१ ट. करूळती°. २ ग. ज. दानमसो नो°. ३ ग. ज. ४; च. अङ्को नास्ति; ठ. ड. ।३। इति निरुक्तटीकायां चतुर्थाध्याये तृतीयः खण्डः. ४ छ. त. द. 'चित्र' नास्ति. ५ क. ख. घ. ट. ठ. ड. अनुष्टुप्। ऐन्द्री। स्वरपृष्ठानां स्वरसाम्नां प्रथमे स्वरसाम्नि यज्ञायथा अपूर्व्येति स्तोत्रियः स्वरपृष्ठानां यदिन्द्र चित्र मेहनेति द्वे या इन्द्र भुजेति तृतीयानुरूपस्येति विनियोगः। हे इन्द्र°; च. पुस्तके 'ऐन्द्री० विनियोगः' इति सर्वं पत्रस्योपरिनप्रान्ते लिखितम्.

चित्रं चायनीयं पूजार्हं यन्मेहना यन्मंहनीयं पूजार्हं तव राधो धनमस्ति किंचित् त्वादातं त्वया च यद्दातव्यमेवावश्यं सुचिरमपि स्थित्वास्मभ्यं तद्यतोऽतो ब्रूमः । हे अद्रिवः वज्रिन् तन्नो राधः हे विदद्वसो प्राप्तधन सांप्रतमेवोभाभ्यां हस्ताभ्याम् अकृपणमाभर आहर । मा चिरायेत्यभिप्रायः । अथ ' वा यन्म इह नास्तीति ' एतस्मिन् वाक्यैकदेशे ' त्रीणि पदानि मध्यमानि ' । मध्ये भवन्तीत्यर्थः । कथम् । मेहना इत्येषा संहिता । मे इह न इत्येतान्यस्याः संहितायाः पदानि । एवमेष वाक्यावयवः पञ्चपदो भवति । अत्र ' यत् ' इति प्रथमं पदम् । अतः परं ' मे इह न ' इत्येतानि त्रीणि मध्यमानि पदानि । ' अस्ति ' इति पञ्चमं पदम् । एवमभिप्रेत्य ' इन्द्रचित्र '-शब्दावुपकृष्योक्तं ' त्रीणि मध्यमानि पदानि ' इति । आह । यदैवं पदविभागस्तदा कोऽर्थ इति । उच्यते । यन्मे मम इह गृहे नास्ति धनं तव च तदस्ति धनं दातव्यं च त्वया तावत्स्तोतृभ्यस्तद्धस्ताभ्यामस्मभ्यमाभरेति । बह्वृचानां ' मेहना ' इत्येकं पदं छन्दोगानां त्रीण्येतानि पदानि ' म इह न ' इति । तदुभयं पश्यता भाष्यकारेणोभयोः शाकल्यगार्ग्ययोरभिप्रायावत्रानुविहितावेवंजातीयनिर्वचनोपप्रदर्शनार्थमुभयोश्च प्रामाण्यख्यापनार्थम् ।

(शाकल्यमतेन 'मेहना' इत्येकं पदम्) (गार्ग्यमतेन त्रिपदयुक्ता संहिता)

आह । पदकारयोः पदविकल्पे कोऽभिप्राय इति । उच्यते । विद्यावान् विद्यमानधनो वा प्रतिविशिष्टतरं प्रार्थयते । यश्च यस्य गृहे नास्ति स तद्विशिष्टमविशिष्टं वा प्रार्थयेत । न चानयोरुभयोरपि विशेषलिङ्गमस्ति तस्मान्मंहनीयमित्येतयार्थमत्या मेहनेत्येवमेकं पदमभिप्रेतं शाकल्यस्य । गार्ग्यस्य पुनर्यन्म इह गृहे नास्ति तदाहरेत्यभिप्रायः । एवमत्र विशेषलिङ्गाभावाद्द्विप्रतिपत्तिः । एवमन्येष्वपि शास्त्रान्तरपदविकल्पेष्वनुविधानमर्थाविरोधेन कर्तव्यम् । एवमयं मेहनाशब्दो राधःशब्दसामाना-

(पदविकल्पे शाकल्यस्याभिप्रायः गार्ग्यस्य च)

१ ग. ज. चित्र चायनीय पूजा°; च. चित्रं (त्र) चायनीयं (य) पूजार्हं (र्ह). २ ग. ज. तद्दातं°. ३ क. ख. घ. झ. ट. ठ. ड. °शब्दादपकृ°. ४ ठ. °स्तद्ध° स्तत्त्वं ह. ५ ग. ज. यद्वा; च. यश्चे' द्वा. ६ ग. ज. °मवशिष्ट°.

धिकरण्ये वर्तमानो यन्मंहनीयं राधो यद्वा मद्गृहे नास्तीति धनविशेषणत्वात्कमन्यमर्थं ब्रूयात्। तस्मान्मेहनेति सामर्थ्याद्धनविशेषणमेतदित्युपपत्तिः।

अधुना निगमप्रसक्तानि निरुच्यन्ते। 'अद्रिरादृणात्येनेन'। अद्रिसारमयमेव ह्यायुधं भवतीति। अद्रिर्वज्र उच्यते। आह। अद्रिः कस्मात्। उच्यते। आदृणाति। आदारयतीत्यर्थः। अथवा सोमाभिषवग्रावभिस्तद्वान् अद्रिवान् स्यात्। तैरपि हि सोम आदार्यते। 'अपि वा अत्तेः स्यात्' अद्रिः। कुतः एतत्। निगमात्। कतमोऽसौ निगम इति। 'ते सोमाद इति ह विज्ञायते'। 'ते सोमादो हरी इन्द्रस्य निसते'[ ऋ० सं० १०। ९४। ९ ] इत्येतस्मिन्मन्त्रे विचार्यमाणे ज्ञायतेऽत्तेरद्रिः स्यादिति। व्याख्यात एव शेषः [ निरु० २। ५ ]। 'राधः इति' एतद् 'धननाम' स्मारयति। व्यभिचारित्वाद्वा शब्दानां धननामसु पठितमपि सदेतदवधारयतीहाप्येतद्धननामैव नात्र व्यभिचारोऽस्तीति। पठिताभिधाननिरूपणेषु सर्वेष्वेतौ समाधी योज्यौ। 'वित्तधन' इति प्राप्तधनः। 'उभौ समुब्धौ भवतः'। संपूर्णावित्यर्थः।

*राधःशब्दव्युत्पत्तौ पुनरुक्तिस्तस्याः कारणम्*

'दमूनाः' [ निघ० ४। १। ५ ] इत्यनवगतम्। 'दममनाः' दमूनाः स्यात्। दमे हि नित्यमस्य मनः। अक्रूरमना इत्यर्थः। 'दानमना वा'। दातव्यं मयेति यस्य मनसि स वा दमूनाः। 'दान्तमना वा'। दमेषु दान्तेषु यमनियमवत्सु पुरुषेषु यस्य मनः स वा दमूनाः।अथवा 'दम इति' एतद् 'गृहनाम'। एतद्यस्य मनसि ममेदमिति स दमूनाः 'स्यात्'। गृहपतिरग्निः। निगमः॥ ४॥

*दमूना इत्यस्य व्युत्पत्तिः*

---

जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुप याहि विद्वान्। विश्वा अग्ने अभियुजो विहत्या शत्रूयतामा भरा भोजनानि [ ऋ० सं०

---

१ ग. ज. °णात्यनेन. २ च. अद्रि लोह. ३ च. °णाति दार°. ४ च. समुब्धौ उभ उंभणे. ५ ग. च. ज. ५; ठ. ड. °रग्निः। अत्र निगमः॥ ४॥ इति निरुक्तटीकायां चतुर्थाध्याये चतुर्थः खण्डः.

५।४।५]॥ अतिथिरभ्यतितो गृहान् भवत्यभ्येति तिथिषु परकुलानीति वा परगृहाणीति वा दुरोण इति गृहनाम दुरवा भवन्ति दुस्तर्पा इमं नो यज्ञमुपयाहि विद्वान्त्सर्वा अग्ने अभियुजो विहत्य शत्रूयतामाभर भोजनानि निर्हत्यान्येषां बलानि शत्रूणां भवनां-दाहर भोजनानीति वा धनानीति वा मूषो मूषिका इत्यर्थो मूषिकाः पुनर्मुष्णातेर्मूषोऽप्येतस्मादेव ॥ ५ ॥ 5

---

जुष्टो दमूना इति । वसुश्रुतस्यात्रेयस्येयमार्षम् । त्रिष्टुप् । आग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते [ आश्व० श्रौ० ४ । १३ ] । स्विष्टकृत्पुरोनुवाक्या चेयं चातुर्मास्येषु साकमेधे [ आश्व० श्रौ० २ । १८ ] । 10
हे भगवन्नग्ने जुष्टः आसेवितस्त्वमस्माभिः स्तुतिभिः दमूनाः दममना अक्रूरमना भूत्वा तत उपयाहि । अथवा गृहं ममेदमिति चेतोऽवस्थाप्य तत उपयाहि । अथवा दानमना भूत्वा दातव्यमेभ्यो मयेत्येवं चेतोऽव-

दमूना इत्यस्यार्थाः

स्थाप्य तत उपयाहि । अथवा दान्तेष्वेव हि तत्र मनो वयं च दान्ता 15
अतिथिश्च त्वमग्निहोत्रिणां दान्तमनसां प्रातः सायं चोद्बोध्यमानो भवसि । स्वभाव एवैष तवाग्निहोत्रिणामतिथित्वेनोपस्थातव्यमिति । अतो ब्रूमो वयमपि दान्तमनसोऽग्निहोत्रिणश्च । अस्माकमपि य एव दुरोणे यज्ञगृहे यज्ञस्तन्यते तं त्वमुपयाहि तमागच्छ विद्वान् जानानः स्वमधिकारं भक्ततां चास्माकम् । किंच । विश्वाः सर्वा अभियुजः अभितः सर्वतो युजः 20
अभियोक्त्र्यः शत्रुसेनास्तँवागमनप्रतिबन्धेन वर्तमाना विहत्य नानाप्रकारं हत्वा तत उपयाहि । किंच । एवमागच्छंस्त्वं शृणु यत्कुरुष्व । शत्रूयतां येऽस्माकं शत्रुत्वं कामयन्ते कर्तुं तान्विहत्य तेषां बलानि ततो यानि तेषां भोजनानि अन्नानि धनानि वा तान्यस्मभ्यमाहरेति समस्तार्थः ।

निगमप्रसक्तोऽतिथिशब्दो दुरोणशब्दश्च । आह । 'अतिथिः' 25
'अतितो भवति' । कस्मात् । उच्यते । 'गृहान्' आभिमुख्येनासौ

---

१ क. ख. छ. त. द. 'पर' नास्ति. २ क. ख. वा अयपीतरोऽतिथिरेतस्मादेव दुरो°. ३ छ. त. द. °माहर. ४ क. ख. छ. त. द. विहत्या°. ५ छ. त. द. भवतामाह°. ६ ठ. ड. 'अथवा० चेतोऽवस्थाप्य तत उपयाहि' नास्ति. ७ क. ख. झ. °नास्त्वद्दागम°; व. ट. ठ. ड. °नास्तवत्वद्दागम'. ८ ग. ज. शृणुहि. 30

गत इत्यर्थः । 'अर्तति पतति' इति गतिकर्मसु पठितम् [ निघ० २ । १४ । ] । अथवैवमन्यथा स्यात् । 'अभ्येति' अभ्यागच्छति 'तिथिषु' पौर्णमास्याद्यासु 'परकुलानि' यजमानकुलानीत्यतिथिः । अयमपीतरोऽतिथिरेतस्मादेव । 'दुरोण इति' एतत् 'गृहनाम' । आह । ५ किं कारणम् । उच्यते । ते हि गृहाः 'दुरवा भवन्ति' । अवतिस्तर्पणार्थः [ धा० १ । ६०१ ] । 'दुस्तर्पा' इत्यर्थः । उक्तं च । 'कुटुम्बतन्त्राणि हि दुर्भराणि' इति । एवमेतस्मिन्मन्त्रे जुष्टो दमूना अतिथिर्विद्वान् हे अग्ने यज्ञमुपयाहि इत्येतस्मिन्नधिकारे वर्तमानो दमूनाःशब्दः कमन्यमग्निविशेषणत्वादर्थं ब्रूयात् । न कंचिदपि । परिशेषाद्दमूना इत्येतदग्निविशेषणमेवेति सिद्धम् ।

दमूनाःशब्दस्यान्वयेऽर्थे च निर्णयः १०

'मूषः' [ निघ० ४ । १ । ६ ] इत्यनवगतम् । बहुवचनं चैतत् मूट् मूषौ मूषः इत्येवम् । आह । कुत एतत् । उच्यते । 'व्यदन्ति' १५ इत्येतस्मिन्नाख्याते[१] बहुवचननिर्देशात् 'मूषो व्यदन्ति' इत्येतत्संबध्यते । 'मूषिका इति' अनेनावगतसंस्कारेण यः 'अर्थः' उक्तः स्यात्स एव मूष इत्युक्तो भवति । प्रसिद्धार्थेनाभिधानेन मूषःशब्दस्य तत्त्वमाख्यातम् । अधुनाख्याने[२]प्रसक्तस्य मूषिका- २० शब्दस्य निर्वचनं करोति । 'मूषिकाः पुनर्मुष्णातेः' । 'मुष स्तेये' [ धा० ९ । ५८[३] ] इत्यस्य । 'मूषोऽपि' च 'एतस्मादेव'[४] । ते हि हरन्ति धान्यादीनि । सं मा तपन्तीति निगमः ॥ ४ ॥

मूषः इत्यस्य तत्त्वं व्युत्पत्तिश्च

---

**सं मा तपन्त्यभितः सपत्नीरिव पर्शवः । मूषो न शिश्ना २५ व्यदन्ति माध्यः स्तोतारं ते शतक्रतो वित्तं मे अस्य रोदसी [ ऋ० सं० १ । १०५ । ८ ] ॥ संतपन्ति मामभितः सपत्न्य इवेमाः पर्शवः कूपपर्शवो मूषिका इवास्नातानि सूत्राणि व्यदन्ति**

---

१ ठ. ड. °नाख्याने बहु°. २ क. ख. ब. झ. ट. ठ. °ख्यातप्रस°. ३ ग. ज. °दीनि । ६ । सं०; च. °दीनि । छा सं°. ४ ठ. ड. ५ ( ठ. पुस्तके '५' नास्ति )
३० इति निरुक्तटीकायां चतुर्थाध्याये पञ्चमः खण्डः.

स्वाङ्गाभिधानं वा स्याच्छिश्नानि व्यदन्तीति संतपन्ति माध्यः कामाः स्तोतारं ते शतक्रतो वित्तं मे अस्य रोदसी जानीतं मेऽस्य द्यावापृथिव्याविति त्रितं कूपेऽवहितमेतत्सूक्तं प्रतिबभौ तत्र ब्रह्मेतिहासमिश्रमृङ्मिश्रं गाथामिश्रं भवति त्रितस्तीर्णतमो मेधया बभूवापि वा संख्यानामैवाभिप्रेतं स्यादेकतो द्वितस्त्रित इति त्रयो बभूवुः ॥ ६ ॥ ५

---

सं मा तप० रोदसी इति । आप्त्यस्य त्रितस्य कुत्सस्य वेंयमार्षम् । पङ्क्तिः । ऐन्द्रयेषा । संतपन्ति मामभितः सर्वतोऽवस्थिताः कूपे पतितस्यैताः कूपपर्शवः कूपेष्टकाः संकटेऽवस्थितम् । कथं पुनः संतपन्ति मामभितः । सपत्नीरिव । यथा समानभर्तृका योषितः एकं भर्तारमभिसंतपेयुर्दुर्वचोभिरिदमस्यास्त्वया कृतमिदं मम न कृतमित्येवं मामेताः कूपपर्शवः संतपन्ति । ताभिः कूपेष्टकादिभिरहं पीड्ये । किं च । मूषो न मूषिका इव शिश्ना शिश्नानि व्यदन्ति अदन्ति । तान्यन्नमिश्राण्यन्नमिश्रोदकं पायितानि सूत्राणि व्यदन्ति । सूत्रशब्दोऽव्याहत उपपत्ति ॥ १० १५

शिश्नशब्दस्यार्थः दृष्टा भाष्यकारेण । विविधमदन्ति भक्षयन्ति । अथ 'वा स्वाङ्गाभिधानम्' एतत् 'स्यात्' ।

स्वाङ्गमिति शेपोऽभिप्रेतः । भवति हि तिरश्चामेष स्वभावो यच्छेपं भक्षयन्ति । अथवा लाङ्गूलमपि सादृश्याच्छिश्नमुच्यते । भवति हि मूषिकाणामेष स्वभावः । स्नेहभाण्डे स्वलाङ्गूलं मुक्त्वा तदुद्धृत्य व्यदन्ति आस्वादयन्ति । उपपद्यत उपमार्थ एवायमपीति शिश्नशब्दो विकल्प्यते । २०

---

१ छ. त. द. 'वित्तं० रोदसी' नास्ति. २ ग. च. ज. मा त० रोदसीति; घ. झ. ट. मा तपं० रोदसीति; ठ. ड. 'सं० मा रोदसी' इति नास्ति. ३ ग. ज. 'आप्त्यस्य० मार्षं नास्ति; च. पुस्तक इदमुपरितनप्रान्ते लिखितम्. ४ ग. च. ज. 'ऐन्द्री' नास्ति; ठ. ड ऐन्द्र्येषा । सं मा तपन्तीति । सर्वतोऽवस्थि°. ५ ट. °षितः° परस्परं वा पीडयन्ते. ६ च. भर्तारं° परस्परं वा पीडयन्ते; ठ. ड. भर्तारं परस्परं वा पीड्यन्ते अभिस°. ७ क. ख. घ. झ. ट. ठ. ड. °दन्ति तान्यन्नवेष्टि- तान्यन्नमि°; च. °दन्ति 'तान्यन्नमिश्रा' तानि अन्नवेष्टि°. ८ क. ख. ग. ज. घ. झ. ट. ठ. ड. °दकपायि°; च. °दकं पीयितानि°. ९ क. ख. ग. ज. स्वाङ्गाभिधानमिति. १० ग. च. ज. शेषोऽ°. २५ ३०

एवमेते मदुत्थाः[1] संतपन्ति मा आध्यः आधयः कामाः । सोमेन यक्ष्ये दास्ये भोक्ष्य इत्येवमादयो मां भक्षयन्ति पीडयन्त्यसंपूर्यमाणाः । आधिरिति मानसं दुःखमुच्यते । स्तोतारं ते शतक्रतो । हे शतक्रतो तव नाम स्तोतारं सन्तमेते कामा एताश्च कूपपर्शवो मामुभयपार्श्वीकृतं सबाह्यान्तरं ५ संतापयन्ति । न च नाम त्वमस्मानेतस्या आपदस्त्रायसे समर्थः सन् । अहो न युक्तम्[2] । भक्तपरित्यागो हि सतां सर्वेभ्यः पापेभ्यः पापिष्ठ इत्यभिप्रायः । यदैवमर्थ्यमानो न शुश्रावेन्द्रस्तदा द्यावापृथिव्यावाह । यदि नायमिन्द्रः शृणोति मन्दभागधेयत्वादस्माकं युवामपि तावत् हे रोदसी वित्तं जानीतमस्य वचसः श्रुत्याख्यस्य[3] यत्प्रयोजनं यदर्थमहं रोरवीमि । युवामपि १० चैतस्मात्प्रतिभयाकारात्[4] कूपादुद्धरतं यदि नायमिन्द्रोऽभ्युद्धरति । युवयोरपि स्तोतैवाहमित्यभिप्रायः ।

आह । पर्शव इत्येतावति श्रूयमाणे कुत एतत्कूपपर्शव एता इति ।

*पर्शव इति शब्देन कूपपर्शवः कथं सूच्यन्ते*

उच्यते । 'त्रितः कूपेऽवहितः' [ ऋ० सं० १ । १०५ । १७ ] इत्येतस्मिन्[5] सूक्ते विशेष- १५ लिङ्गात् । तदेव भाष्यकारेण ख्यापितमत एव सूक्तगताद्विशेषलिङ्गादुपलभ्य 'त्रितं कूपेऽवहितमेतत्सूक्तं प्रतिबभौ' यत्रेयमृक् तस्मात्कूपपर्शव एता इति ।

*सूत्रशब्दाध्याहारस्य प्रयोजनम्*

सूत्राणि व्यदन्तीति सूत्रशब्दो भाष्यकारेणाध्याहृतः शिश्न इत्यस्य शब्दस्य शेष- २० भूतो मूषक[6]संबन्धेन । ते ह्यन्नगन्धेन सूत्राणि व्यदन्तीति । स्वाङ्गाभिधानपक्षे त्वध्याहारो नास्त्येवेति ।

'तत्र ब्रह्मेतिहासमिश्रम्' । तत्र तस्मिन् सूक्ते ब्रह्मेतिहासमिश्रम् । इतिहासयुक्तमित्यर्थः । तद्यथा । 'त्रितः कूपेऽवहितो देवान् हवत ऊतये' [ ऋ० सं० १ । १०५ । १७ ] इत्येवमादि ।

*सूक्तेषु ऋङ्मिश्रो गाथामिश्रश्चेतिहासोऽप्युपलभ्यते*

२५ 'ऋङ्मिश्रं गाथामिश्रं' च 'भवति' । स पुनरितिहास ऋग्बद्धो गाथाबद्धश्च । ऋक्प्रकार एव कश्चिद्गाथेत्युच्यते । 'गाथाः शंसति नाराशंसीः शंसति' इति ह्युक्तम् । 'गाथानां कुर्वीत' इति ।

१ क. ख. ग. मदुक्ताः. २ च. युक्तं °क्तो. ३ क. ख. घ. झ. स्तुत्या°; ग. ञ. श्रुत्या° स्तु; ज. सुत्या°. ४ ठ. ड. °भयाकरा°. ५ च. इत्येत° त्यृच्ये. ६ ग. ज. मूषिक°; च. मूषकासं°.

स एव सूक्तानां स्वभावः प्रदर्शितः । इतिहाससंबद्धान्यपि सूक्तानि भवन्ति । तेषु प्रकरणादपि संदिग्धस्य पदस्यार्थोऽध्यवसेयो यथेह पर्शुशब्दो भाष्यकारेणाध्यवसित इति ।

भाष्यप्रसक्तं त्रितशब्दं निर्ब्रवीति । 'त्रितस्तीर्णतमो मेधया' एकतद्वितयोः सकाशात् 'बभूव' । अपि वा संख्यानिमित्तमेवैतत् 'नामाभिप्रेतं स्यात्' । कथम् । 'एकतो द्वितस्त्रित इति त्रयो' हि ते भ्रातरो 'बभूवुः' । तस्मात्संख्यानिमित्तमप्युपपद्यत एव । उक्तं च । 'भार्यागारेणाभ्युपादयत्तत एकतोऽजायत द्वितीयं ततो द्वितस्तृतीयं ततस्त्रितः' इति ॥ ६[1] ॥

---

**इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः । सोम राजन्प्र ण आयूंषि तारीरहानीव सूर्यो वासराणि [ ऋ०सं० ८ । ४८ । ७ ] ॥ ईषणेन वैषणेन वार्षणेन वा ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव धनस्य प्रवर्धय च न आयूंषि सोम राजन् । अहानीव सूर्यो वासराणि । वासराणि वेसराणि विवासनानि गमनानीति वा कुरुतनेत्यनर्थका उपजना भवन्ति कर्तन हन्तन यातनेति जठरमुदरं भवति जग्धमस्मिन् ध्रियते धीयते वा ॥७॥**

---

'इषिरः' [ निघ० ४ । १ । ७ ] इत्यनवगतम् । 'ईषणेन वा एषणेन वा अर्षणेन वा' इत्येताः शब्दसमाधयः ।

इषिरशब्दस्य व्युत्पत्तिः

'इषिरेण ते मनसा' इति समानविभक्त्यन्तत्वादिषिरशब्दस्य प्रतीयत एव मनोविशेषणत्वमित्यभिधेयमनुक्त्वा निगममेव पठति । इषिरेण ते मनसा[3]०वासराणीति । प्रगाथस्येयमार्षम् । त्रिष्टुप् । सौमी । हे भगवन् सोम इषिरेण मनसा । त्वां प्रति सर्वात्मना

अर्थश्च

गतेनेत्यर्थः । 'ईषति फणति' इति गतिकर्मसु पठितम् [ निघ० २ । १४ ] ।

---

१ ग. च. ज. व. ट. अङ्को नास्ति; ठ. ड. इति । इति चतुर्थाध्याये षष्ठः खण्डः.
२ ग. °ठति । ७ । इषि°. ३ ग. च. ज. मनसा-सराणि; ठ. ड. मनसेति । प्रगा°.

'एषणेनेति वा' स्यात् । इच्छावता । फलप्रार्थनावतेत्यर्थः । 'ऋषणेनेति वा' । दर्शनवता । ईदृशेन मनसा किं कुर्मः । ते तव योऽस्माकं स्वांशस्तं भक्षीमहि तं भक्षयेमहि । कथं पुनर्भक्षयेमहि । पित्र्यस्येव रायः । यथा पित्र्यो धनांशोऽविघ्नेन भक्ष्यते भक्षितश्च सुखपरिणामो भवत्येवं तव वयं स्वमंशमविघ्नेन भक्षयेमहि भक्षितश्च सुखपरिणामो मेऽस्तु । मातीव भियेमहीत्यभिप्रायः । किंच । हे सोम राजन् प्र ण आयूंषि तारीः । प्रतारय च प्रवर्धय च न आयूंषि । कथं पुनः प्रवर्धय । अहानीव सूर्यो वासराणि । यथा सूर्यो वासराणि वासन्तिकान्यहानि । 'वासराणि' इति 'वेसराणि' द्विसराणि । शीतोष्णाभ्यां हि द्वाभ्यां तानि सरन्ति । तेषु हि शीतोष्णं भवति रात्रौ शीतं दिवोष्णम् । अथवा 'विवासनानि' स्युः । तानि हि तच्छीतं विवासयन्ति । नाशयन्तीत्यर्थः । 'गमनानीति वा' । विसृतानि विस्तीर्णानि सन्ति वासराणीत्युच्यन्ते । यथा तानि सूर्यो वर्धयति मन्दगतित्वादेवमस्माकं त्वमायुः प्रवर्धयेत्याशीः ।

'कुरुतन [ निघ० ४ । १ । ८ ] इत्यनर्थका उपजना भवन्ति' । य एवार्थः कुरुतेत्युक्ते भवति स एव कुरुतनेति । नात्र नकारस्यार्थोऽधिकोऽस्ति । अधुनैवमुक्त्वान्यान्यपि दर्शयति 'कर्तन हन्तन यातनेति' ।

कर्तनेत्यस्य प्रयोगः — शुनं सुफाला विकृषन्तु भूमिं शुनं कीनाशा अभि यन्तु वाहैः । शुनासीरा हविषा तोशमाना सुपिप्पला ओषधीः कर्तनास्मे' इति । अग्निचयने क्षेत्रकर्षणे विनियुक्ता । त्रिष्टुप् । सुखं शोभनाः फाला विनुदन्तु विकृषन्तु भूमिम् । सुखं कीनाशाः भूमिकीणनाशाः खिलोत्कर्तारः कर्षुकाः अभियन्तु वाहैः अनडुद्भिः । अयं तावदेवं कृषीवलः कृषिं करोतु । युवामपि हे शुनासीरौ हविषा उदकेन तोशमानौ निघ्नन्तौ भूमिं सुपिप्पलाः सुफलाः एता ओषधीः कर्तन कुरुतम् अस्मे । अस्मभ्यमित्यर्थः ।

---

१ घ. झ. ट. ऐत्र° च. ऐष° ए. २ च. योऽस्माकं०ऽभिषुतोऽ. ३ ग. ज. मा चास्मानभिपाची तारय°; च. मा चास्माननीतियातीति° प्रता. ४ च. विसराणि. ५ क. ख. घ. झ. ट. ठ. ड. 'द्विसराणि' नास्ति. ६ घ. झ. ट. ठ. ड. विवासृतानि; च. विवासृतानि°. ७ ग. °नेति । ८ । शुनं°. ८ क. ख. वितुदन्तु; ठ. °सुफाला वितु° नः. ९ च. तोशमाना° ष. १० ग. ज. 'विकृषन्तु' नास्ति, ११ क. ख. भूमिं कीण°; ग. ज. भूमिं किण°.

यो नो मरुतो अभि दुर्हृणायुस्तिरश्चित्तानि वसवो जिघांसति । द्रुहः पाशान्प्रति स मुचीष्ट तपिष्ठेन हन्मना हन्तना

हन्तनेत्यस्य तम् [ ऋ० सं० ७ । ५९ । ८ ] इति ॥

वसिष्ठस्येयमार्षम् । सांतपनस्य चरोः याज्यैषा [ आश्व० श्रौ० २ । १८ ] । योऽस्माकं हे मरुतः दुर्हृणायुः पापक्रोधनः तिरःचित्तानि अन्तर्हितानि चित्तानि कृत्वा संमोह्य ततो हन्तुमस्मानिच्छति हे वसवः सर्वभूतवासयितारः तस्येदंलक्षणस्य द्रुहः अस्मद्रोग्धुरुपरि पाशान् प्रतिसमुचीष्ट प्रतिसंमोचयत । पाशैरेनं बद्ध्वा तपिष्ठेन तापयितृतमेन हन्मना हननेन वधेन हन्तना । हन्तेत्यर्थः । ५

'को न्वत्र मरुतो मामहे वः प्र यातन सखीँरच्छा सखायः । मन्मानि चित्रा अपिवातयन्त एषां भूत नवेदा म ऋतानाम्' [ ऋ० सं० १ । १६५ । १३ ] इति ॥ १०

यातनेत्यस्य

इन्द्रागस्त्यमरुतां संवादः । कयाशुभीयं सूक्तम् । तत्रेयमगस्त्यस्यार्षम् । महाव्रते [ ऐ० आ० ५ । १ । १ ] व्यूढस्य च दशरात्रस्य सप्तमेऽहनि सूक्तं शस्यते । हे मरुतः कोऽन्यः युष्मानेवमेतस्मिन् जगति मामहे पुनः पुनर्महयति पूजयति यथार्हम् । न कश्चिदित्यभिप्रायः । यत एवमतो मरुतो ब्रवीमि । अस्मानेव सखीनाभिमुख्येन प्रयातन आयात हे सखायः । किं च मन्मानि मननानि स्वानि चेतांसि चित्राः चित्राणि अस्मान्प्रति अपिवातयन्तः निगमयन्तः एषामृतानां यज्ञानां प्रापयितारो भवत हे नवेदाः । मेधाविन इत्यर्थः । १५ २०

१ क. ख. घ. झ. ट. ठ. ड. यो नोऽस्माकं. २ क. ख. ग. °रेनं; ज. °रेतं. ३ ग. ज. ततेत्य°. ४ घ. ट. मरुतो० वेदा म ऋतानां । इन्द्रा°. ५ ग. ज. °र्हति पूजयति. ६ क. ख. घ. झ. ट. ठ. ड. °थार्हं तथा न क°; च. °थार्हं न क°तथा. ७ क. ख. ग. ज. 'मरुतो' नास्ति. ८ क. ख. घ. झ. ठ, ड. प्रयात°; च. आयात° ण; ट. प्रयात° आ. ९ ग. ज आप्तानां गमयन्तः. १० क. ख. घ. झ. ट. ठ. ड. भूत भवत.

'जठरम्' [ निघ० ४।१।९ ] इत्यनवगतम् । 'उदरं भवति' इत्यभिधेयवचनम् । 'जग्धं' भुक्तमन्नम् 'अस्मिन्' अवस्थितं 'ध्रियते' इति जठरम् । अन्नं 'वा' जग्धम् 'अस्मिन्' 'धीयते' इति जग्धधानं[२] वा

जठरमित्यस्य निर्वचनम्

५ स्यात् । एते शब्दसमाधी । मरुत्वाँ इन्द्रेति निगमः ॥ ७ ॥

मरुत्वाँ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय । आ सिञ्चस्व जठरे मध्व ऊर्मिं त्वं राजासि प्रदिवः सुतानाम् [ ऋ० सं० ३ । ४७ । १ ] ॥ मरुत्वानिन्द्र मरुद्भिस्तद्वान् वृषभो वर्षितापां रणाय रमणीयाय संग्रामाय पिब सोममनुष्वधमन्वन्नं मदाय मद-
१० नीयाय जैत्रायासिञ्च स्वजठरे मधुन ऊर्मिं मधु सोममित्यौपमिकं माद्यतेरिदमपीतरन्मध्वेतस्मादेव त्वं राजासि पूर्वेष्वप्यहःसु सुतानाम् ॥ ८ ॥

इति[३] चतुर्थाध्यायस्य प्रथमः पादः ।

---

१५ मरुत्वाँ इन्द्र वृषभो रणायेति । विश्वामित्रस्येयमार्षम् । त्रिष्टुप् । महाव्रते पृष्ठ्यस्य चतुर्थेऽहनि शस्यते [ ऐ० आ० ५ । १ । १ ] । मरुत्वान्[४] मरुत्संयुक्तो भूत्वा पिब हे इन्द्र यस्त्वं वृषभो वर्षिता । 'अपाम्' इत्यध्याहृतं भाष्यकारेण वृषभसंबन्धात् । यस्त्वमेवं[५]कर्मकारी तं त्वां ब्रवीमि । रणाय रमणीयाय संग्रामाय रमणीयं संग्रामं[६] करिष्यामीत्येतमर्थमुद्दिश्य
२० पिबैतं सोममस्मत्प्रत्तम् अनुष्वधम् । स्वधेत्यन्ननाम [ निघ० २ । ७ । १७ ] । सवनीयपुरोडाशाद्यभिप्रायेण अनुष्वधम् अनु अन्नम् । मदाय मदनीयाय पानाय युष्मदर्थमस्माभिः संस्कृतम् । 'जैत्राय' इत्यध्याहृतं भाष्यकारेण । द्विविधो हि मदः संमोहकरो जैत्रश्च । तयोर्जैत्र इष्टः संग्रामे । कथं च पुनः पिब । किमीषत् । नेत्युच्यते । आसिञ्च स्वजठरे[७] ये मध्वः

---

२५ १ ग. ज. जग्धधरं; ट. जठरं °जग्धधरं. २ ग. ११ ( ७ ); च. ज. ११; ट. ८. ३ ड. थ. ध. ठ. ढ. 'इति ००० पादः' नास्ति. ४ क. ख. घ. झ. ट. ठ. ढ. 'मरुत्वान्' नास्ति. ५ क. ख. घ. झ. ट. ठ. ड. यस्त्वामे°. ६ ट. संग्रामे °मं; ठ. ड. संग्रामे. ७ च. ट. जठरे॰मध्वः° उदरे; ठ. ड. जठरे
२९ उदरे मध्वः°.

मधुनः । 'मधु सोममित्यौपमिकम्' इत्येतदुक्तं सोमस्य मधुत्वं 'माद्यतेः' धातोः । तृप्तिर्हि समाना सोमेन मध्वा चेत्यौपमिकत्वम् । 'इदमपीतरन्मधु' माक्षिकम् 'एतस्मादेव' माद्यतेः । यत्तु सोमस्योपचारत्वेन तन्माध्वीकम्[1] । ऊर्मिः संघातः[2] । तावत्तं[3] सोममासिञ्च स्वजठरे यावता जैत्रो मद उपजायते । कस्मात्पुनरेवं ब्रवीमि[4] । इतो यस्मात् 'त्वं राजासि प्रदिवः सुतानाम्' । त्वमेव[5] राजा ईश्वरः पूर्वेष्वप्यहःसु सुतानामभिषुतानां न केवलमाधुनिकानाम् । उचितः सोमपान एवं त्वमित्यभिप्रायः[6] ॥ ८ ॥

नवमाध्यायस्य[7] प्रथमः पादः ।

---

**तितउ परिपवनं भवति ततवद्वा तुन्नवद्वा तिलमात्रतुन्नमिति वा[8] ॥ ९ ॥**

---

'तितउ' [ निघ० ४ । १ । १० ] इत्यनवगतम् । 'परिपवनं भवति' इत्यभिधेयवचनम् । सक्तवः परिपूयन्ते येन द्रव्येण तत्परिपवनमुच्यते । ततेन चर्मणा नद्धं[9] तितउ । तुन्नैर्वा छिद्रैस्तद्वत् तितउ । तिलमात्राणि वा तुन्नानि तस्मिन्निति तितउ । यथासंभवमेताः शब्दसमाधयः । निगमः[10] ॥ ९ ॥

तितउ इत्यस्य निर्वचनम्

---

**सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत । अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि [ऋ० सं० १० । ७१ । २] ॥ सक्तुमिव परिपवनेन पुनन्तः सक्तुः सचतेर्दुर्धावो भवति कसतेर्वा स्याद्विपरीतस्य विकसितो**

---

१ क. ख. घ. झ. ट. ठ. ड. तस्मान्माध्वीकं; ग. ज. तन्मार्द्वीध्वीकं. २ च. ऊर्मिसंघा°. ३ ठ. ड. तावत्त्वं. ४ घ. झ. ड. ब्रवीषि; ट. ब्रवीषि° मि; च. ब्रवीमि° षि. ५ ग. ज. घ. झ. ट. एव. ६ घ. ट. ठ. ड. च. ज. अङ्को नास्ति. ७ ठ. ड. इति निरुक्तटीकायां चतुर्थाध्याये अष्टमः खण्डः । इति निघण्टुसहितनवमाध्यायस्य प्रथ°. ८ क. ख. द. ५. ९ च. नद्धं° तद्वति. १० क. ख. १(९); ग. १२(९); च. ज. १२; ठ. ड. °धयः । अत्र निगमः । इति निरुक्तटीकायां चतुर्थाध्याये नवमः खण्डः.

भवति यत्र धीरा मनसा वाचमक्रषत प्रज्ञानं धीराः प्रज्ञानवन्तो ध्यानवन्तस्तत्र सखायः सख्यानि संजानते भद्रैषां लक्ष्मीर्निहिताधि वाचीति भद्रं भगेन व्याख्यातं भजनीयं भूतानामभिद्रवणीयं भवद्रमयतीति वा भाजनवद्वा लक्ष्मीर्लाभाद्वालक्षणाद्वा लप्स्यनाद्वा
५ लाञ्छनाद्वा लषतेर्वा स्यात्प्रेप्साकर्मणो लग्यतेर्वा स्यादाश्लेषकर्मणो लज्जतेर्वा स्यादश्लाघाकर्मणः शिप्रे इत्युपरिष्टाद्व्याख्यास्यामः ॥ १० ॥[3]

---

सक्तुमिव तितउनेति । विद्यासूक्ते बृहस्पतेरार्षम् । 'सक्तुः सचतेः'।
१० स हि सूक्ष्मत्वात्सचति संश्लिष्यत्यङ्गे । तता 'दुर्धावो भवति' इत्युपपत्तिः । दुःखं धाव्यते प्रक्षाल्यत इत्यर्थः । 'कसतेर्वा स्याद्विपरीतस्य'। स हि 'विकसितो' विपुष्पितः 'भवति'। यथा सक्तुं कश्चित्परिपवनेन पुनात्येवं मनसा परिपवनस्थानीयेन परिपूय विनिश्चित्य शब्दार्थं न्याययुक्तां वाचं यत्र यस्मिन् समाजे यज्ञे वा धीराः
१५ धीमन्तो मेधाविनः अक्रत अक्रुषत । कुर्वन्तीत्यर्थः । अत्र केचिदक्रुषत प्रज्ञानमित्यभिधीयते प्रज्ञानार्थत्वाद्वाचः । तत्र किमिति । तत्र सखायः

तितउशब्दस्योदाहरणम्

समानख्यानाः समानख्यानानामेव समानेषु शास्त्रेषु कृतश्रमाणाम् । तद्यथा । वैयाकरणानां वैयाकरणा एव नैरुक्तानां नैरुक्ता एव । सख्यानि सखिभा-
२० वान् जानते । विज्ञानानि संजानते । इतरेतरस्य यो विज्ञानप्रकर्षस्तं जानते । किं कारणम् । यस्मात् भद्रा भन्दनीया एषां लक्ष्मीर्विज्ञानाख्या निहिताधि वाचि । वाचः अधि उपरि निहिता अवस्थापिता । तया लक्ष्म्या इतरेतरस्य विज्ञानश्रमं जानते । इतरो ह्यविद्वान् किं[6] विज्ञास्यत इत्यभिप्रायः ।

'भद्रं भगेन व्याख्यातं' 'स्त्रीभगस्तथा स्याद्भजतेः' [ निरु० ३ ।

---

१ क. ख. छ. त द. 'इति' नास्ति. २ क. ख. छ. त. द. लंछना°. ३ क. ख. २ ( १० ); द. २. ४ क. ख. संज्ञानते; ग. ज. जायते; च. जायते° न. ५ च. विज्ञानस्य संजानते. ६ ठ. ढ. किंचिज्ञास्य. ७ व. ट. ठ. ड. 'भजतेः
२८ इति' नास्ति; च. भजतेरितिम° भे.

भद्रशब्दस्य व्युत्पत्तिः

१६ ] इति । 'भजनीयम्' इति । 'भूतानामभिद्रवणीयम्' । अभिगमनीयमित्यर्थः । 'भवद्रमयतीति वा' । यस्य हि तद्भवति स रमते । 'भाजनवद्वा' । सन्ति हि कल्याणरूपाः पुरुषा ये तस्य भाजनम् । तैस्तद्वत् । 'लक्ष्मीर्लाभाद्वा' । लक्ष्मीवन्त एव लभन्ते नेतरे । 'आलक्षणाद्वा' । आलक्षित एव हि लक्ष्मीवान् । 'लाञ्छनाद्वा' । तया हि लञ्छित इव भवति । 'लषतेर्वा स्यात्प्रेप्साकर्मणः' [ धा० १ । ८१३ ] । सर्व एव हि तामभिलषन्ति । 'लग्यतेर्वा स्यादाश्लेषकर्मणः' [ धा० १।७८७ ] । आश्लिष्येव हि सा वर्तते पुरुषम् । 'लज्जतेर्वा स्यादश्लाघाकर्मणः' [ धा० ६ । ११ ] । ये हि लक्ष्मीवन्तो भवन्ति ते स्वयमात्मानं न श्लाघन्ते ।

लक्ष्मीशब्दस्य च

'शिप्रे [ निघ० ४ । १ । ११ ] इति' एतद् 'उपरिष्टाद्व्याख्यास्यामः' । 'शिप्रे हनू नासिके वा' [ निरु० ६ । १७ ] इत्यत्र ह्येतन्निगमप्रसक्तमायास्यतीति लाघवार्थमुत्क्रष्टम् । 'मध्या' [ निघ० ४ । १ । १२ ] इत्येतदनवगतम् । 'मध्ये' इत्यवगमः ॥ १० ॥

---

**तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार । यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै [ ऋ० सं० १ । ११५ । ४ ] ॥ तत्सूर्यस्य देवत्वं तन्महित्वं मध्ये यत्कर्मणां क्रियमाणानां विततं संह्रियते यदासावयुङ्क्त हरणानादित्यरश्मीन् हरितोऽश्वानिति वाथ रात्री वासस्तनुते सिमस्मै वेसरमहरवयुवती सर्वस्मादपि वोपमार्थे स्याद्रात्रीव वासस्तनुत इति तथापि निगमो भवति । पुनः समव्यद्विततं वयन्ती । समनात्सीत् ॥ ११ ॥**

---

१ ग. ज. 'भजनीयमिति' नास्ति. २ क. ख. ग. ज. लंछना°; च. ट. लांछना° लं. ३ च. लांक्षित इ° लां(लं)छि. ४ क. ख. २ ( १० ); ग. १३ ( १० ); च. ज. १३; घ. ट. ठ. ड, अङ्को नास्ति. ५ क. ख. छ. द. °वयुक. ६ क, ख. ३ ( ११ ); द. ३.

तत्सूर्यस्य देवत्वं तन्महित्वम् । आङ्गिरसस्य कुत्सस्येयमार्षम् । त्रिष्टुप् । सौर्यस्य पशोः षडर्चे वपाया याज्या । सूत्रितं च ' चित्रं देवानामिति पुरोनुवाक्यास्तिस्र उत्तरा याज्याः सौर्यस्योपांशु ' इति । तदहं सूर्यस्य भगवतो देवत्वं देवताभावं तन्महित्वं तच्च महत्त्वं माहाभाग्यं मन्ये जाने । यत्किमिति । मध्या मध्ये यत्कर्मणां क्रियमाणानामनेकेषामवगणय्य सर्वान् कर्मकर्तॄन् मिषतां तेषां विततमेतत्प्रकाशजालमेवमतिमहत् । महतापि कालेन तद्रुपसंहारमन्यैः । यदेकेन मुहूर्तेनायत्नेनैव भगवता सूर्येण संह्रियते तदस्य देवत्वं तच्च महत्त्वमहं मन्ये । किंच । यदासौ भगवान् सूर्यः अयुक्त युनक्ति हरितः रसहरणान् रश्मीन् आत्मनि अस्तं गच्छन् सधस्थात् पृथिवीलोकादाकृष्य । पृथिवी हि तेषां रसादानार्थं सहस्थानम् । इतो हि ते सर्व एव रसानाददते । आत् अथेत्यर्थः । अथ तदैवोपसंहृतसर्वरश्मिजाले भगवति सूर्ये रात्रिर्वासः वेसरमहरवयुवती अवमिश्रयन्ती सिमस्मात्सर्वस्माल्लोकात् अहरपकृष्य सा तमस्तनुते । तदेवमेतदपि सूर्यस्यैव माहाभाग्यं यदस्य संनिधौ तमो नश्यति यश्चानेनोत्सृष्टो देशः स तमसा छाद्यत इत्यभिप्रायः । ' हरितोऽश्वानिति ' ऐतिहासिकपक्षमतेन ।

मध्या इत्यस्योदाहरणम्

' अपि वोपमार्थे स्याद्रात्रीव वासस्तनुत इति ' । वास इव रात्री तमस्तनुत इत्यर्थः । पूर्वत्र वेसरमहरवयुवती तमस्तनुत इति नास्त्युपमा । इह पुनर्वास इव तमस्तनुत इत्येवमुपमा । यथा चोपमार्थोऽपि युज्यते 'तथा' च ' निगमोपि ' अयं 'भवति' ।

उपमार्थोऽप्यस्यामृचि स्यात्

---

१ क. ख. घ. ट. देवत्वं० सिमस्मै । आङ्गि°; ठ. ड. तत्सूर्यस्येति । आङ्गि°. २ घ. झ. षलर्चे; ट. षळर्चे. ३ ग. ज. 'वपाया.......स्योपांशु' इति नास्ति; च. षडर्चे ४ । तदहं° वपाया०० स्योपांशु इति. ४ घ. झ. ट. ठ. ड. च. महाभाग्यं. ५ क. ख. घ. ट. ठ. ड. च. विततं. ६ घ. ठ. ठ. ड. °जलतमेव°. ७ घ. ठ. ठ. ड. ' महत् ' नास्ति. ८ ठ. ड. रसदाना°. ९ ग. ज. हरितो विवास इव रात्री तमस्त इत्यश्वानित्यैति°; घ. ट. ठ. ड. हरितोऽश्वा इत्यै°. १० ग. ज. ' च ' नास्ति; च. यथोपमा° था चो. ११ ग. च. ज. °वति । १४ । पुनः°.

पुनः समव्यद्वितंत वयन्ती मध्या कर्तोर्न्यधाच्छक्म धीरः । उत्संहार्यास्था-
द्व्यृ॰ तूँर्दर्धररमतिः सविता देव आगात् । [ ऋ० सं० २।३८।४ ] ॥ गृत्समदस्येयमार्षम् । सावित्री । त्रिष्टुप् । पृष्ठयस्य षष्ठेऽहनि वैश्वदेवशस्त्रे शस्यते तृतीयसवने [आश्व० श्रौ० ८।८ ] । 'पुनः समव्य-

ताद्दगुपमार्थेऽन्या ऋक्

द्वितंतं वयन्ती । समनात्सीत्' इति निर्वचनम् । समवेष्टयदित्यर्थः । यथा योषित्काचिद्वासो वयन्ती पुनः संवेष्टयत्यस्तमयकाले पुनश्च वितनोत्यादित्य उदित एवमियं रात्रिः पुनरेव तमः संवेष्टयति योषिदिव वासो वयन्ती । कदा पुनः संवेष्टयति । यदा मध्या मध्ये कर्तोः कर्मणां क्रियमाणानां लौकिकवैदिकानां विततमे- तद्रश्मिजालं शक्म स्वात्मप्रसवादपत्यभूतं न्यधात् नीचैर्धत्ते लोकानां प्रकाशनाय । अथवा शक्मेति

अत्रोपमाशब्दं बिनापि सामर्थ्यादुपमार्थः

कर्मनाम स्यात् [ निघ० २ । १ । ९ ] । यदा स्वं प्रकाशं पुनः कर्म निधत्ते निदधाति उदेति धीरो धीमानादित्यस्तदाहन्यभ्युपस्थिते पुनः संवे-ष्टयति रात्रिस्तम इति । अस्तमयं प्रति पुनर्वास इव तनोतीति । एवमेत-स्मिन्नपि मन्त्रे सामर्थ्यादसत्युपमाशब्दे वाससा तम उपमीयते । यथेह तथा पूर्वस्मिन्नपि निगमेऽपीत्येवमेके मन्यन्ते । अपरे पुनः 'अपि वोपमार्थे स्यात्' इत्यत्रैवं वर्णयन्ति । रात्रीव वासस्तनुत इत्यत्र वासःशब्दोऽहःशब्दपर्याय-वाची । तस्योक्ता व्युत्पत्तिः वेसरमहरिति [ निरु० ४ । ७ ] । सा रात्रि-र्वासस्तनुते । अहस्तनुत इत्यर्थः । रात्रिप्रान्ते हि शुक्लमहर्लक्ष्यते तेन ज्ञायते रात्र्यैवेदं[3] ततमिति । एवमुपमार्थत्वमेके मन्यन्ते । यदा चायमर्थस्तदा 'पुनः समव्यद्वितंतं वयन्ती' इत्यत्र पुनः सम-

अपि वोपमार्थे स्यादित्यादेरन्योऽर्थः

वेष्टयदहो रात्रिर्विततमिव वासो वयन्ती । कदा । यदा मध्ये कर्मणां न्यँधात्[4] निदधात्यस्तं गच्छन्नादित्यः स्वमण्डले शक्म रश्मिजालम् । यदा च उद-स्थात् उत्तिष्ठति स्वरश्मीनुपसंहृत्य व्यँदर्धः[5] व्यँधात्[6] विदधाति ऋतून् अहो-

१ ग. ज. वयन्ती । गृत्स;° घ. ट. वयन्ती० सवित°. २ ग. ज. °सत्यप्यु-पमा°. ३ क. ख. घ. झ. ट. ठ. ड. रात्र्यैवेदं.° ४ ग. ज. 'नि' नास्ति; च. निअधात्. ५ ग. ज. घ. झ. ट. ठ. ड. 'व्यदर्धः' नास्ति. ६ ग. व्यदाधात्; ज. व्यवद्धात्.

रात्रलक्षणान् । यदैवमेत्र सविता देवोऽलमतिः पर्याप्तमतिः आगात् आगच्छति तदा रात्रिस्तनुते वासोऽहर्लक्षणं पुनः संवेष्टयतीत्येवं मन्यन्ते । यदत्रार्थाविरोधि तत्प्रतिपत्तव्यम् । 'मन्दू' [ निघ० ४ । १ । १३ ] इत्यनवगतम् । 'मदिष्णू मन्दुना' इति वा शब्दसमाधी ॥ ११ ॥

५

**इन्द्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा । मन्दू समानवर्चसा [ ऋ० सं० १ । ६ । ७ ] ॥ इन्द्रेण हि संदृश्यसे संगच्छमानोऽबिभ्युषा गणेन मन्दू मदिष्णू युवां स्थोऽपि वा मन्दुना तेनेति स्यात्समानवर्चसेत्येतेन व्याख्यातम् ॥ १२ ॥**

१०

इन्द्रेण सं हीति निगमः । मधुच्छन्दस इयमार्षम् । महाव्रते महदुक्थे तृचाशीतिषु शस्यते । सात्रिकेषु चाहःसु स्तोमातिवृद्धौ प्रातःसवने ब्राह्मणाच्छंसिनः शस्त्रे । इन्द्र उच्यते । हे भगवन्निन्द्र त्वम् इन्द्रेण ईश्वरेण दीप्तेन वा मरुद्गणेन नित्यमेव संगच्छमानः संदृश्यसे अबिभ्युषा अभयवता । 'गणेन'
१५ इत्यध्याहारः । तौ च युवां मरुद्गणस्त्वं चैकत्र संगतौ मदिष्णू हर्षशीलौ । नित्यप्रमुदितावित्यर्थः । समानवर्चसौ च । समानदीप्ती इत्यर्थः । एवं 'मन्दू समानवर्चसा' इत्येतेन द्विवचनेन मरुद्गणेन्द्रविषयेण निगमो व्याख्यातः । 'अपि वा' एवमन्यथा 'स्यात्' ।

मन्दूशब्दस्यान्वयोऽर्थश्च

२० मन्दू इत्यस्य तृतीयैकवचनत्वेन विपरिणामः । एवं च सति मरुद्गणविशेषणमेतद्भवति । कथम् । मन्दुना मरुद्गणेन हे इन्द्र संदृश्यसे संगच्छमानः । 'समानवर्चसेति' एतत्पदं मन्दुनेति 'एतेन' पदेन 'व्याख्यातम्' । यथैव हि मन्दू इत्येतद् द्विवचनमेकवचनं वैवमेतदपि । समानवर्चसाविन्द्रमरुद्गणाविति द्विवचनमथवा मन्दुना समानवर्चसा च मरुद्गणेनेत्येवं
२५ तृतीयैकवचनम् । अपि वैवं मरुद्गण उच्यते । त्वमिहेन्द्रेण संगच्छमानो

---

१ च. यदर्थ्या॰ ञा. २ क. ख. ३ [ ११ ]; ग. १५ (११); च. १५; घ. ट. अङ्को नास्ति; ठ. ड. °माधी इति निरुक्तटीकायां चतुर्थाध्याये एकादशः खण्डः. ३ क. ख. ४ (१२); द ४. ४ ठ. ड. हि दृक्षस इति. ५ च. चं. ६ च. °अपि चैव'. ७ च. °श्यते.

९.४

नित्यमेव संदृश्यस इति । समानमन्यत् । 'ईर्मान्तासः' [निघ० ४ । १।१४] इत्यनवगतम् । 'समीरितान्ताः पृथ्वन्ता वा' इति यथासंभवं शब्दसमाधी ॥ १२ ॥

---

ईर्मान्तासः सिलिकमध्यमासः सं शूरणासो दिव्यासो अत्याः । हंसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः [ऋ०सं० १।१६३।१० ] ॥ ईर्मान्ताः समीरितान्ताः सुसमीरितान्ताः पृथ्वन्ता वा सिलिकमध्यमाः संसृतमध्यमाः शीर्षमध्यमा वापि वा शिर आदित्यो भवति यदनुशेते सर्वाणि भूतानि मध्ये चैषां तिष्ठतीदमपीतरच्छिर एतस्मादेव समाश्रितान्येतदिन्द्रियाणि भवन्ति । सं शूरणासः दिव्यासो अत्याः । शूरः शवतेर्गतिकर्मणो दिव्या दिविजा अत्या अतनाः । हंसा इव श्रेणिशो यतन्ते । हंसा हन्तेर्घ्नन्त्यध्वानं श्रेणिश इति श्रेणिः श्रयतेः समाश्रिता भवन्ति यदाक्षिषुर्यदापन् दिव्यमज्ममजनिमाजिमश्वा अस्त्यादित्यस्तुतिरश्वस्यादित्यादश्वो निस्तष्ट इति । सूरादश्वं वसवो निरतष्टेत्यपि निगमो भवति ॥ १३ ॥

---

ईर्मान्तास इति निगमः । दीर्घतमस आर्षम् । 'यमेन दत्तम्' [ऋ०सं० १।१६३।२ ] इतीयं च । द्वे अप्येते अश्वस्तोमीये सूक्ते । तेन चाश्वः स्तूयतेऽश्वमेधे [आश्व०श्रौ० १०।८] । आदित्यस्य रथे येऽश्वा युक्तास्त उच्यन्त ईर्मान्तासः । तेषां सतानां येऽश्वाश्चत्वारस्ते समीरितान्ताः विक्षिप्तान्ताः प्रसृतान्ताः । प्रविरला इत्यर्थः । पृथ्वन्ता वा । तेषामेवाश्वानां पृथवोऽन्ताः । पृथूरस्काः । पृथुजवना वेत्यर्थः । सिलिकमध्यमाः संसृतमध्यमाः । संश्लिष्टमध्यमा इत्यर्थः । तेषां हि सतानां ये मध्यमास्त्रय इतरेतरमुत्पीड्य संश्लेषेणावस्थिताः । अथवा पृथुजघनोरस्कानां सतां मध्यमाः शरीरप्रदेशाः सतानामपि संश्लिष्टाः संलग्नास्तनवः । निरुदरास्तेऽश्वा

ईर्मान्तास इत्यस्योदाहरणम्

---

१ क. ख. ५ ( १२ ); ग. १६ । १२; च. १६; इतरेष्वङ्को नास्ति. २ छ. त. द. 'सुसमीरितान्ताः' नास्ति. ३ छ. त. द. 'दिव्यासो अत्याः' नास्ति. ४ क. ख. ५ (१३); द. ५.५ ठ. ड. 'निगमः' नास्ति. ६ ग. ज. विसृताः; च. विसृताः° म.

इत्यर्थः। तथापि हि[1] स्तुतिरुपपद्यत एव। शीर्षमध्यमा वा सिलिकमध्यमा[2] वा[3]। एवमपि हि शब्दसारूप्यमस्ति[4]। यो हि तेषां सतानां मध्यमः स शिरोभूतः। प्रधान इत्यर्थः। 'अपि वा[5]' एवमन्यथा स्यात्। 'शिर आदित्यः' एव 'भवति' सर्वभूतप्राधान्यात्। 'मूर्धा राजेति वा अहमेतमुपासे' इति ह

५ विज्ञायते [ बृह० उप० २।१।२ ]। यस्माच्चासौ 'अनु'प्रविश्य प्राणभावेन सर्वभूतानि 'शेते' आस्ते तस्मात्सर्वभूताश्रयणात् शिर आदित्यः। स 'च' एतेषामश्वानां 'मध्ये तिष्ठति' इति शीर्षमध्यमाः। त एते शीर्षमध्यमा इत्युक्ताः सन्तः सिलिकमध्यमा इत्युच्यन्ते। 'इदमपीतरच्छिर एतस्मादेव' इति प्रासङ्गिकम्। 'समाश्रितानि' हि 'एतत्' उत्तमाङ्गम् 'इन्द्रि-

१० याणि' चक्षुरादीनि 'भवन्ति' इति शिरउपपत्तिः। संशूरणासः। संगताः शूरेण[6] भगवतादित्येन संशूरणाः। 'शूरः शवतेर्गतिकर्मणः'। स हि परानभिमुखो गच्छत्येव न पर्यावर्तते। दिव्यासः। ते हि दिव्याः दिवि जाताः। अत्याः अतनाः। ते ह्यतन्त्येव मुहूर्तमपि नावतिष्ठन्ते। य एवंलक्षणा अश्वास्ते किं कुर्वन्तीति। उच्यते। हंसा इव श्रेणिशो यतन्ते। हंसा

१५ इव श्रेणीकृताः पङ्क्तीकृता यतन्ते गच्छन्ति। 'हंसा हन्तेः'। ते हि 'घ्नन्त्यध्वानम्'। कदा पुनरेवं यतन्ते। यदाक्षिषुः। यदा[7] यस्मिन् काले आक्षिषुः आपन् आप्नुवन्ति। किम्। दिव्यमज्मम्। अजनिम्। अज्यतेऽस्यां गम्यत इति अजनिर्वाहिका। स्वर्गपथ इत्यर्थः। यदा त आप्नुवन्ति उदयादारभ्य यावदस्तमिति तदैवं यतन्ते। के पुनस्त इति।

२० उच्यते। अश्वाः। एवमेतानि 'ईर्मान्तास' इत्येवमादीन्यश्वविशेषणान्यश्वशब्देन समानविभक्त्यन्तत्वात्। 'आत्मैवैषां रथो भवत्यात्माश्वा[8]' इत्येवं प्रक्रमेण सूर्यदैवत एष मन्त्रः[9]। स पुनरयमश्वस्तुतौ विनियुक्तस्तदसमञ्जसमिति मन्यमानो भाष्यकारः प्रतिसमाधित्सुराह। 'अस्त्यादित्यस्तुति-

१ च. हि. २ ग. ज. शिलिक°; च. सिलिक° संलग्न. ३ च. वा. ४ क. ख. घ. झ. ट. ठ. ड. शब्दे सा°; च. शब्दे सा° द्द. ६ च. °अपि चैव°. ५ ग. ज. शूरणेन शूरेण. ७ क. ख. घ. झ. ट. ठ. ड. यत् यदा. ८ ग. ज. त्माश्व इ°; च. °त्माश्वा इ° श्व. ९ क. ख. घ. झ. ट. ठ. ड. मन्त्र उक्तः; चं. मन्त्रः। स° उक्तः.

अत्राश्व आदित्य इति स्तूयते

रश्वस्य ' इति । अश्वोऽपि ह्यादित्यात्मना स्तूयत इत्यर्थः । आह । कयोपपत्त्येति । उच्यते । ' आदित्यादश्वो निस्तष्ट इति ' अनयोपपत्त्या सूर्यात्मनाश्वः स्तूयते । आह । कुत एतत्सूरादश्वो निस्तष्ट इति । उच्यते । 'सूरादश्वं वसवो निरतष्ट ' इत्यपि निगमो भवति ।

अस्यामृच्यादित्याद्श्वो निस्तष्ट इत्युच्यते

यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यातिष्ठत् । गन्धर्वो अस्य रशनामगृभ्णात्सूरादश्वं वसवो निरतष्ट [ ऋ० सं० १ । १६३ । २ ] ॥ यमेन एनम् अस्माकं दत्तम् अश्वं त्रितः त्रिस्थानो वायुर्युनक्ति यत्रायं योक्तव्यस्तत्र । वायुना युक्तमेनमिन्द्र एणम् एनमश्वं प्रथमः सर्वदेवानां मुख्योऽध्यतिष्ठत् । कोऽन्य एवमास्थातुं शक्नुयादित्यभिप्रायः । वायुना युक्तस्येन्द्रेणाधिष्ठितस्यास्य गन्धर्वराजः रशनामगृह्णात् नियमनरज्जुं गृह्णाति । कुतः पुनरयमश्व इति । उच्यते । सूरात् सूर्यादेतमेवंलक्षणमश्वं वसवो निरतष्ट निःकृष्टवन्तः । एवमेतस्मिन्मन्त्रे सूर्यप्रभवोऽश्व इति स्तूयते । कारणाच्च कार्यमनन्यदित्युपपद्यते सौर्येण मन्त्रेणाश्वस्य स्तुतिरिति ।

' कायमानः ' [ निघ० ४ । १ । १५ ] इत्यनवगतम् । ' चायमानः ' इत्यवगमः ' कामयमान इति वा ' ॥ १३ ॥

---

**कायमानो वना त्वं यन्मातॄरजगन्नपः । न तत्ते अग्ने प्रमृषे निवर्तनं यद्दूरे सन्निहाभवः [ ऋ० सं० ३ । ९ । २ ]॥कायमा-**

---

१ च. निस्तष्टत्यन° ष्ट इ. २ ग. च. ज. °वति । १७ । यमे°. ३ ग. च. ज. घ. ट. °मायुनगिति । यमे°. ४ व. झ. ट. ड. एतम्. ५ ग. ज. °स्थातुमाप्नुयादि°; च. ट. °स्थातुं शक्नु° आप्नु; ठ. ड. °स्थातुं शक्नुमाप्नुयादि°. ६ क. ख. घ. झ. ट. ठ. ड. गन्धर्वः गन्धर्वराजः. ७ ठ. ड. °गृभ्णात्. ८ क. ख. घ. झ. ट. ठ. ड. नियमेन रज्जुं; च. ज. नियमन° मे. ९ क. ख. घ. झ. ट. निस्तष्टवन्तः; ठ. ड. °तष्ट । स्तुवन्त । एव°; च. निःकृष्ट° निस्त. १० ग. ज. ' मन्त्रेण ' नास्ति; च. सौर्येणाश्व' ण मन्त्रेणा. ११ क. ख. ५ [ १३ ] ग. १८ । १३; च. ज. १८; व. ट. ठ. ड. अङ्को नास्ति.

नश्चायमानः कामयमान इति वा वनानि त्वं यन्मातॄरपोऽगम उपशाम्यन् न तत्ते अग्ने प्रमृष्यते निवर्तनं दूरे यत्सन्निह भवसि जायमानः। लोधं नयन्ति पशु मन्यमानाः। लुब्धमृषिं नयन्ति पशुं मन्यमानाः। शीरं पावकशोचिषम्। पावकदीप्तिम्। अनुशायिनमिति वाशिनमिति वा ॥ १४ ॥

---

कायमानो वना त्वमिति निगमः। विश्वामित्रस्येयमार्षम्। बृहती। प्रातरनुवाकाश्विनयोः शस्यते [ आश्व० श्रौ० ४। १३ ]। हे भगवन्नग्ने कायमानः चायमानः। पश्यन्नित्यर्थः। अथवा कामयमानः। किम्। स्वां योनिम्। कतमाम्। वना वनानि दारूणि। दारुभ्योऽग्निर्जायते च। तदेतत्प्रसिद्धमेव। उक्तं च। 'यदा चाग्निरनुगच्छति अरणी वाव स गच्छति' इति। मातॄर्वा सर्वभूतनिर्मात्रीरपः। सापि योनिरेवाग्नेः। 'आपो वा अग्नेर्योनिः' [ मैत्रा० सं० ३। २। २॥ ३। २। ३॥ ३। ४। १० ] इति ह विज्ञायते। अनयोर्योन्योरन्यतरां योनिं यत् यदा अजगन् अगमस्त्वम्। कदा पुनरगमः। उपशाम्यन् इत्यध्याहृतं भाष्यकारेण। अनुगच्छन्नित्यर्थः। तस्य तवैवमनुगच्छतः किमिति। उच्यते। न तत्ते अग्ने प्रमृषे निवर्तनं न प्रमृष्यते न प्रमृज्यते निवर्तनं वर्त्म। मार्गो न लुप्यत इत्यर्थः। कथं गम्यते न प्रमृज्यते मार्ग इति। दूरेऽपि सन् अदृश्योऽपि भूत्वा यस्मादिह पुनर्भवस्येव। कदा। जायमानो यत् यदाद्भ्यो जायसे वैद्युतात्मना यदा वारणिभ्यां जायसे मध्यमानस्तदा।

(कायमान इत्यस्योदाहरणम्)

न सायकस्य चिकिते जनासो लोधं नयन्ति पशु मन्यमानाः। नावाजिनं वाजिना हासयन्ति न गर्दभं पुरो अश्वान्नयन्ति [ ऋ० सं० ३। ५३। २३ ]॥ लोधम् [ निघ० ४। १। १६ ] इत्यनव-

---

१ क. ख. ६ ( १४ ); द. ६. २ ठ. ड. कायमान इति। विश्वा°. ३ क. ख. घ. झ. ठ. ठ. ड. 'च' नास्ति; च. चैं. ४ ग. च. ज. वाग्नि°. ५ च. सँ. ६ ग. ज. 'यत्' नास्ति. ७ ग. ज. 'न साय००नयन्ति' नास्ति. ८ घ. ट. °किते ज० अश्वान्नयन्ति.

गतम् । 'लुब्धम्' इत्यवगमः । यस्मिन्निगम एष शब्दः सा वसिष्ठद्वेषिणी ऋक् । अहं च कापिष्ठलो वासिष्ठः । अतस्तां न निर्ब्रवीमीति ।

'शीरम्' [ निघ० ४ । १ । १७ ] इत्यनवगतम् । अग्निरभिधेयः । 'अनुशायिनमिति वा' इति । अनुप्रविश्य सर्वभूतानि शेत इत्यनुशायी तमनुशायिनम् । अश्नोति व्याप्नोति वा सर्वभूतानीति 'आशिनम्' । शीरं पावकशोचिषं ज्येष्ठो यो दमेष्वा । दीदाय दीर्घश्रुत्तमः [ ऋ० सं० ८ । १०२ । ११ ] ॥ इति निगमः ।

शीरमित्यस्य

भार्गवस्य प्रयोगस्येयमार्षम् । प्रातरनुवाकाश्विनयोः शस्यते [ आश्व० श्रौ० ४ । १३ ] । शीरम् अनुशायिनं व्यापिनं वा अग्निमहं स्तौमि । पावकशोचिषं पावयित्री यस्य शोचिर्दीप्तिस्तं पावकशोचिषम् । किंच । ज्येष्ठः श्रेष्ठो यः प्रधानो यो दमेषु यज्ञगृहेषु आदीदाय आदीप्यते परिचर्यमाणोऽग्निहोत्रिभिः । किंच । दीर्घश्रुत्तमो यः । दीर्घश्रोतृभ्यो यो दीर्घश्रुत्तमस्तमर्हमग्निं स्तौमि ।

'विद्रधे' [ १८ ] 'द्रुपदे' [ १९ ] इत्येते पदे एकनिगमे । द्वे अप्यनवगते । पक्षेण चानेकार्थे । 'विद्रधे विद्धे द्रुपदे द्रुममये पदे' इत्यवगमः । दारुपादौ वा एताभ्यां शब्दाभ्यां विशेष्येते । कन्ययोर्वा पादपीठप्रवचने सप्तम्येकवचनान्ते एते । द्वयोरपि पदयोरेक एव निगमः ॥ १४ ॥

---

कनीनकेव विद्रधे नवे द्रुपदे अर्भके । बभ्रू यामेषु शोभेते [ ऋ० सं० ४ । ३२ । २३ ] ॥ कनीनके कन्यके

---

१ ग. च. ज. °शिनम् । ११ । शीरं. २ घ. ट. °चिषं ज्ये० श्रुत्तमः. ३ ग. ज. °ष्वा० श्रुत्तमः. ४ ठ. ड. 'इति निगमः' नास्ति. ५ ग. ज. प्रउगस्ये°; च. प्रउगस्ये° यो. ६ क. ख. घ. झ. ट. ठ. ड. 'यः' नास्ति. ७ ग. ज. °श्रोतृभ्यो°. ८ क. ख. घ. झ. ट. ठ. ड. 'अहं' नास्ति. ९ ग. विद्रधे द्रुममये; च. विद्रूद्धयोर्निगमतः द्विकयोः द्रुप° दध्रे विद्धे; ज. विद्द्धे द्रुममये°. १० घ. झ. ट. ठ. ड. दारुपादूद्वौ; च. दारुपारूद्वौ. ११ क. ख. ६ (१४); ग. २० (१४); च. ३०; ज. २०; घ. ट. अङ्को नास्ति; ठ. ड. १४ इति निरुक्तटीकायां चतुर्थाध्याये चतुर्दशः खण्डः ।

कन्या कमनीया भवति केयं नेतव्येति वा कमनेनानीयत इति वा कनतेर्वा स्यात्कान्तिकर्मणः कन्ययोरधिष्ठानप्रवचनानि सप्तम्या एकवचनानीति शाकपूणिर्विद्धयोर्दारुपाद्वोर्दारु द्दणातेर्वा द्रूणातेर्वा तस्मादेव द्रु नवे नवजाते अर्भके अवृद्धे ते

५ यथा तदधिष्ठानेषु शोभेते एवं बभ्रू यामेषु शोभेते वभ्रोरश्वयोः संस्तव इदं च मेऽदादिदं च मेऽदादित्यृषिः प्रसंख्यायाह। सुवास्त्वा अधि तुग्वनि। सुवास्तुर्नदी तुग्व तीर्थं भवति तूर्णमेतदायन्ति। कुविन्नंसन्ते मरुतः पुनर्नः। पुनर्नो नमन्ते मरुतो नसन्त इत्युपरिष्टाद् व्याख्यास्यामः। ये ते मदा आहनसो विहायसस्तेभिरिन्द्रं

१० चोदय दातवे मघम्। ये ते मदा आहननवन्तो वचनवन्तस्तैरिन्द्रं चोदय दानाय मघम् ॥ १५ ॥

---

कनीनकेव विद्रधे इति। वामदेवस्यार्षम्। 'कन्या कमनीया भवति'। सर्व एव हि तां प्रार्थयन्त एव। अथवा 'केयं नेतव्येति वा' दानाये-

१५ त्येवं तां प्रति पिता चिन्तयतीति कन्या। 'कमनेर्नानीयत इति वा'। 'कनतेर्वा स्यात्कान्तिकर्मणः'। 'कनति कानिषत्' इति कान्तिकर्मसु पठितम् [ निघ० २। ६ ]। इवेत्युपमायाम्। विद्रधे नवे द्रुपदे अर्भके इत्येतानि चत्वारि पदानि 'कन्ययोरधिष्ठानप्रवचनानि सप्तम्या एकवचनानीति' एवं 'शाकपूणिः' आचार्यो मन्यते। एकस्मिन्दारुमये पादपीठे यस्मिन्नधिरूढे कन्यके शालभञ्जिके वा। तदेतैश्चतुर्भिः पादैरुच्यत इति शाकपूणिराचार्यो

(विद्रधे इत्यादिपदानि सप्तम्येकवचनानीति शाकपूणिः)

१ छ. त. द. 'कमनेनानीयत इति वा' नास्ति. २ छ. °पूणिर्व्यृद्धयोर्दारुपाद्वोर्दारु°; त. द. पूणिर्व्यृद्धयो°. ३ छ बभ्रूयो रश्मयोः सं°; त. बभ्रूरश्मयोः सं°;

२५ द. बभ्रोरश्मयोः सं°. ४ छ. त. द. नवन्ते. ५ क. ख. छ. त. द. नसत°. ६ क. ख. ७ ( १५ ); द. ७. व. ट. विद्रधे० शोभेते इति. ८ च. 'कमनेनानीयत इति वा' प्रान्ते लिख्यते. ९ च. सप्तम्येकव°. १० क. ख. ग. ज. घ. झ. ट. ठ. ड. यस्मिन् समधिरूढेषु ( ग. ज. यस्मिन्नाधिरूढेषु यस्मिन् समधि° ) पादुकाख्येष्वधिष्ठानेष्वधिरूढे शोभेते यथा एवं बभ्रू बभ्रुवर्णौ अश्वे ( घ. झ. ट. ठ. ड. अश्व ) यामेषु आजिस्थानेषु ( ग. ज. 'आजिस्थानेषु' नास्ति ) यमनस्थानेषु कन्य°, ११ च. °रूढे ˇ कन्य° 'षु पादुका००यमनस्थानेषु' अयं १० पाठश्चिन्हनाहिर्गत प्रान्ते लिख्यते.

मन्यते । यास्कस्तु 'विद्ध्योः' विकुपिताधोभाग[1]-'दारुपाद्वोः'[2] अधिरूढयोः कन्ययोरभिधानपदान्यभिधायकान्येतानि द्विवचनानीति मन्यते । ताभ्यां ह्यश्विन्योः खुराकारत्वेन सारूप्यमस्तीत्येवमुपमानम्[3] । दारुपाद्वोरित्येतस्मिन् व्याख्यानप्रसक्ते पदे विग्रहप्रसक्तो दारुशब्दो निरुच्यते । 'दारु दृणातेर्वा' विदारणार्थस्य [धा० ९।२१] द्रूणातेर्वा हिंसार्थस्य । तस्मादेव धातुद्वयादन्यतरस्य 'द्रु' इत्येतदभिधानं भवति । द्रुपदे इत्येतदपेक्ष्य 'एतस्मादेव द्रु' इत्येतदुक्तम् । द्रुम इत्यर्थः । 'नवे नवजाते' । 'अर्भके अवृद्धे' । अल्पके इत्यर्थः । ते कन्यके एवंप्रकारेषु तदधिष्ठानेषु तेषु पादुकाख्येष्वधिष्ठानेष्वधिरूढे शोभेते यथा एवं बभ्रू बभ्रुवर्णे अश्वे यामेषु आजिस्थानेषु यमनस्थानेषु वा बन्धनस्थानेषु[4] मन्दुराख्येषु वर्तमाने शोभेते ते[5] । एवमेव 'बभ्रोरश्वयोः संस्तवः' ।

*कन्ययोर्विशेषणानीति यास्कः*

'तुग्वनि' [२०] इत्यनवगतम् । 'तूर्णमेतदायन्ति' इति शब्दसमाधिः । 'तीर्थम्' अभिधेयम् । 'सुवास्त्वा अधि तुग्वनि' [ऋ० सं० ८ । १९ । ३७] इति निगमः । अस्य ऋक्पादस्य ऋक्छेषापेक्षो[6] निर्णयः । सर्वस्या अपि च तस्या ऋचो यस्यामयं पादस्तस्या याऽन्याधस्त्या ऋक्तदपेक्षो निर्णयो यतोऽतस्तस्या ऋच आधस्त्यायाः संक्षिप्यार्थमाह भाष्यकारः 'इदं च मेऽदादिदं च मेऽदादित्यृषिः प्रसंख्यायाह' इति । इदं च द्रव्यजातं मम दत्तवानसौ राजेत्येवं प्रसंख्याय परिसंख्यानं कृत्वा ऋषिराह । उक्तवानित्यर्थः । कतमा पुनरसावाधस्त्या ऋग्यस्यां[7] अयमर्थसंक्षेप इति । उच्यते[8] ।

अदा॑न्मे पौरुकुत्स्यः प॑ञ्चाशतं॑ त्रसद॑स्युर्वधूना॑म् । मंहि॑ष्ठो अर्यः सत्प॑तिः [ऋ० सं० ८ । १९ । ३६] ॥ सोभरेः काण्वस्येयमार्षं परा च । दानप्रशंसा । योऽदात् मे मम पौरुकुत्स्यः बहुशत्रुकर्तितुः पुत्रः त्रसदस्युः दस्युत्रासनः । किमदात् । पञ्चाशतं वधूनां

*कतमा साधस्त्या ऋग्यस्या इदं च मेऽदादिति संक्षिप्तार्थः*

१ क. ख. घ. झ. ट. ठ. ड. °भागयोर्दारु°. २ ग. ज. पादाधिरूढ°; च. पाद्विधिरूढ° द्वोर. ३ क. ख. घ. ट. ठ. ड. °मुपादानम्; च. °मुपमानं° पादा. ४ ग. च. ज. बन्धस्था°. ५ च. °भेते ते एव°. ६ ठ. ड. ऋक्शेषा° ७ घ. झ. ऋक् ययायमर्थः संक्षे°; च. ऋक् ययाँ (ऋचा) यमर्थ(र्थः)संक्षेपं (पत) इति; ट. ऋक् ऋचा ययायमर्थः संक्षे°. ८ ग. च. ज. °च्यते। २१ । अदा°.

पञ्चाशतं वोढव्यानां कन्यानाम् । मंहिष्ठः पूज्यतमः अर्थः ईश्वरः सत्पतिश्च सतां पालयिता च । एवंलक्षणः पौरुकुत्स्यस्त्रसदस्युर्मम दत्तवान् पञ्चाशतं वधूनाम् । आह । किमेतदेवादात् । नेत्युच्यते । इदं च यदुक्तमुत्तरं च यद्वक्ष्यते । कतरा पुनरसावुत्तरा ऋगिति । उच्यते[1] ।

५ 'उत मे प्रयियोर्वयियोः सुवास्त्वा अधि तुग्वनि । तिसृणां सप्ततीनां श्यावः प्रणेता भुवद्वसुर्दियानां पतिः' [ऋ० सं० ८ । १९ । ३७] ॥

अप्येतद्यदुक्तमपि च यदेतद्वक्ष्यमाणमिति 'उत-'शब्द एवमुभयं संभावयति । मे मम प्रयियोः । प्रगम्यते येन तत्प्रयियु धनमश्वादि । तस्य प्रयियोर्धनस्य बह्वदात् ताभिः कन्याभिः सह । वयियोः । ऊयत इति

१० वयियु वस्त्रादि तस्य च[2] बह्वदात् । तिसृणां सप्ततीनां गवां श्यावः श्यामवर्णः वृषः श्यामवर्णानां प्रणेता प्रकर्षेण नेता अग्रतोगामी भुवद्वसुः भावयिता वसूनां प्रशस्तः पूजितलक्षणः दियानां दानार्हाणां देया यास्तासां पतिः । ताश्च गा एतत्संख्यायुक्ता एतद्गुणयुक्ताश्च मह्यमदात् । क्व पुनरसावदात् । सुवास्त्वा सुष्ठु निवासाया नद्या अधि तुग्वनि तीर्थेऽधि एतददान्मह्यम् ।

१५ सुवास्तुतुग्वशब्दयोरर्थः

'सुवास्तुर्नदी तुग्व तीर्थं भवति' । 'तूर्णं' हि 'एतत्' अवगाहनार्थम् 'आयन्ति' । अत्र दानसंबन्धात्सुवास्तुशब्दो नद्यभिधाने । प्रसिद्धं हि नद्यां दानम् । नदीसंबन्धाच्च तुग्वशब्दोऽपि तीर्थाभिधायक इत्युपपत्तिः । निगमार्थप्रकाशनायैवं सूक्तगतोऽप्यन्वीक्षि-

२० तव्य एवार्थ इत्येतत्प्रदर्शितमाचार्येण ।

'नंसन्ते' [ २३ ] इत्यनवगतम् । 'नमन्ते' इत्यवगमः । 'कुविन्नंसन्ते' इति निगमः[3] ।

ताँ[4] आ रुद्रस्य मीळ्हुषो[5] विवासे कुविन्नंसन्ते मरुतः पुनर्नः । यत्स्वर्ता जिहीळिरे[6] यदाविरव तदेन ईमहे तुराणाम् । [ ऋ० सं० ७ ।

२५ ५८ । ५ ] ॥ वसिष्ठस्येयमार्षम् । तानहं मीळ्हुषो मरुतो वर्षस्य सेक्तॄन् धनवतो बलवतो वा आविवासे आभिमुख्येन स्थित्वा परि-

---

१ ग. च. ज. °च्यते । २२ । उत° . २ च. चँ. ३ ग. च. ज. °गमः । २३ । ताँ° . ४ क. ख. ग. च. ज. घ. मीत्हुषो. ५ ग. ज. विवासे इति । वासि°; घ. ट. विवासे कुवि० ईमहे तुराणाम्. ६ क. ख. च. जिहीलिरे. ७ ग. च. ज.

३० मीढ्षो; घ. झ. मील्हुषो.

चरामि । किंलक्षणान् पुनर्मरुत आविवासे । रुद्रस्य इन्द्रस्य स्वभूतान् आप्तत्वात् । अथवा 'मीळ्हुषः' इति रुद्रविषयं षष्ठ्येकवचनान्तं स्यात् । मीळ्हुषो रुद्रस्य स्वभूतानिति । कस्मात्पुनस्तानहं परिचरामि । यस्मात्ते मरुतः कुवित् बहु नंसन्ते नमन्ते । पुनः वर्षाद्युपकारेणास्मान्प्रति नमन्ते प्रह्वीभवन्ति । किंच । यत्सस्वर्ता यच्छरीरगतम् एनः जिहीळिरे लज्जयन्ति यच्च आविः प्रकाशम् । तदेवंप्रकारमुभयलक्षणमप्येनोऽस्मान् जिहीळिरे लज्जयन्ति । तदेषां मरुतां तुराणां त्वरमाणानां प्रसादेनोभयलक्षणमवयजेमहि निर्णुदेमहीत्येतदीमहे याचामहेऽनेन परिचारेणाराध्यैतान् मरुत इति । 'नसन्त' इत्येतदुपरिष्टाद् द्वादशाध्याये व्याख्यास्यामः 'अभि प्रवन्त समनेव योषाः' इति व्याख्याने 'नसतिराप्नोतिकर्मा वा नवतिकर्मा वा' [ निरु० ७ । १७ ] ।

नसन्ते इत्यस्योदाहरणम्

'आहनसः' ( २३ ) इत्यनवगतम् । 'आहननवन्तः' इत्यवगमः । 'ये ते मदा आहनसः' इति निर्गमः ।

परि सोम प्र धन्वा स्वस्तये नृभिः पुनानो अभि वासयाशिरम् । ये ते मदा आहनसो विहायसस्तेभिरिन्द्रं चोदय दातवे मघम् [ ऋ० सं० ९ । ७५ । ५ ] इति ॥ पावमानी सौमी । कवेर्भार्गवस्येयमार्षम् । जगती । हे भगवन् सोम परिप्रधन्व परिप्रक्षर एतस्माद्दशापवित्रात् स्वस्तये स्वस्त्ययनायास्माकं नृभिरेतैर्ऋत्विग्भिः पुनानः पूयमानः । किंच । अभिवासय अभिप्रच्छादय अभिभावय आशिरं तृतीयसवने । किंच । ये ते मदा आहनसः । ये ते मदास्तव आहननवन्तः पटवो वचनवत्त्वेन संमोहयितारः

आहनस इत्यस्य

५ १० १५ २०

१ क. ख. घ. झ. ट. ठ. ड. आप्तान्वा । अथ°; च. आप्तान्वा° सत्वात्. २ ग. च. ज. मीढुषो; घ. मील्हुषो. ३ क. ख. घ झ. जिहीळिरे; ग. च. ज. जिहीडिरे. ४ ग. लज्जयति; च. लज्जयते° न्ति; ज लज्जयन्त. ५ च. सत्वरमा°. ६ ग. च. ज. °गमः । २४ । परि°. ७ ग. ज. स्वस्तये इति पाव°; घ. ट. स्वस्तये नृ° दातवे मघम्. ८ घ. भार्गवस्य कवेरार्षम्; ट. भार्गवस्य कवेरार्षम्° कवेर्भार्गवस्या. ९ घ. झ. ट. परिधन्व; च. परि॰धन्व° प्र. १० ग. परयवश्चनवत्वेन; च. पटवः वचन°; ज. परत्ववश्चनवत्वेन; घ. पटवः वश्चनव°; ट. पटवः वश्चनवत्त्वेन° पर; ठ. ड. पटुवचनेन संमो°.

३०

विहायसो महान्तस्तैरिन्द्रं चोदय प्रेरय दातवे दानाय मघं धनम् । यथास्माकं तैर्मदैरनभिहतचेताः सन् दद्यान्मघं धनमित्यर्थः ।

'अन्नसत्' ( २४ ) इत्यनवगतम् । अन्नसादिनीति वान्नसानिनीति वा' शब्दसमाधी ॥ १५ ॥

५

---

उपो अदर्शि शुन्ध्युवो न वक्षो नोधा इवाविरकृत प्रियाणि । अद्मसन्न ससतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणाम् ॥ ( ऋ० सं० १ । १२४ । ४ ) । उपादर्शि शुन्ध्युवः शुन्ध्युरादित्यो भवति शोधनात्तस्यैव वक्षो भासोध्यूढमिदमपीतरद्वक्ष एतस्मादेवाध्यूढं काये शकुनिरपि शुन्ध्युरुच्यते शोधनादेवोदकचरो भवत्यापोऽपि शुन्ध्यव उच्यन्ते शोधनादेव नोधा ऋषिर्भवति नवनं दधाति स यथा स्तुत्या कामानाविष्कुरुत एवमुषा रूपाण्याविष्कुरुतेऽद्मसदद्मान्नं भवत्यद्मसादिनीति वान्नसानिनीति वा । ससतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणाम् । स्वपतो बोधयन्ती शाश्वतिकतमागात्पुनरागामिनीनाम् । ते वाशीमन्त इष्मिणः । ईषणिन इति वैषणिन इति वार्षणिन इति वा वाशीति वाङ्नाम वाश्यत इति सत्याः । शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम् । अभिवहनस्तुतिमभिषवणप्रवादां स्तुतिं मन्यन्त ऐन्द्री त्वेव शस्यते परितर्क्येत्युपरिष्टाद् व्याख्यास्यामः ॥१६॥

१० १५

२० इति चतुर्थाध्यायस्य द्वितीयः पादः ॥

---

१ ग. च. ज. अन्नसा°. २ घ. ट. ठ. ड. 'अन्नसानिनीति वा' नास्ति. ३ क. ख. ७ ( १५ ); ग. २५ । १५; च. ज. २५; ठ. ड. 'समाधी । इति निरुक्तटीकायां चतुर्थाध्याये पञ्चदशः खण्डः. ४ क. ख. भासाध्यूढ इद°; छ. त. द. भासाध्यूल्ह इद° [सायन. 'ध्यूळ्हमिद]. ५ छ. त. द. °ध्यूल्हं (सायन. °ध्यूळ्हं). ६ छ. °मुखा रू°. ७ छ. त. द. वाद्मसा°. ८ छ. त. द. 'स्वपतो बोधयन्ती' नास्ति. ९ छ. त. द. 'त्पुनरेयुषीणाम्'. १० छ. त. द. °माभिषव°. ११ क. ख. ८ (१६); छ. त. १६; द. ८. १२ ङ. थ. ध. 'इति पादः' नास्ति; छ. इति
२३ द्विती°; त. चतुर्थाध्याये द्वि°; द. इति नैरुक्तस्य चतु°.

उपो अदर्शि शुन्ध्युव इति । कक्षीवत आर्षम् । औपसी । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते [ आश्व० श्रौ० ४ । १४ ] । उपो अदर्शि उपश्लिष्टा दृश्यत इयमुषाः । कस्य । शुन्ध्युवः शोधयितुरादित्यस्य । आदित्यो हि यदप्यशुचिर्भवति तदपि रश्मिभिः स्पृष्ट्वा शुचीकरोति । 'सूर्यः पवित्रमुच्यते' इति वक्ष्यति [ निरु० ५। ६ ] । तमांसि वा शोधयतीति शुन्ध्युः । तस्य शुन्ध्युवः । कथं पुनरुपश्लिष्टा दृश्यते । वक्षो न वक्ष इव । यथा तस्य स्वभासः स्वं प्रकाशजालं वक्षोभूतमेतस्मिन्मण्डलेऽध्यूढमेवमियमुषा एतस्मिन्मण्डल उपश्लिष्टा दृश्यते संनिकर्षात् । प्रासङ्गिकमुच्यते शब्दसामान्यात् । 'इदमपीतरत्' पुरुषवक्षः पशुवक्षो वाङ्गम् 'एतस्मादेव' वहतेर्धातोः । इदम् 'अध्यूढम्' अधिप्रवेशितमेव 'काये' शरीरे भवति । 'शकुनिरपि' य एष मद्गुर्नामायमपि 'शुन्ध्युरुच्यते शोधनादेव'।

अह्मसदित्यस्य

य 'उदकचरो भवति' नित्यशुद्ध एवेति शुन्ध्युः । 'आपोऽपि शुन्ध्यव उच्यन्ते' । ता अपि हि शोधयन्ति । एवं तावदियमुषा आदित्यस्य वक्ष इवोपश्लिष्टा दृश्यते । किंच । इयमेवोषा नोधा इवाविरकृत प्रियाणि । 'नोधा ऋषिर्भवति' । स हि 'नवनं' स्तोत्रं देवताः प्रति 'दधाति' । स यथा स्वमुखोद्गीर्णया स्तुत्या प्रियाण्यात्मनः स्वानि कामाख्यानि प्रकाशयति आविष्कृणोति देवताः प्रति एवमियमुषाः[3] स्वात्मन[4] एवोद्गीर्णेन प्रकाशेन रूपाणि जनानामाविष्कुरुते प्रकाशीकुरुते ।

शुन्ध्युशब्दस्यार्थाः

किंच । इयमेवोषाः अद्मसन्न ससतो बोधयन्ती । 'अद्म अन्नम्' । तत्प्रतिकर्तव्यतया सीदति तद्वा सनोति संभजत इति अद्मसत् गृहाधिकारे नियुक्ता अन्नसाधिका स्त्री । सा यथा प्रातरेव क्षीराद्युपादानार्थं ससतः स्वपतो जनान् दोहकादीन् बोधयत्यन्नं साधयिष्यन्तीत्येवमुषा[3] अपि जनान् बोधयन्ती । तत्काले हि[5] ते इतिकर्तव्यतार्थे जनाः प्रतिबुध्यन्ते[6] । तेनैतयैव बोधिता भवन्ति । आह । कदा पुनरेतद्भवतीति । उच्यते । यदा शश्वत्तमागात् शाश्वति-

१ क. ख. ग. ज. इति निगमः। कक्षी°; च. इति ˇ । कक्षी° निगमः. २ च. °मधिऊढ°. ३ च. एवमुषा. ४ ब. झ. ट. ठ. ड. स्वात्म एवो°; च. स्वात्मˇ एवो° न. ५ ब. ट. हितकर्तव्य°; ठ. ड. हि तत्कर्तव्य°. ६ ग. ज. ब. झ. ट. ठ. ड. °बुध्यन्ति; च. बुध्यन्ति° न्ते.

कतमा नित्यतमा आगात् आगच्छति तदैव जनानवबोधयति। एवमुषा रूपा-ण्याविष्कुरुते। एवं च वक्ष इवोषाः श्लिष्टादित्यस्य दृश्यते । आह । कासौ शश्वत्तमा इयमुषा इति। उच्यते। पुनरेयुषीणाम् । पुनरागामिनीनामित्यर्थः। या एताः काश्चिद्गत्वा पुनरागच्छन्ति ताः पुनरेयुष्यो गावोऽन्या वा। तासां
५ पुनरेयुषीणामिति निर्धारयति। एषैव शश्वत्तमा शाश्वतिकतमा। एवमेतस्मिन् मन्त्रे सामर्थ्यादद्मसदित्यन्नसाधिका स्त्री उच्यते।

अद्मसदित्यस्यार्थः सा हि तत्काले जनान् दोहकादीन् बोधयति। उषा अपि च तत्काल एवागच्छतीत्येवमुपमानमुप-पद्यत इत्युपपत्तिः। अन्ये तु मक्षिकामद्मसदं मन्यन्ते। सापि ह्यन्ने सीदति
१० सनोति वान्नं तत्काले च प्रतिबुध्यमानान्यान् बोधयतीति।

'इष्मिणः' (२५) इत्यनवगतम्। 'ईषणिन इति वा एषणिन इति वा आर्षणिन इति वा' इति शब्दसमाधयः। 'प्रियसे कं भानुभिः संमिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः। ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः [ ऋ० सं० १ । ८७ । ६ ]॥ इति
१५ निगमः। राहूगणस्य गोतमस्येयमार्षम्। जगती । मारुतस्य प्रैयङ्गवस्य चरोरियं याज्या [ मैत्रा०सं०४।११।२]। तत्र ह्युक्तं 'प्रियवती याज्यानु-वाक्ये भवतः' [मैत्रा०सं०२।१।८] इति। प्रियसे कं श्रियोऽर्थाय यजमा-नाय आत्मने वा। कमित्यनर्थकं एव। कामायेति वास्यार्थवत्त्वम्। भानु-भिः दीप्तिभिः सूर्यरश्मिभिर्येऽन्तरिक्षलोके मरुतः संमिमिक्षिरे संगच्छन्ते
२० त एव रश्मिभिः सर्वलोकनियन्तृभिः 'संमिमिक्षिरे' इत्येतदेवानुवर्तते। त एव च ऋक्वभिः रसहर्तृभिः संमिमिक्षिरे। सुखादयः सुखदातारो जनानाम्। शोभनानां वा हविषां खादितारः सुखादयः।

इष्मिण इत्यस्य त एव वाशीमन्तो वाग्मिनः। इष्मिणः ईषणिनः उपगमनवन्तः। एषणिनो वा इच्छावन्तः। आर्ष-
२५ णिनो वा आभिमुख्येन सर्वार्थानां द्रष्टारः। अभीरवो विद्रे विदारयितव्ये शत्रौ प्राप्ते विगतभयाः। अथवा विद्रे वेद्मि जाने। य एवंलक्षणा मरुत-

१ ग. ज. °साद्मका. २ ग. च. ज. व. ट. °धयः। ३६। श्रिय°. ३ ग. ज. भानुभिरिति। राहू°; घ. ट. भानुभिः संमिमिक्षिरे० मारुतस्य ध म्नः. ४ क. ख. च. घ. झ. ट. राहुग°. ५ क. ख. च. झ. ट. ठ. ड. °र्थकमेव कामये इति°. ६ च.
३० झ. ट. ठ. ड. °देव चानुव°.

स्तेषां मरुतां यत्स्थानमन्तरिक्षलोकस्तस्य प्रियस्येष्टस्य मारुतस्य मरुतां स्वभूतस्य धाम्नः स्थानस्य प्राप्तये तानेव मरुतः स्तौमीत्यध्याहारः । एवमेतस्मिन्मन्त्रे 'वाशीमन्त इष्मिणः' इत्येतस्मादेकवाक्यसंबन्धात् 'इष्मिणः' इत्येतन्मरुद्विशेषणम् । 'वाशीति वाङ्नाम' । 'वाशी वाणी' इति पठितं वाङ्नामसु ( निघ० १ । ११ ) । 'वाश्यत इति' कारकावधारणम् । ५

'वाहः' (२६) इत्यनवगतम् । पक्षेण चानेकार्थम्[1] । 'शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय[2] वाहः कृणवाव जुष्टम् । एदं बर्हिर्यजमानस्य सीदाथा च भूदुक्थमिन्द्राय शस्तम्' [ ऋ० सं० ३ । ५३ । ३ ]॥ विश्वामित्रस्येयमार्षम् । त्रिष्टुप् । होता ब्रवीति । हे अध्वर्यो एहि प्रतिगृणीहि । शंसावावामुभावपि । न ह्यप्रतिगीर्यमाणं शस्यते नाप्यशस्यमानं प्रतिगीर्यते । एवमितरेतरोपकारकत्वमभिप्रेत्योक्तं द्विवचनं 'शंसाव' इति । एवमितरेतरगुणसंपन्नमेतत् वाहः स्तोत्रं कृणवावावाम् । स्तोम एव हि देवानां वोढा भवति । 'वाहिष्ठो वां हवानां स्तोमः इति वोढृतमः स्तोमः' [ निरु० ५ । १ ] इति हि वक्ष्यति । एवमियमभिवहनस्तुतिः । वाह इत्यस्य एवमेतच्छस्त्रमाभिमुख्यगामि[3] इन्द्राय इन्द्रार्थम्[4] जुष्टं प्रियं तस्य यथा स्यात्तथा कुर्वः[5] । अन्ये त्वेनामभिषवणप्रवादिनीं[6] स्तुतिं मन्यन्ते वाहशब्दो ह्युदकवाहाभिधानसारूप्यात्तत्र युक्तरूपतर[7] इति कृत्वा । यदा पुनरेवं तदैवमर्थो योज्यः । इन्द्रायेदं वाहः[8] सोमोदकपूर्णमधिषवणफलकाख्यं वाहो जुष्टं प्रियं यथा स्यात्तथा कुर्वः । तद्धि सुशस्तं सुप्रतिगीर्णं चेन्द्रस्य प्रीतिजनकं भवति । एतदेव कर्तव्यमावाभ्यां यतो[9] ब्रवीमि । एदं बर्हिर्यजमानस्य सीद । एतद्बर्हिर्यदेतदग्रतः स्तीर्णमग्रेण होतारं बर्हिः सीद । 'सः[10] प्रतिगरायोपविशति' इति ह्युक्तम् । यजमानस्याभिप्रेतकामावाप्तय आसीद । २०

१ ग. च. ज. °र्थम् । २७ । शंसा°. २ ग. ज. °गृणीहीति । विश्वा°. ३ ग. ज. °माभिवोढृ आभिमु°; घ. ट. ठ. ड. °माभिमुख्यागामि. ४ क. ख. घ. झ. ठ. ड. °गामि इदं इन्द्रा°; च. °गामि ˇ इन्द्राय° इदम्. ५ ठ. ड. कुर्मः. ६ क. ख. घ. झ. ट. ठ. ड. °त्वेनामधिषवणप्रवादां सोमाभिष°; ग. ज. °त्वेनामभि(धि)षव°; च. °त्वेनामभिषवण ˇप्रवा° प्रवदां सोमाभिषवण. ७ ठ. ड. युक्ततर°. ८ घ. झ. ट. ठ. ड. वाहं. ९ क. ख. घ. ट. ठ. ड. यतोऽतो ब्र°; १० च. झ. 'सः' नास्ति. २५ ३०

माबमंस्थाश्चिरेणैतच्छस्यत इति । उपविष्टश्चेत्त्वं ममाग्रतोऽथानन्तरमेव भूत् भवति उक्थं शस्त्रमेतदिन्द्राय इन्द्रार्थं शस्तम् । नात्र मम वाङ्[1] मृषेत्यभिप्रायः । एवमियमभिवहनस्तुतिरथवाधिषवणप्रवादा स्तुतिः । उभयथापि त्वियम् ' ऐन्द्री त्वेव शस्यते ' । इदमेवैकमभिधानमत्र व्युत्पाद्यत इत्यभिप्रायः ।

५ ' परितक्म्या [ २७ ] इति ' एतत् ' उपरिष्टाद्व्याख्यास्यामः ' षोडशाध्याये [ निरु० ११ । २५ ] । तत्र ह्येतत् 'किमिच्छन्ती सरमा प्रेदमानट्[2] ' इत्येतस्मिन्मन्त्रे प्रसक्तमायास्यतीति लाघवार्थमुत्क्षिप्तमिति ॥ १६ ॥

नवमा[3]ध्यायस्य द्वितीयः पा[4]दः ।

---

१० सुविते सु इते सूते सुगते प्रजायामिति वा । सुविते मा धा इत्यपि निगमो भवति । दयतिरनेककर्मा । नवेन पूर्वं दयमानाः स्यामेत्युपदयाकर्मा । य एक इद्विदयते वस्विति दानकर्मा वा विभागकर्मा वा । दुर्वर्तुर्भीमो दयते वनानीति दहतिकर्मा दुर्वर्तुर्दुर्वारः । विदद्वसुर्दयमानो वि शत्रूनिति हिंसाकर्मा । इमे सुता इन्दवः प्रात-
१५ रित्वना सजोषसा पिबतमश्विना तान् । अयं हि वामूतये वन्दनाय मां वायसो दोषा दयमानो अबूबुधत् । दयमान इति । नूचिदिति निपातः पुराणनवयोर्नूचेति च । अद्या चिन्नु चित्तदपो नदीनाम् । अद्य च पुरा च तदेव कर्म नदीनाम् । नूचं पुरा च सदनं रयीणाम् । अद्य च पुरा च सदनं रयीणां रयिरिति
२० धननाम रातेर्दा[6]नकर्मणः ॥ १७ ॥

---

सुविते[7] ( २८ ) इत्यनवगतमनेकार्थं च । ' सु ईते सूते ' इति वा

---

१ ग. ज. वाक्संगोस्तीत्यभि°; च. वाक्सघर्ड्यमोस्तीत्यभि° क्मृषे. २ क. ख. ८ ( १६ ); ग. २७ ( ? ); इतरेष्वङ्को नास्ति. ३ ग. ज. नवमाध्यायद्विती°; ठ. ड. इति निरुक्तटीकायां चतुर्थाध्याये षोडशः खण्डः । इति नवमा°. ४ च. पादः समाप्तः. ५ क. ख. छ. त. द. अहं. ६ क. ख. १ ( १७ ); द. १. ७ ठ. ड. २७ सुविते सु इत इति सुविते इत्य°. ८ क. ख. घ. झ. ट. ठ. ड. इत इति सूते.

शब्दसमाधी । अत्र यदा 'सु इते' इति विपरिणामस्तदा 'सुगते' इत्यर्थः । यदा 'सूते' इति तदा 'प्रजायाम्' । सूते देवदत्ता पुत्रमिति प्रजायत इत्यर्थः । एवं 'सुविते' इत्यस्य 'सु इते सूते' शब्दसमाधी । तयोरेतद्यथासंख्येनार्थवचनं 'सुगते प्रजायामिति' । 'सुविते मा धाः' इत्यपि

सुविते इत्यस्य

निगमः । अनाधृष्टमस्यनाधृष्यं देवानामोजः । अभिशस्तिपा अनभिशस्तेन्यम् । अनु म इदँ व्रतँ व्रतपतिर्मन्यतामनु दीक्षां दीक्षापतिरञ्जसा सत्यमुपागाँ सुविते मा धाः [ मैत्रा० सं० १ । २ । ७ ] इति । अनेन तानूनप्त्रं संस्पृश्यते । हे तानूनप्त्र अनाधृष्टमसि अनाधर्षितमसि । त्वयि स्पृष्टे समयोपयन्त्रिता ह्येते नान्योन्यस्मै द्रोहमुपयास्यन्त्यृत्विजः । कुतः पुनरेतत्सामर्थ्यं तवेति । इतो यस्मात् अनाधृष्यं देवानामोजः । अनाधर्षणीयं त्वमोजः । बलमित्यर्थः । किंच । अभिशस्तिपाः अभिशंसनात्पासि । अनभिशस्तिँ हे घृत आत्मना वानाभिशंसनीयं केनचित् । अनवद्यमित्यर्थः । अनु मे इदं व्रतं व्रतपतिर्मन्यताम् । अनुमन्यतामिदं व्रतं कर्म व्रतपतिरग्निः । स च मयोपेयमानामनु दीक्षाम् । अनुमन्यतामेनां दीक्षां दीक्षापतिः सोमः । किंच । अञ्जसा अनन्तर्हितमहं सत्यमुपागाम् उपगतवान् योऽहमेतदस्पृशम् । स त्वं हे तानूनप्त्र एवमुपगतवन्तं मां सुविते सुगते स्थाने यत्र गतानां शोभनं गतं भवति तत्र धेहि । अथवा प्रजायां जनयितव्यायां धेहि । यथा बह्वपत्याः स्याम तथा कुर्वित्यर्थः ।

'दयति' ( २९ ) इत्येष शब्दः 'अनेककर्मा' अनेकार्थः । न

---

१ ग. ज. इति परिणा°; च. इति परिणा° वि. २ ग. च. ज. °गमः । २८ । अना°. ३ ग. च. ज. °नाधृष्यमित्यनेन तानू°. ४ क. ख. घ. झ. ट. अनभिशस्त्यञ्जसा सत्यमुपगेषां ( ट. °मुपगेषां° पागां )सुविते°; ठ. ड. अनभिशस्तेन्यमनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिरञ्जसा सत्यमुपगेषां सुविते°. ५ क. ख. घ. झ. ट. ठ. ड. नान्योन्यस्मिन्. ६ ग. ज. पासि ननु आत्मना वा°. ७ च. ट. °शस्ति° स्ते. ८ च. घृत आ° त्वं. ९ च. वानं° चा. १० ग. ज. सत्यमुपाग—उप°; ९ च. ट. सत्यमुपागां उप° पगेषं; झ. सत्यमुपगा उप°. ११ ग. ज. °स्पृश स°; च. स्पृशं त्वं° शत् । स; घ. ट. ठ. ढ. °मेतदभिस्पृशत् । स°; झ. मेतद्गेषं स्पृश त्वं हे°.

ऽनेकविकल्पप्रकृतिः । यथा सुविते[1]शब्दस्यान्येनान्येन धातुना विगृह्यानेकार्थत्वमुक्तम् । इणा विगृह्य 'सु इते' इति गत्यर्थत्वं सूतिना[2] च विगृह्य 'सूते' इति[3] प्रजार्थत्वम् । नैवमिह । किं तर्हि । एकप्रकृते[4]रिवायं शब्दोऽनेकार्थो भवतीत्यस्य विशेषस्योपद्योतनार्थमुदाहरति । एवमुच्यमानेऽप्यनेकार्थत्वे दयतिरनेककर्मैवेत्येवमुक्तम् । अन्ये तु ब्रुवते । यथा 'सुविते[5]' शब्दोऽनेकार्थोऽनवगतसंस्कारश्च नैवमयम् । किं तर्हि । अनेकार्थ एवायमिति । एवमनेकार्थत्वं प्रतिज्ञायोदाहरणेनैवोपपादयति ।

'अनेककर्मा' इत्यस्य द्वावर्थौ

'नवेन पूर्वं दयमानाः स्याम इति' एतस्मिन्मन्त्रे दयतीत्येष शब्दः 'उपदयाकर्मा' । उपदयेति रक्षणमुच्यते । नवेन धान्येन पूर्वं पुराणं रक्षन्तः स्याम पुराणेन च नवम् । इष्टं हि नवेन पुराणस्य च रक्षणं पुराणेन[6] च नवस्य । प्रसिद्धं च लोके । तस्मादिहायमुपपद्यत उपदयाकर्मा । चतुर्दशेऽध्याये[7]ऽस्य शेषः [ निरु० ९ । ४३ ] ।

दयतिरुपदयाकर्मा

'य एक इद्वि दयते वस्विति' एतस्मिन्मन्त्रे दानकर्मा वा विभागकर्मा वा[8] ।

'य एक इद्वि दयते वसु मर्ताय दाशुषे । ईशानो अप्रतिष्कुत इन्द्रो अङ्ग [ ऋ० सं० १ । ८४ । ७ ] ॥

राहूगणस्य[9] गोतमस्यार्षम्[10] । य इन्द्र एक एव स्वतन्त्रो विदयते विविधं वसु धनं दयते ददाति । कस्मै । मर्ताय मनुष्याय । किंलक्षणाय । दाशुषे दत्तवते हवींषि । अथवा विभागकर्मा ।

दानकर्मा विभागकर्मा वा

---

१ च. सुवितश° . २ क. ख. घ. ट. ठ. ड. °सूतिना वि°; च. सूविना च वि°. ३ क. ख. ग. ज. घ. ट. ठ. ड. इति च प्र°. ४ क. ख. घ. झ. ट. ड. °प्रकृतेरे°. ५ ग. सुवित° त; च. सुवितश° ते; ज. सुवितश°. ६ ग. ज. पुराणेनवस्य; च. पुराणेन नवस्य° च. ७ क. ख. घ. झ. ट. ठ. ड. °ध्याये इत्यस्य; च. °ध्यायेऽस्य° इत्य. ८ ग. च. ज. वा । २९ । य°; ठ. ड. वा । मन्त्रस्तु । य°. ९ क. ख. च. राहुगण°. १० क. ख. घ. ट. ठ. ड. स्यार्षम् । ऐन्द्री उष्णिक् । य°; च. °स्यार्षं । य° ऐन्द्री उष्णिक्.

दाशुषे वसु विदयते । विभजते इत्यर्थः । किंलक्षणः पुनरिन्द्रो ददाति विभजते वेति । उच्यते । ईशान ईश्वरः अप्रतिष्कुतः अप्रतिस्खलितः संग्रामेषु । इन्द्रः अङ्ग क्षिप्रं धनं ददाति विभजति वा दाशुषे यजमानाय । तमहं स्तौमि । सोऽस्माकमेतत्करोत्वित्यभिप्रायः । ईशान इन्द्रोऽन्यत्र दानविभागाभ्यां दाशुषे यजमानाय वस्वेकेवाक्ये श्रूयमाणः किमन्यत्कुर्यात् । तस्माद्वाक्यसामर्थ्यादत्र ' दानकर्मा वा विभागकर्मा वा ' इत्युपपद्यते ।

' दुर्वर्तुर्भीमो दयते वनानीति दहनकर्मा ' । एतस्मिन्मन्त्रे 'दहतिकर्मा' । निगमप्रसक्तं निर्ब्रवीति । ' दुर्वर्तुर्दुर्वारः ' । दुर्वारणीय इत्यर्थः । अध जिह्वा पापतीति प्र वृष्णो गोषुयुधो नाशनिः सृजाना । शूरस्येव प्रसितिः क्षातिरग्नेर्दुर्वर्तुर्भीमो दयते वनानि [ ऋ० सं० ६ । ६ । ५ ] ॥ आग्नेयी । भरद्वाजस्यार्षम् । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः

दहतिकर्मा

शस्यते [ आश्व० श्रौ० ४ । १३ ] । उपज्वलितस्याग्नेः अध अथानन्तरमेव तस्य जिह्वा ज्वाला दारुषु पापतीति पुनः पुनः पतति । प्रवृष्णः प्रवर्षितुः इन्द्रस्य गवार्थं देवपणिभिः सह असुरैर्युध्यतः । अथवा गोषु अप्सु मेघेन सह युध्यत इत्यर्थः । नेत्युपमा । इन्द्रस्य गोषु युध्यत इव अशनिः सृजाना सृज्यमाना यथा पतति तेनैव सृज्यमाना तथाग्नेर्ज्वाला दारुषु पापतीति । किंच । शूरस्येव प्रसितिः क्षातिरग्नेः । यथा कस्यचिद्विक्रान्तस्येन्द्रस्य वाप्रतिहतगतेः प्रसितिः प्रसहनं संग्रामानुप्रवेशमार्गश्छिन्नभिन्नावरुग्णैः शत्रुभिराकीर्णः स्यादेवमस्याग्नेः क्षातिर्दहनमार्गः पुष्टोऽर्ध-

१ ज. विभजाति॰ ते. २ ग. ज. विभजति; च विभजाति॰ ते. ३ क. ख. ग. ज. घ. ट. ठ. ड. ॰तिस्खलि॰. ४ ग. ज. धनं. ५ ग. ज. ॰नाय स्वेववाक्ये; च. ॰नाय वंचं (वं) स्वेकं (व) वाक्ये. ६ क. ख. घ. ट. ठ. ड. श्रूयमाणं; च. श्रूयमाणः॰ णं. ७ ग. च. ज. ॰त्यर्थः । ३० । अध॰. ८ ग. वृष्णो॰ । आग्नेयी॰; च. ट. वृष्णो॰ दुर्वर्तु॰. ९ क. ख. घ. झ. ठ. ठ. ड ॰ सृजाना तेनैव सृज्यमानो यथा पतति । अशनिर्वज्रः । तथा॰; च. सृज्यमाना यथा पतति तेनैव सृज्यमाना. १० ग. ज ॰न्द्रस्यान्यस्य वा॰; च. ॰न्द्रस्यं वा॰ स्यान्यस्य. ११ ग. ज. प्रसयं. १२ क. ख. व. ट. ठ. ड. ॰भिः प्रकीर्णः॰; च. ॰भिः आकीर्णः॰ प्रं; ट. ॰भिः प्रकीर्ण.॰ रा. १३ क. ख. घ. झ. ट. ठ. ड. ईषत्पुष्टा॰; च. ॰मार्गः पुष्टा॰ ईषत्.

दग्धभस्मीभूतैर्वृक्षैर्गुल्मादिभिराकीर्यते । कदा पुनरेतद्भवति । दुर्वर्तुर्दुर्वारो दावाग्नीभूतः भीमः सर्वप्राणिभयंकरो यदायमग्निर्दयते दहति । किम् । वनानि । एवमयमाग्नेये मन्त्रे वनशब्दसंनिकर्षे श्रूयमाणो दयतिशब्दो दहनादन्यत्किमभिदध्यात् । तस्मात्सामर्थ्यादिहायं 'दहनकर्मा' इत्युपपत्तिः ।

५ 'विदद्वसुर्दयमानो वि शत्रूनिति हिंसाकर्मा। इन्द्रः पूर्भिदातिरद्दासमर्कैर्विदद्वसुर्दयमानो वि शत्रून् । ब्रह्मजूतस्तन्वा वावृधानो भूरिदात्र आपृणद्रोदसी उभे [ ऋ० सं० ३ । ३४ । १ ] ॥ विश्वामित्रस्येयमार्षम् । त्रिष्टुप् । उद्भिद्बलभिदोर्निष्केवल्ये निविद्धानीयस्य सूक्तस्य [ आश्व० श्रौ० ९।८ ] प्रथमैवेयम् । इन्द्रः पूर्भित् असुरपुरां मेघानां वा भेत्ता । अद्भिः पूर्णा
१०. अपो वा पालयन्तीति मेघाः पुरः 'पॄ पालनपूरणयोः' [ धा० ९ । १७ ] इत्येतस्य । आतिरत् आभिनत् दासं दासयितव्यं मेघम् । कैः सहायैः सह । अर्कैः वृक्षैर्वा देवैर्माध्यमिकैर्वा । किंलक्षणः पुनरसाविन्द्रो य आतिरत् । विदद्वसुः प्राप्तधनः । किं कुर्वन्नातिरद्दासम् । विदयमानो विविधं हिंसन् शत्रून् ये मेघवधप्रतिबन्धिनः ।
१५ हिंसाकर्मा आह । किं विदद्वसुत्वेनैवैकेन गुणेन युक्तो य इन्द्रः स एतदकरोत् । नेत्युच्यते । ब्रह्मजूतश्च ब्रह्मणा स्तुतिलक्षणेन जूतः प्राप्तः प्रीतो वा ब्रह्मणा । तन्वा शरीरेण वावृधानो वर्धमान आपृणत् आपूरयति रोदसी द्यावापृथिव्यावुभे अपि । भूरिदात्रश्च बहुदानो य इन्द्रो दासमातिरत् । एवमत्र 'विदद्वसुर्दयमानो
२० वि शत्रून्' इति शत्रुसंनिधौ दयतेः किमन्यत्सामर्थ्यमुपपद्येतान्यत्र वधात्[3] ।

'इमे सुता इन्दवः प्रातरित्वना सजोषसा पिबतमश्विना तान् । अहं हि वामूतये वन्दनाय मां वायसो दोषा दयमानो गतिकर्मा अबूबुधत् । 'दयमान इति' । अत्र दयतिर्गत्यर्थः । दयमानो डीयमानः काकोऽन्तरिक्षेणाधस्तान्मां सुप्तं दोषा दोषायामबोधयत् । मृग्योऽत्र शेषः ।

---

१ ग. च. ज. °कर्मा । ३१ । इन्द्रः°. २ ग. ज °मर्कैरिति । विश्वा°; घ. ट. मर्कैः० भूरिदात्र°. ३ ग. वधात् । ३२ । इमे°. ४ ग. °न्दवः० बुवंतुं; ठ. ड. °न्दव इति । दयमान इति°. ५ क. ख. ठ. ड. °मान उड्डीय°; घ. ट. °मानोड्डीय°;
२९ च. °मानो डीय° ड्डी.

'नूचित्' (३०) इति एष 'निपातः' अनेकार्थत्वेनेह समाम्नातः। न हि निपातानां प्रकृतिप्रत्ययादिः संस्कारोऽस्ति यस्यानवगमः स्यात्। स च पुनरयं 'पुराणनवयोः' अर्थयोर्वर्तते। प्रकरणोपपदवशात्पुराणतां कस्यचिदर्थस्यावद्योतयति नवतां च कस्यचित्। 'नूच (३१) इति च'। अयमपि पुराणनवयोर्वर्तते। अयं तु नूचिदित्येतस्यैवार्थसामान्यप्रसङ्गादसमाम्नात एवोदाहृतः। नूचिदित्यस्योदाहरणम्।

नूचित् नूच इत्येतौ पुराणनवयोः

'अद्या चिन्नू चित्तदपो नदीनां यदाभ्यो अरदो गातुमिन्द्र। नि पर्वता अद्मसदो न सेदुस्त्वया दृळ्हानि सुक्रतो रजांसि' [ऋ० सं० ६। ३०। ३]॥ भरद्वाजस्येयमार्षम्। त्रिष्टुप्। उक्थपर्यायेष्वच्छावाकस्य शस्त्रे माध्यंदिने सवने विनियुक्ता [आश्व० श्रौ० ५।१६]।

अस्यामृचि नूचिदित्यस्य 'पुरा' इत्यर्थः

अद्य च पुरा च तदेव कर्म नदीनां वर्तते। कतमद्यत्। उद्दिश्य वहनं कर्म। कथं नामास्य लोकस्योपकारायाजस्रमेता वहेयुरिति। गातुं गमनमार्गमाभ्यो नदीभ्योऽर्थाय त्वमरदः अखनस्त्वम्। किम्। गमनम्। गच्छन्त्यनेनेति गमनम्। हे इन्द्र तदेव कर्माद्यापि वर्तते तासां नदीनां यथाद्यादिष्टमेव त्वया। ताभिरद्यापि तदनुष्ठीयत इत्यभिप्रायः। तदुक्तं पुरस्तादपि 'इन्द्रो अस्माँ अरदत्' इत्यत्र [निरु० २। २६]। एवं तावदयं त्वयैव नद्यधीनेनोपकारेणानुगृह्यते लोकः। किंच। नि पर्वता अद्मसदो न सेदुः। य एते पर्वताः पर्ववन्तो मेघा अद्मसदः। निष्पादयितव्यमन्नमस्माभिरित्येतदर्थमुद्दिश्यान्तरिक्षलोके सीदन्त्यवतिष्ठन्ते गच्छन्ति वा। तेऽपि युष्मद्वीर्योपमृदिता एवोदकभूता नीचैर्भूम्यामन्ननिष्पत्त्यर्थं सेदुः। सीदन्तीत्यर्थः। तदेवं कृत्वा किं बहुना सर्वथाप्युदकप्रदानद्वारेण त्वयैवैतानि हे सुक्रतो सुकर्मन् सुदृढानि दृढीकृतानि रजांसि। लोका इत्यर्थः। त्वं चेदेषामेवमन्नमुदकं च न व्यधास्यः सर्व एवैते लोका

---

१ च. 'इति च' नास्ति. २ क. ख. घ. ट. ठ. ड. °नवयोरर्थयोर्व°; च. नव°योर्व° रर्थयो. ३ ग. च, ज. °हरणम्। ३२। अद्या°. ४ ग. नदीनां० सि। भर°; घ. ट. नदीनां० त्वया दृ°. ५ क. ख. च. दृढानि; ग. ज. घ. झ. दृळ्हानि. ६ च. गच्छत्यने°. ७ ठ. ड. °रदद्भ्यमाहुरित्य°. ८ घ. झ. ट. ठ. ड. 'पम्रर्दि°. ९ च. °तानि ˇ सुक्र° हे. १० क. ख. घ. ट. ठ. ड. हे सुक°; च. 'क्रतो ˇ सुक° हे.

नाभविष्यन्नित्यभिप्रायः । इहाद्येत्यस्य संनिधौ वर्तमानो नूचिदित्येष पुराणाभिधायीत्युपपद्यते । इह पुराणनवयोरित्युक्तम् । तत्र पुराणाभिधायित्वस्यैतदुदाहरणम् । नवाभिधायिनो 'नू चिन्न वायोरमृतं वि दस्येत्' (ऋ० ६।३७।३ )।अत्र हि वक्ष्यति 'नवं च पुराणं च' इति [निरु१०।३]।

नूचेत्यस्योदाहरणम्[1] । 'नू च॑ पुरा च सद॑नं र॒यीणां[2] जात॑स्य च जाय॑मानस्य च क्षाम् । सत॑श्च गोपां भव॑तश्च भूरे॑र्दे॒वा अ॒ग्निं धा॑रयन्द्रविणो॒दाम्' [ ऋ० सं० १ । ९६ । ७ ]॥ कुत्सस्येयमार्षम्[3] । षष्ठेऽहन्याग्निमारुते शस्त्रे जातवेदस्ये सूक्ते शस्यते [ आश्व० श्रौ० ८।८ ] । नू च पुरा च सदनम् । अद्य च पुरा[4] च सदनम् । तस्यैव 'अद्य च' कस्य । रयीणां धनानाम् । किंच । जातस्येत्युत्पन्नस्य जायमानस्य चाभिनिष्पद्यमानस्य भूतजातस्य इत्यर्थः क्षाम् । निवासमित्यर्थः । 'तस्मात्सर्वानृतून् पशवोऽग्निमभिसर्पन्ति' इति विज्ञायते [मैत्रा०सं० १।८।२]। 'यत्र गां शयानां निर्जगाति मृतामेतामविद्वान् मन्यतेऽन्वग्नौ ह्येवैते प्रविशन्ति' इति च विज्ञायते [ मैत्रा० सं० १ । ८ । २ ] । तस्मादुपपद्यते स्थानत्वं निवासत्वं चाग्नेः । सतश्च निष्पन्नस्य[5] भूतजातस्य गोपां गोप्तारम् । भवतश्चोत्पद्यमानस्य भूरेर्बहुनो गोप्तारमित्यनुवर्तते । य एवंलक्षणोऽग्निस्तं द्रविणोदां धनस्य दातारं देवा धारयन् । धृतवन्त इत्यर्थः । क्व । हविर्वहनकर्मणि । 'अथा देवा दधिरे हव्यवाहम्' इति वक्ष्यति [ निरु० ६ । ३५ ] । एवमिह 'पुरा च' इत्यस्य संनिधौ 'नूच' इत्येष शब्दो वर्तमानो नवाभिधायीत्युपपद्यते । पुराणाभिधायित्वे पर्येष्यमस्योदाहरणम् ।

'दावने '( ३२ ) इत्यनवगतम् । 'दानस्य' इत्यवगमः । 'अकूपारस्य '( ३३ ) इत्यनवगतमनेकार्थं च । 'अकुत्सितपरणस्य[6]' इत्यवगमः । द्वयोरप्येतयोरेक एव निगमः ॥ १७[7] ॥

---

१ ग. च. ज °हरणम् । ३३ । नू°. २ ग. रयीणां० द्रविणोदाम्; घ. ट. रयीगां० देवा अग्निं°. ३ क. ख. °मार्षम् । पृष्ठ्यस्य षष्ठे°; च. °मार्ष ˇ षष्ठे° पृष्ठस्य. ४ घ. ट. ठ. ड. 'पुरा च' नास्ति. ५ घ. ट. ठ. ड. निष्पन्नभूत°. ६ क. ख. अकुपरणस्य; घ. झ. ट. ठ. ड. अकुत्सितं पर°. ७ क. ख. १ (१९); ग. २८। ३४; च. ज. ३४; ठ. ड. °गमः । इति निरुक्तटीकायां चतुर्थाध्याये सप्तदशः खण्डः.

विद्याम तस्य ते वयमकूपारस्य दावने । विद्याम तस्य ते वयमकुपरणस्य दानस्यादित्योऽप्यकूपार उच्यतेऽकूपारो भवति दूरपारः समुद्रोऽप्यकूपार उच्यतेऽकूपारो भवति महापारः कच्छपोऽप्यकूपार उच्यतेऽकूपारो न कूपमृच्छतीति कच्छपः कच्छं पाति कच्छेन पातीति वा कच्छेन पिबतीति वा कच्छः खच्छः खच्छदोऽयमपीतरो नदीकच्छ एतस्मादेव कमुदकं तेन छाद्यते । शिशीते शृङ्गे रक्षसे विनिक्षे । निश्यति शृङ्गे रक्षसो विनिक्षणनाय रक्षो रक्षितव्यमस्माद्रहसि क्षणोतीति वा रात्रौ नक्षत इति वा । अग्निः सुतुकः सुतुकेभिरश्वैः । सुतुकनः सुतुकनैरिति वा सुप्रजाः सुप्रजोभिरिति[2] वा । सुप्रायणा अस्मिन्यज्ञे विश्रयन्ताम् । सुप्रगमनाः ॥ १८ ॥

---

' यन्मन्यसे वरेण्य[3]मिन्द्र द्युक्षं तदा भर । विद्याम तस्य[4] ते वयमकूपारस्य दावने ' [ ऋ० सं० ५ । ३९ । २ ] ॥ अत्रेभौमस्येयमार्षम् । अच्छावाकस्य तार्तीयसवनिके[5] आवापे नियुक्ता ' यदिन्द्र चित्र ' इतीयं च ( आश्व० श्रौ० ७ । ८ ) । हे इन्द्र यन्मन्यसे जानीषे त्वं वरेण्यं वरणीयमेतद्धनमिति द्युक्षं च यत् द्युतिनिवासभूतम् । द्युतिमदित्यर्थः । तदस्मभ्यमाहर । कदाचित्त्वमाहृत्यापि न दद्या[6] अतो[7] ब्रूमः । तस्य त्वयाहृतस्य धनस्य विद्याम लभेमहि वयं ते तव स्वभूतस्य । किंलक्षणस्य ।

अकूपारस्येत्यस्यार्थः

अकूपारस्य अकुपरणस्य । अकुत्सितपूरणस्येत्यर्थः । येन[8] लब्धेन सुपूर्णमात्मानं मन्येमहि[9] । पर्याप्तमैहिकाय च श्रेयसे आमुष्मिकाय चेत्यर्थः । दावने दानस्येत्यर्थः । ईदृशस्य भावत्कस्य[10] दानस्य[11] वयमेव[12] लब्धारः स्यामेत्यभिप्रायः । एवमिह यन्मन्यसे वरेण्यं

---

१ ङ. ठ. ड. °कुपर्णस्य; छ. द. °मकूपरणस्य. २ क. ख. २ [१८]; द. २. ३ ग. ज. वरेण्यमिति । अत्रे°; घ. ट. वरेण्य०मकूपा°. ४ ठ. ड. तस्य त इति । अत्रे°. ५ ग. ज. °सवनियके°. ६ ग ज. °हृत्यानपि न द्या°. ७ ग. ज. यतो; च. झ. ट. ठ. ड. अयतो. ८ ठ. ' येन लब्धेन० दानस्येत्यर्थः ' नास्ति. ९ क. ख. च. झ. ट. ठ. ड. मन्यामहे; च. मन्येमहि° मन्यामहे. १० च. भाव° ता. ११ क. ख. धनस्य; च. दानस्य० ध. १२ घ. ट. ठ. ड. बलमेव°.

द्युक्षं[1] तदाभरेतीन्द्र उच्यमानो धनसंनिधानाद्दानादन्यत्किमुच्यते । धनमेव हि प्रायेण मनुष्यैः प्रार्थ्यते । तस्मादत्राश्रूयमाणोऽपि धनशब्दोऽध्याहृतः । तच्च पुनः प्रार्थ्यमानं बहु प्रार्थ्यते । तस्मादकूपारस्येत्येष शब्दोऽतिपरोक्षवृत्तिः ' अकुपरणस्य ' इत्येवं परोक्षवृत्तित्वेनावस्थाप्य ततः ' अकुत्सितपूरणस्य' इत्येवं प्रत्यक्षवृत्तित्वेन व्याख्यायते । अत्र कुरिति कुत्सार्थः । परणम् पूरणमुच्यते । कुत्सितं परणं कुपरणम् । न कुत्सितं परणम् अकुपरणम्[2] । तस्य अकुपरणस्य । प्रभूतस्येत्यर्थः । धनसंबन्धादेव[3] 'दावने' इत्येष शब्दो दानार्थ इत्युपपत्तिः । एतस्मिन्मन्त्रे 'अकूपारस्य दावने' इत्ययमनयोः पदयोरनुक्रमः । समाम्नाये[4] पुनः ' दावने अकूपारस्य ' इति मन्त्रपाठव्यतिक्रमेणानुक्रमः । तेन ज्ञायतेऽन्यैरेवायमृषिभिः समाम्नायः समाम्नातोऽन्य एव चायं भाष्यकार इति । एको हि समाम्नानं भाष्यं च कुर्वन् प्रयोजनस्याभावादेकमन्त्रगतयोः पाठानुक्रमं नाभङ्क्ष्यत् । अविवक्षितस्वोर्थाश्चैते[5] मन्त्रे निगमाः । तेषु संपत्त्या काकतालीयन्यायेन कस्मिंश्चिदेकस्मिन्नेव निगमे द्वे पदे आगच्छतस्ते यथोपागते[6] एव भाष्यकारो व्याचष्टे इत्यदोषः ।

*अकूपारशब्दस्यादित्यादयोऽन्येऽर्थाः*

' आदित्योऽप्यकूपारः उच्यते ' । किं कारणम् । स ह्यकुत्सितस्य महतोऽध्वनः पारयिता भवत्युदयादारभ्य यावदस्तमिति । ' समुद्रोऽप्यकूपार उच्यते ' । असावपि ह्यकुत्सितपार आत्मनैव भवति । 'महापारः ' इति पर्यायेणार्थवचनम् । विस्तीर्णपार इत्यर्थः । 'कच्छपोऽप्यकूपार उच्यते ' । स हि 'न कूपमृच्छति' अल्पोदकत्वात् । किं तर्हि । यत्र बहु प्रकीर्णमुदकं तत्तत्स्थानं[7] गन्तुमिच्छति समुद्रं नदीं वा । आख्यानप्रसक्तमुच्यते । 'कच्छपः कच्छम्' आत्मनो मुखसंपुटं ' पाति ' रक्षति ।

*कच्छकच्छपशब्दयोर्व्युत्पत्तिः*

स हि किंचिद्[8] दृष्ट्वा शरीर एव मुखसंपुटं प्रवेशयति । संपुटे हि कच्छशब्दः प्रसिद्धः । ' प्राणिवाच्यः[9] कच्छपुटः ' इति च । ' कच्छेन ' कटाहेनेतराण्यङ्गानि ' पातीति वा ' । स हि

---

१ क. ख. ग. ज. द्युक्षं च तदा°. २ घ. ट. ठ. ड. न्यकुपरणं. ३ क. ख. घ. ट. ठ. ड. दानस°; च. धनस° दा. ४ घ. ठ. ठ. ड. समाम्नायेषु दाव°. ५ क. ख. घ. झ. ट. क्षितार्थाश्चै°; च. °क्षितस्वोर्थाश्चै° ता. ६ घ. ट. यथापानते; ठ. ड. यथापाते. ७ क. ख. ग. ज. ठ. ड. 'तत्' सकृदेव; च. तत्तत्स्था° त. ८ ठ. ड. कंचि°. ९ ग. ज. पाणिकच्छपुट°; च. पाणिकच्छपुट° प्राणिवाच्यः

किंचिद्दृष्ट्वा सर्वाण्यङ्गानि कटाह एवानुप्रवेश्य कूर्मबन्धेनैवावतिष्ठते । अथ 'वा कच्छेन' मुखसंपुटेन 'पिबतीति' कच्छपः । विग्रहप्रसक्तः कच्छ-शब्दो निरुच्यते । य एष 'कच्छो' मुखसंपुटः कटाहो वायं 'खच्छः'। आह । किमुक्तं भवति 'खच्छः' इति । उच्यते । स हि 'खच्छदः'। खमाकाशं छादयति । स हि मध्ये सुषिरो भवति । 'अयमपीतरो नदी-कच्छ एतस्मादेव'। कसंज्ञकेनोदकेन 'छाद्यते' इति कच्छः ।

'आदित्योऽप्यकूपारः समुद्रोऽप्यकूपारः कच्छपोऽप्यकूपार' इत्ये-तेषु निगमाः पर्येष्याः ।

'शिशीते' (३४) इत्यनवगतम् । 'निश्यति' इत्यवगमः । 'वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा । प्रादेवी-र्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे [ ऋ० सं० ५ । २ । ९ ] ॥ वृशो नाम जनपुत्रस्तस्येयमार्षमात्रेयस्य वा कुमारस्योभयोर्वा। प्रातरनुवाकाश्विनयोः शस्यते [ आश्व० श्रौ० ४ । १३ ] । विभा-त्यग्निर्नानाप्रकारं भाति । केन । बृहता ज्योतिषा । स एवं विभासमानः किं करोति । आविर्विश्वानि कृणुते । आविःकरोति विश्वानि सर्वाणि भूतानि महित्वा । महत्त्वेनेत्यर्थः । किं च प्रादेवीर्मायाः सहते । प्रसहते प्रकर्षेणाभिभवति । किम् । अदेवीर्मायाः । आसुरीरित्यर्थः । दुरेवा दुरेवा दुस्तर्पा वा । न ह्यग्नेस्तृप्तिरस्ति । किं च शिशीते शृङ्गे । यथा हि वृषभस्त-टान्निघ्नन् शृङ्गे तीक्ष्णीकरोत्येवमग्निरपि दारूणि दहंस्तीक्ष्णीकरोति ज्वालाः । कमर्थं पुरस्कृत्य । रक्षसो विनिक्षणनाय । विहिंसनायेत्यर्थः । अत्र शृङ्गशब्दसंनिधानात् 'शिशीते' इत्यस्य तीक्ष्णार्थत्वं तीक्ष्णीकृतैर्ह्यर्चिर्भिर्विनिक्षणनमुपपद्यत इति । निगमप्रसक्तमुच्यते ।

शिशीते इत्यस्य निगमोऽर्थश्च

१ क. ख. घ. झ. ठ. ड. कूर्मत्वेनैवा°; ट. कूर्मत्वेनैवा° बन्धे. २ क. ख. ग. ज. घ. झ. ट. ठ. ड. कच्छः; च. खच्छः° क. ३ क. ख. ग. ज. घ. ट. ठ. ड. भवति । खच्छ इत्युच्यते । स°. ४ क. ख. घ. झ. ट. ठ. ड. सुस्थिरो; च. सुषिरो° स्थि. ५ ग. ज. पर्यवेश्या. ६ ग. च. ज. °गमः । ३५ । वि°. ७ ग. ज. भातीति । वृशो; °घ. ट. भात्यग्निः० शिशीते. ८ च. बृहता ˇ ज्यो° महता. ९ क. ख. घ. झ. ट. ड. °करोति प्रकाशीकरोति विश्वा°; च. °करोति ˇ विश्वा° प्रकाशीकरोति. १० ठ. ड. 'दुरगः' नास्ति, ११ ठ. ड. शृङ्गेन.

'रक्षो रक्षितव्यं' हि शरीरम् 'अस्मात्' भवति। तद्धि रक्षो मानुषान् भक्षयति।
' रहसि वा ' विविक्ते प्रदेशे रक्षः ' क्षणोति ' । हिनस्तीत्यर्थः । ' रात्रौ नक्षते ' गच्छति ' इति वा ' रक्षः ।

' सुतुकः ' ( ३५ ) इत्यनवगतम् । पक्षेण चानेकार्थम् । 'सुतुकनः'
५ इत्यवगमः ' सुतुकनैरिति वा ' ।

' स आ वक्षि महि न आ च सत्सि दिवस्पृथिव्योररतिर्युवत्योः ।
अग्निः सुतुकः सुतुकेभिरश्वैरभस्वद्भी रभस्वाँ एह गम्याः [ ऋ० सं० १० । ३ । ७ ] ॥ त्रितस्येयमार्षमाप्त्यस्य । प्रातरनुवाकाश्विनयोः शस्यते [ आश्व० श्रौ० ४ । १३ ] । यस्त्वं दिवस्पृथिव्योः युवत्योः संमिश्री-
१० भवन्त्योर्यानि भूतान्यन्तरा वर्तन्ते तेषां सर्वेषामरतिः । पर्याप्तमतिरित्यर्थः । स एवंलक्षणस्त्वमस्माकमावक्षि आह्वयसि देवान् महि । महत इत्यर्थः । स एवम् आसत्सि च आसीदासि च होतृत्वे । 'अग्निः' इत्येतत्पदं संबोधनार्थत्वेन विपरिणम्यते ' आवक्षि ' ' आसत्सि ' इति मध्यमपुरुषयोगान्मन्त्रस्य । हे अग्ने यस्त्वमेवंगुणयुक्तः
१५ सुतुक इत्यस्य सुतुकनः । सुगमन इत्यर्थः । अथवा ' सुप्रजाः ' । तुगित्यपत्यनामसु पठितम् [ निघ० २ । २ । १ ] । ' हिरण्यमपत्यमभिप्रेतमग्नेः ' । ' हिरण्यरेता अग्निः ' इति श्रूयते ' अग्नेरपत्यं प्रथमं सुवर्णम् ' इति च । सुतुकैरेव सुगमनैरश्वैः । अथवा सुप्रजोभिः । कुलजैरित्यर्थः । अथवा शोभना प्रजा येषां ते सुप्रजाः ।
२० शोभनानामेवाश्वानां शोभनाः प्रजा भवन्तीति प्रजाद्वारेण चाश्वा एवैते श्रूयन्ते । अश्वद्वारेण चाग्निः । स्तूयतेऽथवा स एवाग्निः 'सुतुकः सुप्रजाः' ।

---

१ क. ख. 'वाति । रक्षो हि मानु°; च. °वाति । तद्धि रक्षो मानु° रक्षो हि. २ ग. च. ज. दा ।३६। स°. ३ ग. ज. सत्सि । त्रित°: घ. झ. ट. सत्सि॰ रभस्वद्भी°. ४ ग. °तानितरा; ज. °तानिंऽतरा°; च. °तानिंऽतरा॰ न्यं. ५ क. ख. ग. ज.
२५ °रतिः त्वमेवालमतिः पर्या°; च. °रति ~ पर्या° स्त्वमेवालमति. ६ च. स एवम्, ७ ग. च. ज. घ. ट. ठ. ड. होतृत्वेऽग्निरित्ये°. ८ क. ख. घ. झ. ट. आ च सत्सि; च. आ ~सत्सि° च. ९ घ. ट. ठ. ड. शोभमानामेवा°; च. °प्रजाः । ˇशोभ° अथवा. १० क. ख. ग. ज. ठ. ड. °चाग्निः स्तूयते । अथ°; घ. झ. ट. °चाग्निः स्तूयते अथ°; च. स्तूयते अथवा स एवाग्निः. ११ घ. झ. ट. ठ. ड.
३० सुतुकप्रजाः, च. सुतुक ˇप्रजाः° :सु.

अपत्यं चास्य सर्वाः प्रजाः । ताश्च प्रति कल्याण इति सुप्रजाः । रभस्वद्भिः त्वरितैः रभस्वान् स्वयं च त्वरित एह गम्याः आगच्छेस्त्वमिह मम कर्मणि नित्यं हवींषि वोढुम् । कर्मैव तवेदमित्यभिप्रायः । एवमेतदिह 'सुतुकः' इत्यग्निविशेषणं सुतुकैरश्वैरित्येतस्मात्तृतीयासंबन्धादित्युपपत्तिः ।

'सुप्रायणाः' (३६) इत्यनवगतम् । 'सुप्रगमनाः' इति शब्दप्रतीतिः । यज्ञगृहद्वारोऽभिधेया[1] यास्कमतेन शाकपूणेस्त्वर्चिषः । होता यक्षद्दुर ऋष्वा कवष्योऽकोषधावनीरुदाताभिर्जिहतां वि पक्षोभिः श्रयन्तां सुप्रायणा अस्मिन्यज्ञे विश्रयन्तामृतावृधो व्यन्त्वाज्यस्य होत-र्यज इति (प्रैषः ६)[3] । मैत्रावरुणो ब्रवीति । होता यक्षत् होता यजतु । किम् । एताः दुरः यज्ञगृहद्वारः । अथवैता अग्न्यर्चिषः । ऋष्वाः महत्यः । अथवा हिंस्राः । द्वार्येव हि यो निवारणीयः स हिंस्यते । अर्चिषां तु हिंस्रत्व-मुपपद्यत एव । कवष्यः विकुषिताः[4] । सुषिरा इत्यर्थः । कपाटवत्यो वा यज्ञ-गृहद्वारः । अकोषधावनीः अकोशधावनीः । तासु हि संवृतासु द्रव्यकोशाः सुरक्षा भवन्ति । अर्चिःष्वपि हविः प्रक्षिप्तं नान्यतो धावति । किं तर्हि । देवानेव प्राप्नोति । एतदकोशधावनीत्वमर्चिषाम् । एवंलक्षणा एता द्वारो अर्चिषो वा उदाताभिर्जिहताम् उज्जिहताम् उत्तिष्ठन्तु आताभिः दिग्भिः । विश्रयन्तां च पक्षोभिः । विव्रियन्तां कपाटसंचरणैर्द्वारः[6] । अर्चिषस्तु हविषोऽ-नुप्रवेशार्थं पक्षोभिः स्वैरेवावयवैर्विश्रयन्ताम् । सुप्रायणा इत्यस्य विवृताश्च सत्यः सुप्रायणाः सुप्रगमना भवन्तु ऋत्विजां[7] यदि द्वारः । अथ पुनरर्चिषस्ततो हविषः सुप्रगमनाः सन्तु । सामान्यमेवेदमाशास्तम् । यत्पुनस्तस्मिन्नेव वर्तमाने कर्म-ण्याशास्ते । अस्मिन्यज्ञे विश्रयन्तां विव्रियन्ताम् ऋतावृधः यज्ञवर्धयित्र्यः । या एता एवंलक्षणा द्वारोऽर्चिषो वा ता अस्याज्यस्य व्यन्तु । य आसां स्वां-शस्तं पिबन्तु । हे होतस्त्वमपि मया प्रेषितो यजैताः । एवमेव 'सुप्रा-

१ ग. ज. °धेयाः । ३७ । होता°; च. °धेयाः ४ । ३७ । होता° यास्क ०००० र्चिषः; झ. °धेयाः । होता°. २ ग. च. ज. व. झ. ट. ऋष्वा इति । मैत्रा°. ३ ठ. ड. इति प्रैषः । मैत्रा°. ४ क. ख. घ. झ. ट. ठ. विकर्तिताः. ५ क. ख. कुषिताः; घ. झ. ट. ठ. कषिताः. ६ क. ख. घ. ट. ठ. ड. °संवरणै°. ७ क. ख. ऋत्विजं प्रति द्वारः; व. झ. ठ. ड. ऋत्विजः प्रति द्वारः ; च. ऋत्विजां यदि द्वार° जः प्रति.

यणाः ' इति दुरामर्चिषां वा संनिधौ श्रूयमाणः सुप्रगमनाभिधायीत्युपपद्यते।[1]

' अप्रायुवः ' ( ३७ )[2] इत्यनवगतम्। ' अप्रमाद्यन्त ' इत्येवमर्थप्रतीतिः ॥ १८ ॥

---

५ देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे। देवा नो यथा सदा वर्धनाय स्युरप्रायुवोऽप्रमाद्यन्तो रक्षितारश्चाहन्यहनि च्यवन ऋषिर्भवति च्यावयिता स्तोमानां च्यवानमित्यप्यस्य निगमा भवन्ति। युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः। युवां च्यवनं सनयं पुराणं यथा रथं पुनर्युवानं

१० चरणाय ततक्षथुर्युवा प्रयौति कर्माणि तक्षतिः करोतिकर्मा रजो रजतेर्ज्योती रज उच्यत उदकं रज उच्यते लोका रजांस्युच्यन्तेऽसृगहनी रजसी उच्येते। रजांसि[3] चित्रा विचरन्ति तन्यव इत्यपि निगमो भवति हरो हरतेर्ज्योतिर्हर उच्यते उदकं हर उच्यते लोका हरांस्युच्यन्तेऽसृगहनी[4] हरसी उच्येते[5]। प्रत्यग्ने

१५ हरसा हरः शृणीहीत्यपि निगमो भवति। जुहुरे वि चितयन्तः। जुह्विरे विचेतयमाना व्यन्त इत्येषोऽनेककर्मा पदं देवस्य नमसा व्यन्त इति पश्यतिकर्मा वीहि शूर पुरोळाशमिति[6] खादतिकर्मा। वीतं पातं पयस उस्रियायाः। अश्नीतं पिबतं पयस उस्रियाया उस्रियेति गोनामोस्राविणोऽस्यां भोगा उस्रेति च[7]। त्वामिन्द्र मति-

२० भिः सुते सुनीथासो वसूयवः। गोभिः क्राणा अनूषत गोभिः कुर्वाणा अस्तोषत। आ तू षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः। आसिञ्च हरिं द्रोरुपस्थे द्रुममयस्य हरिः सोमो हरितवर्णोऽयमपीतरो हरिरेतस्मादेव। वाशीभिस्तक्षताश्मन्मयीभिः। वाशीभिरश्ममयीभिरिति वा वाग्भिरिति वा। स शर्धदर्यो विषु-

---

२५ १ क. ख. °पद्यते। २ ( १८ ); ठ. °पद्यते। इति निरु० टी० चतुर्थाध्याये अष्टादशः खण्डः. २ क. ख. घ. ट. ठ. ड. अङ्को नास्ति; ग. १९ (३८); च. ज. ३८. ३ छ. त. द. 'रजांसि० भवति' नास्ति. ४ छ. त. द. हरा उच्यन्ते. ५ छ. त. द. 'असृग० भवति' नास्ति. ६ क. ख. पुरोडाश°; छ. त. द. पुरोलाश°. ७ छ. त. द. ' उस्रेति च ' नास्ति. ९ छ. त. °षत ॥ १९ ॥ आ°;

३० द. °षत ॥ ३ ॥ आ°.

णस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः । स उत्सहतां यो विषुणस्य जन्तोर्विषमस्य मा शिश्नदेवा अब्रह्मचर्याः शिश्नं श्नथतेः । अपि गुर्ऋतं नः । सत्यं वा यज्ञं वा ॥ १९ ॥

'आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः । देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे' [ ऋ० सं० १ । ८९ । १ ॥ गोतमस्येयमार्षम् । अग्निष्टोमे [ आश्व० श्रौ ५।१८ ] महाव्रते च तृतीयसवने [ ऐ० आ० ५ । ३ । २ ] वैश्वदेवे शस्त्रे शस्यते । आयन्तु उपयन्त्वस्माकं भद्राः भन्दनीयाः स्तुत्याः क्रतवः सोमक्रतवः कामा वा विश्वतः सर्वतः सर्वदैव यथाविहितेषु कालेषु अदब्धासः अनुपहताः अविगुणाः कैश्चिदपि दस्युभिः अपरीतासः अपरिप्राप्तपूर्वा अस्मच्छत्रुभिः उद्भिदश्च उद्भेत्तार एषां त्रयाणामपि लोकानाम् । येषां फलेनैतांस्त्रीनपि लोकान्विन्देमहि तेऽ आगच्छन्तु । किंच । तथा च तेऽत्यर्थमविगुणा आगच्छन्तु यथा तैः परितोषिताः सन्तो देवाः सदैव नित्यमेवास्माकं वर्धनायोद्यता असन् । स्युरित्यर्थः । भाष्येऽपि 'स्युः' इत्येष एव पाठः । 'असन्' इत्येष प्रमादपाठः । अप्रायुवः अप्रमाद्यन्तः प्रमादमकुर्वाणाः । असंमुह्यमाना इत्यर्थः । वर्धयितारो रक्षितारश्च दिवेदिवे अहन्यहनि यथा स्युस्तथा ते सोमक्रतवः सगुणाः कामा वागच्छन्तु । अत्र 'अप्रायुवो रक्षितारः' इति रक्षितृशब्देन समानार्थसंनिवेशादप्रायुवशब्दस्याप्रमादार्थत्वम् । रक्षणे हि सत्यप्रमादस्येष्टत्वात् ।

अप्रायुव इत्यस्य

'च्यवनः' ( ३८ ) इत्यनवगतम् । 'च्यावनः' इत्येवमर्थप्रतीतिः । 'ऋषिर्भवति' इत्यभिधेयवचनम् । 'च्यवानमिति' एवम् 'अप्यस्य' ऋषेर्भृगुपुत्रस्य छन्दसि 'निगमाः' सन्ति । च्यवन इति प्रसिद्धमेवेति

१ क. ख. ३ ( १९ ); छ. त. २०; ङ. ४. २ ग. च. ज. भद्राः क्रतवो यन्त्विति । गोत°; घ. ट. भद्राः० दिवेदिवे. ३ ठ. ड. °द्वृध इति । गोत°. ४ च. एषां° वं. ५ क. ख. घ. झ. ट. °कानुद्भिन्दीमहि; ठ. ड. °कानुद्भिदीमहि. ६ ग. ज. तत्र. ७ क. ख. घ. झ. ट. ठ. ड. 'एव' नास्ति. ८ क. ख. घ. झ. ट. ठ. ड. 'असन्नि ०००० पाठः' नास्ति; च. असन्नित्येष प्रमादपाठः. ९ ग. ज. 'अपि' नास्ति; च. °त्येवम °स्य° प्य.

कृत्वा निगमं न पठति । इतरथा स्वप्रसिद्धमल्पप्रयोगं चैतदिति कृत्वा पठति ।

'युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः । निष्टौग्र्यमूहथुरद्भ्यस्परि विश्वेत्ता वां सवनेषु प्रवाच्या '[ ऋ० सं० १० । ३९ । ४ ] ॥ काक्षीवत्या घोषाया इयमार्षम् । च्यवान इत्यस्य प्रातरनुवाकाश्विनयोः शस्यते [ आश्व० श्रौ० ४ । १५ ] । अश्विनावुच्येते । हे अश्विनौ युवां च्यवानमृषिं च्यावयितारं स्तोमानां वृद्धं गमनासमर्थं सन्तं यथा सनयं चिरंतनं रथं गमनासमर्थं कश्चिच्छिल्पी गमनसमर्थं कुर्यादेवं पुनर्युवानं च्यवनमृषिं चरथाय चरणाय गमनार्थं ततक्षथुः । कृतवन्तौ स्थ इत्यर्थः । किंच । निष्टौग्र्यमूहथुः निरूहथुः निर्हृतवन्तौ स्थः तौग्र्यं तुग्र्याणामपां संघातं मेघम् । क्व पुनः निरूहथुः । अद्भ्यस्परि चिरंतनीनामन्यासामपामुपरि । अनुपक्षीणास्वेवान्यासु वार्षिका- स्वप्सु तासामेवोपरि लोकानुग्रहार्थमन्यमुदकसंघातं निरूहथुः । तान्येव- मादीनि कर्माणि विश्वा विश्वानि सर्वाणि युवयोः सवनेषु यज्ञेषु प्रातःसव- नादिषु वा प्रवाच्या प्रकर्षेण वचनीयानि स्तोतॄणाम् । एवमेतस्मिन्मन्त्रे च्यवानशब्देन च्यवन एव ऋषिरुक्तः । स हि श्रूयते सौकन्ये आख्याने [ महा० भा० वनप० १२४ ] जीर्णः सन्नश्विभ्यां पुनर्युवाकृत इति । तस्मादुपपद्यते । निगमप्रसक्तमुच्यते । 'युवा प्रयौति कर्माणि' मिश्रयति । 'तक्षतिः करोतिकर्मा ' । करोत्यर्थः ।

'रजः ' ( ३९ ) इत्यनेकार्थम् । 'रजतेः ' इति व्युत्पत्तिः । 'ज्योती रज उच्यते ' । तध्द्यनुरञ्जयति द्रव्याणि स्वेन प्रकाशेन । 'या ते अग्ने रजःशया तनूः ' [ वा० सं० ५ । ८ ] इत्येवमाद्युदाहरणं

१ ग. च. ज. °ठति । ३९ । युवं°. २ घ. ट. च्यवानं० प्रवाच्या. ३ ग. ज. रथमिति । काक्षी°. ४ घ. ट. ठ. °ना उच्ये°. ५ ठ. ड. °तारं देवान्प्रति प्रापयितारं स्तो°. ६ क. ख. घ. झ. ट. ठ. ड. सनयं वृद्धं; च. °मानां वृद्धं सनयं. ७ क. ख. घ. झ. ट. ठ. ड. 'सनयं ' नास्ति; च. सनयं. ८ ग. ज. तुग्रियाणां; च. तुग्रियाणां °ग्र्या. ९ क. ख. ग. ज. मेघानां; च. मेघानां घं; ठ. ड. मेघं तुग्रपुत्रं भुज्युं समुद्रस्योपरीति वा । क°. १० क. ख. च. घ. झ. ट. ठ. ड. करोतीत्यर्थः.

द्रष्टव्यम् । भाष्यकारस्तु प्रचुरत्वादेतेषु निगमान्न पठति ।

'उदकं रज उच्यते' । तदपि स्वेन स्नेहाख्येन गुणेनानुरञ्जयति[1] ।

उदकत्वाचिरजः- शब्दस्य निगमः

'भुवो[2] यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः । दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम्' [ ऋ० सं० १० । ८ । ६ ] । हे अग्ने त्वमेवास्य यज्ञस्य[3] भुवः पृथिवीलोकादन्तरिक्षलोकं[4] नेता । रजसः उदकस्य च नेता । 'अग्निर्वा इतो वृष्टिं समीरयति' इति हि वक्ष्यति [ निरु० ७ । २४ ] । क्व पुनर्नेता । यत्र यस्मिन् लोके नियुद्भिः अश्वजातिभिः शिवाभिः सुखतमाभिः सहितं[5] वायुम् अन्तरिक्षस्थानं सचसे संसेवसे[6] त्वं तत्र नेता मध्यस्थानानां देवानां स्थितये । किंच । त्वमेव दिव्यवस्थितं सर्वभूतमूर्धानं दधिषे धारयसि यज्ञाभिनिष्पन्नेनेतो लोकादूँढेन[7] हविषा स्वः[8]सां स्वराख्यमादित्यम् । किंच । त्वमेवैतां जिह्वां ज्वालामत्यद्भु-तामात्मनः सकाशाच्चकृषे पुनः[9] पुनः करोषि यास्मत्प्रत्तानि हवींष्युपक्ष-पयति[10] । यस्त्वमेवंगुणयुक्तस्तं त्वां वयमेतस्मिन् कर्मणि हव्यवाहं हविषां वोढारमनेन पुरोडाशाख्येन हविषा यजामः । पौर्णमासस्याग्नेयस्य[11][12] हविषो याज्यैषा ।

रजःशब्दस्यान्येऽर्थाः

'लोका रजांस्युच्यन्ते' । तेष्वपि हि प्राणिनो रज्यन्ते । 'त्वया दळ्हानि[13] सुकृतो रजांसि' इति व्याख्यातो निगमः' [ निरु० ४ । १७ ] । 'असृगहनी रजसी उच्येते' । असृग् रुधिरम् अहश्च[14] असृगहनी । ते अपि रजसी उच्येते । 'मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति' ( वासि० धर्म० २८ । ४ ) इति रुधिरस्योदाहरणम् । 'अहश्च कृष्णमहरर्जुनं च' इत्यह्न उदाहरणम् [ निरु० २ । २१ ] ।

---

१ क. ख. घ. झ. ट. ठ. ड. तदपि हि स्वेन. २ ग. च. ज. °यति । ४० । भुवो°. ३ ग. ज. व. ट. ठ. ड. यज्ञस्येति निगमः । हे अग्ने°; च. यज्ञस्येति निगमः ˇ । हे अग्ने° त्रिशिरास्त्वाष्ट्रः । अभिस्त्रिष्टुप्. ४ क. ख. घ. झ. ट. ठ. ड. °लोकादमुं लोकं. ५ ग. च. ज. इमां. ६ ग. ज. संवससे; च. संसवसे. ७ क. ख. लोकाहृतेन; च. लोकादूँढेन° ह. ८ ग. ज. 'स्वःसां' नास्ति. ९ घ. झ. ट. ठ. ठ. ड. 'पुनः' सकृदेव. १० ठ. ड. °क्षयति. ११ ग. ज. °मास आग्ने°. १२ ग. च. ज. °ग्नेयहवि°. १३ क. ख. ग. च. ज. दृढानि; घ. दृल्हानि. १४ क. ख. घ. झ. ट. ठ. ड. °धिरं असृक्च अह°; च. °धिरं ˇ अहश्च अ° असृक्च.

'हरः' (४०) इत्येतदप्येनकार्थम्। 'हरतेः' इति व्युत्पत्तिः। 'ज्योतिर्हर उच्यते'। तद्धि ह्रियते हरति वा स्नेहं विरूक्षीकरोति हरति वा तम इति हरः। 'या ते अग्ने हरःशया तनूः' 'अग्ने यस्ते हरस्तेन तं प्रति हर' इत्येवमादयः प्रचुरा एव निगमा इत्यत्रापि भाष्यकारो न पठति। 'उदकं हर उच्यते'। तद्धि ह्रियते प्राणिभिः जीवनाय। 'लोका हरांस्युच्यन्ते'। तेभ्यो हि क्षीणपुण्याः प्राणिनो ह्रियन्ते।

हरःशब्दस्यार्थाः

'जुहुरे' (४१) इत्यनवगतम्। 'जुह्विरे' इत्यवगमः।

'जुहुरे वि चितयन्तोऽनिमिषं नृम्णं पान्ति। आ दृळ्हां पुरं विविशुः' [ऋ० सं० ५। १९। २]॥ वव्रेरात्रेयस्यार्षम्। जुह्विरे जुह्वति येऽग्निं विचितयन्तो विचेतयमानाः कर्मकर्तृसाधनानां याथात्म्यं वेदान्तदर्शनेन जानाना ये च अनिमिषम् आदरवदवस्थानमात्मनः कृत्वा युक्तात्मानो नृम्णं योगबलमात्मनः कर्मणि वर्तमाने पान्ति। रक्षन्तीत्यर्थः। आह। य एवंगुणयुक्ताः किं तेषामिति। उच्यते। आ दृढ्हां पुरं विविशुस्ते। दृढां नित्यामनावृत्तये परब्रह्ममयीं पुरम्। इमामदृढां शरीरपुरं पापिष्ठां हित्वेत्यभिप्रायः। विचेतयमाना हि वेदप्रामाणिकाः सन्तो हवनादृते किमन्यत्कुर्युर्येन दृढां पुरमाविशेयुः। शब्दसारूप्यमपि च 'जुहुरे' इत्येतस्मिञ्छब्देऽस्त्येव। प्रकरणाच्चेयमाग्नेयी ऋक्। तस्मात् 'जुहुरे' इत्येष शब्दो हवनार्थ एवेत्युपपद्यते।

जुहुरे इत्यस्य निगमोऽर्थश्च

'व्यन्तः' (४२) इत्येषोऽनेककर्मा। यस्माद्धातोरयं शब्दोऽभिनिष्पद्यते स धातुरनेककर्मानेकार्थः। 'वी गतिप्रजनकान्त्यसनखादनेषु' (धा० २। ३८) इति। तद्यथा। 'पदं देवस्य नमसा व्यन्तः श्रवस्यवः श्रव आपन्नमृक्तम्। नामानि चिद्दधिरे यज्ञियानि भद्रायां ते रणयन्त संदृष्टौ' (ऋ० सं० ६। १। ४)॥ अत्र 'पश्यतिकर्मा'।

१ क. ख. ठ. ड. विरुक्षी°. २ ग. ज. हरा उच्य°. ३ ग. घ. ज. °ममः। । ४१। जुहुरे°. ५ क. ख. च. दृढां; ग. ज. दृल्हां. ४ घ. ट. चितयन्तो° विविशुः. ६ क. ख. घ. ट. ठ. ड. जुहुरे जुह्विरे°; च. °स्यार्षम्। "जुहुरे" जुह्विरे. ७ घ. ट. जानामाः; ठ. ड. जानीमाः. ८ क. ख. च. ज. दृढां; ग. झ. ट. दृल्हां. ९ ठ. ड. °न्त्यशन°. १० ग. घ. ज. °द्यथा। ४२। पदं°. ११ म. व्यन्तः श्रवस्यवः०। अत्र°; घ. ट. व्यन्तः ०संदृष्टौ. १२ क. ख. घ. झ. ट. इत्यत्र; च. दृष्टौ"। भरद्वा° इत्यत्र पश्यतिकर्मा.

पश्यत्यर्थे व्यन्त इत्यस्य निगमः

भरद्वाजस्येयमार्षम् । प्रातरनुवाकाश्विनयोः शस्यते ( आश्व० श्रौ० ४ । १३ ) । पशौ च विनियुक्ता ( आश्व० श्रौ० ३ । ६ ) । पदं स्थानमवस्थानं याथात्म्यमग्नेः देवस्य दानादिगुणयुक्तस्य व्यन्तः पश्यन्तो जानानाः । केन । नमसा नमस्कारेण स्तुत्या । मन्त्रेणेत्यर्थः । मन्त्रार्थपरिज्ञानादेव ह्यग्नेर[1]ध्यात्माधिदैवाधि[2]भूताधियज्ञेष्ववस्थानं याथात्म्यतो दृश्यते । पदशब्दो हि स्थाने प्रसिद्धः । पदस्थोऽयमिति हि वक्तारो भवन्ति लोके । अथवा नमसा अन्नेन हविराख्येनाभ्युद्यतेनेति योज्यम् । श्रवस्यवः श्रव इच्छमाना अन्नमात्मनः प्रार्थयमानाः । य एवमग्नेः स्तुतिभि[3]र्विद्वांसो याथात्म्यमन्नैर्वाभ्युद्यतैः श्रव इच्छमानाः पश्यन्तोऽग्निमुपासते किं तेषामिति । उच्यते । श्रव आपन् । किंलक्षणं पुनराप्नुवन्ति । अमृक्तम् अमृदि[4]तमनुपभुक्तमन्यैः । किंच । नामानि चित् ये चैते ग्रन्थमात्राध्येतारः केवलच्छान्दसा नामान्यपि च मन्त्रभावेनावस्थितानि धारयन्त्यनर्थज्ञा यज्ञियानि यज्ञार्हाणि तेऽपि भद्रायां भन्दनीयायामग्नेः संदृष्टौ संदर्शने रणयन्त रमयन्त्यात्मानम् । तानपि भद्रेण चक्षुषा पश्यत्येवाग्निरित्यभिप्रायः ।

एवमेतस्मिन्मन्त्रे '[5]पदं नमसा व्यन्तः श्रवस्यवः श्रव आपन्' इत्येतेषां पदानामेकवाक्ययोगात् 'व्यन्तः' इत्य[6]स्य शब्दस्य पश्यत्य[7]र्थतोपपद्यते ।

वीहि शूर पुरोलाशमित्यत्र खादतिक[8]र्मा । '[9]इमा ब्रह्म ब्रह्मवा[10]हः क्रियन्त आ बर्हिः सीद । वीहि शूर पुरो[11]ळाशम्' [ ऋ० सं० ३ । ४१ । ३ ] ॥ विश्वामित्रस्येयमार्षम् । रात्रिपर्यायेषु महारात्रिके पर्याये ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता [ आश्व० श्रौ० ६ । ४ ] । [12]इमानि

---

१ ग. ज. °ग्नेरध्या°. २ घ. ट. ठ. ड. °दैवाधियज्ञे°. ३ ग. ज. ठ. ड. °मग्नेस्तुति°; च. °मग्निस्तुति° ग्ने. ४ च. °दितं अनुपहृतं अनुर°. ५ क. ख. घ. झ. ट. ठ. ड. पदं दवस्य नम°; च. पदं ˇ नम° देवस्य. ६ च. इत्येतस्य. ७ क. ख. घ. झ. ट. ठ. ड. °त्यर्थोऽप्युप; च. °त्यर्थतो° र्थोऽप्यु. ८ क. ख. घ. झ. ट. ठ. ड. °पद्यते । इमा ब्रह्म°. ९ ग. च. ज. °कर्मा । ४३ । इमा°. १० ग. ज. °वाहः इति विश्वा°; ध. ट. °वाहः० पुरो°. ११ क. ख. पुरोडाशम्; घ. च. पुरोलाशम्; घ. ट. ठ. ड. पुस्तकेषु ऋचोऽनन्तरं 'इत्यत्र खादतिकर्मा' इति वर्तते. १२ क. ख. घ. झ. ट. ठ. ड. इमा इमानि; च. °युक्ता । ˇ इमानि° इमा.

अस्यामृचि व्यन्त इत्येष खादतिकर्मा

ब्रह्म ब्रह्माणि ऋग्यजुःसामाख्यानि स्वरसौष्ठवादियुक्तान्यस्माभिर्ब्राह्मणोऽस्य हविषो वहनसमर्थानि त्वां प्रति क्रियन्ते। उच्यन्त इत्यर्थः। यतो ब्रवीमि। हे इन्द्र आ बर्हिः सीद। आसीदेदं बर्हिः प्रति। आसीनश्चैतस्मिन् बर्हिषि वीहि भक्षयैतमस्मत्प्रत्तं हे शूर पुरोडाशम्। एवमेतस्मिन् मन्त्रे 'वीहि पुरोळाशम्' इत्येतस्मादेकवाक्यसंयोगात् 'वीहि' इत्येष शब्दः खादनार्थ इति प्रतीयात्। किमन्यद्बर्हिष्यासीन इन्द्रः पुरोडाशस्यान्यत्र भक्षणात्कुर्यात्। प्रसिद्धं च कठिनद्रव्यस्य लोके भक्षणं भक्षयति मोदकादीनिति। तस्मात्सामर्थ्याद्भक्षणार्थोऽयमित्युपपद्यते।

वीतं पातमित्यत्राशनार्थः

'वीतं पातं पयसः' इत्यत्राशनार्थः। 'उत वां विक्षु मद्यास्वन्धो गाव आपश्च पीपयन्त देवीः। उतो नो अस्य पूर्व्यः पतिर्दन्वीतं पातं पयस उस्रियायाः' [ ऋ० सं० १। १५३। ४ ]॥ मैत्रावरुण्येषा। त्रिष्टुप्। दीर्घतमस आर्षम्। मित्रावरुणावुच्येते। उत वाम् अपि युवयोरेतासु विक्षु मद्यासु एतेषु मनुष्येषु मदयितृषु वर्तमानमेतत् अन्धो हविर्लक्षणं यदेतदेतस्मिन्नहनि एभिर्मनुष्यैर्भवद्भ्यां देयं पयस्याख्यमाज्याख्यं च तदेता गावः एताश्चापः देवीः दानादिगुणयुक्ता आसां गवामुपकारं कुर्वन्त्यः पीपयन्त। वर्धयन्तीत्यर्थः। यदेतदशनपानयोग्यमाज्यसांनाय्यलक्षणमाभिरद्भिर्गोभिश्च युवयोरन्धो वर्ध्यते उतो नो अस्य अप्यस्य हविषोऽस्मत्पूर्वो यजमानः पतिः। पूर्वं हि द्रव्यस्य यजमानः पतिर्भवति। ततः स तदृत्विग्भ्यः समर्पयति देवतायै संस्कुरुतैतदिति। ततस्ते तस्य हविषः पतयो भवन्ति।

१ च. पुरालाशम्. २ क. ख. घ. झ. ट. ठ. ड. वीहि शूर पुरो°; च. वीहि पुरो° शूर. ३ क. ख. ग. च. ज. घ. ट. पुरोडाशम्. ४ क. ख. घ. ट. ठ. ड. °वाक्यसंयो°. ५ घ. झ. ट. ठ. ड. °नार्थः प्रतीयते. ६ क. ख. घ. झ. ट, ठ. ड. °लोके कठिनद्रव्यस्य भ°. ७ क. ख. घ. झ. ट. ठ. ड. मोदकादीनि। तस्मा°; ग. ज. मोदकानिति. ८ ग. च. ज. °नार्थः। ४४। उत. ९ ग. ज. °स्वन्ध इति; घ. ट. °स्वन्धः ० उस्रियाया. १० ठ. ड. उत अपि वां युव°. ११ क. ख. घ. झ. ट. ठ. ड. 'एतत्' नास्ति; च. यदेतद्देत°. १२ क. ख. घ. झ. ट. ठ. ड. तदनन्तरं.

तानपेक्ष्य यजमानः पूर्व्यः पतिः । तदपेक्ष्यैव ऋत्विज आहुः । योऽस्मत्तः पूर्व्यः पतिरस्य हविषः अपि स दन् भवति । ददादित्यर्थः । तेनाप्येतद्भवन्तावेवोद्दिश्यास्मान्प्रत्युत्सृष्टम् । एवमपि स दन्भवति । अपि वयं यथाव्यादिष्टमेव तेन पूर्वेण हविष्पतिना भवद्भ्यामेतद्दद्मः । तौ युवामस्य हविषः पयस्याख्यस्य उस्रियायाः पयसा निष्पन्नस्य नातिकठिनस्याशनयोग्यस्य स्वं भागमस्माभिर्दीयमानं वीतम् । अश्नीतं युवामित्यर्थः । पिबतं च यदेतदाज्यस्य स्वं भागमुपस्तरणाभिघारणसंबद्धम् ।

व्यन्तोऽशनार्थ इति निर्वचनस्य कारणम्

एवमस्मिन् मन्त्रे 'उस्रियायाः पयसा निष्पन्नस्य' इति श्रूयमाणे पयस्याज्ये प्रतीयेते । तयोराज्यं पेयं तत् 'पातम्' इत्यनेन संबध्यते । पारिशेष्यात् 'वीतम्' इत्यस्य शब्दस्य पयस्यया सह संबन्धः । सा च नातिकठिना नातिद्रवाशनयोग्या । तस्मात् 'वीतम्' इत्येष शब्दोऽशनार्थ इत्युपपद्यते । लोकेऽपि हि नातिकठिने नातिद्रवेऽशनशब्दः प्रसिद्धोऽश्नाति पायसमिति । निगमप्रसक्तमुच्यते । 'उस्रियेति गोनाम' । 'उस्राविणो' हि तस्याः सकाशात्क्षीरादयो 'भोगाः' भवन्ति ।

'क्राणाः' (४३) इत्यनवगतम् । 'कुर्वाणाः' इत्यर्थप्रतीतिः । 'गोभिः क्राणा अनूषत' इति निगमः । 'गोभिः कुर्वाणा अस्तोषत' इति निर्वचनम् । त्वामिन्द्रेति शेषः । 'त्वामिन्द्र मतिभिः सुते सुनीथासो वसूयवः । गोभिः क्राणा अनूषत' ॥ हे इन्द्र त्वामस्मिन्सोमे मतिभिः सुते

क्राणा इत्यस्य प्रयोगोऽर्थश्च

मेधाविभिरभिषुते सोमे । य एव हि मतिमन्तस्त एव हि सोममभिषोतुं शक्नुवन्ति नेतरे मतिहीनाः । सुनीथासः । सुष्ठु ये स्तोतुं शक्नुवन्ति ते सुनीथाः । वसूयवो वसुकामाः । आह । किमेते कुर्वन्ति

---

१ क. ख. घ. झ. ट. ठ. ड. 'अपि' नास्ति; च. अपि. २ घ. ट. दत् भद्भवति; झ. दन् भद्भवति; ठ. ड. दद्भवति. ३ क. ख. घ. झ. ट. ठ. ड. हविःप°. ४ ठ. ड. पयसां. ५ घ. झ. ट. ठ. ड. पातं पिब°. ६ ग. च. ज. उस्त्रियापय°. ७ क. ख. घ. झ. ट. ठ. ड. °द्रवेऽश्नातिशब्द°; च. द्रवेशनशब्द° श्नाति. ८ क. ख. घ. ट. ड. उत्स्रावि°. ९ ग. च. ज. शेषः । ४५ । त्वा°. १० क. ख. ग. ज. घ. ट. ठ. ड. मतिभिः मतिमद्भिः सुते°; च. मतिभिः सुते° मतिमद्भिः. ११ च. धनकामाः°.

मतिभिः सुते मेधाविभिरभिषुते सोमे । उच्यते । गोभिर्वाग्भिः स्तुतिलक्षणाभिः अस्मिन्नभिषुते सोमे आभिमुख्येन कुर्वाणा अनूषत अस्तोषत । स्तुवन्तीत्यर्थः । अभिषुतेषु[1] सोमेषु किमन्यदाभिमुख्यकरणादिन्द्रस्य गोभिः सुनीथाः स्तुवन्तः कुर्युः । तस्मात् 'क्राणाः' इत्येष शब्दः 'कुर्वाणाः'
५ इत्येवमुपपद्यते ।

'वाशीभिः' (४४) इत्येतदनवगतं पक्षेण चानेकार्थम् । 'वाशीभिरश्मेमयीभिरिति वा वाग्भिरिति वा' इति शब्दसमाधी । 'वाश्यः' एवाभिधेया 'वाचो' वा[3] । 'आ तू षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः । परि ष्वजध्वं दश कक्ष्याभिरुभे धुरौ प्रति वह्निं युनक्त (ऋ०
१० सं० १० । १०१ । १० ) ॥ बुधस्य सोमपुत्रस्येयमार्षम् । आसिञ्च प्रक्षिपैतं हारितवर्णं सोमम् । क्व । द्रोरुपस्थे ।

वाशीभिरित्यस्य — द्रुममयस्याधिषवणफलकद्वयस्योपरि । एवं तावदध्वर्युरुक्तः । स हि सोममुपावहरति । अधुनेतरानभिषवकर्तॄन् ब्रवीति । यूयमप्यनेनाध्वर्युणोपावहृतमेनं सोममधिषवण-
१५ फलकयोरुपरि वाशीभिः एताभिरश्मर्मयीभिः तक्षत कुट्टयत । अभिषुणुतेत्यर्थः । 'ग्रावभिरभिषुण्वन्ति' इति ह्युक्तम् । अथवाऽयमन्योऽस्यार्धर्चस्यार्थः ।

वाशीभिरश्मन्मयीभिरित्यस्यार्थविकल्पे 'आसिञ्च' इत्यस्याप्यर्थविकल्पः — हे उन्नेतः आसिञ्च प्रक्षारय तं हारितवर्णं सोममनेन कलशेन । क्व । द्रोरुपस्थे । द्रोणकलशस्योपरि । यूयमपि च हे होतार आसि-
२० च्यमानमेनं सोमं वाशीभिः वाग्भिः स्तुतिलक्षणाभिः तक्षत संस्कुरुत । यदस्यायज्ञियमपूतं तत्स्तुतिभिः पुनीतेत्यभिप्रायः । अश्मन्मयीभिः व्यापनसमर्थाभिरित्यर्थः । यूयमपि च हे अध्वर्यवः पूतमेतमुद्गातृभिः सोमं परिष्वजध्वं ग्रहेषु

१ ग. ज. °षुतेषु तेषु सो°. २ ग. ज. °श्मन्मयी°; च. °श्मर्न्मयी° म. ३
२५ ग. वा । ११/४६ । आ°. ४ ग. ज. हरिमीं द्रोरुपस्थे इति । बुध°; च. हरिमीं द्रोरिति । बुध°; घ. ट. हरि० युनक्त. ५ क. ख. घ. झ. ट. ठ. ड. 'इयं' नास्ति. ६ क. ख. ग. ज. ठ. ड. °श्मन्मयी°. ७ क. ख. घ. झ. ट. ठ. ड. संस्कुरुत; ग. ज. संस्कुरुत कुट्टयत; च. °क्षत कुट्टयत° संस्कुरुत. ८ घ. ट. ठ. ग्रावभिषुण्व°; ड. ग्रावभिः षुण्व; च. ग्रावभिः षुण्व° भिरभि. ९ क. ख. ग. ज.
३० °स्यार्धस्यार्थः. १० क. ख. ग. ज. 'च' नास्ति.

स्थालीषु च कक्ष्याभिः अङ्गुलीभिः । अङ्गुलीभिरेव हि पात्रस्थः सोमो गृह्यते । यदेव चेदं ग्रहणमेव एव तस्य परिष्वङ्गः । परिष्वज्य च गृहीत्वैनं सोममुभे हविर्धानधुरौ प्रति वह्निमिव वोढारमिवानड्वाहं युनक्त । एतं सोमं सादयतेत्यर्थः । स हि सोमो हविर्धानधुरोरधस्तात्खरे साद्यते । एतस्मादेव चानुडुद्योजनप्रदेशसामान्याद्वह्निमिव युनक्तेति लुप्तोपमत्वमुपपद्यते । अत्र 'वाशीभिस्तक्षत' इति तक्षणयोगादश्ममय्यो वाश्य एता ग्रावाख्या इति प्रथमस्यार्थस्योपपत्तिः । एतस्मिन्नर्थे 'आ तू षिञ्च' इत्यासेकशब्दो गौणः । न हि सोमांशूनामनभिषुतानामासेकोऽस्ति कठिनत्वात् । तस्मादेतस्मिन्नर्थे प्रक्षेपणमात्रमेव सिञ्चतेरर्थः । अथवा 'आसिञ्च हरिमीं द्रोरुपस्थे' इत्यतोऽनन्तरं वाशीशब्दः श्रूयमाणो वाङ्नामधेयत्वेनाप्युपपद्यत एव । सोमो हि द्रोणकलशस्योपर्यासिच्यमानो वाग्भिः स्तूयते । एवमर्थद्वयमभिप्रेत्योभयथा भाष्यकारेणोक्तं वाशीभिरश्ममयीभिरिति वा वाग्भिरिति वा' इति ।

'अयमपीतरो हरिः' मर्कटः 'एतस्मादेव' इति हरितवर्णत्वाद्धरिरुच्यते । 'शिरीषकुसुमप्रख्याः केचित्पिङ्गलकप्रभाः । वानरा' इति श्रूयन्ते रामायणे ।

'विषुणस्य' (४५) इत्येतदनवगतम् । 'विषमस्य' इत्यवगमः । 'न यातव इन्द्र जूजुवुर्नो न वन्दना शविष्ठ वेद्याभिः । स शर्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः' इति [ऋ० सं० ७ । २१ । ५ ] ॥ वसिष्ठस्येयमार्षम् । त्रिष्टुप् । उन्नीयमानसूक्ते माध्यंदिने सवने शस्यते [ आश्व० श्रौ० ५ । ५ ] । हे भगवन्निन्द्र तथा कुरु यथा नैनमस्मद्यज्ञं यातवो यातयितारो यज्ञविघ्नकर्तारः केचिदपि जूजुवुः । आगच्छेयुरित्यर्थः । किंच । हे शविष्ठ बलिष्ठ य एते वन्दनाः वन्दितारः लाडगौडादयो जानपदीभिर्वेद्याभिः वेदितव्याभि-

विषुणस्येत्यस्य प्रयोगोऽर्थश्च

१ ग. ज. 'अङ्गुलीभिः' नास्ति; च. °क्ष्याभिरङ्गुलीभिरेव° ङ्गुलीभिः । अ. २ ट. खरे° स्थण्डिले; ठ. ड. स्थण्डिले. ३ क. ख. घ. झ. ठ. ड. °जनदेशं प्रति सामा°; ट. °जनदेशं प्रति सामा° प्रदे. ४ क. ख. घ. झ. ट. ठ. ड. °पममुप°. ५ घ. ठ. कठिणत्वात् ; ट. कठिणत्वात्° न. ६ क. ख. घ. झ. ट. ठ. ड. आसिञ्चत; च. आसिञ्च० ह° त. ७ ग. च. ज. °प्रभा इति वानराः स्तूयन्ते रामा° (च. स्तूय° श्रू). ८ घ. ट. श्रूयन्ते० रामायणे; ठ. ड. श्रूयन्ते इति रामायणे. ९ ग. °गमः । ४७ । न या°. १० ग. ज. °वुर्न इति । वासि; °घ. ट. जूजुवु० ऋतं नः. ११ क. ख. घ. झ. ट. ठ. ड. नेममस्म°; घ. नैनमस्म° नेम.

राकृतिभिर्युक्ताः किं ब्राह्मणा एते स्युरुतान्यजातीयाः केचिदिति । अथवा वेदितव्याभिः प्रवृत्तिभिर्युक्ताः । न हि तासां प्रवृत्तीनामन्तोऽस्ति याभिस्ते प्रवर्तन्ते चपलत्वात् । किंच । येऽपि चैते श्रोत्रिया अपि सन्तः शिश्नदेवाः शिश्नेन नित्यमेव प्रकीर्णाभिः स्त्रीभिः साकं क्रीडन्त आसते श्रौतानि कर्माण्युत्सृज्य तेऽपि युष्मदनुग्रहादिदमस्माकम् ऋतं यज्ञं मा अपिगुः मा आगच्छन्तु । नास्माकं तैरपि यज्ञमभिगच्छद्भिरर्थोऽस्तीत्य-भिप्रायः । आह । कीदृशास्तर्हि तं[1] यज्ञमागच्छन्त्विति । उच्यते । स शर्धत् स एवोत्सहतामिममस्मद्यज्ञमागन्तुं य एव अर्यः ईश्वर आत्मीयानामिन्द्रियाणाम् । जितेन्द्रिय इत्यर्थः । यश्च विषुणस्य विषमस्य यज्ञविध्वंसयितुः जन्तोः मनुष्यस्य निग्रहाय समर्थः । येन परिपाल्यमाना एतं यज्ञमविघ्नेन समापयेमहीत्यभिप्रायः । एवमेतस्मिन्मन्त्रे 'यातवो वन्दनाः शिश्नदेवाश्च मा आगच्छन्तु' इति प्रतिषेधेष्वेतेष्वनिष्टत्वा-देतेषां 'स शर्धदर्यः' इति[2] श्रूयमाणमर्थवृत्तमनुष्याभ्यागमनविषयमे-तद्भवति तस्येष्टत्वात् । स चाभ्यागतः सन्नवश्यं विषुणस्य विषमस्य मनुष्यस्य निग्रहं करोति । तस्मात् 'विषुण'शब्दो विषमस्येत्युपपद्यते । यदा तु ऋतशब्दस्य 'सत्यं वा' इत्येतदर्थवचनं भवति तदाऽस्माकमर्थसतत्त्वमेवंलक्षणाः[3] पापकर्माणो मा विदुरित्येवं योज्यम् । अपिगुरिति[4] चैष गमिस्तदा ज्ञानार्थः । एवमप्युपपद्यत इत्यतो भाष्यकारेणोक्तं 'सत्यं वा यज्ञं वा' इति ।[5]

ऋतशब्दस्य सत्यार्थे 'अपिगुः' इत्यत्र गमिर्ज्ञानार्थः

'जामिः' (४६) इत्येतदनेकार्थम् । 'भगिनी बालिशः पुनरुक्तं' चास्याभिधेयानि । प्रकरणादेवैतेषामन्यतमस्मिन्नवतिष्ठते[6] । यथा तावद-[7]नेन भागिन्युच्यते तथेदमुदाहरणम् ॥ १९ ॥[8]

---

१ क. ख. घ. झ. ट. ठ. ड. 'तं' नास्ति; च. तं. २ क. ख. घ. झ. ट. ठ. ड. प्रतिषिद्धेष्वेतेष्व°; ग. प्रतिनिषिद्धेष्वेतेष्व°; ज. °च्छन्त्विति निषिद्धे-ष्वेतेष्व°; च. प्रतिनिषेधेष्वनि° षिद्धेष्वेते. ३ क. ख. घ. झ. ठ. ड. °स्माकमृतं सत्यमेवंल°; च. °स्माकमर्थसतत्त्वमे° मृतं सत्य. ४ क. ख. घ. झ. ट. ठ. ड. मा अपि गुरि°. ५ ठ. ड. इति १९ इति निरुक्तटीकायां चतुर्थाध्याये एकोनविं-शतिः खण्डः । जामि°. ६ क. ख. °तममस्मि; च. °तम`स्मि° म. ७ क. ख. घ. झ. ट. ठ. ड. यथानेन तावद्भागि°. ८ क. ख. ३ (१९); ग. २० । ४८; इतरेष्वङ्को नास्ति.

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि । उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ( ऋ० सं० १० । १० । १० ) ॥ आगमिष्यन्ति तान्युत्तराणि युगानि यत्र जामयः करिष्यन्त्यजामिकर्माणि जाम्यतिरेकनाम बालिशस्य वासमानजातीयस्य वोपजन उपधेहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मदिति व्याख्यातम् ॥ २० ॥

---

आ घा ता गच्छानुत्तरा युगानीति । यमी किल यमं प्रार्थयांचकारेहि मैथुनाय संगच्छावहा इति । तामकामयमानोऽसावनयर्चा प्रत्युवाच । आ घा ता गच्छान् । 'घा' इत्यनर्थक एव । आगच्छान् आगमिष्यन्तीत्यर्थः । आह । कानि । उच्यते । तान्युत्तराणि युगानि । आगमिष्यन्ति तेऽपि कालाः । न तावत्सांप्रतं वर्तन्ते इत्यभिप्रायः । येषु किम् । येषु जामयो भगिन्यो भ्रातृणाम् अजामियोग्यानि मैथुनसंबन्धानि कर्माणि करिष्यन्ति । कलियुगान्ते हि तादृशः संकरो भवति । न चेदं कलियुगं वर्तत इत्यभिप्रायः । यतो न तावदद्यापि संकीर्णो वर्णसंकरधर्मः स्वाचारा एव तावत्प्रजा अतो ब्रवीमि । उपबर्बृहि उपधेहि । कस्मै । वृषभाय यस्तवोपरि रेतः सेक्तुमन्यकुलजो योग्यस्तस्मै । किमुपबर्बृहीति । बाहुं शयनीये । सर्वथा प्रार्थ्यमानोऽप्यहं तव पतिर्न भविष्यामीति । यतो ब्रवीमि । अन्यमिच्छस्व अन्यमन्वेषयस्व हे सुभगे पतिं मत् । मत्त इत्यर्थः । एवमेतस्मिन्मन्त्रे सूक्ते वा संवादाधिकाराज्जामिशब्देन भगिन्युच्यते इत्युपपद्यते ।

'जामि' इत्येतदेव स्वरान्तशब्दरूपम् 'अतिरेकनाम' भवति । पुनरुक्तनामेत्यर्थः । तदुत्तरत्र लक्षणतो वक्ष्यति ।

जामिशब्दस्यार्थाः 'तद्यत्समान्यामृचि समानाभिव्याहारं भवति तज्जामि भवति' ( निरु० १० । १६ ) इति ।

पुनरुक्ताभिधानत्वे जामिशब्दस्य पर्येष्यो निगमः । 'बालिशस्य वा' ।

---

१ क. ख. ४ ( २० ); छ. त. २१; द. ५. २ क. ख. ता० मत् । इतीयं यमी°; घ. ट. ता गच्छा० पतिं मत् । इतीयं यमी°; ठ. ड. ता गच्छेति । इतीयं यमी । ऋषिका यमं°. ३ ग. च. ज. वर्तते. ४ क. ख. घ. झ. ट. 'यः' नास्ति. ५ क. ख. घ. झ. ट. भविष्यति. ६ च. °द्यत्सामान्या°. ७ ग. च. ज. समना°. ८ क. ख. घ. झ. ट. °नत्वेन जा°

२१

बालिशस्यैतदेव नाम । बालिशो मूर्खः । स हि बाल इव शेते प्रमादित्वाद्धर्मकार्येषु । एतस्यापि पर्येष्यो निगमः । असमानजातीयो हि पुरुषस्य भगिन्याख्यो भ्राता । सा हि स्त्रीत्वादेवातुल्यजातीयैव पुरुषस्य भवति । जामिरित्येतस्मिञ्शब्दे 'मिः' इत्येष 'उपजनः'। यदेवोक्तं भवति 'जा'
५ इति तदेव जामीति । उभयथापि मन्त्रेषु प्रयोगो द्रष्टव्यः । अन्यमिच्छस्व सुभगे पतिं मदिति व्याख्यातम् । निगदेसिद्धमेवैतदित्यर्थः । अथवैतानि पदान्यधस्तात्तत्र तत्र व्याख्यातानि । तद्यथा । 'अन्यो नानेयः' [ नि० १ । ६ ] इत्येवमाद्युपेक्षितव्यम् ।

'पिता' इत्यनवगतम् । 'पाता वा पालयिता वा' इत्यवगमः
१० ।२०।[3]

---

द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम् । उत्तानयोश्चम्वो[4] र्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात् ( ऋ० सं १ । १६४ । ३३ ) ॥ द्यौर्मे पिता पाता वा पालयिता वा
१५ जनयिता नाभिरत्र बन्धुर्मे माता पृथिवी महतीयं बन्धुः संबन्धनान्नाभिः संनहनान्नाभ्या संनद्धा गर्भा जायन्त इत्याहुरेतस्मादेव ज्ञातीन् सनाभय इत्याचक्षते संबन्धव इति च ज्ञातिः संज्ञानात् । उत्तानयोश्चम्वो[4] र्योनिरन्तः । उत्तान उत्ततान ऊर्ध्वतानो वा तत्र पिता दुहितुर्गर्भं दधाति पर्जन्यः पृथिव्याः शंयुः सुखंयुः[5] ।
२० अथा नः शंयोररपो दधात ( ऋ० सं० १० । १५ । ४ ) । रपो रिप्रमिति पापनामनी भवतः शमनं च रोगाणां यावनं च भयानामथापि शंयुर्बार्हस्पत्य उच्यते । तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतय इत्यापि निगमो भवति । गमनं यज्ञाय गमनं यज्ञपतये ॥ २१[6] ॥
२५

---

इति[7] चतुर्थाध्यायस्य तृतीयः पादः ॥

---

द्यौर्मे पितेति । अस्यवामीये[8] दीर्घतमस आर्षम् । तृतीयसवने[9] वैश्वदेवे

---

१ क. ख. घ. झ. ट. ठ. ड. मन्त्रे; च. मन्त्रेषु. २ च. निगमप्रसिद्ध° द. ३ क. ख. ४ ( २० ); ग. २१/४१; इतरेष्वङ्को नास्ति. ४ ठ. ड. २. ५ क. ख. छ. त. द. सुखंयुः. ६ क. ख. ५ (२१); छ. त. २२; द. ६. ७ ङ. थ. ध. 'इति° पादः' नास्ति; छ. इति तृती°; त. चतुर्थाध्याये तृती°; द. इति नैरुक्तस्य चतु°.
२३ ८ क. ख. घ. झ. ट. °पितेतीयमस्यवा°. ९ च. °तीये स°.

शस्यते [ ऐ० आ० ५ । ३ । २ ] । द्यौर्मे पिता । येयं द्यौरुपरिस्थित-लोकाख्या एषैव मम पिता । 'द्यौरहम्' [ आश्व० गृ० १ । ७ । ६ ] इत्येवं वैवाहिके कर्मणि द्युलोकभावेन पित्रात्मानमभिसंपाद्यमानं दृष्ट्वैवमाह मन्त्रदृक् 'द्यौर्मे पिता' इति । जनिता जनयिता । उत्पादयितेत्यर्थः । आह । कथम् । उच्यते । नाभिरत्र । नहनमेव नाभिः । अत्र एतस्मिन् द्युलक्षणे पितर्युदकदानेनानुग्रहीतारि सति संतानोत्पत्त्यनुग्रहक्रमेणैव शुक्रात्मनोत्पत्तिरुपपद्यत इत्येवमभिसमीक्ष्योक्तं 'द्यौर्मे पिता जनिता नाभिरत्र' इति । बन्धुर्मे । अङ्गसंबन्धकारणाद्बन्धुः । मे माता पृथिवी मही । 'पृथिवी त्वम्' [ आश्व० गृ० १ । ७ । ६ ] इति मातुर्मन्त्रेण पृथिवीत्वं संपाद्यमानं दृष्ट्वैवमाह 'बन्धुर्मे माता पृथिवी महीयम्' इति । उदकं हि द्युलोकात्पतितं पार्थिवेन धातुना संपृक्तमोषधिभावमागम्य शरीरभावेनावतिष्ठत इत्येतदपेक्ष्य सर्वभूतानां द्यावापृथिव्यौ मातापितरावुच्येते तत्र तत्र । तद्यथा । 'यदन्तरा पितरं मातरं च' [ ऋ० सं० १० । ८८ । १५ ] । इत्येवमादि । तत्कृतस्य ह्युपकारस्याभावे सतीतरौ मातापितरावकिंचित्करावेव भवतः । तस्मादुपपद्यते द्यावापृथिव्योर्मातापितृभावः । आह । किमेते द्यावापृथिव्यावन्यत्किंचिदनपेक्ष्यैव सर्वभूतानां मातापितृभावं बिभृत उतान्यदपि किंचिदपेक्षेते इति । उच्यते । अनयोः चम्वोः द्यावापृथिव्योः उत्तानयोः । ऊर्ध्वमेव ह्यनयोरन्तरा च प्रविधारणीयः[9] 'अन्तः'[10] प्राणस्तत इत्युत्ताने द्यावापृथिव्यौ । 'प्राणेन हीमे वायुना सूत्रभूतेन विधृते तिष्ठतः' । एतयोर्द्यावापृथिव्योरुत्तानयोर्य एषोऽन्तरिक्षाख्योऽन्तर्मध्ये योनिरत्रैतस्मिन्नवकाशदानोपकारत्वे[11] प्रवृत्ते सति पिता पर्जन्यो द्युलोकाख्यः ।

'पिता' इत्यस्य निगमः

द्यावापृथिव्योर्मातापितृभावस्योपपत्तिः

अयं मातापितृभावोऽन्तरिक्षायत्तः

५ १० १५ २० २५

१ क. ख. घ. झ. ट. ठ. ड. स्थिता द्युलोका°; च. स्थितलो° ता द्यु. २ ग. घ. ज. °संपद्य°. ३ क. ख. घ. झ. ट. ठ. ड. द्युलोकलक्ष°; च. द्यु-लक्ष° लोक. ४ क. ख. घ. झ. ट. ठ. ड. °महीयमिति मातु°; च. °मही पृथिवी त्वं° प. ५ घ. इति तद° ए. ६ च. °दपेक्ष्येते. ७ च. °नयोश्च द्यावा° व्योः. ८ क. ख. घ. ट. ठ. ड. ह्येनयो°; च. ह्यनयो° ह्ये. ९ क. ख. घ. ट. ठ. ड. प्रतिधा°. १० च. °णीयोः अन्तः. ११ क. ख. ग. ज. °पकारप्र°; च. °पकारत्वे प्र°.   २१

द्यौरेव हि रसान् प्रार्जयति तस्मात्सैवात्र पर्जन्यशब्देन भाष्यकारेणोक्ता। दुहितुः पृथिव्या उपरि गर्भं सर्वभूतगर्भोत्पत्तिहेतुभूतोदकम् आधात् आदधाति। ददातीत्यर्थः। अत्र पृथिव्येव दुहितृशब्देनोक्ता। सा हि द्युलोकाद्दूरे निहिता। दोग्धेर्वा। सा हि दोग्धि द्युलोकमिति[1] दुहिता। सा हि द्युलोकात्पतितमुदकमुपजीवत्येव। द्यावापृथिवीभ्यामन्तरिक्षेण[2] चावकाशदानेनानुगृह्यमाणान्येतान्यस्मदादीनि भूतान्युत्पद्यन्त इत्येतदनेन मन्त्रेण मन्त्रदृशा ख्यापितम्। अत्र मातृसंबन्धात्[3]पितृशब्दः पितर्येवेत्युपपत्तिः। पिता माता चायम्। एतदाशासनं मन्येते[4]।

अस्मिन्मन्त्रे शंयोरित्यस्य पञ्चम्यर्थे षष्ठ्यर्थे वा न काप्युपपत्तिः

'शंयोः' [ ४८ ] इत्यनवगतं[5] पञ्चम्यन्तं वा[6] षष्ठ्यन्तं वा सत्[7]। न चैवं यजमानोऽर्थी[8]त्तस्माद्बृहस्पतिपुत्रादर्थमपेक्षते[9] ममैते[10] पितरः किंचिदर्थं विदध्युरिति। किं कारणम्। स्वत एव हि ते विधातुं समर्थाः। न च बृहस्पतिपुत्रस्य शंयोः[11] किंचिदेभिः पितृभिर्विधीयेतेति। एवं पञ्चम्यर्थासंभवं षष्ठ्यर्थासंभवं[12] च पश्यन् भाष्यकारः शंयोरित्येकं पदं द्वितीयान्ते द्वे पदे चकार शमिति योरिति च। शमित्यस्य 'शमनम्'

---

१ क. ख. घ. झ. ट. ठ. ड. द्युलोकं दोग्धीति. २ क. ख. ग. ज. घ. ट. ठ. ड. एवं द्यावा° ३ क. ख. घ. झ. ट. मातृपितृसंब°. ४ ग. ज. मन्येत। पञ्च°; च. मन्येते। पञ्च° त। शंयोरित्यनवगतं; ठ. ड. मन्येत। अथा नः शंयोररपो दधातेति। शंयोः. ५ ठ. ड. °गतं बर्हिषदः पितर इति सर्वा ऋक् पठ्यते तदनन्तरं शंयोरिति पञ्च°. ६ घ. झ. ट. ठ. ड. 'वा' नास्ति. ७ घ. ट. ठ. ड. सन्; च. सन्° त्. ८ च. यजमानेनार्थ्यं ( र्थ्यं? ) नाप्येतस्माद् बृहस्पतिपुत्रकस्य शंयोर्ममैते पितरः किंचिदर्थं विदध्युरिति किं कारणं। स्वत एव हि ते विधातुं समर्थाः। षष्ठ्यर्थमर्थी तस्य किंचिदेभिः पितृभिर्विधीयेतेति (ट. सदृशपुस्तकानुरोधेनायं पाठः परिवर्तितः ). ९ ग. ज. °स्पतिपुत्रीकयोर्ममैते पितरः किंचिदर्थं विदध्युरिति किं कारणे। स्वत एव हि ते विधातुं समर्थास्ताप्यमर्थी तस्य किंचिदेभिः पितृभिर्विधीयेतेति. १० क. ख. घ. झ. ट. ठ. ड. 'ममैते........दध्युरिति' नास्ति. ११ क. ख. घ. झ. ट. ठ. ड. शंयोर्मम पितरः किंचि°. १२ ग. ज. 'षष्ठ्यर्थासंभवं' नास्ति.

तस्मात् 'शं योः' इति द्वे पदे

ईत्यर्थं निराह योरित्यस्य 'यावनम्' इति। एवं द्वितीयान्तेन विपरिणामं कृत्वार्थं निराह तथाहि वाक्येन संबध्यत इति। कस्य शमनं कस्य वा यावनमिति पुनः पर्यनुयोगे प्राप्ते 'रोगाणां भयानां च' इत्यध्याजहार भाष्यकारः। रोगशमनं च दधात भययावनं च। शान्तरोगाश्च यथा स्याम प्रहीणसर्वभयाश्च तथा कुरुतेत्यभिप्रायः। किमेतावदेव। नेत्युच्यते। यदपि चान्यत्किंचित् अरपः अपापं तदपि चास्मभ्यमेव दधात। दत्तेत्यर्थः। एवमेतत्पदमेकमर्थासंभवाद्द्विधा प्रविभज्य भाष्यकारेण निरुक्तमियमप्यर्थासंभवे सति निर्वचनप्राप्तिरस्तीत्यर्थस्य ख्यापनाय। ब्राह्मणेऽपि चेयं निर्वचनप्राप्तिरस्त्येव। तद्यथोद्गीथशब्दे। 'प्राण एवोत्प्राणेन ह्युत्तिष्ठति वाग्गीर्वाचो ह गिर इत्याचक्षतेऽन्नं थमन्ने हीद सर्वं स्थितम्' [ छा० उ० १ । ३ । ६ ] इत्येवमादि। तस्मादुपपद्यते प्रथमान्तमेवं सत्। कस्माद्द्वितीयान्तत्वेन विपरिणम्यते शं युमित्येवमिति। न निरुच्यते। तथापि हि न क्वचिदर्थ उपपद्यते तस्मादयुक्तमिति। 'रपो रिप्रम्' इत्यत्र रिप्रशब्दस्य रपःशब्देनार्थसामान्यात्तत्त्वमुक्तम्। 'यदेवास्य रिप्रममेध्यं तच्छुध्यति' इति ह विज्ञायते।

'अथापि शंयुर्बार्हस्पत्य उच्यते'। अपि शं योरित्यनेन पदद्वयेन शमनयावने रोगभययोरुच्येते द्वेधा प्रविभक्तेन। अपि यथावस्थितेनैवाविभक्तेन बार्हस्पत्यो बृहस्पतेः पुत्र उच्यते। तस्याप्येतदेव नामेत्यपिशब्दः। 'तच्छंयोरावृणीमहे गातुं यज्ञाय' [ तै० ब्रा० ३ । ५ । ११ ॥ मैत्रा० सं० ४ । १३ । १० ] ॥ इति। इयं शक्करी। शंयोरेव बृहस्पतिपुत्रस्यार्षम्। शंयोर्वाके विनि-

बार्हस्पत्यार्थे एकं पदम्

१ क. ख. घ. झ. ट. ठ. ड. 'इति' नास्ति; च. शमनमित्यं म. २ च. 'योरित्यस्य यावनमिति। एवं०० कृत्वार्थं निराह' नास्ति. ३ ग. च. रोगानां. ४ च. 'एतावदे.........त्यर्थः। एवं'. नास्ति. ५ च. इति चक्षते अन्नं हीदं°ऽन्ने ध्रं. ६ क. ख. घ. झ. ट. ठ. ड. °मेव सत. ७ ग. ज. °णम्य शं°; च. °णम्य शं° ते. ८ क. ख. घ. झ. ट. ठ. ड. °शयुमिति। एवमपि न विरुध्यते तथा°; च. °शंयुमिति। एवमिति न निरुच्यते° मपि न विरुध्य. ९ ग. °शब्दः। ५०। तच्छं°. १० घ. ट. ठ. ड. शंयुवाके; झ. शंयुवाक्ये.

युक्ता । शंयोरात्मानमभिसंपाद्याथवा शंयोः सकाशादिति केचिन्मन्यन्ते। अनेन कर्मणा शंयोर्वाकाख्येन तत्तदाभिमुख्येन वृणीमहे । किं पुनस्तत् । गातुं यज्ञाय । गमनमस्मै यज्ञाय देवान्प्रति । गमनं चास्मै यज्ञपतये देवान्प्रति । किंच । दैवी स्वस्तिरस्तु नः । देवानुप्र- ५ हादस्माकं स्वस्तिरस्तु । मा नो देवाः कांचिदापदमुत्पादयन्त्वित्यभिप्रायः। स्वस्तिर्मानुषेभ्यः । मनुष्येभ्योऽपि सकाशान्मा नः काचिदापदस्तु । ऊर्ध्वं जिगातु भेषजम् । गच्छत्वेतद्भेषजं भयसादयितृ कर्म । यावज्जीवमनव- च्छिन्नमविगुणं चोर्ध्वगमनयोग्यमस्माकमस्त्वित्यभिप्रायः । किंच । शं नो अस्तु । शं सुखं नोऽस्माकं द्विपदे मनुष्यादिकाय १० चतुष्पदे गवादिकाय च । शंयुर्बृहस्पतिपुत्र इति नास्मिन्मन्त्रे विशेषलिङ्गमस्ति । तदन्यस्माच्छ्रुतिलिङ्गात्कुतश्चिदुपलभ्यमाख्यानाद्वा । एतावदेव त्वेतस्मान्मन्त्रात्सिद्धमेकमेवेदं पदमविभक्तं निरुच्यते पञ्चम्यन्तं वा षष्ठ्यन्तं वा न यथा पूर्वस्मिन्मन्त्रेऽर्थासंभवाच्छंयुशब्दो विभक्त इति ॥२१॥ १५

> अस्मिन्मन्त्रे शंयुर्बृहस्पतिपुत्र इति विशेषलिङ्गं नास्ति । तथापि शंयुरित्यत्रैकं पदम्

इति नवमस्याध्यायस्य तृतीयः पादः ।

---

चतुर्थः पादः ।

---

२० **अदितिरदीना देवमाता ॥ २२ ॥**

' अदितिः ' ( ४९ ) इत्यनवगतम् । ' अदीना ' इत्यवगमः । ' देवमाता ' अभिधेयैतिहासिकपक्षेण । नैरुक्तपक्षेण पुनर्यान्येतस्यामृचि वक्ष्यमाणायां द्यौरित्येवमादीनि श्रूयन्त एतान्येवादितिशब्देनोच्यन्ते ॥२२॥

---

१ ग. ज. मातः का°. २ च. °पदमास्तु. ३ क. ख. घ. झ. ट. ठ. ड. २५ °इति एतस्मिन्; च. °इति नास्मिन्° एत. ४ क. ख. घ. झ. ट. °न्मन्त्रार्थो°. ५ क. ख. ६ (२१); ग. २१।२१; ठ. ड. विभक्त इति इति निरुक्तटीकायां चतुर्थाध्याये एकविंशतिः खण्डः इति नवमा°; इतरेष्वङ्को नास्ति. ६ घ. झ. ट. ' इति ' नास्ति. ७ क. ख. १ ( २२ ); छ. त. २३; द. १. ८ ठ. ड. अदितिरदीना देवमातेति अदिति°. ९ क. ख. घ. झ. ट. ठ. ड. °दीनि पदानि श्रू°. १० क. ख. १ ( २२ ); ग. २२ । ५१; ठ. ड. इति निरुक्त ( ठ. नैरुक्त ) टीकायां ३१ चतुर्थाध्याये द्वाविंशतिः खण्डः; इतरेष्वङ्को नास्ति.

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः । विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् [ऋ० सं० १ । ८९ । १०] ॥ इत्यदितेर्विभूतिमाचष्ट एनान्यदीनानीति वा । यमेरिरे भृगवः । एरिर इतीर्तिरुपसृष्टोऽभ्यस्तः ॥ २३ ॥

अदितिर्द्यौरदितिरन्तरिक्षमिति । राहूगणस्य गोतमस्येयमार्षम् । तृतीयसवने सर्वस्तोमेष्वेव वैश्वदेवशस्त्रस्य परिधानीयैषा [ आश्व० श्रौ० ५ । १८ ] । अदितिरेव देवमाता द्यौः । अदितिरेव चान्तरिक्षम् । अदितिरेव माता सर्वभूतनिर्मात्री । स एव च पिता पालकः । स एव च पुत्रः । सैव हि परितुष्टा सती स्तोतारं पुरुणो बहुनः पापात्त्रायते । अथवा सैव निपृणाति सर्वभूतानां यन्निपर्तव्यम् । दातव्यमित्यर्थः । येऽपि चैते विश्वे देवाः सर्वे देवा एतेऽप्यदितिरेव । पञ्च जनाः गन्धर्वादयः अदितिरेव । सर्वथापि किं बहुना यावदेतत्किंचिज्जातं च जनित्वं च जनिष्यमाणं च सर्वमप्येतददितिः । एवमनेन मन्त्रेण मन्त्रदृग् 'अदितेर्विभूतिमाचष्टे'। देवमातुस्तदेतत्सर्वमप्युपपद्यत एव माहाभाग्याद्देवतायाः । तदुत्तरत्र वक्ष्यामः [ निरु० ७ । ५ ] । एवमैतिहासिकपक्षेण । नैरुक्तपक्षेण पुनः 'एतानि' द्युलोकादीनि सर्वाणि 'अदीनानि' अनुपक्षीणानीति योज्यं न ह्येषां क्षयोऽस्तीति ।

(Margin: अदितिर्द्यौरित्यस्या ऋच ऐतिहासिकपक्षेणार्थः — तस्या एव नैरुक्तपक्षेणार्थः)

'एरिरे' (५०) इत्यनवगतम् । 'आ ईरिरे' इत्यवगमः । 'यमेरिरे भृगवो विश्ववेदसं नाभा पृथिव्या भुवनस्य मज्मना । अग्निं तं

१ क. ख. २ ( २३ ); छ. त. २४; द. २. २ क. ख. घ. झ. ट. °द्यौरदिति० जनित्वं । राहू°; ठ. ड. °द्यौरिति । राहू°. ३ ठ. ड. राहुगण°. ४ ग. च. ज. सर्वसोमे°. ५ क. ख. घ. झ. ट. °देवस्य श°. ६ ग. ज. 'स एव च पिता पालकः' नास्ति; च. °निर्मात्री । °स एव च पुत्रः° स एव च पिता पालकः. ७ च. सैदै (सै) व हि पु (परितु) ष्टा°. ८ क. ख. यन्निर्वर्तव्यं; ग. यन्निपर्वर्तव्यं; घ. ट. ठ. ड. च. निवर्तव्यं. ९ क. ख. घ. झ. ट. ठ. ड. °दितिरेव । एव°; च. °दितिरेवमने° वैव. १० क. ख. घ. झ. ट. ठ. ड. 'एतत्' नास्ति; च. तदेतत्स°. ११ ग. °गमः । ५२ । यमे°. १२ ग. ज. भृगवो विश्ववेदसमिति । दीर्घ°; घ. ट. भृगवो० न राजति.

गीर्भिर्हिनुहि स्व आ दमे य एको वस्वो वरुणो न राजति '[ ऋ० सं० १ । १४३ । ४ ] ॥ दीर्घतमस इयमार्षम् । जगती । प्रातरनुवाकाश्विनयोः [ आश्व० श्रौ० ४ । १३ ] आग्निमारुते च शस्यते [ आश्व० श्रौ० ५ । २० ]। यमग्निमाभिमुख्येन ईरितवन्तः प्रेरितवन्त आत्माभिप्रेतार्थसिद्धये भृगवः विश्ववेदसं सर्ववेदसं सर्वस्य वेत्तारं सर्वधनं वा। क्व पुनरेरिरे। नाभा पृथिव्याः। नाभाववस्थितमुत्तरवेदिमध्यगतायाम्। पृथिव्यां वेद्या उपरि। केन पुनरेरिरे। भुवनस्य उदकस्य मज्मना मननीयेन वीर्येणान्नेन हविर्लक्षणेन। किं तस्य। तमग्निं हे यजमान त्वमपि गीर्भिर्वाग्भिः स्तुतिलक्षणाभिराभिमुख्येन स्थित्वा हिनुहि प्रेरय तस्मिंस्तस्मिन्कर्मणि वर्तमानम्। अग्निहोत्रादौ यथा भृगव ईरितवन्तस्तथा स्वे दमे स्व एव गृहे। मा कस्यचिदार्त्विज्येऽवस्थित इत्यभिप्रायः। किंलक्षणं पुनरग्निमाहिनुहि। य एको वस्वः। एक एव यो वसुनो धनस्य दाता वरुणो न वरुण इव। यथा वरुणः समुद्रान्तर्गतानां धनानामीष्ट एवं यः सर्वस्यैव धनस्य राजति। ईष्ट इत्यर्थः। राजतिरैश्वर्यकर्मसु पठितः 'क्षियति राजति' [ निघ० २ । २१ ]इति। 'एरिर इतीर्तिः' अयं धातुर्गतिकर्मा। 'ईर्ते ऋयति' इति हि गतिकर्मसु पठितम् [ निघ० २। १४ ]। स पुनरयमाङोपसर्गेण 'उपसृष्टोऽभ्यस्तः'। पुनः पुनरीरितवन्त इत्यर्थः। 'जसुरिः' ( ९१ ) इत्यनवगतम्। 'जस्तम्' इत्यवगमः ॥२३॥

ईरिरे इत्यस्य निगमोऽर्थश्च

---

**उत स्मैनं वस्त्रमथिं न तायुमनुक्रोशन्ति क्षितयो भरेषु। नीचायमानं जसुरिं न श्येनं श्रवश्चाच्छा पशुमच्च यूथम् ( ऋ० सं० ४ । ३८ । ५ )॥ अपि स्मैनं वस्त्रमथिमिव वस्त्रमाथिनं वस्त्रं वस्तेस्तायुरिति स्तेननाम संस्त्यानमस्मिन्पापकमिति नैरुक्तास्तस्यतेर्वा स्यादनुक्रोशन्ति क्षितयः संग्रामेषु भर इति संग्रामनाम भरतेर्वा हरतेर्वा नीचायमानं नीचैरयमानं नीचैर्निचितं भवत्युच्चैरु-**

---

१ क. ख. घ. झ. ट. ठ. ड. °वन्तः। स्थापितवन्त इति यावत्। आत्मा°; च. °वन्त ˇ आत्मा °स्थापितवन्त इति यावत्. २ ग. ज. पृथिव्यां. ३ क. ख. घ. झ. ट. ठ. ड. °भ्यस्तश्च; च. भ्यस्तः ˇ। पु° च. ४ क. ख. °त्यर्थः। २ ( २३ ); ठ. ड. °त्यर्थः । इति निरुक्तटीकायां चतुर्थाध्याये त्रयोविंशतिः खण्डः। २३। उत स्मैन°; ग. वर्जमितरेष्वत्रैव खण्डसमाप्तिः. ५ ग. २४/५३; इतरेष्वङ्को नास्ति.

चितं भवति जस्तमिव श्येनं श्येनः शंसनीयं गच्छति । श्रव-श्याच्छा पशुमच्च यूथम् । श्रवश्चापि पशुमच्च यूथं प्रशंसां च यूथं च धनं च यूथं चेति वा यूथं यौतेः समायुतं भवति । इन्धान एनं जरते स्वाधीः । गृणाति । मन्दी मदन्तेः स्तुतिकर्मणः । प्र मन्दिने पितुमदर्चता वचः । प्रार्चत मन्दिने पितुमद्वचो गौर्व्या-ख्यातः ॥ २४ ॥ ५

---

उत स्मैनं[2] वस्त्रमथिमिति निगमः । वामदेवस्येयं[3]मार्षम् । त्रिष्टुप् । दधिक्राव्णे सूक्ते । दधिक्रावा चेन्द्र एव वायुर्वा मध्यस्थानत्वात् । उत स्मैनम् अप्येनमिन्द्रम् अनुक्रोशन्ति आभिमुख्येन क्रन्दन्ति आह्वयन्ति क्षितयो मनुष्याः । क्व । भरेषु संग्रामेषु । कथं पुनरभिक्रन्दन्ति । वस्त्र[4]मथिनं वस्त्रापहर्तारमिव तायुम् । यथा केचिज्जनाः कंचिद्वस्त्रापहर्तारं तायुं दृष्ट्वा कंचिदन्यमात्मनस्त्राणार्थमभिक्रन्देयुरेवमेतमिन्द्रमभिक्रन्दन्ति संग्रामेषु परैर-भ्यर्दिम नास्त्राणार्थमात्मनः । किंच । अपि चैनं[5] नीचायमानं नीचैर्गच्छन्तं जसुरिं न जसुरिमिव श्येनं जस्तमिव बद्धं स्नायुतन्तुना । य एष पांशिक[6] इति प्रसिद्धो राज्ञाम्[7] । स हि बद्धत्वादुत्पतितुमत्यर्थं न शक्नोति नीचैरेव गच्छति गत्वा च शशकादीनि हिनस्ति सत्त्वानि । स यथा जनैरभिक्रन्द्यते तथा चैनमभिक्रन्दन्ति । आह । कमर्थमभिसंधाये[8]ति । उच्यते । श्रवश्चाभिसंधाय । कथं नाम श्रूयेमहि प्रशस्येमहि जितमेभिरि[9]त्येवमर्थमभिसंधाय । पशुमच्च यूथम् । अनेकपशुजातिसंयुक्तं पशुयूथमभिसंधायैतदस्माकं स्यादित्येवमभि-क्रन्दन्तीत्येष समस्तार्थः ।

जसुरिरित्यस्य

अथैकपदनिरुक्तम् । ‘ वस्त्रं वस्तेः ’ आच्छादनार्थस्य [ धा० २ । १३ ] । तद्ध्याच्छाद्यते । ‘ तायुरिति ’ एतत् ‘ स्तेननाम ’ । ‘ संस्त्यानं ’ २५

---

१ क. ख. ३ [ २४ ]; छ. त. २५; द. ३. २ घ. ट. स्मैनमिति निग°; ठ. ड. स्मैनमिति । वामदे°. ३ क. ख. घ. झ. ट ठ. ड. 'इयं' नास्ति. ४ क. ख. घ. ट. ठ. ड. वस्त्रमथिं न वस्त्र°; ग. ज. वस्त्रमथिं न वस्त्राप°; च. °न्दन्ति । ˘ वस्त्र° वस्त्रमथिं न. ५ क. ख. घ. ट. ठ. ड. चैनं तायुं नीचा°; च. चैनं ˘ नीचा° तायुं. ६ क. ख. ग. ज. घ. झ. ट. ठ. ड. याजिकः. ७ ठ. ड. ‘ राज्ञां ’ नास्ति. ८ ग. च. ज °संदधाये°. ९ क. ख. घ. झ. ट. ठ. ड. रित्येतम°; च. °रित्ये-वम° त.

हि[1] संहतम् 'अस्मिन् पापकं' भवति 'इति' एवं 'नैरुक्ताः' मन्यन्ते। 'तस्यतेर्वा स्यात्' क्षयार्थस्य [ धा० ४ । १०६ ]। उपक्षीणो ह्यसौ भवत्यधार्मिकत्वात्। परलोकमनपेक्ष्य कल्पयति कर्माणि। क्षितयो मनुष्याः। 'भर इति संग्रामनाम'। भ्रियन्तेऽस्मिन् योधाः। हरतेर्वा। ह्रियन्ते हि

५ तस्मिन् जीवितानि वसूनि च। 'श्येनः शंसनीयं गच्छति' शीघ्रत्वात्। 'यूथं यौतेः'। तद्धि 'समायुतं भवति' एकत्र मिश्रीभूतं स्त्रीपुरुषबालवृद्धैः पशुभिः। एवमिह नीचायमानं श्येनमित्यनेन संबन्धाज्जसुरिर्बद्ध इत्युपपद्यते। न ह्यबद्धः श्येनो नीचैरयते।

'जरते' ( ५२ ) इत्यनवगतम्। धातोरस्वार्थे प्रवृत्तिरत्रानवगमः[3]।

१० जरते इत्यस्य — 'दिवस्परि[5] प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः। तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः' [ ऋ० सं० १० । ४५ । १ ] इति॥

वत्सप्रिर्नाम[6] भालन्दनस्तस्येयमार्षम्। उख्यस्याग्नेरुपस्थाने[7] विनियुक्ता [ तै० सं० ४ । २ । २ । १ । मै० सं० २ । ७ । ९ ।

१५ कात्या० श्रौ० १६ । ५ । ३१ ]। दिवस्परि दिवः। द्युलोकादित्यर्थः। प्रथममयमग्निर्जज्ञे आदित्यात्मना। द्वितीयमस्मत्परि अस्मदधि अस्मत्तो जायते पार्थिवात्मना। तृतीयमप्सु अन्तरिक्षलोके वैद्युतात्मना जायते। 'आपः' इति ह्यन्तरिक्षनामसु पठितम् [ निघ० १ । ३ ]। नृणां मनस्यवस्थितो नृमणाः। नृषु वा मनोऽस्य नृमणाः। योऽयमेक एव

२० त्रिषु स्थानेषु जायते तमेवंगुणयुक्तमग्निमिन्धानोऽजस्रं नित्यं जरते स्तौति यः स एव स्वाधीः शोभनधीः। सुप्रज्ञ इत्यर्थः। इन्धानो हि किमन्यत्र[10] स्तुतेरन्यत्कुर्यात्। तस्मात् 'जरते' इत्यस्य शब्दस्य गृणात्यर्थ[11] उपपद्यते।

'मन्दिने' ( ५३ ) इत्यनवगतम्। 'मन्दतेः' स्तुत्यर्थस्य

१ क. ख. घ. झ. ट. ठ. ड. 'हि' नास्ति. २ क. ख. घ. झ. ट. ठ. ड.

२५ योद्धारः; च. योधाः° द्धारः. ३ क. ख. घ. झ. ट. ड. °वृत्तिरेवानव°; च. °वृत्तिरत्रानव° रेवा. ४ ग. °गमः। ५ । दिव°. ५ ग. च. ज. °स्परि प्रथममिति। वत्स°; घ. ट. °स्परीति। वत्स°. ६ ग. च. ज. वत्सप्रीर्ना°; ठ. ड. वत्सप्रि° 'दिवस्परि' नास्ति. ७ ग. मुख्य°; ज. मुखस्या°. ८ घ. झ. ट. ठ. ड. °त्मना जातवेदाः। तृ°. ९ क. ख. घ. झ. ट. ठ. ड. °स्य स नृ°. १० क. ख. घ. झ. ट. ठ. ड. °मन्यत्स्तुतेः कु°; च. °मन्यत्र (त्) स्तुतेर (:) न्यत्कु (कु)°.

३० ११ च. गृणार्थत्वमु° उ.

[ धा० १ । १३ ] । मन्दनीयः स्तुतिमान् वेत्यर्थप्रतीतिः । ' मन्दति शंसति 'इति स्तुतिकर्मसु पठितम्[1] [ निघ० ३ । १४ ] । ' प्र मन्दिने

मन्दिने इत्यस्य

पितुमदर्चता[2] वचो यः कृष्णगर्भा निरहन्नृजिश्वना । अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तं सख्याय हवामहे ' [ ऋ० सं० १ । १०१ । १ ] ॥ कुत्सस्येयमार्षम् । छन्दोमेषु तृतीयेऽहनि मरुत्वतीये शस्त्रे निविद्धानीयस्य[3] सूक्तस्य प्रथमैषा [आश्व० श्रौ० ८ । ७ ] । हे स्तोतारः प्रार्चत प्रकर्षेणोच्चारयत पूजयत[4] मन्दिने मन्दनीयाय स्तुत्याय स्तुतिमते वा इन्द्राय पितुमत् अन्नसंयुक्तं वचः । य इन्द्रः किं करोति । कृष्णस्य मेघस्य गर्भभूता अपो निरहन् नीचैरहन् । निरगमयदित्यर्थः । केन । ऋजिश्वना । ऋजुरेवावक्षिप्तो लक्ष्ये यः शवति[5] गच्छति वज्रस्तेन निरगमयत् । हे[6] अवस्यवः । अवनमात्मनो रक्षणमिच्छन्तस्तर्पणं वा । योऽयमेवंप्रभाव इन्द्रस्तमिमं वृषणं वर्षितारं वज्रदक्षिणं वज्रेण हननायोत्साहवन्तमथवा वज्रदक्षिणं वज्रबाहुं मरुत्वन्तं मरुत्सहितं सख्याय सखिभावाय हवामहे । तासु तासु क्रियास्वाह्वयामः[7] इत्यर्थः । एवमेतस्मिन् मन्त्रे ' मन्दिने पितुमद्वचः प्रार्चत ' इत्येतस्माद्वाक्यसंबन्धादिन्द्रविशेषणमेतदित्युपपद्यते ।

'गौः' (५४ ) इत्येतदनेकार्थत्वादिह समाम्नातम् । यथा चैतदनेकार्थं तथा पुरस्ताद्व्याख्यातम् [निरु०२।५] । यच्चोक्तम् ' अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते सोऽपि गौरित्युच्यते । अत्राह गोरमन्वतेति तदुपरिष्टा[9]द्व्याख्यास्यामः ' [ निरु० २ । ६ ] इति तदिदमुच्यते । २४ ।

---

**अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् । इत्था चन्द्रमसो गृहे ( ऋ० सं० १ । ८४ । १५ ) ॥ अत्र[10] ह गोः सममंसतादित्यरश्मयः [11]स्वं नामापीच्यमपगतम[12]पचितमपिहितमन्तर्हितं वामुत्र चन्द्र-**

---

१ ग. °ठितम् । ५५ । प्र°. २ ग. पितुमदर्चता वचो० हे । कुत्स°; घ. ट. पितुम० हवामहे. ३ क. ख. घ. झ. ट. ठ. ड. °नीयसूक्त°. ४ ग. ज. 'पूजयत' नास्ति. ५ क. ख. घ. झ. स्वनति; ट. स्वनति° शव. ६ क. ख. ' हे ' नास्ति; च. °मयत् । ˘ अव° हे. ७ क. ख. घ. झ. ट. ठ. ड. °व्हयामह इ°. ८ च. ' एतत् ' नास्ति. ९ क. ख. ३ (२४); ग. २५। ५६; इतरेष्वङ्को नास्ति. १० छ. अत्राह. ११ छ. त. द. सन्नामा°. १२ क. ख. छ. त. द. घ. °च्यमपचितमपगतमपि°.

मसो गृहे गातुर्व्याख्यातः । [1]गातुं कृणवन्नुषसो जनायेत्यपि निगमो भवति । दंसयः कर्माणि दंसयन्त्[2]येनानि । कुत्साय मन्मन्नह्यश्च दंसय इत्यपि निगमो भवति । स तूताव नैनमश्नोत्यंह्यतिः । स [3]तुताव नैनमंहतिरश्नोत्यंहतिश्चांहश्चांहुश्च हन्तेर्नि[4]रूढोपधाद्विपरीतात् । बृहस्पते चयस इतिपयारुम् । बृहस्पते यच्चातयसि देवपीयुं [5]पीयतिर्हिंसाकर्मा वियुते द्यावापृथिव्यौ विय[6]वनात् । समान्या वियुते दूरेअन्ते । समानं संमानमात्रं भवति मात्रा मानाद्दूरं व्याख्यातमन्तोऽतते ऋधगिति पृथग्भावस्य प्रवचनं भवत्यथाप्यृध्नोत्यर्थे दृश्यते । ऋधगया ऋधगुताशमिष्ठाः । ऋध्नुवन्नयाक्षीरृध्नुवन्नशमिष्ठा इति चास्या इति चास्येति चोदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे तीव्रार्थतरमुदात्तमल्पीयोऽर्थतरमनुदात्तम्[7] । अस्या ऊ षु ण उप सातये भुवोऽ[8]हेळमानो ररिवाँ अजाश्व श्रवस्य[9]तामजाश्व । अस्यै नः सातय उपभवाहेळमानोऽक्रुध्यन्ररिवान्रातिरभ्यस्तोऽजाश्वेति पूषणमाहाजाश्वाजा अजना अथानुदात्तम् । दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् । दीर्घायुरस्या यः पतिर्जीवतु स शरदः शतं शरच्छृता अस्यामोषधयो भवन्ति शीर्णा आप इति वाऽस्येत्यस्या इत्येतेन व्याख्यातम् ॥ [10]२५ ॥

---

गोरमन्वतेति । [11]राहूगणस्य गोतमस्ये[12]यमार्षम् । अग्निचयने इष्टकोपधाने विनियुक्ता [ तै० ब्रा० १ । ५ । ८ ] । अत्राह

गोरित्यस्य — अत्रैव एतस्मिंश्चन्द्रमण्डले गोः सुषुम्नस्यैकस्य सूर्यरश्मेरितरे सूर्यरश्मयः अमन्वत अमन्यन्त ।

---

१ छ. त. द. 'गातुं कृणवन्नुषसो जनायेत्यपि निगमो भवति' नास्ति. २ क. ख. छ. त. द. दंसयन्त एनानि. ३ छ. त. द. तूताव. ४ छ. त. द. निरूल्होप°. ५ छ. त. पीयुति°. ६ छ. त. द. वियमनात्. ७ छ. त. °दात्तम् ।२०। अस्या°; द. °दात्तम् । ४ । अस्या°. ८ क. ख. छ. त. द. ङ. °हेलमा°. ९ छ. त. द. 'श्रवस्यतामजाश्व' नास्ति. १० क. ख. ४ [ २५ ]; छ. त. २७; द. ५. ११ क. ख. घ. झ. ट. ठ. ड. गोतमस्य राहू° ( ठ. ड. राहु° ); च. राहुग°. १२ च. 'इयं' नास्ति.

समनुज्ञातवन्त इत्यर्थः । किं पुनस्तत्सममन्यन्तं[1] । नाम नमनं प्रह्वत्वम् । अवस्थानमित्यर्थः । कुतः । त्वष्टुरादित्यस्य मण्डलात् । अथवा त्वष्टुरादित्यस्य स्वभूता रश्मयः सममन्यन्तं । कथं तस्य नमनं तत्सममन्यन्तेति । अपीच्यमपगतम् । तत्रैव चन्द्रमण्डलेऽनुप्रविष्टस्य यदवस्थानान्तरं तत्सममन्यन्तं । अथवा अपीच्यमिति अपेत्य सूर्यमण्डलाच्चन्द्रमण्डले चितमपीच्यम् । अथवा अपीच्यमन्तर्हितमित्यर्थः । 'प्रतीच्यम् अपीच्यम्' इति ह्यन्तर्हितनामसु पठितम् [ निघ० ३ । २५ ] । क्व पुनरन्तर्हितस्यान्यत्रावस्थानमिति । इत्था चन्द्रमसो गृहे । अमुष्मिंश्चन्द्रमण्डल इत्यर्थः । ५

'गातुः' [ ५५ ] इति व्याख्यातो 'गमनं यज्ञपतये' इत्यत्र [ निरु० ४ । २१ ] । १०

'दंसयः' इत्येतदनेकेषां कर्मणामभिधानम् । तानि हि दंसयन्त्युपक्षयन्ति कर्मकराः[2] ।

दंसय इत्यस्य

'तव त्य इन्द्र सख्येषु[3] वह्नय ऋतं मन्वाना व्यदर्दिरुर्वलम् । यत्रा दशस्यन्नुषसो रिणन्नपः कुत्साय मन्मन्नह्यश्च दंसयः' [ऋ० सं० १० । १३८ । १ ] ॥ अङ्गस्यौरवस्येयमार्षम् । हे इन्द्र तव त्ये ते वह्नयो वोढारोऽश्वाः सख्येषु समानख्यानेषु कर्मसु वर्तमानाः । इदमेव हि भवतः कर्म मेघो विदारयितव्य इति । एतदेव तेषामपि । एतत्समानख्यानत्वम् । ऋतमुदकमस्मिन्नस्तीत्येवं[4] मन्वानाः । किमकुर्वन् । व्यदर्दिरुः विदारितवन्तः बलं मेघं काले काले । यत्र यस्मिन्मेघे विदारिते दशस्यन् दर्शन्ति[5] उषसो माध्यमिकाः । एकस्या एव पूजनार्थे बहुवचनम् । किं दशस्यन् । अपः । अह्यः च अहौ[6] निवासिन्यः आपः[7] । मेघनिवासिनीरित्यर्थः । ताश्च दीर्यमाणाः रिणन् आगच्छन् पृथिवीलोकम् । तदेतत्सर्वमपि युष्मदश्वैः क्रियते । किं पुनरर्थमुद्दिश्य तं[8] एवं कुर्वन्ति । मन्मन् मन्यमानाः कुत्साय पृथिवीं कृन्तते कृषीवलाय[9] दंसयः कृषिकर्माणि सफलानि कर्तुम् । अत्र १५ २०

---

१ ग. ज. °मन्यन्ते. २ ग. °कराः । ५७ । तव°. ३ ग. ज. सख्येषु वन्हय इति । अङ्ग°; घ. ट. सख्येषुं, श्च दंसयः. ४ क. ख. घ. झ. ट. ठ. ड. °त्येषमेतं म°. ५ क. ख. घ. झ. ट. ठ. ड. दशस्यन्ति; च. दर्शन्ति° स्य. ६ क. ख. घ. झ. ट. ठ. ड. अहिनि°; च. अहौ° हि. ७ क. ख. घ. झ. ट. ठ. ड. 'आपः' नास्ति; च. आपः. ८ च. एतं. ९ क. ख. ग. च. ज. कृषीबलाय. २१

'दंसयः' इत्यनेन शब्देन 'कर्माणि' उक्तानि दासैः कर्मकरैर्दंस्यन्ते इति । कर्मकरा दासा इति बाहुल्याद्भाष्यकारेण निगमोऽत्र नोदाहृतः ।

'तूताव' ( ९७ ) इत्यनवगतम् । 'तुताव' इत्यवगमः । 'यस्मै त्वमायजसे स साधत्यनर्वा क्षेति दधते सुवीर्यम् । स तूताव नैनमश्नोत्यंहतिरग्ने सख्ये मा रिषामा वयं तव' ( ऋ० १ । ९४ । २ ) ॥

तूतावेत्यस्य

कुत्सस्येयमार्षम् । महाव्रते आग्निमारुते शस्त्रे जातवेदस्ये सूक्ते शस्यते ( ऐ० आ० १ । ५ । ३ ) । हे भगवन्नग्ने यस्मै यजमानाय त्वमाहूय यजसे देवान् होतृत्वेऽवस्थितः स एव साधति साधयत्यात्मनोऽभिप्रेतार्थम् । किंच । स एव अनर्वा अप्रत्यृतः अनाश्रितः कंचिदन्यं स्वेनैव महिम्ना युक्तः क्षेति निवसति युष्मदनुग्रहात् । स एव दधते धारयते सुवीर्यं शोभनमात्मनो वीर्यम् । स एव तूताव वर्धते प्रजाधनयशोभिः । न चैनम् अंहतिः अपि पापमपि समश्नोति व्याप्नोति । हे भगवन्नग्ने यस्त्वमेवमतिमहानुभावस्तस्य तव वयं सख्ये सखिभावे परिचरणकर्मणि वर्तमानाः मा रिषाम मा केनचिच्छिंद्येमहि । एवमयमत्र 'तूताव' इति शब्दो 'यस्मै त्वमायजसे' इत्येवमादीनां मध्ये श्रूयमाणो वृध्द्यर्थ उपपद्यते । 'अंहतिश्चांहश्चांहुश्च' इत्येते शब्दा 'हन्तेः' धातोः 'निरूढोपधात्' । अकारमुपधातो निष्कृष्यादौ कृत्वा ततो हकारनकारौ विपर्ययेण भवतः ।

'चयसे' ( ५८ ) इत्यनवगतम् । 'चातयसि'[11] इत्यर्थप्रतीतिः ।[12] 'ये त्वा देवोस्रिकं[13] मन्यमानाः पापा भद्रमुपजीवन्ति पज्राः । न दूढ्ये ३ अनु ददासि वामं बृहस्पते चयस इत्पियारुम्' ( ऋ० सं० १ १९० । ५ ) ॥

चयसे इत्यस्य

अगस्त्यस्य मैत्रावरुणस्येयमार्षम् । हे बृहस्पते देव

१ क. ख. घ. झ. ट. ठ. ड. इत्येतेन. २ °क्तानि । दासैः ( ग. दासी ) इति सर्वेषु पुस्तकेषु. ३ ग. ज. कैर्दृश्यंत इ°; च. कैर्दृश्यन्त इ° दंसं. ४ क. ख. ग. ज. घ. झ. ट. ठ. ड. इति कृत्वा कर्म°. ५ ग. °गमः ।५८। यस्मै°. ६ ग. ज. यजसे इति । कुत्स°; घ. ट. यजसे० वयं तव. ७ ठ. ड. 'आहूय' नास्ति. ८ च. °एव° साधयत्या° साधति. ९ ग. च. ज. केन विछिद्ये°. १० क. ख. घ. झ. ट. ठ. ड. °दीनां पदानां मध्ये°; च. °दीनां ˇमध्ये° पदानां. ११ च. चातयस इत्य°. १२ ग. °तीतिः । ५९ । ये°. १३ ग. ज. °स्रिकं मन्यमाना इति । अग°; घ. ट. °स्रिकं० इत्पियारुम्°.

दानादिगुणयुक्ता ये यजमानास्त्वाम् उशिकम् उशाविणं भोगानां मन्यमाना दातैव केवलं भोगानामयमार्जवेन[1] न प्रत्युपकारार्थीत्येवं मन्यमानाः पापा अप्रत्युपचिकीर्षव उपजीवन्त्येव केवलं न क्रियया प्रत्युपकारं कुर्वन्ति भद्रं भन्दनीयं स्तुत्यम् अपि च पज्राः प्रार्जितधनाः सन्तो न दरिद्राः । किं तेभ्य इति । न दूढ्ये न तेभ्य एवंलक्षणेभ्यो दुर्धीभ्यः पापबुद्धिभ्यः स्वार्थ- ५
प्रधानेभ्यस्त्वमनुददासि वामं वननीयं धनम् । किं तर्हि । यस्तादृशो जनः पियारुः देवपीयुः देवहिंसिता स्वभोगप्रधानो न यष्टा देवानां तं चातयसि नाशयसि । य एव श्रद्दधानो यष्टा तस्मै देवान्यजतेऽनुददासि वामम् । यस्मात्त्वमेवं करोषि तस्मात्त्वे पापबुद्धयस्त्वां सम्यक्पश्यन्तीत्यभिप्रायः । यो हि दुर्बुद्धिर्देवपियारुस्तस्य किमन्यच्चातनादृते स्यात् । चात्य एवासौ । १०
तस्मात् 'चयसे' इत्येष शब्दः 'चातयतिर्नाशने' इत्येवमवस्थापिते नाशनार्थो[3] भवतीत्युपपद्यते । 'चातयतिर्नाशने' इति हि वक्ष्यति ( निरु० ६ । ३० ) । लोकेऽपि च प्रसिद्धं देशादुच्चातित इति । तस्मादुपपद्यते ।

'वियुते' ( ५९ ) इत्येतदेकमेव समस्तयोर्द्वयोरपि द्यावापृथिव्यो-रभिधानम् । 'वियवनात्' इति निर्वचनम् । 'यौतिर्मिश्रणार्थः '[धा० १५
२।२३] । तस्योपसर्गसामर्थ्याद्विपर्ययेणार्थो भवति । विमिश्रीभूते[4] इत्यर्थः । 'इमे वै सहास्तां ते शम्यामात्रं व्यैताम्'[5] इति ह विज्ञायते[6] [ मैत्रा० सं० ४ । १ । ७ ] । 'समान्या वियुते दूरेअन्ते ध्रुवे पदे तस्थतुर्जागरूके । उत स्वसारा युवती भवन्ती आदु

वियुते इत्यस्य ब्रुवाते मिथुनानि नाम' (ऋ० सं० ३ । ५४ । २०
७ ) ॥ विश्वामित्रस्येयमार्षम् । वैश्वदेवे सूक्ते ।

समान्याचेते द्यावापृथिव्यौ समानपरिमाणे । वियुते च विमिश्रीभूते च[8] । महत्त्वात्[9] दूरेअन्ते च । न हि द्यावापृथिव्योरन्तोपलब्धिरस्ति । 'ध्रुवे पदे' सप्तम्येकवचनमन्तरिक्षविषयम् । ध्रुवं शाश्वतम् । एतस्मिन् पदे

१ ग. ज. °मार्जवो न प्र°. २ ग. ज. °न्यक्ष्यते; च. °न्यक्ष्यते° ज. ३ ग. ज. नावगमातार्थो भ°; च. न वैश°. ४ व. झ. ट. ठ. ड. भूत इ°; च. °भूते इ° त. ५ सर्वेषु पुस्तकेषु 'न्यैताम्'. ६ ग. °यते । ६० । समा°. ७ ग. ज. वियुते दूरेअन्ते इति । विश्वा; घ. ट. वियुते० मिथुनानि नाम. ८ क. ख. ग. ज. घ. झ. ट. ठ. ड. 'च' नास्ति. ९ क. ख. घ. ट. ठ. ड. 'महत्त्वात्' नास्ति; च. महत्त्वाद्दूरे अन्ते च. २५

३१

आधारभूतेऽन्तरिक्षाख्ये। अन्तरिक्षस्य क्षयो नास्ति प्रतिद्वन्द्वयभावात्। तच्चैतयोर्द्यावापृथिव्योः प्रतिष्ठा। तस्मिन्नेते तस्थतुः स्थितवत्यौ सर्गादारभ्य जागरूके जागरणशीले स्वं स्वमधिकारं प्रति। उत अपि चैते स्वसारा स्वसारौ भगिन्यौ सहोत्पत्तित्वात्। युवती भवन्ती संमिश्रीभवन्त्यौ परस्परसंभोगेन। आदु ब्रुवाते मिथुनानि नाम इति। अथैवमेते वियुते च संमिश्रीभूते च सत्यौ द्यावापृथिव्यौ ब्रुवाते इव प्रकथयत इव स्तोतॄणां नामानि आत्मनो मिथुनानि द्विवचनसंबद्धानि स्तुतिनामभिः 'स्वधे पुरन्धी' इत्येवमादिभिरिति। एवमेतस्मिन् मन्त्रे 'वियुते' इत्यस्य पदस्य द्यावापृथिवीविशेषणत्वम्। द्यावापृथिवीशब्दश्चात्राध्याहार्यो 'दूरेअन्ते' इत्येवमादीनां तथोपपत्तिदर्शनात्।

'ऋधक्' [ ६० ] इत्यनेकार्थम्। 'ऋधगिति पृथग्भावस्य[3] प्रवचनं भवति'। पृथक्त्वमेव पृथग्भावः। तस्येदं प्रवचनं भवति। सोऽनेनं प्रोच्यते इत्यर्थः[4]। 'यदिन्द्र दिवि पार्ये यदृधग्यद्वा स्वे सदने

ऋधक् इत्यस्य यत्र वासि। अतो नो यज्ञमवसे नियुत्वान्त्सजोषाः पाहि गिर्वणो मरुद्भिः' [ऋ०सं०६।४०।५]॥

भरद्वाजस्येयमार्षम्। पृष्ठ्यस्य पञ्चमेऽहनि मरुत्वतीये शस्त्रे निविद्धानीये सूक्ते शस्यते [ आश्व० श्रौ० ७। १२ ]। हे भगवन्निन्द्र यदि त्वं दिवि द्युलोके पार्ये पारणीये स्थानेऽवस्थितः यदृधक्[6]। पृथग्दिव इत्यर्थः। यद्वा यदि वा स्वे सदनेऽन्तरिक्षलोकेऽवस्थितः। यत्र वासि क्वचिदन्यत्रैव स्थानेऽवस्थितः। को हि तत्त्वतो वेद तव स्थानं यत्रासीति। किं बहुना। यत्र यत्रास्यवस्थितस्ततत आगत्य यज्ञमवसे रक्षसि [7]त्वं नियुत्वान् वायुर्भूत्वा। यस्त्वमेवंप्रभावस्तं त्वां ब्रवीमि। हे गिर्वणः गीःसंभजितः। स हि स्तुतीः संभजति स्तुतिभिर्वा संभज्यते। सजोषाः सहजोषणः सहप्रीतो मरुद्भिः पिबैतं सोममस्मत्प्रत्तम्। एवमेके पृथग्भावोदाहरणमेतामृचं व्याचक्षते॥

१ क. ख. घ. झ. ट. ठ. ड. °द्वन्द्वाभा°; च. °द्वन्द्वभा° द्वा. २. घ. झ. ट. ठ. ड. °भवत्यौ. ३ ग. °स्य नु प्रव°; ज. °स्य सु प्रव°. ४ ग. °त्यर्थः। ६१। यदि.° ५ ग. ज. यदृधगिति। भर°; घ. ट. यदृधक् ० मरुद्भिः. ६ क. ख. झ. ट. ठ. ड. °धक् यदि ऋधक् पृथ°; च. °धक् पृथ° यदि ऋधक्. ७ क. ख. घ. झ. ट. 'त्वं' नास्ति. ८ क. ख. ग. ज. घ. झ. ट. गीर्भिः संभ°.

अपरे पुनर्य एवैष भाष्यकारेण निगमः पठितः 'ऋधगयाः' इति तत्रैवैतौ द्वावप्यर्थाविति मन्यन्ते । तथापि दर्शयिष्यामस्तस्यामेवर्चि । 'अथापि' अयमृधगिति शब्दः कदाचित् 'ऋध्नोत्यर्थे' अपि 'दृश्यते'। तद्यथा । 'ऋधगया ऋधगुताशमिष्ठाः' इत्यस्मिन् मन्त्रे। 'यदद्य त्वा प्रयति यज्ञे अस्मि॰

अस्यामृचि 'ऋधक्' इत्यस्य द्वावप्यर्थौ दृश्येते इति केचित्

न्नग्ने होतारमवृणीमहीह । ऋधगया ऋधगुताशमिष्ठाः प्रजानन्यज्ञमुप याहि विद्वान्' [तै० सं० १ । ४ । ४४ । २॥ मैत्रा० सं० १ । ३ । ३८ ]॥ समिष्टयजुःषु सौमिकेषु विनियुक्ता [मान० श्रौ० २ । ५ । ४ ] । तत्र चोक्तम् 'एतौ विश्वामित्रो यज्ञस्यारणी अपश्यत्' [ मै० सं० ४ । ८ । ४ । ] इति । हे भगवन्नग्ने यत्प्रयोजनमुद्दिश्य अद्य प्रयति प्रोत्सर्पत्येतास्मिन्यज्ञे वयमवृणीमहि वृतवन्तो होतारं त्वाम् । 'अग्निर्देवो दैव्यो होता' इति श्रूयते [ शत० १ । ५ २ । ५ ] । किं पुनस्तत्प्रयोजनमिति । कथं नामाल्पमप्यवदानमात्रं हुतं देवतातृप्तिसमर्थं बहु कुर्यादशान्तमपि च यद्विगुणं यज्ञस्य किंचित्तच्छमयित्वा समृद्धमेव कुर्यादिति । तच्चोभयमपि यथाशास्त्रमेवास्माकं त्वया कृतम् । अंत इदानीं परिसमाप्त एतस्मिन्यज्ञे प्रत्याभाष्यसेऽस्माभिः । ऋधगयाः । त्वमल्पमपि हुतमस्माभिः संद्धविः ऋधगेव ऋद्धमेव देवतातृप्तिसमर्थं बहु कुर्वन् अयाः । त्वं यागमकार्षीरित्यर्थः । किंच ऋधगुताशमिष्ठाः । अपि च यदपि किंचिद्विगुणमकार्ष्म वयमस्मिन्यज्ञे तदपि सर्वमेवासमृद्धं समृद्धं सगुणमेव कुर्वन् पापमस्य यज्ञस्या-

अत्र द्वावपि ऋधक्छब्दौ ऋध्नोत्यर्थौ इत्येके

१ क. ख. घ. झ. ट. ठ. ड. अत्रै°; च. तत्रैवैतौ द्वा° अ. २ क. ख. घ. झ. ट. ठ. ड. अयमेव ऋध°; ग. ज. °वार्चि । यथाप्ययं ऋध°. ३ क. ख. घ. झ. ट. ठ. ड. 'तद्यथा' नास्ति. ४ ग. मन्त्रे । ६२ । यद°. ५ ग. च. ज. घ. ट. यज्ञे इति । समिष्ट°; ठ. ड. यज्ञे अस्मिन् होतश्चिकित्वो वृणी°. ६ ठ. ड. प्रजानन्विद्वानुपयाहि सोमम् । समिष्ट°. ७ क. ख. विद्वान् स्वाहा । समिष्ट°. ८ च. °मित्रस्यौ यज्ञस्या°. ९ घ. झ. ट. ठ. ड. °ग्ने हे चिकित्वः (घ. ट. त्विः) कर्मविषयकज्ञा (ठ. ड. विषयज्ञा°) नवन् यत्प्रयो°; च. °ग्ने यत्प्र° हे चिकित्वः कर्मविषयकज्ञानवन्°. १० ग. ज. यत इ°. ११ क. ख. घ. झ. ट. ठ. ड. 'संत्' नास्ति; च. संत्. १२ क. ख. घ. झ. ट. ठ. ड. वयमेतास्मि°. १३ क. ख. घ. झ. ट. ठ. 'असमृध्दं' नास्ति; च. असमृद्धं.

शमिष्ठाः । स्विष्टकृद्रूपेण शमितवानसि । यस्त्वमेतदकार्षीरस्माकमेतस्मिन्यज्ञे तं त्वां ब्रवीमि । एतदेव मयैतेषां कर्तव्यमित्येतद्विद्वान् प्रजानन् प्रकर्षेण जानन्नस्माकमात्मन उपरि भक्तिं पुनः पुनः उपयाहि उपागच्छ यज्ञम् । एवं तावदेकेषाम् ' ऋधगयाः ऋधगुताशमिष्ठाः ' इत्येतौ द्वावप्यृधक्छब्दावृध्नोत्यर्थावेव । एतस्मिन्नर्थे ऋधक्छब्दस्य पृथग्भावार्थत्वे ' यदिन्द्र दिवि पार्ये' इत्येतदुदाहरणम् ।

भिन्नार्थावित्यपरे

अन्ये पुनर्मन्यन्ते । ' ऋधगया ऋधगुताशमिष्ठाः ' इत्येतयोरेव ऋधक्छब्दयोः पूर्वः पृथग्भावार्थ उत्तर ऋध्नोत्यर्थ इति । तदेतदुपपद्यते । मिश्राण्यपि हवींषि हुतानि सन्ति । त्वमग्ने ऋधगेषु च कृत्वा ततो देवानयाक्षीः । न ते संमोहोऽस्तीत्यभिप्रायः । 'ऋधगुताशमिष्ठाः ' इत्येष यथाव्याख्यात एव । पूर्वस्त्वर्थः साधीयान् यत्र द्वावप्येतावृध्नोत्यर्थावेव ' ऋधगयाः ऋधगुताशमिष्ठाः ' इति । किं कारणम् । ' अथाप्यृध्नोत्यर्थे दृश्यते ' इत्येवमुपन्यस्य भाष्यकारेण ततोऽयमुपात्तो निगमः ' ऋधगया ऋधगुताशमिष्ठाः ' इति । एवं च निरुक्तम् । न पुनः पृथक्कृत्वेन्याक्षीर्ऋधुवन्नशमिष्ठा इति । तस्माद्द्वावप्येतावृध्नोत्यर्थावित्येतदेव साधीयः ।

प्रथम एवार्थः साधीयान्

'अस्या' 'अस्य' इत्यनयोर्गौणमुख्यार्थयोर्वाक्ये स्थानं स्वरश्च

'अस्याः (६१) इति अस्य (६२) इति च' एतत्पदद्वयं स्त्रीपुंसविषयं स्वरकृताद्विशेषात्प्रधानाभिधायि वा भवति गुणाभिधायि वा । आह । कथमिति । उच्यते । 'उदात्तं प्रथमादेशे ' । प्रथम इति मुख्यनाम । मुख्यश्च प्रधानमित्युच्यते । प्रधानं कंचिदर्थमभिदधदेतत्पदद्वयमुदात्तं भवति । ' अनुदात्तमन्वादेशे ' । प्रधानमर्थमनु यो वर्तते गुणभावेन तस्यैतत्पदद्वयमन्वादेशे वर्तमानमनुदात्तं

१ घ. झ. ट. सोमं यज्ञम्; ठ. ड °गच्छसेमं यज्ञम्; च. °गच्छ° यज्ञम्° सोमं. २ क. ख. घ. झ. ट. ठ. ड. पार्ये यदृधगित्ये°. ३ क. ख. घ. झ. ट. ठ. ड. ऋधक् पृथगेव कृत्वा; ग. ऋधगेषु व कृत्वा; च. ऋधगेषु च कृ° व पृथगेव; ज. ऋधयेषु व कृ°. ४ क. ख. घ. झ. ट. ठ. ड. ' एतत् ' नास्ति. ५ च. मुख्यस्य प्र. ६ ग. ज. प्रधान इत्यु°; घ. झ. ट. ठ. ड. प्रधानमुच्य°. ७ ग. ज. °त्पदमन्वा;° च °त्पदमन्वा° द्वय.

भवति । आह । कस्मादेतत्पुनरुदात्तं प्रधाने वर्तमानमनुदात्तमप्रधाने[1] इति । उच्यते । लोकेऽपि हि यत् ' तीव्रार्थतरम् ' उत्कृष्टार्थं[2] प्रधानतरं तत् ' उदात्तम् ' इति प्रसिद्धम् । तद्यथा । उदात्तमेतत्कुलमिति । ' अल्पीयोऽर्थतरमनुदात्तम् ' । अल्पीयसार्थेन यद्युक्तं[3] भवति तदनुदात्तमुच्यते । अप्रधानमित्यर्थः । उदाहरणैरेवानयोर्विभागं दर्शयति[4] ।

५

' अस्या ऊ षु ण उप सातये[5] भुवोऽहेळमानो[6] ररिवाँ अजाश्व श्रवस्यतामजाश्व । ओ षु त्वा ववृतीमहि स्तोमेभिर्दस्म साधुभिः । नहि त्वा पूषन्नतिमन्य आघृणे न ते सख्यमपह्नुवे' ( ऋ० सं० १ । १३८ । ४ ) ॥

अस्या इत्यस्य मुख्यार्थः

परुच्छेपस्यार्षम् । अतिच्छन्दाः । ' उ ' इति ' सु ' इति ' न ' इति पदानि । अस्या अस्यै सातये लब्धये । कथं नाम वयमर्थमभिप्रेतं लभेमहीत्येतमर्थमुद्दिश्य हे पूषन्नस्माकं सुष्ठु उप समीपे भव[7] । त्वयि संनिकृष्टे त्वदनुग्रहादेतमर्थं लभेमहीत्यभिप्रायः । कथं पुनरुपभव । अहेळमानः[8] अक्रुध्यन् । सर्वो ह्यभ्यर्थ्यमानः क्रुध्यतीत्यभिप्रायः । ररिवान् दानवान्[9] । दानाभिप्रायसंयुक्तेन चेतसोपभव । अजाश्व अजनाश्व गमनाश्व छागाश्व वा । श्रवस्यतामस्माकं धनमिच्छतां भवाजनाश्व । छागाश्वेत्यर्थः । किंच ओ षु त्वा ववृतीमहि । ' आ ' ' उ ' ' सु ' इति पदानि । आ ववृतीमहि त्वां सुष्ठु आभिमुख्येनात्मनो वर्तयामहे । केन । स्तोमेभिः स्तोत्रैः । दस्म[10] । हे दस्म दर्शनीय अथवा दान्त । साधुभिः । शोभनैरित्यर्थः । किंच न हि त्वामतीत्य[11] साधुतरां कांचिदप्यन्यामहं देवतां मन्ये हे आघृणे आगतदीप्ते । त्वद्भक्त एवाहमस्मीत्यभिप्रायः । किंच । न ते तवाहं सख्यं सखिभावं कदाचिद-

१० १५ २०

---

१ घ. ट. ठ. ड. °मप्रधानं इति. २ क. ख. घ. झ. ट. ठ. ड. °ष्टार्थप्रधा°; च. °ष्टार्थ प्रधा° र्थं. ३ च यद्युक्तं भ° यु; झ. यदुक्तं. ४ ग. °यति । ६३/१६ । अस्या°. ५ ग. ज. उप सातये भुव इति । परु°; घ. ट. उप० मपन्हुवे. ६ क. ख. च. ड. हेलमा. ७ क. ख. घ. झ. ट. ठ. ड. भुवः भव; च. °मीपे भव° भुवः. ८ क. ख. ग. च. ज. झ. ड. °हेलमा°. ९ ग. ज. °वान् अजाश्व दाना°; च °वान् । अजाश्वं दाना°. १० ग. ज. ' दस्म ' नास्ति. ११ क. ख. घ. झ. ट. ठ. ड. त्वा नैव त्वां ( ठ. ड. त्वा ) दर्शनीयमतीत्य; च. त्वामती° नैव त्वां दर्शनीय.

२५ २९

प्यपन्हुवे । कृतज्ञो ह्यहमित्यभिप्रायः । एवमत्र सातिः प्रधानेति कृत्वा 'अस्याः' इत्येतत्पदमन्तोदात्तम् । अन्तोदात्तमपि च सदुदात्तमित्युक्तं भाष्यकारेणैकदेशस्योदात्तत्वात् ।

'अथ' पुनर्यस्मिन् 'अनुदात्तम्' एतत्पदं गुणभूतार्थाभिधायि भवति तस्यैष निगमः । 'पुनः पत्नीमग्निरदादायुषा सह वर्चसा ।

दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम्'

अस्यामृचि 'अस्य' अनुदात्तम् (ऋ० सं० १० । ८५ । ३९ ) ॥ सूर्याया आर्षम् । विवाहे विनियुक्ता ( आश्व० गृ० १। ८ । १३ ) । पित्रा पूर्वमेतां दत्तां सतीं कन्यां पत्नीं पुनरग्निरदात् आयुषा सह वर्चसा अन्नेन सहैतस्मिन् वैवाहिके कर्मणि । अग्निसंनिधिसंस्काराद्धि भार्यात्वमुपजायत इत्येतदपेक्ष्य पूर्वदानात्पुनर्दातृत्वमुच्यते । तदेवमस्या दत्ताया एतदाशास्महे योऽस्याः पतिः स दीर्घायुरस्त्विति । यतो विशेषयन् ब्रवीति जीवातुं शरदः शतमिति । शरद्धि दुर्जीवा रोगभूयस्त्वात् । अत एवमाशास्यते शरच्छतं जीवत्विति । एतस्मिन्मन्त्रे भर्तृकन्यासंयोगे सति भर्तैव प्रधानम् । तस्य ह्यायुराशास्यते । तस्य लक्षणार्था पत्नी । तस्मात् 'दीर्घायुरस्या यः पतिः' इत्येतदनुदात्तम् ।

निगमप्रसक्तमुच्यते । 'शरत् अस्यां' हि 'शृताः' पक्काः 'ओषधयो भवन्ति' इति । 'शीर्णा आप इति वा' । वर्षासु हि प्रवृद्धानि स्रोतांसि शरदि विशीर्यन्ते । 'अस्येति' एतत्पदं पुंविषयं षष्ठ्यन्तम् 'अस्याः इति' अनेनैव स्त्रीविषयेण पदेन 'व्याख्यातम्' । यदेवोक्तम् 'उदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे' इति तदेवात्रापि लक्षणमित्यभिप्रायः । उदाहरणमात्रं प्रदर्श्यते । २५ ।

**अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः । तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ( ऋ० सं० १ । १६४ । १ ) ॥ अस्य वामस्य वननीयस्य पलितस्य**

१ च. 'च 'नास्ति. २ ग °गमः । ६४ । पुनः°. ३ ग. ज. पत्नीमग्निरदादिति । सूर्या°; व. ट. पत्नीमग्निरदात् ०शरदः शतम्; ठ. ड. पत्नीमिति । सूर्या°. ४ ग. ज. 'पत्नीं' नास्ति. ५ ट. जीवातु° ति; ठ. ड. जीवाति. ६ ग. ज. प्रधानः. ७ ग. ज. विशीर्यच्छिद्यन्ते; च विच्छिद्यन्ते° शीर्य. ८ क. ख. घ. झ. ट. ठ. ड. पदेनैव; च. पदेन° नैव. ९ क. ख. ४ [ २५ ]; ग. २७.

**पालयितुर्होतुर्ह्वातव्यस्य तस्य भ्राता मध्यमो अस्त्यशनो भ्राता भरतेर्हरतिकर्मणो हरते भागं भर्तव्यो भवतीति वा तृतीयो भ्राता घृतपृष्ठोऽस्यायमग्निस्तत्रापश्यं सर्वस्य पातारं वा पालयितारं वा विश्पतिं सप्तपुत्रं सप्तमपुत्रं सर्पणपुत्रमिति वा सप्त सृप्ता संख्या सप्तादित्यरश्मय इति वदन्ति ।[२] २६ ।**

अस्य वामस्येति[३] । अस्यवामीयमेवेदं सूक्तम् । दीर्घतमस आर्षम् । तार्तीयसवने[४] महाव्रते वैश्वदेवे[५] शस्त्रे शस्यते (ऐ० आ० ५ । ३ । २) । अस्य सूर्यस्य वामस्य वननीयस्य स्तुतिभिः पलितस्य पालयितुः । अयं हि सर्वमेवेदं जगत्पालयति । होतुः ह्वातव्यस्य आह्वानार्हस्य । आह । अस्य[६] किमिति । उच्यते । योऽयमेवंलक्षणस्तस्य भ्राता भागहर्ता भर्तव्यो वा उदकेन मध्यमो मध्यमस्थानः अस्ति विद्यते । कतमः[७] । योऽयम् अश्नः अशनो व्यापनः । वायुरित्यर्थः । स हि द्युलोकादादित्येनोदकेन भ्रियते हरति चोदकं[८] द्युलोकात् । तृतीयः अस्य[६] वायोर्भ्राता हविर्भागहर्ता वा ऐन्द्राग्ने हविषि संस्तुतौ वा । घृतपृष्ठो घृतेन स्पृष्ट आज्यस्पृष्टः अयमेवाग्निः पृथिवीस्थानः सहस्रिणो वायोः । सर्वस्माद्धि वायुर्बलवान् । अथवा सहस्रमस्य नियुक्तमश्वानामस्तीति सहस्री वायुः । 'आ नो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिः'[९] (ऋ० सं० १ । १३५ । ३) इति हि श्रूयते वायव्ये मन्त्रे । वायुरादित्योऽग्निरित्येवं परिसंख्याय वायोस्तृतीयोऽग्निर्भवति । वायुरपि च ज्योतिरेव । 'वायुना ज्योतिषा' इति हि[१०] विज्ञायते । तत्रैतस्मिंस्त्रेधा विभक्ते ज्योतिषि प्रधानत्वेनैतमेवाहमपश्यमिति । विश्पतिं विश्वस्य सर्वस्य जगतः पालयितारम् । कतमम् । य एष सप्तपुत्रः सूर्य एतमेवाहमत्र प्रधानत्वेनापश्यमिति । एवमेतस्मिन्मन्त्रे सूर्यः प्रधानः सूक्ते सूर्याधिकारात् । तस्मात् 'अस्य वामस्य इत्येषः

अत्र प्रथमार्धे 'अस्य' उदात्तं द्वितीयार्धेऽनुदात्तम्

---

१ क. ख. छ. त. °पृष्ठो अस्या.° २ क. ख. ५ (२६); छ. त. २८; द. ६. ३ क. ख. घ. झ. ट. वामस्य०० सप्तपुत्रम्; ग. ज. वामस्य पलितस्येति । अस्य°. ४ च. °सवनीये. ५ ग. ज. °दैवशस्त्रे. ६ क. ख. घ. झ. ट. ठ. ड. तस्य; च. अस्य त. ७ घ. ट. ठ. ड. कतमश्नः अशनो°. ८ घ. ट. वोदकं; ठ. ड. °हरते वोदकं. ९ ठ. ड. सहस्रिणीभिरुपयाहि यज्ञमिति श्रू°. १० घ. ट. ठ. ड. हि.

'अस्य'शब्दोऽन्तोदात्तः । वायुरत्राप्रधानम् । तस्मात् 'तृतीयो भ्राता घृतपृष्ठो अस्य' इत्येषः 'अस्य' शब्दोऽनुदात्तः ।

स्वरभेदे कारणम्

एवमेकस्मिन्मन्त्र[2] उदात्तानुदात्तावेतौ 'अस्य'शब्दौ प्रधानाप्रधानविषयावित्येकमेवोदाहरणम् । आह । 'तृतीयो भ्राता घृतपृष्ठो अस्य' इत्यनेन 'अस्य' शब्देन सूर्य एव कस्मान्न संबध्यते । अपि च तृतीयशब्दस्य प्रकृतानुक्रमाविरोधेनैवमेव सुखतरा[3] योजना भविष्यति । उच्यते । 'अस्य वामस्य' इत्येतदन्तोदात्तं पदम् ।[4] इतरदन्यत् ।

अनेन द्वितीय-'अस्य' पदेन सूर्यस्य निर्देशो न भवति यस्मात्स्वरकृताद्विशेषादर्थकृतेनापि विशेषेण भवितव्यम्

'तृतीयो भ्राता घृतपृष्ठो[1] अस्य' इति समानरूपमेव सत्पूर्वेणानुदात्तमिति स्वरकृताद्विशेषादर्थकृतेनापि विशेषेण भवितव्यमित्यप्रधानार्थाभिधायितावि[5]शेषः प्रतीयते । आदित्यसंस्तवात्सूक्ते वायुश्चात्राप्रधानः प्रकृतादादित्यात् । तस्माद्वायुविषयमेवेदम् 'अस्य' इति द्वितीयपदमनुदात्तं संपद्यते । अतः सुतरामुपपन्नं भवति 'उदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे' इत्यत्र प्रथमादेशान्वादेशशब्दाभ्यां प्रधानाप्रधानावुच्येते इति ।

अन्ये तु मन्यन्ते । प्रथमादेशो नाम प्रारम्भः । तत्र यद्वर्तते तदुदात्तं भवति 'प्रधानार्थतरमुदात्तम्[6]' इत्यनेनैव लक्षणेन । तद्यथा 'अस्या ऊ षु णः' 'अस्य वामस्य' इति । अन्वादेशो नामान्य[7]पदस्य पश्चादादेशः । तत्र वर्तमानमनुदात्तं भवति । 'पदात्परस्य निघातो भवति' इति हि लक्षणविदोऽपि ब्रुवते । तथा[8]नुदात्तत्वेनैव लक्षणेनाल्पीयोऽर्थतरमप्रधानार्थतरं भवति । तद्यथा । 'दीर्घायुरस्या यः पतिः' 'तृतीयो भ्राता घृतपृष्ठो अस्य' इति ।

'उदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे' इत्यस्यान्यो व्याख्यामार्गः

१ ग. च. ज. °पृष्ठोऽस्ये°. २ क. ख. ग. ज. घ. झ. ट. ठ. ड. °कस्मिन्नेवास्मिन्मन्त्रे°. ३ च. °सुखतमा° रा. ४ क. ख. ग. च. ज. घ. ट. पुस्तकेषु विरामो नास्ति. ५ क. ख. घ. झ. ट, ठ. ड. °धायिना वि°. ६ क. ख. घ. ट. ठ. ड. °मुदात्तत्वेनैव ल;° ग. च. ज. °मुदात्तमित्यनैव ल°. ७ क. ख. ग. ज. घ. ट. ठ. ड. नामान्यस्य; च. नामा˘स्य° न्य. ८ क. ख. घ. झ. ट. ठ. ड. तत्रानु°; घ. तथा° त्रा.

आह । कथं सप्तमपुत्र आदित्य इति । उच्यते । 'सप्तमो ह्यसावादित्यः पुत्रः' इत्येवमैतिहासिका मन्यन्ते । ब्राह्मणेऽपि च 'मृतमितरमाण्डमवापद्यत (मैत्रा० सं० १ । ६ । १२) तस्मिन्नादित्यः सप्तम इन्द्रोऽष्टमः' इति हि विज्ञायते । अथवा सप्तसंख्याका युक्ता अस्य रश्मयः पुत्राः तेनासौ सप्तपुत्रः । अथवा नैव संख्याभिप्रायमेतत्सप्तपुत्र इति । आह । कथं तर्हीति । उच्यते । 'सर्पणपुत्रमिति' एवम् । सर्पणा हि तस्य रश्मयः । मुहूर्तमप्यनवस्थायिनो यस्य पुत्राः सोऽयं सप्तपुत्रः । 'सप्त सृप्ता संख्या' षड्भ्यः सकाशात् । एवं सप्तसंख्योपेताः सर्पणक्रियायोगिनो वैत एव 'आदित्यरश्मयः' अस्यादित्यस्य पुत्राः 'इति' मन्त्रविदो मन्यन्ते । यथा चायं सप्तभिः सर्पणैर्वा रश्मिभिर्युज्यते तथेयमपरा ऋगेतस्मिन्नेव सूक्ते ॥ २६ ॥

आदित्यः कथं सप्तपुत्रः

---

सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा । त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः (ऋ० सं० १ । १६४ । २) ॥ सप्त युञ्जन्ति रथमेकचक्रमेकचारिणं चक्रं चक्रतेर्वा चरतेर्वा क्रामतेर्वैको अश्वो वहति सप्तनामादित्यः सप्तास्मै रश्मयो रसानभिसंनामयन्ति सप्तैनमृषयः स्तुवन्तीति वेदमपीतरन्नामैतस्मादेवाभिसंनामात्संवत्सरप्रधान उत्तरोऽर्धर्चस्त्रिनाभिचक्रं त्र्यृतुः संवत्सरो ग्रीष्मो वर्षा हेमन्त इति संवत्सरः संवसन्तेऽस्मिन् भूतानि ग्रीष्मो ग्रस्यन्तेऽस्मिन्रसा वर्षा वर्षत्यासु पर्जन्यो हेमन्तो हिमवान् हिमं पुनर्हन्तेर्वा हिनोतेर्वाजरमजरणधर्माणमनर्वमप्रत्यृतमन्यस्मिन्यत्रेमानि सर्वाणि भूतान्यभिसंतिष्ठन्ते तं संवत्सरं सर्वमात्राभिः स्तौति । पञ्चारे चक्रे परिवर्तमान इति पञ्चर्तुतया पञ्चर्तवः संवत्सरस्येति च ब्राह्मणं हेमन्तशिशिरयोः समासेन षळर आहुरर्पितमिति षळृतुतयाराः प्रत्यृता नाभौ षट् पुनः सहतेः । द्वादशारं

---

१ क. ख. घ. ट. ड. मृतपितरमण्ड°; ग. ज. मृतमितरमण्ड°; मृतमितरमण्ड° पि. २ ग. ज. 'ह' नास्ति; च. इति विज्ञापयति' यते. ३ क. ख. ५ (२६); ग. ६६/२८; ठ. ड. 'मन्यन्ते । इति निरुक्तटीकायां चतुर्थाध्याये षड्विंशतिः खण्डः; इतरेष्वङ्को नास्ति. ४ छ. त. द. पञ्चर्तुतायाः. ५ छ. त. द. °शिशिरसमासेन. ६ क. ख. छ. त. द. ड. षळरः. ७ क. ख. षड्तु°; छ. त. द. षल्तुताया अराः°.

नहि तज्जराय । द्वादश प्रधयश्चक्रमेकमिति मासानां मासा मानात्प्रधिः प्रहितो भवति । तस्मिन्त्साकं त्रिंशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः । षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति च ब्राह्मणं समासेन । सप्त शतानि विंशतिश्च तस्थुः ।
५ सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा इति च ब्राह्मणं[1] ( ऐ० आ० ३ । २ । १ ) विभागेन विभागेन ॥ २७ ॥

इति चतुर्थाध्यायस्य चतुर्थः पादः ॥[2]

---

'सप्त युञ्जन्ति[3] रथमेकचक्रमिति । सप्तसंख्योपेताः सर्पणा वा
१० युञ्जन्ति योजयन्त्यात्मना रश्मयो रथं रंहणमादि-
आदित्यस्य सप्त-रश्मित्ववाचिनी ऋक् त्यम् । उद्यन्नेव ह्यसावादित्यो रश्मिभिः युज्यते रंहणश्चासौ मुहूर्तमप्यनवस्थायित्वात् । एकचक्रम् एक एव ह्यसावन्तरिक्षे चरति । इतराणि ज्योतींषि नाशयत्येव स्वेन तेजसा प्रकाशेन । एकोऽश्वः । एक एवाश्वः अशनो व्यापनः
१५ सर्वभूतानां वहति गच्छति सप्तनामा सप्तस्तुतिः । सप्तपुत्र इत्येवमाद्याः सप्तसंख्यायुक्ताः[4] स्तुतयोऽस्य । अथवा ' सप्तास्मै रश्मयो रसानभिसंनामयन्ति ' एतस्मिन्मण्डल इति सप्तनामा । अथवा ' सप्तैनमृषयः ' नमन्ति ' स्तुवन्तीति वा[5] ' सप्तनामा । ' इदमपीतरत् ' शब्दनामैतस्मादेवाभिसंनामात् । तदपि स्वमर्थं प्रत्याययितुं[6] क्रियापदस्य
२० वा गुणभावेनाभिमुख्येन संनमति । स एवंलक्षण एकचारी व्यापनः सप्तनामा सर्पणैः सप्तभिर्वा रश्मिभिर्युक्तो यदा वहत्युदयादारभ्य यावदस्तमिति तदैवं वहन्किममभिनिर्वर्तयतीति । उच्यते । त्रिनाभिचक्रमजरमनर्वम् । त्रिनाभिसंयुक्तं कालचक्रं चकनधर्मि । चकनं चलनमुच्यते । चरणधर्मि क्रमणधर्मि[7] वा । अजरमर्जरणधर्माणम्[8] । अनर्वमप्रत्यृतमन्यस्मिन् । अनाश्रि-
२५ तमित्यर्थः । त्रिनाभिचक्रम् । ' ऋतुः ' हि ' संवत्सरो ग्रीष्मो वर्षा हेमन्त इति ' अनेन ऋतुप्रविभागेन[9] । एतदेवास्य त्रिनाभित्वमभिप्रेतम् ।

---

१ क. ख. ६ ( २७; ) छ. त. २९; द. ७. २ लिखितपुस्तकेषु ' इति० पादः ' नास्ति. ३ क. ख. व. झ. ट. युञ्जन्ति रथ० भुवनाधितस्थुः । स°; ठ. ड. युञ्जन्तीति । सप्तसंख्यो°. ४ क. ख. व. झ. ट. ठ. ड. °संख्याकाः; च. संख्यायुक्ताः. ५ क. ख. व. झ. ट. ठ. ड. 'वा' नास्ति. ६ च. प्रत्यापयितुं. ७ च. क्रामण°. ८ ग. च. ज. °जरसमरणध°. ९ क. ख. घ. झ. ट. ठ. ड. 'प्र'
३२ नास्ति.

ऋतुभिर्ह्यसौ संवत्सरो नह्यते । संनह्यत इत्यर्थः । संवत्सरप्रधान उत्तरोऽर्धर्चो नादित्यप्रधानः । 'संवत्सरः संवसन्त्यस्मिन्' इति प्रसक्तानुप्रसक्तम् । समस्तानि हि 'भूतानि' एतस्मिन् संवसन्ति । मैथुनाभिप्रायो वा स्यात्संवासः । 'ग्रीष्मो ग्रस्यन्तेऽस्मिन् रसाः' सूर्येण । 'वर्षा वर्षत्यासु पर्जन्यः' । तदेतत्प्रत्यक्षमेव । 'हेमन्तो हिमवान्' । तत्र हिमं बहु भवति । 'हिमं पुनर्हन्तेर्वा' । तद्धि हन्त्योषधिवनस्पतीन् । 'हिनोतेर्वा' तर्पणार्थस्य । तेन हि पुष्यन्ति यवादयः । गमनार्थस्य वा हन्तेः । तद्धि गमयति क्षयं भूतानि । अजरं तत्संवत्सरचक्रमजरणधर्मि । न हि संवत्सरस्य जरा नाम धर्मोऽस्ति । अनर्वं च तत् । अप्रत्यृतम् अप्रतिगतमनाश्रितमन्यत्र क्वचित् । आह । यत्र किमिति । उच्यते । यत्र यस्मिन्निमानि विश्वा विश्वानि भुवनानि भूतानि अधि उपरि तस्थुः अभिसंतिष्ठन्ते । आश्रितानि विनाशमुपयान्ति । विनाशोऽपि हि संस्थोच्यते । संस्थितः पिता ममेत्युक्ते मृत इति गम्यते । तदेवंलक्षणं त्रिनाभि कालचक्रमजरं य आदित्योऽभिनिर्वर्तयति यच्चेदमभिनिर्वर्त्यते कालचक्रं तदेतदुभयमप्यहं स्तौमीत्येवमस्य मन्त्रस्य पूर्वोऽर्धर्च आदित्यप्रधान उत्तरः संवत्सरप्रधानः ।

*संवत्सरप्रधान उत्तरोऽर्धर्चः*

आह । कथं गम्यते संवत्सरप्रधान उत्तरोऽर्धर्च इति । न हि संवत्सरग्रहणमत्रास्ति । उच्यते । त्रिनाभिचक्रमित्येतस्मादृतुसंबन्धात् । आह । एतदपि विशेषलिङ्गमत्र नास्त्येव । अत्र न ऋतवो नाभिशब्देनोच्यन्त इति । तस्मादेतदप्ययुक्तमेवेति । उच्यते । य एष पूर्वस्मिन्नर्धर्चे प्रकृतेन सूर्येणाभिनिर्वर्त्यते संवत्सरो यस्मिंश्च सर्वाण्येतानि भूतान्यभिसंतिष्ठन्ते तमेतं संवत्सरमुत्तरस्मिन्नर्धर्चे प्रकृत्य मन्त्र-

*संवत्सरप्रधानत्वे प्रमाणम्*



१ क. ख. घ. झ. ट. ठ. ड. 'असौ' नास्ति. २ क. ख. घ. झ. ट. ठ. ड. तत्र हि बहु भवति हिमम्. ३ क. ख. घ. झ. ट. ठ. ड. °तीन् प्राकिराति । हि°; च. °तीन्र । हि° प्रकिति. ४ घ. ट. ठ. ड. वा हस्य वा हन्तेः°. ५ ठ. ड. अनाश्रितानि. ६ च. श्वाँ ममे° पिता. ७ क. ख. घ. ट. ठ. ड. °स्मादनुसं°. ८ क. ख. ग. ज. घ. झ. ट. ठ. ड. त्रय ऋत°; च. अत्र नं° त्रय. ९ क. ख. घ. ट. ठ. ड. अस्मिंश्च.

दक् त्रिनाभिचक्रमित्येवमाद्याभिः ' सर्वमात्राभिः ' सर्वैरवयवैः ' पञ्चारे चक्रे' 'षडरे' ' त्रीणि शतानि षष्टिश्च' 'सप्त शतानि विंशतिश्च' इत्येवंप्रकारैः ' स्तौति ' । तस्मात्सूक्ते संवत्सरस्यावयवस्तुतिप्रायदर्शनादिहापि त्रिनाभिशब्द ऋतुविषय इत्युपपद्यते । षण्णामृतूनां द्वौ द्वावृतू समानस्वभावावित्यनेनाभिप्रायेण त्रित्वम् । अथैवमुक्त्वा ' तं संवत्सरं सर्वमात्राभिः स्तौति ' अधुना यथैतं सर्वमात्राभिः स्तौति तथोपपादयति ।

पञ्चारे चक्रे परिवर्तमाने तस्मिन्ना तस्थुर्भुवनानि विश्वा । तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्यते सनाभिः ' [ ऋ० सं० १ । १६४ । १३ ]

' पञ्चारे चक्रे ' इत्यत्र पञ्चर्तुतया संवत्सरस्य स्तुतिः

' इति पञ्चर्तुतया ' संवत्सरस्य स्तुतिः । पञ्चारे चक्रे । ऋतवोऽत्रारत्वेनाभिप्रेताः । परिवर्तमाने परिगृह्येदं सर्वं जगद्वर्तमाने । आह । किमिति । उच्यते । तस्मिन्नातस्थुः । तस्मिन्नवस्थितानि उपर्यधिरूढानि। कानि । भुवनानि भूतानि विश्वानि सर्वाणि । कालचक्रे हि सर्वमेवेदं जगदधिरूढं बम्भ्रमीति । अथैवमतिमहतापि सर्वभूतचक्रेणाक्रान्तस्य कालचक्रस्यैवमपि भूरिभारो बहुभारः सन्नैवायमक्षः संवत्सराख्यस्तप्यते । न संतापयति । नापयास्यतीत्यर्थः । अपि च सनादेव चिरंतन एव सोऽक्षस्तथापि न तप्यते न वा ततोऽपि सन्सहसैव विशीर्यते नश्यति। आह । यद्यक्षो न तप्यते शीर्यते वा किमेवमतिबलीयसाक्षेण घृष्यमाणा नाभिस्तप्यते शीर्यते वेति । नेत्युच्यते । सनाभिरक्षो न शीर्यते न तप्यते। नाभिरादित्य एवाभिप्रेतः । आह । कथमेतद्गम्यते ' पञ्चारे चक्रे ' इत्यत्र अरशब्देन ऋतवोऽभिप्रेता इति । न ह्यत्र विशेषलिङ्गमृतूनामरत्वेऽस्ति । अपि च षडृतवः प्रसिद्धा इह च पञ्चार इति श्रूयते तस्मादनुपपन्नमिति । उच्यते। सूक्ते संवत्सरस्यावयवस्तुतिप्रायदर्शनादुपपद्यते । ' पञ्चर्तवः संवत्सरस्येति च ब्राह्मणम् । हेमन्तशिशिरसमासेन ' । एकत्वेनेत्यर्थः । तस्मादुपपद्यत एवं पञ्चत्वमृतूनामरत्वं चावयवस्तुत्यभिसंबन्धादिति ।

---

१ ग. ज. °वर्तमान इति । पञ्च°; घ. ट. °वर्तमाने० शीर्यते सनाभिः. २ च. °र्तुतया. ३ क. ख. घ. ट. ठ. ड. विश्वा विश्वानि. ४ ठ. ड. बभ्रमीति. ५ क. ख. घ. झ. ट. ठ. ड. नापि संतापं यास्य°; च. नापैया° पि संतापं. ६ क. ख. घ. झ. ट. ठ. ड. ऋतवः षट्.

'पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् । अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितम्' ( ऋ० सं० १ । १६४ । १२ ] ॥ 'षळर आहुरर्पितमिति षळृतुतया' संवत्सरस्य स्तुतिः । पञ्चपादं संवत्सरम् । ऋतवो हि संवत्सरस्य पादाः । तैरसौ पतति गच्छति । पितरं पालकं सर्वभूतानामुत्पादयितारं वा । द्वादशाकृतिं द्वादशमासप्रविभक्तविग्रहम् । 'द्वादश मासाः संवत्सरस्य' इति च ब्राह्मणम् । दिवे द्युलोकस्य परे परमेऽर्धे स्थाने योऽयमवस्थित आदित्य एतस्मिन्पञ्चपादं पितरं द्वादशाकृतिं पुरीषिणम् उदकवन्तं संवत्सरम् अर्पितमाहुः अविशेषेणान्ये ब्राह्मणाः । 'तस्मात्सर्व ऋतवो वृष्टिमन्तः' इति ह विज्ञायते [ मैत्रा० सं० ३ । १ । ५ ] । तस्मात्संवत्सरस्योदकवत्त्वमुपपद्यते । अथ पुनरिमेऽन्ये य एते उपरे उपर्यवस्थिताः सप्त ऋषय एते विचक्षणं विविधानां सर्वभूतकर्मणां द्रष्टारमेतमादित्यं चक्रे षडरे एतस्मिन् संवत्सराख्ये अर्पितमाहुः । अथवा सप्तचक्र आदित्यः । स हि सप्तभीरश्मिभिश्चक्रते दीप्यते । 'सप्तचक्रे' इत्येकं पदं तस्मादेवमपि भवति । एवमेके संवत्सरमादित्यप्रविष्टमाहुः । अपरे पुनरादित्यं संवत्सरप्रविष्टमिति । एष समस्तार्थः । एवमेतस्यामृच्यादित्यसंवत्सरौ संस्तूयेते । वक्ष्यति हि 'चन्द्रमसा वायुना संवत्सरेणेति संस्तवः' [ निरु० ७ । ११ ] । संवत्सरस्य चक्ररूपकेण नाभ्यादिभिः स्तुतिरुपपद्यते । 'अराः प्रत्यृता नाभौ' । प्रतिगता इत्यर्थः । षट् पुनः सहतेः । ते हि पञ्चसंख्यामभिभूय वर्तन्ते ।

अत्र षड्ऋतुतया संवत्सरस्य स्तुतिः

'द्वादशारं न हि तज्जराय' 'द्वादशप्रधयश्चक्रमेकमिति' 'मासानाम्' एतौ पादौ भवत इति वाक्यशेषः । 'द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत । तस्मिन्त्साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः' [ ऋ० सं० १ । १६४ । ४८ ] ॥ 'मासा मानात्' ।

१ ग. ज. पितरमिति । षडर आहु°; घ. ट. पितरं० रर्पितम्. २ क. ख. घ. झ. ड. षलर; च. षडर. ३ क. ख. घ. झ. ड. षलर; ग. च. ज. षडर. ४ क. ख. ग. च. ज. षड्तु°; घ. झ. ड. षलृतु°. ५ च. 'पालकं' नास्ति. ६ च. °दयितुं वा° तारं. ७ क. ख. घ. झ. ट. ठ. ड. °रे तस्मिन्; च. एतस्मिन्. ८ ग. ज. प्रतिष्ठ°. ९ क. ख. ग. घ. झ. ट. ठ. ड. 'सं' नास्ति; च. सं. १० क. ख. घ. झ. ट. ठ. ड. रूपेण. ११ क. ख. घ. झ. ट. ठ ड. जरायेति द्वा°. १२ ग. च. ज. °मेकमिति । मासा°; घ. ट. °मेकं० न चलाचलासः.

मीयते हि तैः संवत्सरः । ' प्रधिः प्रहितः ' । प्रश्लेष्य चक्रे निहितः ' भवति ' । गण्डपृष्ठः प्रधिरित्युच्यते । द्वादशप्रधयो मासाख्याः संहताः सन्तश्चक्रमेकं भवति । तत्र च पुनस्त्रीणि नभ्यानि फलकानि भवन्ति । त्रय ऋतवो ग्रीष्मो वर्षा हेमन्त इति । यदेतदेवंलक्षणं चक्रं क उ तच्चिकेत । कस्तु तद्याथात्म्येन विजानाति । तस्मिंश्चक्रे साकं सह त्रिशता न शङ्कवोऽर्पिताः । त्रिशतान्यहोरात्राणि शङ्कव इवार्पिताः । षष्टिर्न षष्ट्यधिकानि त्रीण्यहोरात्रशतानि शङ्कव इवार्पितानि प्रक्षिप्तानि । द्वितीयो नकारः समुच्चयार्थे । चलाचलासः चलान्यचलानि च । चलान्यनवस्थायित्वात् । अचलान्यहोरात्रात्मभावं न मुञ्चन्ति । आह । कथं गम्यते अहोरात्राण्येतानीति । उच्यते । संवत्सरस्तुतिप्रायसंबन्धाच्च । ' षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति च ब्राह्मणम् । समासेन ' । अहोरात्रयोरेकत्वेनेत्यर्थः ।

अत्र द्वादशमासत्वेन षष्ट्यधिकत्रिशतादिवसत्वेन च

' द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य । आ पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थुः ' ( ऋ० सं० १ । १६४ । ११ ) ॥ न हि तज्जीर्यते । किं तर्हि । अन्यानि भूतानि जरयत् वर्वर्ति चक्रं पुनःपुनर्वर्तते । परि द्यां परिगृह्य द्यां च पृथिवीं च ततो वर्वर्ति । ऋतस्य उदकस्य संपूर्णम् । अथवा ऋतस्य आदित्यस्य स्वभूतम् । अथवा ऋतस्य यज्ञस्याङ्गभूतम् । आतस्थुः पुत्रा एतस्मिंश्चक्रे मिथुनाः । द्वन्द्वा इत्यर्थः । कस्य । अग्ने । अग्निशब्दोऽस्मिन्मन्त्रे संबोधनान्तः षष्ठ्या विपरिणम्यतेऽग्नेः पुत्रा आतस्थुरिति । अग्निश्चात्रादित्य एवाभिप्रेतः । तस्याहोरात्राण्येव पुत्रत्वेनोच्यन्ते तत्कृतत्वादहोरात्राणाम् । आह । कियन्तस्ते पुत्रा इति । उच्यते । सप्त शतानि विंशतिश्च । ब्राह्मणमपि चैतस्मिन्नर्थे भवति । ' सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा इति च ब्राह्मणमहोरात्रयोर्विभागेन विभागेन ' इति । एवमेतस्मिन्सूक्ते संवत्सरं ' सर्वमात्राभिः ' सर्वैरवयवैः

अत्र द्वादशमासत्वेन विंशत्यधिकसप्तशताहोरात्रत्वेन च

१ ठ. ड. मण्डपृष्ठः. २ ठ. ड. तत्र. ३ क. ख. थार्थ्यतो; घ. झ. ट. ठ. ड. °थात्म्यतो; च. °थात्म्येन° त्म्यतो. ४ क. ख. घ. झ. ट. चलानि च अच°. ५ ग. च. ज. °रायेति। न°; घ. ट. °राय०श्च तस्थुः. ६ ग. च. ज. जरयन्. ७ क. ख. घ. झ. ट. ' सं ' नास्ति. ८ ग. ' च ' नास्ति; च. इति ˅ ब्रा° च. ९ घ. ठ. ड. 'विभागेन' सकृदेव

'स्तौति'। तस्मादुपपद्यते 'सप्त युञ्जन्ति' इत्येतस्यामृचि संवत्सर-प्रधानस्त्रिनाभिचक्रमित्येषोऽर्धर्चः । तदेतत्सर्वमपि सप्तपुत्रसर्पण[1]पुत्र-मित्येतस्मात्पदात्प्रसक्तानुप्रसक्तमुक्तम्। प्रकृतमिदानीं वर्णयिष्यामः। किंच पुनः प्रकृतम्। ऐक[2]पदिकसमाम्नायव्याख्यानम्[3]। तत्र यदुक्तं तदुक्तमेवं यदनुक्तं तद्वक्तव्यमितीदमारभ्यते 'सस्निमविन्दच्चरणे नदीनाम्' इति ॥२७॥[4]

नवमाध्यायस्य चतुर्थः पादः।[5]

इति[6] जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ ऋज्वर्थायां निरुक्तटीकायां[7] नवमोऽध्यायः समाप्तः[8]।

* एका[1]र्थको[2]नुवयः[3]सुपर्णा[4]यदिन्द्रजुष्टो[5]दमूनाः[6]संमातपन्ती[7]षिरेणमरु-त्वाँ[8]ति[9]तउसकुं[10]भिवतत्सू[11]र्यस्येन्द्रे[12]णसमीमा[13]न्तासःकाय[14]मानःकनीनके[15]वोपो[16]अदर्शि[17]सुविते[18]विद्यामदे[19]वानआं[20]याद्यो[21]मदिति[22]रादिति[23]रुत[24]समात्रा[25]हां स्यवा[26]मस्यसप्तयुञ्ज[27]न्ति सप्तविंशतिः।

इति[9] निरुक्ते पूर्वषट्के चतुर्थोऽध्यायः समाप्तः।

---

१ ग. ज. °पुत्रसर्पणमित्ये°; च. °पुत्रं सर्पणमित्ये° पुत्र. २ ग. ज. एक-पदि°. ३ च. °ख्यातम्. ४ क. ख. ६ (२७); ग. २९; इतरेष्वङ्को नास्ति. ५ ग. इति चतुर्थः पादः; च. ज. ठ. ड. 'नव...पादः' नास्ति. ६ ध. ट. नवमा-ध्यायश्च समाप्तः श्रीमज्जम्बूमार्गाश्रमवासिनो भगवद्दुर्गकृतवृत्तौ; झ. नवमाध्यायश्च समाप्तः°. ७ ग. °रुक्तवृत्तौ टी;° ट. ड. टीकायां निघण्ट्वध्यायसहनवमोऽध्यायः समाप्तः। समाप्तश्चतुर्थः पादः. ८ ग. 'समाप्तः' नास्ति; च. °माप्तः। चतुर्थः पादः समाप्तः; ज. °माप्तः। चतुर्थः पादः. * इयं खण्डशृङ्खला छ. त. द. पुस्तकेषु नास्ति. ९ ङ. इति. नै. पू. च. यः; थ. 'समाप्तः' नास्ति; ठ. ड. 'इति निरुक्तपूर्व-षट्के चतुर्थोऽध्यायः' इदं शृङ्खलायाः प्राग्वर्तते; छ. त. इति चतुर्थोऽध्यायः समाप्तः (छ 'समाप्तः' नास्ति); द. इति नैरुक्तस्य चतु°.

## अथ पञ्चमाध्यायस्य
## प्रथमः पादः।

---

सस्निमविन्दच्चरणे नदीनाम्। संस्नातं मेघम्। वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा। वोळ्हृतमो ह्वानानां स्तोमो दूतो हुवन्नरौ नरा मनुष्या नृत्यन्ति कर्मसु दूतो जवतेर्वा द्रवतेर्वा वारयतेर्वा। दूतो देवानामसि मर्त्यानामित्यपि निगमो भवति। वावशानो वष्टेर्वा वाश्यतेर्वा। सप्त स्वसृररुषीर्वावशान इत्यपि निगमो भवति वार्यं वृणोतेरथापि वरतमम्। तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यम्। तद्वार्यं वृणीमहे वर्षिष्ठं गोपायितव्यं गोपायितारो यूयं स्थ युष्मभ्यमिति वान्ध इत्यन्ननामाध्यानीयं भवति। आमत्रेभिः सिञ्चता मद्यमन्धः। आसिञ्चतामत्रैर्मदनीयमन्धोऽमत्रं पात्रममा अस्मिन्नदन्त्यमा पुनरनिर्मितं भवति पात्रं पानात्तमोऽप्यन्ध उच्यते नास्मिन्ध्यानं भवति न दर्शनमन्धंतम इत्यभिभाषन्तेऽयमपीतरोऽन्ध एतस्मादेव। पश्यदक्षण्वान्न विचेतदन्ध इत्यपि निगमो भवति ॥ १ ॥

---

'सस्निम्' (निघ० ४। २। १) इत्यनवगतम्। अर्थाप्रतीतिरप्यनवगम इत्युच्यते। लक्षणासंपन्नः संस्कारः खल्वप्यविज्ञानमित्युच्यते।

**अनवगमस्य प्रकाराः**

तत्रैवं सति क्वचित्प्रकृत्यादेः संस्कारस्यानवगमः क्वचिदर्थाप्रतीतिरेव क्वचिदुभयस्याप्यनवगमो यथास्मिन्नेव सस्निमिति। न विज्ञायते किमप्युक्तं भवति। प्रकरणादत्र मेघोऽभिधेयः। अन्यत्रान्योऽपि कश्चित्स्यात्प्रकरणविशेषादेव। एवं सर्वत्रैवोपेक्षितव्यम्। प्रकरणसामर्थ्याच्छब्दो ह्यर्थान्तरं भजते।

---

१ क. ख. ध. वोढृतमो;० छ. त. द. वोल्हृतमो. २ छ.त.द. 'दूतो० भवति' नास्ति. ३ छ. त. द. गोपितारो. ४ ठ. ह. सस्निमविन्दच्चरणे नदीनामिति। सस्निमित्य°. ५ क. ख. ग. ज. घ. ट. ठ. ह. °पन्नश्च सं°; च. °पन्नः सं° च. ६ च. कचि°. ७ क. ख. घ. झ. ट. ठ. ह. °ब्दोऽप्यर्था;° च. °ब्दोत्यर्था° झ. ८ ग. °जते। १। सस्नि°.

'सस्निमविन्दच्चरणे नदीनामपावृणोद्दुरो अश्मव्रजानाम्। प्रासां गन्धर्वो अमृतानि वोचदिन्द्रो दक्षं परि जानादहीनाम्'

'सस्निम्' इत्यस्य (ऋ० सं० १० । १३९ । ६) ॥ विश्वावसुर्देवगन्धर्वस्येयमार्षम्। घर्मोत्सादने विनियुक्ता प्रयोगोऽर्थश्च (मैत्रा० सं० ४ । ९ । ११)। तत्रोक्तं

५ 'परिषिक्ते गन्धर्वनामभिरुपतिष्ठन्त ऋत्विजो यजमानश्च' [ मान० श्रौ० ४ । ४ । २६ ] इति। तासामुपस्थानर्चामियं मध्येमैत्रायणीयके [ मैत्रा० सं० ४ । ९ । ११ ]। सस्निं संस्नातम् अद्भिः परिवेष्टितं सर्वतः परिप्लुतं धौतं वा मेघमविन्दत् अलभतेन्द्रः। क्व पुनरलभत। चरणे

१० नदीनाम्। यत्र नदना आपश्चरन्ति गच्छन्ति तत्रालभत। अन्तरिक्षलोके इत्यर्थः। आह। लब्ध्वानन्तरं किमकरोदिति। उच्यते। अपावृणोत् अपावृतवान्। उद्घाटितवानित्यर्थः। दुरः द्वारः। आह। कस्य। उच्यते। अश्मव्रजानाम् अपाम्। अश्मा मेघस्तमधिरूढा या व्रजन्ति स वा[1] यासां व्रजभूतो गोष्ठभूतस्ता अश्मव्रजा आपः। तासां निर्गमनद्वाराण्यपावृणोत्।

१५ या एता एवंलक्षणा आपस्तासामस्य चेन्द्रस्य गन्धर्वो विश्वावसुः प्रा[3]वोचदमृतानि नामानि च्छान्दसस्तुतियुक्तानि। तानि हि नित्यत्वादमृतानि। आह। कस्मात्पुनरस्येन्द्रस्यामृतान्[4]यवोचदासां चापामिति। उच्यते। इतो यस्मादसाविन्द्रो दक्षं दातारं मेघमयमासाम् अहीनाम् अयनानामपां द्वारेष्वपावृतेषु दानाय समर्थो भविष्यतीत्येवं परिजानात् परिज्ञा[5]तवान् परि-

२० ज्ञा[6]य चापावृणोद्दुरोऽश्मव्रजानां तस्मादस्येन्द्रस्यामृतानि नामानि प्रावोचद्द्विश्वानेन प्रकारेणेन्द्रेण दत्ताभिः सर्वमेवेदं जगद्[7] ध्रियत इत्यासामप्यपामनेन हेतुना प्रा[8]वोचदिति। एवमेतस्मिन्मन्त्रे 'चरणे नदीनामविन्ददपावृणोद्[9] दुरो अश्मव्रजानां दक्षं च परिजानात्' इत्येकवाक्यतार्थसंबन्धात् 'सस्निं' शब्दो मेघविशेषणमुपपद्यते।

---

१ घ. झ. ट. ठ. ड. द्वाराणि; च. द्वारः° राणि. २ क. ख. व. झ. एषु पुस्तकेषु 'वा' स्थाने 'च' वर्तते; ट. च° वा. ३ घ. झ. ट. ठ. ड. प्रवो°; च. प्रा°वो° प्र. ४ क. ख. घ. झ. ट. ठ. ड. °तानि प्रावो°; च. °तानि अवो° प्रा. ५ ग. ज. 'परिज्ञातवान्' नास्ति. ६ घ. झं. ट. ठं. ड. परिज्ञ नाय. ७

२१ च. जगत्रितयं इ° द् ध्रियत. ८ ग. ज. प्रवो° ९ क. ख. व. ट. दुरोऽश्मव्र°.

अथवायमस्य मन्त्रस्य पादव्यत्ययेनार्थः स्यात् । संस्नातं मेघमविन्ददलभतेन्द्रः पर्येष्यमाणः । क्वाविन्दत् । चरणे नदीनामपामन्तरिक्षलोके । लब्ध्वा च स एवेन्द्रस्तं मेघं दक्षं दातारमहीनामपां परिजानात् । परिज्ञाय च समर्थोऽयमिति ततस्तस्य द्वारमपावृणोद्दृमव्रजानामपामधोनिर्गमनाय । तत एतानि निर्गमय्यामृतान्युदकानि सस्यसंस्कराणि प्रावोचदिव प्रोक्कथयदिवासाविन्द्रो गन्धर्वे आसां प्रजानां जीवध्वमेभिरुदकैरस्मद्दत्तैरिति । 'इन्द्रो गन्धर्वस्तस्य मरुतोऽप्सरसः' [मैत्रा० सं० २ । १२ । २] इति श्रूयते । तस्मादिन्द्रस्यापि गन्धर्वत्वमुपपद्यत एव । स च गोर्वज्रस्य धारयितेति गन्धर्वः ।

सलिलमविन्ददित्यस्य मन्त्रस्यान्योऽर्थः

'वाहिष्ठः' [२] इत्यनवगतम् । 'वोढृतम' इत्यवगमः । 'वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा । युवाभ्यां भूत्वश्विना' [ऋ० सं० ८ । २६ । १६] ॥ गायत्री । विश्वमनसो वैयश्वस्येयमार्षं पितुर्वा व्यश्वस्य । प्रातरनुवाकाश्विनयोः शस्यते [आश्व० श्रौ० ४ । १५] । हे नरौ सर्वेषामेव वोढृणां स्तोमानामाह्वातृणां च य एष वाहिष्ठः अतिशयेन वोढा आह्वातृतमोऽयमेव दूत इव युवां हुवत् । आह्वयदित्यर्थः । योऽयमेवंलक्षणः स्तोमोऽस्मत्प्रेरितः स नित्यकालमेव युवाभ्यां भूतु । भवत्वित्यर्थः । हे अश्विनाविति संबोधनम् । 'स्तोमो दूतः' इत्येताभ्यां समानविभक्त्यन्तत्वात् 'वाहिष्ठ' शब्दः स्तोमविशेषणमित्युपपद्यते ।

निगमप्रसक्तमुच्यते । 'मनुष्या' अपि हि 'नराः' उच्यन्ते । ते हि 'नृत्यन्ति' गात्राणि पुनः पुनः प्रक्षिपन्ति 'कर्मसु' उपस्थितेषु तान्यनुतिष्ठमानाः ।

'दूतो [३] जवतेर्वा' गत्यर्थस्य । स हि गच्छति । 'द्रवतेर्वा' गत्यर्थस्यैव [धा० १ । ९७० ] । 'वारयतेर्वा' । स हि वारयत्यनर्थान् ।

तस्यामेव ऋचि दूतशब्दः

१ क. ख. घ. झ. ट. ठ. ड. °यमप्यस्य. २ क. ख. घ. झ. ट. ठ. ड. द्वाराण्यपा°. ३ क. ख. घ. झ. ट. ठ. ड. निर्गतान्यमृ°. ४ घ. झ. ठ. ठ. ड. प्रक°. ५ च. गोर्वज्र°. ६ ग. °गमः ।२। वाहि°. ७ म. वां हवानाम् । गायत्री°; घ. ट. वां० भूत्वश्विना. ८ ठ. ड. नरा नरौ. ९ क. ख. घ. झ. ट. ठ. ड. य एव एष. १० क. ख. घ. झ. ट. ठ. ड इत्येताभ्यां.

'वावशानः' [ ४ ] इत्यनवगतम् । 'वष्टेर्वा' कान्त्यर्थस्य [ धा० २ । ७० ] 'वाश्यतेर्वा' शब्दार्थस्य [ धा० ४ । ५७ ] वावशानः स्यात्[1] ।

'वावशानः' इत्यस्य प्रयोगोऽर्थश्च

'सप्त स्वसॄररुषीर्वावशानो[2] विद्वान्मध्व उज्जभारा दृशे कम् । अन्तर्येमे अन्तरिक्षे पुराजा इच्छन्वव्रिमविदत्पूषणस्य' [ ऋ० सं० १० । ५ । ५ ]॥ त्रितस्याप्त्यस्येयमार्षम्[3] । आग्नेयी । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते [आश्व०श्रौ०४।१३]। सप्त स्वसारो भगिन्य इव । या ह्यर्चिषः समानजन्मत्वादथवा सह सर्पणात्स्वसारस्ता हि सह सर्पन्ति । अरुषीः आरोचनाः[4] । दीप्ता इत्यर्थः । या एवंलक्षणा अर्चिषस्ता अग्निर्वावशानः कामयमानो वा[5] वाश्यमानो[6] वा शब्दं कुर्वाणो विद्वान् आत्मीयमधिकारं जानानो मध्वो वृतस्य हविषः पूर्णा[7] उज्जभार ऊर्ध्वं हृतवानेषां लोकानां दृशे कम् । दर्शनायेत्यर्थः । ता[8] एता ऊर्ध्वं हृत्वा दर्शनमभि व्यञ्जयित्वा जनानामन्तः आदित्यस्य मध्ये यदन्तरिक्षं तत्र येमे तत्रोपनियमितवान् तद्धवि: पुराजाः अग्निः । स हि सर्वदेवेभ्यः प्रथम एव जातः । इच्छन् वव्रिं रूपम् । कस्य । पूषणस्य पूष्णो[9] आदित्यस्य । कथं नामासावादित्यो दीप्तरूपः स्यादतोऽन्तरादित्यस्य येमे । तं चासावेतमर्थम् अविदत् । अलभतेत्यर्थः । स एवं[10] दीप्तरूप आदित्यः संवृत्त इत्यभिप्रायः । एवमत्र 'स्वसॄर्वावशान[11]' इत्यनेन सामानाधिकरण्याच्छब्दसारूप्याच्च 'वावशानः' इत्यस्य कान्त्यर्थत्वं शब्दार्थत्वं वोपपद्यते ।

'वार्यम्' [ ५ ] इत्यनवगतम् । 'वृणोतेः' धातोः । यद्वरयितव्यं भवति तद्वार्यमित्युच्यते । 'अथापि' कदाचिद्वार्यशब्देन यत् 'वरतमं' श्रेष्ठतमं किंचिद्भवति तदुच्यते[12] । 'तद्वार्यं वृणीमहे वरिष्ठं

वार्यमित्यस्य

गोपयत्यम् । मित्रो यत्पान्ति वरुणो यदर्यमा'[13] [ ऋ० सं० ८ । २५ । १३ ]॥ विश्वमनस इयमार्षं मैत्रावरुणे सूक्ते । तद्वार्यं वृणीमहे । वर-

१ म. स्यात् । ३ । सप्त°. २ ग. 'वशानो० । त्रित°; घ. ट. °वशानो० पूषणस्य. ३ क. ख. घ. झ. ट. ठ. ड. °स्याप्तस्ये°. ४ ठ. ड. 'रोचमाना°. ५ ग. ज. 'वा.' नास्ति. ६ घ. झ. ट. ठ. ड. 'वाश्यमानो वा' नास्ति. ७ क. ख. ग. ज. पूर्ण उ°. ८ क. ख. घ. झ. ट. ठ. ड. एवं ता ऊर्ध्वं°. ९ ग. ज. पूष्ण चादि°; च. पूष्णो णोादि° ष्णः आ. १० क. ख. घ. झ. ट. ठ. ड. एव; च. एवं° व. ११ ठ. ड. सप्त स्वसृ°. १२ ग. °च्यते ।४। तद्वा°. १३ ग. ज. वृणीमहे वरिष्ठमिति । विश्व°; घ. ट. वृणीमहे० यदर्यमा.

यितव्यं वरणार्हं धनं वृणीमहे हे स्तोतारो वरिष्ठं गोपायत्यं गोपायितव्यम् । यद्रक्षणार्हमित्यर्थः । अथवा गोपयत्यं गोपायितारो यस्य धनस्य यूयं भविष्यथ तद्वृणीमहे । अथवा युष्मभ्यं यौष्माकीणं यद्भवति तद्वृणीमहे । किंच । नित्यकालमेव मित्रावरुणार्यमाणो यत्पान्ति । रक्षन्तीत्यर्थः । तद् वृणीमहे । एवमत्र मित्रावरुणार्यमाणो यत्पान्तीत्यनेन संबन्धात् 'वार्थ'-शब्दो धनविशेषणमित्युपपद्यते ।

'अन्धः' [ ६ ] इत्यनेकार्थमनवगतं च । 'आध्यानीयम्' इत्यर्थप्रतीतिः । प्रार्थनीयमन्नं भवति सर्वस्यैव । 'अध्वर्यवो भरतेन्द्राय सोममामत्रेभिः सिञ्चता मद्यमन्धः । कामी हि वीरः सदमस्य पीतिं जुहोत वृष्णे तदिदेष वष्टि' [ ऋ० सं० २ । १४ । १ ] ॥ गृत्समदस्येयमार्षम् । रात्रिपर्याये शस्यते । होतुः शस्त्रे विनियुक्ता [ आश्व० श्रौ० ६ । ४ ] । अस्यैव च शस्त्रस्य याज्यैषा ( तथैव ) । हे अध्वर्यवो भरत प्रापयतेमं सोमम् एतस्माद्धविर्धानादुत्तरवेदिम् इन्द्राय इन्द्रार्थम् । अथवा भरत धारयताग्नेरुपरि । ततश्चैनम् अमत्रेभिः अमत्रैः पात्रैरेभिः सोमचमसैः वषट्कारे प्राप्ते आसिञ्चत एतस्मिन्नग्नौ मद्यं मदनीयमेतत्सोमाख्यमन्धः । कस्मात्पुनरेवं ब्रवीमि । इतो यस्मात् कामी हि वीरः । कामयत एव वीर इन्द्रः अस्य सोमस्य सदं सदैव नित्यकालमेव पीतिम् । पानमित्यर्थः । तस्मात्कारणात् जुहोत तस्मै वृष्णे वर्षित्रे इन्द्रायैतं सोमम् । किमेतमेव केवलं सोममेष कामयते । नेत्युच्यते । तदिदेष वष्टि । तत्तत्सोमप्रदानमेष इन्द्रो वष्टि । कामयत इत्यर्थः । न केवलं रात्रिपर्यायेष्वित्यर्थः । तस्मादासिञ्चतेमं सोमं मा विलम्बध्वमित्यभिप्रायः । एवमत्र दानसंबन्धात् 'अन्धः' शब्दोऽन्नार्थ उपपद्यते । पठितमपि चान्ननामसु ( निघ० २ । ७ ] । अनेकार्थत्वात्तु संदिह्यत इत्येष निगम उपात्तः ।

निगमप्रसक्तमुच्यते । 'अमत्रं पात्रम् । अमा अस्मिन्नदन्ति' । अश्नन्तीत्यर्थः । 'अमा' शब्देन 'पुनः' यदनिर्मितपरिमाणं किंचिद्भवति तदुच्यते । न हि तेषां परिमाणमस्ति यावन्तस्तस्मिन्नदन्ति । 'पात्रं

१ क. ख. गोपितारो; घ. झ. ट. ठ. ड. गोपयितारो. २ ग. °स्यैव । ५ । अध्व°. ३ ग. ज. सोममिति । गृत्स°; घ. ट. सोमं० देष वष्टि. ४ च. शस्त्रस्य° सोम. ५ ग. च. ज. यस्य. ६ घ. झ. ट. ठ. ड. °मितं अपरि°.

पानात् '। पीयते हि तेन। तमोऽप्यन्ध उच्यते '। किं कारणम्। ' नास्मिन् ध्यानं ' दर्शनैकृतं 'भवति' चक्षुषो दृष्टिनिरोधात्। लौकिका अपि दर्शननिरोधे सति ' अन्धंतम इत्यभिभाषन्ते '। स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न वि चेतदन्धः। कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात्स पितुष्पितासत् '

५

अदर्शनलक्षणतमोऽर्थे ' अन्ध 'शब्दस्य प्रयोगः

[ ऋ० सं० १ । १६४ । १६ ) ॥ अस्य वामीये । त्रायतेः पालनार्थस्यात्र स्त्रीशब्दो निरुच्यते । पालयित्र्य एवैताः सत्यः कृत्स्नस्य जगत एत एव रश्मयो नाडीभिराध्यात्मिकीभिरनुप्र-

१० विश्य प्राणिनां शरीराण्यन्नपक्तिं कुर्वन्ति ततः स्थितिरुपजायते । एत एव वर्षप्रदानेन कृत्स्नं जगत्त्रायन्ते तस्मात्त्राणात्स्त्रिय एताः । ' तान् ' इति नकारान्तं पदम् । ' उ ' इति पदपूरण एव । तानेवंलक्षणान्रश्मीन् पालयितॄन् सतः । मे ममेति मन्त्रदृगात्मानं निर्दिशति । ममैतान् पुंस आहुः । एत एव रश्मयो बहुप्रज्ञाना इत्येवं ब्रह्मविद आहुः । एत एवा-

१५ न्नपक्त्यादिनोपकारेणोपकुर्वन्तो जगत्त्रायन्ते । एत एव बुद्धेः सर्वार्थप्रकाशित्वेनोपकुर्वन्तीत्यभिप्रायः । आदित्यान्तरपुरुषो हि बुद्ध्यधिदेवता। तदवयवभूताश्च रश्मयः। ते नाड्यन्तर्गता अध्यात्मपुरुषस्य विज्ञानमुपहरन्ति। अतस्तेषां बहुप्रज्ञानत्वमुपपद्यते । आह । कः पुनरेतान्रश्मीनेवंगुणयुक्तान् पश्यतीति । पश्यदक्षण्वान्न विचेतदन्धः । यो ह्यक्षण्वान्भवति दर्शनवान्

२० विज्ञानवान् वेदार्थविज्ञानेनोपजनितप्रज्ञः स एव ताभ्यां गुणाभ्यां युक्तान् पश्यन्नास्ते नित्यकालं नित्ययुक्तत्वात् । इतरस्तु योऽन्धः अध्यानवान् अश्रुतवेदोपनिषत्कः स मन्दबुद्धित्वान्न विचेतत् नैतान्याथात्म्यतः पश्यति। न विजानातीत्यर्थः । यः पुनरेवमेतान्याथात्म्यतः पश्यति स एव कविः क्रान्तदर्शनो भवति । परिनिष्ठितविद्य इत्यर्थः । स च परिनिष्ठित-

२५ विद्यत्वादेव पुत्रः पुरुणो बहुनोऽहसस्त्राता । यश्चायमेवंगुणयुक्तः

---

१ क. ख. घ. झ. ट. ठ. ड. दर्शने कृतं. २ ग. °षन्ते । ६। स्त्रियः°. ३ ग. ज. मे पुंस आहुरिति । अस्य°; घ. ट. मे० ष्पितासत्. ४ घ. झ. ट. मामेतान्; ज. मानैतान्. ५ घ. झ. ट. इत्येव. ६ क. ख. घ. झ. ट. कुर्वन्ति ज°. ७ घ. झ. ट. ठ. ड. अत ए°. ८ ग. ज. तेऽत्यन्त°. ९ क. ख. घ. झ.

३० ट. ठ. ड. आध्या; च. अध्या° आ.

स ईम् आचिकेत । 'ईम्' इति पदपूरणः[1] । आचिकेत । स एवैतानेवमाभिमुख्येन यथावत्पश्यति नेतरो मूढः । यश्चैतानेवं पश्यति स एव पितुरपि पिता भवतीत्यर्थः । स ह्याधिदैविकमात्मानमभिसंपन्नो भवति । न हि तस्य पिता नाम कश्चित् । स एव हि सर्वेषां जनानां पिता भवतीत्यभिप्रायः । एवमेतस्मिन् मन्त्रे य एवाक्षण्वान् भवति स एव पश्यतीत्यस्य संनिधौ ' न विजानात्यन्धः ' इत्यस्य[2] प्रयोगाददर्शनलक्षणं तमः 'अन्धः' शब्देनोच्यत इत्युपपद्यते[3] ।

'असश्चन्ती'[4] ( ७ ) इत्यनवगतम् । ' असज्यमाने इति वा '[5] इत्यर्थप्रतीतिः । ' अव्युदस्यन्त्याविति वा ' इति ॥ १ ॥

---

**असश्चन्ती भूरिधारे पयस्वती। असज्यमाने इति वाव्युदस्यन्त्याविति वा बहुधारे उदकवत्यौ वनुष्यतिर्हन्तिकर्मानवगतसंस्कारो भवति। वनुयाम वनुष्यत इत्यपि निगमो भवति। दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः। दीर्घप्रततयज्ञमभिजिघांसति यो वयं तं जयेम पृतनासु दूढ्यं दुर्धियं पापधियं पापः पातापेयानां पापत्यमानो[6]ऽवाङेव पततीति वा पापत्यतेर्वा स्यात्तरुष्यतिरप्येवंकर्मा। इन्द्रेण युजा तरुषेम वृत्रमित्यपि निगमो भवति भन्दना भन्दतेः स्तुतिकर्मणः। पुरुप्रियो भन्दते धामभिः कविरित्यपि निगमो भवति। स भन्दना उदियर्ति प्रजावतीरिति च। अन्येन मदाहनो याहि तूयम्। अन्येन मदहनो गच्छ क्षिप्रमाहंसीव भाषमाणेत्यसभ्यभाषणादाहना इव भवत्येतस्मादाहनः स्यादृषिर्नदो भवति नदतेः स्तुतिकर्मणः। नदस्य मा रुधतः काम आगन्। नदनस्य मा रुधतः काम आगमत्संरुद्धप्रजननस्य ब्रह्मचारिण इत्यृषिपुत्र्या विलपितं वेदयन्ते ॥ २ ॥**

---

'असश्चन्ती भूरिधारे पयस्वती घृतं दुहाते सुकृते शुचिव्रते । राजन्ती

---

१ घ. झ. ट. ठ. ड. पाद°; च. पद° पा. २ घ. झ. ट. ठ. ड. इत्यन्ध.-शब्दप्रयो°. ३ ठ. ड. °पद्यते । इति नैरुक्तटीकायां पञ्चमाध्याये प्रथमः खण्डः । अस°. ४ ठ. ड. असश्चन्ती इति । अस°. ५ क ख. ?; ग. ७।१; इतरेष्वङ्को नास्ति. ६ त. द. पापच्यमानो°.

प्रकरणात् 'वनुष्यतिः' हन्त्यर्थः । अल्पप्रयोगविषयत्वाद्भाष्यकारेण निगमद्वयं पठितम् ।

व्याख्यानप्रसक्तमुच्यते । 'पापः पाता पेयानाम्' । अपेयान्यलेह्यानि यानि तान्यसौ पिबति । विषयप्रसक्त इत्यर्थः । 'पापैत्यमानः' पुनः पुनः
५ पैत्यमानस्तेनैव पापेन कर्मणा 'अवाङेव' नरकमेव प्रति 'पतति' असौ तस्मात् 'वा' पापः ।

'तरुष्यतिः [ ९ ] अप्येवंकर्मा' । हन्तिकर्मेत्यर्थः । 'ऋभुर्ऋभुभिरभि वः स्याम विभ्वो विभुभिः शवसा शवांसि । वाजो अस्माँ अवतु वाजसाताविन्द्रेण युजा तरुषेम वृत्रम्' ( ऋ० संं० ७ । ४८ । २ ] ॥ वसिष्ठस्येयमार्षम् । त्रिष्टुप् । अविवाक्ये तृतीयसवने वैश्वदेवे शस्त्रे आर्भवे सूक्ते निविद्धानीये शस्यते

१० तरुष्यतिरित्यस्य प्रयोगोऽर्थश्च

[ आश्व० श्रौ० ८ । १२ ] । हे शत्रव ऋभव उरुभासो वयम् उरुभाभिः ऋभुभिः देवैः सहिता अभि वः स्याम अभिभवेम युष्मान्वयम् । हे विभ्वः
१५ विभुभिः विभूतबलैर्युष्माभिः सहिताः शवसा स्वेन बलेनैतेषामभिभवितॄणां शवांसि बलान्यभिभवेम । किंच । वाजो अस्मानवतु रक्षतु । कस्मिन् । वाजसातौ संग्रामे । इन्द्रेण च युजा संयुक्ताः सन्तो वयं तरुषेम हन्मैनं वृत्रम् । शत्रुमित्यर्थः । अभिभवाधिकारात्तरुष्यतिर्हन्त्यर्थ उपपद्यते ।

'भन्दना [ १० ] भन्दतेः स्तुतिकर्मणः' स्तुत्यर्थे वर्तमानस्य ।
२० 'पिता यज्ञानामसुरो विपश्चितां विमानमग्निर्वयुनं च वाघताम् । आ विवेश रोदसी भूरिवर्पसा पुरुप्रियो भन्दते धामभिः कविः' [ ऋ० सं० ३ । ३ । ४ ] ॥ विश्वामित्रस्येयमार्षम् । पृष्ठयस्य प्रथमेऽहन्याग्निमारुते शस्त्रे वैश्वानरीये सूक्ते निविद्धानीये शस्यते

भन्दतेः स्तुतिकर्मण इत्यस्य

२५ [ ऐ० ब्रा० २० । २ ] । पिता यज्ञानां पालयिता यज्ञानाम् अग्निः

---

१ ग. ज. पापच्यमान. २ ग. ज. पात्य°. ३ ग. °त्यर्थः । १० । ऋभु°. ४ ग. स्याम० वृत्रं; घ. ट. स्याम० तरुषेम वृत्रं. ५ क. झ. ट. ठ. ड. 'शत्रवः' नास्ति; च. शत्रव उरुभा° ऋभ. ६ ट. °भूतबलै°.; ठ. विभूतयुक्तैः यु° ति; ड. विभूतवक्तैः यु°. ७ ठ. ड. 'च' नास्ति. ८ ग. °नस्य । ११ । पिता. ९ घ. झ. ट. ठ. ड. °मार्षं जगती । पृ°; च. °मार्षं पृ° जगती. १० क. ख. घ. झ. ट. ठ. ड. °शस्त्रे निविद्धानीये वैश्वानरीये सूक्ते शस्य°; च वैश्वानरीये सूक्ते निविद्धानीये.

असुरः प्रज्ञावान् विपश्चितां प्रज्ञायतामपि मध्ये प्रज्ञावान् । विमानं विनिर्माणं कृत्स्नस्य जगतः । अग्निनैव ह्यग्निहोत्रादिकर्मद्वारेण कृत्स्नं जगद्विनिर्मीयते । वयुनं च प्रज्ञानम् अयमेव वाघताम् ऋत्विजाम् । ऋत्विजो ह्ययमेवाग्निर्विशिष्टं यज्ञसाधनमित्येवं मन्यन्ते । योऽयमेवंलक्षणोऽग्निः आविवेश रोदसी द्यावापृथिव्यौ भूरिवर्पसा बहुरूपत्वेन, तमेवंगुणयुक्तमग्निं पुरुप्रियो बहुकामप्रियः स्तोता भन्दते स्तौति धामभिर्नामभिरनेकप्रकारैः कविः । क्रान्तदर्शन इत्यर्थः । पुरुप्रियो हि स्तोता धामभिरग्नेः किमन्यत्स्तुतेः कुर्यात् । तस्मादुपपद्यते स्तुत्यर्थत्वमस्यै ।

'स भन्दना उदियर्ति प्रजावतीर्विश्वायुर्विश्वाः सुभरा अहर्दिवि । ब्रह्म प्रजावद्रयिमश्वपस्त्यं पीत इन्दविन्द्रमस्मभ्यं याचतात्' (ऋ०सं०९।८६।४१ ] ॥ भौमोऽत्रिस्तस्येयमार्षम् । जगती । प्र

भन्दना इत्यस्य त आशवः पवमान धीजवः इत्यष्टाचत्वारिंशके महासूक्ते [ ऋ० सं० ९ । ८६ ] एकचत्वारिंशत्तमी पावमानी सौमी । यदि मम याज्ञं कर्मोपनमेत्सुनुयामहमेतं सोमं तत्रेति य एवं नित्यकालमाशास्ते स एवं सांप्रतमस्मिन्सोमकर्मण्युपनते हे सोम तव भन्दनाः स्तुतीः उदियर्ति उदीरयति प्रजावतीः प्रजासंयुक्ताः । प्रजालिङ्गा इत्यर्थः । विश्वायुः । विश्वमयतीति विश्वायुः । सर्वत्राप्रतिहतप्रज्ञान इत्यर्थः । सर्वतो वा विश्वायुः । विश्वाः सर्वप्रकाराः । नामबन्धुकर्मरूपसंबद्धा स्तुतिः ।

---

१ घ. झ. ट. ठ. ड. °र्पसा पार्थिववैद्युतादिबहु°; च. बहुरूपत्वेन° पार्थिववैद्युतादिरूपेण. २ ग. °मस्य । १२ । स°. ३ ग. उदियर्ति प्रजावती० । वासिष्ठो इत्यादि । यदि°; घ. ट. उदियर्ति० भ्यं याचतात्. ४ ज. अहर्दिवि । वासिष्ठो इत्यादि । यदि. ५ ग. ज. वासिष्ठो मृडीको नामाष्टपस्तस्येयमार्षं महासूक्ते जगती पावमानी सौमी वा । यदि°; च. वासि . ०० सौमी वा यदि° भौमोऽत्रि०० मानी सौमी. ६ ठ. ड. याज्ञकर्मोप्युपस्थितं भवेत् अहमेतत्स्तुनुयामहमेतं°. ७ क. ख. °मेत्तत्सुयामह°; ग. ज. घ. ठ. ड. °त्तत्स्तुयामह°; च. मेत्तत्सुन्या° नु; ट. °मेत्तत्स्तुया° त्सुनुया° पाठः. ८ घ. ट. एव. ९ क. ख. झ. °स्मिन्स्तोम°. १० ध. झ. ट. प्रजाः प्रजाव°. ११ ग. ज. ठ. ड. °द्धा स्तुतीः । ना°; च. संबन्धा (द्धा) स्तुतिः । (तीः) ना; °घ. ट. °द्धा स्तुतिः.

'नाम्ना बन्धुभिः कर्मणा रूपेण' इति ह्युक्तम्। सुभराः सुभृताः सुपुष्टाः स्थानकरणानुप्रदानवत्यो युष्मद्गुणैरलंकृताः। अहर्दिवि अहनि च रात्रौ च। रात्रिपर्यायाभिप्रायेण दिवि च[1] दिवैव। नित्यकालमेवेत्यभिप्रायः। कं पुनरर्थमुपेत्य स्तुतीरुदीरयति। ब्रह्म प्रजावत् अन्नं प्रजासंयुक्तं भोक्तृसहितं रयिं च धनं च[2] गोहिरण्यादि अश्वपस्त्यम् अश्वैः पतनसमर्थैः शाश्वैः संयुक्तं पीतस्त्वमस्माभिरस्मिन्कर्मणि हे इन्दो सोम इन्द्रमस्मदर्थं याचतात्। याचस्वेत्यर्थः। एतमर्थमभिप्रेत्य स्तुतीरुदीरयति। भन्दना उदियर्त्तीत्युदीरणसंबन्धात्स्तुतय एता भन्दनाशब्देनोच्यन्त इत्युपपद्यते। पूर्वमाख्यातपदसंबद्धमुदाहरणं 'पुरुप्रियो भन्दते धामभिः' इति। इदं तु नामपदसंबद्धं 'स भन्दना उदियर्ति प्रजावतीः' इति च। उभयथा[3] प्रयोगोऽस्तीत्युभयमुपप्रदर्शितमल्पप्रयोगविषयत्वाच्च।

'आहनः' [ ११ ] इत्येतदस्मतः संबोधनमनवगतमप्रतीयमानार्थत्वात्। 'आहंसि' इत्यर्थप्रतीतिः[5]। 'न तिष्ठन्ति न नि मिषन्त्येते देवानां

स्पश इह ये चरन्ति। अन्येन मदाहनो याहि

आहनः इत्यस्य तूयं तेन वि वृह रथ्येव चक्रा' [ ऋ० सं०

१०। १०। ८ ]॥ यमस्य यम्याश्च संवादसूक्तं

तत्र यमस्येयमार्षम्। स यमीं मैथुनाय प्रार्थयमानां ब्रवीति। हे यमि मा भंस्थाः सांप्रतं रहो वर्तत इति। किंतु न तिष्ठन्ति मुहूर्तमप्येते। जनानां रन्ध्रान्वेषणतत्परा इत्यभिप्रायः। अपि च। न निमिषन्ति अनिमिषाः। आदरवन्त इत्यभिप्रायः। के पुनस्त इति। उच्यते। एते देवानां स्वभूता य इहैतास्मँल्लोके स्पशः स्पाशयितारः कृताकृतानां कर्मणां चिह्नयितारः। 'ब्रह्मानध्वर्युः स्पाशयेत' [ काठ० सं० ३५। १७ ] इत्यत्रापि स्पाशयतिश्चिह्नार्थः[7] श्रूयते। कतमे। पुनस्त इति। उच्यते। 'अहश्च रात्रिश्च

---

१ क. ख. घ. झ. ट. ठ. ड. 'दिवि च दिवैव' नास्ति; च. दिवि च दिवैव. २ च. धनं च; इतरेषु 'च' नास्ति. ३ घ. झ. ट. 'यथापि प्र°. ४ ग. झ. ट. °तदसभ्यं सं;° ठ. ड. °तदस्रम्यं सं°; च. तदनन्ततः सं° सभ्यं. ५ म. °तीतिः। १३। न°. ६ ग. °न्त्येते० चक्रा; घ. ट. 'न्त्येते० रथ्येव चक्रा. ७ ग. ज. चिन्हनार्थः; च. चिन्हार्थः° न्हना.

उभे च संध्ये' [याज्ञ०मिताक्षरा०दिव्य प्रक०१०२] 'सूर्याचन्द्रमसौ' 'वायुश्चान्तरपुरुषः' इत्येवमादयः। न ह्येतेषां किंचिदविदितं परोक्षमस्तीत्यभिप्रायः। यतो ब्रवीमि। अन्यकुलजेन केनचित्पुरुषेण मत्तस्त्वं हे आहनः मैथुनं याहि तूयं क्षिप्रम्। 'आहंसीव' असभ्यमेतत् 'भाषमाणा' त्वम्। नाहमेतदसभ्यं श्रोतुमप्युत्सहे तव किं पुनः कर्तुम्। ५ तस्मान्मत्तोऽन्येन मैथुनार्थं चर। तेनैव सह विवृह अभ्युद्यच्छस्वात्मानं मैथुनकर्माणि। रथ्येव चक्रा¹। यथा रथचक्रे द्वे अभ्युद्यच्छत एवमेकमनस्त्वमुपपाद्य तेनैकभूतेन मनसा अक्षेणेवोभे अपि शरीरे। त्वं च तस्य कामिनः सक्तं² स च तव। तेनैवं सह तवैतस्मिन्नर्थे एकमनस्त्वमस्त्विति न मया सार्धम्। एतस्मिन्नर्थेऽभ्युद्यच्छमाना न मां शक्ष्यसे कम्पयितुमित्यभिप्रायः। १० एवमेतस्मिन्मन्त्रेऽनिष्टत्वान्मैथुनसमाचारस्य 'आहनः' इत्येतद्यमी³विषयं संबोधनम्। आहन्यत इव हि स यमस्तयाऽनेन दुर्वचनेन। तस्मात्सैवं संबोध्यते आहन इति। 'एतस्मात्' एव कारणात् 'आहनः स्यात्'। योऽयमसत्प्रदेशः स्त्रिया असावपि हि यस्य संनिधौ संकीर्त्यते स आहन्यत इवासभ्यत्वात्तस्य। 'अयज्ञियो वै पुरुषोऽमेध्य आहनस्याज्जायते⁴' १५ इति विज्ञायते [ मैत्रा० सं० १। ६। ४ ]।

'नदः' [ १२ ] इत्यनवगतम्। 'ऋषिर्नदो भवति' इति शब्दस्य पर्यायेण तत्त्ववचनम्। 'नदतेः स्तुतिकर्मणः' इति व्युत्पत्तिः। नन्दिता⁵ वा नर्दनो⁶ वेत्यर्थप्रतीतिः⁷। 'नदस्य मा रुधतः कामं आगन्नित आजातो अमुतः कुतश्चित्। लोपामुद्रा वृषणं नी रिणाति १५ धीरमधीरा धयति श्वसन्तम्⁸' ( ऋ० सं० १। नदः इत्यस्य १७९। ४ )॥ अगस्त्यलोपामुद्राब्रह्मचारिसूक्तसंवादे लोपामुद्राया इयमार्षम्। सात्रवीदगस्त्यं भर्तारमभिप्रेत्य। नदस्य नदनस्य नन्दितुर्वा⁹ देवतास्तोतुरस्यागस्त्यस्य रुधतः संरुद्धवतः इन्द्रियग्रामं मामयं कामः आगन् आगतवान् येनाहं सांप्रतं पीड्ये। सा २०

१ क. ख. ग. ज. घ. झ. ट. ठ. ड. चक्रा रथचक्रे इव। यथैकमक्षं रथचक्रे° (ग. ज. 'रथचक्रे इव' नास्ति ); च. चक्रा यथा रथचक्रे द्वे° रथचक्रे इव। यथैकमक्षं. २ च. सक्तं° क्ता (क्तं). ३ च. °यमि वि°. ४ ग. ज. °स्या जाय°; घ. 'स्याः जाय°; ट. °स्याः जाय° स्याज्जा. ५ क. ख. ग. ज. घ. ट. नदिता. ६ ग. नदितो वे°; ज. नदतो वे°. ७ ग. °तीतिः। १४। नद°. ८ ग. काम आगन्नित० श्वसन्तम् ; घ. ट. कामः० धयति श्वसन्तम्. ९ क. ख. ग. ज. घ. ट. ठ. ड. नदितुर्वा. २५

पुनरेवं न जाने किमित एवास्मच्छरीराज्जातो ममोपरि ह्यभिव्यक्तोऽस्मत्पीडनायाथवा अमुतः अगस्त्यस्य शरीरात्। पुरुषगुणानुस्मरणाद्धि स्त्रियाः कामो जायतेऽभिव्यज्यते पुरुषस्य च ह्यनुस्मरणात्। अत एव स्मर इति काम उच्यते। तस्मादुपपद्यत इतो वास्मच्छरीरादमुतो वा नदशरीरात्कुत आजात इति। अथवान्यत एव कुतश्चिदयमागतः स्यादित्येतदपि तत्त्वतो न जाने इति। एवं विलपमाना कामार्ता लोपामुद्रा राजर्षिपुत्रिका वृषणं रेतसो वर्षितारमगस्त्यं नीरिणाति निश्चयेनाधिकं वा दोषेण गच्छति। यदि न ममासावुपरि प्रजननं न्यरोत्स्यत्ततो नायं कामो मेमागमिष्यदित्येवं दोषेण गच्छति। 'रिणाति' इति गतिकर्मसु पठितम् (निघ० २। १४। ५८)। अथवा चेतसा नीरिणाति। उपगच्छतीत्यर्थः। इष्टपुरुषानुचिन्तनं हि कामार्तायाः स्त्रियाः स्वभाव एव। तस्मादेवमप्युपपद्यते। धीरं स्थिरबुद्धिं ब्रह्मचर्ये अधीरा संक्षुब्धसर्वेन्द्रियग्रामा धयति पिबतीव चेतसा। चक्षुर्भ्यां वा पश्यन्ती श्वसन्तं चेतसा व्यावर्तमानं तस्याः सकाशाद्ब्रह्मचर्ये कृतबुद्धिं तथापि धयत्येव। 'श्वसिति नभौति' इत्येतद्गतिकर्मसु पठितम्। एवं लोपामुद्रावाक्ये 'नदस्य रुधतो मामागन्कामः' इति प्रकरणादृषिर्नदशब्देनोच्यत इत्युपपद्यते। 'संरुद्धप्रजननस्य ब्रह्मचारिण इत्यृषिपुत्र्या विलपितं वेदयन्ते' इति निदानप्रख्यापनम्।

'सोमो अक्षाः' (१३) इत्येते द्वे पदे। अत्र 'अक्षाः' इत्येतत्पदमनवगतं पक्षेण चानेकार्थं। अस्यैव च संबन्धादुपलक्षणार्थं सोमशब्दोऽत्र समाम्नातः कथं नाम 'न यस्य द्यावापृथिवी' इत्येतदेवोदाहरणमत्रोपलक्षितं स्यात्। अत्र ह्यक्षा इत्येष शब्दः सोमशब्देन संबद्धो यथा भूतशब्देन मेषशब्दो 'मेषो भूतो ३ भि यन्नयः' इत्यत्र यथा च 'अग्निर्नय' इत्यत्राग्निशब्दः। अत्र चाश्नोतिपक्षे अक्षा इत्यस्य शब्दस्य सुपुष्टतर उदाहरणार्थो भवति तस्मादय-

१ क. ख. घ. झ. ट. ठ. ड. °गस्त्यश°. २ क. ख. घ. झ. ट. ठ. ड. मामागमि°: च. मेमाग.° ३ च. इष्टपुरु°. ४ क. ख. घ. झ. ट. ठ. ड. पश्यति; च. पश्यंती° ति. ५ क. ख. घ. झ. ट. ठ. ड. श्वसाति नदतीत्येवं गाति°; च. श्वसिति नभेवति° द. ६ क. ख. घ. झ. ट. ठ. ड. माम.गमत्कामः; च. मामागन्कामः °मत्का. ७ ठ. ड. द्यावेत्येत°. ८ च. °लक्षिते. ९ क. ख. घ. झ. ट. ठ. ड. वा.

मनन्तर उपलक्ष्यते । अल्पप्रयोगविषयत्वादस्य मन्त्रस्य प्रतिपत्यर्थं सोम-
शब्दः समाम्नात एकपदसमाम्नाने प्राप्ते सति ॥ २[1] ॥

---

न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अक्षाः।
अक्षोतेरित्येके । अनूपे गोमान्गोभिरक्षाः सोमो दुग्धाभिरक्षाः । ५
लोपाशः सिंहं प्रत्यञ्चमत्साः । क्षियतिनिगमः पूर्वः क्षरति-
निगम उत्तर इत्येकेऽनूपे गोमान् गोभिर्यदा क्षियत्यथ सोमो
दुग्धाभ्यः क्षरति सर्वे क्षियतिनिगमा इति शाकपूणिः श्वात्रमिति
क्षिप्रनामाशु अतनं भवति । स पतत्रीत्वरं स्था जगद्यच्छ्वात्रम-
ग्निरकृणोज्जातवेदाः । स पतत्रि चेत्वरं स्थावरं जङ्गमं च यत्त- १०
त्क्षिप्रमग्निरकरोज्जातवेदा ऊतिरवनात् । आ त्वा रथं यथोतय
इत्यपि निगमो भवति हासमाने इत्युपरिष्टाद्व्याख्यास्यामो वम्रकः
पद्भिरुपसर्पदिन्द्रम् । पानैरिति वा स्पाशनैरिति वा स्पर्शनैरिति
वा । ससं न पक्वमविदच्छुचन्तम् । स्वपनमेतन्माध्यमिकं ज्योतिर-
नित्यदर्शनं तदिवाविदज्ज्वाज्वल्यमानम् । द्विता च सत्ता स्वधया १५
च शंभुः । द्वैधं सत्ता मध्यमे च स्थान उत्तमे च शंभुः सुखभूः।[4]
मृगं न व्रा मृगयन्ते । मृगमिव व्रात्याः प्रैषाः ॥ ३ ॥

---

सोमो अक्षाः इत्यस्य — 'न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अक्षाः । यदस्य मन्युरधिनीयमानः शृणाति वीळु रुजति स्थिराणि' [ ऋ० सं० १० । ८२ । ६ ] ॥ २०
रेणुर्नाम विश्वामित्रस्य पुत्रस्तस्येयमार्षम् । ऐन्द्रे सूक्ते सूर्यस्तुन्नामैकाहस्तत्रेयं निष्केवल्यशस्त्रे
निविद्धानीये शस्यते [ आश्व० श्रौ० ९ । ८ ] । न यस्य द्यावापृथिवी ।
न यस्येन्द्रस्य द्यावापृथिव्यौ महिमानमश्नुवाते । व्यामुत इत्यर्थः । न धन्व २५

---

१ ग. १५ । २; घ. ट. च. ज. अङ्को नास्ति; ठ. ड. २ इति निरुक्तटीकायां पञ्चमाध्याये द्वितीयः खण्डः. २ क. ख. °स्यामः । वम्र'; छ. त. द. °स्यामः ॥ ३ ॥ वम्र°. ३ छ. त. द. ' स्पर्शनैरिति वा ' नास्ति. ४ छ. त. द. अङ्को नास्ति. ५ म. °पृथिवी० स्थिराणि; घ. ट. °पृथिवी० रुजति स्थिराणि. ६ क. ख. ग. ज. वीलु; च. विल्हु. ७ ग. ज. °त्यर्थः । धन्वोदकम्. ३०

नोदकम् । तद्धि धन्वल्यन्तरिक्षलोकात् । नान्तरिक्षं नाप्यद्रयः पर्वता अश्नुवन्ति महिमानम् । किं तर्हि । सोम एवाक्षाः । महिमानमश्नोतीत्यर्थः । कथं पुनर्गम्यते सोम एवेन्द्रस्य महिमानमश्नोतीति । इतो यदस्य मन्युरधिनीयमानः । यस्मादस्येन्द्रस्य मन्युः क्रोधः सोमेन पीतेन सता मदसामर्थ्यादुपरि शत्रूणां नीयमानः प्राप्यमाणः शृणाति वीळु । यदपि वीळु दृढं संस्तब्धं वीर्योत्सिक्तं शत्रुबलं भवति तदपि शृणात्येव । हिनस्तीत्यर्थः । रुजति स्थिराण्यपि । दृढानि मेघवृन्दानि भिनत्तीत्यर्थः । एवमेतस्मिन्मन्त्रे व्याप्त्यर्थस्य 'अश्नोतेः' अक्षाः इत्येष शब्दो निरुच्यते 'इत्येवमेके' मन्त्रार्थविदो मन्यन्ते ।

'अक्षाः' इत्यस्य 'अश्नोति' इत्यत्रार्थः

'अनूपे गोमान्गोभिरक्षाः सोमो दुग्धाभिरक्षाः । समुद्रं न संवरणान्यग्मन्मन्दी मदाय तोशते' [ ऋ० सं० ९ । १०७ । ९ ] ॥ सतर्षीणामार्षम् । बृहती । पावमानी सौमी । अनूपे देशे गोमान् गोभिः सहितो यदा क्षियति निवसत्यथ तदा सुयवसत्वात्तस्य देशस्य सोमो दुग्धाभ्यः पुनः पुनर्दुग्धाभ्योऽपि गोभ्यः क्षरत्येव । कथं पुनः क्षरतीति । उच्यते । समुद्रं न संवरणानि । समुद्रमिव संवरणान्युदकानि । तानि हि देशान्तरात्संवृण्वन्ति । तानि यथा सर्वेभ्यो देशेभ्यः संस्रुत्य समुद्रमाभिमुख्येन अगमन् गच्छन्त्येवं दुग्धाभ्यः सोमः सर्वेभ्यो गात्रेभ्यः संस्रुत्योधः प्रतिक्षरति मदायेन्द्रस्य । अथ यदैवं प्रक्षरति तदा तेन

'गोभिरक्षाः' इत्यत्र 'क्षियति' इत्यर्थः 'सोमो अक्षाः' इत्यत्र 'क्षरति' इति

१ ग. ज. 'नान्तरिक्षं' नास्ति; च. °लोकान्ना॰ द्रयः °न्तरिक्षं नाप्य. २ क. ख. ग. ज. घ. ट. ठ. ड. 'अपि' नास्ति. ३ ग. ज. महिमा नान्तरिक्षं नमश्नो°. ४ क. ख. ग. च. ज. घ. झ. वीलु. ५ क. ख. घ. वीलु; ग. ज. वीढु; च. वीढु° ड्. ६ क. ख. घ. ठ. ड, संनद्धं शत्रु°; झ. °शृणाति वीलु स्तब्धं वीर्योत्सिक्तं दृढं संनद्धं शत्रु°; ट. संनद्धं शत्रु° स्तब्धं वीर्योत्सिक्तं. ७ क. ख. घ. झ. ट. ठ. ड. °जति च स्थि°; च. °जति॰स्थि° च. ८ घ. झ. दृल्हानि; ट. ठ. ड. दृळ्हानि. ९ ग. न्यन्ते । १६ । अनू°. ९ क. ख. घ. झ. ट. ठ. ड. दुग्धाभिः. १० क. ख. घ. झ. ट. ठ. ड. उदकानि हि°. ११ क. ख. घ. झ. ट. ठ. ड. संसृत्य; च. संस्रुत्य° सृ. १२ क. ख. घ. झ. ट. ठ. ड. संसृत्य ऊधः; च. सश्रुत्यो° सृ.

सोमेनामावास्यायां सांनाय्येन तृप्त इन्द्रो मन्दी हर्षशीलो यजमानस्य शत्रून् तोशते । हिनस्तीत्यर्थः । 'नितोशयति निबर्हयति' इति हन्तिकर्मसु पठितम् (निघ० २ । १९) । एवमेतस्मिन्मन्त्रे 'क्षियतिनिगमः पूर्वः' 'अनूपे गोमान् गोभिरक्षाः' इत्येषः । 'क्षरतिनिगम उत्तरः' 'सोमो दुग्धाभिरक्षाः' इत्यत्र । एवम् 'एके' मन्त्रार्थविदो मन्यन्ते । तच्चैतत्तथैवोपव्याख्यातम् । 'सर्वे' एवैते त्रयोऽपि 'क्षियतिनिगमाः' निवासार्था इति 'शाकपूणिः' आचार्यो मन्यते । न यस्य द्यावापृथिव्यौ निवासो न धन्व नान्तरिक्षं निवासः । किं तर्हि । सोम एव यस्य निवासः । सर्व एव ह्येनमाश्रित्य निवसन्तीत्येतेनाभिप्रायेण सोम इन्द्रस्य निवासः । तस्य सोमस्य किमिति । उच्यते । यदस्य मन्युः अधि शत्रूणां नीयमानः शृणाति वीळु रुजति स्थिराणि । समानेमेतत्पूर्वेणैवार्थेन । 'अनूपे गोमान् गोभिरक्षाः' इत्यत्र निवासार्थतैव । पूर्वस्मिन्नेवार्थे । अथ सोमो दुग्धास्वपि गोपूधःसु निवसति । न निर्दुग्धाः कर्तुं शक्यन्ते इत्यभिप्रायः । एवमेते पूर्वे त्रयोऽपि 'क्षियतिनिगमाः' इति 'शाकपूणिः' आचार्यो मन्यते ।

सर्वे क्षियतिनिगमा इति शाकपूणिः

'श्वात्रम्' (१४) इत्यनवगतम् । 'आशु अतनं भवति' इति शब्दसमाधिः । 'क्षिप्रनाम' इत्यभिधेयवचनम् । 'यो होतासीत्प्रथमो देवजुष्टो यं समाञ्जन्नाज्येना वृणानाः । स पतत्री त्वरं स्था जगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः' (ऋ० सं० १० । ८८ । ४) ॥ इयं हविष्पान्तीये सूक्ते । तत्पुनर्मूर्धन्वताङ्गिरसेन दृष्टं वामदेव्येन वा । पृष्ठ्यस्य पञ्चमेऽहन्याग्निमारुते शस्त्रे निविद्धानीयं तद्भवति

श्वात्रमित्यस्य प्रयोगोऽर्थश्च

१ ग. ज. निवासौ. २ घ. झ. ठ. ड. ह्येनमा ; ट. ह्येनमा° ह्यन ; च. °ह्येन° ह्य (ह्य). ३ क. ख. ग ज. व. ट. ठ. ड. °न्तीत्यनेनाभि° च ; °न्त्येतेना° त्यने. ४ क. ख. घ. झ. वीलुं ; ग. ज. वीडुं ; च. विळ्हु° वी. ५ क. ख. घ. झ. ट. ठ. ड. °मानसन्यत्पू° ; च. °मानमेतत्पू° मन्य. ६ च. °सार्थता इत्येव° तै. ७ च. अतनीति° न भव. ८ ग. °नम् । १७ । यो°. ९ ग. °थमो० जातवेदाः ; घ. ए. °थमो० रकृणोज्जातवेदाः. १० ग. ज. °क्ते । तत्रेयमेवैका जगती तत्पु° ; च. °क्ते । तत्रे ००० ती । तत्पु°.

५१

( आश्व० श्रौ० ८ । ८ ) । यः अग्निः होतासीत् आह्वाता देवानां प्रथमः प्रधानो मनुष्यहोतुः सकाशात् देवजुष्टो देवैरासेवितः । यं समाञ्जन् समुक्षितवन्तः । केन । आज्येन । वृणानाः । संभजमाना इत्यर्थः । तस्य किमिति । उच्यते । स पतत्रि सोऽग्निः पतत्रि च यदेतदितश्चेतश्च पतति इत्वरं च पक्ष्यादि स्थाः स्थावरं च वृक्षादि जगत् यत्र[1] यदेतज्जङ्गमं गवादि । तस्य किमिति । उच्यते । तत्सर्वं प्रलयकाले श्वात्रं क्षिप्रमात्मसात् अकरोज्जातवेदा अग्निः । एवमेतस्मिन्मन्त्रे श्वात्रमित्येतत्क्षिप्रनाम । पतत्रिस्थावरजङ्गमानां क्षिप्रदहनादग्निः किमन्यत्कुर्यात् । तस्मादुपपद्यते क्षिप्रनामेति ।

'ऊतिः' ( १५ ) इत्यनवगतम् । 'अवनम्' इत्यर्थप्रतीतिः । अवनात् । रक्षणादित्यर्थः[2] । 'आ त्वा रथं यथोतये[3] सुम्नाय वर्तयामसि । तुविकूर्मिमृतीषहमिन्द्र शविष्ठ सत्पते' ( ऋ० सं० ८ । ६८ । १ ) ॥

ऊतिः' इत्यस्य प्रियमेधस्यार्षम्[4] । मरुत्वतीये शस्त्रे प्रतिपदेषा । (आश्व०श्रौ० ५।१४) । हे इन्द्र आवर्तयामहे त्वां वयं स्तुतिभिरात्मन ऊतये अवनाय । रक्षणायेत्यर्थः । सुम्नाय च सुखाय[5] । कथं पुनरावर्तयामह इति । उच्यते । रथं यथा । शक्तो हि कश्चिद्यथा रथमावर्तयेदेवमावर्तयामहे वयं त्वां स्तुतिभिः । किंलक्षणं पुनर्भवन्तमावर्तयामहे । उच्यते । तुविकूर्मिं बहूनामनेकप्रकाराणां कर्मणां कर्तारम् । ऋतीषहं च आर्तीनामभिभवितारम् । हे इन्द्र शविष्ठ बलिष्ठ सत्पते सतां पते । एवमावर्तनेनैकवाक्याभिसंबन्धेन[6] 'ऊति' शब्दो रक्षणार्थ इत्युपपद्यते ।

'हासमाने' ( १६ ) इत्येतत्पदमुपरिष्टाद्व्याख्यास्यामः 'प्र पर्वतानामुशती उपस्थात्' इत्यत्र ( निरु० ९ । ३९ ) ।

'पड्भिः' इत्यनवगतम् । 'पानैरिति वा स्पाशनैरिति वा' शब्दसमाधी[7] । 'एवा महो असुर वक्षथाय वम्रकः पड्भिरुप सर्पदिन्द्रम् । स इयानः[8]

---

१ क. ख. घ. झ. ट. ठ. ड. 'यत्र' नास्ति; च. °गत् यत्र यदे°. २ ग. °त्यर्थः ॥ १८ ॥ आ°. ३ ग. °तये० । प्रिय°; घ. ट. °तये० शविष्ठ सत्पते. ४ च. °मेधसमार्षं° आ; झ. मेधमार्षं. ५ क. ख. घ. झ. ट. ठ. ड. °खाय च; च. °खाय० । कथं° च. ६ क. ख. घ. झ. ट. ठ. ड. °संबद्धेन; च. संबन्धेन° द्वे. ७ ग. °माधी । १९ । ३ । एवा°. ८ ग. ज. असुर वक्षथाय० । वम्रो°; घ. ट. असुर० विश्वमाभाः०.

करति स्वस्तिमस्मा इषमूर्जं सुक्षितिं विश्वमाभाः"

"पड्भिः" इत्यस्य [ऋ०सं० १०।९९।१२]॥ वम्रो नाम वैखानसस्तस्येयमार्षम् । ऐन्द्री । य एव एतस्मिन्सूक्ते स्तुतिप्रकारोऽविकृतः एवमनेन प्रकारेण हे वर्तमान इन्द्र असुर असुमन् प्रज्ञानवन् बलवन्वा वक्षथाय स्तुतिवक्त्रे महते वा यजमानाय पूर्वकल्पान्तरीणाय पूर्वकल्पान्तरीण एव वम्रकः पड्भिः सोमपानैरभ्युदितैरथवा गुणस्पाशनैः स्तुतिगतैः उपसर्पत् उपसृतवाननन्यकल्पान्तरीणमिन्द्रम् । स तेन यथा ईयमानः अनुसृप्यमाणः करति कृतवान् । किम् । स्वस्ति स्वस्त्ययनम् । तस्मै यजमानाय । यतो ब्रवीमि । सांप्रतमहमेतस्मिन्कल्पे वम्रकस्त्वं चेन्द्रस्ता एव चैताः स्तुतयो याभिरहमुपासर्पं सांप्रतं भवन्तम् । स त्वमेवं विज्ञायास्मै वर्तमानाय यजमानाय स्वमधिकारं जानानः कुरु स्वस्त्ययनम् । किंच । इषमूर्जम् इषमन्नं व्रीहियवादि ऊर्जं क्षीरादि सुक्षितिं च शोभननिवासं च विश्वमेतत्सर्वम् आभाः अभिमुख्येनास्मै यजमानाय भावयस्व । एवमेतस्मिन्मन्त्रे शब्दसारूप्यात्प्रकरणाच्च पड्भिरित्येतत्पानाभिधानं स्पाशनाभिधानं वेत्युपपद्यते ।

'ससम्' (१८) इत्यनवगतम् । 'स्वपनम्' इत्यवगमः । 'प्र मातुः

प्रतरं गुह्यमिच्छन्कुमारो न वीरुधः सर्पदुर्वीः ।

'ससम्' इत्यस्य ससं न पक्वमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे

अन्तः' [ ऋ० सं० १० । ७९ । ३ ] ॥

अग्नेर्वैश्वानरस्याग्नेर्वा सूचीकस्य सप्तेर्वा वाजम्भरस्येयमार्षम् । आग्नेयी । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते [ आश्व० श्रौ० ४ । १२ ] । प्र मातुः प्रतरं प्रकर्षेण गततरं गह्वरं मातुः सर्वनिर्मातुर्भूमेः अग्निः वीरुधो दग्धुम् उपसर्पत् उर्वीः ऊर्णुवत्यः प्रच्छाद्य भूमेर्निर्झरप्रदेशं तस्मिन् निर्झरप्रदेशे वर्तमानाः । तत्र हि ताः सुविवृद्धाश्च भवन्ति । कथं पुनरुपं-

---

१ च. वैखान° खा. २ क. ख. घ. ट. ठ. ड. वर्तमान हे; च. हे वर्तमान. ३ क. ख. घ. झ. ट. ठ. ड. 'वा' नास्ति; च. वा. ४ क. ख. घ. झ. ट. ठ. ड. तथा इयानः ईय°; च. यथा ईय° त. ५ क. ख. घ. झ. ट. ठ. ड. अनुस्रियमाणः; च. अनुसृप्यमाणः° स्रिय. ६ ग. च. ज. स्वप्नमि°. ७ ग. °गमः । २० । प्र मा°. ८ ग. गुह्यमिछन्० । अग्ने°; घ. ट. गुह्यं० उपस्थे अन्तः. ९ घ. ट. ठ. ड. गुह्यं गह्वरं; च. °तरं गह्वरं गुह्यं. १० ग. ज. 'निर्झरप्रदेशं तस्मिन्' नास्ति. ११ ठ. ड. सुवृद्धाश्च; १२ ग. ज. °रुपास°.

सर्पदिति । उच्यते । ग मातुः प्रतरं गुह्यमिच्छन् कुमारो न । मातुर्यथा कुमारः प्रकर्षेण गुह्यतरं सर्वाङ्गेभ्यः स्तनप्रदेशं स्तनपानमिच्छन्नुपसर्पेदेवं योऽग्निर्बह्वोषधीके भूमेर्निर्झरप्रदेशे कुमार इव मातुः स्तनपानाय स्तनप्रदेशमिवोपासर्पत् । तत्रैव च निर्झरप्रदेशे रिरिह्वांसं पुनःपुनरास्वादयमानमोषधीः रिपः अस्या एव भूमेः उपस्थे उपस्थाने निर्झरे । निर्झरे हि भूमेः प्रदेशे आप उपतिष्ठन्त इति निर्झर एवोपस्थो भूमेः । तस्यान्तः । मध्य इत्यर्थः । तस्मिन्नेवंलक्षणे प्रदेशे तमग्निम् अविदत् कश्चिदृषिरन्यो वौषधीरास्वादयन्तम् । कथं पुनरविददिति । उच्यते । ससं न पक्वमविदत् । यथैव स्वपनशीलं माध्यमिकं ज्योतिर्वैद्युताख्यं पक्वमभिव्यक्तं वर्षासूपर्यवस्थानादयत्नेनैव दृश्यत एवं निर्झरान्तःप्रविष्टमपि सन्तमग्निमतिमहत्त्वादर्चिषोऽविददेवापश्यत् शुचन्तम् । दीप्यमानमित्यर्थः । निर्झरेऽन्योऽनुप्रविष्टो न विज्ञायते । अग्निस्तु निर्झरस्थोऽपि स्वया दीप्त्या विज्ञायत एवेत्यभिप्रायः । य एवंगुणयुक्तोऽग्निः स इदं नाम करोत्विलोपमाशीर्योज्या । तद्यदष्टौ मासान् माध्यमिकं ज्योतिर्न दृश्यते तस्मादनित्यदर्शनात् 'स्वपनम्' इत्युच्यते । पक्तिर्नामाभिव्यक्तिरित्युच्यते । एवमिह शब्दसारूप्यादर्थोपपत्तेश्च 'ससम्' इत्यनेन शब्देन 'स्वपनम् उच्यते' इत्युपपद्यते ।

'द्विता' (१९) इत्यनवगतम् । 'द्वैधम्' इत्यवगमः ।

'द्विता' इत्यस्य — 'यस्त्वद्धोता पूर्वो अग्ने यजीयान्द्विता च सत्ता स्वधया च शंभुः । तस्यानु धर्म प्र यजा चिकित्वोऽथा नो धा अध्वरं देववीतौ' [ ऋ० सं० ३ । १७ । ५ ] ॥ कतस्य वैश्वामित्रस्येयमार्षम् । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते [ आश्व० श्रौ० ४ । १३ ] । हे भगवन्नग्ने

१ घ. झ. ट. ठ. ड. बह्वौषधिके. २ घ. ट. ठ. ड. °पानीयः स्त°. ३ च. निर्झरे भूमेः प्रदेशे. ४ क. ख. घ. झ. ट. ठ. ड. 'निर्झरे' नास्ति. ५ ठ. ड. °विन्दु°. ६ ग. ज. स्वप्नशी°; च. स्वप्न° पन. ७ ग. ज. माध्यमकं. ८ घ. झ. ठ. ड. तध्यष्टौ; च. तद्यदृष्टौ° ध्य; ट. तध्यैष्टौ° यद्. ९ क. ख. ग. ज. घ. ट. ठ. ड. पक्वं नामा°; च. पक्तिर्ना° कं ना. १० क. ख. ग. ज. घ. ट. ठ. ड. °व्यक्तमित्यु°; च. °व्यक्तिरित्यु° क्रमि. ११ ग. °गमः । २१ । य°.

पृथिवीस्थान त्वत्तो यः पूर्वो होता मध्यस्थानो[1] वायुः । असावपि हि दूतो देवानामिति श्रूयते ' आ दूतो अग्निमभरद्विवस्वतः ' [ ऋ० सं० ६ । ८ । ४ ] इति । वैद्युतोऽग्निरिति केचिन्मन्यन्ते । यजीयान् यष्टृतरः । द्विता च सत्ता । द्वैधं च[2] यस्य विद्यमानता मध्यमे च[3] स्थाने वैद्युतभावेन उत्तमे च स्थाने सूर्यभावेन । स्वधया च अन्नेन सर्वभूतानां वर्षणद्वारेण[4] यः शंभुः सुखस्य भावयिता । तस्य किमिति । उच्यते । तस्यानु धर्म तस्य वायोर्वृत्तिलाभमनु आत्मनो दीप्तिलक्षणां वृत्तिं प्रति लाभमाप्नुवन् । ' वायुर्वा अग्नेस्तेजस्तस्माद्वायुरग्निमन्वेति ' [ मैत्रा० सं० ३ । १ । १० ] इति ह विज्ञायते । हे अग्ने प्रयज प्रकर्षेण यज देवान् हे चिकि-[5] त्वन् । ज्ञानवन्नित्यर्थः । अथ एवमस्माकं यागं कुर्वंस्त्वं शृणु यत्कुरुष्व । धा अध्वरं धारय यज्ञं देववीतौ । देवतर्पणायेत्यर्थः । एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च ' द्विता ' इति[6] शब्दो द्वैधमित्येवं[7]मुपपद्यते ।

' व्राः ' ( २० ) इत्यनवगतम् । ' व्रात्याः ' इत्यवर्गमः[8] । 'गोभिर्यदीमन्ये अस्मन्मृगं[9] न व्रा मृगयन्ते[10] । अभित्सरन्ति धेनुभिः ' [ ऋ० सं० ८।२।६ ]॥ काण्वश्च मेधातिथिः प्रियमेधश्चाङ्गिरस ऐन्द्रं सूक्तं ददृशतुः ।

व्रा इत्यस्य

तत्रैषा । अभिप्लवस्य[11] द्वितीयेऽहनि मरुत्वतीये शस्त्रेऽनुचरतृचे शस्यते [आश्व० श्रौ० ७ । ११ ] । हे भगवन्निन्द्र यद्यपि त्वाम् अन्ये यजमानाः गोभिः वाग्भिः स्तुतिलक्षणाभिः धेनुभिः च तर्पयित्रीभिराहुतिभिः अभित्सरन्ति अभिगच्छन्ति अभिव्याप्नुवन्ति तथाप्यस्मानेव प्रत्यभ्येहि । किं कारणम् । अतो[12] यस्मादेतेऽस्माभिरतिरिक्तया भक्त्याऽन्येभ्यो यजमानेभ्यः सकाशात् व्रात्याः प्रैषाः युष्मत्संस्तवैर्युक्तास्त्वां[13] प्रति प्रहिता मृगमिव इतरे लुब्धका व्रा व्रात्याः मृगयन्ते मार्गयन्ते[14] त्वाम् । तस्माद्र-

---

१ क. ख. घ. झ. ट. ठ. ड. मध्यमस्था°. २ क. ख. घ. झ. ट. ठ. ड. ' च ' नास्ति. ३ च. °ध्यमे॰ स्था° च. ४ च. वषट्कारेण° र्षणद्वा; ठ. ड. वर्षद्वा°. ५ क. ख. घ. झ. ट. ठ. ड. चिकित्वः चिकि°; च. हे॰ चिकि° चिकित्वः. ६ क. ख. घ. झ. ट. ठ. ड. °द्वितेत्ययं द्वे°. ७ ग. ज. ' एवं ' नास्ति. ८ ग. °गमः । २२ । गोभि°. ९ ग. अस्मत् ० । काण्व°; घ. ट. अस्मत् ० न्ति धेनुभिः. १० ज. °गयन्ते । काण्व°. ११ क. ख. घ. झ. ट. ठ. ड. °प्लवस्य षडहस्य द्वि°. १२ क. ख. घ. झ. ट. ठ. ड. इतो; च. अतो° इ. १३ क. ख. घ. झ. ट. ठ. ड. °स्तवसंयुक्ता°. १४ च. मार्ग॰न्ते° य.

न्त्यतिरेकाद्विशेषहेतोरस्मानेव प्रत्यभ्येहि । एवमेतस्मिन्मृगसंबन्धाद्व्रात्यशब्देन लुब्धका उच्यन्त इत्युपपत्तिः[2] ।

'वराहः' ( २१ ) इत्येतदनवगतमनेकार्थं च । 'मेघः' तावद् 'वराहः' उच्यते । स हि 'वराहारो भवति' । तस्य हि वरमुदकमाहारः । 'वरमाहारमाहार्षीरिति[3] च ब्राह्मणम्' । निर्वचनस्य दृढप्रतीत्यर्थं ब्राह्मणमाचार्येण प्रदर्शितम् । यथा मेघो वराहशब्देनोच्यते तथैष निगमः ॥ ३[4] ॥

---

**वराहो मेघो भवति वराहारः । विध्यद्वराहं तिरो अद्रिमस्तेत्यपि निगमो भवत्ययमपीतरो वराह एतस्मादेव[6] वरमाहारमाहार्षीरिति च ब्राह्मणं वृंहति मूलानि वरं वरं मूलं वृंहतीति वा । वराहमिन्द्र एमुषमित्यपि निगमो भवत्यङ्गिरसोऽपि वराहा उच्यन्ते । ब्रह्मणस्पतिर्वृषभिर्वराहैः । अथाप्येते माध्यमका देवगणा वराहव उच्यन्ते । पश्यन्हिरण्यचक्रानयोदंष्ट्रान्वि धावतो वराहून् । स्वसराण्यहानि भवन्ति स्वयंसारीण्यपि वा स्वरादित्यो भवति स एनानि सारयति । उस्रा इव स्वसराणीत्यपि निगमो भवति शर्या अङ्गुलयो भवन्ति[10] शर्या इषवः शरमय्यः शरः शृणातेः । शर्याभिर्न भरमाणो गभस्त्योरित्यपि निगमो भवत्यर्को देवो भवति यदेनमर्चन्त्यर्को मन्त्रो भवति यदनेनार्चन्त्यर्कमन्नं भवत्यर्चति भूतान्यर्को वृक्षो भवति स वृतः कटुकिम्ना ॥ ४[11] ॥**

---

'अस्येदु मातुः सवनेषु[12] सद्यो महः पितुं पपिवाञ्चार्वन्ना[13] । मुषायद्विष्णुः पचतं सहीयान्विध्यद्वराहं तिरो अद्रिमस्ता' [ ऋ० सं० १।६१।७ ] ॥ नोधा नाम गोतमपुत्रस्तस्येयमार्षम् । ऐन्द्री । त्रिष्टुप् । अभिजिद्विश्वजिन्महाव्रतादिष्वाहीनिकेष्वहःस्वहीनसूक्ते माध्यंदिने सवने ब्राह्मणाच्छंसिनः

मेघार्थे वराह

इत्यस्य

---

१ क. ख. व. झ. ट. ठ. ड. °स्मिन्मन्त्रे मृग°. २ क. ख. °पत्तिः । ३ । वरा°. ३ ग. ज. °र्षीदिति; च. र्षीदिति° रि. ४ ग. २३; इतरेष्वङ्को नास्ति. ५ क. ख. छ. त. द. °हारो वरमाहारमाहार्षीरिति च ब्राह्मणम् । विध्य°. ६ क. ख. छ. त. द. 'वरमाहारमाहार्षीरिति च ब्राह्मणं' नास्ति. ७ क. ख. छ. त. द. बृह°. ८ ठ. ड. भवाति । अङ्गि°. ९ क. ख. छ. त. द. वराहून् ।४। स्वस°. १० क. ख. छ. त. द. °वन्ति सृजन्ति कर्माणि शर्या°. ११ क. ख. छ. त. द. ५. १२ ग. सवनेषु० । नोधा°; व. ट. सवनेषु सद्यो० वराहं तिरो°. १३ ज. °र्वन्ना । नोधा°.

शस्त्रे विनियुक्ता [ आश्व श्रौ० ७ । ४ ] । अस्येदु मातुः । अस्य जगन्निर्मातुर्यज्ञस्य प्रातःसवनमाध्यंदिनतृतीयसवनेषु महतो यज्ञस्य महान्तं सोमभागं पपिवान्[3] । पीत्वा चार्वन्ना चारूणि च शोभनान्यन्नानि अन्यान्यपि हवींषि भक्षयित्वा तैर्हविर्भिस्तेन च सोमेन विवृद्धबलः सद्य एव पचतं परिपक्वमुदकदानसमर्थ मेवं विष्णुः इन्द्रः सर्वभूतानां वेष्टो प्राणभावेन मुषायत् । अमुष्णादित्यर्थः । सहीयान् अभिभवितृतमः । कथं पुनरमुष्णादिति । उच्यते । विध्यद्वराहं तिरो अद्रिमस्ता । मेवं वराहम् । कथं पुनर्विध्यद्वराहमिति । उच्यते । तिरो अद्रिमस्ता । दूरादेव स्थितस्य अद्रिं वज्रमस्ता । क्षेप्तेत्यर्थः । एवमेतस्मिन्मुषायच्छब्दसंबन्धाद्वराहो मेघ इत्युपपत्तिः ।

' अयमपीतरो वराह एतस्मादेव ' । असावपि हि वरं मूलाख्यमाहारमाहरत्येव । वरं वरं मूलं बृहति । उद्यच्छतीत्यर्थः ।

यथायमपीतरो वराहशब्दश्छन्दसि वराह इत्युच्यते तथैवं निगमः ।

पश्वर्थे वराहनाम — विश्वेत्ता विष्णुरा[11]भरदुरुक्रमस्त्वेषितः । शतं महिषान्क्षीरपाकमोदनं वराहमिन्द्र एमुषम् । [ ऋ० सं० ८ । ७७ । १० ] ॥ काण्वस्य कुरुसुतेरार्षम् । ऐन्द्री[12] । विश्वेत् विश्वानि तानि विष्णुराभरत् उरुक्रमो बहुविक्रान्तः त्वेषितः संदीपित इन्द्रवाक्येन[13] ' दुर्गाद्वा[14] आहर्ता[15]वोचथा एतमा[16]हर ' [ मै० सं० ३ । ८ । ३ ] इत्यनेन । ' त्वा इषितः ' इति

---

१ घ. झ. ट. ठ. ड. °दिनसवनतृती°. २ घ. झ. ट. ठ. ड. °ज्ञस्य महः पितुं महा°; च. यज्ञस्य˅ महा° महः पितुं. ३ क. ख. घ. ट. ठ. ड. °वान् पीतवान् । पीत्वा°; च. °वान्˅ । पीत्वा° पीतवान्. ४ क. ख. घ. झ. ट. ठ. ड. °मेवं हि विष्णुः°; ग. ज. विविष्णु°; च. विविष्णुः. ५ ग. ज. वेवेष्टा°. ६ घ. झ. ट. ठ. ड. अदूर एवावस्थित°; च. दूरांत एव स्थित° अदूरे. ७ ग. ज. ' वरं ' सकृदेव; च. °त्येव ।˅ वरं मूलं° दरं. ८ ग. च. ज. ट. वृह°. ९ क. ख. घ. झ. ट. ठ. ड. तथैष; च. तथैवं' ष. १० ग. °गमः । २४ । विश्वे°. ११ ग. °राभर० एमुषम्; घ. ट. °राभरत्० वराह°. १२ घ. झ. ट. ठ. ड. ऐन्द्री बृहती । विश्वे°; च. ऐन्द्री˅ । विश्वे° बृहती. १३ क. ख. ग. ज. इन्द्रो वाक्येन. १४ ग. ज. दुर्गाद्वा; च. दुर्गात्त्वा आ° ट. दुर्गात्वात् आ°; ठ. ड. दुर्गाद्यत्वा. १५ च. हर्ता˅वोचत् यथा एत° इत्य. १६ घ. ट. ठ. ड. एतद्वाहरे°; च. एतमाहरे° दा.

पदविभागः । तथापि तु 'स्विषितः' इत्येकं पदं कृत्वैवं[1] निरुक्तम् । परोक्ष-
कृतत्वान्मन्त्रस्य नान्यथार्थ उपपद्यते । कानि पुनस्तानि वसून्याहरदिति ।
उच्यते । शतं महिषान् बहून् महतो यज्ञानाहरत् । किंलक्षणानिति ।
उच्यते । क्षीरपाकमोदनं प्रायणीयाख्यमादितः कृत्वा ये क्रियन्ते तान् ।
सोमक्रतूनित्यभिप्रायः । कुतः पुनराहरदिति । उच्यते । असुरं वराहरू-
पेणावस्थितं सर्वेषामसुराणां[2] व्यामोहस्थानीयं मायया यमिन्द्रो जघान तस्य
मध्यादाहरत् । यत् 'अयं वराहमिन्द्र एमुषमेकविंशत्याः पुरां पार[3] इत्युच्यते'
इत्येवं ब्राह्मणं मैत्रायणीयके ( मैत्रा० सं० ३ । ८ । ३ ] तदनुवा-[4]
दिनी चैषा ऋक् । तस्मादत्र वराहशब्देन वराह एवोच्यत इत्युपपद्यते ।

'अङ्गिरसोऽपि वराहा उच्यन्ते[5]' । 'स ईं सत्येभिः सखिभिः[6]
शुचद्भिर्गोधायसं वि धनसैरदर्दः । ब्रह्मणस्पतिर्वृषभिर्वराहैर्घर्मस्वेदेभिर्द्रविणं
व्यानट्' [ ऋ० सं० १० । ६७ । ७ ] ॥ अयासस्याङ्गिरसस्येयमा-
र्षम् । ब्राह्मणस्पत्यस्य काम्यस्य[7] पशौ षडर्चे[8] विनि-
युक्ता मैत्रायणीयके ( मैत्रा० सं० २ । ५ । ७ ॥
४ । १४ । १० ) ॥ स ब्रह्मणस्पतिः सत्येभिः
सत्यवादिभिः सखिभिः समानख्यानैः शुचद्भिः दी-
प्तिमद्भिः[9] विधनसैः विविधधनवद्भिः वृषभिः

अङ्गिरोवाचिवराह इत्यस्य

वर्षितृभिः वराहैः घर्मस्वेदेभिः घर्मतापयितृभिः प्रवर्ग्यकर्मणि । अथवा ।
यज्ञस्वेदेभिः यज्ञस्वेदयितृभिः[10] । यज्ञसद्भिर्वा । एवंगुणविशिष्टैरङ्गिरोभिः
सहितो ब्रह्मणस्पतिः गोधायसं गोः वाचो धारयितॄरमपां[11] वा मेघम्
अदर्दः अदारयदिति विपरिणामः परोक्षकृतत्वान्मन्त्रस्य । दारयित्वा च द्रवि-
णम् उदकं व्यानट् । व्याप्नोतीत्यर्थः । एतस्यामृच्यङ्गिरसां विशेषलिङ्गं नास्ति
वराहशब्दवाच्यत्वे । सूक्ते त्वेतस्मिन्नङ्गिरसो लिङ्गमस्ति[12] ।

---

१ क. ख. घ. झ. ट. ठ. ड. कृत्वैव. २ क. ख. घ. झ. ट. ठ. ड. °राणां मध्ये व्या° च. °राणां ˇव्या° मध्ये. ३ ग. ज, पर°; च. ᐧर° पा. ४ घ. झ ट. ठ ड. तदर्थानु°; च. तद्ˇनु° र्थ. ५ ग. °च्यन्ते । २५ । स°. ६ ग. सखिभिः शु० नट्; ज. सखिभिः । अया°; घ. ट. सखिभिः० द्रविणं व्यानट्. ७ क. ख. घ. झ. ट. ठ. ड. काम्यपशौ°. ८ घ. झ. षलर्चे; ट. ठ. ड. षळर्चे. ९ च. दीप्तिभिः. १० च. यज्ञछौद° स्त्रा. ११ ठ. ड. धारयितृभिः यज्ञसेद्भिर्वा अपां°. १२ ग. °मस्ति । २६ । ऋतं°.

'ऋतं शंसन्त ऋजु दीध्याना दिवस्पुत्रासो असुरस्य वीराः । विप्रं पदमङ्गिरसो दधाना यज्ञस्य धाम प्रथमं मनन्त'

सूक्तेऽङ्गिरसो लिङ्गं तस्मादङ्गिरसोऽपि वराहा उच्यन्ते

( ऋ० सं० १० । ६७ । २ ) ॥ ऋतं शंसन्तः यज्ञं वा सत्यं वा प्रशंसन्तः । अपि च । ऋजु अकुटिलमजिह्मं नित्यकालमेव दीध्याना ध्यायमानाः । सर्वभूतानामुपरि समचेतस इत्यभिप्रायः । दिवस्पुत्रासः द्योतनवतोऽग्नेः असुरस्य प्रज्ञावतः पुत्राः । वीरा विविधानामर्थानां वक्तारः ईरयितारो वा मेधावित्वात् । विप्रं पदमङ्गिरसो दधानाः । विप्राप्तं सर्वतः प्राप्तमङ्गिरसो दधाना यत्पदं स्थानं ज्ञानसहितस्य कर्मणः परा फलकाष्ठा तामङ्गिरसो दधाना धारयन्तश्चेतसा विवृद्धप्रज्ञत्वात् । यज्ञस्य धाम प्रथमं मनन्त । यज्ञस्य यत्प्रथमं मुख्यं परमात्माख्यमनावृत्तिलक्षणं धाम स्थानं तत्त्वेन मनन्त । जानत इत्यर्थः । एतदेवैतस्यामृच्यङ्गिरोलिङ्गं दृष्ट्वेष निगमो भाष्यकारेणोदाहृतः 'अङ्गिरसोऽपि वराहा उच्यन्ते' इति ।

'अथाप्येते माध्यमका देवगणा वराहव उच्यन्ते' मरुतो रुद्रा इत्येवमादयः । अङ्गिरसो ह्यपिसमाख्यामपि लभन्ते । तस्मान्माध्यमकत्वेऽपि सति पृथगुद्धृत्योक्ताः । यथा तावन्मरुतो वराहशब्देनोच्यन्ते तथैष निगमः । 'एतत्त्यन्न योजनमचेति सस्वर्ह यन्मरुतो गोतमो वः । पश्यन्हिरण्यचक्रानयोदंष्ट्रान्वि धावतो वराहून्' इति

अस्यामृचि मरुतो वराहशब्देनोच्यन्त

( ऋ० सं० १ । ८८ । ५ ) ॥ राहूगणस्य गोतमस्येयमार्षम् । 'आ विद्युन्मद्भिर्मरुतः' [ ऋ० सं० १ । ८८ । १ ] इतीयं चैतस्मिन्नेव सूक्ते । हे मरुत एतत्तद्बलं यौष्माकीणं न योजनमचेति न योगमागच्छति । विजितारित्वाद्बवतां न युज्यत इत्यर्थः । तस्य बलस्य किमिति । उच्यते । सस्वर्ह यन्मरुतो गोतमो वः । अन्तर्हितं यत्सर्वेषां मनुष्याणां

१ ग. ऋजु० मनन्त; ज. ऋजु० ऋतं; घ. ट. ऋजु दीध्या० प्रथमं मनन्त°. २ ग. ठ. ड सत्यं वा यज्ञं वा प्रशं'. ३ क. ख. घ. झ. ट. ट. ड. 'अङ्गिरसो दधानाः' नास्ति; च. अङ्गिरसो दधानाः. ४ ग. ज. तमाङ्गिर°. ५ ग. °गमः । २७ । एत°. ६ ग. चेति० हून; घ. ट. चेति० वि धावतो वराहून. ७ च. झ. ट. राहू°.

यस्य च मध्य युष्मान् वराहून् परेषां शत्रूणामुद्वन्तॄन्[1] उद्वर्हणान् हिरण्यचक्रान् सुवर्णविकृतचक्रान् अयोदंष्ट्रान् अयोमयेषान्[2] रथानधिरूढान् विधावतो नानाप्रकारं[3] धावतः पश्यन् स्तौति गोतमस्तदेवं[4] न योजनमचेति । अचेतीति गत्यर्थोऽचतेर्गत्यर्थस्य[5] सारूप्यात्[6] । एवमत्र प्रकरणे मरुतो वराहव उच्यन्ते[7] इत्युपपत्तिः । मरुदादयो हि सर्व एव माध्यमका देवगणा वराहव उच्यन्ते । तेषां शाखान्तरेषु मृग्या निगमाः । निगमानुपलब्धौ वा[8] 'माध्यमका देवगणा वराहव उच्यन्ते' इत्येतद्बहुवचनं मरुत्स्वेव योज्यम् । तेषां सप्तसप्तका गणा ब्राह्मणे हि श्रूयन्ते[9] 'ते सप्त सप्त मरुतां गणाः'[10] इति । तस्मादेवमप्युपपद्यत एव बहुवचनं भाष्यकारस्य । एकदेवताविषयोऽपि कदाचिद्वराहशब्दो भवत्येव । तदप्युपेक्षितव्यम् । तद्यथा । 'दिवो वराहमरुषं कपर्दिनम्' ( ऋ० सं० १ । ११४ । ५ ) इति रुद्र उक्तः[12] ।

'स्वसराणि' ( २२ ) इत्यनवगतम् । 'स्वयंसारीणि' इत्यवगमः । 'अहानि' इत्यभिधेयवचनम् । तानि हि स्वयमेव सरन्ति गच्छन्ति । 'अपि वा स्वरादित्यः' अत्रोच्यते । 'स एनानि[13] सारयति' गमयति । तेनैतानि[14] स्वसराणीत्युच्यन्ते[15] । 'विश्वे देवासो अप्तुरः[16] सुतमा गन्त तूर्णयः । उस्रा इव स्वसराणि' ( ऋ० सं० १ । ३ । ८ ) ॥ 'स्वसराणि' इत्यस्य मधुच्छन्दस इयमार्षम्[17] । अग्निष्टोमे प्रउगे शस्त्रे गायत्रे तृचे वैश्वदेवे शस्यते प्रयोगोऽर्थश्च ( आश्व० श्रौ० ४ । १५ ऐ० ब्रा० ११ । १ ) । हे विश्वेदेवा अप्तुरः कर्म प्रति त्वरमाणाः । ते हि यज्ञं[18] कर्म प्रत्या-

---

१ क. ख. घ. ट. ठ. ड. °मुद्धर्तॄन्; ग. °णां द्रुतॄन्; ज. °णां द्रूर्तॄन्; च. °णामुद्वन्तॄन्° तॄ. २ क. ख. झ. अयोमयान् रथा°; घ ट. ठ. ड. 'अयोम०००योजनमचेति' नास्ति; च. अयोमयेषान्. ३ ग. ज. °कागन्; च. °कारान्' रं. ४ क. ख. °देतन्न°; ग. ज. °देवं न°; च. °देवं न° तन्न. ५ क. ख. घ. झ. ट. ठ. ड. अचेतिर्गत्यर्थः. ६ ग. ज. °त्यर्थसा°; च. °त्यर्थस्य सा° स्य. ७ घ. झ. ट. ठ. ड. इत्युच्यन्ते; च. °हव उच्य° इत्यु. ८ क. ख. ग. ज घ. झ. ट. ट. ड. च; च. वा° च. ९ क. ख. घ. झ. ट. ठ. ड. 'इति' नास्ति. १० ग. ज. गणाः । ब्रा°. ११ ग. ज. श्रूयते. १२ ग. उक्तः । ४ । स्वस°. १३ क. ख. ग. ज. एतानि; च. एतानि° ना. १४ घ. झ. ट. °नैनानि. १५ ग. °च्यन्ते । २८ । विश्वे°. १६ ग. ज. अप्तुरः । मधु°; घ. ट. अप्तुरः° उस्रा°. १७ क. ख. घ. झ. ट. ठ. ड. 'इयं' नास्ति. १८ क. ख. घ. ट. ठ. ड. याज्ञिकं.

गन्तुं त्वरन्ते । अत एवमामन्त्र्यन्ते[1] । सुतमागन्त । अस्माभिरभिषुतमेतं सोमं प्रति आगन्त आगच्छत । हे तूर्णयः त्वरणशीलाः । कथं पुनरागच्छत । उस्रा इव स्वसराणि । यथा उस्रा रश्मयोऽहानि प्रति शीघ्रमागच्छन्त्ये-वमागच्छत । एवमस्मिन्रश्मिसंबन्धात्स्वसराण्यहानीत्युपपद्यते ।

'शर्या' ( २३ )इत्यनवगतम् । 'शरमय्य' इत्यवगमः । 'इषवः' अभिधेयाः । 'शरः शृणातेः' हिंसार्थस्य ( धा० ९ । १६ ) । हिंस्यते[2] हि तेन[3] ।

'शर्याः' इत्यस्य　'अभ्यभि हि श्रवसा ततर्दिथोत्सं न कं चिज्जनपानमक्षितम्[4] । शर्याभिर्न भरमाणो गभस्त्योः' ( ऋ० सं० ९ । ११० । ५ ) ॥ त्र्यरुणस्त्रसदस्युश्च[5] 'पर्यूषु[6] प्र धन्व वाजसातये' इति पावमानं सौम्यं[7] सूक्तं ( ऋ० सं० ९ । ११० ) ददृशतुः । पिपीलिकमध्यास्ति-स्रोऽनुष्टुभः[8] षडूर्ध्वबृहत्यस्तासामियं द्वितीया । अभिततर्दिथ एतं सोमं हे अभिषोतारः । पुनः पुनरभिहंतेत्यर्थः । श्रवसा श्रवणीयेन मन्त्रेण । कथं पुनरभिततर्दिथेति । शर्याभिर्न भरमाणः । शरमयीभिरिषुभिर्यथा कश्चित् कंचिदभितर्दयेद्धनुर्धारयमाण एवमेतं[11] सोममेभिर्ग्रावभिः[12] गभस्त्योः बाह्वो-रवस्थितैरभिततर्दिथ यूयम् । किंच । एवमेतं सोममभितर्दयन्तो यूयं वसती-वरीभिरद्भिराप्याय्याप्याय्य[13] उत्सं न कंचित् कूपमिव कंचित् जनपानं महतो देवजनौघस्य[14] पानार्हम् अक्षितमक्षीणं कुरुत । महतो देवजनौघस्य पानार्हं प्रभूतं कुरुतेत्यभिप्रायः । एवमिहाभितर्दनक्रियासंबन्धात् 'शर्या' शब्देन 'इषवः' उच्यन्त इत्युपपद्यते ।

---

१ क. ख. ग. ज. °न्त्र्यते. २ क. ख. हिंस्यन्ते; च. हिंस्यते° स्य. ३ ग. तेन । २९ । अभ्य°. ४ ग. श्रवसा ततर्दिथो० स्त्योः; घ. ट. श्रवसा० भरमाणौ गभ-स्त्योः. ५ ज. °क्षितम् । त्र्यरु°. ६ ग. ज. 'पर्यू०००सातय इति' नास्ति; च. °दस्युश्च पाव° पर्यू०००सातय इति. ७ च. ज. सोम्यं. ८ ग. ज. तस्यान्ते विराजस्तिस्र-स्तासामियं; च. तस्यान्ते विराजस्तिस्रः° पिपीलिकमध्यास्तिस्रोऽनुष्टुभः षडूर्ध्व-बृहत्यः. ९ घ. ट. षळूर्ध्व°; झ. ठ. ड. षळूर्ध्व°. १० ग. ज. °भिघ्नते°. ११ घ. झ. ट. ठ. ड. °मेनं; च. °मेतं° नं. १२ घ. ट. ठ. ड. 'ग्रावभिः' नास्ति. १३ क. ख. ग. ज. 'आप्याय्य' सकृदेव. १४ ग. ज. 'देव' नास्ति; च. देवै.

'अर्कः' ( २४ ) इत्यनेकार्थम् । 'देवः' तावत्सर्व एव 'अर्कः' इत्युच्यते । आह । किं कारणमिति[1] । उच्यते । यस्मात् 'एनं' देवम् 'अर्चन्ति' स्तोतारः ।

अर्कशब्दस्यार्थाः

'अर्को मन्त्रो भवति' । किं कारणम् । यस्मात् 'अनेन'[2] मन्त्रेण 'अर्चन्ति' तस्मादर्कः । 'अर्कमन्नं भवति' । किं-कारणम् । तद्धि 'अर्चति भूतानि' । यो हि पूज्यस्तस्यान्नसंस्कारविशेषेण[4] पूजा[5] क्रियते । पूज्यं[6] च सर्वस्यैवान्नम् । 'अर्को वृक्षो भवति' य एष प्रसिद्धः । आह । किं कारणम्[7] । उच्यते । 'स वृतः'[8] । स वृक्षो[9] हि संगतः संव्यासः 'कटुकिम्ना' कटुकभावेन[10] भवति । यथा तावद्देवोऽर्कशब्देनोच्यते तथैष निगमः । ४ ।[11]

---

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः । ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ( ऋ० सं० १ । १० । १ ) ॥ गायन्ति त्वा गायत्रिणः प्रार्चन्ति तेऽर्कमर्किणो ब्राह्मणास्त्वा शतक्रत उद्येमिरे वंशमिव वंशो वनशयो भवति वननाच्छ्रूयत इति वा पवी रथनेमिर्भवति यद्विपुनाति भूमिम् । उत पव्या रथानामद्रिं भिन्दन्त्योजसा । तं मरुतः क्षुरपविना व्ययुरित्यपि निगमौ भवतो[12] वक्षो व्याख्यातं धन्वान्तरिक्षं धन्वन्त्यस्मादापस्तिरो[13] धन्वातिरोचत इत्यपि निगमो भवति सिनमन्नं भवति सिनाति भूतानि । येन स्मा सिनं भरथः सखिभ्य इत्यपि निगमो भवतीत्थाम्[14] अमुथेत्येतेन व्याख्यातं सचा सहेत्यर्थः । वसुभिः सचाभुवा । वसुभिः सह भुवौ । चिदिति निपातोऽनुदात्तः पुरस्तादेव व्याख्यातोऽथापि

---

१ ठ. ड. 'इति' नास्ति. २ क. ख. घ. झ. ट. ठ. ड. 'इति' नास्ति. ३ घ. झ. ट. ऽनेन. ४ घ. झ. ट. ठ. ड. पूज्यस्तस्यान्नमपि संस्कारविशेषेण संस्कृतं पूजायां क्रियते । पूज्य°; च. पूज्यस्त ज्य. ५ च. °षेण पूजा क्रि° संस्कृतं पूजायां. ६ च. पूज्यं° ज्यं. ७ क. ख. घ. झ. ट. ठ. ड. °रणमिति. ८ च. 'स वृतः' नास्ति. ९ ग. ज. 'स वृक्षः' नास्ति. १० घ. झ. ट. ठ. ड. कटुभा°. ११ क. ख. ५; ग. ३० । ५; ठ. ड. ४ । इति नैरुक्तटीकायां पञ्चमाध्याये चतुर्थः खण्डः° १२ क. ख. छ. त. द. °वतः । वक्षो°. १३ क. ख. छ त. द. °स्मादापः । तिरो°. १४ क. ख. त. द. वति । इत्था°.

पशुनामेह भवत्युदात्तश्चिदसि मनासि चितास्त्वयि भोगाश्चेतयस इति वा । आ इत्याकार उपसर्गः पुरस्तादेव व्याख्यातोऽथाप्यध्यर्थे दृश्यते । अभ्र आँ अपः । अभ्रे[1] आ अपः । अपोऽभ्रेऽधीति[2] द्युम्नं द्योततेर्यशो वान्नं[3] वा । अस्मे द्युम्नमधि रत्नं च धेहि । अस्मासु द्युम्नं च रत्नं च धेहि ॥५॥[4] ५

इति पञ्चमाध्यायस्य प्रथमः पादः ।[5]

---

गायन्ति त्वा गायत्रिणं[6] इति । मधुच्छन्दस आर्षम् । अनुष्टुप् । ऐन्द्री । हे[7] भगवन्निन्द्र गायन्ति त्वा गायत्रिणः । अस्यामृच्यर्को देवः स्तुवन्ति त्वां सामगाः सामभिः । अर्चन्त्यर्कमर्किणः । पूजयन्ति त्वामृग्भिर्होतारो मन्त्रिणः । १०

एवमनेन प्रकारेण सर्वे एवं[8] ते ब्रह्मणो ब्राह्मणाः यज्ञकर्मणि[9] हे शतक्रतो उद्वंशमिव येमिरे । उद्येमिरे वंशमिव त्वां स्तुतिभिर्हविर्भिश्च । यज्ञेषु तवैव महिमानं वर्धयन्तीत्यर्थः । 'वंशो वनशयो भवति' । वने शयितं[10] इवास्ते । 'वननाच्छ्रूयत इति वा' । संभजनाद्वा[11] वर्तिभिः । एवमत्र देवोऽर्कशब्देनोच्यते । मन्त्रस्यार्कशब्दवाच्यत्वे 'अर्चन्त्यर्कमर्किणः' इत्येष एव निगमः । अर्किणो हि मन्त्रिण एवाभिप्रेताः । वृक्षस्तु[12] प्रसिद्ध एव । तेन निगमस्तदभिधायको नैवास्ति । १५

'अर्किणः' इत्यत्रार्को मन्त्रः

'पविः' (२५) इत्यनवगतम् । 'रथनेमिर्भवति' इत्यभिधेयवचनम् । २०

---

१ छ. त. द. अभ्र आ°. २ छ. त. द. अपोऽभ्रेऽध्यप इति द्यु°. ३ क. ख. छ. त. द. वा अन्नं. ४ क. ख. ६ (५); छ. त. ६; द. अङ्को नास्ति. ५ ड. थ. ध. 'इति॰ पादः' नास्ति; छ. प्रथमः पादः; त. पञ्चमाध्याये प्रथमः पादः; द. इति नैरुक्तस्य पञ्च°. ६ ग. ज. °त्रिणः॰ । मधु°; घ. ट. °त्रिणो॰ वंशमिव येमिरे । इति°. ७ ग. ज. 'हे' नास्ति; च. °आर्षं भग° अनुष्टुबैन्द्री । हे. ८ क. ख. घ. झ. ट. ठ. ड. एते ब्रह्म°; च. एवं ते. ९ क. ख. घ. झ. ट. ठ. ड. याज्ञे क°; च. यज्ञ° याज्ञे. १० ग. ज. शेत इ°; च शेत इ°. ११ ग. ज. घ. ट. °नाद्वावर्ति°. १२ ग. ज. वृक्षः सुप°. २८

'यद्विपुनाति भूमिम्'। सा हि विपुनाति भूमिमिति पविः।[1] 'उत स्म ते परुष्ण्यामूर्णा[2] वसत शुन्ध्यवः[3]। उत पव्या रथानामद्रिं भिन्दन्त्योजसा' [ ऋ०सं०५।५२।९ ]॥ श्यावाश्वस्येयमार्षम्। हे मरुतो येषां वस्तिरोभवितुमाविर्भवितुं च काले[4] शक्तिरस्ति ते यूयम् उत स्म अपि[5] कस्मिंश्चित्काले शुन्ध्यवः मद्वव इव परुष्ण्यां नद्यां माध्यमिकायां वा वाचि[6] पर्ववत्यां यूयमेव शुन्ध्यवः शोधयितारः ऊर्णाः छन्नास्तिरोहिता[7] वसथ[8] एतस्मिन्नन्तरिक्षलोके। अपि च। कस्मिंश्चिदभ्युद्गमकाले[9] प्राप्ते युष्माकं रथानां पव्याः याः[10] रथनेमयस्ता एव अद्रिं भिन्दन्ति ओजसा बलेन। किमुत यूयमित्यभिप्रायः॥

'पविः' इत्यस्य प्रयोगोऽर्थश्च

एवमेतस्मिन्नथसंयोगात्पविशब्देन रथचक्रनेमिरभिसंबध्यते।[11] ब्राह्मणमपि चैतस्मिन्नेवार्थे चातुर्मास्येषु सान्तपनं हविरधिकृत्य 'देवा वै वृत्रस्य मर्म नाविन्दंस्ते मरुतः क्षुरपविना व्ययुः[11] सं वा एनं तदतपंस्तस्मात्सान्तपनाः' (मैत्रा०सं०१।१०।१४) इति।

पविशब्दस्य रथनेम्यर्थे ब्राह्मणवचनम्

एतस्मिन्नपि च ब्राह्मणे चक्रनेमिः[12] क्षुरधाराकृतिस्तीक्ष्णः[13] पविरित्युच्यते तस्मादुपपद्यते। अल्पप्रयोगविषयत्वादुदाहरणद्वयम्।

'वक्षः' ( २६ ) इति व्याख्यातम् 'उपो अदर्शि शुन्ध्यवः' इत्यत्र ( निरु० ४।१६ )।

---

१ ग. ज. यद्धि पुनाति भूमिमिति पविः ( ग. पविः। ३१। ). २ ग. परुष्ण्यामूर्णा व०। श्यावा°; व. ट. परुष्ण्या० भिन्दत्योजसा. ३ ज. शुन्ध्युवः। श्यावा°. ४ व. ट. ठ. ड. काले काले श°; च. काले शक्ति° काले. ५ क. ख. घ. झ. ट. ठ. ड. अपि च कस्मिंश्वन का°. ६ क. ख. °वा विपर्व°; ग. ज. व. ट. ठ. ड. 'वा' नास्ति; च. वा वाचि. ७ ग. ज. छिन्ना°; च. छिन्ना° छ. ८ ट. वसथ° त. ८ क. ख. व झ. ट. ठ. ड. °द्गमनका°; च. °द्गन काले° न. ९ घ. ट. ठ. ड. यः. १० घ. झ. ठ. ड. °संपद्यते. ट. संपद्यते° बध्य. ११ क. ख. घ. झ. ट. ठ. ड. सांतपनं समतपं°; च. °व्ययुः सं वा एनं तद° ध्ययुः सांतपनं सम. १२ ग. ज. चक्रमेनिः; च. चक्रमनिः° नेमिः. १३ क. ख. घ. झ. ट. ठ. ड. °स्तीक्ष्णपवि°.

'धन्व' (२७) इत्यनवगतम् । 'धन्वनम्' इत्यवगमः । 'अन्तरिक्षम्' इत्यभिधेयवचनम् । 'धन्वन्त्यस्मादापः' इति नामप्राप्तौ हेतुनिर्देशः । 'यः परस्याः परावतस्तिरो धन्वातिरोचते । स नः पर्षदति द्विषः' (ऋ०सं०१०।१८७।२)॥ अग्निपुत्रस्य वत्सस्येयमार्षम् । व्यूढस्य दशरात्रस्य नवमेऽहन्याग्निमारुतस्य शस्त्रस्य जातवेदस्ये सूक्ते निविद्धानीये शस्यते (आश्व०श्रौ० ८।११)। यः अग्निरादित्यात्मनावस्थितः परस्याः परावतः परस्यामपि परावति वर्तमानः तिरः तीर्णमस्यैतन्महदन्तरिक्षं धन्व स्वेन प्रभावेन दीप्त्या अतीत्यास्मान्प्रति रोचत एव प्रकाशत एव । नानेनैवमतिमहता तिरोधीयत इत्यभिप्रायः । तस्य किमिति उच्यते । स नः सोऽस्माकं पर्षदति सर्वतः सादयतु नाशयतु द्विषः । द्वेष्टॄनित्यर्थः । एवमस्मिन्नादित्यस्तुतिसंबन्धाद्धन्वशब्दोऽन्तरिक्षाभिधानमित्युपपद्यते ।

'धन्व' इत्यस्य प्रयोगोऽर्थश्च

'सिनम्' (२८) इत्यनवगतम् । 'सिनाति' इति शब्दयुक्तिः । 'अन्नं भवति' इत्यभिधेयवचनम् । 'सिनाति भूतानि' । बध्नातीत्यर्थः । अन्नेन हि सर्वाणि भूतानि बध्यन्ते । 'इमा उ वां भृमयो मन्यमाना युवावते न तुज्या अभूवन् । क्व त्यदिन्द्रावरुणा यशो वां येन स्मा सिनं भरथः सखिभ्यः' । (ऋ० सं० ३ । ६२ । १)॥ विश्वामित्रस्येयम् । तार्तीयसवनिकेषूक्थपर्यायेषु स्तोमातिशंसने मैत्रावरुणस्य शस्त्रे

'सिनम्' इत्यस्य

१ क. ख. ग. ज. घ. झ. ट. ड. धन्वन्तीत्यव°; च. धन्वंतमि° न्वन; ट. धन्वन्त्तीत्य° नमि. २ क. ख. प्राप्तौ; च. ठ. प्राप्तौ° प्तौ. ३ ग. °र्देशः । ३२ । यः°. ४ ग. ज. परावतः । अग्नि°; घ. ट. परावतः० स नः पर्ष°. ५ घ. झ. ठ. ठ. ड. °मार्षं । गायत्र्याग्नेयी । व्यू°; च मार्षं व्यू° गायत्र्याग्नेयी. ६ क. ख. घ. झ. ट. ठ. ड. तीर्णतममेतन्न°; ग. ज. तीर्णमस्येतन्म°; च. तीर्णमस्यैतन्म° तममे. ७ क. ख. घ. झ. ट. ठ. ड. महतापि ति°. ८ च. ट. पर्षत्° परिष. ९ ग. ज. 'इति' नास्ति. १० ग. °न्ते । ३३ । इमा°. ११ ग. ज. °माना इति । वि°; घ. ट. मन्यमानाः० भरथः सखिभ्यः. १२ घ. ट. °स्येयमार्षं । ऐन्द्रावरुणी त्रिष्टुप् । तार्ती°; च. स्येयं तार्ती° आर्षं ऐन्द्रावरुणी त्रिष्टुप्. १३ क. ख. घ. झ. ट. °सवनेषू°; च. °सवनिकेषू° ने. १४ क. ख. स्तोमाभिशं°; ग. ज. स्तोमातिशंसस्य; च. स्तोमाति° भिं.

विनियुक्ता ( आश्व० श्रौ० ७ । ९ ) । हे इन्द्रावरुणौ इमा एव वां युवयोः भृमयः स्तुतयः[1] या यास्तैस्तैः[2] स्तोतृभिरुदीरिता युवामेव मार्गमाणा भ्रमन्तीव । ता एता यथापूर्वमेवास्माकमभिमतफलदायिन्यो भविष्यन्तीति मन्यमाना वयमुदीरयामहे । ताः पुनरेता अस्मै युवावते युष्मद्वते भवद्भ्यां
५ तद्वते यजमानाय न यथापूर्वं तुज्या दात्र्योऽभिमतानामर्थानाम्[3] अभूवन् बभुवुः । यतो ब्रवीमि । हे इन्द्रावरुणौ क्व त्यत् क्व तद्युवयोः यशो महाभाग्यं[4] गतं येन महाभाग्येनैताभिः स्तुतिभिरभिष्टुतौ सन्तौ सिनम् अन्नं भरथः दत्थः[5] सुपूज्यं वा कुरुथः सखिभ्यः समानख्यानेभ्यो यजमानेभ्यः। अन्नमेव हि प्रायेण यजमानैः प्रार्थ्यत इति 'सिन' शब्देनात्रान्नमभिधीयत
१० इत्युपपत्तिः । व्यभिचारित्वादभिधानानां धन्व सिनमित्येवमादीनि[6] स्वे स्वेऽभिधानवर्गे पठितान्यपि सन्ति नैघण्टुके प्रकरणे समाम्नातान्येतस्मिन्नप्यैकपदिके[7] प्रकरणेऽनवगतसंस्काराभिप्रायेण । कानिचिदनेकार्थाभिप्रायेण ।

'इत्था' ( २९ ) इत्येष निपातः 'अमुथा' इत्यनेन व्याख्यातोऽष्टमेऽध्याये ( निरु० ३ । १६ ) ।

१५ 'सचा' ( ३० ) इत्यप्रतीतार्थो निपातः । 'सह' इत्यर्थप्रतीतिः[8]।

'अग्निनेन्द्रेण वरुणेन विष्णुनादित्यै रुद्रैर्वसुभिः सचाभुवा[9] ।
सजोषसा उषसा सूर्येण च सोमं पिबतमश्विना' ( ऋ० सं० ८ । ३५ । १ )॥

श्यावाश्वस्यात्रेयस्यार्षम्[10] । त्रिष्टुप् ज्योतिष्मती[11] । हे अश्विनौ एताभिरग्न्यादि-
२० भिर्देवताभिः सचाभुवौ सहितौ भूत्वा सजोषसौ[12] सहप्रीतौ इमं सोमं पिबतं युवाम् । पीत्वा चैतं नामास्माकमर्थमभिप्रेतं कुरुतमित्येवमाशीर्योज्या । एवमिहाग्न्यादिदेवताभिसंबन्धात् 'सचा' इत्येष सहयोगे भवतीत्येतदुपपद्यते ।

'चित्' ( ३१ ) इत्येष 'निपातोऽनुदात्तः पुरस्तादेव व्याख्यातः'[13]।

---

१ घ. ट. 'स्तुतयः' नास्ति. २ घ. झ. ट. ठ. ड. 'तैः' सकृदेव. ३ घ. झ.
२५ ट. ठ. ड. दात्र्यः दानायाभिमता°. ४ सर्वेषु लिखितपुस्तकेषु 'महाभा°'. ५ घ. झ. ट. ट. ड. धत्थः सुपूजां वा; च. दत्थः° ध. ६ क. ख. घ. झ. ट. ठ ड. °मित्यादीनि. ७ क. ख. घ. झ. ट. ठ. ड. 'अपि' नास्ति; ग. च. ज. °न्नप्येक°. ८ ग. °तीतिः । ३४ । अग्नि°. ९ ग. ज. वरुणेन विष्णुना । श्यावा°; घ. ट. वरुणेन० पिबतमश्विना. १० क. ख. घ. झ. ट. ठ. ड. °श्वस्येयमार्षं. ११ घ. झ. ट. °त्रिष्टुप् । उपरिष्टाज्ज्यो°; च. °त्रिष्टुप् ज्यो° उपरिष्टात्. १२ क. ख. घ. झ. ट. ठ. ड. °सौ च सह°; षसौ सह° च. १३ क. ख. घ. ट. ठ. ड.
३२ 'पुरस्तादेव व्याख्यातः' नास्ति.

तद्यथा । 'सद्यश्चित्तः शवसा पञ्च कृष्टीः' [ ऋ० सं० १० । १७८ । ३ ] इति । स पुरस्तादेव व्याख्यातः 'चिदित्येषोऽनेककर्मा' ( निरु० १ । ४ ) इत्यत्र । 'अथापि' अयमेवाद्युदात्तो भवति । ततः 'पशुनाम भवति' । तद्यथा । 'चिदसि मनासि धीरसि' इति राजक्रयण्या गोस्तुतौ [ मैत्रा० सं० १ । २ । ४ । ] सैवोच्यते 'चिदसि मनासि' इति । अतः पुनरेतद्ब्राह्मणे व्याख्यायते 'चिदसीति यद्वा चिकित्सते' इत्येवमाद्याध्वर्यवे [ मैत्रा० सं० ३ । ७ । ५ ] ।

पश्वर्थे 'चित्' इत्यस्य प्रयोगः

'आ [ ३२ ] इत्याकार उपसर्गः पुरस्तादेव व्याख्यातः' 'आ इत्यर्वागर्थे' इति [ निरु० १ । ३ ] । अथापि चोपमार्थे दृश्यते निपातत्वेन 'जार आ भगम्' इति [ निरु० ३ । १६ ] । अथायमेव कदाचित् 'अध्यर्थे दृश्यते' 'अधीत्युपरिभावमैश्वर्यं वा' इति [ निरु० १ । ३ ] । यथायमध्यर्थेऽपि भवति तथा 'अभ्र आँ अपः' इत्येष निगमः ।

अध्यर्थे 'आ' इत्यस्य

'कद्रु प्रियाय धाम्ने मनामहे स्वक्षत्राय स्वयशसे महे वयम् । आमेन्यस्य रजसो यदभ्र आँ अपो वृणाना वितनोति मायिनी' ( ऋ० सं० ९ । ४८ । १ ) ॥ अधुना पदविभागमस्य भाष्यकारः करोत्युपसर्गविभागोपप्रदर्शनार्थम् 'अभ्रे आँ अपः' इति । अधुना आऽर्थं ब्रवीति । 'अपोऽभ्रेऽधीति' यदुक्तं स्यात्तदेवोक्तं भवति 'अभ्र आँ अपः' इति । प्रतिभानोरात्रेयस्येयमार्षम् । वैश्वदेवस्य प्रथमैव । जगती । अत्र पुनः प्रायेणाप एव स्तूयन्ते । 'आपो वै विश्वेदेवाः सर्वा एव वा देवताः' इत्यनेन ब्राह्मणदर्शनेनापां विश्वेदेवत्वमुपपद्यते । तत्पुनः सूक्तमभिप्लवस्य षडहस्य पञ्चमेऽहनि तृतीयसवने वैश्वदेवे शस्त्रे शस्यते ( आश्व० श्रौ० ७।७ ) । कद्रु प्रियाय । कप्रियाय सुखाय च प्रियाय च धाम्ने स्थानाय वैश्वदेवाय तत्प्राप्त्यर्थं

१ घ. झ. ट. ठ. ड. चिचित्सते; च. चिकित्सते° चि. २ क. ख. अथाप्युप°. ३ ग. °गमः । ३५ । कद्रु°. ४ ग. धाम्ने० मायिनी; घ. ट. धाम्ने मनामहे० वितनोति मायिनी. ५ ग. च. ज. ट. अभ्रं आँ अपः; घ. अभ्र आ अपः. ६ क. ख. घ. झ. ट. 'एव' नास्ति. ७ ग. ज. वैश्वदे°; च. विश्वदे°. ८ क. ख. घ. झ. ट. ठ. ड. °याय धाम्ने ममामहे । कंतिम°. ९ च. °याय सु° च. १० ग. ज. 'तत्' नास्ति; च. °वाय प्रा° तत्.

तानेव च विश्वान्देवान् अपो मनामहे । ता एव ह्युपास्यमानास्तैत्स्थानं प्रापयितुं समर्था इत्येवं मैनामहे । स्थानविशेषणान्येवोत्तराण्यपि स्वक्षत्रादीनि । स्वक्षत्राय च धाम्ने । स्वबलायेत्यर्थः । यत्र स्वैमेव बलं भवति न यत्र परकीयं बलमाशास्यते यथेह लोके । स्वयशसे । यत्र स्वमहिमकृत-
५ मेव यशो भवति न सांयोगिकद्रव्यकृतम् । महे महते धाम्ने तत्प्राप्त्यर्थं ता एवापो मनामहे मत्वा चोपास्महे इत्यभिप्रायः । आमेन्यस्य । मेना माध्यमिका वाक् तस्या यद्रजो लोकः । अन्तरिक्षलोक इत्यर्थः । तस्य । आ उपरि यदभ्रं यो मेघस्तत्र या अध्यपोऽवस्थिता वृर्णाना संभजमाना वितनोति विस्तृणाति वर्षभावेन मायिनी प्रज्ञावती माध्यमिका वाक् ता अपो वयमेवमादिगुणयु-
१० क्तास्तासामेव सर्वगतस्य धाम्नः प्राप्त्यर्थं मनामहे याचामहे । अभ्र एवाध्यापो वर्तन्त इति आङध्यर्थ उपपद्यते ।

अस्या ऋचोऽन्योऽर्थः

अथवैवमन्यथास्य मन्त्रस्यार्थः स्यात् । कदु प्रियाय सुखाय प्रियाय चैतस्मै धाम्ने स्थानाय । यत्र वयं वर्तामहे कथं नामैतत्स्थानं सुखं च प्रियं च स्वक्षत्रं च स्वयशश्च
१५ महच्च स्यादित्येवमर्थं वयं विश्वान् देवान् अपो मनामहे । 'मदेमहि मनामहे' इति याच्ञाकर्मसु पठितम् [ निघ० ३।१९ ] । कतमाः पुनरपो याचामह इति । उच्यते । आमेन्यस्य रजसः । आभिमुख्येन मननीयस्य रजसोऽन्तरिक्षलोकस्य यदभ्रमुपरि वर्तते तस्मिन्नभ्रेऽपो वृर्णाना संभजमाना मायिनी माध्यमिका वाक् वितनोति
२० वृष्टिभावेन तां मनामहे याचामहे कदु प्रियाय ।

१ घ. झ. ट. ठ. ड. °स्तत्तत्था°. २ क. ख. घ. ट. ठ. ड. इत्यर्थं. ३ च. मनामहे. । स्था° जानीमहे. ४ ग. ज. स्वयमे°; च. स्वयमे°. ५ घ. ट. ठ. ड. तथेह. ६ ग. च. ज. 'तत्' नास्ति. ७ ग. च. ज. ठ. ड. अध्यापो°. ८ ग. च. ज. °णाना: संभजमाना: वित°. ९ क. ख. घ. झ. ट. ठ. ड. एव ह्यध्या° च. एवाध्या° व ह्य. १० क. ख. घ. झ. ट. ठ. ड. इत्युप°. ११ च. अथैवम°. १२ क. ख. घ. झ. ट. ठ. ड. 'वयं' नास्ति. १३ ग. ज. याः आभि°; च. याः आभि°. १४ ग. ज. पदमुप°; च. पदमुप° यदभ्र. १५ ग. ज. वर्तन्ते; च. °रि यदभ्रं वर्तन्ते° वर्तते. १६ च. तस्मिन्न° पो° भ्रेऽ. १७ ग. ज. °णाना । सं°;
२१ च. णानाः. १८ च. तां.

"द्युम्नम्" [ ३३ ] इत्यनेकार्थम् । 'यशो वान्नं वा' इत्यभिधेयत्रचैनम् । शतं ते शिप्रिन्नूतयः सुदासे सहस्रं शंसा उत रातिरस्तु । जहि वधर्वनुषो मर्त्यस्यास्मे द्युम्नमधि रत्नं च धेहि " [ ऋ० सं० ७ । २५ । ३ ] ॥ वसिष्ठस्यार्षम् । त्रिष्टुप् । महाव्रते महदुक्थे दक्षिणे पक्षे शस्यते [ ऐ० आ० ५ । २ । २ ] । हे शिप्रिन् इन्द्र शतं ते तव ऊतय आगमनानि सन्तु । क्व । सुदासे सुदाने कल्याणदान एतस्मिन्यजमाने । तथैनमनुगृहाण यथा नित्ययज्वैवायं यजमानः स्यादित्यभिप्रायः । आगतस्य च सतस्तव सहस्रं शंसा बहूनि स्तोत्राणि सन्तु । उत रातिरस्तु । अपि च हविर्दत्तिरस्त्वित्येतदेवानुवर्तते । एवं च त्वमागत उपसृतः सञ्च्छृणु यत्कुरुष्व । हे वधः वधयितः वनुषो मर्त्यस्य योऽस्मान् हन्तुमिच्छति मर्त्यो मनुष्यस्तस्य यद्वीर्यं तज्जहि । हत्वा च तस्य वीर्यं निरुद्यमं तं कृत्वा अस्मे अस्मासु द्युम्नमन्नं यशो वा रत्नं च धेहि निधेहीत्यर्थः । रत्नं च धनम् । एवमेतस्मिन्मन्त्रे शत्रुवधसंबन्धात् द्युम्नशब्देन यशो वान्नं वोच्यत इत्युपपत्तिर्हेते हि शत्रौ यशोऽन्नं च भवतीति । 'द्युम्नं द्योततेः' इति । अन्नमेव हि भुञ्जानस्य दीप्तिर्भवतीति द्युम्नमन्नं द्योतयितृत्वाद्यशस्तु दीप्तं प्रकाशस्वभावादिति ॥ ५ ॥

'द्युम्नम्' इत्यस्य

———

दशमाध्यायस्य प्रथमः पादः ।

———

द्वितीयः पादः ।

**पवित्रं पुनातेर्मन्त्रः पवित्रमुच्यते । येन देवाः पवित्रेणात्मानं पुनते सदेत्यपि निगमो भवति रश्मयः पवित्रमुच्यन्ते ।**

---

१ ग. °चनं । ३६ । शतं°. २ ग. ज. °न्नूतयः । वसि°; घ. ट. °न्नूतवः. सुदासे० स्मे द्युम्न°. ३ घ. झ. ट. °ष्टुबैन्द्री; च. °ष्टुप् । म° ऐन्द्री. ४ क. ख. घ. झ. ट. ठ. ड. 'तं' नास्ति; च. तं. ५ घ. झ. ट. ठ. ड. वा महि महत् रत्नं. ६ घ. झ. ट. ठ. ड. 'निधेहि' नास्ति. ७ क. ख. घ. झ. ट. ठ. ड. 'च' नास्ति. ८ क. ख. ग. न. 'मन्त्रे' नास्ति. ९ क. ख. घ. झ. ट. ठ. ड. 'अन्नं' नास्ति. १० ग. ज. घ. झ. ट. दशमस्य प्रथ°; ठ. ड. इति दशमस्य प्रथ°. ११ च. पादः समाप्तः; ठ. ड. पादः इति निरुक्तटीकायां पञ्चमाध्याये पञ्चमः खण्डः.

गभस्तिपूतो नृभिरादिभिः सुत इत्यपि निगमो भवत्यापः पवित्र-मुच्यन्ते । शतपवित्राः स्वधया मदन्तीर्बह्वूदकाः । अग्निः पवित्र-मुच्यते वायुः पवित्रमुच्यते सोमः पवित्रमुच्यते सूर्यः पवित्र-मुच्यते इन्द्रः पवित्रमुच्यते । अग्निः पवित्रं स मा पुनातु वायुः
५ सोमः सूर्य इन्द्रः । पवित्रं ते मा पुनन्त्वित्यपि निगमो भवति । तोदस्तुद्यतेः ॥ ६ ॥

———

'पवित्रम्' [ ३४ ] इत्यनेकार्थम् । 'पुनातेः' इति धातुनि-र्देशो निर्वचनाभिप्रायः । 'मन्त्रः पवित्रमुच्यते' इत्यभिधेयवचनम् ।
१० येन देवाः पवित्रेणात्मानं पुनते सदा । तेन सहस्रधारेण पावमान्यः पुनातु माम्'॥ मन्त्रस्य पवित्रत्वप्रख्यापको निगमः।

मन्त्रार्थे पवित्रशब्दः

पवित्रस्य वसिष्ठसहितस्य वा आर्षम् । पावमानी सौमी । येन पावयित्रा मन्त्रेण देवा ऋत्विग्यजमाना आत्मानं पुनते सदा सततमेव । प्रस्तुते कर्मणि
१५ यस्य मन्त्रस्यैतत्सामर्थ्यं तेन मन्त्रेणैवं वीर्यवता सहस्रधारेण बहुप्रक्षरेण प्रविचलेन पवमानः पूयमानः सोमो मां पुनातु । मन्त्रेणैव देवा ऋत्विग्यज-माना आत्मानं पुनन्ति तस्मादुपपद्यते तेषां देवत्वमिति । न हीतरेषां देवानां पापमस्ति यत्पूयेत । "न ह वै देवान्पापं गच्छति" ( बृह० उ० १ । ५ । २० ) इति विज्ञायते । तस्माद्देवशब्देनात्र ऋत्विग्यजमाना उच्यन्ते ।
२० ते हि हविषां दातारः पावनेन चार्थिनस्तस्मादुपपद्यते तेषां देवत्वम् ।

'रश्मयः पवित्रमुच्यन्ते' । ते हि स्पर्शनेनैव पावयन्ति । 'वाचस्पतये

रश्म्यर्थे पवित्रशब्दः

पवस्व वृष्णो अंशुभ्यां गभस्तिपूतः । देवो देवानां पवित्रमसि येषां भागोऽसि' ( मैत्रा०सं० १।३। ४) इति ॥ एषा उपांशुग्रहणे विनियुक्ता [ मान०
२५ श्रौ० २ । ३ । ३ । १२ ] । हे सोम वाचस्पतिरिन्द्रस्त्वां पास्यतीत्ये-

१ क. ख. छ. त. द. 'नृभिरादिभिः सुतः' नास्ति. २ छ. द. वति । आपः°; त. °वत्यापः° ति । आ. ३ ड. थ. विरामो नास्ति. ४ क. ख. १ (६); छ. त. ७; द. १. ५ घ. ट. पवित्रेण० पुनातु मा. ६ घ. झ. ट. ठ. ड. °पकोऽयं नि°; च. °पको॰ नि° यं. ७ च. प्रक्षरेण° रणेन. ८ क. ख. घ. झ. ठ. ड. प्रविर-लेन; ट. प्रविरलेन; च. प्रविचलेन° र. ९ च. पावनेन चा°;० झ. पावमानेन. १० ग. च. ज. पवस्वेत्येषा°. ११ क. ख. घ. झ. ट. ठ. ड. °देवो देवेभ्यः
३२ पवस्व येषां°. १२ क. ख. ध. झ. ट. पश्यती°; च. पास्य° पश्य.

तमर्थं पुरस्कृत्य वृष्णः वर्षितुः पवस्व पूयस्व । यावेतौ[1]वंशू अन्तर्हितौ[3] निषिध्यमानस्यैव ताभ्यां पवस्व । अपि च । त्वं प्रागप्यभिषवात् गभस्तिपूत एव रश्मिपूतः । किंच । देवस्त्वं दानादिगुणयुक्तो देवानामेव दानादिगुणयुक्तानां पवित्रमसि पावयितासि । किं सर्वेषामेव । नेत्युच्यते । येषां भागोऽसि । ये त्वामभिषवादिक्रियया भजन्ते ऋत्विग्यजमानाः । ते ह्यत्र देवत्वेनाभिप्रेताः पावनसंबन्धात् । न हीतरेषां देवानां पापमस्ति पूर्ववत् किंचित्[5] । ५

'पवमान मह्यर्णो[6] वि धावसि सूरो न चित्रो अव्ययानि पव्यया । गभस्तिपूतो नृभिरद्रिभिः सुतो महे वाजाय धन्याय धन्वसि '[ ऋ० सं० ९ । ८६ । ३४ ]॥

रश्म्यर्थेऽन्यदुदाहरणम्

एतं मन्त्रं व्याचक्षते । ऋषिगणैस्त्रिभिर्दशर्चमेतत्सूक्तं दृष्टं तत्रैषा । हे पवमान पूयमान सोम अव्ययानि पव्यया अविमयेन ऊर्णेन पवित्रेण पूयमानस्त्वं महि महत् अर्णः[11] उदकम् आत्मत्वेनाभिसंपन्नस्तत्स्वभावमुपगतः निर्ऋजीषः स्वच्छो[12] भूत्वा ततो द्रोणकलशं प्रति विधावसि । कीदृशः पुनः पूर्वं भूत्वैतां रसावस्थामापद्यसे त्वमिति । उच्यते । पूर्वं तावदरण्येऽवस्थितः गभस्तिपूतः सन्[13] रश्मिपूतः तत आहृत्य क्रीत्वा सोमक्रयविक्रय[14]विधानेन नृभिः ऋत्विग्यजमानैः अद्रिभिः ग्रावभिः सुतः अभिषुतः[15] । ततो महे वाजाय अन्नाय धन्याय धन्वसि कृत्स्न[16]जगद्धारयित्रेऽर्थाय । कथं नाम कृत्स्न[17]जगदुपकारिता[18]- १० १५

१ क. ख. घ. झ. ट. ठ. ड. °तुः अग्नौ प्रास्ताहुत्या वृष्टिकर्तुरादित्यस्य चार्थे पव°; च. °तुः ᵕ पव° अग्नौ००० चार्थे. २ च. °तावᵕन्त° शू अ. ३ क. ख. घ. झ. ट. ठ. ड. °तौ सन्तौ सकलयज्ञं व्याप्नुवानौ निषि°; च. °तौᵕनि° सकलयज्ञं व्याप्नुवानौ. ४ क. ख. घ. झ. ट. ठ. ड भजन्ति. ५ ग. °चित् । ३७ । पव°. ६ ग. ज. मह्यर्णो० । ऋषि°; घ. ट. मह्यर्णो वि धावसि० धन्याय धन्वसि. ७ च. शूरो. ८ घ. झ. ट. ठ. ड. एवं. ९ क. ख. घ. ट. ठ. ड. °गणैरकृष्टामाषादिभिर्व्यस्तैः समस्तैश्च त्रिभिः प्र त आशव इत्येतस्याष्टाचत्वारिंशदृचस्य सूक्तस्य चत्वारिंशतामृचां दशर्चो ( क. ख. दश दशर्चो ) दृष्टाः । तत्रैषा चतुस्त्रिंशत्तमी; च. °गणैस्त्रिभि° रकृष्टामाषा०००० चतुस्त्रिंशत्तमी. १० ग. चीर्णेन; ज. मर्णोन. ११ क. ख. घ. ट. ठ. ड. उदकमुदकत्वेनाभि°; च. °र्णं उदकᵕत्वेनाभि° मातम. १२ च. स्वस्थो° छो. १३ क. ख. घ. झ. ट. ठ. ड. रश्मिपूतः सन् तत°. १४ ज. सोमक्रयविधा°. १५ च. °भिस्तुतः° पु. १६ क. ख. ग. च. ज. घ. झ. ट. ड. कृत्स्नं ज°; ठ. कृत्स्नजगद्धारणार्थाय. १७ ग. ज. ड. कृत्स्नं ज°. १८ क. ख. घ. झ. ट. °कारित्वमभि°. २० २५ ३२

भिनिष्पद्येत वृष्टिनिमित्तेनेत्येतमर्थं पुरस्कृत्य रसभावमापन्नो द्रोणकलशं प्रति धन्वसि । प्राप्नोषीत्यर्थः । एवमत्र 'गभस्तिपूतः' इत्येतस्मात्पावनसंबन्धाद्रश्मीनां पवित्रत्वमुपपद्यते । केश्चित् ' पवित्रवन्तः परि वाचमासते ' [ ऋ० सं० ९ । ७३ । १३ ] इत्येष निगमो विधीयते ।

५ ' आपः पवित्रमुच्यन्ते ' । ता अपि हि पावयन्ति । ' शतपवित्राः

अबर्थे स एव

स्वधया मदन्तीर्देवो देवानामपि यन्ति पाथः ।
ता इन्द्रस्य न मिनन्ति व्रतानि सिन्धुभ्यो हव्यं
घृतवज्जुहोत ' [ ऋ० सं० ७ । ४७ । ३ ] ॥

अब्देवत्या । त्रिष्टुप् । वसिष्ठस्यार्षम् । बहुपावयित्र्यो या देव्यः स्वधया
१० अन्नेन सहिता भूत्वा मदन्तीः देवीः दानादिगुणयुक्ता देवानां दानादिगुणयुक्तानामेव पाथः पानं सोमाख्यम् अपियन्ति अपिगच्छन्ति ता एवंलक्षणा आप इन्द्रस्य न मिनन्ति न हिंसन्ति व्रतानि कर्माणि । येनाभ्रवधानन्तरमविलम्बमाना वर्षभावेन प्रक्षरन्तीत्यभिप्रायः । या एता एवंगुणयुक्ता आपस्ताभ्योऽद्भ्यः सिन्धुभ्यः स्यन्दमानाभ्यो हव्यं हविः घृतवत् घृतमिश्रं
१५ जुहोत हे ऋत्विजः । अर्हन्ति ता हविरित्यभिप्रायः । एवमत्रापः पवित्रशब्देनोच्यन्तेऽब्देवतत्वादस्य मन्त्रस्य ।

अग्न्यादयोऽपि ह्येतेनोच्यन्ते । एतेऽपि हि सर्व एव पावयन्ति ।

अग्न्यादयोऽपि
२० पवित्रशब्देनोच्यन्ते

' अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः । पवित्रं ते मा पुनन्त्वित्यपि निगमो भवति ' । निगदप्रसिद्ध एवैष निगमः ।

---

१ क. ख. घ. ट. ठ. ड. °त्यर्थः । सूरो न चित्रः । सूर्य इव पूजनीयः । एव°; च. °त्यर्थः । ~ एव° सूरो न००० पूजनीयः. २ ग. ज. झ. °त्पावमानसं°. ३ च. °मो ~ वि°Sनि. ४ ग. °यन्ति ।३८। शत°. ५ ग. मदन्तीर्द्देवो देवाना०। अब्दे°; घ. ट. मदन्तीः० घृतवज्जुहोत. ६ घ. ट. मदन्तीर्द्दानादि°; ठ. ड. 'मदन्तीः' नास्ति. ७ क. ख. घ. झ. ट. स्पन्द्मानाभ्यः; ठ. ड. स्यन्दनमानाभ्य°; ग. च. ज. स्पन्दनाभ्य. ८ क. ख. घ. झ. ट. ठ. ड. °न्तेऽब्दैव°. ९ क. ख. घ. झ. ट. ठ. ड. ह्येते पवित्रशब्देनोच्य°; च. ह्येते~नो° पवित्रशब्दे. १० क. ख. घ. झ. ट. ठ. ड. तेऽपि. ११ ठ. ड. पुनात्विति । निगद°. १२
२१ घ. च. विरामो नास्ति. १३ ग. ज. °गदसिद्ध°.

'तोदः' (३४) इत्यनवगतम् । 'तुदः' इत्यवगमः । 'तुद्यतेः' व्यथनार्थस्येति [ धा० ६ । १ ] धातुनिर्देशः । भूमेर्बिलं तोद इत्युच्यते । तद्धि तुन्नं भवति दीर्णत्वात्[1] । कूप इत्येके ॥ ६[2] ॥

---

**पुरु त्वा दाश्वान्वोचेऽरिरग्ने तव स्विदा । तोदस्येव शरण आ महस्य ( ऋ० सं० १।१५०।१ ) ॥ बहुदाश्वांस्त्वामेवाभिह्वयाम्यरिरमित्र ऋच्छतेरीश्वरोऽप्यरिरेतस्मादेव यदन्यदेवत्या अग्नावाहुतयो ह्रूयन्त इत्येतद् दृष्ट्वैवमवक्ष्यत्[3] । तोदस्येव शरण आ महस्य । तुदस्येव शरणोऽधि महतः स्वश्वाः सु अश्वनः । आजुह्वानो घृतपृष्ठः स्वश्वा इत्यपि निगमो भवति शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः कुत्सितार्थीयं पूर्वं भवतीत्यौपमन्यवः ॥ ७[4] ॥**

---

'पुरु त्वा दाश्वान् वोचे' इति दीर्घतमस आर्षम्[5] । उष्णिक् । प्रातरनुवाकाश्विनयोः शस्यते [ आश्व० श्रौ० ४ । १३ ] । पुरु त्वा दाश्वान् । बहुदानवानहं भूत्वा हे अग्ने त्वामहं वोचे । त्वामाह्वयामीत्यर्थः । किं पुनः कारणमन्या देवता उत्सृज्य त्वामाह्वयामीति । उच्यते । इतो यस्मात् अरिरभे तव स्विदा इति । एतद्विवक्षार्थे । सुचिरमपि विचार्य[6] तवाहमरिरेव स्तोमानामुच्चारणे । अर्य ईश्वर एव । समर्थोऽहमाह्वयामि त्वां स्तोतुं बहु च दातुमित्यभिप्रायः । किं पुनः कारणमन्या देवता उत्सृज्य त्वामेवाभिह्वयामि । उच्यते । इतो यस्मात् तोदस्येव शरण आ महस्य । तुन्नस्येव विदीर्णस्य कस्यचि-

तोद इत्यस्य प्रयोगोऽर्थश्च

१ क. ख. ग. ज. दीर्घत्वात्; ट. दीर्णत्वा °र्घ. २ क. ख. २ ( ६ ); ग. ज. ७ । ३९; ठ. ड. ६ इति निरुक्तटीकायां षष्ठः खण्डः; इतरेष्वङ्को नास्ति. ३ छ. त. द. °वक्षत्. ४ क. ख. २ ( ७ ); छ. त. ८; द. २. ५ ग. ज. दाश्वान् वोचे । दीर्घ°; घ. झ. ट. °दाश्वान्००० आ महस्य । दीर्घ°; ठ. ड. दाश्वानिति । दीर्घ°. ६ घ. ठ. ड. °आर्षं । आग्नेयी । उष्णिक्; ट. °आर्षं । ७° आग्नेयी. ७ घ. ट. ठ. ड. दाश्वान्वोचे । बहु°. ८ घ. ट. ड. विचार्य. ९ क. ख. ठ. ड. °वाह्वयामीति; घ. ट. °वाभिह्वयामीति.

श्छुभ्रस्य कूपस्योपरि । आङ् अध्यर्थे । महस्य महत इत्यर्थः । शरणे बिले । 'शॄ हिंसायां' ( धा० ९ । १६ ) । तस्य शरणं बिलम् । तद्विदारितं भवति । यथा[1] हि श्वभ्रे बिले कस्मिंश्चिद्बह्वय आपो गच्छन्ति न च तस्य श्वभ्रस्य महतो ग्रहणे[2]शक्तिपरिहाणं भवत्येवं तवानेकाश्चानेक-
५ देवताश्चाहुतीरस्माभिः प्रत्ताः प्रतीच्छतो न सामर्थ्यपरिहाणमस्ति । अतो देवतानामस्माकं त्वमेवातिविशिष्टोपकारप्रवृत्तोऽतस्त्वामेवाभिह्वयामि । एवमत्र शब्दसारूप्यादुपमार्थोपपत्तेश्च[3] 'तोद' शब्दस्तुन्नस्य भूप्रदेशस्याभिधाय[4]क इत्युपपद्यते । तथा चोक्तं 'तोदमध्येऽतिर्द्वैत्यार्धचतुर्दशसु शङ्कुं[5] निख-न्यात्' इति सदसो निर्माणे । स्त्रिया अपि चासत्प्रदेशस्तोद इत्युच्यते ।
१० तस्मादेतदपि तुन्नस्य भूप्रदेशस्याभिधायकमित्युपपद्यते । 'अरिरमित्र ऋच्छतेः' इति निगमप्रसक्तम् । 'ऋच्छतेर्हिंसार्थस्य' ( धा० ६ । १६ ) । 'ईश्वरोऽप्यरिरेतस्मादेव' धातोः । 'यदन्यदेवत्या अग्नावाहुतयो हूयन्ते' । यस्मादन्यदेवत्याश्चान्यदेवत्याश्चापरिसंख्येया अग्नावाहुतयो हूयन्ते न चाग्नेस्तासां ग्रहणशक्तिपरिहाणमस्ति न च

१५ ईदृगुपमायाः प्रयोजनम्

ज्ञायते श्वभ्रबिल इव निषिक्ता आपः क्वापि गच्छन्ति ता आहुतय इति । 'एतात्' सामान्यं 'दृष्ट्वा एवम्' अवोचन्मन्त्रदृक् 'तोदस्येव शरण आ महस्य' इति[6] । 'तुदस्येव शरणेऽधि महतः' इत्यर्थः ।

'स्वञ्चाः' ( ३६ ) इत्यनवगतम् । 'सु अञ्चनः' इत्यवर्गमः[7] ।

२० 'स्वञ्चाः' इत्यस्य

'सं भानुना यतते सूर्यस्याजुह्वानो घृतपृष्ठः स्वञ्चाः । तस्मा अमृध्रा उषसो व्युच्छान्य इन्द्राय सुनवामेत्याह' ( ऋ० सं० ५ । ३७ । १ )[8] ॥ अत्रेरार्षम्[9] । ऐन्द्री । त्रिष्टुप् । यस्य यजमानस्य नित्ययायजूकत्वात्तेषु[10]

१ घ. ट. ठ. ड. 'यथा००० हाणं भवति' नास्ति. २ च. ग्रहणे श°. ३ ग. च. ज. 'च' नास्ति. ४ ग. ज. °देशाभि°; च. °देशाभि° शस्या. ५ क. ख. घ. झ. ट. ठ. ड. °ध्ये निर्द्वन्त्या°. ६ ग. ज. °शसु संकु निख-याद्दि'; ठ. ड. शंकु नि°. ७ ट. ड. इति । तुदस्येव शरण आ महस्येति । तुदस्येव°. ८ ग. गमः । ४० । सं. ९ ग. ज. यतते । अत्रे'; व. ट. यतते सूर्यस्य० सुनवा-मेत्याह. १० क. ख. घ. ट. ट. ड. °त्तेषु तेषु क°; च. °त्तेषु० क० तेषु.
२१

कर्मसूज्ज्वलितोऽग्निः आजुह्वानः आहूयमानोऽभिहूयमानो वा घृतपृष्ठः[1] स्वञ्चाः घृतस्पृष्टः शोभनगमनः स्वेन प्रकाशेन भानुना भास्वता सूर्येण संयतते संगच्छते संस्पर्धते वा सूर्येणातिदीप्तत्वात् । तस्य यजमानस्य किमिति । उच्यते । तस्मा एव[3] अमृध्रा अमृता अम्लाना उषसो व्युच्छान् । विभान्तीत्यर्थः । यस्यैवमभिहूयमानोऽग्निर्नित्यकालमेव सूर्येण संयतते तस्यैव पुण्यकृतः सुप्रभाता रात्रयो भवन्ति नेतरस्यायज्वन इत्यभिप्रायः । अपि च । य एवमाह[4] ब्रवीति अपि श्रद्धाद्वितीयो दरिद्रः कश्चित् इन्द्राय इन्द्रार्थं सुनवाम अभिषुणुमः सोमामिति तस्यापि कल्याणाभिव्याहारिणः सुप्रभाता एवोषसः । किमुत यः सुनोतीत्यभिप्रायः । एवमस्मिन् 'सूर्येण संयतते' इत्यनेन संबन्धात् 'स्वञ्चाः सु अञ्चनः' अञ्चतेः (धा० १ । ८८७ ) गत्यर्थस्य रूप[5]दर्शनादित्युपपद्यते ।

'शिपिविष्टो विष्णुरिति' एते 'विष्णोः' एव 'द्वे नामनी भवतः' । अत्र 'शिपिविष्टः' [ ३७ ] इत्येतद्गुणपदमनवगतं पक्षेण चानेकार्थम् । शिपिविष्टः 'शेप इव निर्वेष्टितः' इत्यर्थप्रतीतिः । अस्य संबन्धादत्र विष्णुशब्दः समाम्नातो यथा 'अक्षाः' इत्यस्य संबन्धात्सोमशब्दः 'सोमो अक्षाः' इति [ निरु० ५ । ३ ] । न ह्यत्र प्राधान्येन विष्णुशब्दः समाम्नातो देवतापदत्वात् । अनयोर्द्वयोरपि नाम्नोर्यत् 'पूर्वं' तत् 'कुत्सितार्थीयं भवतीत्यौपमन्यवः' आचार्यो मन्यते । यथा च कुत्सितार्थीयं तथोदाहरणार्थमेव निर्ब्रुवन् दर्शयिष्यति[6] । ७ ।

---

**किमित्ते विष्णो परिचक्ष्यं भूत्प्रयद्ववक्षे शिपिविष्टो अस्मि । मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ ( ऋ० सं० ७ । १०० । ६ ) ॥ किं ते विष्णो[7]ऽप्रख्यातमेतद्भवत्यप्रख्यापनीयं यन्नः प्रब्रूषे शेप इव निर्वेष्टितोऽस्मीत्यप्रतिपन्नरश्मिरपि वा प्रशंसानामै-**

१ क ख. घ. झ. ट. ठ. ड. °पृष्ठः घृताक्तपृष्ठः स्वञ्चाः शो°; च. °पृष्ठः स्वेञ्चाः घृतस्पृष्टः शो° ताक्त. २ घ. झ. ट. ठ. ड. °ना सता सूर्येण सह सं°. ३ ग. ज. तस्मायेव; च. तस्मायैव° ए. ४ क. ख. °माह अयज्वापि श्रद्धा°; घ. झ. ट. ठ. ड.° माह अयज्वापि ब्रवीति°. ५ च. रूपद°. ६ क. ख. १ ( ७ ); ग. ८ $\frac{४१}{४२}$; ठ. ड. °ष्याति । इति निरुक्तभाष्ये सप्तमः खण्डः; इतरेष्वङ्को नास्ति. ७ ङ. थ. छ. त. द. विष्णो प्रख्या°.

वाभिप्रेतं स्यात्किं ते विष्णो प्रख्यातमेतद्भवति प्रख्यापनीयं यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवति । मा वर्पो अस्मदप गूह एतत् । वर्प इति रूपनाम वृणोतीति सतो यदन्यरूपः समिथे[1] संग्रामे भवसि
५ संयतरश्मिस्तस्योत्तरा भूयसे निर्वचनाय ॥ ८ ॥

---

'किमित्ते विष्णो' [ऋ० सं० ७ । १०० । ६] 'प्र तत्ते अद्य' इति [ऋ० सं० ७ । १०० । ५] । वसिष्ठस्यैते आर्षम् । विष्णोः शिपिविष्टस्यान्वारम्भणीये चरुस्तस्यैते याज्यानुवाक्ये ( मान० श्रौ०
१० १ । ५ । ६ । ५ ) । वाजपेये च सप्तदशे शस्त्रे[2] शस्यते । ( आश्व० श्रौ० ९ । ९ ) । सोमातिरेके[3] तृतीयसवने च [आश्व० श्रौ० ६ । ७] । किंरूपस्त्वमिति पृष्टः शिपिविष्टोऽस्मीत्युक्तेऽनन्तरं प्रक्रियते किमित्ते विष्णोरिति । किमेतदेवैकं विगतरश्मिरूपं परिचक्ष्यं परिख्यापनीयं भूत् भवति नान्यानि रूपाणि तव सन्ति येनैवं प्रत्रवक्षे पुनःपुनर्ब्रूषेऽस्माकमग्रतः शिपिविष्टोऽ-
१५ स्मीति 'शेप इव निर्वेष्टितोऽस्मीति' । 'अप्रतिपन्नरश्मिः' हि सूर्य उदयकाले निर्वेष्टितः शेपरूपो[4] भवति । तस्य तद्रूपगुणयोगि तन्नाम[5] कुत्सितार्थीयमुपपद्यते[6] । 'अपि वा' प्रशंसागुणयुक्तमेवैतन्नाम[7] स्यात् 'शिपिविष्टः' इति । आह । कथमिति ।

*शिपिविष्टनाम्नः कुत्सितार्थः*

२० उच्यते । 'शिपयः अत्र' अस्मिन् प्रशंसानामपक्षे 'रश्मय उच्यन्ते' । स च सूर्यो मुहूर्तोदितः शिपिसंज्ञैर्बालरश्मिभिः 'आविष्टो भवति' तस्मात् 'शिपिविष्टः' इत्युच्यते । एवमेतद्व्युत्पाद्यमानं प्रशंसानामैव भवति नाश्लीलोपमासंबद्धमित्यभि-

*अथवा तत्प्रशंसानाम स्यात्*

२५ प्रायः । हे विष्णो किमेतदेवैकं रूपं तव परिचक्ष्यं प्रख्यापनीयमस्ति यदेतदुदयकाले प्रतिपन्नमात्रेषु रश्मिषु । नान्यानि रूपाणि प्रख्यापनीयानि

---

१ क. ख. ३ (८); छ. त. ९; द. ३. २ च. °शस्त्रे चै सामा°. ३ क. ख. ग. ज. °रेकशस्त्रे च तृती°; घ. ट. ठ. ड. °रेकशस्त्रे तृती°. ४ क. ख. शेपस्वरू°; घ. झ. ट. ठ. ड. शेषसरूपो°; च. शेप~रूपो° स. ५ च. °योगि~नाम° तत. ६ क. ख. घ. झ. ट. ठ. ड. °तार्थमित्युप°. ७ घ. झ. ट. ठ. ड. °शंसायुक्तमे°; च. प्रशंसागुण°.

सन्ति 'यदुत' एवं 'प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः' प्रतिपन्नमात्रेषु रश्मिष्विति । विजानीमस्तवैतद्रूपद्वयं यतो ब्रूमः । मा वर्पो अस्मदप गूह एतत् । मा एतत् वर्पो रूपमस्मत् अस्माकमग्रतः प्रख्यापय । किं तर्हि । अपगूह एतत् । संवृतं कुरुष्वैतच्छिपिविष्टशब्द-वाच्यमुपमेयं रूपमथवा बालरश्मिसंयुक्तम् । किं तर्हि । यदन्यरूपो येना-न्येन रूपेण समिथे संग्रामे भवसि संयतरश्मिः संबद्धानेकरश्मिजालस्तदेव नो माध्यंदिनं रूपमनेकरश्मिविकचं प्रकाशयस्वेत्यभिप्रायः । तद्धयनाधृष्यं संग्रामेषु भवति । 'तस्य' एवार्थस्य प्रकृतस्य यथा प्रशंसानामैतदिति 'उत्तरा' ऋक् अस्या एव प्रकृताया ऋचो 'भूयसे निर्वचनाय' । अत्र हि स्वशब्देनैवास्य प्रशंसानामत्वमुच्यते । ८[3] ।

---

**प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् । तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके ( ऋ० सं० ७ । १०० । ५ ) ॥ तत्तेऽद्य शिपिविष्ट नामार्यः प्रशंसाम्य-र्योऽहमस्मीश्वरः स्तोमानामर्यस्त्वमसीति वा तं त्वा स्तौमि तवस-मतव्यांस्तवस इति महतो नामधेयमुदितो भवति निवसन्तमस्य रजसः पराके पराक्रान्ते[6] । आघृणिरागतहृणिः । आघृणे सं सचावहै । आगतहृणे संसेवावहै पृथुज्रयाः पृथुजवः । पृथुज्रया अमिनादा-युर्दस्योः । प्रामापयदायुर्दस्योः ९[7] ॥**

---

प्र तत्ते अद्य शिपिविष्टेति । हे शिपिविष्ट विष्णो तदहं ते तव नाम प्रशंसामि । तत्प्रशंसार्थीयमेव पश्यामि यदन्ये कुत्सितार्थीयं पश्यन्ति । वयुनानि युष्मद्विषयाणि प्रज्ञानानि विद्वान् जानानः । किंच । अर्योऽहमस्मि यस्मादीश्वरः स्तुतीनामुदीरणे युष्मद्गुणाभिज्ञस्तस्मादहं प्रशं-सामि । अथ 'वा । अर्यस्त्वमसि' ईश्वरो

अत्र शिपिविष्टनाम प्रशंसापरमेव

---

१ ग. ज. संबन्धानेक°; च. संबन्धा° द्धा. २ क. ख. घ. झ. ट. ठ. ड. नाधृष्टं. ३ क. ख. ३ ( ८ ); ठ. ड. ८ इति नैरुक्तटीकायां पञ्चमाध्याये अष्टमः खण्ड ; इतरेष्वङ्को नास्ति. ४ छ. त. द. तत्ते अद्य. ५ त. तवसमतव्यांस्तवस°. ६ क. ख. छ. त. द. °क्रान्त आघृ°. ७ क. ख. ४ ( ९ ); छ. त. १०; द. ४. ८ क. ख घ ट. ठ. ड. अद्येति । वसि°. ९ ग. ज. °सामि तत्ते नामेति यस्त्व-मसि अर्य ईश्वरो मद°. १० घ. झ. ट. ठ. ड. °अथवा यतस्त्वमसि अर्य ईश्वरो; च. ° अर्यस्त्वमसि ईश्व° यतः.

मदनुग्रहार्थं समर्थस्तस्मादहं प्रशंसामि तत्ते नामेति स्फुटतरं प्रशंसानामत्वमिति । यस्त्वं सर्वगुणसंपन्न ईश्वरस्तं त्वामहं गृणामि स्तौमि तवसं महान्तम् अतव्यान् अमहान् अहम्। आत्मनिन्दया स्तूयते। क वर्तमानम्। निवसन्तमस्य रजसः अन्तरिक्षलोकस्य पराके पराक्रान्ते स्थाने। दूरादूरतरे निवसन्तं स्तौमि ।

'आघृणिः' इत्यस्य

'आघृणिः' (३९) इत्यनवगतम् । 'आगतघृणिः' इत्यवगमः। आगतदीप्तिरागतक्रोधो वाभिधेयः । 'एहि वां विमुचो नपादाघृणे सं सचावहै । रथीर्ऋतस्य नो भव' ( ऋ० सं० ६ । ५५ । १ ) ॥ भरद्वाजस्येयमार्षं पौष्णे सूक्ते । एहि आगच्छ हे विमुचो विमोचयितः प्रजानां तमोभ्यः पूषन् सूर्य नपात् अपां नपात् हे नप्तः । अद्भ्योऽग्निर्जायते अग्नेरादित्य इत्यनयापेक्षयापां नपात्त्वं सूर्यस्य । अथवा मनुष्याणामेव नप्ता स्यात्। नृभ्य ऋत्विग्भ्यो मनुष्येभ्यो जायतेऽग्निरग्नेरपि च सूर्यो जायते यदुक्तमग्न्युपस्थाने 'एष प्रातः प्रसुवति' ( मैत्रा० सं० १ । ५ । ७ ) इति । आघृणे आगतदीप्ते संसचावहै संसेवावहै आवां परस्परतः । रथीर्ऋतस्य रंहयिता गमयिता प्रोत्सर्पयिता नस्त्वं यज्ञस्य भव । त्वदुदयप्रतीक्ष एवाहं यज्ञप्रारम्भं प्रत्याशासे । स त्वमुदेहि। त्वय्युदिते प्रोत्सर्पतामयं यज्ञ इत्यभिप्रायः। एवमयमत्र सूर्यसंबन्धात् 'आघृणि'शब्दो दीप्तिवाचकः। दीप्तिकर्मसु च पठित एवायं 'हरः घृणिः' ( निघ० १ । १७ )। इति । क्रोधोऽपि घृणिरित्युच्यते 'हेडः हरः घृणिः' ( निघ० २ । १३ ) इति । तदपि प्रकरणवशादुपेक्षितव्यम् ।

१ च. °ग्रहाय प्रवृत्तः सम°. २ च. वर्जमितरेषु 'अहं' नास्ति. ३ क. ख. घ. झ. ट. ठ. ड. विस्फुट°. ४ ग. °धेयः । ४३ । एहि. ५ ग. नपा० । भर°; घ. ट. नपा० स्य नो भव. ६ ज. सचावहै । भर°. ७ क. ख. घ. झ. ट. ठ. ड. °मार्षं गायत्री पौष्णे°; च. °मार्षं । ~ पौष्णे° गायत्री. ८ ठ. ड. 'अपां नपात्' नास्ति. ९ ग. ज. 'हे नप्तः' नास्ति. १० ग. ज. संसवावहै; च. संसचावहै ~आवां° संसेवावहै वां. ११ क. ख. घ. झ. ट. ड. वां आवां. १२ क. ख. घ. झ. ट. ठ. ड. °मुदिहि. १३ ठ. ड. हेळः.

'पृथुज्रयाः' (४०) इत्यनवगतम्। 'पृथुजवः' इत्यवगमः[1]।

'पृथुज्रयाः' इत्यस्य — 'यं[2] नु नकिः पृतनासु[3] स्वराजं द्विता तरति नृतमं हरिष्ठाम्। इनतमः सत्वभिर्यो ह शूषैः पृथुज्रया अमिनादायुर्दस्योः' [ऋ० सं० ३। ४९। २]॥ विश्वामित्रस्यार्षम्[4]। त्रिष्टुप्। ऐन्द्रे सूक्ते। व्यूढस्य दशरात्रस्य द्वितीयेऽहनि मरुत्वतीये शस्यते[5] [आश्व० श्रौ० ८। ७]। [6]यं नु नकिः। यमिन्द्रं न कश्चिदपि पृतनासु संग्रामेषु स्वराजम् अपराधीनराज्यं द्विता द्विविधेनापि बलेन सांयौगिकेनौरसेन च तरति जयति। सर्वथा[7] जेतुं न शक्यत इत्यभिप्रायः[8]। अथवा। द्विता तरति द्विधैकधा वा बहुधा वा वर्तमानं पृतनासु यं[9] न कश्चिद्धन्तुं[10] शक्नोति नृतमं मनुष्यतमं हरिष्ठां हर्योरास्थातारम्। इनतम ईश्वरतमश्च यः सर्वेभ्य ईश्वरेभ्यः। सत्त्वभिर्यो ह शूषैः। अनेकसत्त्वसंयुक्तैर्हस्त्यश्वरथपदातिलक्षणैः सांयौगिकैर्बलैः शूषैश्च बलविशेषैरेव। अथवा। सत्त्वशब्दविशेषणमेव शूषशब्दः स्यात्सत्त्वयुक्तैः शूषैर्बलैरिति। पृथुज्रया विस्तीर्णजवः। अमिनादायुः। कस्य। दस्योः मेघस्यासुरस्य। तमहं स्तौमि। स इदं [11]नाम करोत्वित्यभिप्रायः। एवमत्र शब्दसारूप्याद्बुद्ध्याधिकाराच्च 'पृथुज्रयाः पृथुजवः' इत्युपपद्यते[12]।

'अथर्युम्' इत्यनवगतम्। 'अतनवान्' इत्यवगमः॥ ९॥

---

**अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम्। दूरेदृशं गृहपतिमथर्युम्** (ऋ० स० ७। १। १)॥ **दीधितयोऽङ्गुलयो भवन्ति धीयन्ते कर्मस्वरणी प्रत्यृत एने अग्निः समरणा-**

---

१ ग. °गमः। ४४। यं. २ घ. झ. ट. च. यंन्नु न°. ३ ग. ज. °नासु स्वराजं। विश्वा°; घ. ट. °नासु० दायुर्दस्योः. ४ क. ख. घ. झ. ट. °त्रस्येयमार्षम्. ५ क. ख. घ. झ. ट. ठ. ड. °त्वीये शस्त्रे शस्यते. ६ घ. झ. ट. च. ज. यंन्नु न°. ७ क. ख. घ. झ. ट. ठ. ड. °था यो जेतुं°; च. °था ˅ जेतुं° यो. ८ क. ख. ध. झ. ट. ठ. ड. इत्यर्थः; च. इत्यभिप्रायः° र्थः. ९ ग. ज. यन्न; च. यंन्न. १० ठ.ड. कश्चित् हन्तुं. ११ च. इदं˅क° नाम. १२ क.ख. ४ (९); ग. ४५। १०; ठ. ड. गमः। इति निरुक्तटीकायां पञ्चमाध्याये नवमः खण्डः.

ज्जायत इति वा हस्तच्युती हस्तप्रच्युत्या[1] जनयन्त प्रशस्तं दूरेदर्शनं गृहपतिमतनवन्तम् ॥ १० ॥

---

अग्नि नर इति । वसिष्ठस्येयमार्षम्[2][3] । महाव्रत आग्नेये सूक्ते प्रथमैवेयम् ( ऐ० आ० ५ । १ । १ ) । व्यूढस्य दशरात्रस्य चतुर्थेऽ-हन्याग्निमारुते शस्त्रे जातवेदस्ये सूक्ते[4] प्रथमैव ( आश्व० श्रौ० ८।८ )। नरो मनुष्या दीधितिभिः अङ्गुलीभिः योक्तं परिगृह्योत्तरारणिं वा[5] हस्तच्युती हस्तप्रच्युत्या हस्ताभ्यां प्रच्यावयन्तः अरण्योः 'अथर्युम्' इत्यस्य सकाशादग्निं जनयन्त प्रशस्तम् । प्रशस्यमित्यर्थः । दूरेदृशं दूरेदर्शनं गृहपतिम् अथर्युम् अतनवन्तम्[6] । गमनवन्तमित्यर्थः । एवमत्राततेर्गत्यर्थस्य सारूप्यादग्न्यधिकाराच्च 'अथर्युः अतनवान्' इत्युपपद्यते । 'दीधितयोऽङ्गुलयो भवन्ति'। ता हि 'धीयन्ते कर्मसु' अनुष्ठीयमानेषु । 'अरणी प्रत्यृतः' प्रतिगतः 'एने अग्निः' तात्स्थ्यादग्नेः । 'समरणाज्जायते इति वा' । अरण्योर्हि समरणात्समागमाँदग्निर्जायते ।

'काणुका' ( ४२ ) इत्यनवगतमनेकार्थं च । 'कान्तकानीति वा क्रान्तकानीति वा' इत्येवमाद्याः शब्दसमाध्रयः[8] ॥ १० ॥

---

एकया प्रतिधा पिबत्साकं सरांसि त्रिंशतम् । इन्द्रः सोमस्य काणुका ( ऋ० सं० ८ । ७७ । ४ ) ॥ एकेन प्रतिधानेनापिबत्साकं सहेत्यर्थ इन्द्रः सोमस्य काणुका कान्तकानीति वा क्रान्तकानीति वा कृतकानीति वेन्द्रः सोमस्य कान्त इति वा

---

१ क. ख. ५ [१०]; छ. त. ५ द. ५. २ क. ख. घ. झ. ट. ठ. ड. 'इयं' नास्ति. ३ घ. झ. ट. ठ. ड. °र्षम् । विराल ( ट. ड. °राळनु;° ठ. °राजनु° ) नुष्टुप् । महा°; च. °र्षं । महा° विरालनुष्टुप्. ४ घ. झ. ट. ट. ड. सूक्ते वाजपेये चाज्यशस्त्रे प्रथ°; च. सूक्ते प्र° वाजपेये चाज्यशस्त्रे. ५ क. ख. ग. ज. 'वा'स्थाने 'च;' घ. झ. ट. ठ. ड. 'वा' नास्ति; च. वा. ६ ग. ज. °वन्तमित्यर्थः । गम°; च. वन्तमित्यर्थः । एव° न्तं गमनव°. ७ क. ख. घ. झ. ट. ठ. ड. °गमनादग्नि°; च. गमाँद° मना. ८ क. ख. ५ ( १०; ) ग. ४५ । ११; ठ. ड. °माधयः । इति निरुक्तटीकायां पञ्चमाध्याये दशमः खण्डः; इतरेष्वङ्को न विद्यते. ९ क. ख. छ. त. द. °त्यर्थः । इन्द्रः°.

कर्णेघात इति वा कर्णेहतः कान्तिहतस्तत्रैतद्याज्ञिका वेदयन्ते त्रिंशदुक्थपात्राणि माध्यंदिने सवन एकदेवतानि तान्येतस्मिन्काल एकेन प्रतिधानेन पिबन्ति तान्यत्र सरांस्युच्यन्ते त्रिंशदपरपक्षस्याहोरात्रास्त्रिंशत्पूर्वपक्षस्येति नैरुक्तास्तद्या एताश्चान्द्रमस्य आगामिन्य आपो भवन्ति रश्मयस्ता अपरपक्षे पिबन्ति तथापि निगमो भवति यमक्षितिमक्षितयः पिबन्तीति तं पूर्वपक्ष आप्याययन्ति तथापि निगमो भवति यथा देवा अंशुमाप्याययन्तीत्यध्रिगुर्मन्त्रो भवति गव्यधिकृतत्वादपि वा प्रशंसनमेवाभिप्रेतं स्यात्तच्छन्दवत्त्वादध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगवित्यग्निरप्यध्रिगुरुच्यते । तुभ्यं श्चोतन्त्यध्रिगो शचीवोऽधृतगमन कर्मवन्निन्द्रोऽप्यध्रिगुरुच्यते । अध्रिगव ओहमिन्द्रायेत्यपि निगमो भवत्याङ्गूषः स्तोम आघोषः । एनाङ्गूषेण वयमिन्द्रवन्तः । अनेन स्तोमेन वयमिन्द्रवन्तः ॥ ११ ॥

---

एकया प्रतिधा । काण्वस्य कुरुसुतेरियमार्षम् । एकया प्रतिधा एकेन प्रणिधानेन सकृत्प्रणिहितेनैव चेतसा पिबतीन्द्रः साकम् । सहेत्यर्थः । कानि पुनः पिबति । सरांसि । कियन्ति । त्रिंशतम् । कस्य पूर्णानि पिबति । सोमस्य । किंगुणयुक्तानि । काणुका कान्तकानि । प्रियाणीत्यर्थः । अथवा । सोमस्य क्रान्तकानि । आविलेत्सोमस्य पूर्णानीत्यर्थः । अथवा । कृतकानि संस्कृतानि ऋत्विग्भिरिन्द्रार्थमेव । अथवा । इन्द्रो

'काणुका' इत्यस्य

१ क. ख. द. °यन्तीति ॥ ६ ॥. अध्रि°; छ. त. °यन्तीति ॥ १२ ॥ अध्रि°. २ छ. त. द. प्रशंसानामेवाभिप्रेतं. ३ छ. सुशमी° मि; द. सुशमी. ४ छ. त. द. शचिवः । अधृ°. ५ छ भवति । आङ्गू° त्या; त. भवति । आङ्गू. ६ क. ख. ७ (११); छ. त. १३; द. ७. ७ क. ख. प्रति ०काणुका; ग. ज. प्रतिधापिबत्; व. ट. प्रतिधा० सोमस्य काणुका; ठ. ड. प्रतिधेति. ८ क. ख. घ. झ. ट. ठ. ड. मार्षम् । गायत्री । ऐन्द्री एक°; च. °मार्षं । एक °गायत्री ऐन्द्री. ९ च. प्रणिधा° ति; इतरेषु 'प्रातिधा'°. १० क. ख. घ. झ. ट. ठ. ड. प्रतिहि°; च. प्रणिहि° ति. ११ ज. 'अथवा० रिन्द्रार्थमेव' नास्ति. १२ घ. झ. ट. ठ. ड. आविलं सो°.

यस्मात् सोमस्य कान्तः तस्मादपिबत् । अथवा[1] । एवमन्यथेन्द्रविशेषणमेव स्यान्न सरोविशेषणम् । आह । कथमिति । उच्यते । आकर्णघातं पिबतीति । यावत्कणे हन्यत इत्यर्थः । ' कणेहतः कान्तिहतः ' । कान्तिरभिलाष इत्यर्थः । कामः प्रार्थना[2] कणे इति समानार्थाः । कामे योऽभिहतः सः ' कणेहतः ' इत्युच्यते । हतपानाभिलाष इत्यर्थः । एवमेतत्काणुकेति सरोविशेषणमिन्द्रविशेषणं[3] पानविशेषणं वा सर्वेषामस्मिन्मन्त्रे प्रकृतत्वात् । एवं चास्य विकल्प्यमानस्यानेकार्थतापि दर्शितैव भवति ।

'सरांसि त्रिंशत्' इत्यस्य याज्ञिकपक्षेणार्थः

यदेतदुक्तमस्मिन्मन्त्रे ' सरांसि त्रिंशतम् ' इत्यस्याभिधेयविपर्ययप्रख्यापन[4]प्रसक्तमिदमुच्यते । ' तत्रैतद्याज्ञिका वेदयन्ते ' । तत्रैतस्मिंस्त्रिंशच्छब्द एतदभिधेयमर्थवस्तु[5] याज्ञिका वेदयन्ते कथयन्ति । ' त्रिंशदुक्थपात्राणि माध्यंदिने सवन एकदेवत्यानि ' इति । तत्र हि माध्यंदिने सवन उक्थपर्यायास्त्रयो[6]ऽथैन्द्रा[7] एव भवन्ति । त्रिष्वपि चैतेषु दश दश चमसाः । तदभिप्रायेण त्रिंशत्सरांसीत्युक्तं मन्त्रदृशा । ते ह्येन्द्रस्य सरका अभिप्रेताः सीधुसरका इवेतरस्य कस्यचित्क्षत्रियस्य । यानि तान्युक्थसंबद्धानि च सोमपात्राणि ' एकेन प्रणिधानेन[8] ' पीयन्ते ' तान्यत्र सरांस्युच्यन्ते ' इत्येष याज्ञिकानामभिप्रायः । ' त्रिंशदपरपक्षस्याहोरात्रास्त्रिंशत्पूर्वपक्षस्येति नैरुक्ताः[9] ' । नैरुक्तानामपि त्रिंशत्संख्यापूरणं पक्षगताहोरात्रयोः पृथग्भावेन पानात् । तत्रैवं सति ' या एताश्चान्द्रमस्यः[10] ' । चन्द्रमसि भवाश्चान्द्रमस्यः । ' आगामिन्यः[11] ' प्रतिपद्द्वितीयाद्यासु तिथि-

१ घ. झ. ट. अथ चैवमन्य°. २ ग. ज. प्रार्थनकणे°; च. प्रार्थनं क °ना. ३ क. ख. घ. झ. ट. ठ. ड. °षणं वा पान°. ४ व. झ. ट. ठ. ड. °विषये प्रख्या°; च. °विषयेप्र° ये. ५ ठ. ड. °धेयमन्त्रवस्तु. ६ ग. ज. घ. झ. ट. ठ. ड. °यास्त्रयस्त्रयोऽ°; च. °या॰स्त्रयोऽ° स्त्रय. ७ क. ख. घ. झ. ट. ठ. ड. °योऽप्यैन्द्रा°; च. °योऽथैन्द्रा° प्यै. ८ क. ख. व. झ. ट. ठ. ड. प्रतिधा°. ९ क. ख. ग. ज. 'नैरु ००० पानात्' नास्ति. १० घ. °मस्य आगामिन्यः । चन्द्र°; झ. °मस्य आप आगामिन्यः । चन्द्र°; ट. °मस्य आपं आगामिन्य । चन्द्र°; ठ. ड. °मस्य आगामिन्य आपः । चन्द्र°. ११ च. ट. °मिन्यः ॰ प्रति° आपः.

*तस्यैव नैरुक्तपक्षेणार्थः*

श्चागच्छन्तीति । किं तासामिति । उच्यते । 'रश्मयस्ता अपरपक्षे पिबन्ति' । यथा चैतदेवं 'तथापि' तथैव 'निगमः' 'यमक्षिति'-मक्षितयः पिबन्ति' इति । चन्द्रमसमपरपक्षे पीत्वा ते सूर्यरश्मयः 'पूर्वपक्षे' प्राप्ते पुनः 'आप्याययन्ति' आपूरयन्ति । यथा चैतदेवं तथैव 'निगमः' 'यथा देवा अंशुमाप्याययन्ति' इति ।

'यथा देवा अंशुमाप्याययन्ति यथा क्षितिमक्षितयः पिबन्ति । तेन नै इन्द्रो वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः' ॥ राजयक्ष्मगृहीतस्य वैश्वदेवश्चरुर्निरूप्यते (मैत्रा० सं० २ । २ । ७ ) । तत्र प्राक् स्विष्टकृतोऽनयाज्याहुतिर्हूयते । यथा येन प्रकारेण देवाः सूर्यस्य रश्मयः अंशुं सोमम् आप्याययन्ति पूर्वपक्षे एवमनेन प्रकारेण हे यजमान त्वामिन्द्रो वरुणो बृहस्पतिश्चेति भुवनस्य भूतजातस्य गोतार आप्याययन्तु आयुषा धनेन । किंच । यथा येन प्रकारेण 'अक्षितिम्' अक्षीणं सोमम् अक्षितयः सूर्यरश्मयः पिबन्ति तथा त्वामपि हविर्दातारं सन्तं पिबन्तु उपजीवन्तु एते देवा इति । येषां तु 'यमक्षितिम्' इति पाठस्तेषां यमक्षितिमक्षितयः पिबन्ति स च त्वामाप्याययत्वित्येवं योज्यम् ।

*नैरुक्तपक्षानुकूलो निगमः*

आह । 'एकया प्रतिधापिबत्' इत्येतस्मिन्मन्त्रे 'साकं सरांसि त्रिंशतमिन्द्रः' पिबतीत्युक्तम् । नैरुक्तपक्षेण चोक्तं 'तथा एताश्चान्द्रमस्य आगामिन्य आपो भवन्ति रश्मयस्ता अपरपक्षे पिबन्ति' इति । तदेतद्रश्मिषु पातृषु चन्द्रमसि च पीयमाने सर्वमेवेदमसंबद्धं भवतीति । 'एकया प्रतिधापिबत्' इत्येतस्य मन्त्रस्यैन्द्रत्वात् । इतरस्मिन् 'यमक्षितिमक्षितयः पिबन्ति' इति रश्मीनां पानसंयोगादादित्य उच्यते । उच्यते । आदित्योऽपि हीन्द्रशब्देनोच्यत एव । 'असावादित्य

*नैरुक्तपक्षीयोऽर्थोऽसंबद्ध इति पूर्वपक्षः*

१ ठ. ड. °क्षितम°. २ क. ख. ग. च. ज. यमक्षिति°. ३ ग. ज. नो; ठ. ड. 'नः' नास्ति. ४ क. ख. घ. झ. ट. ठ. ड. सूर्यर°. ५ क. ख. घ. झ. ट. ठ. ड. धनेन च; च. धनेन० । किं° च. ६ क. ख. घ. झ. ट. ठ. ड. 'च' नास्ति; च. चोक्तं° उ. ७ क. ख. ग. ज. घ. ट. पातृषु. ८ च. पीतेये याते° यमाने. ९ क. ख. घ. झ. ट. ठ. ड. पानसंबन्धादादि°. १० क. ख. घ. झ. ट. ठ. ड. 'उच्यते' नास्ति.

इन्द्रः ' इति [1] ह विज्ञायते ( काठ० सं० २२ । २ । तै० सं० १ । ७ । ६ । )। तदवयवभूताश्च रश्मयोऽत्रादित्येन सह समासव्यासस्तुतिभाजः। सरःशब्दः खल्वप्युदक एव वर्तते । ' पयः सरः भेषजम् ' इत्युदकनामसु पठितम् ( निघ० १ । १२ ) । तत्रैवं सति यानि तान्युदकानि सरांसि पञ्चदशाहःसंभृतानि साकमवस्थितानि भवन्ति

५ तस्यार्थस्योपपत्तिः चन्द्रमसि तानि सूर्य इन्द्रो रश्मिभिरपरपक्षे [2] पिबतीत्येवमेतत्सर्वमुपपद्यत एव नैरुक्तपक्षे ।

' अध्रिगुः ' ( ४३ ) इत्यनवगतमनेकार्थं च [3] ।

'अध्रिगुर्मन्त्रो [4] भवति ' । आह । किं कारणम् । उच्यते । 'गवि अविकृतत्वात् ' । सोऽयमधिगुः सन् अध्रिगुरि-

१० अध्रिगुर्मन्त्रो भवति त्यर्थः । गवि योऽधिकृतो मन्त्रः सोऽध्रिगुः । ' अपि वा ' गोरनित्यत्वात् ' प्रैशासनमेव ' [5] एतत् ' अभिप्रेतं स्यात् ' । अध्रिगुर्नाम कश्चिदस्ति दैव्यः शमिता । तस्यैतत्प्रशासनं स्यात् । संप्रेषणमित्यर्थः । किं

१५ अध्रिगुशब्देन प्रशासनमभिप्रेतं स्यात् कारणम् । ' तच्छब्दवत्त्वात् ' । तथा ह्यस्य मन्त्रस्याध्रिगुशब्दवत्त्वम् । त[6]देतदुपपद्यते तद्वतेनैवनिगमेन ' अध्रिगो शमीध्वम् ' इति [ मैत्रा० सं० ४ । १३ । ४ ] । हे अध्रिगो सर्व एव यूयं शमीध्वं शमयध्वमेनं पशुमिति । ' दैव्याः श[7]मितार उत मनुष्या आरभध्वमुपनयत मेध्यादुर

२० आशासाना मेधपत[8]ये मेधं [9] प्रास्मा अग्निं भरत स्तृणीत बर्हिरन्वेनं माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्य उदीचीनाँ अस्य पदो निधत्तात्सूर्यं चक्षुर्गमयताद्वातं प्राणमन्ववसृजतादन्तरिक्षमसुं पृथिवीँ शरीरमेकधास्य त्वचमाच्छयतात्पुरा नाभ्या अपिशसो वपामुत्खिदतादन्तरेवोष्माणँ वारयतात्श्येनमस्य वक्षः कृणुतात्प्रशसा बाहू शला दोषणी कश्यपेवाँसा-

२५ छिद्रे श्रोणी कवषोरू स्त्रेकपर्णाष्ठीवन्ता षड्विँशतिरस्य वङ्क्रयस्ता अनुष्ठ्यो-

---

१ क. ख. व. झ. ट. ठ. ड. ' ह ' नास्ति. २ क. ख. च. °पक्षे । ६ । अध्रि'. ३ ग. च । १२ । अध्रि°. ४ च. °र्मन्त्रो हि भव°. ५ ग. ज. प्रशंसानामैत'. ६ क. ख. घ. झ. ट. ठ. ड. °त्वं यत्तदेतदुक्तमुप'; च. त्वं तं ( यत्त ) देतदु॰प° क्तमु. ७ ग. च. ज. °शमितार आशासाना°; व. ट. ठ. ड. शमितार ( घ. ट. शशितार ) आरभ°. ८ क. ख. घ. ट. ठ. ड. मेधपतिभ्यां. ९ ग. च. ख. घ. ट. ठ. ड. मेधं नेद्दस्तोक्के°.

च्यावयताद्गात्रं गात्रमस्यानूनं कृणुतादूवध्यगोहं पार्थिवं खनतादस्ना रक्षः सँसृजताद्वनिष्ठुमस्य मा राविष्टोरूकं मन्यमाना नेद्वस्तोके तनये रविता रवैदध्रिगो शमीध्वँ सुशमि शमीध्वँ शमीध्वम-

अध्रिगुप्रैषः

ध्रिगो' [ मैत्रा० सं० ४ । १३ । ४ ] इति प्रैषः । हे दैव्याः शमितारः अपि च हे मनुष्याः आरभध्वम् । उपनयत च एनं पशुमेता मेध्याः दुरः । यज्ञगृहद्वार इत्यर्थः । आशासानाः प्रार्थयमाना मेधपतयेऽस्मै यजमानाय मेधम् एनं पशुं शमयितुम् । किंच । प्रास्मा अग्निं भरत । प्रभरतास्मै पशवे संज्ञप्यमानाय अग्निम् । उल्मुकं पुरस्ताद्धारयतेत्यर्थः । किंच । स्तृणीत बर्हिः । अस्मै पशवे संज्ञप्यमानाय उपाकरणमेतं दर्भमपास्यतेत्यर्थः । किंच । अन्वेनं माता मन्यताम् । एनं संज्ञप्यमानं माता अनुमन्यताम् । अनुमन्यतां पिता । भ्राता सगर्भ्यः अनुमन्यताम् । सहगर्भ्यः । सहोदर इत्यर्थः । अनुमन्यतां चैनं सखा सयूथ्यः सहयूथचारी । अनुमतमेनमेभिः संज्ञपयतेत्यभिप्रायः । किंच । उदीचीनाँ अस्य पदो निधत्तात् । उदक्पादमेनं संज्ञपयतेत्यर्थः । किंच । सूर्यप्रभवमस्य चक्षुस्तत्सूर्यमेव गमयतात् । वातमनु प्राणमनुसृजत । असुं शरीरविधारकं प्राणमन्तरिक्षमन्ववसृजत । दिशः श्रोत्रमन्ववसृजत । किंच । उपाकरणेन दर्भेण सहैं साकमेकधास्य त्वचमाच्छयतात् । आच्छयतेत्यर्थः । ततोऽनन्तरमेव पुरा नाभ्या अपिशसः तस्माच्छसः प्रशस्तात्प्रदेशात् वपामुत्खिदतात् उद्धरत । किंच । अन्तरेव अभ्यन्तरत एवोष्माणमस्य शम्यमानस्य वारयध्वात् । श्येनमस्य श्येनाकृति[12] श्येनवर्णं वा पाकेन वक्ष उरः कुरुत । प्रशसा बाहू

---

१ ग. च. ज. घ. ट. ठ. ड. स्वच्छमितारः । अध्रिगो शमीध्वमिति प्रैषः°. २ क. ख. ग. घ. ट. ठ. ड. ज. मेधपतिभ्यामाभ्यामग्नीषोमाभ्यां मेध°; च. मेधपतयेऽस्मै यजमानाय मेध° तिभ्यामाभ्यामग्नीषोमाभ्यां. ३ क. ख. घ. झ. ट. ठ. ड. मेनं; च. मेतं° नं. ४ च. सहपूर्वचारी° यूथ. ५ च. °चीनां° नान. ६ क. ख. घ. झ. ट. ठ. ड. °क्षुस्ततः सू°. ७ क. ख. घ. झ. ट. ठ. ड. °मन्ववसृजत; च. मनुसृज° न्वव. ८ क. ख. घ. झ. ट. ठ. ड. °मन्वत्रसृ°; च. °मन्ववसृ° न्त्र. ९ घ. झ. ट. ठ. ड. °सृजत । शरीरं यागोपयुक्ताच्छेषं पृथिवीमन्ववसृजत । किंच; च. °सृजत किंच °शरीरं...सृजत. १० ग. ज. घ. झ. ट. 'सह' नास्ति. ११ ग. ज. °मुत्खिदतन; च. °मुत्खिदन्त° ता. १२ घ. झ. ट. ठ. ड. °कृतिं.

शला दोषणी इति बाह्वोरेवैतदभिधानमवयवशः । अत्र बाहुशब्दः प्राये-
णार्वागंसयोर्वर्तते । आ अरत्निसंधितो[1] बाहू प्रशस्तौ कुरुत । स्वधित्या-
कृती इत्येके । शलाशब्दोऽरत्न्योरेव वर्तते । तौ च शलादोषणी व्रणसमर्थौ
प्रशस्तौ कुरुत । शलाकाकृती निर्मांसौ कुरुतेत्येके । 'श्येनशलाकश्यपा-
५ कवषास्रेकपर्णेष्वाकृतिविशेषवचनं[2] प्रसिद्धिसामर्थ्यात्[3]' इति हि नैयायिकाः
पठन्ति ( जै० न्या० ९ । ६ ) । कश्यपेवांसा कच्छपा-
विवांसौ कुरुत[4] । अच्छिन्द्रे श्रोणी अविकले कुरुत । कवषोरू[5]
पिण्डिकाख्ये[6] अच्छिद्रे एव कुरुत । स्रेकपर्णा[7] करवीरपत्राणीव
अष्ठीवन्ता अस्थिसंयुक्तौ[8] । या एता वङ्क्रयः पर्शवस्ता अनुष्ठया अनुष्ठा-
१० नक्रियया प्रच्यावनसमर्थयैव प्रच्यावयत[9] । किंच । गात्रं गात्रमस्य[10] अवि-
कलं कुरुत[11] । किंच । 'ऊवध्यगोहम्' ऊवध्यं यः पार्थिवो गर्तः
प्रसृष्टं[12] संवृणोति तमुत्तरतश्चात्वालस्य खनत[13] । अस्ना रक्षः संसृजतात् ।
असृग्भाञ्जि रक्षांसि कुरुतेत्यर्थः । किंच । वनिष्टुं[14] दृष्ट्वा मां राविष्ट मा
शब्दं करिष्यथ उरूकं[15] मन्यमाना उलूकवत्तं वनिष्टुं[14] मन्यमानाः । उलूको[16]
१५ हि भयंकरत्वात्तं[17] दृष्ट्वा जनैर्विराव्यते[18]ऽयमुलूकोऽयमुलूक इति । तदाशङ्क्यो-

---

१ क. ख. घ ट. ठ. ड. °संधानौ; ग. ज. संधिनौ; च. संधितो° धानौ. २ ग. ज. °स्रेकवर्गे°; च. °वर्षे(षा) स्रि (स्रे) कवे(प)र्गे'. ३ क. ख. घ. झ. ठ. ड. °चनं सिद्धसाधनं स्यादिति°; च. प्रसिद्धिसामर्थ्यात्° सिद्धसाधनं स्या; ट. सिद्धसाधनं स्यात् प्रसिद्धिसामर्थ्या°. ४ क. ख. ग. ज. घ. ट. ठ. ड. °कुरुत । किंच । अच्छिद्रे°
२० ५ क. ख. ग. ज. घ. ट. ट. ड. कवषोरू कवषा ( ग. ज. 'कवषा' नास्ति ) कवषे गतिसमर्थे ऊरू कुरुत । कवतिर्गत्यर्थः । च्यवते कवते गवते इति गतिकर्मसु पाठात् । पिण्डि°; च. कवषोरू-पिण्डि० कवषा कवषे गतिसमर्थे ऊरू कुरुत । कवतिर्गत्यर्थः. ६ क. ख. ग. ज. घ. ट. ठ. ड. पिण्डिकाख्ये ऊरू अच्छि°; च. पिण्डिकाख्ये-अच्छि° ऊरू. ७ च. °पर्णा०र्णे. ८ क. ख. घ. ट. ठ. ड. संयुक्तौ
२५ कुरुत । षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठयो ( ठ. ड. अनुष्ठयो ) च्यावयतात् । या:°; ग. ज. संयुक्ता. ९ घ. झ. ट. ठ. ड. प्रच्यावयतात् । प्रच्या°. १० क. ख. घ. ट. ठ. ड. °प्रस्यानूनं अविक°; ग. ज. मस्या । अविक°; च °मस्या अविक. ११ क. ख. घ. झ. ट. ठ. ड. कृणुतात् कुरुत. १२ घ. झ. ट. ठ. ड. प्रवृद्धं अवशिष्टं गूहति संवृणो°; च. प्रसृष्टं संवृणो° वृद्धं अवशिष्टं गूहति. १३ घ. झ. ट. ठ. ड. खनतात् खनत. १४ क. ख. ट. वनिष्टुं; च. वनिष्टु°ष्टुं. १५ ग. ज. उरुकं. १६ ग. ज. अलूको; च. अलूको° ड. १७ क. ख. घ. झ. ट. ठ. ड. 'तं' नास्ति.
३२ १८ ग. ज. विराव्यते.

लूकसारूप्याद्वनिष्ठोर्मा[1] राविष्टेत्युच्यते[2]। नेद्वः युष्माकं नैतत्कर्म[3] रवितृवत्पुत्रेषु च[4] पौत्रेषु च[5] स्यात्। अरवणशीलं वः[6] पुत्रपौत्रं भविष्यतीत्य[7]भिप्रायः। हे अध्रिगो शमीध्वमेतं[8] पशुम्। सुशमि शमीध्वम्। यथा चायं सुशमितः स्यात्तथैनं शमीध्वम्। हे अध्रिगो मा प्रमादं करिष्यथ। एवमेतस्मिन् दैव्यस्य शमितुरध्रिगोः प्रशासनमित्येतदुपपद्यते तस्य संबोध्यत्वात्। अस्मिंश्च प्रैषे यथासंभवं प्रशासनानि द्रष्टव्यानि 'प्रास्मा अग्निं भरत' इत्येवमादीनि[9]।

अस्मिन्प्रैषे बहूनि प्रशासनानि

'अग्निरप्यध्रिगुरुच्यते'[10]। अधृतगमनोऽसावित्यध्रिगुः। 'तुभ्यं[11] श्चोतन्त्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्य। कविशस्तो बृहता भानुनागा हव्या जुषस्व मेधिर' (ऋ० सं० ३। २१। ४)॥

अग्निरप्यध्रिगुः

गाथिनः कुशिकपुत्रस्यार्षम्[12]। स्तोकसूक्ते विनियुक्ता [आश्व० श्रौ० ३। ४]। हे[13] अध्रिगो अधृतगमन हे शचीवः कर्मवन् तुभ्यं त्वदर्थमेते स्तोकाः बिन्दवो वपामतीत्य श्चोतन्ति क्षरन्ति मेदसश्च घृतस्य च। यस्य तवैतद्वर्तते स त्वं कविशस्तः प्रक्षारणे[14] कविभिरभिष्टुतो बृहता महता भानुना भासा आगाः आगच्छ। आगत्य चेमानि हव्या[15] हवींषि

१ क. ख. ग. ज. ट. वनिष्ठोर्मा°. २ क. ख. घ. झ. ट. ड. °च्यते। हे शमितारः नेद्वस्तोके तनये रविता रवच्छमितारः। नैत°; च °च्यते। ˅ नैत° नेद्वः (हे शमितारः ने°); ग. °च्यते। नेद्वरवितृ°; ज. °च्यते। नेमवरवितृ°. ३ क. ख. घ. झ. ट. ठ. ड. °त्कर्म कुर्वतां रवि°; च. °त्कर्म˅रवि° कुर्वतां. ४ क. ख. घ. झ. ट. ठ. ड रवितारवत्. ५ क. ख. घ. झ. ट. ठ. ड. 'च' नास्ति; च. चै. ६ क. ख. घ. झ. ट. ड. वः; च. चै° वः. ७ च. भवतीति भवि°. ८ क. ख. घ. झ. ट. ठ. ड. °मेनं; च. °मेतं° नं. ९ ग. ज. प्रास्माग्निं; च. प्रास्मा˅ग्निं° अ. १० ग. °ध्रिगुः। ४७। तुभ्यं°. ११ ग. ज. ध्रिगो शचीवः स्तोकासो। गाथि°; घ. ट. °ध्रिगो॰जुषस्व मेधिर. १२ घ. झ. ट. ठ. ड. °र्षम्। विराड्रूपा त्रिष्टुप्। स्तो°; च. °स्यार्षम्। स्तोक॰विराड्रूपा त्रिष्टुप्. १३ क. ख. घ. झ. ट. ठ. ड. 'हे' नास्ति १४ क. ख. घ. ट. प्रक्षरणे प्रक्षरणे कवि°; ठ. ड. प्रक्षरणे; च. प्रक्षा (क्ष) रणे˅कवि° प्रक्षरणे. १५ घ. झ. ट. ठ. ड. हव्यानि; च. हव्या˅ हवीं॰ नि.

यानि स्तोकाख्यानि त्वदर्थमेव क्षरन्ति तानि जुषस्व संसेवस्व हे मेधिर । यज्ञवन्नित्यर्थः । एवमत्र ' अध्रिगो ' इत्यग्निरुक्तः । तस्मादग्नेरध्रिगुत्वमुपपद्यते ।

' इन्द्रोऽप्यध्रिगुरुच्यते ' । तस्यापि न कश्चिद्गमनधारयितास्ति[1] ।

५ इन्द्रोऽप्यध्रिगुः ' अस्मा इदु प्र तवसे तुराय[2] प्रयो न हर्मि स्तोमं माहिनाय । ऋचीषमायाध्रिगव ओहमिन्द्राय ब्रह्माणि राततमा ( ऋ० सं० १ । ६१ । १ ) ॥ नोधस इयमार्षम्[3] । अहीनसूक्ते शस्यते (आश्व० श्रौ० ७ । ४) । अस्मै इन्द्राय प्रहर्मि प्रहरामि[4] स्तोमं प्रयो न प्रय इव । अन्नमिव यः

१० स्तोमस्तृप्तिं करोति तं प्रहरामि[5] । तवसे महते तुराय त्वरमाणाय । माहिनाय मंहनाय दात्रे । किंच । ऋचीषमाय ऋक्समाय[6] स्तुतिसमाय । यावती स्तुतिरुदीर्यते तावानेवासौ भवति माहाभाग्यात् । अध्रिगवे अधृतगमनायाप्रतिहतगमनाय । एवंलक्षणायेन्द्राय ओहम् अहं प्रापयामि ब्रह्माणि हवींषि राततमा दातव्यतमानि । यान्यसावेवार्हति[7] तानीत्यभि-

१५ प्रायः[8] । एवमस्मिन्नध्रिगुशब्द इन्द्रविशेषणत्वादिन्द्राभिधानमित्युपपद्यते ।

' आङ्गूषः ' ( ४४ ) इत्यनवगतम् । ' स्तोमः ' अभिधेयः । ' आघोषः ' इति शब्दसमाधिः[9] । ' एनाङ्गूषेण वयमिन्द्रवन्तोऽभि[10] ष्याम वृजने सर्ववीराः । तन्नो मित्रो वरुणो

'आङ्गूषः' इत्यस्य मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः "

२० ( ऋ० सं० १ । १०५ । १९ ) ॥ त्रिष्टुप् । कुत्सस्य त्रितस्य वा कूपे पतितस्यार्षम् । वैश्वदेवस्य चरोर्भ्रातृव्यवतो याज्यैषा । ( मैत्रा० सं० २ । ३ । २ ॥ ४ । १२ । ४ ) अनेन[11] वयम् आघोषणीयेन स्तोमेन इन्द्रवन्त इन्द्रसंयुक्ताः स्याम ।

---

१ ग. °तास्ति । ४८ । अस्मा°. २ ग. ज. तुराय । नोध°; व. ट. तुराय॰

२५ राततमा. ३ व. ट. ट. ड. °मार्षम् । त्रिष्टुप् । अही°. ४ क. ख. व. ट. ठ. ड. प्रभरामि; च. प्रहरामि° भ. ५ क. ख. घ. झ. ट. ठ. ड. ग. प्रभरामि; च. प्रहरामि° भ. ६ च. ऋक्सामाय. ७ घ. झ. ट. ठ. ड. यानि यान्य°. ८ ग. तान्यतानि इत्य°; ज. नान्यतानि इत्य°; च. तानीत्य॰ नान्य इ; व. झ. ट. ठ. ड. नान्य इत्य°. ९ ग. °माधिः ।४९। एना°. १० ग. ज. °द्रवन्तोऽभि ष्याम । त्रिष्टु°;

३० घ. ट. °द्रवन्तो॰पृथिवी उत द्यौः. ११ ठ. ड. एनाङ्गूषेण अनेन°.

वयं च ततो विश्वे सर्व एवानवखण्डिताः सन्तः[1] सर्वान् भ्रातृव्यानभिभ[2]-वेम[3] । तदेतन्नः सर्वमपि मित्रो वरुणश्च मामहन्तां पुनःपुनर्महयन्तां[4] पूज-यन्तु । अदितिश्च पूजयतु । सिन्धुश्च पूजयतु । पृथिवी च पूजयतु । उत द्यौः पूजयत्वित्येतदेवानुवर्तते । एवमत्र स्तोमोऽयमाङ्गूषशब्देनोक्तः शब्दसारूप्यादर्थोपपत्तेश्च[5] ।

'आपान्तमन्युः' ( ४५ ) इत्यनवगतं पक्षेण चानेकार्थम् । 'आपा-तितमन्युः' इत्यवगमः ॥ ११ ॥[6]

---

आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी । सोमो विश्वान्यतसावनानि नार्वागिन्द्रं प्रतिमानानि देभुः ( ऋ० सं० १० । ८९ । ५ ) ॥ आपातितमन्युस्तृप्रप्रहारी क्षिप्रप्रहारी[7] सृप्रप्रहारी सोमो वेन्द्रो वा धुनिर्धूनोतेः शिमीति कर्मनाम शमयतेर्वा शक्नोतेर्वर्जीषी सोमो यत्सोमस्य पूयमानस्यातिरिच्यते तदृजीष-मपार्जितं भवति तेनर्जीषी सोमोऽथाप्यैन्द्रो निगमो भवत्यृजीषी[8] वज्रीति हर्योरस्य स भागो धानाश्चेति धाना भ्राष्ट्रे हिता भवन्ति[9] फले हिता भवन्तीति वा[10] बब्धां ते हरी धाना उप ऋजीषं जिघ्र-तामित्यपि निगमो भवत्यादिनाभ्यासेनोपहितेनोपधामादत्ते बभ-स्तिरत्तिकर्मा सोमः सर्वाण्यतसानि वनानि नार्वागिन्द्रं प्रतिमा-नानि दभ्नुवन्ति यैरेनं प्रतिमिमते नैनं तानि दभ्नुवन्त्यर्वागेवैनम-प्राप्य विनश्यन्तीतीन्द्रप्रधानेत्येके नैघण्टुकं सोमकर्मोभयप्रधाने-

---

१ घ. झ. ट. ठ. ड. सन्तः संग्रामे सर्वान्; च. सन्तः॰ सर्वान्॰ संग्रामे. २ च. झ. ट. ठ. ड. ॰व्यानभिष्याम अभिभ॰; च. ॰व्यानभि॰भ॰ ष्याम अभि. ३ म. ज. ॰वेम जितीव (ज. ज्ञितीऊ) इत्येव गमनमात्रेणैव तदे॰. ४ च. पुनर्मह॰र्म. ५ क. ख. ॰पत्तेश्च । ७ (११) । आपा॰; च. अपोन्त ॰आपा; ज. झ. अपान्त; ठ. ड. ॰पत्तेश्च । इति निरुक्तटीकायां पञ्चमाध्याये एकादशः खण्डः । आपा॰. ६ ग. ९३/५०. ७ छ. त. द. 'क्षिप्रप्रहारी सृप्रप्रहारी' नास्ति. ८ छ. त. द. भवति ऋजीषी वज्रीति । हर्यो॰. ९ छ. त. द. भवन्ति । फले॰. १० छ. त. द. वा । बब्धां॰.

त्यपरं श्मशाशु अश्नुत इति वा श्माश्रुत इति वा । अवं श्मशा रुधद्वाः । अवारुधच्छ्मशा वारिति ॥ १२ ॥

## इति पञ्चमाध्यायस्य द्वितीयः पादः ।

---

५ 'आपान्तमन्युः' इत्यस्य

आपान्तमन्युरिति । वैश्वामित्रस्य रेणोरियमार्षम् । त्रिष्टुप् । सूर्यस्तुत्येकाहे निष्केवल्ये विनियुक्ता ( आश्व० श्रौ० ९ । ८ ) । आपादितदीप्तिरु- त्पादितमन्युर्वा शत्रुभिः संग्रामे तृपलप्रभर्मा तृप्रप्रहारी तप्तप्रहारी क्षिप्रप्र- हारी वा सोमो वेन्द्रो वा धुनिः धूनयिता कम्पयिता शत्रूणां पात्राणां वा १० शिमीवान् स्वाधिकारविनियतेन कर्मणा कर्मवान् शरुमान् हिंसावान् ।

क ऋजीषी

ऋजीषी यदि सोमोऽभिप्रेतस्तस्य ऋजीषित्वमुप- पद्यते । अथेन्द्रोऽभिप्रेतस्तस्य हर्योरश्वयोः ऋजीषं- भाग इत्यनयापेक्षया ऋजीषित्वम् । एवमयमर्धर्चोऽ- स्यै सोमस्येन्द्रस्य वा । यस्मिंस्तु पक्षे सौम्य एषोऽर्धर्चस्तस्मिन् पक्षेऽयं तृतीयः १५ पाद एवं सोमेनाभिसंबन्धयितव्यः । य एवंगुणयुक्तः सोमः स एतानि सर्वाणि अतसा अनुपक्षीणानि वनानि उदकानीतराणि वा वनस्पत्याख्यानि स्वेन महिम्ना व्याप्नोति । स हि तेषामधिपतिः । एवमेते त्रयोऽपि पादाः

आद्यास्त्रयः पादाः सौम्या ऐन्द्रा वा चतुर्थ- २० स्त्वैन्द्र एव

सौम्या भवन्ति । उत्तर ऐन्द्र एव 'नार्वागिन्द्रं प्रति- मानानि देभुः' इति । नैनमिन्द्रं प्रतिमानानि । यैः प्रतिमीयते स्तोत्रा नैनं तानि दम्नुवन्ति नाभि- भवितुं शक्नुवन्ति । किं तर्हि । अर्वागेव तानि ऊना- न्येव तस्मादिन्द्राद्भूत्वा तमिन्द्रमप्राप्यैव विनश्यन्ति । नोपमार्थं कुर्वन्ति । स हि तेषां विनाशः । एवमेष पाद ऐन्द्रः । एवमुभयप्रधानत्वमस्या ऋचः ।

---

१ क. ख. ८ ( १२ ); छ. त. १४; द. ८. २ ङ. थ. ध. 'इति०पादः' २५ नास्ति; छ. द्वितीयः पादः; त. पञ्चमाध्याये द्वितीयः पादः; द. इति नैरुक्तस्य पञ्च°. ३ च. ड. अपा°. ४ च. ठ. ड. विश्वा°. ५ च. अपा°; ठ. ड. आपा- तित°. ६ च. तृप्रहारी' क्षिप्र; ट. तृप्र° क्षि. ७ ठ. ड. तृप्तप्र°. ८ व. झ. ट. ठ. ड. 'क्षिप्रप्रहारी' नास्ति; च. क्षिप्रप्रहारी वा. ९ व. झ. ट. ठ. ड. विनिहितेन; व. विनियि° हि. १० ग. ऋजीषीत्वं. ११ ग. ज. ऋजीषं भा°. १२ क. ख. व. झ. ट. ठ. ड. 'अस्य' नास्ति. १३ व. झ. ट. ठ. ड. अस्मिन्; च. तस्मिन्° अ. १४ ३१ व. झ. ट. ठ. ड. अतसानि. १५ क. ख. ध. झ. ट. ठ. ड. °वा वनानि वनस°.

अथवैवमन्यथास्या ऋच उभयप्रधानत्वम् । द्वौ प्रथमौ पादावैन्द्रत्वेन व्याख्यायेते । तृतीयपादमुत्कृष्य चतुर्थः पाद आद्याभ्यामभिसंबन्धयितव्यः ।

**अथवास्या ऋच एवमुभयप्रधानत्वम्**

योऽयमेवंगुणविशिष्ट इन्द्र आपादितमन्युस्तृप्रप्रहारी धुनिः शिमीवान् शरुमान् ऋजीषी च तमेतमिन्द्रमेवंप्रभावं न प्रतिमानानि दभ्नुवन्ति । किं तर्हि । अर्वागेवैनमप्राप्य मानानि विनश्यन्ति । एवमेते त्रय ऐन्द्राः पादा द्वावाद्यौ चतुर्थश्च । अयं तृतीयः सौम्यः 'सोमो विश्वान्यतसा वनानि' इति । यः सोमः सर्वाण्यतसानि वनानि महिम्ना व्याप्नोति यं च[3]वं न प्रतिमानानि दभ्नुवन्ति तौ सोमेन्द्राविदं नाम कुरुतामित्याशीर्योज्या ।

'एके' पुनः 'इन्द्रप्रधाना' एवेयमृक् 'इति' एवं मन्यन्ते 'नैघण्टुकम्' अस्यां 'सोमकर्म' इति । तेषामियं योजना । य

**'इन्द्रप्रधाना' इत्येके**

इन्द्र आपादितमन्युस्तृप्रप्रहारी धुनिः शिमीवान् शरुमान् ऋजीषी च स सोम इवातसानि वनानि इदं सर्वं व्याप्नोति । न चैनं प्रतिमानानि दभ्नुवन्ति । किं तर्हि । एनमिन्द्रमप्राप्यैव विनश्यन्ति । एवमिन्द्रप्रधानैव भवति । एवमस्या ऋचस्त्रिधा समासार्थो बोद्धव्यः । तथाहि भाष्यकारेण दर्शितम् । सोमस्य ऋजीषित्वोपपादनार्थमाह

**सोमस्य कथमृजीषित्वम्**

भाष्यकारः । 'यत्सोमस्य पूयमानस्यातिरिच्यते' रसादन्यदसारमतिरिच्यते 'तदृजीषम्' इत्युच्यते । तद्धि 'अपा[6]र्जितं भवति' किण्वभूतत्वात् । 'तेन' संयोगात् 'ऋजीषी सोमः' उच्यते ।

'अथ' यस्मिन्पक्षे 'ऐन्द्रः' एवोऽर्धर्चो भवति तस्मिन्पक्षे इन्द्रस्य ऋजीषित्वाभिधायक एव 'मन्त्रो भवति' । इन्द्रस्य ऋजीषित्वमनुपपन्नं मन्यमानो निगमं पठति । 'ऋजीषी वज्री वृषभस्तुराषाट्छुष्मी राजा

---

१ क. ख. घ. झ. ट. ठ. ड. तमेनामि°. २ क. ख. घ. झ. ट. ठ. ड. वर्तमा°; च. प्राप्य॰माना° वर्त. ३ क. ख. ग. ज. घ. झ. ट. ठ. ड. चेन्द्रं; च. चैवं° चेन्द्रं. ४ क. ख. च. शमी°. ५ च. एवमि°. ६ क. ख. घ. झ. ट. ठ. ड. °र्जितं अपवर्जितं भवति; च. °र्जितं॰भ° अपवर्जितं. ७ घ. झ. ट. ठ. ड. °ऐन्द्रोऽर्धर्चो भवत्येव एतस्मि°. ८ ग. पठति ।५१। ऋजी°. ९ ग. ज. वृषभस्तुराषाट् । अत्रे°; घ. ट. वृषभः० सवने मत्सदिन्द्रः.

इन्द्रस्य ऋजीषित्वे निगमः

वृत्रहा सोमपावा । युक्त्वा हरिभ्यामुप यासदर्वाङ् माध्यन्दिने सवने मत्सदिन्द्रः ' ( ऋ० सं० ५ । ४० । ४ ) ॥ अत्रेरियमार्षम् । त्रिष्टुप् । ऋजीषेण तद्वान् ऋजीषी वज्रेण तद्वान् वज्री वृषभः वर्षिता तुराषाट् तूर्णमभिभविता शत्रूणां शुष्मी बलवान् राजा अधिपतिः वृत्रहा शत्रुहा सोमपावा । सोमस्य पातेत्यर्थः । य एवंगुणयुक्त इन्द्रः स युक्त्वा हरिभ्याम् अश्वाभ्यां रथं तमधिरुह्य उपयासत् उपागच्छत् अर्वाक् अस्मानाभिमुख्येन माध्यन्दिने सवने एतस्मिन् प्राप्ते । उपागम्य च मत्सत् । माद्यतामस्मत्प्रत्तेन सोमेनेत्यर्थः । एवमेतस्मिन्मन्त्रे ऋजीषीन्द्र उक्तः । तत्पुनरेतदृजीषित्वमिन्द्रस्य न विज्ञायते केन कारणेनेत्यतस्तदुपपादनार्थमाह ' हर्योरस्य स भागः ' इति । हर्योरेवाश्वयोरस्येन्द्रस्य स

इन्द्रस्य ऋजीषित्वे कारणम् । लक्षितलक्षणयेन्द्रस्य ऋजीषित्वम्

भागो यदृजीषम् । ' धानाश्च ' । प्रसङ्गादत्र धाना उक्ताः । तदुक्तं ' हर्योर्धाना हरिवतीः ' ( मैत्रा० सं० १ । ३ । ३० ) इति । तेन हरिसङ्गेन ऋजीषेण लक्षितलक्षणया वृत्त्येन्द्रस्य ऋजीषित्वम् । आह । ' धानाः ' कस्मात् । उच्यते । ता हि ' भ्राष्ट्रे हिता ' निहिताः ' भवन्ति ' । अथ ' वा ' भ्राष्ट्रादवतार्य ' फले ' फलके निहिताः ' भवन्ति ' । अथवा खले हिता भवन्ति । तत्र हि ता विसार्यन्तेऽतिदाहभयात् । यथा ऋजीषं धानाश्च हर्योरश्वयोरिन्द्रस्य च भागस्तथैष ' निगमो बब्धां ते हरी धाना उप ऋजीषं जिघ्रतामिति ' । अत्र ' बब्धाम् ' इत्येतस्मिन् पदे य एषः ' बभस्तिः ' धातुः ' अत्तिकर्मा ' भक्षणार्थः ' स आदिनाभ्यासेनोपहितेनो-

' बब्धाम् ' इति क्रियारूपस्योपपत्तिः

पधामादत्ते ' । आदावभ्यासेनोपश्लेषितेनोपधामादत्ते । लकारण निमित्तभूतेनोपधामकारमादत्ते लुम्पति । ' घसिभसोर्हलि च ' ( पा० ६ ।

१ ग. ज. प्रक [ ज. का ] रणेने°; च कारणेनिति यत° नेत्य. २ ग. जं. ' हर्योरस्य स भाग इति ' नास्ति. ३ च. भागो धाना हर्यो' ग इति. ४ क. ख. घ. झ. ट. ट. ड. °संयोगेन; च. °सं-गेन° यो. ५ घ. झ. ट. ठ. ड. °भवन्ति । हिता भवन्ति । तत्र°; च. अथवा खले हिता भवन्ति. ६ ग. ज. अदा°; च. अदा° आ.

४ । १०० ) इत्यकारलोपः । ततो धत्वे[1] जश्त्वे च कृते बब्धामित्येतद्रूपं भवति[2] । ' धानासोमानामिन्द्राद्धि[3] च पिब च बब्धां ते हरी धाना उप ऋजीषं जिघ्रतामा रथचर्षणे[4] सिञ्चस्व । यत्त्वा पृच्छादृषन् पत्नी कामीमदथा[5] इत्यस्मिन् सुन्वति यजमाने तस्मै किमरास्थाः सुष्ठु सुवीर्यं यज्ञस्यागुरं[6] उद्वृचं[7] यद्यदचीकमतोतो[8] तत्तथाभूद्धोतर्यज' (कुन्तापाध्याये प्रैषः ६६ ) । हारियोजनाख्यायं प्रैषः ।

अस्मिन्निगमे ऋजीषं धानाश्च हर्योरश्वयोरिन्द्रस्य च भागः

हे इन्द्र धानासोमानामेतेषामद्धि भक्षय । पिब चास्य हारियोजनस्य सोमस्य । किंच । बब्धां भक्षयेतां ते तव एतावश्वौ हरी एता[9] धानाः । उप ऋजीषं जिघ्रताम् । उपजिघ्रतामृजीषं च । आ रथचर्षणे सिञ्चस्व जठरे सोममेतं[10] हे रथचर्षणे रथगमन[11] । किंच । यत्त्वा पृच्छात् यदि त्वां पृच्छेद्गृहमनुप्राप्तमस्मद्यज्ञात् हे वृषन् वर्षितः पत्नी कामीमदथाः क पीतवांस्त्वम् अतो ब्रूयास्त्वमस्य यजमानस्य नाम गृहीत्वा अस्मिन् सुन्वति सोममभिषुण्वति यजमाने । ततः सा यदि पुनरपि पृच्छेत्तस्मै परितुष्टस्त्वं किमरास्थाः किं दत्तवानसि ततस्त्वं तां प्रति ब्रूयाः । सुष्ठु[12] सुवीर्यं सुष्ठु शोभनं[13] वीर्यमहमस्मै दत्तवान् । यज्ञस्य आगुरं[14] उद्वृचम्[15] । यदसावनेन यज्ञेन आगूर्णवान् प्रार्थितवानभूत्तत्सर्वमहमदां यज्ञस्य[16] चोत्कृष्टां रुचं दीप्तिमहमदामस्मै । किं बहुना । यद्यदचीकमत यद्यत्कामितवानयं यजमानः फलमस्य कर्मणः सर्वमेव तत्तथा[17]प्रार्थितमेवाभूत् । न कश्चिदप्यस्य मृषा कामो बभूवेत्यभिप्रायः । हे होतस्त्वमपि योऽयमेवंगुणविशिष्ट इन्द्रस्तं सहहरिभ्यां यजेति । एवमत्र ' हरी उपजिघ्रताम् ' इत्येतस्माद्विशेषलिङ्गात् ऋजीषित्वमश्वयोरश्वयोगाच्च ऋजीषित्वं लक्षितलक्षणयेन्द्रस्योपपद्यते ।

---

१ क. ख. घ. झ. ट. ठ. ड. धत्वे कृते जश्त्वे कृते. २ ग. भवति । ५२ । धानाः°. ३ क. ख. धानाः सो°. ४ च. चर्म्मणे ०र्ष. ५ घ. ट. ठ. ड. कामी. ६ च. °स्यागुरं उ° र; झ. स्यागुरु. ७ ग. ज. उदृचं; च. उद्वृचं° द्रु; च. ट. उदृचमिति वा पाठः. ८ च. °मतोतो°; घ. ट. ठ. ड. °मतोऽतो°. ९ च. एतां(ता) धानां नाः. १० क. ख. घ. झ. ट. ठ. ड. मेनं; च. मेतं° नं. ११ क. ख. घ. झ. ट. ट. ड. °गमन आ सिञ्चस्व । किंच; च. °गमन । किंच° आसिञ्चस्व. १२ घ. झ. ट. ठ. ड. सुष्ठु निःसीमातिशयवत् सुवीर्यं शो°; च. सुष्टु सुवीर्यं सुष्टु शो° निःसीमातिशयवत्. १३ घ. झ. ट. ठ. ड. शोभनवीर्यं. १४ ड. आगुरु. १५ ग. ज. झ. ठ. ड. उद्वृचं; च. उदृचं° द्रु. १६ च. यज्ञस्योचोत्कृ°. १७ च. °थाऽप्रा°.

'श्मशा' (४६) इत्यनवगतम् । 'श्वाशिनी' इत्यवगमः

'श्मशा' इत्यस्यार्थः

'श्माशिनीति वा'। श्वाशिनी शीघ्राशिनी शीघ्रव्यापिनी कुल्या नदी वा । श्माशिनी पुनर्नाडी । सा हि श्म शरीरं व्याप्नोति । एवमेतदिह विगृह्यमाणमनेकार्थमपि भवत्येव । 'कदा वसो

प्रयोगश्च

स्तोत्रं हर्यत आव श्मशा रुधद्वाः । दीर्घं सुतं वाताप्याय' (ऋ० सं० १०।१०५।१)॥

कुत्सपुत्रस्य दुर्मित्रस्यार्षम् । उष्णिक् । ऐन्द्रस्य सूक्तस्य प्रथमैवेयम् । हे वसो वसुमन् इन्द्र कदा कस्मिन् काले स्तोत्रम् एतन्मयोदीरितमस्य यजमानस्य हर्यतः कामान् प्रार्थयतस्त्वामुपरोत्स्यति श्मशेव वाः । कुल्येवोदकं विसर्पमाणं नदी वा । अथवाध्यात्मिकी नाडी शरीराश्रितं रसम् । आह । कतमत्स्तोत्रमिति । उच्यते । यदेतत् दीर्घं सुतं सोमं सत्राख्यं सुतमभिषुतं प्रवर्तते वाताप्याय उदकार्थम् । एवमत्र श्मशेत्येतन्नद्यभिधानं कुल्याभिधानं वा नाड्यभिधानं वा शब्दोपपत्तेरर्थोपपत्तेश्चेति ॥१२॥

दशमस्य द्वितीयः पादः ।

---

**उर्वश्यप्सरा उर्वभ्यश्नुत ऊरुभ्यामश्नुत उरुर्वा वशोऽस्या अप्सरा अप्सारिण्यपि वाप्स इति रूपनामाप्सातेरप्सानीयं भवत्यादर्शनीयं व्यापनीयं वा स्पष्टं दर्शनायेति शाकपूणिर्यदप्स इत्यभक्षस्याप्सो नामेति व्यापिनस्तद्वा भवति रूपवती तदनयात्तमिति वा तदस्यै दत्तमिति वा तस्या दर्शनान्मित्रावरुणयो रेतश्चस्कन्द तदभिवादिन्येषर्ग्भवति ॥ १३ ॥**

---

१ च. श्माशि°. २ ग. 'त्येव ।५३। कदा°. ३ ग. ज. हर्यत आ । कुत्स°; घ. ट. हर्यत० । कुत्स°. ४ क. ख. °प्याय । इति । कु°; च. °प्याय । इति । कु°. ५ घ. ट. ठ. ड. अस्मिन्. ६ क. ख. ग. ज. घ. झ. ट. ट. ड. हर्यतः कामयतः कामा°; च. हर्यतः कामा° कामयतः. ७ क. ख. घ. झ. ट. ठ. ड. नाडीवा; च. नदी वा०नाडी. ८ ग. ज. सोमं सुतं; च सोमं. सुतं ९ घ. झ. ट. ठ. ड. एवमेतत् श्म°. १० क. ख. घ. झ. ट. त्येतन्नाड्यभि°. ११ क. ख. घ. झ. ट. ठ. ड. 'नाड्यभिधानं' नास्ति. १२ क. ख. ८ ( १२ ) । इति निरुक्तवृत्तौ दशमाध्यायस्य द्वि°; ग. १४; ठ. ड. श्चेति । इति दशमाध्यायस्य द्वितीयः पादः। इति निरुक्तटीकायां पञ्चमाध्याये द्वादशः खण्डः; घ. झ. ट. 'श्चेति दशमाध्यायस्य द्वि°; च. ज. अङ्को नास्ति. १३ च. पादः समाप्तः १४ क. ख. १ (१३); छ. त. १५; द. १.

'उर्वशी' ( ४७ ) इत्यनवगतम् । 'अप्सराः' इत्यभिधेयवचनम् ।

'उर्वशी' इत्यस्य-व्युत्पत्तयः

'उर्वभ्यश्नुते' इति व्युत्पत्तिः । उरु महद्यशोऽभिव्याप्नोतीति । अथवा 'ऊरुभ्यां' मैथुने धर्मे पुरुषम् 'अश्नुते' व्याप्नोतीति ऊर्वाशिनी सती उर्वशीत्युच्यते । अथ 'वा उरुः' महान् अस्याः 'वशः' कामः । सेयमुरुवशिनी सती उर्वशीत्युच्यते । एते शब्दसमाधयः । अधुना 'अप्सराः' इत्येतं शब्दं समाख्यानप्रसक्तं निर्ब्रवीति । आह । 'अप्सराः' कस्मात् ।

अप्सरा इत्यस्य च

उच्यते । सा हि 'अप्सारिणी' भवति । अपः प्रति नित्यमेव सरति तत्प्रभवत्वात् । तदेव तस्याः प्रियमुदकं तस्मादप्सराः । अथवा अद्भ्यः सृतेत्यप्सराः । 'अपि वा' एवमप्यन्यथा स्यात् । 'अप्स इति' एतत् 'रूपनामाप्सातेः' प्रतिषेधपूर्वस्य प्सातेः भक्षणार्थस्य । तद्यथा । 'अप्सानीयम्' अनदनीयं 'भवति' । न हि तद्भक्ष्यते । किं तर्हि । 'आदर्शनीयं' तदाभिमुख्येन स्थित्वा द्रष्टव्यमेव भवति चक्षुषा । न पुनर्मुखेन भक्षयितव्यमित्यर्थः । 'व्यापनीयं वा' । व्यापनमर्हति । 'आप्लृ व्याप्तौ' (धा० ५ । १४) । तस्य वा अप्सः । तद्धि नायनेन रश्मिनात्मनः प्रत्ययाधानार्थं व्यापयितव्यं भवति । 'स्पष्टं दर्शनायेति शाकपूणिः' आचार्यो मन्यते । न ह्येतदस्पष्टं दर्शनाय । किं तर्हि । स्पष्टमेवेत्यर्थः । 'यदप्सः इत्यभक्षस्य' । पुरस्तादुक्तम् 'अपि वाप्स इति रूपनामाप्सातेः' । न हि तद्भक्ष्यते । किं तर्हि । दृश्यते तदिति । तत्र 'अभक्षस्य' अप्सशब्दवाच्यत्वप्रख्यापक एष निगमो 'यदेनश्चकृमा वयं यदप्सश्चकृमा वयम्' इति । 'यद् ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये । यदेनश्चकृमा वयं यदप्सश्चकृमा वयम् । यदेकस्यापि धर्मण्येतत्तदवयजामहे स्वाहा' ( काठक सं० ९ । ४ ) इति

अप्स इत्यभक्षस्य

वरुणप्रघासेषु करम्भपात्रहवने पत्नीयजमानयोर्मन्त्रः ( मान० श्रौ० १ । ७ । ४ ) । यद् ग्रामे वयं किंचिदेनश्चकृम यच्चारण्ये यच्च सभायां यच्चेन्द्रिये प्रजनने निमित्तभूते सति यच्चान्यत्रापि क्वचिद् ग्रामादिभ्यो वयमेनश्चकृम कृतवन्तो यच्चाप्सश्चकृम यदभक्ष्यैर्भक्षणं कृतवन्तो वयं किंचित्तत्तदेनोऽनेक-

१ क. ख. च. उर्वा°. २ क. ख. घ. झ. ट. ठ. ड. एता. ३ क. ख. घ. झ. ट. ठ. ड. तद्धचप्सा°; च. तद्यथाऽप्सा° द्धय. ४ च पुनर्भक्ष° मुखेन भ. ५ ग. च. ज. आप्नृ. ६ ग. झ. ट. 'त्यभक्ष्यस्य. ७ च. °भक्षभक्ष° क्ष्य.

प्रकारमेकैकस्याप्यावयोश्चेतसि निमित्तभूतमुत्पन्नं किंचित् यदेकस्यापि धर्मणि यदघं तदनेकप्रकारमेकैकस्यावयोः[1] धर्मणि कर्मणि निमित्तभूतं यच्च सहकृतं यच्च पृथक् कृतं यच्च मानसं यच्च शारीरं तस्य सर्वस्याप्येनसोऽस्माकमवयजनं[2] कृत्वा ततोऽवयजनमसि[3] मरुतां हे हविः करम्भपात्राख्यं[4]।
५ 'प्रघासीन्[5] हवामहे मरुतः' इत्यतो विशेषलिङ्गान्मारुतत्वमस्याध्यवस्येत्[6]। यत् 'अप्सः' इत्येष शब्दोऽभक्षस्याभिधायको[7] दृष्टस्तस्मात्साधूक्तम् 'अपि वाप्स इति रूपनामाप्सातेः' इति।

अधुना यदुक्तं 'व्यापनीयं वा' इति 'आप्लृ[8] व्याप्तौ' इत्यस्य वाप्स इति तस्यार्थप्रख्यापकं[9] निगमं ब्रवीति 'अप्सो नामेति व्यापिनः' इति।
१० यथाप्नोतेरभिव्याप्त्यर्थस्तस्याप्स[10] इत्येतद्रूपनाम भवति[11] तथैवं निगमः।

अस्मिन्निगमे व्यापिन्यर्थेऽप्सः

'पृथिव्याः पुरीषमस्यप्सो[12] नाम तां त्वा विश्वे अभिगृणन्तु[13] देवाः। स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणा यजस्वाश्विनाध्वर्यू सादयतामिह त्वा' [ मैत्रा० सं० २।८।१ ] इति।

१५ अग्निचयने द्वितीयायां चितावाश्विन्यो नामेष्टकास्तासामेकस्यामयमुपधानमन्त्रः [ मान० श्रौ० ६।२।१ ]। पृथिव्याः पुरीषमसि पूरयित्र्यसि हे इष्टके अप्सो नाम। तां त्वाम् एवंगुणयुक्तां सतीं विश्वे सर्वे अभिगृणन्तु अभिष्टुवन्तु देवाः। किंच। सा त्वं स्तोमपृष्ठा देवैरुदीरितेन स्तोमेन स्पृष्टा घृतवती उदकवती उदकेन संश्लेषिता इहाग्निचयने आसीद। किंच[14]।
२० अश्विनौ देवौ अध्वर्यू सादयतामिह त्वाम्। तौ हि विजानीतो यथा त्वं

१ च. मेकैस्या' कैक. २ ग. ज. व. ट. ठ. ड. °यवनं. ३ च. °यजनमसि' अवयजामहे विनाशयामः। अवपूर्वो यजिर्नाशनार्थः. ४ घ. झ. ट. ठ. ड. °पात्राख्य। अवयजामहे विनाशयामः। अवपूर्वो यजिर्नाशनार्थः। प्रघा°. ५ घ. झ. ट. प्रवास्यान्. ६ क. ख. घ. झ. ट. ठ. ड. °स्यावसीयते; च. °साध्यवस्येत्
२५ स्यते. ७ क. ख. घ. झ. ट ठ. °भक्ष्यस्या°. ८ ग. च. ज. आप्तृ. ९ क. ख. घ. झ. ट. °र्थस्य स्या°; च. °र्थप्र' स्य; ठ. ड. °र्थस्य व्यापकं. १० ग. ज. °प्नोतेर°. ११ ग. भवति। ५४। पृथिव्याः°; ज. भवति। पृथिव्याः. १२ ग. ज. °मस्याप्सो°; च. °मस्याप्सो° स्य. १३ ग. ज. °श्वेभि°; च. °श्वेऽअभि°. १४ घ. झ. ट. ठ. ड. किंच। अस्मै अस्मभ्यं प्रजावत् पुत्रपौत्रादियुक्तानि द्रविणा द्रविणानि धनानि आयजस्व सर्वतो देहि। यजतिर्दानार्थः। किंच। अश्वि°; च.
३१ किंच। ~ आश्वि° अस्मे० ० दानार्थः। किंच.

सादयितव्येत्यभिप्रायः । एवमत्र व्याप्त्यर्थस्याप्स इत्युपपद्यत इह भक्षणार्थासंभवात् ।

एवं तावदप्सरा इत्यस्याभिधानस्याप्स इत्ययमेकदेश उपपादितः ।

अधुना ' रा ' इत्येतमेकदेशमुपपादयिष्यन्नाह[1] ।

मत्वर्थे रा

' तद्रा भवति रूपवती '[2] । रो मत्वर्थे । तेनाप्सः[3]-शब्दवाच्येन[4] रूपेण तद्वती सा भवत्यप्सराः ।

'तद्रा भवति' इत्येवमुक्तेऽपि सति रेफस्य मत्वर्थता न गृह्यत इति मन्यमानो भाष्यकारः स्पष्टमेव मत्वर्थमाह[5] 'तद्रा भवति रूपवती' इति । रूपसंयुतेत्यर्थः । तस्या एव सर्वयोषिद्भ्यः प्रतिविशिष्टं रूपमित्यभिप्रायः । अथ ' वा ' एवमन्यथा स्यात् । ' तदनया ' अप्सः[6]शब्दवाच्यं

अथवा 'आदाने'

रूपम् ' आत्तं ' गृहीतमेव कुतश्चित् । एतस्मिन् पक्षे 'रा ' इत्ययमादानार्थः । अथ 'वा' एवमन्यथा स्यात् । 'तत् ' अप्सः[7]शब्दवाच्यं रूपमतिरिक्तमिव तस्यै[8] दत्तं विधात्रा ।

अथवा 'दाने'

तथाहि तत्तस्यामतिशयेनानपायि च लक्ष्यते । एतस्मिन्पक्षे 'रा' इत्ययं दानार्थः ।

' तस्याः ' एवंगुणविशिष्टाया उर्वश्या अप्सरसो ' दर्शनान्मित्रावरुणयो रेतश्चस्कन्द ' स्कन्नम्[9] । 'तत् 'तस्यार्थस्य 'अभिवादिन्येषा ऋग्भवति'॥ १३[10]॥

---

**उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसोऽधि जातः । द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवाः पुष्करे त्वाददन्त [ ऋ० सं० ७ । ३३ । ११ ]॥ अप्यसि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसोऽधिजातो द्रप्सं स्कन्नं ब्रह्मणा दैव्येन द्रप्सः संभृतः**

---

१ क. ख. घ. झ. ट. ठ. ड. °मत्रापेर्व्या°; च. °मत्रे र्व्या° त्रापेर्व्या. २ क. ख. घ. झ. ट. ठ. ड. 'एतं' नास्ति. ३ क. ख. घ. झ. ट. ठ. ड. तेनाप्सश°. ४ क. ख. घ. झ. ट. ठ. ड. °वाच्यन्वेन; च. °वाच्येन° च्यते. ५ क. ख. °माह यदुक्तं रूप°; घ. झ. ट. °माह यदुत रूप°; च. °माह । तद्रा भवति° यदुत. ६ क. ख. घ. झ. ट. ठ. ड. च. अप्सश°. ७ सर्वेषु पुस्तकेषु ' अप्सशब्द° ' इति. ८ घ. झ. ट. ठ. ड. अस्यै; च तस्यै° अ. ९ ठ. ड. स्कन्नं स्खलितम्. १० क. ख. १ ( १३ ); ग. ५५।१५; ठ. ड. १३ ( ठ. अङ्को नास्ति ) इति नैरुक्तभाष्ये पञ्चमाध्यायस्य [ ड. 'पञ्चमाध्यायस्य' नास्ति ] त्रयोदशः (ड. १३) खण्डः.

प्सानीयो भवति सर्वे देवाः पुष्करे त्वाधारयन्त पुष्करमन्तरिक्षं पोषति भूतान्युदकं पुष्करं पूजाकरं पूजयितव्यमिदमपीतरत्पुष्कर-मेतस्मादेव पुष्करं वपुष्करं वा पुष्पं पुष्पतेर्वयुनं वेतेः कान्तिर्वा प्रज्ञा वा ॥१४॥

---

' उतासि मैत्रावरुणः' इति । वसिष्ठस्य सपुत्रस्येयमार्षम् । तस्यैव स्तुतिरिन्द्रस्य वा । 'उत' इत्ययम् 'अपि' शब्दार्थे वर्तमानोऽधस्त्यायामृचि ये जन्मनी वसिष्ठस्योक्ते ते संभावयति । सा पुनरियमृक् । ' विद्युतो ज्योतिः परि संजिहानं मित्रावरुणा यदपश्यतां त्वा । तत्ते जन्मोतैकं वसि-

१० ष्ठागस्त्यो यत्त्वा विश आजभार ' ( ऋ० सं० ७।३३।१० ) ॥ विद्युतो ज्योतिरः प्रकाशः । तस्मात्परितः अधिकं संजिहानम् उत्तिष्ठन्तम् । जायमानमित्यर्थः । मित्रावरुणौ देवौ यदपश्यतां त्वा तत्ते तव जन्मैकं हे वसिष्ठ । अपि च ।

अस्यामृचि वसिष्ठस्य द्वे जन्मनी उक्ते । ते 'उत' शब्देन लक्ष्येते

१५ यत्त्वामगस्त्यो विश आजभार । अगस्त्य ऋषिः विशो मनुष्यान् प्रति मनुष्यलोकम् आजभार आहृतवान् तत्ते तव द्वितीयं जन्म ।

उतासि अपि चासि मैत्रावरुणः हे वसिष्ठ । कथं पुनर्मैत्रावरुणः मित्रावरुणयोरुत्पन्नोऽसि । किं संवर्षेण । नेत्युच्यते । उर्वश्याः सकाशात् हे ब्रह्मन् मनसोऽधिजातो न संघर्षेण । किंच । निर्बीज एवासि

२० मनोभिध्यानमात्रादुत्पन्नः । नेत्युच्यते । किं तर्हि । द्रप्सं शुक्रमुर्वशीदर्शनात् स्कन्नं मित्रावरुणयोः । ब्रह्मणा दैव्येन देवानां स्वभूतेन ऋग्युजुःसामाख्येन स्तुवन्तो विश्वे देवा मा एतद्भूमौ पतेदिति कुम्भस्योपरि पुष्करे उदके अन्तरिक्षे वा त्वां तेन शुक्रेण

उर्वश्या दर्शनान्मित्रावरुणयो रेतश्चस्कन्द । तस्माद्रेतसो वसिष्ठो जातः

२५ सहैकतामुपगतम् अददन्त । अधारयन्तेत्यर्थः । एवमेतस्मिन् 'द्रप्सं स्कन्नम्' इत्येवमादिना संबन्धेन ' उर्वशी ' शब्देन अप्सरा उच्यत इत्युपपद्यते ।

---

१ क. ख. २ (१४)· छ. त. १६; द. २. ग ज. पुनरित्ययमृक् (ग. मृक् । ५६ । ) . ३ ग. ज. ज्योतिः परि संजिहानं । विद्यु°; च. ट. ज्योतिः० जभार. ४ क. ख. व. झ. ट. ठ. ड. °विद्युतो विशेषेण द्योतते देदीप्यते इति विद्युद्वेशी तस्या ज्योतिः प्रकाशः°; च. विद्युतः ज्योतिषिः° विशेषेण० ज्योतिः. ५ ठ. ३१ ड. संवर्पणेन.

रौद्रेण किल तेजसा निर्दग्धो वसिष्ठो मित्रपरिगृहीतायामुर्वश्यामुत्पन्नो वरुणतेजसो जात इति पुराणे श्रूयते । तदप्युपेक्षितव्यम् । अनेकविधो हि मन्त्राणां विषयः । वसिष्ठस्येयमार्षं युष्मदश्चात्र प्रयोग 'उतासि' इति । तदेतद्विरुद्धार्थमिव लक्ष्यते । नैतद्विरुद्धं नित्यत्वान्मन्त्राणाम् ।

*वसिष्ठस्यार्षं वसिष्ठश्च संबोध्यत इति कथम्*

आह । रेतः कस्मात् 'द्रप्सः' इत्युच्यते । स हि रेतःसंज्ञको रसः पुरुषस्याङ्गादङ्गात् संभृतः[3] स्त्रीयोनेः[4] 'प्सानीयो भवति' भक्षणीयो भरणीयश्च । एवं प्सातेर्भरतेश्च यथासंभवं 'द्रप्स' इत्येष शब्दो द्रष्टव्यः । पुष्करशब्दोऽनेकार्थः । तमिह प्रसक्तं व्याचष्टे । 'पुष्करमन्तरिक्षम्' । तद्धि 'पुष्णाति भूतानि' अवकाशदानेनोपकुर्वत् । 'उदकम्' अपि 'पुष्करम्' । तेन हि पूजा क्रियते देवादिभ्यः । तत्पूजाकारकत्वात्पुष्करम्[5] । अथवा 'पूजयितव्यं' पूजनार्हमात्मन एवेति पुष्करम् । 'इदमपीतरत्पुष्करम्'[6] पद्मम् 'एतस्मादेव' कारणात् 'पुष्करम्' इत्युच्यते । तदपि हि पूजाकरणं[7] पूजयितव्यं च शोभनत्वात्तस्य । अथ 'वा पुष्करं' तदिति 'वपुष्करम्'[8] । आबद्धे हि तस्मिन् वपुष्मान् भवति । पद्मप्रसङ्गात्पुष्पशब्दं निराह । 'पुष्पं पुष्पतेः' इति । पुष्पतिर्विकसनार्थः (धा० ४ । १६) । तद्धि विकसितं भवति ।

*पुष्करशब्दस्यार्था निर्वचनं च*

'वयुनम्' [ ४८ ] अनेकार्थमनवगतं च । 'वेतेः' इति धातुनिर्देशः[9] । 'वेनम्' इति न्याय्यम् । 'कान्तिर्वा' अभिधेया 'प्रज्ञा वा' ॥१४॥[10]

---

१ क. ख. घ. झ. ट. ठ. ड. पुराणात्. २ क. ख. घ. झ. ट. ठ. ड. °र्थमुपलक्ष्य; च. °र्थमिवमुपल.° ३ घ. झ. ट. ठ. ड संभूतः. ४ च. °योनिः° नेः. ५ क. ख. घ. झ. ट. ठ. ड. °जाकरत्वा°; च. °जाक (का) रत्वा° क (ण?). ६ क. ख. घ. झ. ट. ठ. ड. 'पुष्करं' नास्ति; च. पुष्करं. ७ क. ख. घ. झ. ट. ठ. ड. °जाकरं; च. °जाकारणं' क. ८ घ. झ. ट. ठ. ड. वपुष्करं; च. पुष्करं° वपु. ९ घ. झ. ट. ठ. ड. पुष्करं; च. वपुष्करं. १० क. ख. २ (१४); ग. ५७/१६; ठ. ड. १४ । इति निरुक्तटीकायां पञ्चमाध्याये चतुर्दशः खण्डः ; इतरेष्वङ्को नास्ति.

स इत्तमोऽवयुनं ततन्वत्सूर्येण वयुनवच्चकार । स तमोऽप्रज्ञानं ततन्वत्स तं सूर्येण प्रज्ञानवच्चकार[1] वाजपस्त्यं वाजपतनम् । सनेम वाजपस्त्यमित्यपि निगमो भवति[1] वाजगन्ध्यं गध्यत्युत्तरपदम् । अश्याम वाजगन्ध्यमित्यपि निगमो भवति[1] गध्यं गृह्णातेः । ऋज्रा वाजं न गध्यं युयूषन्नित्यपि निगमो भवति[1] गध्यतिर्मिश्रीभावकर्मा । आगधिता परिगधितेत्यपि निगमो भवति[1] कौरयाणः कृतयानः । पाकस्थामा कौरयाण इत्यपि निगमो भवति[1] तौरयाणस्तूर्णयानः । स तौरयाण[2] उप याहि यज्ञम्[3] । मरुद्भिरिन्द्र सखिभिः सजोषा इत्यपि निगमो भवत्यह्रयाणो ह्रीतयानः । अनुष्टुया कृणुह्यह्रयाणेत्यपि निगमो भवति[1] हरयाणो हरमाणयानः । रजतं हरयाण इत्यपि निगमो भवति । य आरितः कर्मणिकर्मणि स्थिरः । प्रत्यृतः स्तोमान् व्रन्दी व्रन्दतेर्मृदूभावकर्मणः ॥ १५ ) ॥

---

' स इत्तमोऽवयुनं ततन्वत्सूर्येण वयुनवच्चकार । कदा ते मर्ता अमृतस्य धामेयक्षन्तो न मिनन्ति स्वधावः '

वयुनशब्दस्य प्रयोगोऽर्थश्च

( ऋ० सं० ६ । २१ । ३ ) ॥ भरद्वाजस्यार्षम् । त्रिष्टुप् । ऐन्द्रे सूक्ते । व्यूढस्य दशरात्रस्य नवमेऽहनि मरुत्वतीये शस्त्रे शस्यते ( आश्व० श्रौ० ८ । ७ ) । त्वमेवंगुणविशिष्टो हे भगवन्निन्द्र । यथागुणं त्वामवोचाम । स त्वमेतच्छार्वरं तमः अवयुनम् अप्रज्ञानलक्षणं ततन्वत् । सर्वमेवैनं लोकं स्वेन प्रकाशाख्येन रूपेण संतनोति । सूर्येण वयुनवत् । प्राणो हीन्द्रस्तस्मात्सूर्य उदेति । ' प्राणाद्वा एव उदेति प्राणेऽस्तमेति ' ( बृ० उ० १ । ५ । २३ ) इति[10] ह्युक्तम् । तस्मा-

---

१ क. ख. छ. त. द. अत्र विरामो वर्तते. २ त. तूर° तौ ; द. तूर°. ३ क. ख. छ. त. द. विरामो नास्ति. ४ छ. त. भवति । अह्र°. ५ क. ख. ३ (१५); छ. त. १७; द. ३. ६ ग. ज. ततन्वत् । भर°; घ. ट. ततन्वत्०न मिन°. ७ ठ. ड. व्यूळ्हस्य. ८ ग. ज. स एवमेवैतं लोकं. ९ क. ख. घ. झ. ट. ठ. ड. ' रूपेण ' नास्ति; च. रूपेण. १० घ. ट. ' इति ' नास्ति.

त्प्राण इन्द्रः सूर्यस्योदयहेतुः। स तं सूर्यमुद्गमयंस्तेन सूर्येण वयुनवच्चकार। एतज्जगज्ज्ञानवत् करोति । तस्मात्स एवेन्द्र एवमुच्यते । सूर्येण त्वमेतज्जगद्वयुनवत्प्रज्ञावच्चकार । कृतवानसीत्यर्थः । यस्त्वमेवंप्रभावस्तस्य तव कदा कस्मिन् काले मर्ता मरणधर्माणो मनुष्या अमृतस्य अमरणधर्मिणो धाम स्थानं इयक्षन्तो यष्टुमिच्छन्तो न मिनन्ति न श्रयन्ति हे स्वधाव: अन्नवन् । सर्वदैव तवापरिक्लिष्टं स्थानम् । कृतावकाशस्त्वं यज्ञेष्वित्यभिप्रायः । एवमिह 'तमस्ततन्वत्सूर्येण वयुनवच्चकार' इत्यनेन संबन्धात् 'वयुन' शब्देन प्रज्ञानमुच्यत इत्युपपत्तिः । कान्त्यर्थत्वमपि क्वचिदुपेक्ष्यम् । इहैव वा पक्षेण योज्यम् ।

'वाजपस्त्यम्' [ ४९ ] इत्यनवगतम् । 'वाजपतनम्' इत्यवगमः । 'तं सखायः पुरोरुचं यूयं वयं च सूरयः । अश्याम वाजगन्ध्यं सनेम वाजपस्त्यम्' ( ऋ० सं० ९ । ९८ । १२ )॥

'वाजपस्त्यम्' इत्यस्य

पावमानी सौमी । अम्बरीषश्च ऋजिश्वा च सूक्तं ददृशतुस्तत्रैषा । तमेनं सोमं हे सखाय ऋत्विज पुरोरुचम् अग्रतोदीप्तिम् यूयं वयं च संपृक्ताः सन्तो हे सूरयो मेधाविनः अश्याम व्याप्नुयाम वयं वाजगन्ध्यं प्रतिविशिष्टान्नसमानगन्धम् । अथवा वाजग्रहीतारम् । अथवा वाजसंमिश्रयितारम् । किंच । सनेम संभजेमहि वाजपस्त्यम् । अन्नमेतदस्माकमिति मन्यमानाः सन्तो यमाभिमुख्येन देवाः पतन्ति गच्छन्ति स वाजपस्त्यः सोमस्तं नित्यकालमेव वयं भजेमहि । एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च 'वाजपस्त्य' शब्देन सोम उक्तः । 'वाजगन्ध्यम्' (५०) इत्येतदपि पदमेकस्मिन्नेव निगमे निरुक्तम् ।

'वाजगन्ध्यम्' तस्मिन्नेव निगमे

केवलं समाम्नायानुक्रमविपर्यासः । 'वाजपस्त्यं वाजगन्ध्यम्' ( निघ० ४ । २ ) इत्येष समाम्नायानुक्रमः। निगमे पुनः 'अश्याम वाजगन्ध्यं सनेम वाजपस्त्यम्' इति ।

---

१ क. ख. घ. ट. ठ. ड. °द्गमयत् ते°. २ ग. ज. त्वमेतद्वयुनवच्चकार°. ३ ग. °गमः । ५८ । तं. ४ ग. ज. पुरोरुचं । पाव°; घ. ट. पुरोरुचं०वाजपस्त्यम्. ५ क. ख. घ. झ. ट. ठ. ड. 'च' नास्ति. ६ क. ख. घ. झ. ट. ठ. ड. °दीप्तम्. ७ घ. झ. ट. ठ. ड. 'सन्तो' नास्ति; च. सन्तो. ८ घ. झ. ट. ठ. ड. संभजे°; च. ~भजे° सं. ९ ग. ज. 'वाजगन्ध्यं' नास्ति; च. °पर्यासो वाजपस्त्यं । वाजगन्ध्यं~ सनेम° इत्येष समाम्नायानुक्रमः । निगमे पुनः अश्याम वाजगन्ध्यं.

'गध्यम्' (५१) इत्यनवगतम् । 'ग्रहणीयम्' इत्यर्थप्रतीतिः[2] ।
'यासि कुत्सेन सरथमवस्युस्तोदो[3] वातस्य हर्योरीशानः । ऋज्रा वाजं न गध्यं युयूषन्कविर्यदहन्पार्याय भूषात्' [ऋ० सं० ४ । १६ । ११ ] ॥ 'गध्यम्' इत्यस्य वामदेवस्यार्षम् । ऐन्द्री । त्रिष्टुप् । अहीनसूक्ते चतुर्विंशे उक्थे
५ माध्यन्दिने सवने मैत्रावरुणस्येयं शस्त्रे [आश्व० श्रौ० ७ । ४ ।] हे भगवन्निन्द्र यासि कुत्सेन ऋषिणा स्तूयमानः अथवा कुत्सेन वज्रेणाभ्युद्यतेन सरथं समानगमनमभिवहनं रथमारुह्य अथवा सरथं रथसंयुक्तं परानीकम् अवस्युः रिरक्षिषुरात्मीयान् मिमर्दिषुश्च परकीयान् तोदः
१० तुन्न इव केनचित् वातस्य जवेन यासि । तथापि च गच्छन् हर्योः अश्वयोः ईशानः ईश्वरः । न धावति त्वय्यन्यत एव त्वामूहतुः । स त्वं ऋज्रा ऋजुनैव मार्गेण न कांचिदन्यां गतिं धावमानः वाजं न गध्यं वाजमिव ग्रहणार्हं भोक्तुमाभिमुख्येन युयूषन् पुनःपुनः संमिश्रयिष्यन्नात्मानं शत्रुभिर्युद्धे कविः क्रान्तदर्शनोऽसंमूढो यदहन् यस्मिन्नहनि
१५ पार्याय पारणाय स्तोतॄणामुपरि चेतः करोषि पारयितव्या मयैत इति तस्मिन्नेवाहनि तान् सर्वान् भूषात् । अतिक्रम्य वर्तस इत्यर्थः । पर्यगृह्णात्पर्यरक्षदत्यक्रामदित्येते भूषतेरर्थाः । एवमस्मिन् शब्दसारूप्यादर्थोपपत्तेश्च 'गध्यम्' इत्येष शब्दो 'गृह्णातेः' इत्युपपद्यते ।

'गध्यतिः' [५२] अप्रतीतार्थः । स पुनरेष 'मिश्रीभावकर्मा' ।
२० 'आगधिता परिगधिता[11] या कशीकेव जङ्गहे । ददाति मह्यं यादुरी याशूनां भोज्या शता' [ऋ० सं० १ । १२६ । ६ ] ॥ 'गध्यतिः' इत्यस्य भावयव्यस्यार्षम् । आगधिता आगृहीता आमिश्रिता[12] च । परिगधिता च परिमिश्रीकृता । बाहुभ्यां मया परिष्वक्तेत्यर्थः । या कशीकेव । प्रतिकशं

१ क. ख. च. गन्ध्यम्. २ ग. °तीतिः । ५१ । यासि°. ३ ग. ज. सरथं । वाम°; घ. ट. सरथमवस्युः पार्याय भूषात् ४ ग. च. ज. °सूक्ते च चतु. ५ क. ख. घ. झ. ट. ठ. ड. शस्त्रे शस्यते. ६ ग. ज. समानमभिवह°. ७ क. ख. घ. झ. ट. ट. ड. °वहनरथ°. ८ ग. ज. °न गध्यं [ ज. गंध्यं ] गन्ध्यं वाजं°. ९ क. ख. घ. झ. ट. ठ. ड. °एवमेतस्मिन्; च. °एवमस्मि° मेत. १० ग. ज. °कर्मा । ६० । आग°. ११ ग. ज. परिगविता । भाव°; घ. ट. परिग° याशूनां°. १२ घ. झ. ट. ठ. ड. आमिश्रीकृता; च. आमिश्रिता° श्रीकृ.

कशीकेव । सा हि नकुलजातिः कांचिद्दिवे कशामिति श्रूयतेऽश्वमेधे [ मैत्रा० सं० ३ । १४ । ७ । वा० सं० २४ । २६ ] । सा यथा मदकाले प्रतिकशमतितरां परिष्वजति । स हि तस्याः परिष्वजनस्वभावः । एवं या मां जङ्गहे परिगृह्णाति बाहुभ्यां परिगृह्य च ददाति । यादुरी या आदरवती । अथवा यादसा रेतःसेकेन तद्वती । 'यादः' इत्युदकनामसु पठितम् [ निघ० १ । १२ । ४८ । ] । किं च ददाति मह्यमिति । उच्यते । याशूनां मैथुनाख्यानां शता शतानि । बहुश इत्यर्थः । या एवंप्रकारा सा मम भोज्या । पत्नीत्यभिप्रायः । एवमत्र मैथुनसंबन्धाच्छब्दसारूप्याच्च 'गध्यतिर्मिश्रीभावकर्मा' इत्युपपद्यते ।

'कौरयाणः' [ ९३ ] इत्यनवगतम् । 'कृतयानः' इत्यवगमः ।

'कौरयाणः' इत्यस्य

'यं मे दुरिन्द्रो मरुतः पाकस्थामा कौरयाणः । विश्वेषां त्मना शोभिष्ठमुपेव दिवि धावमानम्' [ ऋ० सं० ८ । ३ । २१ ] ॥ मेध्यातिथेः काण्वस्यार्षम् । यानमनया प्रशस्यते । यन्मम दत्तवन्तो मरुत इन्द्रश्च पाकस्थामा विपक्वप्राणः कौरयाणः संस्कृतयानः विश्वेषां त्मना सर्वेषामपि यानानामन्यप्रतिग्रहीतृसक्तांकानां मध्य आत्मना तदेव शोभिष्ठं शोभनतममनेकरत्नविचित्रत्वात् दिवीव ज्योतिश्चक्रम् उपधावमानं दृश्यते । एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च 'कौरयाणः कृतयानः' इत्युपपद्यते ।

'तौरयाणः' ( ५४ ) इत्यनवगतम् । 'तूर्णयानः' इत्यवगमः ।

'तौरयाणः' इत्यस्य

'जातं यत्त्वा परि देवा अभूषन्महे भराय पुरुहूत विश्वे । स तौरयाण उप याहि यज्ञं मरुद्भिरिन्द्र सखिभिः सजोषाः' ॥ जातं जातमात्रं विश्वे देवा यत्त्वां पर्यभूषन् परिगृहीतवन्तः महे महते भराय रणाय महान्तमसुरैः सह संग्रामं करिष्यतीत्यनेनाभिप्रायेण स

१ घ. झ. ट. ठ. ड. काचित् काचिद्दिवे°; च. कांचिद्दिवे° का. २ ग. ज. एव; घ. °भावः । ~या मे° एवं. ३ क. ख. घ. झ. ट. ठ. ड. आह । किं ददा°; च. किं च. ४ ग. °गमः । ६१ । यं°. ५ ग. ज. मरुतः । मेधाति°; घ. ट. मरुतः०दिवि°. ६ ग. च. ज. मेधाति°. ७ घ. झ. ट. °र्षम् । अनुष्टुप् । या°; च. °र्षम् ~ । या° अनुष्टुप्. ८ घ. झ. ट. ठ. ड. °यानो महाराजः । विश्वे°; च. °यानः ~विश्वे° महाराजः. ९ ग. च. ज. °प्रतिगृही°; ठ. प्रतिगृहितु सका° ; ड. प्रतिगृहीतसक्ता°. १० ग. ज. °सत्कानां; ट. °सक्तानां° त्तांकां. ११ ग. °गमः । ६२। जातं. १२ क. ख. घ. झ. ट. ठ. ड. भरणाय; च. °राय ~रणा° भ.

त्वं हे पुरुहूत इन्द्र तौरयाणः त्वरितयानो भूत्वा उपयाहि उपगच्छ एनं यज्ञं मरुद्भिः सखिभिः सह संप्रीयमाणः। उपागत्य चास्माकमाशिषः समर्धयेत्यभिप्रायः। एवमत्रागमनसंबन्धात् 'तौरयाणस्तूर्णयानः' इत्युपपद्यते।

'अह्रयाणः' [ ५५ ] इत्यनवगतम्। 'अह्रीतयानः' इत्यवगमः।

५ 'अह्रयाणः' इत्यस्य 'त्वया वयं सधन्य १ स्त्वोतास्तव प्रणीत्यश्याम वाजान्। उभा शंसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण' [ ऋ० सं० ४। ४। १४ ]॥ वामदेवस्यार्षम्। त्रिष्टुप्। अग्नये रक्षोघ्नेऽष्टाकपालः। तत्र स्विष्टकृतः पुरोनुवाक्यैषा मैत्रायणीयके [ मैत्रा० १० सं० २। १। ११॥ ४। ११। ५ ]। हे भगवन्नग्ने त्वया वयं सधन्यः समानधनिनः। यदेतदस्मद्गृहे धनमेतदावयोः सहेत्यभिप्रायः। यत एवमतो ब्रूमः। त्वोताः त्वयैव रक्षिताः सन्तः तव प्रणीत्या तवैव प्रणयेन अश्याम वाजान् प्राप्नुयामोऽन्नानि। किंच। उभा शंसा उभावपि शंसितारौ यश्चाग्रतो नः पापानि शंसति यश्च पृष्ठतस्तावुभावपि १५ सूदय सुष्ठु जहि हे सत्यताते यज्ञतानितः। किंच। अनुष्ठुया अनुष्ठानेन कृणुहि कुरु। कर्मणैतत्संपादय यदहं ब्रवीमि। हे अह्रयाण। अलज्जितयानेत्यर्थः। एवमत्र 'अह्रयाणः' इत्यनेन अह्रीतयानं उच्यते देवतेति। उपपद्यते हि देवताया अलज्जितयानत्वम्।

'हरयाणः' [ ५६ ] इत्यनवगतम्। 'हरमाणयानः' इत्यवगमः।

२० 'हरयाणः' इत्यस्य 'ऋज्रमुक्षण्यायने रजतं हरयाणे। रथं युक्तमसनाम सुषामणि' [ ऋ० सं० ८। २५। २२ ]॥ विश्वमनसो वैयश्वस्येयमार्षम्। याज्ञमनया प्रशस्यते। ऋज्रम् ऋजुगामिनं रथं रजतं रजतमयं रजतविकृतं वा युक्तम् अश्वैः असनाम लब्धवन्तो वयम्।

---

२५ १ ग. °गमः। ६३। त्वया°. २ ग. ज. °स्त्वोता। वाम°; घ. ट. स्त्वोताः० ऽनुष्ठुया°. ३ ग. च. ज. मैत्रावरुणीयके. ४ ग. ज. प्रणयनेन. ५ ग. च. ज. °याणो अलज्जितयान इत्य°. ६ क. ख. घ. झ. ट. ठ. ड. °यानोऽग्निरुच्य°. ७ क. ख. घ. झ. ट. ठ. ड. 'देवतेति' नास्ति; च. देवतेति. ८ ग. °गमः। ६४। ऋज्र°. ९ ग. ज. °ण्यायने। विश्व°; घ. ट. °ण्यायने० महनाम सुषामणि. १० क. ख. च. °मणि। इति विश्व°. ११ क. ख. घ. झ. ट. ठ. ड. °मार्षम्। उष्णिक्। या°; च. °मार्ष ०। या° उष्णिक्. १२ क. ख. घ. झ. ट. ठ. ड. ३२ स्तूयते.

क पुनर्लब्धवन्तः । उक्षण्यायने । उक्षण्यायन इति यजमानः कश्चिदासीत् । तस्मिन् हरयाणे हरमाणयाने नित्यकालमेवाभिप्रस्थितयाने सुषामणि शोभनं सामास्य सुषामा तस्मिन् यजमाने । तादृशः स महादक्षो दातेत्यभिप्रायः । एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च 'हरयाणो हरमाणयानः' इत्युपपद्यते । ५

'आरितः' [ ५७ ] इत्यनवगतम् । प्रतीत्यस्य स्थाने आङ् । 'प्रत्यृतः' इत्यर्थप्रतीतिः[4] । 'यो अश्वानां यो गवां गोपतिर्वशी य आरितः कर्मणिकर्मणि स्थिरः । वीळोश्चिदिन्द्रो यो असुन्वतो वधो मरुत्वन्तं सख्याय हवामहे' [ ऋ० सं० १ । १०१ । ४ ] ॥ कुत्सस्येयमार्षम् । व्यूढस्य दशरात्रस्य नवमेऽहनि मरुत्वतीये शस्त्रे निविद्धानीये सूक्ते शस्यते [ आश्व० श्रौ० ८ । ७ ] । य इन्द्रः अश्वानां गवां च गोपतिः । किंच । य आरितः कर्मणिकर्मणि स्थिरः । आरितः सर्वान् स्तोमान् प्रति योऽवस्थितः । केन । देवतारूपेण । सर्वेषु स्तोमेषु चावस्थानात् । यः कर्मणिकर्मणि अग्निहोत्रादौ स्थिरो नित्यः । यमृते न किंचन कर्म प्रवर्तत इत्यभिप्रायः । किंच । वीळोश्चित् संस्तब्धस्यापि दर्पितस्यापि य इन्द्रः असुन्वतः अभिषवमकुर्वाणस्य वधः वधयिता । तमेवंगुणैर्युक्तं मरुत्वन्तं मरुत्सहितमिन्द्रं सख्याय सखिभावाय एतस्मिन् कर्मणि हवामहे । आह्वयाम इत्यर्थः । एवमयम् 'आरित' शब्दोऽर्थोपपत्त्या 'प्रत्यृतः' इत्येवमुपपद्यते । २०

(margin: 'आरितः' इत्यस्य; line numbers १०, १५)

---

१ क. ख. घ. झ. ट. ड. 'यजमानः' नास्ति; ग. ज. °ण्यायनिरिति । न कश्चि°; च. यजमानः. २ क. ख. घ. झ. ट. ठ. ड. तस्मिन् यजमाने हर°; ग. ज. तस्मिन् यजमानहरणे हरमाणयाने; च. तस्मिन् हर° यजमाने. ३ ग. ज. सामास्येति सु°. ४ ग. °तीतिः । ६५ । यो°. ५ ग. गवां० हे । कुत्स°; ज. गवां० कुत्स°; घ. ट. गवां गोपातिर्वशी० सख्याय. ६ क. ख. च. वीडोश्चि°; ग. ज. घ. झ. वीलोश्चि°. ७ घ. झ. ट. ठ ड. सोमेषु. ८ क. ख. घ. झ. ट. ठ. ड. चावस्थानात् । यः°; च. वाव° चा. ९ क. ख. घ. झ. ट. 'किंच' नास्ति. १० ग. च. ज. घ. झ. वीलोश्चि°. ११ च. °गुणसंयुक्तं. १२ क. ख. घ. झ. ट. ठ. ड. 'एवं' नास्ति. २१

'व्रन्दी' [ ५८ ] इत्यनवगतम् । 'व्रन्दतेर्मृदूभावार्थस्य'। धातु-रेवायमप्रतीतः । एष एवानवगमः[1][2] ॥ १५ ॥

---

नि यद्वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य चिद् व्रन्दिनो रोरुवद्वना । निवृणक्षि यच्छ्वसनस्य मूर्धनि शब्दकारिणः शुष्णस्यादित्यस्य च[3] शोषयितू रोरूयमाणो वनानीति वा वधेनेति[4] वा । अव्रदन्त वीळितेत्यपि[5] निगमो भवति वीळयतिश्च[6] व्रीडयतिश्च संस्तम्भकर्माणौ पूर्वेण संप्रयुज्येते निष्षपी[7] स्त्रीकामो भवति विनिर्गतपसाः पसः सपतेः स्पृशतिकर्मणः[8] । मा नो मघेव निष्षपी[9] परा दाः । स यथा धनानि विनाशयति मा नस्त्वं तथा परादास्तूर्णा-[10]शमुदकं भवति तूर्णमश्नुते । तूर्णाशं न गिरेरधीत्यपि निगमो भवति[11] । क्षुम्पमहिच्छत्रकं भवति यत्क्षुभ्यते ॥ १६ ॥

---

नि यद्वृणक्षि श्वसनस्य[12] मूर्धनि शुष्णस्य चिद्व्रन्दिनो रोरुवद्वना । प्राचीनेन मनसा बर्हणावता यदद्या चित्कृणवः कस्त्वा परि' [ ऋ० सं० १ । ५४ । ५ ] ॥ सव्यस्येयमार्षमाङ्गिरसस्य[13] । जगती । ऐन्द्री । स पुनरिन्द्र एवाङ्गिरसः पुत्रत्वमापन्नः । निवृणक्षि निवर्जयसि यत् यस्त्वं हे भगवन्निन्द्र मेघं हत्वा श्वसनस्य शब्दकारिणो वायोः मूर्धनि उपरि शुष्णस्य चित् शोषयितुरपि भगवत आदित्यस्य व्रन्दिनो मृदूभावकर्तुः[14] ।

'व्रन्दी' इत्यस्य

---

१ ग. ज. एव निगमः. २ क. ख. ३ (१५); ग. ६६/१७; ठ. °गमः । इति नैरुक्तटीकायां पञ्चमाध्याये पञ्चदशः खण्डः; इतरेष्वङ्को नास्ति. ३ छ. त. द. 'च' नास्ति. ४ 'धनानीति' सायणभाष्यपाठः. ५ क. ख. छ. त. द. वीलिते° ६ क. ख. छ. त. द. वीलयतिश्च व्रीलय°. ७ ड. मिःषपी. ८ छ. स्पसः स्पशतेः; त. स्पसः स्पसेतेः° श; द. स्पसः स्पसतेः. ९ छ. निःषपी. १० क. ख. छ. त. द. पराद्गाः । तूर्णा०. ११ क. ख. ४ (१६); छ. त. १८; द. ४. १२ ग. ज. श्वसनस्य मूर्धनि । सव्य°; व. ट. श्वसन० कस्त्वा परि. १३ क. ख. घ. झ. ट. ठ. ड. °ङ्गिरसस्येयं । जग°; च. °ङ्गिरस्य । जग°. १४ क. ख. ग. मृदुभा°; च. मृदुभा° दू.

२९

आदित्येन हि परिपच्यमानं संस्तब्धमपि बदरतिन्दुकादि मृदु भवति तस्मादसौ व्रन्दी । तस्याप्येवंकर्मकारिणो मण्डले प्रत्यूर्ध्वं[1] रोरुवत् स्तनयित्नुशब्दं[2] कुर्वाणो वना वनानि[3] विक्षिपसि । ऊर्ध्वमधश्च वनानि उदकानि विक्षिपतो न ते शक्तिप्रतीघातोऽस्तीत्यभिप्रायः । यस्मिंस्तु पक्षे[4] 'वधेन' इति निर्वचनं तस्मिन् पक्षे 'वना' इत्येव शब्दो मेघवधेनेति योज्यः । उदकशब्दश्चैतस्मिन्[5] पक्षेऽध्याहार्यो निवर्जनसंबन्धात् । प्राचीनेन प्रागञ्चितेन[6] अदीनेन तस्मिन् कर्मण्यभिमुखेन[7] मनसा बर्हणावता हिंसावता यदद्यत्वेऽपि[8] कर्म कृणवः करोष्येवासुकरमन्यैस्तस्माद्ब्रवीमि कस्त्वा पारे । कोऽन्यस्त्वामुपरि वर्तते । त्वमेव सर्वभूतानि परिगृह्य वर्तस इत्यभिप्रायः[9] । एवमत्र 'व्रन्दि'-शब्देनादित्य उक्तः । तत्पुनरेतदस्पष्टं मृदुभाव[10]करणादादित्यस्य व्रन्दित्वमिति । यतो[11] व्रन्दिशब्दस्य मृदुभावार्थोपपादयित्री व्रीडयतिना संस्तम्भार्थ[12]वाचिना सह संबद्धो यत्र व्रन्दतेः प्रयोगस्ततो निगमाद्[13] व्रन्दतेर्हि मृदुभावार्थता स्पष्टतरेति दर्शयति । 'अव्रदन्त वीळिते[14]त्यपि निगमो भवति' । अपि पूर्वोऽप्ययं स्पष्टतर[15] इत्यपिशब्दः । 'वीडयतिश्च[16] व्रीडयतिश्च' एतौ द्वावपि 'संस्तम्भकर्माणौ पूर्वेण' अनेनैवानन्तरेण व्रन्दिना यस्मात्समानवाक्यतामुपगतौ 'प्रयुज्येते' तस्माद् व्रन्दिशब्दस्य मृदुभावार्थत्वमुपपद्यते[17] ।

---

१ ग. प्रत्युर्द्धरोभवन् स्त°; ज. प्रत्युद्धरोभवन् स्त°; च. प्रत्युद्धरोभूवन् स्त° र्द्ध रोरु. २ क. ख. ग. ज. स्तनयित्नुशब्दं. ३ ग. ज. 'वनानि' नास्ति; च. वना॰विक्षि° पनानि. ४ ग. ज. ततरक्षे. ५ क. ख. ब. झ. ट. ठ. ड. °शब्दश्च तस्मिन्. ६ ब. ट. ठ. ड. 'प्रागञ्चितेन' नास्ति. ७ ग. ज. कर्मण्दभिमुख्येन; च. कर्मण्या-(ण्य) भिमुख्येन° खे. ८ घ. झ. ट. ठ. ड. यद्यापि त्वं कर्म°; च. यदद्यत्वेऽपि° यापि त्वं. ९ क. ख. व. झ. ट. ठ. ड. इत्यर्थः. १० ग. ज. मृदूभा°. ११ क. ख. घ. झ. ट. अतो; च. यतो° अ. १२ ग. ज. संस्तब्धार्थ°; च. संस्तिब्धार्थ° स्तंभा. १३ ग. ज. ततो निनयेति निग° १४ क. ख. च. वीडिते°; ग. ज. व्रीडिते; व. झ. वीळिते°. १५ ग. ज. स्फुटतर°. १६ ग. व्रीडयतिश्च व्रीलय°; ज. व्रीडय°. १७. ग. °पद्यते । ६७ । तदे°.

'तद्देवानां देवतमाय कर्त्वमश्रथ्नन्दृळ्हाव्रदन्त वीळिता । उद्गा आजदभिनद्ब्रह्मणा वलमगूहत्तमो व्यचक्षयत्स्वः ' [ऋ० सं० २ । २४ । ३ ] ॥ गृत्समदस्यार्षम् । जगती । ब्राह्मणस्पत्ये लिङ्गतो बार्हस्पत्येऽपि सूक्ते । तत्कर्त्वं तत्कर्म देवानां देवतमाय

अस्मिन्निगमे व्रन्दतेः स्पष्टतरोऽर्थः

५ देवतमस्य बृहस्पतेर्यत् अश्रथ्नन् यत् श्लथान्यभवन् दृळ्हा दृढान्यपि सन्ति मेघवृन्दानि । किंच । अव्रदन्त मृदून्यभवन् । कानि पुनस्तानि मृदून्यभवन्निति । उच्यते । वीळिता यानि वीळितानि व्रीडितानि संनद्धानि दर्पितान्यसुरकुलान्यन्यानि वा कानिचित्तानि मृदून्यभवन्निति । किंच ।

१० उद्गाः आजत् उदाजद्गाः उदगमयदपः । अभिनद्वलं मेघं ब्रह्मणा स्तूयमानः । किंच । अगूहत् अनाशयत्तमो वैद्युतात्मना । किंच । व्यचक्षयत् व्यदर्शयत् स्वः स्वर् आदित्यमव्यवधानकरणेन नभसः । एवमत्र 'अव्रदन्त वीळिता' इति व्रन्दतेर्वीळयतिना सह प्रयोगाद् व्रीडतेरर्थवैपरीत्येन व्रन्दतेर्मृदुभावार्थत्वमुपपद्यते । व्रीडयतेस्तु व्रन्दिना सह प्रयोगोऽन्यत्र क्वचिद् द्रष्टव्यः ।

१५ 'निष्षपी' (५९) इत्यनवगतम् । 'विनिर्गतपसाः' इति शब्दसमाधिः । 'स्त्रीकामः' पुंश्चलोऽभिधेयः । स हि नित्यं निर्गतशेपः एव भवति । 'पसः सपतेः' स्पृशत्यर्थे वर्तमानस्य शेपः । तेन हि स्त्री स्पृश्यते । 'प्रति

१ ग. ज. °तमाय । गृत्स°; घ. ट. °तमाय कर्त्व० चक्षयत्स्वः. २ क. ख. च. दृढाव्रदन्त व्रीडिता°. ३ क. ख. ग. ज. ' ब्राह्मणस्पत्ये लिङ्गतो ' 'अपि '
२० नास्ति; च. °बार्हस्पत्ये ( तेऽपि ) सूक्ते° ब्राह्मणस्पत्ये लिङ्गतो. ४ ग. ज. देवतमस्पतेः वद्श्र°; च. °तेः वद्श्र° य; ट. बृहस्पतेः य° ब्रह्मण; ठ. ड. तमस्य ब्रह्मणा यद्°. ५ क. ख. घ. झ. ट. ठ. ड. 'यत्' नास्ति. ६ क. ख. घ. झ. ट. दृढा; ग. ज. ' दृळहा ' नास्ति; च. °वन् दृढान्य° दृढा. ७ क. ख. च. वीडिता; घ. झ. वीलिता. ८ ग. च. ज. ब. झं. वीलिता°. ९ क. ख. घ. झ.
२५ ट. ठ. ड. °वा यानि कानि°. १० क. ख. ग. ज. °नद्वलं; च. °षद्वलं° न. ११ घ. झ. ट. ठ. ड. 'स्वः' सकृदेव. १२ क. ख. च. वीडिता; ग. ज. व्रीडिता; घ. झ. वीलिता. १३ क. ख. ग. ज. व्रीडय°; च. वीडय°; घ. झ. व्रीलय°; ट. व्रीळय°. १४ घ. झ. ट. °व्रीडयते°. १५ च. ज. घ. झ. ड. निष्पपी°. १६ ग. ज. °शेष एव°; च. शेषो भ° प एव. १७ क. ख. ग. स्पशः; ठ. पसः पसतेः स्पृ°; च. स्प (प) सः स्पृश (पस) तेः. १८ ग. ज. शेषः; च.
३१ शेषः° प. १९ ग. °ते । ६८ । प्रति°.

यत्स्या नीथादर्शी दस्योरोको नाच्छा सदनं जानती गात् । अध स्मा नो मघवञ्चर्कृतादिन्मा नो मघेव निष्षपी परा दाः'

'निष्षपी' इत्यस्य [ऋ० सं० १ । १०४ । ५] ॥ कुत्सस्यार्षम् । ऐन्द्री । हे भगवन्निन्द्र यस्मात् प्रत्यदर्शि प्रतिपश्यतीव स्या सा नीथा स्तुतिः । 'नीथाविदो जरितारः' [ऋ० सं० ३ । १२ । ५] इत्येतस्मान्निगमात्स्तुतिर्नीथेति प्रतीयते । दस्योः शत्रोर्दासयितुस्तव ओको न ओक इव निवासमिव अच्छ आभिमुख्येन हृदयमनुप्रविश्य सदनं स्थानं यत्र तया नीथया स्तुत्या सर्तव्यम् । यस्तवाभिमतो गुणोऽनेन यदि नाम मामेष स्तोता स्तुयात्साधु स्यादिति तमर्थमनुप्रविश्यैव भवतो हृद्गतं तेनार्थेनात्मानमभिसंबन्धयित्वैतन्मम सदनमित्येवं जानतीव तदेव आगात् नित्यकालमेवागच्छति । यत एवमतः स्तुत्युदीरयितारो वयं भवतः । अथ एतस्मात्कारणाद्वयं ब्रूमः । हे मघवन् चर्कृतात्पुनःपुनः क्रियमाणादेतस्मात्कर्मण आत्मस्तुत्याश्रयभूतान्मा नो मास्मान् परा दाः पराङ्मुखान् दधीथाः । उपनामय तत्कर्मसाधनानि । कथं च पुनर्मा परा दाः । मघेव निष्षपी । स यथा धनानि नित्यं निर्गतशेपो विनाशयत्येवमस्मांस्त्वं मावसादयिष्ठाः । धनभूतास्तव वयमतो रक्षस्वेत्यभिप्रायः । एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च धननामसंबन्धात् 'निष्षपी' विनिर्गतपसाः स्त्रीकाम इत्युपपद्यते ।

'तूर्णाशम्' (६०) इत्यनवगतम् । 'उदकं भवति' इत्यभिधेयवचनम् । तूर्णं हि क्षिप्रं तद्व्याप्नोति । तूर्णाशनमिति न्याय्यम् । अपठितं चैतदुदकना-

१ ग. ज. दस्योः । कुत्स°; च. ट. दस्योः० निष्षपी°. २ घ. च. झ. ठ. ड. निष्पपी. ३ क. ख. घ. झ. ट. ऐन्द्री । त्रिष्टुप् । हे°; च ऐन्द्री॰ । हे° त्रिष्टुप्. ४ घ. झ. ट. ठ. ड. सत्तव्यं; च. सर्तव्यं° त्त. ५ क. ख. घ. झ. ट. ड. स्तुया°. ६ ग. ज. जानातीव; च. जानातीव° न. ७ ग. अगात; च. अगात्° आ. ८ क. ख. घ. झ. ट. ठ. ड. °दीरितारो°. ९ च. प्राङ्मु° परा. १० घ. झ. ट. ठ. ड. दधीथाः; च. दधीथाः° धी. ११ क. ख. घ. झ. ट. ठ. ड. °नानि । कथं च पुनः कर्मसाधनानि । कथं च पुनर्मा°; च. °नानि॰ । कथं° कथं च पुनः कर्मसाधनानि. १२ ग. ज. घ. झ. निष्पपी; च. निष्षपी° ष्प. १३ क. ख. घ. झ. ट. ठ. ड. नित्यविनिर्ग°; ग. ज. नित्यं निर्गतशेषो. १४ घ. झ. च. ज. निष्पपी. १५ क. ख. घ. झ. ट. ठ. ड. 'वि' नास्ति. १६ घ. ट. ठ. ड. तूर्णासन.

मसु तेनाप्रतीतार्थम्[1]। 'प्राति श्रुतायं वो धृषत्तूर्णाशं न गिरेरधि। हुवे सुशिप्रमूतये' [ ऋ० सं० ८।३२।१ ]॥

'तूर्णाशम्' इत्यस्य मेधातिथेरार्षम्[2]। रात्रिपर्याये शस्यते। मैत्रावरुणस्य प्रथमे शस्त्रे विनियुक्ता [ आश्व० श्रौ० ६।४ ]। हे ऋत्विग्यजमाना यन्मया प्रतिश्रुतमार्त्विज्यमुपगच्छताहमिन्द्रं स्तुतिभिराह्वयिष्यामीति तस्मै प्रतिश्रुताय युष्माकमुपाकरणार्थमेतास्मिन् कर्मणि धृषत् धृष्टं प्रगल्भं हुवे आह्वये सुशिप्रं सुहनुं सुनासं च इन्द्रमहम् ऊतये तर्पणाय तर्पयामह इति। अथवा भवतामात्मनश्च रक्षणायेति स्यात्। कथं पुनराह्वयामि। तूर्णाशं न गिरेरधि। यथा तूर्णाशम् उदकं मेघस्योपरि वर्तमानमाह्वयन्ति वर्षार्थिनो जना एवमाह्वयामीति। एवमत्र गिरिसंबन्धात् 'तूर्णाशम्' उदकमित्युपपत्तिः।

'क्षुम्पम्' (६१) इत्यनवगतम्। 'अहिच्छत्रकं भवति' इत्यभिधेयवचनम्। यस्मात्तत्स्पृष्टमात्रं 'क्षुभ्यते' चलति तस्मात् क्षुंपं क्षोभणमिति न्याय्यम्[12]॥ १६॥

---

**कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत्। कदा नः शुश्रवद्गिर इन्द्रो अङ्ग [ ऋ० सं० १।८४।८ ]॥ कदा मर्तमनाराधयन्तं पादेन क्षुम्पमिवावस्फुरिष्यति[13] कदा नः श्रोष्यति[14] च गिर इन्द्रो अङ्गाङ्गेति क्षिप्रनामाञ्चितमेवाङ्कितं भवति निचुम्पुणः सोमो निचान्तपृणो निचमनेन प्रीणाति॥ १७॥**

---

१ ग. °र्थम्। ६१। प्रति.° २ ग. ज. धृषत्। मेधा; घ. ट. धृषत्° सीप्रमूतये. ३ क. ख. °रार्षम्। गायत्री। ऐन्द्री। रात्रि°; घ. झ. ट. ठ. ड. °रार्षम्। बृहत्यैन्द्री। रात्रि°; च. °रार्ष-रात्रि° बृहत्यैन्द्री. ४ क. ख. घ. झ. ट. ठ. ड. वो युष्माकमुपकर°; च. °ताय (वो) युष्माकमुपाक° प. ५ घ. ट. सुसीप्रसुह°. ६ क. ख. घ. झ. ट. ठ. ड. सुनसं वन्द्र°; च. सुनासं च °न ७ क. ख. घ. झ. ट. ड. 'तर्पयामह इति' नास्ति; च. तर्पयामह इति. ८ च. अहिसत्रकं° छ. ६ च. सृष्ट° स्पृ. ९ घ. ट. क्षुभंते; ठ. ड. क्षुंभते. १० ग. ज. घ. ट. क्षुम्पं. ११ क. ख. ४ (१६); ग. ६०/१८; ठ. ड. °न्याय्यम्। इति निरुक्तटीकायां पञ्चमाध्याये षोडशः खण्डः; इतरेष्वङ्को नास्ति. १२ छ. °स्फुराति; त. °स्फुरसि कदा° ति; द. स्फुरसि. १३ क. ख. छ. त. द. शृणोति. १४ क. ख. ५ (१७); छ. त. १९. द. ५.

'कदा मर्तमराधसम्' इति । गोतमस्येयमार्षम् । उष्णिक्[2] । ऐन्द्री । तार्तीयसवनिकेषूक्थपर्यायेषु ब्राह्मणाच्छंसिनः शस्त्रे 'क्षुम्पम्' इत्यस्य विनियुक्ता [ आश्व० श्रौ० ७ । ८ ] । कदा कस्मिन् काले मर्तं मनुष्यम् अना[3]राधयन्तं यस्त-मिन्द्रं नाराधयति स्तुत्या हविषा च तं क[4]दा पादेन अवस्फुरत्[5] अवस्फु-रिष्यति अभिहिंसिष्यति स इन्द्रः । 'स्फुर[6]ति स्फुलति' इति वधकर्मसु पठितम् [ निघ०२।१९] । किंच । कदा नः कदास्माकं परिचरमाणानां स्तुतिभिर्हविर्भिश्च शुश्रवत्[7] श्रोष्यति गिरः स इन्द्रः अङ्ग । क्षिप्रमित्यर्थः । कदास्माकं परिचरितॄणामिन्द्रः श्रोष्यति गिरः श्रुत्वा च समर्धयिष्यत्याशिषः । अनाराधयितॄंश्च[8] कदा पादेनाभिहनिष्यति । कदानाराधयित्राराध-यित्रोर्विशेषं ज्ञास्यतीत्यभिप्रायः । स्वरूपेण तावदेषोऽस्य मन्त्रस्यार्थो मया लक्ष्यते । भाष्यं पुनरत्र 'लोकः पादेन क्षुम्पमिवावस्फु[9]रसि' इत्येवमधीते । तथाच 'कदा नः शृणोति गिरः' इति । तदेतत् 'क्षुम्पमिवावस्फु[10]रसि' 'शृणोति गिरः' इत्यनयोर्भाष्यवाक्ययोः पुरुषवैलक्षण्याद्दुर्योज्[11]ो मन्त्रार्थ इति । 'अवस्फुरसि' इति मध्यमपुरुषयोगः प्रत्यक्षकृतलक्षणाभिसंबन्धी मन्त्रस्य । 'कदा नः शृणोति गिर[12]ः इन्द्रः' इत्येतत्परोक्षकृतलक्षणम्[13] । एव-मेतद्भाष्यं दुर्योज्यं यद्येष भाष्यस्य सम्यक्पाठः । अथ पुनरसम्यक्पाठस्ततः[14] सम्यक्पाठोऽत्रा[15]न्वेष्टव्यः । अहं तु लक्षये । यथैष मया मन्त्रो व्याख्यातः स एव सम्यक्पाठः स्यात् 'पादेन क्षुम्पमिवावस्फु[16]रिष्यति' 'श्रोष्यति च गिरः' इति । तथाहि मन्त्रार्थस्याविरोधो लक्ष्यते । सूक्तेऽपि चास्मिन् काश्चि-त्परोक्षकृता ऋचः काश्चित्प्रत्यक्षकृताः । अतोऽपि दुरवधारोऽस्य भाष्य-

---

१ क. ख. घ. झ. ट. 'धसं॰ इन्द्रो अङ्ग । गोत°; ठ. ड. कदा मर्तमिति. २ च. उष्णिक्ᵥतार्ती° ऐन्द्री. ३ क. ख. घ. झ. ट. ठ. ड. °र्थं अराधसम-नारा°; च. °र्थ्यंᵥअनारा° अराधसं. ४ क. ख. घ. झ. पदा; ट. पदा° क. ५ ग. ज. °वस्फुरत् स्फुरि°; च. °वस्फरत्ᵥस्फरि° अव. ६ घ. ट. ठ. ड. स्फुरयति. ७ च. सुश्र°. ८ घ. झ. अनाराद्धृंश्च; ट. अनाराद्धृंश्च धयितॄं; ठ. ड. अनाराद्धं च. ९ च. 'वस्फर°; ठ. ड. °वस्फुरिष्यति. १० च. ज. °वस्फर°. ११ क. ख. घ. झ. ट. ठ. ड. दुर्योज्यो; च. दुर्योजो° ज्यो. १२ क. ख. घ. झ. ट. ठ. ड. °ति च गिर इन्द्रे°. १३ घ. झ. ठ. ठ. ड. लक्षणः; च. लक्षणम्°ः. १४ क. ख. घ. झ. ट. ठ. ड. 'ततः' नास्ति; च. ततः. १५ क. ख. घ. झ. ट. ठ. ड. 'अत्र' नास्ति. १६ च. °वस्फरि°.

कारस्याभिप्रायः। अहिच्छत्रकं हि पादेन स्पृष्टमात्रं शीर्यते। तथात्रानाराधयितुर्विनाशोऽभीष्ट इति 'क्षुम्प' शब्देनाहिच्छत्रकमभिधीयत इत्युपपद्यते।

'निचुम्पुणः' (६२) इत्यनवगतमनेकार्थम्। 'निचुम्पुणः सोमो भवति' इत्यभिधेयवचनम्। 'निचान्तपृणः' इति शब्दसमाधिः। स हि निचान्तो भक्षितः 'प्रीणाति'॥ १७॥

---

**पत्नीवन्तः सुता इम उशन्तो यन्ति वीतये। अपां जग्मिर्निचुम्पुणः (ऋ० सं० ८। ९३। २२)॥ पत्नीवन्तः सुता इमेऽद्भिः सोमाः कामयमाना यन्ति वीतये पानायापां गन्ता निचुम्पुणः समुद्रोऽपि निचुम्पुण उच्यते निचमनेन पूर्यतेऽवभृथोऽपि निचुम्पुण उच्यते नीचैरस्मिन् क्वणन्ति नीचैर्दधतीति वा। अवभृथ निचुम्पुणेत्यपि निगमो भवति। निचुम्पुण निचुङ्कुणेति च। पदिर्गन्तुर्भवति यत्पद्यते॥ १८॥**

---

'पत्नीवन्तः सुता इमे' इति। सुकक्षो नाम आङ्गिरसस्तस्येयमार्षम्। रात्रिपर्यायेषु मध्यमे पर्याये होतुः शस्त्रे विनियुक्ता (आश्व० श्रौ० ६। ४)। पत्नीवन्तः पत्नीभिरद्भिस्तद्वन्तः सुता अभिषुता इमे सोमा उशन्तः कामयमाना इव यन्ति देवान् प्रति वीतये। पानार्थं कामयमानाः। कथं नामास्मान् देवाः पिबेयुरित्येतमर्थं कामयमाना इव यन्ति। किमेतदेव। नेत्युच्यते। पुनः पुनरेष निचुम्पुणः सोमो हि अपां वीर्येण सहितस्तासु तासु क्रियासु प्रदीयमानोऽस्माभिर्देवान् प्रति

'निचुम्पुणः' इत्यस्य

---

१ क. ख. घ. झ. ट. ठ. ड. °छत्रमभि°; च °छत्रकम°. २ क. ख. घ. झ. ट. ठ. ड. 'इत्युपपद्यते' नास्ति; च. इत्युपपद्यते. ३ क. ख. घ. झ. ट. ठ. ड. °कार्थं च. ४ क. ख. ५ (१७); ग. ६२; ठ. ड. °प्रीणाति। इति निरुक्तटीकायां पञ्चमाध्याये सप्तदशः खण्डः. ५ क. ख. ६ (१८); छ. त. २; द. ६. ६ क. ख. घ. झ. ट. °इमे०० निचुम्पुणः; ग. ज. 'इति' नास्ति; ठ. ड. पत्नीवन्त इति. ७ घ. झ. ठ. ड. श्रुतकक्षो; ट. श्रुतकक्षो° सु. ८ क. ख. घ. झ. ट. ठ. ड. °मार्षम्। गायत्री। ऐन्द्री। रा°; च. °मार्षम्। रा° गायत्री ऐन्द्री. ९ घ. झ. ट. ठ. ड. पीतये. १० घ. झ. ट. ठ. ड. पानाय यन्ति कथं°; च. पानाय कामयमानाः° यन्ति; ग. ज. 'पानाय' नास्ति. ११ क. ख. घ. झ. ट. ठ. ड. °त्येवम°. १२ क. ख. घ. झ. ट. ठ. ड. 'हि' नास्ति; च. °हि°.

जग्मिः एव भवति गन्तैव भविष्यति । एवमिह सोमाधिकारात् 'निचुम्पुण'-शब्देन सोम उच्यत इत्युपपद्यते ।

'समुद्रोऽपि निचुम्पुण उच्यते' । स हि 'निचमनेन' उदकेन 'पूर्यते' । उदकं हि निचम्यत[1] इति निचमनम् । मृग्योऽत्र निगमः ।

'अवभृथोऽपि निचुम्पुण उच्यते' । नीचैरस्मिन्[2] 'क्वणन्ति' शब्दं कुर्वन्ति । तत्र ह्युक्तम् 'अवभृथेष्ट्योपांश्वेव[3] चरन्ति' इति निचुम्पुणः । अथ 'वा नीचैः' अस्मिन्यज्ञपात्राणि 'दधतीति' निचुम्पुणः । तानि हि तत्राप्सु निधीयन्ते । 'अवभृथ निचुम्पुण निचेरुरसि[4] निचुम्पुणो गृहं गृहोऽव नो देवैर्देवकृतमेनो यक्ष्यव मर्तैर्मर्त्यकृतं चिकित्वानुरोरा नो देव रिषस्पाहि' । अनेनाभिसाद्याप्सु प्रह्रियन्ते सोमपात्राणि ।

अवभृथार्थे निचुम्पुणशब्दः

हे अवभृथदेवते[5] वरुण नीचक्वणन निचेरुरसि नीचैश्चरणशीलोऽसि । निचुम्पुणो नीचक्वणनो भूत्वा गृहे गृहे यज्ञगृहेऽवतिष्ठसे । स त्वमेवंगुणविशिष्टः अत्र नो देवैर्देवकृतमेनो यक्षि । अवयक्षि नो देवैः सहितो देवकृतं देवनिमित्तं देवापराधजमेनः । अवयक्षि मर्त्यैः सहितो मर्त्यकृतं मनुष्यकृतमेनः । उरोर्महतोऽपि[6] देवरोषणादस्मात्पाहि[7] । एवमत्र 'निचुम्पुण' शब्देनावभृथ उच्यते । निचुङ्कुणोऽप्यनेनैव व्याख्यातः ।

'पदिः' (६३) इत्यनवगतम् । 'गन्तुः' एष निर्देशः कृतो 'भवति' । 'यत्पद्यते' यस्मादसौ[8] पद्यते । गच्छतीत्यर्थः । अभिधेयः पक्षी । स हि नित्यकालमेव पतितो भवति[9] ॥ १८ ॥

---

सुगुरसत्सुहिरण्यः स्वश्वो बृहदस्मै वय इन्द्रो दधाति । यस्त्वायन्तं वसुना प्रातरित्वो मुक्षीजयेव पदिमुत्सिनाति (ऋ०

---

१ ग. ज. निवस्यत इ°; च. निवस्यत° चम्य. २ ग. ज. °स्मिन् कस्मिन् क°. ३ ग. ज. भृष्टौ ध्वानेन भवतीति नि°; च. °भृथेष्टौ उपांश्वेव चरं ध्वनेतीति नि°. ४ ग. च. ज. थ. झ. ट. ठ. ड. °रसीत्यनेन°. ५ क. ख. घ. झ. ट. ठ. ड. अवभृथ अवभृथदे°; च. हे अव° अवभृथ. ६ क. ख. घ. झ. ट. ठ. ड. पुरुराव्णो मह°; च. उरोर्म° पुरुराव्णो म. ७ क. ख. घ. झ. ट. ठ. ड. °दस्मात्पा°. ८ च. यस्मायसौ° इ. ९ क. ख. ६ (१८); ग. ७२/२०; ठ. ड. °भवति । इति नैरुक्तटीकायां पञ्चमाध्याये अष्टादशः खण्डः; इतरेष्वङ्को नास्ति.

सं० १ । १२५ । २ ) ॥ सुगुर्भवति सुहिरण्यः स्वश्वो महच्चास्मै वय इन्द्रो दधाति यस्त्वायन्तमन्नेन प्रातरागामिन्नतिथे'। मुक्षीजयेव पदिमुत्सिनाति। कुमारो मुक्षीजा मोचनाच्च सयनाच्च ततनाच्च पादुः पद्यतेः । आविः स्वः कृणुते गूहते बुसं स पादुरस्य निर्णिजो न मुच्यते । आविः कुरुते भासमादित्यो गूहते बुसं बुसमित्युदकनाम ब्रवीतेः शब्दकर्मणो भ्रंसतेर्वा यद्वर्षन्पातयत्युदकं रश्मिभिस्तत्प्रत्यादत्ते ॥ १९ ॥

इति पञ्चमाध्यायस्य तृतीयः पादः ।

---

सुगुरसत्सुहिरण्य इति। कक्षीवत आर्षम्। स एव सुगुर्भवति शोभनगुर्भवति । स एव च सुहिरण्यो भवति। स एव च स्वश्वो भवति । बृहच्च महच्च अस्मै वयः अन्नम् इन्द्रो दधाति ददाति । आह। यस्य किमिति। उच्यते। यस्त्वा यन्तं वसुना प्रातरित्वः। प्रातरागामिन्नतिथे। स हि प्रातःप्रातरन्यानि गृहाण्यभ्येति। तेनैवमामन्त्र्यते ' प्रातरित्वः ' इति । यन्तम् अध्वानं वसुना अन्नेन क्षुधा बिभ्रस्यमानं प्राणं मुक्षीजयेव पाशयेव कुमारः पदिं पतितारं पक्षिणम् उत्सिनाति उद्गम्य सिनाति बध्नाति।प्राणांस्त्वयि संनियच्छतीत्यर्थः । यथा ह्यतिथिरध्वगो भवति स एव क्षुवि-

' पदिः इत्यस्य '

---

१ छ. 'तिथेर्मुक्षी°; त. °तिथेर्मुक्षी°: । मु. २ द. पादुष्पद्य°: प. ३ त.द. आविष्कुरु°. ४ छ. त. द. ध. भ्रंशते°. ५ क ख. ७ (१९); त. २१; द. ९. ६ ङ. थ. ध. 'इति० पादः' नास्ति; छ. तृतीयः पादः; त. पञ्चमाध्याये तृती°; द. इति नैरुक्तस्य पञ्च°. ७ घ. झ. ट. °रण्यः०० पदिमुत्सिनाति । कक्षी°. ८ घ. झ. ट. ठ. ड. °र्षम् । त्रिष्टुप् । स्वनयस्य दानस्तुतिः। स°; च. र्षं° स° त्रिष्टुप् स्वनयस्य दानस्तुतिः. ९ क. ख. घ. झ. ट. ठ. ड. ' भवति ' नास्ति; च. भवति. १० क. ख. घ. झ. ट. ठ. ड. ' च ' नास्ति. ११ क. ख. घ. झ. ट. ठ. ड. ' च ' नास्ति; च. च. १२ क. ख. घ. झ. ट. ठ. ड. आयन्तम्°; च. ्यन्तम्° आ. १३ क. ख. घ. झ. ट. ठ. ड. क्षुदाविप्रशमनेन प्राणरक्षणेन मुक्षी°; ग. ज. क्षुधा बिभ्रष्यमा°; च. क्षुधा बिभ्रस्यमानं प्राणं मुक्षी° विप्रशमनेन प्राणरक्षणेन. १४ व. ट. उद्गमृतिनातिबध्ना°, १५ क. ख. घ. झ. ट. ठ. ड. पतन्; च. एवं° पतन्.

तोऽन्नसङ्गेन[1] कस्यचिद्गृहिणो गृहेऽवातिष्ठत एवमेतत्स्यात् । एवमत्र पक्षी 'पदि' शब्देनोच्यते । स ह्यभि[2]क्रममाणः पाश्यया बध्यत इत्युपपद्यते ।

'मुक्षीजा मोचनाच्च'। सा ह्येवं[3] मुच्यते पक्षिणः पादे । 'सयनाच्च'। सीयते बध्यते[4] हि तया पक्षी । 'ततनाच्च'। सा हि पक्षिणो बन्धार्थं[5] तन्यते । एताभ्यः क्रियाभ्यो यथासंभवं मुक्षीजा इत्येतदभिधानं भवति ।

'पादुः' इत्यस्य — 'पादुः' (६४) इत्यनवगतम् । 'पद्यतेः' इत्यर्थप्रतीतिः[6] । 'सा ते जीवातुरुत तस्य विद्धि[7] मा स्मैतादृगप गूहः समर्ये । आविः स्वः कृणुते गूहते बुसं स पादुरस्य निर्णिजो न मुच्यते[8]' (ऋ० सं० १० । २७ । २४ ) ॥ वसुक्रस्यैन्द्रस्यार्षम्[9] । महाव्रते मरुत्वतीये शस्त्रे[10] शस्यते (ऐ० आ० ५ । १ । १ ) । हे यजमान सा ते तव जीवातुः जीविका यास्य भगवतः सूर्यस्य तापप्रकाशवृष्ट्युदयास्तमयरसादानादिलक्षणा[11] प्रवृत्तिः । अनेन सौर्येण कर्मणा सर्वभूतानि त्वं च जीवसि[12] इत्यभिप्रायः । यत एवमथैतस्मात्कारणाद्ब्रवीमि । तस्य सूर्यस्य विद्धि विजानीहि यस्त्वया स्तुतिहविर्दानादिलक्षणैः[13] प्रत्युपकारः कर्तव्यः । मा त्वम् अस्मै सूर्याय तादृक्[14] तादृशमुपकारम् अपगूहः[15] मा संवृतं कार्षीः । प्रत्युपकारायास्मै त्वमभ्युद्यच्छस्वेत्यभिप्रायः । अपि च समर्ये संग्रामे एतस्मिंस्ते मृत्युना सह वर्तमाने सर्वभूतानाम् । श्वोऽद्य वा म्रियेथाः । को हि तद्वेद कदा[16] कस्य मृत्युरिति । स त्वं तत्कृतानि शोभनानि कार्याणि मन्यमानः शीघ्रं प्रत्युपकुरुष्वास्मै सूर्यायेत्यभिप्रायः । आह । का पुनः सूर्यस्य प्रवृत्तिर्या जीवातु-

---

१ क. ख. घ. झ. ट. ठ. ड. °संयोगेन; च. °संगे° यो. २ क. ख. घ. झ. ट. ह्यतिक्र°. ३ क. ख. घ. झ. ट. ह्यनमु°; च. ह्येवमु °ह्य; ठ. ड. °सा हि पक्षिणो बधार्थं तन्य°. ४ घ. बध्यते । बध्यते हि°; च. बध्यते॰ हि° बध्यते; झ. बध्यते । बध्यते हि°; ट. बध्यते । बध्यते हि°. ५ क. ख. घ. झ. बधार्थं°; ट. वैधार्थं° बं. ६ ग. °तीतिः ।७३। सा°. ७ ग. ज. विद्धि । वसु°; घ. ट. विद्धि॰ न मुच्यते. ८ च. °च्यते । इति वसु°. ९ क. ख. घ. झ. ट. ठ. ड. क्रस्येयमार्षं । ऐन्द्री । त्रिष्टुप् । महा°; ग. °क्रस्येन्द्र°; च. °क्रस्येन्द्रस्यार्षं । ॰ महा° ऐन्द्री । त्रिष्टुप्. १० क. ख. घ. झ. ट. ठ. ड. 'शस्त्रे' नास्ति. ११ च. °वृष्ट्युद° ष्टयु. १२ क. ख. घ. झ. ट. ठ. ड. जीवसीत्य°; घ. जीवसि इ° सि. १३ ग. ज. °लक्षणं. १४ क. ख. घ. झ. ट. ठ. ड. एतादृक् एता°; च. तां (एता) दृक् तां (एता). १५ ग. ज. °कारं मागूहः; च. °कारं मागूहः° र. १६ क. ख. घ. झ. ट. ठ. ड. कस्य कदा. च. कदा कस्य.

रिति । आविः स्वः कृणुते[1] गूहते बुसम् । आविःकुरुते प्रकाशीकरोति स्वभासा । सर्वमिदमुपभासितं व्यवहाराय कल्पते । स्वः आदित्यः गूहते संवृणोति रश्मिभिः बुसमुदकम् । किंच । स पादुः तत्पदनं तद्गमनमवभासनेन[2] च रसादानादिकर्तुः अस्य सूर्यस्य निर्णिजः[3] उपनिर्णेजयितुः । तमःपङ्कदिग्धानि हि[4] रूपाणि स्वेन प्रकाशोदकेन धौतानीव करोतीति निर्णिक् सूर्यः । तस्य निर्णिजो[5] न मुच्यते[6] । नोपरमतँ[7] इत्यर्थः । यत एवमयमद्य च श्वश्चोपकारे प्रवृत्तोऽतः प्रत्युपकुरुष्वास्मा इत्यभिप्रायः । एवमत्र शब्दार्थोपपत्तेः ' पादुः पदनम् ' इत्युपपद्यते । ' बुसमित्युदकनाम ब्रवीतेः ' शब्दार्थस्य । तद्धि शब्दवद्भवति । ' भ्रंसतेर्वा ' । तद्धि भ्रस्यते मेघात् । ' यद्वर्षन्पातयत्युदकम् ' आदित्यः ' तद्रश्मिभिः प्रत्यादत्ते ' इति समासतो भाष्यकारेणायमस्यार्धर्चस्यार्थ उक्तः ॥ १९[8] ॥

दशमस्या[9]ध्यायस्य तृतीयः पादः समाप्तः ।

---

**वृकश्चन्द्रमा भवति विवृतज्योतिष्को वा विकृतज्योतिष्को वा विक्रान्तज्योतिष्को वा ॥२०॥**[10]

---

' वृकः ' ( ६५ ) इत्यनवगतमनेकार्थं च । ' वृकः[11] ' तावत् ' चन्द्रमा भवति ' । स हि ' विवृतज्योतिष्कः ' प्रकाश[12]ज्योतिष्को भवति । तस्मात् वृकः । अथ ' वा विकृतज्योतिष्कः ' इति वृकः । तद्धि तस्य विकृतं ज्योतिः [13]शीतत्वात् इतराण्युष्णानि ज्योतींषि सूर्यादीन्यपेक्ष्य । अथ ' वा

१ क. ख. घ. झ. ट. आविष्कु°. २ च. तद्गमनं°. ३ ग. ज. °निर्णिज°. ४ क. ख. घ. झ. ट. ठ. ड. °ग्धानि स्वरूपा°; च. हि° स्व. ५ च. निर्निजो. ६ घ. झ. ट. ठ. ड. मुच्यते। अयं नकारो निषेधार्थीयः । लोकानामुपकारार्थं गमनं न मुच्यते । नोप°; च. मुच्यते । नोप° अर्थं न ०००० न मुच्यते. ७ क. ख. घ. झ. ट. ठ. ड. °रमतीत्यर्थः; च. °रमतं इ° ति. ८ क. ख. ७ (१९); ग. २१; इतरेष्वङ्को नास्ति. ९ क. ख. इति निरुक्तवृत्तौ दश°; घ. झ. ट. दुर्गवृत्तौ दशमस्य तृतीयः पादः; ठ. ड. इति दशमाध्यायस्य तृतीयः पादः । इति निरुक्तटीकायां पञ्चमाध्याये एकोनविंशतिः खण्डः. १० क. ख. १ (२०); छ. त. २२; द. १. ११ ठ. ड. वृकश्चन्द्रमा भवतीति । वृकः. १२ क. ख. घ. झ. ट. प्रकाशितज्यो°. १३ ग. ज. सीत°; च. सीत° शी.

विक्रान्तज्योतिष्कः ' वृकः । तस्य हि विक्रान्तं ज्योतिरितरेभ्यो ग्रहन-क्षत्रतारकादिभ्यो ज्योतिर्भ्यः सकाशात् । एते[2] शब्दसमाधयः ॥ २० ॥

---

अरुणो मासकृद्वृकः पथा यन्तं ददर्श हि । उज्जिहीते निचाय्या तष्टेव पृष्ट्यामयी वित्तं मे अस्य रोदसी ( ऋ० सं० १।१०५। १८ )॥ अरुण आरोचनो मासकृन्मासानां चार्धमासानां च कर्ता भवति चन्द्रमा वृकः पथा यन्तं ददर्श नक्षत्रगणमभिजिहीते निचाय्य येन येन योक्ष्यमाणो भवति चन्द्रमास्तक्ष्णुवन्निव पृष्ठरोगी जानीतं मेऽस्य द्यावापृथिव्यावित्यादित्योऽपि वृक उच्यते यदावृङ्क्ते[3] । अजोहवीदश्विना वर्त्तिका वामास्नो यत्सीममुञ्चतं वृकस्य । आह्वयदुषा अश्विनावादित्येनाभिग्रस्ता तामश्विनौ प्रमुमुचतुरि-त्याख्यानं श्वापि वृक उच्यते विकर्तनात् । वृकश्चिदस्य वारण उरामथिः । उरणमथिः । उरण ऊर्णावान् भवत्यूर्णा[5] पुनर्वृणोते-रूर्णोतेर्वा वृद्धवाशिन्यपि[6] वृक्युच्यते । शतं मेषान्वृक्ये चक्षदान-मृज्राश्वं तं पितान्धं चकारेत्यपि निगमो भवति जोषवाकमित्य-विज्ञातनामधेयं जोषयितव्यं भवति ॥ २१[7] ॥

---

'अरुणो मासकृद्वृकः' इति । त्रितस्येयमार्ष्यस्य कूपे पतितस्य कुत्सस्य वार्षम्[9] । पङ्क्तिः[10] । अरुणः आरोचनः आभि-मुख्येन सर्वस्य जगतो रोचयिता स्वया ज्योत्स्नया 'मासकृन्मासानामर्धमासानां च कर्ता' । मास-

'वृकः' इत्यस्य

शब्दसंबन्धादर्धमासशब्दो[11]ऽध्याहृतस्तानपि ह्यसौ निर्मिमीत इति । चन्द्रमा

---

१ घ. झ. ट. ठ. ड. एताः; च. एतेँ° ताः २ क. ख. १ (२०); ग. ७४/२२; ठ. ड. °धयः । इति निरुक्तटीकायां पञ्चमाध्याये विंशतिः खण्डः; इतरेष्वङ्को नास्ति. ३ क. ख. द. °वृङ्क्ते । २ ; अजो°; छ. त. °वृङ्क्ते ।२३। अजो°. ४ छ. आँह° अ; त. द. अव्ह°. ५ त. द. °त्यूर्णाः पु°. ६ ध. °वासिन्य°. ७ क. ख. ३ ( २१ ); छ. त. २४; द. ३. ८ घ. झ. ट. 'द्वृकः ००० रोदसी । त्रि°. ९ ग. ज. वा पाङ्क्तिरार्षम्। अरु°; च. वा पाङ्क्तिरार्षम् । अरु°. १० क. ख. घ. झ. ट. ठ. ड. पङ्क्तिः । वैश्वदेवी । अरु°. ११ घ. झ. ट. 'शब्दोऽत्राध्या°; च. शब्दोऽ-ध्या° त्रा.

५

१०

१५

२०

२५

३०

वृकः । आह । किं करोतीति । उच्यते । पथा यन्तं ददर्श हि । नक्षत्रमण्डलस्याधोऽवस्थितः पथा स्वेन मार्गेण यन्तं ददर्श पश्यति नक्षत्रगणम् । न मामधः कूपे पतितं पश्यति । यदि नाम पश्येत्कथंचिदवश्यमस्यास्त्रायेतापदो मामित्यभिप्रायः । किंच । उज्जिहीते निचाय्या तष्टेव पृष्ट्यामयी । यथा कश्चित्तष्टा तक्षा पृष्ठरोगी कंचिद्वृक्षं[1] तक्ष्णुवन् उच्छिन्दन्[2] स्यादयं योग्यो न वेत्यनेनोत्कीर्णो[3] भूत्वा निचाययति पश्यत्येवं चन्द्रमा अप्युज्जिहीते येन[4] येन नक्षत्रेण योक्ष्यमाणो भवति । अमुना मयाद्य योक्तव्यमित्येवं निचाय्य दृष्ट्वा स्वेन दर्शनेन ततस्तदेवाभिजिहीते । तेनैव सहोदेतीत्यर्थः । एवमस्य येनार्थस्तमयमादरेणोर्ध्वज्योत्स्नो[5] हि भूत्वा पश्यति । मया त्वस्यार्थो[6] नास्तीति माम्[7] न पश्यत्यधोऽपि वर्तमानम् । यत एवमतो ब्रवीमि । युवामपि तावत् हे रोदसी वित्तं विजानीतम् अस्यार्तिप्रलापस्य[8] योऽर्थः । विदित्वा चोद्धरतं[9] मामस्मात्कूपादित्यभिप्रायः । एवमत्रारुणशब्दान्मासकृच्छब्दाच्च 'वृकश्चन्द्रमाः' । चन्द्रमःशब्दाच्च नक्षत्रगणोऽध्याहृतस्तथार्थोपपत्त्यविरोधात् । येषां तु शाखिनां 'मा सकृत्' इत्येतत्पदद्वयं भवति तेषां सकृन्मां ददर्श चन्द्रमाः । यदि पुनःपुनः पश्येदवश्यं मोचयेदस्या आपदः । पथा[10] तु यन्तं नक्षत्रगणं पुनःपुनः पश्यति न मामित्येवमादि योज्यम् ।

'मा सकृत्' इति पदद्वये ऋचोऽर्थः

'आदित्योऽपि वृक उच्यते यदावृङ्क्ते' । यस्मादसौ तम आवृङ्क्ते तस्माद्वृकः[11] ।

---

१ घ. झ. ट. ठ. ड. कंचिदक्षं. २ ग. ज. °छिन्दन् स्य (ग. स्थ) देयं यो°; घ. ड. °छिन्द्नास्यदेवयं यो°; झ. °छिदन् स्येरेछयं यो°; ठ. °छिन्दन् पर्णोदयं योग्यो°. ३ क. ख. घ. झ. ट. ड. °नोत्कटो भू°; ठ. °नोत्कटो° र्णो; ग. ज. °नोत्करणो. ४ क. ख. घ. झ. ट. ठ. ड. 'येन' सकृदेव. ५ क. ख. घ. झ. ट. ठ. ड. °र्ध्वकायो हि°; ग. ज. °र्ध्वयायो हि°; च. र्ध्वज्योत्स्नो° कायो. ६ घ. झ. ट. ठ. ड. स्वस्यार्थो. ७ क. ख. ग. ज. मा. ८ क. ख. घ. झ. ट. ठ. ड. अस्य त्रितस्यार्तिप्रला°; च. °अस्यार्तिप्र° त्रितस्यार्ति. ९ घ. झ. ट. ठ. ड. चाभ्युद्धरतं. १० घ. झ. ट. ठ. ड. किंतु यः पथानुयन्तं°. ११ क. ख. °वृकः । ५ । अजोह°; ग. °वृकः । २१/२३ । अजोह°.

'अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुञ्चतं वृकस्य । वि जयुषा ययथुः सान्वद्रेर्जातं विश्वाचो अहतं विषेण'

आदित्यार्थे वृकशब्दः

( ऋ० सं० १ । ११७ । १६ )॥ कक्षीवत आर्षम्। प्रातरनुवाकाश्विनयोः शस्यते (आश्व० श्रौ० ४।१५ ) । अजोहवीत् आह्वयत् आहूतवती उषाः हे अश्विनौ युवां वर्तनशीला वर्तिका । कदा पुनराह्वयदिति । उच्यते । आस्नः आस्यादेनां यदा युवाममुञ्चतं वृकस्य आदित्यस्य । 'उषाः' किल 'आदित्येनाभिग्रस्ताश्विनौ' आहूतवती । तामश्विनौ प्रमोचितवन्तौ 'इत्याख्यानम्' एतस्मिन्नर्थे वेदयन्ते निदानविदो बह्वृचास्तदप्युपेक्षितव्यं मन्त्रार्थनिर्णयाय । एतच्च युवयोर्महाभाग्यम् । किंचान्यत् । वि जयुषा ययथुः सान्वद्रेः । विजयुषा विजयमिच्छन्तौ युवां ययथुः गच्छथः सानु समुच्छ्रितम् अद्रेः मेघस्य शिखरमारुह्य । किंच । युवामेव जातमुपद्रवं दुर्भिक्षाख्यं कृत्स्नस्य जगतो विश्वाचो विश्वगञ्चनौ सर्वतोगती भूत्वा मेघजालेनेदं सर्वमभिप्रच्छाद्य ततः अहतं हतवन्तौ स्थः विषेण । उदकेनेत्यर्थः। यथास्मिन् वृकशब्देनादित्य उच्यते तथाख्यानादुपेक्षितव्यम् ।

'श्वापि वृक उच्यते विकर्तनात्'। विविधमसौ कृन्तति तस्माद् वृकः ।

श्वन्नर्थे वृकशब्दः

'वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति । सेमं नः स्तोमं जुजुषाण आ गहीन्द्र प्र चित्रया धिया' ( ऋ० सं० ८ । ६६ । ८ )॥

प्रगाथपुत्रस्य कलेरार्षम् । सतोबृहती । महाव्रते तृचाशीतिषु विनियुक्ता ( ऐ० आ० ५ । २ । ४ ) । वृकश्चित् वृकोऽपि श्वा सारमेयः अस्य इन्द्रस्य वियत एव वारणो वारयिता शत्रूणाम्। किमुतान्यान्युपकरणानि । उरामथिः उरणमथिः उरान् मेषान् यो मथ्नाति स उरामथिः । स पुनरस्येन्द्रस्य आभूषति वयुनेषु प्रज्ञानेषु । यदैवासौ विजानीत आभूर्षत्वयं

१ ग. च. ज. °वामिति । कक्षी°; घ. झ. ट. °वा००अहतं विषेण. २ क. ख. घ. झ. ट. ठ. ड. आर्षम् । आश्विनी । त्रिष्टुप् । प्रात°; च. आर्ष॰ प्रात° आश्विनी त्रिष्टुप्. ३ च. °योर्महा°. ४ ग. वृकः । ७६ । वृक°. ५ ग. ज. वारण इति । प्रगा°; घ. झ. ट. वारण उरामथिः०० चित्रया धिया. ६ घ. झ. ट. ठ. ड. °हती । ऐन्द्री । महा°; च. °हती । ॰महा° ऐन्द्री. ७ च. उरान्° ऊर्णावतो. ८ ग. च. ज. भूषयत्व°.

शत्रूनिति तदेवासावाभूषति । यस्य चैवं[1] सर्वोपकरणसंपत्स त्वं[2] हे इन्द्र इमम् अस्माकं स्तोमम् उपश्रुत्य आगहि आगच्छ इमं यज्ञं प्रकर्षेण चित्रया चायनीयया धियो[3] कमनीयया बुद्ध्या । सरमा हि देवशुनी श्रूयते । तत्पुत्रनप्तृभिश्च देवानां भवितव्यम् । तस्माच्छ्वापि वृक उच्यत इत्युपपद्यत इतरेषामारण्यकानां परिग्रहाभावात् । अस्य मन्त्रस्य पूर्वोऽर्धर्चः परोक्षकृतो वृकश्चिदस्येत्यस्मात्षष्ठीयोगात् । उत्तरः[4] प्रत्यक्षकृतः ' आगहीन्द्र ' इत्यस्मान्मध्यमपुरुषयोगात्संबोधनाच्च । देवता किल परोक्षा स्तूयमाना प्रत्यक्षीभवति । प्रत्यक्षापि च स्तूयमाना परोक्षीभवति । तदेतत्सर्वेष्वेवंलक्षणेषु मन्त्रेषूपेक्षितव्यम् ।

निगमप्रसक्तमुच्यते । ' उरण ऊर्णावान् ' । ऊर्णया तद्वान्[5] । ' ऊर्णा पुनर्वृणोतेः ' इति विग्रहप्रसक्तम् । ता अपि शीतत्राणार्थं[6] व्रियन्ते[7] । ' ऊर्णोतेर्वा ' आच्छादनार्थस्य । ताभिराच्छन्न उरणो भवति ।

' वृद्धवाशिन्यपि[8] वृक्युच्यते ' । यैषा वृद्धं वाशते[9] शिवा सापि वृक्युच्यते विकर्तनादेवं[10] । ' शतं मेषान्वृक्ये[11]

वृद्धवाशिन्यर्थे वृक्याः प्रयोगः

चक्षदानमृज्राश्वं तं पितान्धं चकार । तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन् ' (ऋ० सं० १ । ११६ । १६ ) ॥

अजोहवीदित्यनया समानार्थेयम् । शतं मेषान् वृक्ये शिवायै वाशिते[12] सति परितुष्टः चक्षत् व्यादिष्टवान् दानम् । येयमेवं शोभनमभिप्रस्थितानामस्माकमर्थसिद्धये वाशिते[13] तस्यै शतं मेषाणां दीयतामित्येवमाज्ञप्तवान्[14] ऋज्राश्वो नाम राजपुत्रः । तं च पुनरेवं व्यादिष्टवन्तमतिसाहसिकोऽयमिति पिता कुपितोऽभिशापेन अन्धं चकार ।

---

१ क. ख. घ. झ. ट. ठ. ड. तवैवं; च. चैवं° तवै. २ क. ख. घ. झ. ट. ठ. ड. °संपन्नस्त्वं हे इन्द्र स त्वं; च. संपत् (न्न ) स्त्वन् स त्वं हे इन्द्र~इम° स त्वं. ३ क. ख. घ. झ. ट. ठ. ड. कमनीयया धिया. ४ क. ख. घ. झ. ट. ठ. ड. उत्तरस्तु; च. उत्तर~प्रत्य° स्तु. ५ क. ख. घ. झ. ट. ठ. ड. तद्वान् भवति । ऊर्णा°; च. तद्वान् ~ऊर्णा° भवति. ६ च. सीत° शी. ७ क. ख. घ. झ. ट. ठ. विव्रियन्ते; च. °र्थं ~ व्रिय° वि. ८ ग. ज. °वासिन्य°; च. °वासिन्य° शि. ९ ग. ज. वासते; च. वासते° श. १० ग. °देव । ७७ । शतं°. ११ ग. ज. वृक्य इति; व्र. झ. ट. वृक्ये च१० भिषजावनर्वन्. १२ ग. ज. वासिते. १३ ग. ज. वासते. १४ क. ख. घ. झ. ट. ठ. ड. °माज्ञापितवा°.

कृतवानित्यर्थः । तस्मा एवमन्धीभूताय पितुरभिशापेन अक्षी अक्षिणी नासत्यौ अश्विनौ देवौ विचक्षे विगतदर्शनाय आधत्तं दस्रौ दर्शनीयावश्विनौ भिषजौ देवभिषजौ भयसादयितारौ । अनर्वन् चक्षुराधत्तम् अनाश्रितमन्यत्र क्वचित् । स्वप्रधानमित्यर्थः । एवमत्र मेषसंबन्धादाख्याने च तथार्थतोपपत्तिदर्शनात् 'वृद्धवाशिनी वृक्युच्यते' इत्युपपद्यते ।

'जोषवाकम्' ( ६६ ) इत्यनवगतम् । अविज्ञातनामधेयवचनम् । 'जोषयितव्यं भवति' इति शब्दसमाधिः । जोषयितव्यं ज्ञापयितव्यं परस्मै तद्भवत्यस्पष्टत्वात् ॥ २१ ॥

---

य इन्द्राग्नी सुतेषु वां स्तवत्तेष्वृताबृधा । जोषवाकं वदतः पज्रहोषिणा न देवा भसथश्चन ( ऋ० सं० ६ । ५९ । ४ ) ॥

य इन्द्राग्नी सुतेषु वां सोमेषु स्तौति तस्याश्नीथोऽथ योऽयं जोषवाकं वदति विजञ्जपः प्रार्जितहोषिणौ न देवौ तस्याश्नीथः कृत्तिः कृन्ततेर्यशो वान्नं वा । महीव कृत्तिः शरणा त इन्द्र । सुमहत्त इन्द्र शरणमन्तरिक्षे कृत्तिरिवेतीयमपीतरा कृत्तिरेतस्मादेव सूत्रमय्युपमार्थे वा । कृत्तिवासाः पिनाकहस्तोऽवततधन्वेत्यपि निगमो भवति । श्वघ्नी कितवो भवति स्वं हन्ति स्वं पुनराश्रितं भवति । कृतं न श्वघ्नी वि चिनोति देवने । कृतमिव श्वघ्नी विचिनोति देवने कितवः किं तवास्तीति शब्दानुकृतिः कृतवान्वाशीर्नामकः सममिति परिग्रहार्थीयं सर्वनामानुदात्तम् ॥ २२ ॥

---

१ क. ख. घ. झ. ट. ठ. ड. °नाय धत्तं; च. °नायाधत्तं° य. २ ग. ज. °वासिनी; च. °वासिनी° शि. ३ क. ख. घ झ. ट. ठ. ड. जोष इत्यन°. ४ क. ख. घ. झ. ट. ठ. ड. °नामधेयमित्यभिधेयवचनम्; च. नामधेयव° मित्यभिधेय. ५ क. ख. घ. झ. ट. ठ. ड. विज्ञाय°; ग. ज. 'ज्ञापयितव्यं' नास्ति; च. °तव्यं ज्ञाप° वि. ६ क. ख. ३ (२२); ग. २४; ठ. ड. इति निरुक्तटीकायां पञ्चमाध्याये एकविंशतिः खण्डः; इतरेष्वङ्को नास्ति. ७ स्तौति तेष्वन्नस्य वर्धयितारौ न तस्या° इति सायणगृहीतपाठः. ८ क. ख. छ. त. द. वा अन्नं. ९ छ. त. द. °न्तरिक्षं. १० क. ख. °मय्युप°; त. द. °मय्युप° ट्यु. ११ ड. थ. ध. कृत्तिं बसान आचर पिनाक बिभ्रदा गहीत्यपि°. १२ छ. त. °राशृतं; द. °राशृतं °शृ. १३ क. ख. ४ (२२); छ. त. २५; द. ४.

य इन्द्राग्नी सुतेषु वांमिति । भरद्वाजस्येयमार्षम् । बृहती । हे इन्द्राग्नी यो यजमानः सुतेषु अभिषुतेषु सोमेषु युवां स्तवत् स्तौति तेषु तेषु कर्मसु ऋतावृधा सत्यवर्धयितारौ यज्ञवर्धयितारौ उदकवर्धयितारौ वा तस्य युवामश्नीथः । स युवयोर्बहुमत इत्यभिप्रायः । अथ पुनर्योऽयं जोषवाकम् अविज्ञातं किमपि उपांशु वदति विजंजपः केवलमुदकतीरेऽवस्थितोऽन्यत्र वा । जपनशील एव न कर्मकारीत्यभिप्रायः । तस्य जोषवाकं वदतः हे प्रार्जितहोषिणौ प्रभूतयागौ । 'यदिन्द्रश्चाग्निश्च भूयिष्ठभाजौ देवतानां तस्माद्ब्राह्मणश्च राजा च भूयिष्ठभाजौ मनुष्याणाम्' ( मैत्रा० सं० ४ । ७ । ८ ) इति ह विज्ञायते । हे देवौ न भसथश्चन न कदाचिदपि तस्य हवींषि भक्षयथः । तेन युवयोर्नासौ बहुमत इत्यभिप्रायः । अत्र 'जोषवाकं वदतो न भसथः' इत्येतद् दृष्ट्वा 'यः सुतेषु सोमेषु स्तौति तस्य' भसथ इत्येतदध्याहृतं भाष्यकारेण । एवमत्र विजञ्जपस्य भक्षयितव्याभावाज्जपस्य चोपांशुस्वाभाव्यात् 'जोषवाक'-शब्दोऽविज्ञातनामधेयमित्युच्यते ।

'जोषवाकम्' इत्यस्य

'कृत्तिः' ( ६७ ) इत्यनवगतमनेकार्थं च । 'कृन्ततेः' इति धातुनिर्देशः । 'यशोऽन्नं वा' इत्यर्थवचनम् । कर्तनमिति न्याय्यम् । यशो हि द्विषतां मर्माणि कृन्तति । अन्नमप्यसम्यगुपयुक्तमायुरेव कृन्तति । 'तमु त्वा नूनमसुर प्रचेतसं राधो भागमिवेमहे । महीव कृत्तिः शरणा त इन्द्र प्र ते सुम्ना नो अश्नवन्' ( ऋ० सं० ८ । ९० । ६ ) ॥ नृमेधसः प्रियमेधसश्चेयमार्षम् । चतुर्विंशादिषु सौत्रिकेष्वहःसु माध्यन्दिने ब्राह्मणाच्छंसिनः शस्त्रे स्तोत्रियानुरूपवर्गे विनियुक्ता । तमु त्वा हे असुर प्रज्ञावन् प्रचेतसं विवृद्धप्रज्ञानं

'कृत्तिः' इत्यस्य

१ क. ख. घ. झ. ट. वां० भसथश्चन भर°; ठ. ड. य इन्द्राग्नी इति. २ क. ख. ग. ज. 'तेषु' सकृदेव. ३ ग. ज. 'यज्ञवर्धयितारौ' नास्ति; च. यज्ञस्य व°. ४ ग. ज. विविजञ्जपः; च. विविजञ्जपः. ५ ग. ज. प्रातर्जित°. ६ क. ख. घ. झ. ट. ठ. ड. °त्युपपद्यते. ७ ग. ज. द्विषमर्मा°. ८ ग. °ति । ७८ । तमु°. ९ ग. ज. प्रचेतसम् । नृमे°; घ. ट. प्र०सुम्ना मो अश्नवन्. १० च. सुम्नानो अश्नवम् न्वा. ११ क. ख. घ. झ. ट. ठ. ड. °मार्षम् । सतोबृहती । ऐन्द्री । चतु.° १२ च. सावित्रेष्व° त्रिके.

राधः धनं स्वमित्र पित्र्यं भागम् उत्पन्नं[1] प्रणयित्वादीमहे याचामहे । तं नो[2] देहि । स्थिरशरीराणां तदेतदस्तु नः । किंच । महीव कृत्तिः महदिव यशो महद्वा अन्नं शरणा शरणं गृहं ते तव हे इन्द्र यत् अन्तरिक्षलोके तदहं प्राश्नवम्[3] । तदहं सोमं सुन्वानस्तस्याभिषवकर्मणो माहाभाग्येन[4] येन त्वत्सायुज्यमश्नुयां देहपातोत्तरकालम् । इह चामुत्र चेत्येवं[5] नः फलद्वयमस्तु त्वत्त इत्यभिप्रायः । यशो हि विस्तीर्णं भवति । तेन हि गृहस्योपमानमुपपद्यते । यदनुप्रविष्टानामशनायापिपासे[6] न स्तस्तदहं तव गृहं वाश्नुयामित्येवमन्त्रेनो-[7][8]पपद्यते ।

‘इयमपीतरा कृत्तिरेतस्मादेव’ सूत्रमयी । कन्थेति या प्रसिद्धा साप्येतस्मादेव छन्ततेः । सा हि वस्त्रावयवैः कृत्तैर्ग्रथिता भवति । ‘उपमार्थे वा’ । चर्मापि कृत्तिरित्युच्यते । तयेतरा सूत्रमय्युपमीयते विकर्तनसामान्यात् । कृत्तिरिव कृत्तिः कन्था । ‘कृत्तिवासाः पिनाकहस्तोऽवततधन्वा’ इति । व्याख्यातोऽयमस्मिन्[9] निगमः ( निरु० ३ । ८ ) ।

‘महीव कृत्तिः’ इत्यत्र कृत्तिरुपमार्थे स्यात्

‘श्वघ्नी’ ( ६८ ) इत्यनवगतम् । ‘कितवो भवति’ इत्यभिधेयवचनम् । ‘स्वं हन्ति’ इति शब्दव्युत्पत्तिः । स्वंहा[10] इति न्याय्यम् । विग्रहप्रसक्तमुच्यते । ‘स्वं पुनराश्रितं[11] भवति’ तद्धि स्वामिनमाभिमुख्येन श्रितं[12] भवति स्वत्वेन[13] ।

‘श्वघ्नी’ इत्यस्य

‘कृतं न श्वघ्नी वि चिनोति[14] देवने संवर्गं यन्म-

१ व. झ. ट. ठ. ड. °त्पन्नप्रण°; च. °पन्नं प्रण° न. २ घ. झ. ट. तन्नो; च °तेनो० तन्नो; ठ. ड. तेनो० ३ क. ख. घ. झ. ट. ठ. ड. ०श्नवम् (घ. झ. ट. ठ. ड. ०श्नवन्) । किंच । ते तव सुम्ना सुम्नानि त्वत्संबन्धीनि सुखानि । त्वद्भोग्यानीत्यर्थः । यद्वा सुम्नानि सुखसाधनान्यप्सरःप्रभृतीनि प्राश्नु ( ठ ड. प्राप्नु ) यामहम् । तदहं०; च ०श्नवं० तदहं० किंच०० प्राश्नुयामहम्. ४ च. महा°. ५ क. ख. घ. झ. ट. ठ. ड. चैतन्नः°. ६ व. झ. ट. ठ. ड. °शनायापि°; च. °शनापि° या. ७ क. ख. घ. झ. ट. प्राश्नु°; च. वाश्नु° प्रा; ट. ड. प्राप्नुया°. ८ घ. झ. ट. ठ. ड. °मन्त्रेनाप्युप°. ९ क. ख. घ. झ. ट. ठ. ड. °स्मिन्नेऽध्याये नि°. १० च. स्वंहा° स्व; ज. स्वाहा. ११ ग. ज. °राशृतं; च. °राश्रितं° श्रि. १२ ग. ज. शृतं. १३ ग. °न । ८० । कृतं°. १४ ग. ज. °नोतीति । कृष्ण°; व. ट. °नोति देवने० नोत नूतनः.

घवा सूर्यं जयत् । न तत्ते अन्यो अनु वीर्यं शकन्न पुराणो मघवन्नोत नूतनः ' ( ऋ० सं० १० । ४३ । ५ ] ॥ कृष्णस्याङ्गिरसस्येयमार्षम्[1]। ऐन्द्री । जगती । तार्त्तीयसवनिके विनियुक्ता (आश्व० श्रौ० ६ । १)। उक्थपर्याये[2] ब्राह्मणाच्छंसिनः शस्त्रे[3] ( आश्व० श्रौ० ८ । ३ )। यथा[4] कृतादीनां दायानां मध्ये कितवः कृतं विचिनोति देवने आस्फारे[5]ऽपि नामात्र कृतं स्यात्ततो[6] जयेयमहमित्येवं मघवा इन्द्रः संवर्गम् उदकं[7] संवर्जयितारमन्तरिक्षे बहूनां मेघानां मध्ये विचिनोति कतमस्त्वेषां मेघानामुदकदाने समर्थ इति । तं[8] विज्ञाय यदजयत् यदपः[9] सूर्यं सुष्ठु ईरयितारमपां न तत्ते नं[10] चान्यः कश्चित् अनु वीर्यं शकत् । तत्र[11] वीरकर्म भावत्कमन्यः[12] कंश्चिदनुकर्तुमप्यशक्तः । नापि पुराणो नापि नूतनः । नव इत्यर्थः । न पूर्वे चक्रुर्नापरे करिष्यन्तीत्यभिप्रायः । कृतसंबन्धाद्देवनसंबन्धाच्च ' श्वघ्नी कितवः ' इत्युपपद्यते । अस्य मन्त्रस्य पूर्वोऽर्धर्चः परोक्षकृतः । स एवं[13] विपरिणमयितव्यः । अत्र चोक्तः समाधिः ।

निगमप्रसक्तमुच्यते । ' कितवः ' इत्यस्य शब्दस्य ' किं तवास्तीति ' एषा ' शब्दानुकृतिः ' । स हि नित्यकालमेव दिदेविषुः प्रतिदेवितृभिः कितवैः पृच्छ्यते किं तवास्तीति । तस्माच्छब्दानुकरणात्कितव एव स बभूव । अथवा ' कृतवान् ' अयं यथा स्यादित्येवमसावाशास्यते सुहृद्भिरन्यैः कितवैः सह[14] । तस्मादेवमाशासनात् ' आशीः 'निमित्त'नामकः ' कितव एवासौ बभूव ।

(margin: कितवशब्दस्य व्युत्पत्तिः)

१ ग. ज. ' ऐन्द्री ' नास्ति; च. °मार्षं । ˇजग °ऐन्द्री. २ क. ख. घ. झ. ट. ठ. ड. °निकेषु उक्थपर्यायेषु ब्रा°. ३ क. ख. घ. झ. ट. ठ. ड. °शस्त्रे विनियुक्ता । यथा° च. शस्त्रेˇ । यथा°; च. ४ क. ख. घ. झ. ट. ठ. ड. यथात्र कृ°; च. यथात्रेता° कृ° त्रकृ. ५ क. ख. घ. झ. ठ. ड. आस्तारे; ग. आस्युरे°; ज. आस्फरे; ट. आस्तारे° स्फा. ६ घ. झ. ट. ठ. ड. कृतं यत्स्यात्त°; च. कृतंˇस्या° यत्. ७ ग. ज. °दकं सं°; च. दकं स° क. ८ ग. ज. ' तं ' नास्ति. ९ क. ख. घ. झ. ट. ठ. ड. ' यदपः ' नास्ति;. च. °जयत यदपः सू°. १० क. ख. घ. झ. ट. ठ. ड. तवान्यः; च. नं चा° तवा. ११ क. ख. घ. झ. ट. ठ. ड. तद्वीर°; च. तत्र वी° त्. १२ क. ख. घ. झ. ट. ठ. ड. तावकमन्यः; ग. ज. भावात्क°; च. भावात्क° व. १३ घ. झ. ट. ठ. ड. एवं. १४ क. ख. घ. झ. ट. ठ. ड. °तवैः । स हि तस्मा; च. °तवैः सह । तस्मा° । स हि.

'समम्' (६८) इत्येतत् 'परिग्रहार्थीयं सर्वनाम'। तत्पुनरेतत् 'अनुदात्तम्'। 'त्वत्त्वनेमसमसिमेत्यनुच्चानि' इति ह्युक्तम् (निरु० १। ७)। विप्रतिपन्नस्वरत्वादत्र स्वरो भाष्यकारेणावधृतोऽनेकार्थताप्यस्य भवतीत्येतत्प्रदर्शितम् ॥ २२ ॥

—————

**मा नः समस्य दूढ्यः परिद्वेषसो अंहतिः। ऊर्मिर्न नावमा वधीत् (ऋ० सं० ८। ७५। ९)॥ मा नः सर्वस्य दुर्धियः पापधियः सर्वतो द्वेषसोऽहतिरूर्मिरिव नावमावधीदूर्मिरूर्णोतेर्नौः प्रणोत्तव्या भवति नमतेर्वा तत्कथमनुदात्तप्रकृति नाम स्याद् दृष्टव्ययं तु भवत्युतो समस्मिन्नाशिशीहि नो वसो इति सप्तम्यां शिशीतिर्दानकर्मा। उरुष्या णो अघायतः समस्मादिति पञ्चम्यामुरुष्यती रक्षाकर्माथापि प्रथमाबहुवचने। नभन्तामन्यके समे ॥ २३ ॥**

—————

मा नः समस्य दूढ्य इति। विरूप आङ्गिरस एतामाग्नेये सूक्ते ददर्श। दशरात्रस्य तृतीयेऽहनि प्रातःसवन आज्ये सूक्ते विनियुक्ता (आश्व० श्रौ० ७। १०)। हे भगवन्नग्ने युष्मत्प्रसादात् मा नो मास्मान् समस्य सर्वस्यैव दूढ्यः दुर्धियः पापधियः परिद्वेषसः

'समस्य' इत्यस्य

१ ग ज. अशीतिनत्वसमसिमेत्यनुच्चानीत्युक्तं। मसिमेत्यनुर्वानीतिह्युक्तं। विप्र°; च. श्री त्वत्त्वं(त्वन्नेम)समसिमनेमेत्यनुच्चानीत्युक्तं। विप्र°. २ क. ख. घ. झ. ट. ठ. ड. °दत्र भाष्यकारेण स्वरोऽवधृतः। पक्षेण चाप्यनेका°; ग. ज. °दत्र स्वरो भाष्यकारेण वानेकार्थ°; च. °दत्र स्वरो भाष्यकारेण °नेकार्थ° स्वरोऽवधृतः। पक्षेण चा. ३ क. ख. ग. ज. घ. झ. ठ. ट. ड. °दर्शितं भाष्यकारेण; च. °दर्शितं भाष्यकारेण. ४ क. ख. ४ (२२); ग. ८/२८; ट. ड. ॥२२॥ इति निरुक्तटीकायां पञ्चमाध्याये द्वाविंशतिः खण्डः; इतरेष्वङ्को नास्ति. ५ क. ख. छ. त. द. द्वेषसो अंह°. ६ ठ. ड. प्रणोतव्या. ७ क. ख. द. दृष्ट°. ८ क. ख. छ. त. द. भवति। उतो°. ९ क. ख. छ. त. द. °व्यतिरकर्मकः। अथा°. १० क. ख. ५ (२३); छ. त. २६; द. ५. ११ क. ख. घ. झ. ट. दूढयः मावधीत्। विरू°; ग. ज. दूढ्यः परिद्वेषस इति। विरू°. १२ क. ख. घ. झ. ट. ठ. ड. ददर्श। गायत्रीं। आग्नेयी। दश°; च. ददर्श। दश° गायत्री आग्नेयी. १३ क. ख. घ. झ. ट. ठ. ड. आद्ये; ग. ज. आज्यसूक्ते°; च. आज्ये° घे.

सर्वतो द्वेष्टुः स्वभूति[1] : अंहतिः । वध इत्यर्थः । ऊर्मिर्न ऊर्मिरिव । यथोर्मिर्नावमाभिमुख्येन गत्वा वधयत्येवमंहतिरस्मान्[2] द्वेष्यप्रहितो माँ[4] वधीदिति। एवमत्र सर्वस्मादेव[3] द्वेष्टुर्वधस्यानभीष्टत्वात्[5] 'समस्य' इत्येतत्सर्वनामेत्युपपद्यते।

'ऊर्मिरूर्णोतेः' आच्छादनार्थस्य (धा० २ । २९) । सा ह्याच्छा-
५ दयति तीरमुदकमध्ये वा यदन्यद्भवति । 'नौः प्रणोत्तव्या भवति' पारगमनाय । 'नमतेर्वा' स्यात् । सा हि प्रह्वीभूतेव भवति पारगमनाय।

आह । यदेतत्सममिति शब्दरूपम् 'अनुदात्तप्रकृति' अनुदात्तस्वभावं सत् कथं नाम स्यात् । अनुदात्तप्रकृतयो हि निपाता उदात्तप्रकृतीनि नामानि भवन्तीति। उच्यते।'द्रष्ट[6]ऽयं तु'एतद्यस्मादनुदात्तप्रकृतित्वेऽपि

'समम्' अनुदात्तप्रकृति सदपि नामैव

१० सति तस्मान्नामैवैतत् भवति। आह। क्व पुनरस्य व्ययो दृष्ट इति । उच्यते। 'उतो समस्मिन्ना शिशीहि नो वसो इति सप्तम्यां' व्ययो दृष्टः । 'विद्मा

यस्मात्तस्य व्ययो दृष्टः

सखित्वमुत[7] शूर भोज्य[8] मा ते ता वज्रिन्नीमहे । उतो समस्मिन्ना शिशीहि नो वसो वाजे सुशिप्र गोमति (ऋ० सं० ८ । २१ । ८)॥

१५ [9]सौभरेरार्षम् । सतोबृहती[11] । अ.ख्यानसूक्ते विनियुक्ता । विद्म विजानीमो[12] वयं सखित्वं सखिभावम् । उत अपि च हे शूर वज्रिन्निन्द्र भोज्यं भोग्यतां[13] सोमजीव्यत्वं मित्राणाम् । यतो वयं आ ईमहे आभिमुख्येन स्थित्वा याचामहे ते तव यानि धनानि। किंच। उतो अपि च समस्मिन्नाशिशीहि[14] नः। देह्यस्माकं

'समस्मिन्'इति

२० सप्तम्याम्

---

१ क. ख. ग. ज. घ. झ. ट. ठ. ड. स्वभूतः. २ क. ख. घ. झ. ट. ठ. ड. °यति मैवमं°. ३ ग. ज. स्माद्दे°; च. स्मा॑द्दे° न्. ४ क. ख. घ. झ. ट. ठ. ड. °हितोऽवधी°. ५ क. ख. घ. झ. ट. ठ. ड. द्वेष्टुर्वधानभीष्ट°; ग. ज.
२५ द्विष्टुर्वधायानभी°; च. द्विष्टु° द्वे. ६ क. ख. घ. झ. ट. दृष्ट°; च. द्रष्ट° दृ. ७ च. द्रष्टः. ८ ग. दृष्टः ।८२। विद्मा°; च. द्रष्टः° दृ. ९ ग. ज. °मुत शूर भोज्यमिति; घ. ट. °मुत० सुशिप्र गोमति. १० च. इति सौभ°. ११ क. ख. घ. झ. ट. ठ. ड. °हती । ऐन्द्री । आख्या°; च. °हती॰ । आख्या° ऐन्द्री. १२ घ. झ. ट. ठ. ड. 'वि' नास्ति. १३ क. ख. घ. झ. ट. ठ. ड. भोग्यमंशोपजीव्य°; ग. ज. भोग्यतां सोपजी°; च. भोग्यतां सोमं° मंशोप. १४ क. ख. ध. झ. ट. ठ. ड.
३१ समस्मिन् सर्वस्मिन्नाशि°; च. समस्मिन्॰आशि° सर्वस्मिन्.

हे वसो वसुमन्निन्द्र । क्व पुनराशिशीहि न इति । वाजे । अन्न इत्यर्थः । हे सुशिप्र हे सुनस अथवा हे सुहनो गोमति गोभिस्तद्वति । अन्नेऽस्मान् प्रतिष्ठापयेत्यर्थः । एवमत्र समास्मिन्निति सप्तम्यां व्ययो दृष्टः ।

' उरुष्या णो अघायतः समस्मादिति पञ्चम्यां ' व्ययो दृष्टः । 'स नो बोधि श्रुधी हवमुरुष्या णो अघायतः समस्मात् '

'समस्मात्' इति पञ्चम्याम्

( ऋ० सं० ५ । २४ । ३ ) । श्रुतबन्धोरार्षम् । आग्नेयी । द्विपदा । अग्न्युपस्थाने विनियुक्ता ( मैत्रा० सं० १ । ५ । ३ ) । यस्त्वमेवंप्रभावः । यथाप्रभावं त्वां वयमवोचाम । स त्वं हे भगवन्नग्ने बोधि बुध्यस्वास्माकमभिप्रायम् । शृणु चाह्वानमिदम् । आहूतश्च उरुष्या णः उपगम्यास्मान् अघायतः पापमिच्छतः समस्मात्सर्वस्मात्पाहि । एवमत्र समस्मादिति पञ्चम्यां व्ययो दृष्टः । तस्माद्व्ययदर्शनात् ' दृष्टानुविधिश्छन्दसि' भवतीति कृत्वानुदात्तप्रकृतित्वेऽपि सति नामैतद्भवतीत्युपपद्यते ॥ २३ ॥

---

**हविषां जारो अपां पिपर्ति पपुरिर्नरा । पिता कुटस्य चर्षणिः [ ऋ० सं० १ । ४६ । ४ ] ॥ हविषापां जरयिता पिपर्ति पपुरिरिति पृणातिनिगमौ वा प्रीणातिनिगमौ वा पिता कृतस्य कर्मणश्चायितादित्यः शम्ब इति वज्रनाम शमयतेर्वा शातयतेर्वा । उग्रो यः शम्बः पुरुहूत तेनेत्यपि निगमो भवति । केपयः कपूया भवन्ति कपूयमिति पुनाति कर्म कुत्सितं दुष्पूयं भवति ॥ २४ ॥**

---

'कुटस्य'(७०) 'चर्षणिः' (७१) इत्येते अनवगते । 'कृतस्य' 'चायिता' इत्येतौ शब्दसमाधी । एक एव निगमः । हविषा जारो अपामिति । प्रस्कण्वस्येयमार्षम् । आश्विनी । प्रातरनुवाकाश्विनयोः शस्यते [ आश्व० श्रौ० ४ । १५ ] । हे नरौ अश्विनौ युवामेष आदित्यः

'कुटस्य चर्षणिः' इत्यस्य

१ ग. दृष्टः । ८३ । स°. २ घ. ट. श्रुधी० समस्मात् ३ च. 'स्था॰ने' प. ४ क. ख. ५ ( २३ ); ग. ८४/२६; इतरेष्वङ्को नास्ति. ५ क. ख. ६ ( २४ ); छ. त. २७; द. ६. ६ घ. झ. ट. अपां०००चर्षणिः प्रस्क°. ७ क. ख. घ. झ. ट. ठ. ड. ' इयं ' नास्ति. ८ ग. ज. नराश्विनौ; च. नराऽश्विनौ.

पिता पाता कृत्स्नस्य जगतः कुटस्य च[1] कृतस्य कर्मणः सार्वभौमस्य साध्वसाधुनः चर्षणिः चायिता द्रष्टा बुद्ध्यधिदेवताभावेनावस्थितः सर्वभूतानाम्। अपां जारः अपां सर्वभूतान्तर्गतानां प्राणभावेनावस्थितो जरयिता शोषयिता[2] पपुरिः च पूरयिता च। प्राप्ते काले हविषा उदकेन पिपर्ति पूरयति वा प्रीणयति वा। यौ युवामेवंगुणयुक्तेनादित्येन पूर्येथे प्रीण्येथे वा तौ युवामिमां नामास्माकमाशिषं[3] समर्थयतमित्येवमाशीर्योज्या[4]। एवमत्र 'कुटस्य चर्षणिः' इत्येते 'कृतस्य चायिता' इत्येवमुपपद्येते। नरौ अत्र द्यावापृथिव्यावभिप्रेते। तयोश्चोदकेनादित्यः पूरयिता। तस्मादादित्यविषयता चर्षणिशब्दस्य। तस्य च बुद्ध्यधिदेवताभावेन कृतस्य कर्मणो द्रष्टृत्वमुपपद्यते। 'पिपर्ति पपुरिः' इत्येवमेतौ निगमस्थौ शब्दौ[5] पूरयत्यर्थौ[6] वा प्रीणयत्यर्थौ वा।

'शम्बः' (७२) इत्यनवगतम्। 'वज्रनाम' इत्यभिधेयवचनम्। 'शमयिता वा शातयिता वा' इति शब्दसमाधी।

'शम्बः' इत्यस्य 'आराच्छत्रुमप बाधस्व दूरमुग्रो यः शम्बः पुरुहूत तेन। अस्मे धेहि यवमद्गोमदिन्द्र कृधी धियं जरित्रे वाजरत्नाम्' [ ऋ० सं० १० । ४२ । ७ ]॥ कृष्णस्याङ्गिरसस्यार्षम्। त्रिष्टुप्। माध्यन्दिने सवने स्तोमातिशंसने ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता [ आश्व० श्रौ० ७ । ९ ]। हे पुरुहूत बहुभिराहूत य एष आरात्समीपेऽस्माकं वर्तते शत्रुस्तं दूरम् अपबाधस्व। नाशयस्वेत्यर्थः। आराच्छब्दो ह्यत्र समीपार्थवाची। अन्यत्रापि चोक्तम् 'आरात्प्राग्वंशादुदयास्तमयौ' इति। केन पुनरपबाधस्व। उग्रो यः शम्बः। उद्गूर्णो यो वज्रस्तेनापबाधस्वेत्यर्थः[9][10]। किंच। तं दूरमपबाध्य ततः अस्मे[11] अस्मभ्यं धेहि देहि यवमत् यवैस्तद्वत् व्रीहिगोधूमाद्यन्नम्[12]। अपि च। गोमत् गोभिस्तद्व-

१ क. ख. घ. झ. ट. ठ. ड. 'च' नास्ति. २ ग. ज. 'शोषयिता' नास्ति. ३ ग. ज. °मिमान्नामा°; च. °मिमान्नामा° मां ना. ४ ग. ज. समर्थय°; च. समर्थय° र्थ. ५ च. °मस्थौ-पूर° शब्दौ. ६ क. ख. घ. झ. ट. ठ. ड. पृणात्यर्थौ वा प्रीण°. ७ ग. °मायी।८५। आरा°. ८ ग. ज. दूरमिति। कृष्ण°; घ. ट. दूरं०जरित्रे°. ९ च. °बाधयस्वे°; ज. °बाधयस्वे°. १० क. ख. घ. झ. ट. ठ. ड. 'इत्यर्थः' नास्ति. ११ ग. ज. अस्मै. १२ घ. झ. ट. ठ. ड. °माद्यन्नैः; च °माद्यन्नै °न्नैः.

त्पश्वादिभिः । किंच । स त्वमेतदेवंगुणकमस्मभ्यमन्नं ददत् कृधि कुरुष्व इमां धियम् एतत्कर्म वाजरत्नां वाजरमणीयाम् । प्रचुरेणान्नेन यथैतस्मिन्कर्मणि वर्तमाना रमेमहि तथा कुरुष्वेत्यभिप्रायः । धीरिति कर्मनामसु पठितं 'धीः शची' [ निघ० २ । १ । २१ ] इति । एवमत्रापवाधनसंबन्धात् 'शम्बः' इत्येतद्वज्रनामेत्युपपद्यते । अपठितमेतद्वज्रनामस्वित्यतोऽप्रसिद्धार्थम् । तस्यैवं प्रकरणादर्थसिद्धिर्भवति । ५

'केपयः' ( ७३ ) इत्यनवगतम् । 'कपूयाः' ह्येते सन्तः केपय इत्युच्यते । आह । 'कपूयमिति' किमुक्तं भवति । उच्यते । यदेतत्पापकारी प्रायश्चित्तेन 'पुनाति कर्म कुत्सितम्' यच्च तत् 'दुःपूयं'[3] 'दुष्पावं भवति' पूयमानमप्येतत् 'कपूयम्' इत्युच्यते ॥ २४ ॥[4] १०

---

**पृथक्प्रायन्प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा । न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशन्त केपयः ( ऋ० सं० १० । ४४ । ६ ) ॥ पृथक्प्रायन्पृथक्प्रथतेः प्रथमा देवहूतयो ये देवानाह्वयन्ताकुर्वत श्रवणीयानि यशांसि दुरनुकराण्यन्यैर्येऽशक्नुवन्यज्ञियां नावमारोढुमथ ये नाशक्नुवन्यज्ञियां नावमारोढुमीर्मैव ते न्यविशन्तेहैव ते न्यविशन्त ऋणे हैव ते न्यविशन्तास्मिन्नेव लोक इति वेर्मं इति बाहुनाम समीरिततरो भवति । एता विश्वा सवना तूतुमा कृषे स्वयं सूनो सहसो यानि दधिषे । एतानि सर्वाणि स्थानानि तूर्णमुपाकुरुषे स्वयं बलस्य पुत्र यानि धत्स्वासत्रमहसत्त्राणं धनुर्वा कवचं वा कवचं कु अञ्चितं भवति कासञ्चितं भवति कायेऽञ्चितं भवतीति वा ॥ २५ ॥** १५ २०

---

१ घ. झ. ट. ठ. ड. °स्मभ्यं जरित्रे स्तोत्रे अन्नं; च. °स्मभ्यमन्नं° भ्यं जरित्रे स्तोत्रे अ. २ घ. झ. ट. ठ. ड. यथैतत्कर्मणि. ३ ग. च. ज. दुःष्पावं. ४ क. ख. ६ ( २४ ); ग. ८६/२४; ठ. ड. २४ । इति निरुक्तटीकायां पञ्चमाध्याये चतुर्विंशतिः खण्डः. ५ छ. त. द. °रोल्हुम°; थ. °रोळ्हुम°. ६ छ. त. द. ऋणेनैव ते°. ७ ठ. ड. वा ईर्म. ८ त. ध. °सत्राणं. ९ क. ख. ७ ( २५ ); छ. त. २८; द. ७. २८

'पृथक् प्रायन् प्रथमा देवहूतयः' इति। पूर्वथैव समानार्थविनियोगा।

'केपयः' इत्यस्य — इयं तु जगती। पृथक् प्रायन् पृथग्भूता एव प्रायन् प्रागच्छन्। के पुनस्त इति। उच्यते। प्रथमा देवहूतयो ये देवानाह्वयन्ते यज्ञेषु कर्मसु। किंच। अकृण्वत अकुर्वत च श्रवणीयानि श्रवणार्हाणि यशांसि दुष्टरा दुरनुकराण्यन्यैरयज्वभिः। एवं तावद्ये मनुष्या अशक्नुवन् शकितवन्तो यज्ञियां नावमारोढुं यजनकर्ममयीं नावमारोढुम्। एवं ते पृथग्भूता एव विद्याकर्मानुरूप्येण देवयानेन पथा पितृयानेन वा प्रायन्। अथ पुनर्ये नाशक्नुवन्यज्ञियां नावमारोढुम्। किं तर्हि। विषयप्रधानाः कपूयमेव दुःपूयमेव कर्म चक्रिरे ते तेनैव कपूयेन कर्मणा प्रेर्यमाणा इहैव लोके यथाकर्मानुरूपायां योनौ न्यविशन्त। तदुक्तम् 'अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' ( छा० ५। १०। ७) इत्येवमादि। एवमत्र न ये शेकुर्यज्ञियां नावमारोढुमित्येतेन संबन्धात् 'केपयः कपूयाः' इत्युपपद्यते।

शब्दसारूप्यप्रसङ्गादुच्यते। 'ईर्मे इति बाहुनाम' इति। स हि 'समीरिततरो भवति' अन्येभ्योऽङ्गेभ्यः।

'तूतुमाकृषे' इत्यस्य — 'तूतुमाकृषे' इत्येते अनवगते। 'तूतुम्' इत्यस्य 'तूर्णम्' इति शब्दसमाधिः। 'आकृषे' इत्यस्य 'उपाकुरुषे' इति शब्दसमाधिः[11]। एता विश्वा सवना तूतुमा कृषे स्वयं सूनो सहसो यानि दधिषे। वराय ते पात्रं धर्मणे तना यज्ञो मन्त्रो

---

१ ठ. ड. प्रायन्निति। पूर्व°. २ घ. झ. ट. °हूतयः००न्यविशन्त केपयः पूर्व°. ३ घ. झ. ट. ठ. ड. °ह्वयन्त या°. ४ घ. झ. ट. ठ. ड. अत्र शक्नु°. ५ क. ख. घ. झ. ठ. ड. °रूपेण; ट. 'रूपेण° प्ये. ६ ग. ज. विषये प्रधानाः; च. विषये प्र° य. ७ क. ख. घ. झ. ट. ठ. ड. दुष्पूयं. ८ घ. झ. ट. ठ. ड. °शन्त। ऋणेनैव (ट. ऋणेनैव° है; ठ. ड. ऋणे हैव) वा न्यविशन्त। नीचैराविशन्त। अधोगतिं प्राप्ता इत्यर्थः। तदु°; च. °शन्त। ऽतदु° ऋणेनै०.इत्यर्थः. ९ ग. ज. °चरणा अन्यशो ह यत्ते; घ. झ. ट. ठ. ड. अभ्यशोभयन् ते; च. °चरणा अञ्जुभरुचर्यः अभ्या (भ्य) शोहैयन्ते° भयन् ते. १० ग. च. ज. °रोल्हुमि°. ११ ग. °माविः। ८७। एता°. १२ ग. ज. कृषे। इन्द्र°; घ. ट. कृषे० ब्रह्मोद्यतं वचः.

ब्रह्मोद्यतं वचः [ ऋ० सं० १० । ५० । ६ ] ॥ इन्द्रस्य[1] वैकुण्ठस्येयमार्षम्[2] । ऐन्द्रे सूक्ते निविद्धानीये महाव्रते महदुक्थे शस्यते [ ऐ० आ० । ५ । ३ । १ ] । एता एतानि विश्वा[3] विश्वानि सर्वाणि स्थानानि त्वमुपागम्योपागम्य[4] तेन तेन देवतात्मना कुरुष्व । निर्वर्तयेत्यर्थः । आह । कतमानि पुनः स्थानानि । उच्यते । स्वयं सूनो सहसो यानि दधिषे । हे सूनो सहसो बलस्य पुत्र यान्येतानि स्वयम् एव दधिषे धारयसि तानि त्वमेव कुरुषे । यत एवं[5] त्वमेव धारयिता स्रष्टा चास्य जगतोऽत एतस्मात्कारणात् वराय वरयितव्याय ते तव पात्रम् एतत्सोमपूर्णं प्रदिशामो धर्मणे धारयित्रे। तना च धनं च सर्वं तवैव। यज्ञश्च कृत्स्नस्तवैव। मन्त्रश्च कर्मकरणस्तवैव । ब्रह्म चान्नं तवैव । उद्यतं चैतदनेकप्रकारमपि स्तुतिलक्षणं वचः तवैव । एवमत्र शब्दसारूप्यात् ' तूतुम् ' इत्येष शब्दः ' तूर्णम् ' इत्येवमुपपद्यते । करणसंबन्धाच्च । यद्धि[6] कर्तव्यं भवति तस्य तूर्णमेव करणमिष्यते कर्तृभिः । तस्मादुपपद्यते । ' आकृषे ' इत्यत्रापि यद्धि क्रियते तदुपगम्याभिमुख्येनैव स्थित्वा क्रियत इति ' उप ' शब्दोऽत्र भाष्यकारेणाध्याहृतः ।

अत्र ' सूनो सहसः ' इत्येतस्माद्विशेषलिङ्गादाग्नेयीमेतामृचं कृत्वा केचिद्व्याचक्षतेऽग्निर्हि बलेन मथ्यमानो जायत इति । तथाहि प्रकरणविरोधो भवति । सूक्तं ह्येतदैन्द्रम् । ऐन्द्रत्वेऽस्याः[7] ' सूनो सहसः ' इत्यनयोः पदयोरर्थयोजना । अधिदैवताभावेन प्राण इन्द्रो व्यवस्थितः । तस्येतरो यः प्रज्ञासु[8] व्याविष्टः प्राणः[9] स पुत्र इत्येवमुपपद्यते पितृपुत्रभावः । तदुक्तं ' प्राणो वा अहमस्म्यृषे[10] प्राणस्त्वं प्राणः[11] सर्वाणि भूतानि ' [ ऐ० आ० २ । २ । ३ ] इति ।

---

१ ग. ज. इन्द्रवैकु°; च. इन्द्र॰वै° स्य. २ घ. झ. ड. °मार्षम् । जगती । ऐन्द्रे'; च. मार्ष ।॰ ऐन्द्रे° जगती. ३ घ. झ. ' विश्वा ' नास्ति; ट. एतानि ॰विश्वानि° विश्व. ४ ग. ज. °म्योपगम्य; च. °म्योपागम्य° पा. ५ क. ख. ब. झ. ट. ठ. ड. एवं कुरुषे अत एव त्वमे°; च. एवं॰त्वमे° कुरुषेऽत एव. ६ क. ख. घ. झ. यद्धि कर्म तस्य'; ट. यद्धि कर्म' कर्तव्यं भवति; ठ. ड. यद्धि कर्म कर्तव्यं°. ७ क. ख. घ. झ. ट. ठ. ड. °त्वे त्वस्य. ८ क. ख. घ. झ. ट. ठ. ड. प्रजासु; ग. ज. प्रज्ञासुत्पाद्याविष्टः°. ९ क. ख. घ. झ. ठ ड. प्राणस्तु पुत्र°; ट. प्राणस्तु पुत्रः° स. १० ग. ज. °हमस्म (ज. स्य ) षे प्राण°; च. °हमस्म्यस्मि प्राण° स्म्यृषे. ११ ग. च. ज. प्राणाः.

'अंसत्रम्' [ ७'१ ] इत्यनवगतम् । विकल्पतश्चानेकार्थम् । 'अंहसस्त्राणम्' इत्यर्थप्रतीतिः । 'धनुर्वा कवचं वा' इत्यभिधेयवचनम्। ताभ्यां हि पुरुषाः सांग्रामिकादंहसस्त्रायन्ते । आख्यानप्रसक्तमुच्यते। 'कवचं कु अञ्चितं भवति' कुटिलमञ्चितम् । स हि तस्य स्वभावः । अथवा 'काञ्चितम्' ईषदञ्चितं कुटिलीकृतं 'भवति' । अथवा 'कायेऽञ्चितं' तद्गतं 'भवति' ॥ २५ ॥

---

प्रीणाताश्वान्हितं जयाथ स्वस्तिवाहं रथमित्कृणुध्वम् । द्रोणाहावमवतमश्मचक्रमंसत्रकोशं सिञ्चता नृपाणम् ( ऋ० सं० १०। १०१ । ७ ) ॥ प्रीणीताश्वान् सुहितं जयथ जयनं वो हितमस्तु स्वस्तिवाहनं रथं कुरुध्वं द्रोणाहावं द्रोणं द्रुममयं भवत्याहाव आह्वानादावह आवहनादवतोऽवातितो महान् भवत्यश्मचक्रमशनचक्रमसनचक्रमिति वांसत्रकोशमंसत्राणि वः कोशस्थानीयानि सन्तु कोशः कुष्णातेर्विकुपितो भवत्ययमपीतरः कोश एतस्मादेव संचय आचितमात्रो महान् भवति सिञ्चत नृपाणं नरपाणं कूपकर्मणा संग्राममुपमिमीते काकुदं तालुवित्याचक्षते जिह्वा कोकुवा सास्मिन् धीयते जिह्वा कोकुवा कोकूयमाना वर्णान्नुदतीति वा कोकूयतेर्वा स्याच्छब्दकर्मणो जिह्वा जोहुवा तालु तरतेस्तीर्णतममङ्गं लततेर्वा स्याद्विपरीताद्यथा तलं लतेत्यविपर्ययः ॥ २६ ॥

---

प्रीणीताश्वान्हितमिति । बुधस्य सोमपुत्रस्येयमार्षन् । वैश्वदेवे सूक्ते । प्रीणीत प्रीणयत यवसोदकादिना एतान् अश्वान्। 'अंसत्रम्' इत्यस्य उपस्थितोऽयं संग्राम इत्यभिप्रायः । प्रीणयित्वैतानश्वानेभिरश्वैरुपजातवीर्यैः सुहितं जयथ । जयनं वो हितमस्तु । अहितोऽपि जयः कश्चिद्भवत्येव यत्र सुहृद्भ्रातृपुत्रा-

---

१ क. ख. ७ ( २'१ ); ग. ९८/२८; ठ. ड. २५ । इति निरुक्तटीकायां पञ्चमाध्याये पञ्चविंशतिः खण्डः. २ छ. त. द. एनां नुद. ३ ठ. त. तलते°. ४ छ. त. द. स्यालम्बकर्मणो विप°. ५ क. ख. ८ (२६); छ. त. २९; द. ८. ६ घ. झ. ट. °न्हितं जयाय०० सिञ्चता नृपाणम् । ऊ°; ठ. ड. °ताश्वानिति । बुधं. ७ घ. झ. ट. ठ. ड. °मार्षं । त्रिष्टुप् । वैश्व°.

द्यो हन्यन्ते । स्वस्तिवाहम् अभिपूजितवाहं रथं कृणुध्वं कुरुध्वं हे देवाः । एवमेतां सांग्रामिकीमितिकर्तव्यतां कृत्वा द्रुममयमेतम् आहावम् आहावस्थानीयं रथं कृत्वा अवतम् एतं संग्रामकूपम् अश्मचक्रम् अशनचक्रं व्यापनचक्रम् । व्यापयन्ति हि तत्र क्षिप्तानि चक्राणि शत्रूणाम् । अथवा असनचक्रम् । अस्यन्ते हि तत्र चक्राणि । अंसत्रकोशम् । अंसत्राणि वो धनूंषि कवचानि वा कोशस्थानीयानि तत्र सन्तु । तैः सिञ्चत उत्सिञ्चत एनं संग्रामकूपं नृपाणं नरपाणम् । नरा एव तत्रोदकस्थानीयाः । त एवोत्सिच्यन्ते । एवमत्र 'कूपकर्मणा' अस्मिन्नुत्तरेऽर्धर्चे किंचित्साधर्म्येण 'संग्राममुपमिमीते' मन्त्रदृक् । एवमत्र संग्रामोपमाधिकारादुत्सेचनसंबन्धाच्च 'अंसत्र' शब्देन 'धनुः कवचं वा' उच्यत इत्युपपद्यते ।

ततः 'आहाव आह्वानात्' इत्येतद्यथावस्थितस्यैव मन्त्रपदस्य निर्वचनम् । आहूयतेऽस्मिन्नित्याहावः । इदं त्वन्यत् 'आवह आवहनात्' इत्यस्यैव विपरिणतस्य । उह्यतेऽस्मिन्नुदकमित्यावहः । 'अवतः' कूपः । स हि खन्यमानो महान् 'अवातितः' अवाङ् अतितो 'भवति' । गत इत्यर्थः । अंसत्रकोशम् इति कोशशब्दो विग्रहप्रसक्तः । 'कोशः कुष्णातेः' इति । स हि विविधं कुषितो 'भवति' चर्मकोशः शुषिरत्वात् । 'अयमपीतरो' द्रव्य 'कोशः' एतस्मादेव कुष्णातेः संचयःकोशः । स हि मात्राभिः आचितो भवति महत्त्वात् ।

'काकुदम्' ( ७६ ) इत्यनवगतम् । 'तालु इत्याचक्षते' इत्यभिधेयवचनम् । 'जिह्वा कोकुवा' इत्युच्यते । 'सा' कोकुवाख्या जिह्वा एतस्मिंस्तालुनि वर्णाभिव्यक्त्यर्थं मुहुर्मुहुः 'धीयते' । तदेतत्कोकुवाधानं सत् काकुदमित्यभिधीयते । 'जिह्वा कोकुवा' कस्मादिति । उच्यते । शब्दानुकरणनिमित्तं जिह्वायाः कोकुवात्वम् । तथा-

'काकुदम्' इत्यस्य व्युत्पत्तिः

---

१ ग. च. ज. 'कुरुध्वं' नास्ति. २ ग. ज. °कूपं नरपाणां । नरा°; च. °कूपं । नृपाणां नरपाणां । नरा° णं. ३ क. ख. घ. झ. ट. ठ. ड. एवोत्च्यन्ते. ४ क. ख. घ. झ. ट. ठ. ड. °पमासंबन्धादुत्से°. ५ ज. तत्र; ठ. ड. 'ततः' नास्ति. ६ घ. ट. 'आहव आ°; झ. आहव आहवना°. ७ क. ख. घ. झ. ट. ठ. ड. °रिणम्यते । उह्य°. ८ क. ख. घ. झ. ट. °त्याहवः; च. °त्यावहः. ९ ग. ज. घ. झ. ट. ठ. ड. सुषि°. १० घ. झ. ट. ठ. ड. संचयः कोशः. ११ क. ख. घ. झ. ट. ठ. ड. सा हि को°; च. सा को° हि.

विधं हि सा कुर्वाणा शब्दं तालुनि 'वर्णानुदति'। तस्माद्वा कोकुवानुदनात् काकुदं स्यात्। आह। जिह्वेव तावत्कस्माज्जिह्वेत्यभिधीयत इति। उच्यते। सा हि 'जोहुवा' सती जिह्वेत्युच्यते। तया प्राणिनोऽन्नमाममन्येव जुह्वति अथवा तयाह्वयन्तीति जोहुवा। अथ 'तालु' कस्मात्। उच्यते। तद्धि 'तीर्णतरम्' इतरेभ्योऽङ्गेभ्यो विस्तीर्णत्वेन भवति। 'लततेर्वा स्यात्' आद्यन्तविपर्ययेण 'यथा तलम्' इति। समानजातीयशब्दोपप्रदर्शनं दृष्टप्रतीत्यर्थम्। अस्यैव लततेर्लम्बनार्थस्य 'लता' इत्येतच्छब्दरूपमविपर्ययेण भवति ॥ २६ ॥

---

सुदेवो असि वरुण यस्य ते सप्त सिन्धवः। अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ( ऋ० सं० ८।६९।१२ )॥ सुदेवस्त्वं कल्याणदेवः कमनीयदेवो वा भवसि वरुण यस्य ते सप्त सिन्धवः सिन्धुः स्रवणाद्यस्य ते सप्त स्रोतांसि तानि ते काकुदमनुक्षरन्ति सूर्मि कल्याणोर्मि स्रोतः सुषिरमनु यथा वीरिटं तैटीकिरन्तरिक्षमेवमाह पूर्वं वयतेरुत्तरमिरतेर्वयांसीरन्त्यस्मिन् भांसि वा तदेतस्यामृच्युदाहरन्त्यपि निगमो भवति ॥ २७ ॥

---

१ ग. च. ज. तालुवर्णा°. २ क. ख. ग. झ. ट. ठ. ड. 'अथवा' नास्ति. ३ क. ख. ग. ज. 'ह्वयतीति वा (ग. ज. 'वा' नास्ति) जोहु°; घ. झ. ट. ठ. ड. °ह्वयन्तीति वा जोहु°. ४ क. ख. घ. झ. °च्यते। तरतेर्धातोः। तद्धि°; च. °च्यते ०। तद्धि° तरतेर्धातोः; ट. °च्यते। तरतेर्धातोः। तद्धि° ल; ठ. ड. °च्यते। तलतेर्धातोः। तद्धि°. ५ घ. झ. ठ. ड. तस्यैव; ट. तस्यैव° अ. ६ क. ख. घ. °लम्बना°. ७ क. ख. ८ (२६); ग. ८६; ठ. °वति। षड्विंशतिः खण्डः; इतरेष्वङ्को नास्ति. ८ क. ख. सुदेवस्त्वं कल्याणदानो यस्य तव देव सप्त सिन्धवः प्राणायानुक्षरन्ति काकुदं सूर्म्यं सुषिरामिवेत्यपि निगमो भवति। सुदेवस्त्वं कल्याणदेवः°; छ. त. द. सुदेवस्त्वं कल्याणदानो००न्त्यपि निगमो भवति। प्रज्ञा°; छ. त. द. 'सुदेवस्त्वं कल्याणदेवः ००हरन्त्यपि निगमो भवति' नास्ति. ९ झ. ठ. ड. कल्याणोर्मिः. १० क. ख. ९ (२७); छ. त. २ ; द. ९.

सुदेवो असि वरुणेति[1] । प्रियमेधस आर्षम् । अनुष्टुप् । हे वरुण शोभनस्त्वमसि देवो यस्य तव एताः सप्त सिन्धवः अन्तरिक्षनद्यो वा बहुलाद्वित्येवमाद्याः[2] । 'अश्वा नामासि नितुन्ना[3] नामास्यभ्र[4]पत्नी नामासि मेघपत्नी नामासि वर्षयन्ती[5] नामासि पुरस्तादरुन्धा[6] नामासि' इति[7] सिन्धुशब्देन नद्य उच्यन्ते सप्तैताः । समुद्रा एव वा सप्त सिन्धुशब्देनोच्येरन् । काकुदं तालु अनुक्षरन्ति सूर्मि[8] सुषिरां नगरोदकनिःसरणभूमिम्[9] इव । सर्वतः समवस्रुत्येत्यभिप्रायः[10] । एवमत्र सिन्ध्वनुक्षरणसंबन्धात् 'तालु[11]' इत्युपपद्यते । दुर्वचनं[12] सर्वस्य मन्त्रस्य कृत्स्नाध्ययने प्रयोजनम् । अन्यासु हि ऋक्षु या[13] एतस्मिन् प्रकरणे कृत्स्ना[14] अधीतास्तासु समाम्नातेभ्यः पदेभ्योऽन्यान्यप्यनवगतसंस्काराण्यनेकार्थानि वा सन्तीति तदुपप्रदर्शनार्थं[15] कृत्स्नाध्ययनम् । अस्यां पुनस्तदपि नास्तीत्येवं दुर्वाच्यत्वम् । अथवा काकुदशब्दस्य प्रयत्नान्वेष्यत्वात्कृत्स्नेयमृगधीता स्यात् ।

'काकुदम्' इत्यस्य प्रयोगः

'बीरिटम्[16]' (७७) इत्यनवगतं पक्षेण चानेकार्थम् । भीरस्मिंस्तन्यत इति भीतननम् अन्तरिक्षम् । निरालम्बनत्वात्सर्व एव बिभेति । तदेवं 'भीतननं' सत् 'बीरिटम्[16]' इत्युच्यते । अथवा भासोऽत्र[17] नक्षत्रादीनां तन्यन्ते । तदेतत् भास्तननं[18] सत् 'बीरिटम्' इत्युच्यते । गणाभिधानपक्षेऽपि यथासंभवं योज्यम् ॥ २७[19] ॥

---

१ घ. झ. ट वरुण०८सुषरमिव । प्रिय°. २ ग. ज. वा बहुलात्येव ; च. वाचदुलवित्येव° रो; घ. झ. ट. वा बहुलाद्वे°. ३ क. ख. तितुन्ना; ग. ज. नितुन्नी; च. नितुन्नी° ना. ४ ग. ज. 'अभ्रपत्नी नामासि' नास्ति. ५ घ. ट. ठ. ड. वर्षती; झ. वर्षयती. ६ ग. ज. °दरंधा°. ७ ग. ज. इति सप्तेन काप उपधी रुक्षैषा समुद्रा°; च. °सीति तत्येन नामं उपधो तसैवा समुद्रा' सिन्धुशब्देन नद्य उच्यन्ते सप्तैताः. ८ ग. ज. शूर्मि सुषि°. ९ क ख. घ. झ. ट. ठ. ड. °रणभूमिमिव; ग. ज. °रणभ्रमामिव; च. 'रणभ्रमि° भू १० क. ख घ. झ. ट. समश्रुमतेत्य°; ग. ज. समवश्रुत्येन्यभि°; च. समवश्रुत्येत्य° श्रुवे; ग. ड. समश्रु इत्य°. ११ क. ख. घ. झ. ट. ठ. ड. °धातकाकुदं तालिव°; च. 'धात्तालिव' हकाकुदं ता. १२ क. ख. घ. झ. ट. ठ. ड. दुर्वचनत्वं. १३ ग. ज. यान्यकरणे°. १४ क. ख. घ. झ. ठ. ड. 'कृत्स्ना' नास्ति; ट. °रणेऽधीता°: कृत्स्ना अ. १५ क. ख. घ. झ. ट. ठ. ड. 'तद्' नास्ति. १६ ग. च. ज. 'रिट इ°. १७ ग. ज. 'अत्र' नास्ति. १८ च. भास्ननननं. १९ क. ख. ९ (२७); ग. १०/३०; ठ. योज्यम् । इति निरुक्तटीकायां सप्तविंशतिः खण्डः; ज. २७ खण्डः २५; इतरेष्वङ्को नास्ति.

प्र वांवृजे सुप्रया बर्हिरेषामा विश्पतीव बीरिट इयाते। विशामक्तोरुषसः पूर्वहूतौ वायुः पूषा स्वस्तये नियुत्वान् ( ऋ० सं० ७ । ३९ । २ )॥ प्रवृज्यते सुप्रायणं बर्हिरेषामेयाते सर्वस्य पातारौ वा पालयितारौ वा वीरिटमन्तरिक्षं भियो वा भासो वा ततिरपि वोपमार्थे स्यात्सर्वपती इव राजानौ वीरिटे गणे मनुष्याणां रात्र्या विवासे पूर्वस्यामभिहूतौ वायुश्च नियुत्वान् पूषा च स्वस्त्ययनाय नियुत्वान् नियुतोऽस्याश्वा नियुतो नियमनाद्वा नियोजनाद्वाच्छाभेराप्तुमिति शाकपूणिः परीं सीमिति व्याख्यातौ[1] एनमेनामस्या अस्येत्येतेन व्याख्यातं सृणिरङ्कुशो भवति सरणादङ्कुशोऽञ्चतेराकुञ्चितो भवतीति वा। नेदीय इत्सृण्यः पक्कमेयादित्यपि निगमो भवत्यन्तिकतममङ्कुशादायात्पक्कमौषधमागच्छत्वित्यागच्छत्विति॥ २८[2] ॥

इति[3] पञ्चमाध्यायस्य चतुर्थः पादः।

———

प्रवावृजे सुप्रया[4] इति। वसिष्ठस्यार्षम्। त्रिष्टुप्[5]। प्रवावृजे प्रवृज्यते। प्रस्तीर्यत इत्यर्थः। सुप्रयाः सुप्रायणं[6] सुप्रगमनं यत्सुखमभिगच्छन्ति देवताः। प्रस्तीर्णे[7] तस्मिन् आविश्पतीव बीरिट इयाते। एयाते विश्पती सर्वस्य जगतः पातारौ वा पालयितारौ वा। धात्वन्यत्वमर्थैकत्वम्। इवः पादपूरणः। एवेत्येतस्यार्थे वा। क्व पुनरवास्थितौ एयाते इति। उच्यते। बीरिटे। अन्तरिक्ष इत्यर्थः। 'अपि वा'। अयमिव-

'बीरिटम्' इत्यस्य

---

१ क. ख. छ. त. द. व्याख्यातमेनमे°. २ क. ख. १० ( २८ ); छ. त. २१; द. १०. ३ ङ. थ. ध. ' इति० पादः ' नास्ति; छ. इति पञ्चमोऽध्यायः; त. इति पञ्चमोऽध्यायः समाप्तः; द. इति नैरुक्तस्य पञ्चमाध्यायस्य चतुर्थः पादः। पञ्चमोऽध्यायः समाप्तः. ४ ग. ज. °प्रया बर्हिरेषामिति; घ. झ. ट. °प्रया बर्हिरेषां° स्वस्तये नियुत्वान्। वसि°; ठ. ड. प्रवावृज इति. ५ घ. झ. ट. ठ. ड. 'ष्टुप्। ऊर्ध्वो अग्निरिति वैश्वदेवे सूक्ते वायुपूषदेवताकोऽयम्। प्रवृज्यते°; च. °ष्टुप्। प्रवावृजे प्रवृ° ऊर्ध्वो अग्नि० देवताकोऽयम्. ६ क. ख. घ. झ. ठ. ड. सुप्रयाणं; ट. सुप्रयाणं° प्राग्, ७ क. ख. घ. झ. ट. ठ. ड. प्रास्तीर्णे; च. प्रस्तीर्णे' प्रा.

शब्द 'उपमार्थे' एव 'स्यात्' विश्पती इवेति। 'सर्वपती इव राजानौ बीरिटे गणे' अवस्थितौ । आह । कस्य पुनरेयाते कस्मिन्काल एयाते कौ वा एयाते कं चार्थं पुरस्कृत्य एयाते इति । उच्यते । एवां मनुष्याणां विशां तासु तासु क्रियास्वाहूयमानौ अक्तोः रात्र्याः अपगमे सति उपसथ्यागमनकाले पूर्वस्याम् एव अभिहूतौ प्रथम एवाह्वानकाले वायुश्च नियुत्वान् पूषा च स्वस्त्ययनार्थमेयाते यजमानस्य। अन्तरिक्षेणैव हि देवता आगच्छन्तीति 'बीरिटमन्तरिक्षम्' इत्युपपद्यते । यस्मिन्नपि पक्षे गणो बीरिटशब्देनोच्यते तस्मिन्नपि पक्षे विश्पती राजानौ सर्वदा गणमध्यगताविवागच्छत इत्युपपद्यत एव ।　　५

आह । 'नियुत्वान्' कस्मादिति । उच्यते । 'नियुतोऽस्याश्वाः' । अथ 'नियुतः' कस्मात् । उच्यते । 'नियमनात्' । नीचैर्हि ते यम्यन्ते । 'नियोजनाद्वा' । नियुज्यन्ते हि ते रथे । 'नियुतो वायोः' (निघ० १।१५) इत्येतस्मात्कारणाद्विप्रकृष्टोऽपि नियुत्वच्छब्दो वायुशब्देनैव संयोजितो भाष्यकारेण । न हि पूष्णो नियुद्भिः संबन्धोऽस्ति ।　　१०

'अच्छ' 'परि'
'ईम्' 'सीम्'
'एनम्' 'एनाम्'
इत्येतेषाम्

'अच्छ' (७८) इत्येष शब्दः 'अभेः' अर्थे भवति । 'आप्तुम् इति' योऽर्थ उक्तः स्यात्स एवार्थोऽच्छेत्यनेनोक्तो भवति । एवं 'शाकपूणिः' आचार्यो मन्यते । परि (७९) (निरु० १।३) ईं (८०) (निरु० १।७) सीम् (८१) (निरु० १।९) इति एते 'व्याख्याताः' षष्ठाध्याये निपातोपसर्गप्रकरणे । 'एनम्' (८२) 'एनाम्' (८३) इत्येतत्पदद्वयम् 'अस्याः अस्येत्यनेन' पदद्वयेन 'व्याख्यातं' नवमेऽध्याये [ निरु० ४ । २५ ] । निगमाश्चात्र मृग्याः ।　　१५　२०

१ क. ख. घ. झ. ट. ठ. ड. विष्पतीव सर्व°; ग. ज. विष्पती इवेति सर्वपती इवेति सर्वपती इव बीरि°; च. विष्पती इवेति व. २ ग. ज. चार्थं. ३ ग. ज. नियमात्; च. नियमनात्° मना. ४ क. ख. घ. झ. ठ. ड. °र्हि नियम्य°; च. °र्हि ते य° नि. ५ ग. ज. नियुज्यति; च. नियुज्यन्ति° न्ते. ६ क. ख. घ. झ. ट. ठ. ड. 'ते' नास्ति. ७ घ. झ. ट. ठ. ड. 'इति' नास्ति. ८ क. ख. घ. झ. ट. ठ. ड. षष्ठेऽध्याये. ९ क. ख. घ. झ. ट. ठ. ड. 'एतत्' नास्ति.　　२१

'सृणिः' (८४) इत्यनवगतम्। 'अङ्कुशो भवति' इत्यभिधेयवचनम्। 'सरणात्' इति व्युत्पत्तिः। 'सरणैः' इति न्याय्यम्। सरति गच्छति ह्यसौ हस्तिशिरसि। 'अङ्कुशोऽञ्चतेः' इति पर्यायप्रसक्तम्। अञ्चति ह्यसौ गच्छति हस्तिशिरसि। 'आकुञ्चितो भवतीति वा'।

५ स ह्याभिमुख्येन कुटिलीभूतो भवति।

'युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम्। गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयात्'

'सृणिः इत्यस्य' [ ऋ०सं०१०।१०१।३ वा०स०१२।६८]॥ बुधस्येयमार्षम्। अग्नौ मध्यमदान्तयोजने सीरा-

१० नुमन्त्रणे विनियुक्ता [ मान० श्रौ० २।७।१२॥ ३।२।४]। युनक्त योजयत हे योजयितारः सीराणि। वितनुत चैतानि युगानि। कृते कृष्टेऽस्मिन्योनौ क्षेत्रे बीजं वपत यथा गिरा वाचा यत्प्रार्थयामस्तत्क्षिप्रमेव असत् भवेत् सभराश्चातिफलभारवत्य एताः स्युरोषधयो नोऽस्माकम्। किंच। नेदीय इत्सृण्यः। सृणिरङ्कुशो यावति प्रदे-

१५ शेऽवस्थितमाक्रष्टुं शक्नोति ततोऽपि नेदीयोऽन्नं पक्वम् औषधं प्रचुरत्वादोषधीनाम् एयात् आगच्छेदस्मान् प्रति। तथा शीघ्रं बहु वपतेत्यभिप्रायः। एवमत्र नेदीय इत्यनेन संबन्धात् 'सृणिरङ्कुशो भवति' इत्युपपद्यते। अन्ये तु ब्रुवते। तथा वपत यथा प्राग्दात्राकर्षणान्मुष्टिः पूर्येतेति दात्रमेवास्मिन्पक्षेऽङ्कुशशब्देनोच्यते तदाकृष्टसस्यस्याङ्कुशाभावात्। दात्राकर्षणात्प्राक्

---

२० १ घ. झ. ट. ठ. ड. सरणं. २ ग. ज. सर इति ग°. ३ क. ख. घ. झ. ट. ठ. ड. 'हि' नास्ति. ४ ग. भवति। ९१। युन°; घ. झ. ट. ठ. ड. भवतीति युन°. ५ ग. च. ज. तनुध्वमिति; घ. झ. ट. तनुध्वं० सृण्यः पक्वमेयात्. ६ क. ख. घ. झ. ट. ठ. ड. °मार्षम्। त्रिष्टुप्। वैश्वदेवी ऋत्विक्स्तुतिर्वा। अग्नौ°; च. °मार्षं। अग्नौ° त्रिष्टुप्०क्स्तुतिर्वा. ७ क. ख. घ. झ. ट. ठ. ड. °वपत। तथा वपत यथा°; च. वपत॰ यथा° तथा वपत. ८ क. ख. घ. झ. ट. ठ. ड. °स्तत् श्रुष्टिः क्षिप्र°. ९ क. ख. घ. झ. ट. ठ. ड. °ङ्कुशो भवति याव°. १० क. ख. घ. झ. ट. ठ. ड. नेदीयोऽन्न प°. ११ क. ख. घ. झ. ट. ठ. ड. बहु च वप°; च. सी (शी) घ्रं बहु॰ वप° च. १२ क. ख. घ. झ. ट. ठ. ड. °तेत्यर्थः. १३ ट क्षेत्र° दा. १४ ग.

२१ ज. °कृष्टसस्यङ्कुशाभा°.

अन्तिकृतमं संनिकृष्टतममोपथं पकमागच्छेदिति युष्मामिरेवमुक्तं भवत्विति । एतद्वयमाशास्महे पकमौपथमागच्छत्विति ।

अध्यायसमाप्त्युपप्रदर्शनार्थाय द्विरभ्यास इति ।

इत्यृमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ दशमोऽध्यायः समाप्तः । ५

---

*सं सिनय स श्वन्तीनयस्य वरा होगायन्तित्वा पवित्रं पुरु त्वा किमित्ते प्रतत्ते ऽग्निर्नर एकया पान्तमन्युरु वंश्यप्सरा उतौ सिसङ्झ्निर्यत्कदा मंतपत्नीर्वन्तः सुगुरु सद्ध कश्चन्द्रमा अरुणो मा यइन्द्राग्नी मानः समस्य हविषां जारः पृथक्प्रायन्प्रीणीत सुदेवः प्रवावृजे ऽष्टाविंशतिः । १०

इति निरुक्ते पूर्वषट्के पञ्चमोऽध्यायः ।

---

* छ. त. द. खण्डशृङ्खला नास्ति.

१ क. ख. घ. झ. °रेवमुक्ते सति एत°; ग ज. °रेवमुक्ता भ°; च. °रेवमुक्तं भवत्विति° तु; ट. °रेवमुक्ते सति एत° तं भवतु; ठ. ड. °रेवं संभवतु। एत°. २ ग. °स्महे । ३१ । पक°. ३ घ. झ. ढ. इति श्रीमद्भगवद्दुर्गकृत (घ. ट. °दुर्गवृत्ते)° वृत्तौ दशमस्याध्यायस्य चतुर्थः पादोऽध्यायश्च समाप्तः; च. दशमोऽध्यायः समाप्तः; छ. ढ. इति जम्बू°. ४ ठ. ड. निघण्टुपञ्चमाध्यायसहदशमोऽध्यायः समाप्तः २८ खण्डः. ११

## अथ षष्ठाध्यायस्य

### प्रथमः पादः ।

ॐ३म् । त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः [ ऋ० सं० २ । १ । १ ] ॥ त्वमग्ने द्युभिरहोभिस्त्वमाशुशुक्षणिराशु इति च शु इति च क्षिप्रनामनी भवतः क्षणिरुत्तरः क्षणोतेराशु शुचा क्षणोतीति वा सनोतीति वा शुक् शोचतेः पञ्चम्यर्थे वा प्रथमा तथाहि वाक्यसंयोग आ इत्याकार उपसर्गः पुरस्ताच्चिकीर्षितज उत्तर आशुशोचयिषुरिति शुचिः शोचतेर्ज्वलतिकर्मणोऽयमपीतरः शुचिरेतस्मादेव निःषिक्तमस्मात्पापकमिति नैरुक्ताः । इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् । आशा दिशो भवन्त्यासदनादाशा उपदिशो भवन्त्यभ्यशनात्काशिर्मुष्टिः प्रकाशनान्मुष्टिर्मोचनाद्वा मोषणाद्वा मोहनाद्वा । इमे चिदिन्द्र रोदसी अपारे यत्संगृभ्णा मघवन्काशिरित्ते । इमे चिदिन्द्र रोदसी रोधसी द्यावापृथिव्यौ विरोधनाद्रोधः कूलं निरुणद्धि स्रोतः कूलं रुजतेर्विपरीताल्लोष्टोऽविपर्ययेणापारे दूरपारे यत्संगृभ्णासि मघवन्काशिस्ते महान् । अहस्तमिन्द्र सं पिणक्कुणारुम् । अहस्तमिन्द्र कृत्वा संपिण्ढि परिक्वणनं मेघम् ॥ १ ॥

---

'आशुशुक्षणिः' ( निघ० ४ । ३ । १ ) इत्यनवगतम् । 'आशु शुक्सनिता वा' स्यात् 'आशु शुक्क्षणिता वा' ।

'आशुशुक्षणिः' इत्यस्य प्रयोगोऽर्थश्च — त्वमग्ने द्युभिः । गृत्समदस्येयमार्षम् । प्रातरनुवाकाश्विनयोः शस्यते । ( आश्व० श्रौ० ४ । १३ ] । हे भगवन्नग्ने त्वं द्युभिः अहोभिर्निमित्त-

---

१ क. ख. द. निष्षिक्त°; त. निष्षिक्त°. २ क. ख. छ. त. द. °रुक्ताः ।१। इन्द्र°. ३ क. ख. २ (१); छ. त. द. २. ४ क. ख. घ. झ. शुचा संनिता; ट. शुचा सनिता° कृ. ५ क. ख. झ. शुचा क्षणिता; घ. शुचा क्षिता; ट. शुचा क्षिता° कृ. ६ क. ख. घ. झ. ट. द्युभिस्त्वमाशुशुक्षणिः० जायसे शुचिः । गृत्स°; ठ. ड. द्युभिरिति । गृत्स°. ७ क. ख. घ. झ. ट. °स्यते । जगत्याग्नेयी । हे°; ब. °स्यते । हे °जगत्याग्नेयी.

भूतैः पौर्णमास्यादिभिरेषां मथ्यमानो नृणां जायसे । 'पौर्णमास्याममावस्यायां वादधीत' इत्युक्तम् (मान० श्रौ० १।५।१।८)। किंच। त्वमाशुशुक्षाणिः । 'आशु इति च शु इति च' एते 'क्षिप्रनामनी भवतः'। 'शु' इत्येतदत्र प्रासङ्गिकमन्यत्रोपकारं करिष्यतीति । तद्यथा। 'शुनो वायुः शु एत्यन्तरिक्षे' (नि० ९।४०) इत्येवमादौ। 'आशुशुक्षणिः' इत्येतेषां पञ्चानामक्षराणामाद्यं तावदक्षरद्वयम् 'आशु' इत्येतत्क्षिप्रनाम। अधुना 'शु' इत्येतत्तृतीयमक्षरमतिक्रम्योत्तरमक्षरद्वयं निराह। 'क्षणिः' इत्येष द्व्यक्षरः शब्दः 'क्षणोतेः' धातोर्हिंसार्थस्य [धा० ८।२] 'सनोतेः' वा संभजनार्थस्य। मध्यमं तु 'शु' इत्येतदक्षरं शुचेर्दीप्त्यर्थस्य। अथ कोऽथः सर्वैरप्येतैरक्षरैरभिधीयत इति। उच्यते। 'आशु शुचा' दीप्त्या 'क्षणोति' हिनस्ति 'इति' आशुशुक्षणिरग्निः। अथवा 'आशु शुचा सनोति' संभजत 'इति' आशुशुक्षणिरग्निः। क्षणिः क्षणोतेः

तस्यैव विविधा व्युत्पत्तिः

सनोतेश्च विकल्पः। 'शुक् शोचतेः' इति पञ्चानामक्षराणामाशुशुक्षणिशब्दे तृतीयमक्षरं 'शु' इति तस्यैतन्निर्वचनम्। एवं तावदयमेको निर्वचनप्रकार आशुशुक्षणिशब्दस्य। अथ 'वा' एवमन्यथा स्यात्। 'पञ्चम्यर्थे प्रथमा' इयं विभक्तिः। 'आशुशुक्षणेः' इति यदुक्तं स्यादेतदुक्तं भवति 'आशुशुक्षणिः' इति। आह। किं पुनः कारणं प्रथमैषा सती पञ्चमीत्वेन विपरिणम्यत इति। उच्यते। 'तथाहि वाक्यसंयोगः'। तेन प्रकारेण पञ्चमीत्वेन विपरिणतस्यास्य शब्दस्यानेन वाक्येन संयोगोऽर्थसंगतिर्भवति न यथावस्थितस्य। आह। कथं कृत्वेति। उच्यते। 'त्वमद्भ्यस्त्वमश्मनस्परि त्वं वनेभ्यस्त्वमोषधीभ्यः' इत्येतान्युत्तराणि बहूनि पदानि पञ्चम्यन्तानि। तस्मादनेनापि पञ्चम्यन्तेनैव भवितव्यमित्युपपद्यते पञ्चमीत्वेन विपरिणाम इति। आशुशुक्षणिरित्यस्याक्षरपञ्चकस्य य एष

---

१ च. °क्रम्येमुत्त° म्यो. २ कं. ख. व. झ. ट. ठ. ड. 'क्षणिः' नास्ति; ग. ज. क्षणः. ३ ग. ज. क्षण्णिरि°; च. °क्षणिरि° णे. ४ क. ख. घ. झ. ट. ठ. ड. °रेण पञ्चमीत्वेन विपरिणामे पञ्चमी°; च. °रेण पञ्चमी° पञ्चमीत्वेन विपरिणामे. ५ क. ख. घ. झ. ट. ठ. ड. 'अस्य' नास्ति; च. अस्य. ६ क. ख. °तान्यक्षराणि; घ. झ. ट. °न्युक्षराणि. ७ क. ख. घ. झ. ट. ठ. ड. °रित्येतस्या°.

पुरस्तात् 'आकारः' एव तावत् 'उपसर्गः'। यः पुनरे 'शुशुक्षणिः' इत्यनन्तरश्चतुरक्षरः शब्द एव 'चिकीर्षितजः'। चिकीर्षितादर्थाज्जातः। सन्नन्तादित्यभिप्रायः। अथ पुनः समस्तस्य कोऽर्थ इति। उच्यते। यः कश्चित् 'आशुशोचदिषुः' आदिदीपयिषुर्भवति स आशुशुक्षणिः। तस्मादाशुशुक्षणेस्त्वं हे भगवन्नग्ने जायसे। किमेतावदेव। नेत्युच्यते। त्वमद्भ्यो जायसे वैद्युतात्मना। त्वमेवाश्मनः परि। सर्वतः इतरेतराभिघाताज्जायसे। त्वं वनेभ्यो दारुभ्यः। त्वमोषधीभ्यः शरादिभ्यः। त्वं नृणां मनुष्याणां हे नृपते मनुष्यपते जायसे अभिव्यज्यसे शुचिः। दीप्त इत्यर्थः।

'शुचिः शोचतेः' ज्वलत्यर्थस्य। 'अयमपीतरः शुचिः' लौकिकः 'एतस्मादेव' इति वैयाकरणा मन्यन्ते। नैरुक्ताः पुनर्निःपूर्वात्सिञ्चतेरितरः शुचिरित्येवं मन्यन्ते। निष्कृष्य हि तस्मात् 'पापकम्' अशुचित्वमन्यस्मिन् 'सिक्तं' भवतीत्येवम्। अत्राग्निर्वाशुशुक्षणिरन्यो वा यः कश्चिदग्निं मथित्वा तेन किंचिदादिदीपयिषुर्भवति स वाशुशुक्षणिरिति।

आशुशुक्षणिरग्निर्यजमानादिर्वा

'आशाभ्यः' (२) इत्यनवगतमनेकार्थं च। आसदनादित्यवगमः।

'इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत्। जेता शत्रून्वि चर्षणिः' (ऋ० सं० २। ४१। १२)॥ गृत्समदस्येयमार्षम्। अभिप्लवस्य द्वितीयेऽहनि प्रउगे शस्यते (आ० श्रौ० ७। ६)। इन्द्र आशाभ्यो दिग्भ्यो हि यद्भयमुत्पद्यते जनानां दिङ्निवासिभ्यो भूतेभ्यः तत् अभयं करत्। करोत्वित्यर्थः। आह। किंलक्षणः पुनरसाविन्द्र इति। जेता शत्रून्वि चर्षणिः। अधिद्रष्टा सार्वभौतिकानां कर्मणाम्। 'आशा दिशो भवन्ति आसदनात्'। आभिमुख्येन हि ताः सर्वत्र सन्ना इव भवन्ति। 'आशा उपदिशो भवन्त्यभ्यशनात्'। अभ्यश्नुवते हि ताः परस्परेणैव।

'आशाभ्यः' इत्यस्य

---

१ म. ज. अशुशु°; च. आसुशु°. २ घ. ट. ठ. ड. 'चिकीर्षितजः' नास्ति. ३ क. ख. घ. ट. °र्वाच्य आशु°; झ. °र्वा सम आशु°. ४ क. ख. °रिति। १। आशा°. ५ ड. °श्रमः। १। इन्द्र°. ६ ग. ज. 'स्परि (ग. स्परि। २।)। गृत्स°; घ. झ. ट. °स्परि० वि चर्षणिः। गृत्स°. ७ क. ख. घ. झ. ट. ठ. ड. °मार्षम्। गायत्री। ऐन्द्री। अभि°; च. °मार्षं। अभि° गायत्री ऐन्द्री. ८ क. ख. घ. झ. ट. ठ. ड. 'तत्' नास्ति. १० म. ज. आशाति. ११ ग. ज. सर्व°.

'काशिः' (३) इत्यनवगतम् । 'काशयितव्यः' इत्यवगमः ।

**'काशिः' इत्यस्य**

'मुष्टिः' इत्यभिधेयवचनम् । '[1]प्रकाशनात्' इति निर्वचनम् । 'मुष्टिः' इत्येतत्पर्यायप्रसक्तं निरुच्यते । 'मोचनाद्वा' । मुच्यते ह्यसौ । मोषणाद्वा' । तेन हि मुष्यते । 'मोहनाद्वा' । तत्र हि मुह्यति परः किमप्येतस्मि[2]न्मुष्टाविति । 'उताभये पुरुहूत[3] श्रवोभिरेको दृह्ळमवदो वृत्रहा सन् । इमे चिदिन्द्र रोदसी अपारे यत्संगृभ्णा मघवन्काशिरित्ते' ( ऋ० सं० ३ । ३० । ५ )॥ विश्वामित्रस्यार्षम् । त्रिष्टुप् । पृष्ठ्याभिप्लवयोर्द्वितीयपञ्चमयोरह्नोः संपातसूक्तं नाम तत्रेयं शस्यतेऽच्छावाकेन माध्यन्दिने सवने ( आ० श्रौ० ७ । ५ ) । 'सहदानुमलातृण उद्वृह रक्षः' इत्येताश्च ( ऋ० सं० ३ । ३० । ८–१०–१७ ) तत्रैव । अपि भयवति संग्रामे अभये इव हे पुरुहूत एकः अपि सन् असहायः श्रवोभिः श्रवणीयैः शब्दैः अन्नैर्वा हविर्भि[6]स्तृतः सन् दृढं समर्थम् अवदः वृत्रहा । शत्रुहेत्यर्थः । किमेतावदेव [7]माहाभाग्यम् । नेत्युच्यते । इदं चान्यत् । इमे चित् इमे अपि रोदसी द्यावापृथिव्यौ एवमपि अपारे दूरपारे सती यत्संगृभ्णासि त्वम् अहो काशिस्ते महान् । एवमत्र संग्रहणसंबन्धात्काशिशब्दो मुष्ट्यभिधायक इत्युपपद्यते ।

प्रसक्तानुप्रसक्तमुच्यते । ये एते 'रोदसी' एते 'रोधसी' । किं कारणम् ।

**रोदसीशब्दव्युत्पत्तिः**

'विरोधनात्' । विविधानि हि भूतान्येते रुन्द्धः । 'कूलम्' अपि 'रोधः' [8]इत्युच्यते । तदपि ह्युदक[9]स्रोतांसि 'निरुणद्धि' । 'कूलं रुजतेः' धातोः । तत्पुनर्वैपरीत्येन । 'लोष्टः' पुनरस्यैव धातोः 'अविपर्ययेण' ।

'कुणारुम्' (४) इत्यनवगतम् । मेघोऽभिधेयः । 'क्वणनम्'

---

१ ठ. ड. 'प्र' नास्ति. २ क. ख. किमेतन्मृष्टा°; घ. झ. ट. ठ. ड. 'अपि' नास्ति. ३ ग. °हूत । विश्वा°; ज. °हूत । विश्वा°; घ. झ. ट. °हूत० काशिरित्ते । विश्वा°. ४ क. ख. च. दृढम°. ५ क. ख. घ. झ. ट. । त्रिष्टुप् । ऐन्द्री पृष्ठ्या°; च. त्रिष्टुप् । पृष्ठ्या° ऐन्द्री. ६ क. ख. घ. झ. ट. ठ. ड. हविर्भिर्वा तृ°. ७ ग. घ. महा°. ८ क. ख. घ. झ. ट. ठ. ड. 'इति' नास्ति. ९ च. श्रोतांसि स्रो.

इति शब्दसमाधिः[1]। 'सहदानुं पुरुहूत[2] क्षियन्तं-महस्तमिन्द्र सं पिणक्कुणारुम्। अभि वृत्रं वर्धमानं पियारुमपादमिन्द्र तवसा जघन्थ ' (ऋ० सं० ३। ३०। ८)॥ 'सह' इत्युदकनाम (निघ० १। १२। ४०)। उदकदातारं मेघं हे पुरुहूत इन्द्र क्षियन्तम् अन्तरिक्षलोके निवसन्तं गच्छन्तं वापि[3] अहस्तम् अप्रतीकारसमर्थं कृत्वा तत[4] एनं संपिणक्[5] संपिण्ढि चूर्णय[6] कुणारुं परिक्वणनम्। शब्दकारिणमित्यर्थः। एवं तावदेनं कुरु। अथ पुनर्योऽयमपरो वृत्रः वर्तिता मेघः एनमप्युपरि वर्धमानं पियारुं हिंसनशीलम् अपादं गमनहीनं कृत्वा तत एनं तवसा बलेन जघन्थ। जहीत्यर्थः। एवमत्र वधाधिकारान्मेघाधिकाराच्च 'कुणारुं क्वणनशीलम्' इत्युपपद्यते।

'कुणारुम्' इत्यस्य

'अलातृणः' (५) इत्यनवगतम्। 'अलमातर्दनः' इत्यवगमः॥ १[8]॥

---

अलातृणो वल इन्द्र व्रजो गोः पुरा हन्तोर्भयमानो व्यार। सुगान्पथो अकृणोन्निरजे गाः प्रावन्वाणीः पुरुहूतं धमन्तीः (ऋ० सं० ३। ३०। १०)॥ अलातृणोऽलमातर्दनो मेघो वलो वृणोतेर्व्रजो व्रजत्यन्तरिक्षे गोरेतस्या माध्यमिकाया वाचः पुरा हननाद्भयमानो व्यार। सुगान्पथो अकृणोन्निरजे गाः[9] सुगमनान् पथोऽकरोन्निर्गमनाय[10] गवाम्। प्रावन्वाणीः पुरुहूतं धमन्तीः। आपो वा वहनाद्वाचो वा वदनाद्बहुभिराहूतमुदकं भवति धमतिर्गतिकर्मा॥ २[11]॥

---

१ ग. °माधिः। ४। सह°. २ ग. ज. च. °हूत। सह°; घ. झ. ट. °हूत° तवसा जघन्थ। सह°; ठ. ड. °हूत द्युमन्तमह°. ३ क. ख. घ. झ. ट. ठ. ड. 'अपि' नास्ति. ४ क. ख. घ. झ. ठं. ड. ततः पुनः सं°; ट. ततः पुनः सं° एनं. ५ घ. ज. ठ. ड. संपिणि. ६ क. ख. घ. ट. संचूर्णय; च. °चूर्णय° सं. ७ ग. ज. एतम°. ८ क. ख. २ (१); ग २ ; घ. झ. ट. च. ज. अङ्को नास्ति. ९ क. ख. छ. त. द. पथो अक°. १० क. ख. छ. त. द. °करोन्निरजनाय गवाम्; ङ. ठ. ड. °करोन्निर्ग°. ११ क. ख. ३ (२); छ. त. द. ३.

अलातृणो वलः । हे इन्द्र योऽयम् अलमातर्दनः पर्याप्त आतर्दयितुमुदकपूर्णो वलो मेघः । स ह्यावृणोत्युदकम् । व्रजश्च स एव 'अन्तरिक्षे व्रजति' इति । गुणान्तरत्वादजामि । आह । किं तस्येति । उच्यते । एष गोः एतस्या माध्यमिकाया वाचो

'अलातृणः' इत्यस्य

भावत्काया: शब्दमुपश्रुत्य पुरा एव हननात् भवतो वधात् भयमानो बिभ्यत् असह्योऽयमस्य वध इति मन्यमानो व्यार । विश्लथीभवतीत्यर्थः । स त्वमनेनैव प्रकारेणैनं मेघं विदारयन् सुगान् सुगमनान् पथो मार्गान् अकृणोत् करोषि वा निर्गमनाय एतासां मेघोदरान्तर्गतानां गवाम् अपाम् । विदीर्णे हि तस्मिन्मेघे सुखं तास्तस्मान्मेघोदरान्निर्गच्छन्ति । किंच । निर्गताः सत्यस्ता वाणीः आपः प्रावन् प्रकर्षेणावन् रक्षन्ति धमन्तीः गच्छन्त्यो यथानिम्नमभिसरमाणाः पुरुहूतम् उदकम् । यदेतदुदपानं तडागनद्यादि तत्प्रति धमन्तीस्तदेव रक्षन्ति । तद्ध्युपदस्येद्यदि न पतेरंस्ता आपः । एवमापो वाणीशब्देनोक्ताः । ता हि 'वहनात्' वाणीरित्युच्यन्ते । 'वाचो वा वदनात्' वाणीशब्देनोच्यन्ते । यदा विदीर्णान्मेघान्निर्गतमुदकं पुरुहूतं भवति वर्षभावेनाथ तदा तेषामेव प्राणिनामहो वृष्टमित्येवमाद्या वाणीर्वाचो धमन्तीमुखेभ्यो निर्गच्छमानास्तदेवोदकं प्रावन् । प्रागच्छन्नित्यर्थः । एवमत्र 'पुरा हननाद्भयमानो व्यार' इत्यनेन संबन्धात् 'अलातृणो मेघ' इत्युपपद्यते ।

'बहुभिः' प्राणिभिराहूयते ममेदं ममेदमिति तस्मात्पुरुहूतम् 'उदकं भवति' । 'धमतिः' एष 'गतिकर्मा' एव अत्र न स्तुतिकर्मेत्यभिप्रायः । स्तुतिकर्मस्वपि हि धमतिः पठितो 'धमति नदति सरति' इति (निघ० ३।१४) ।

'निरजे गाः' इत्यत्र केचित् 'पशुगव्य एताः' इति व्याचक्षते । तासां हीन्द्रेण विदारितेषु मेघेषु सुगमनाः पन्थानो निर्गमनाय भवन्ति

१ क. ख. च. ज. बलः; घ. झ. ट. वल इन्द्र० पुरुहूतं धमन्तीः । हे°; ठ. ड. अलातृण इति । हे°. २ क. ख. ग. च. ज. ठ. बलो. ३ क. ख. घ. झ. ठ. ट. ड. 'उच्यते' नास्ति. ४ ग. ज. मेघोनरा°; च. मेघान्तरा° द. ५ च. °तानां च गवा°. ६ ग. ज. 'हि' नास्ति ७ च. सुखं खं. ८ घ. ट. ठ. ड. सत्याः स्ता वा°; झ. सत्यः स्ता वा°. ९ क. ख. °मुदकस्थानं; घ. झ. ट. ठ. ड. °मुदकपानं. १० क. ख. घ. झ. ट. ठ. ड. °द्वाणीरित्युच्यन्ते. ११ ग. ज. °मुख्येभ्यो; च. °मुख्येभ्यो° खे. १२ क. ख. घ. झ. ट. ठ. ड. °एव नात्र स्तुति°.

सुयवसत्वान्नीरजस्कत्वाच्च । 'प्रावन् वाणी' इत्यत आरभ्य समानमेव पूर्वेण । 'सलल्ककम्' (६) इत्यनवगतम् । 'संलुब्धम्' इति शब्दसमाधिः 'सररूकम्' इति वा । २ ।

---

उद्वृह रक्षः सहमूलमिन्द्र वृश्चा मध्यं प्रत्यग्रं शृणीहि । आ कीवतः सलल्कं चकर्थ ब्रह्मद्विषे तपुषिं हेतिमस्य (ऋ० सं० ३ । ३० । १७ ) ॥ उद्धर रक्षः सहमूलमिन्द्र मूलं मोचनाद्वा मोषणाद्वा मोहनाद्वा वृश्च मध्यं प्रतिशृणीह्यग्रमग्रमागतं भवत्या कियतो देशात्सलल्कं संलुब्धं भवति पापकमिति नैरुक्ताः सररूकं वा स्यात्सर्तेरभ्यस्तात्तपुषिस्तपतेर्हेतिर्हन्तेः । त्यं चिदित्था कत्पयं शयानम् । सुखपयसं सुखमस्य पयः । विस्रुह आपो भवन्ति विस्रवणात् । वया इव रुरुहुः सप्त विस्रुह इत्यपि निगमो भवति वीरुध ओषधयो भवन्ति विरोहणात् । वीरुधः पारयिष्ण्व इत्यपि निगमो भवति नक्षद्दाभमश्नुवानदाभमभ्यशनेन दभ्नोतीति । नक्षद्दाभं ततुरिं पर्वतेष्ठामित्यपि निगमो भवत्यस्कृधोयुरकृध्वायुः कृध्विति ह्रस्वनाम निकृत्तं भवति । यो अस्कृधोयुरजरः स्वर्वानित्यपि निगमो भवति निशृम्भा निश्रथ्यहारिणः ॥३॥

---

उद्वृह रक्षः । उद्धर एतत् रक्षः सहमूलं हे इन्द्र । वृश्चा अस्य छिन्धि मध्यम् । अग्रं चास्य प्रतिशृणीहि । प्रतिजहीत्यर्थः । किंच । आ कीवतः आ कस्मात् देशात् एतदुद्धर । यस्माद्वितर्क्यमाणा अपि न शक्नुयुर्वितर्कयितुं कियतोऽपि प्रदेशादेतदुद्धृ-

'सलल्ककम्' इत्यस्य

---

१ ठ. ड सल्लुब्धम्. २ क. ख. ३ (३); ग. ३; ठ. ड. °मिति वा । इति निरुक्तटीकायां षष्ठाध्याये द्वितीयः खण्डः. ३ क. ख. छ. त. ठ. उद्वृह. ४ त. द. °त्या कीयतो° कि. ५ ठ. ड. सल्लुब्धं. ६ क. ख. छ. त. द. °यिष्ण्व १ इत्य°. ७ छ. त. द. 'निशृम्भा निश्रथ्यहारिणः' नास्ति. ८ क. ख. ४ (३); छ. त. द ४. ९ ग. रक्षः ६ । उद्ध°; घ. झ. ट. रक्षः सहमूल० हेतिमस्य । उद्ध°; ठ. ड. रक्ष इति । उद्ध°. १० घ. झ. ट. ठ. ड. °वतः । आ कि (झ. की) यत इति पाठांतरं । आ क°; च. °वतः ^ आक° आ कियत इति पाठांतरं. ११ ग. ज. 'न' नास्ति.

तमिति । यथा न किंचिदप्यस्यावशिष्यते तथैतदुद्धरेत्यभिप्रायः । तथा चैतदुद्धृत्य सल्लूकं सल्लुब्धं संमूढम् अप्रतिपक्षं कुरु । अथवा ‘ पापकं ’ पापतरम् अस्मत्तः कुरु एतद् ‘ इति ’ नैरुक्तपक्षेण । अथवा सररूकं सरणशीलं नाशनशीलं प्रच्युतं स्वदेशात् एतत्कुरु । तत एतदुन्मूलं कृत्वा स्थानप्रच्युतायास्मै रक्षसे ब्रह्मद्विषे ब्राह्मणद्वेष्ट्रे तपुर्षिं तापयित्रीं हेतिं हन्त्रीम् आयुधजातिं मध्याग्रच्छेदनाय पुनः पुनः अस्य । क्षिपेत्यर्थः । एवमत्र ‘ सल्लूकम् ’ इति लुभेर्मोहनार्थस्य शब्दसारूप्यात् ‘ संलुब्धम् ’ इत्युपपद्यते । ‘ सर्तेः ’ अप्यत्र सारूप्यमस्तीति ‘ सररूकं वा स्यात् ’ इत्युक्तं भाष्यकारेण । रक्षोविशेषणं चैतत्तस्य हि संमोहो वा नाशनं वाभीष्टमिति ।

‘ कत्पयम् ’ (७) इत्यनवगतम् । ‘ कपयम् ’ इत्यवगमः । ‘ सुखपयसम् ’ इति पर्यायेणाभिधेयवचनम् । मधुरोदको यो मेघः सोऽभिधेयः । किं कारणम् । ‘ सुखं ’ हि सुखोत्पादनम् ‘ अस्य पयः ’ मधुरत्वात् ।

‘ कत्पयम् ’ इत्यस्य

‘ त्यं चिदित्था कत्पयं शयानमसूर्ये तमसि वावृधानम् । तं चिन्मन्दानो वृषभः सुतस्योच्चैरिन्द्रो अपगूर्या जघान ’ ( ऋ०सं० ५ । ३२ । ६ )॥

गातुर्नामात्रेयस्तस्येयमार्षम् । त्यं तं मेघम् इत्था अमुना प्रकारेण अथवा अमुष्मिन्नन्तरिक्षलोके कत्पयं सुखोदकं शयानम् असूर्यं च तमः कृत्वा वावृधानं वर्धमानं मन्दानः मन्दमानो वृषभो वर्षिता इन्द्रः सुतस्य अभिषुतस्य सोमस्य स्वमंशं पीत्वा तत उच्चैः वज्रम् अवगूर्य जघान । य एवंगुणविशिष्ट इन्द्रः सोऽस्माकमिदं नाम करोत्विति[12]त्येवमा-

१ ठ. ड. सल्लुच्धं. २ ग. ज निरुक्त°. ३ घ. झ. ट. ठ. ड. क्षरण°. ४ क. ख. घ. झ. ट. ठ. ड. वाशन°; ग. ज. ‘नाशनशीलं’ नास्ति; च. नैशनैशील °नाशन. ५ ग. ज. °देशाद्देन कुरु. ६ क. ख. घ झ. ट. ठ. ड. °जातिं मूलमध्याग्र°. ७ क. ख. घ. झ. ट. ठ. ड. °गमः । कपयमित्यवगमे सुख°; च. °गमः° मे. ८ ग. °त्यगात् । ७ । त्यं°. ९ ग. ज. कतपयं । गातु°; घ. झ. ट. कत्पयं शयानं० अपगूर्या जघान । गातु°. १० क. ख. घ. झ. ट ठ. ड. °सूर्यं तम– (व. ट. तप–) श्च कृ°; च. चं. ११ ग. ज. घ. झ. ट ट. ड. ‘ मन्दानः ’ नास्ति. १२ ग. ज. करोतीत्येव°; च करोत्येव° त्वे.

शीर्योऽज्या । एवमत्र 'इन्द्रो जघान' इत्यनेन संबन्धात् 'कतपयः सुखपयो मेघः' इत्युपपद्यते तस्याभीष्टत्वात् ।

'विस्रुहः' ( ८ ) इत्यनवगतम् । 'विस्रवः' इत्यवगमः । 'आपो भवन्ति' इत्यभिधेयवचनम् । 'विस्रवणात्' इति हेतुनिर्देशः । 'वैश्वानरस्य विमितानि चक्षसा सानूनि दिवो अमृतस्य केतुना । तस्येदु विश्वा भुवनाधि मूर्धनि वया इव रुरुहुः सप्त विस्रुहः' ( ऋ० सं० ६ । ७ । ६ ) ॥

५ 'विस्रुहः' इत्यस्य

भरद्वाजस्येयमार्षम् । प्रातरनुवाकाश्विनयोः शस्यते ( आ० श्रौ० ४ । १३ ) । वैश्वानरस्य भगवतोऽग्नेः

१० अमृतस्य अमरणधर्मिणः केतुना कर्मणा चक्षसा चक्षुषा दर्शनेन दिवः अपि यानि सानूनि समुच्छ्रितानि स्थानानि तानि विमितानि । विनिर्मितानीत्यर्थः । अग्निप्रकाश्यमानविषयो हि लोकः कर्मणि प्रवर्तते । साधुभ्यः साधुना च पापेभ्यश्च पापेन च सार्वलौकिकेन कर्मणा स्वकर्मफलभोगायेदं सर्वं विनिर्मीयत इत्यनयापेक्षयोक्तं वैश्वानरस्य चक्षुषा

१५ केतुना च दिवोऽपि सानूनि निर्मितानीति । अग्निरेव हि वाच्यधिदेवताभावेनावस्थितः सर्वमिदं व्यापयति ततः कर्म प्रतायते । तदुक्तम् 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' ( ऐतरे० उप० १ । २ । ४ ) इति । किंच । तस्येदु विश्वा । तस्यैव वैश्वानरस्य पृथिवीभावेनावस्थितस्य । 'इयं वा अग्निर्वैश्वानरः' ( मैत्रा० सं० १ । ४ । १३ ॥ २ । १ । २ ) इत्युक्तम् ।

२० विश्वानि भुवनानि सर्वभूतभावयितृणि उदकानि । 'भुवनम्' इति ह्युदकनामसु पठितम् ( निघ० १ । १२ । ५० ) । मूर्धनि उपरि वया इव शाखा इव रुरुहुः सप्त विस्रुहः । सप्त सर्पणाः विस्रुहो विविधस्रवणा भूत्वा ततः शाखा इव रुरुहुः अस्यां पृथिव्यां नद्यादिभावेन । शाखा इव ह्येताः पृथिव्या उपरि यथानिम्नं विस्रवमाणा आपो लक्ष्यन्त इत्येतद्

२५ १ क. ख. घ. झ. ट. ठ. ड. तस्य वचस्याभी°; च. तच्स्याभी° स्य वच. २ ग. °र्देशः । ८ । वैश्वा°. ३ ग ज. °तानि । भर°; घ. झ. ट. °तानि-सप्त विस्रुहः । भर°. ४ क. ख. घ. झ. ट. ठ. ड. °र्तते साधुभ्यसाधुनि वा । साधु°; च. °र्तते । साधु° साधुभ्यसाधुनि वा. ५ क. ख. घ. झ. ट. ठ. ड. 'च' नास्ति; च. चै. ६ च. कर्मणा स्वकर्मणा स्वकर्मफल°. ७ ग. ज. स्नाप°. ८ ग.

३० ज. वाग्नि°.

दृष्ट्वैवमवोचत् ' तस्येदु विश्वा भुवनाधि मूर्धनि वया इव रुरुहुः सप्त विस्रुहः' इति । एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च ' विस्रुह आपो भवन्ति ' इत्युपपद्यते । 'भुवन-' शब्देन भूतान्येवोच्यन्त इति केचिद्वर्णयन्ति । चतुर्विधश्च भूतग्रामो विस्रुहश्च वया इव रुरुहुः पृथिव्या उपरीति । ' सप्त ' शब्देनापि समुद्रानेव केचिद्वर्णयन्ति । ते हि पृथिव्याः शाखा इव लक्ष्यन्ते विस्रवन्ति च ।

भुवनशब्दस्य भूतानीति सप्तशब्दस्य च समुद्रा इत्यर्थ इति केचित्

' वीरुधः ' (९) इत्यनवगतम् । ' विरोहणाः[2] ' इत्यवगमः । ' ओषधयो भवन्ति ' इत्यभिधेयवचनम् । ' विरोहणात् ' इति हेतुनिर्देशः[3] । ' ओषधीः प्रति मोदध्वं[4] पुष्पवतीः प्रसूवरीः । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ' ( ऋ० सं० १० । ९७ । ३ ) ॥ भिषज आथर्वणस्येयमार्षम् । ओषधिसूक्ते[5] । याश्च पुष्पवत्यो याश्च फलवत्यो याश्चाफलास्ताः[6] सर्वा अश्वा इव वडवा इव सजित्वरीः सहजैत्र्यो वीरुधः सर्वरोगान् जित्वा अस्माकमायुषः पारयिष्णवः पारयित्र्यः सन्तु । एवमत्र ' पुष्पवतीः प्रसूवरीः ' इत्येतस्माद्विशेषलिङ्गात् ' वीरुध ओषधयो भवन्ति ' इत्युपपद्यते ।

' वीरुधः ' इत्यस्य

' नक्षद्दाभम् ' (१०) इत्यनवगतम् । ' नक्षणदाभम् ' इत्यवगमः । ' अश्नुवानदाभम् ' इति पर्यायेणाभिधेयवचनम् । अभ्यशनेन अभिव्यापनेन यो दभ्नोति हिनस्ति स नक्षद्दाभः[7] । ' तमु[8] नः पूर्वे पितरो नवग्वाः सप्त विप्रासो अभि वाजयन्तः । नक्षद्दाभं ततुरिं पर्वतेष्ठामद्रोघवाचं मतिभिः शविष्ठम् ' ( ऋ० सं० ६ । २२ । २ ) ॥

' नक्षद्दाभम् ' इत्यस्य

---

१ घ. झ. ट ठ. ड. भुवना० सप्त°. २ क. ख. ग ज. घ. झ. ट. ठ. ड. विरोहणात्; च. विरोहणात्. ३ ग. °देशः ।९। ओष°. ४ ग. च. ज. मोदध्वं । भिष°; घ. झ. ट. मादध्वं० वीरुधः पारयिष्वः । भिष°. ५ क ख. घ. झ. ट. ठ. ड. °सूक्ते । अनुष्टुप् । हे ओषधीः ओषधयः प्रतिमोदध्वम् । इमं रुग्णं प्रत्यस्पाप्य प्रति वा मुदिता हृष्टा भवन्तु । कीदृश्यो यूयम् । पुष्पवतीः पुष्पवत्यः प्रसूवरीः । प्रकर्षेण सूयन्ते उपभोगायेति प्रसूवरीः । याश्च°; च. °सूक्ते । ˇयाश्च° हे ओषधीः °०० कीदृश्यो यूयं. ६ क. ख. घ. झ. ट. ट. ड. °फला याश्चापुष्पास्ताः°; च. °फलाˇस्ताः° याश्चापुष्पा. ७ ग. °द्दाभः । ६ । तमु°. ८ ग. ज. पितरः । भर°; घ. झ. ट. पितरो० मतिभिः शविष्ठं । भर°.

भरद्वाजस्यार्षम् । ऐन्द्री । संपातसूक्ते माध्यन्दिने सवने ब्राह्मणाच्छंसिनः शस्त्रे ( आश्व० श्रौ० ७ । ५ )। ' तमीमहे ' ( ऋ० सं० ६ । २२ । ३ ) इतीयं च तत्रैव । तम् इन्द्रम् अस्माकं ये पूर्वे पितृगणाः सप्तसंख्या ये पुराणे पठ्यन्ते । अथवा सप्त सृप्ताः पूर्वतरमस्माल्लोकादमुं लोकम् । ते नवग्वाः नवगतयः । अभिनवा हि तेषां गतिरर्धमासेऽर्धमासे भवति पितृयज्ञं प्रत्यागन्तुम् । अथवा नवनीतगतयो नवगतयः । नवनीते हि तेषां मनसो गतिर्भवतीदमस्माकं स्यादिति । 'स्वयं विलीनं पितृणाम्' ( मैत्रा० सं० ३ । ६ । २ ) इत्युक्तम् । विप्रास इति विप्राः प्राप्तप्रज्ञाः पितृलोकेऽवस्थिताः मतिभिरभिवाजयन्तः स्तुवन्त आसते । किंलक्षणं पुनरिन्द्रं मतिभिरभिवाजयन्त आसत इति । उच्यते । नक्षद्दाभम् । योऽभिव्यापनमात्रेणापि दभ्नोति किमुत वेधेन । यश्च ततुरिः त्वरणशीलः । यश्च पर्वतेष्ठा मेघस्थायी । यस्य चाद्रोग्धव्या वाक् । अनतिक्रमणीयेत्यर्थः । यश्च शविष्ठो बलिष्ठः । य एवंगुणविशिष्ट इन्द्रस्तं मतिभिरभिवाजयन्त आसते । सोऽस्माकमिदं नाम करोत्वित्येवमाशीर्योज्या । एवमत्र शब्दसारूप्यदर्थोपपत्तेश्च योऽभ्यशनेन दभ्नोति स नक्षद्दाभ इत्युच्यते ।

' अस्कृधोयुः ' ( ११ ) इत्यनवगतम् । ' अकृध्वायुः ' इत्यवगमः । ' कृध्विति ' एतत् ' ह्रस्वनाम ' । तद्धि ' निकृत्तम् ' इव ' भवति ' ह्रस्वत्वात् । तस्याकारेण प्रतिषेधे कृते ' अकृधु ' इति भवति । ' तमीमह इन्द्रमस्य रायः पुरुवीरस्य नृवतः पुरुक्षोः । यो अस्कृधोयुरजरः स्वर्वान्तमा भर हरिवो मादयध्यै'

' अस्कृधोयुः ' इत्यस्य (ऋ० सं० ६ । २२ । ३ ) ॥ तं वयमात्मनः पुत्रम् ईमहे याचामहे हरिवः त्वाम् इन्द्रम् ईश्वरम् । आह । यः किंलक्षणः पुत्र इति ।

---

१ क. ख. घ. झ. ट ठ. ड. ॰जस्येयमार्षम्. २ क. ख. घ. झ. ट. ठ. ड. ऐन्द्री । त्रिष्टुप् । सं॰; च. ऐन्द्री । सं॰ त्रिष्टुप्. ३ क. ख. घ. झ. ट. ठ. ड. ' सवने ' नास्ति. ४ क. ख. घ. झ. ट. ठ. ड. शस्त्रे शस्यते । तमी॰. ५ ठ. ड. तत्रैव शस्यते. ६ क. ख. घ. झ. ट. ठ. ड. ॰संख्याका ये. ७ क. ख. घ. झ. ट. ते च नव॰. ८ ग. ज. विप्र प्राप्तप्रज्ञाः. ९ क. ख. घ. झ. ट. ठ. ड. ' इत्यर्थः ' नास्ति. १० क. ख. घ. झ. ट. ठ. ड. 'एतत्' नास्ति. ११ ग. ॰ति । ११ । तमी॰. १२ ग. ज. राय. । तं॰; घ. झ. ट. राय॰ हरिवो मादयध्यै । तं॰.

उच्यते । यः अस्य रायो धनस्य परिपालने भोगे च समर्थः । किंलक्षणस्य पुनर्धनस्येति । पुरुवीरस्य बहुवीरैस्तद्वतः । नृवतश्च दासैस्तद्वतः । पुरुक्षोश्च बहुनिवासस्य । अनेकप्रकारस्येत्यर्थः । न च परिपालनसमर्थ एव यः केवलमल्पकालस्तमीमहे । किं तर्हि । यश्चास्क्रधोयुः अक्रध्वायुः । दीर्घायुरित्यर्थः । अजरश्च । यो दृढशरीर इत्यर्थः । स्ववाँश्च यः सुष्ठु शत्रूणामीरयिता । य एवंगुणविशिष्टः पुत्रस्तम् आभर आहर हरिवो मादयध्यै अस्माकमात्मनश्च मदनाय । तर्पणायेत्यर्थः । एवमत्र 'अस्क्रधोयुः' इत्यनेन दीर्घायुरुच्यते तस्याभीष्टत्वाच्छन्दसारूप्याच्च । ५

'निशृम्भाः' (१२) इत्यनवगतम् । 'निश्रथ्यहारिणः' इत्यवगमः । निश्लथया दृढया गत्या हरन्तः ॥ ३ ॥ १०

---

आजासः पूषणं रथे निशृम्भास्ते जनश्रियम् । देवं वहन्तु बिभ्रतः ( ऋ० सं० ६ । ५५ । ६ )॥ आवहन्त्वजाः पूषणं रथं निश्रथ्याँहारिणस्ते जनश्रियं जातश्रियं बृबदुक्थो महदुक्थो वक्तव्यमस्मा उक्थमिति बृबदुक्थो वा । बृबदुक्थं हवामह इत्यपि निगमो भवत्यृँदूदरः सोमो मृदूदरो मृदुरुदरेष्विति वा । १५ ऋदूदरेण सख्या सचेयेत्यपि निगमो भवत्यृदूपे इत्युपरिष्टाद् व्याख्यास्यामः पुलुकामः पुरुकामः । पुलुकामो हि मर्त्य इत्यपि निगमो भवत्यँसिन्वती असंखादन्त्यौ । असिन्वती बप्सती भूर्यत्त इत्यपि निगमो भवति कपनाः कम्पनाः क्रिमयो भवन्ति । २० मोषथा वृक्षं कपनेव वेधस इत्यपि निगमो भवति भाऋजीकः प्रसिद्धभाः । धूमकेतुः समिधा भाऋजीक इत्यपि निगमो भवति रुजाना नद्यो भवन्ति रुजन्ति कूलानि । संरुजानाः पिपिष इन्द्रशत्रुरित्यपि निगमो भवति जूर्णिर्जवतेर्वा द्रवतेर्वा दूनोतेर्वा ।

---

१ ठ. ड. °प्याच्च । इति निरुक्तटीकायां षष्ठाध्याये तृतीयः खण्डः । निशृ°. २ ठ. निश्रथ्याँहा° थ्य. ३ क. ख. ४ ( ३ ); ग १२/३; इतरेष्वङ्को नास्ति. ४ क. ख. त. निश्रथ्यहा°; छ. निशृथ्यहा°; द. निश्रिथ्यहा° शृ. ५ क. ख. छ. द. °वति । ऋदू°; त. °वत्यृँदू° ति । ऋ. ६ क. ख. छ. द. °वति । ऋदू°. ७ क. ख. छ. द. °वति । असि° ८ क. ख छ. त द. क्रिमयो. २१

क्षिप्रा जूर्णिर्न वक्षतीत्यपि निगमो भवति । परि ध्रंसमोमना वां वयो गात् । पर्यगाद्वां ध्रंसमहरवनायाजम् ॥ ४ ॥

इति षष्ठाध्यायस्य प्रथमः पादः ।

---

५ 'आजासः पूषणम्' । भरद्वाजस्यार्षम् । आवहन्तु अजा अश्वा निशृम्भा निश्रथ्यहारिणः । य एवंलक्षणा अश्वास्ते आवहन्तु पूषणं देवं रथे व्यवस्थितं बिभ्रतः धारयमाणा जनश्रियं जातश्रियम् । उद्भूतश्रियमित्यर्थः । एवमत्र समानविभक्त्यन्तत्वात् 'आजासः' इत्यनेन 'निशृम्भा' इत्येतदश्वविशेषणम् । सति चाश्वविशेषणत्वे 'निश्रथ्यहारिणः' शीघ्रहारिणः । स्तथाभीष्टवादागमनस्य ।

'निशृम्भाः' इत्यस्य

'बृबदुक्थः' (१३) इत्यनवगतम् । 'महदुक्थः' इति वा 'वक्तव्योक्थ इति वा' शब्दसमाधी । 'बृबदुक्थं हवामहे सृप्रकरस्नमूतये । साधु कृण्वन्तमवसे' (ऋ० सं० ८ । ३२ । १० ) ॥ काश्यपस्यार्षम् । प्रथमे पर्याये मैत्रावरुणस्य शस्त्रे ( आ० श्रौ० ६ । ४ ) तृचाशीतिषु च महाव्रते ( ऐ० आ० ५ । २ । ३ ) शस्यते । 'उक्थम्' इति शस्त्रमुच्यते । तद्यस्य बृहत् महत् स बृबदुक्थः । अथवा तद्यस्य वक्तव्यं स बृबदुक्थः । तं बृबदुक्थम् इन्द्रं हवामहे वयमाह्वयामह एतस्मिन् कर्मणि सृप्रकरस्नं सृप्रबाहुं दीर्घबाहुम् ऊतये अवनाय रक्षणायात्मनः साधु कृण्वन्तं साधुकारिणं नित्यकालमेवास्य

'बृबदुक्थः' इत्यस्य

---

१ क. ख. छ. त. द. °रवनेनाजम्. २ क. ख. ५ ( ४ ); छ त. द. ५. ३ ङ. थ. ध. 'इति०पादः' नास्ति; छ 'इति षष्ठाध्यायस्य' नास्ति; त. इति षष्ठाध्याये प्र°; द. इति नैरुक्तस्य षष्ठा°, ४ व. झ. ट. पूषणं रथे०बिभ्रतः । भर°; ठ. ड. आजास इति । भर°. ५ ठ. ड. निश्रथ्यहा°. ६ क. ख. व. झ. ट. °भक्त्यन्तत्वादजा°; ग. ज. °विभक्तत्वादाजा°. ७ ग. च. ज. निश्लथ्य°. ८ क. ख. घ. झ. तस्याभी°; ट. तस्यांभी° था. ९ ग. °माधी । १३ । कृप्र°. १० ग. ज. °महे । कश्य°; व. झ. ट. °महे० मवसे । कश्य°. ११ च. ट. काश्यपस्या° मेधातिथेः. १२ ग. ज. 'पर्याये' नास्ति; च. प्रथमे मैत्रा° पर्याये.

जगतः साधु करिष्यामीत्यभिप्रायम् अवसे तस्यैव तर्पणाय । तमागतं सन्तमेतस्मिन् कर्मणि तर्पयिष्याम इत्येतेनाभिप्रायेणाह्वयामहे । एवमत्र 'हृवामहे' इत्यनेन संबन्धात् 'बृबदुक्थो महदुक्थो वक्तव्योक्थो वा' इत्युपपद्यते । य एव हि महदुक्थो भवति वक्तव्योक्थो वा स एव सुतरामाहूयत इति । 5

'ऋदूदरः' (१४) इत्यनवगतम् । 'मृदूदरः' इत्यवगमः । 'सोमः' अभिधेयः । 'ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः । अयं यः सोमो न्यधाय्यस्मे तस्मा इन्द्रं प्रतिरमेम्यायुः' (ऋ० सं० ८ । ४८ । १०) ॥ प्रगाथस्यार्षम् । सौमेन्द्रस्य 10

'ऋदूदरः' इत्यस्य

श्यामाकस्य चरोर्याज्यैषा सोमवामिप्रायश्चित्तेष्टौ (मैत्रा० सं० २ । २ । १३ ॥ ४ । ११ । २) । ऋदूदरेण मृदूदरेण सोमेन । मृदु हि सोमस्योदरं सुषिरत्वात् । अथवा मृदुरयमुदरे स्यादित्येवमाशास्यते पातृभिर्वमनाशङ्कया । तस्मान्मृदूदरः सोमः । स पुनरेष मृदूदरः सन्नृदूदर इत्युच्यते । तेन मृदूदरेण सख्या समानख्यानेनेव केनचित्पुरुषेण मित्रेण सचेय संसेवेय । पुनरार्गामिषु ऋत्वन्तरेषु सोमो यः मां न रिष्येत् न हिंस्यात् पीतः सन् यथाहमनेन सोमेनाहिंसितः तेन सचेयं । हे हर्यश्व इन्द्र एतदस्तु नः । किंच । अयं यः सोमो न्यधाय्यस्मे निहितोऽस्मास्वासीत् येनेमामापदमापादिताः स्मो वमनद्वारेण तस्मै तदर्थं तेनास्माकमायुषो यदवखण्डनं कृतं तत्प्रातिपूरणाय इन्द्रं प्रतिरं प्रतीर्णम् अनवखण्डितं सर्वम् 15 20

---

१ घ. ट. ठ. ड. 'वक्तव्योक्थो वा' नास्ति. २ ग. °घेयः ।१४। ऋदू°. ३ ग. ज. सख्या । प्रगा°;.घ. झ. ट. सख्या० प्रतिरमेम्यायुः । प्रगा°. ४ क. ख. घ. झ. ट. ठ. ड. °थस्येयमार्षम् । त्रिष्टुप् । सौमी । सोमे° (ठ. ड. सौमे°). ५ घ. झ. ट. ठ. ड. सोमवासिनः प्राय°; च. सोमवामि^प्राय° नः. ६ क. ख. घ. झ. ट. ठ. ड. सचेय संसचेयं संसे°; च. सचेय^संसे° संसचेयं. ७ क. ख. घ. झ. ट ठ. ड. संसेवेयम्; च. ससेवेय° यम्. ८ च. °रागामि° गा. ९ क. ख घ. झ. ट. ठ. ड. मा मां; च सोमो^मां° मा. १० क. ख घ. झ ट. ठ. ड सचेयं; च. सचेयं° यं. ११ क. ख. घ. झ. ट ठ. ड. इन्द्र सोमस्वामिन् एत°; च. इन्द्र^एत° सोमःवामिन् १२ च. °तीर्णं अवख°. 25

आयुः एमि । याचामीत्यर्थः । सोमभ्रमनवैगुण्यादायुश्छेदमाशङ्कमान इन्द्रं दीर्घमायुर्ययाच यजमानाय । एवमस्मिन् 'ऋदूदरः सोमः' प्रकरणाच्छन्दसारूप्याच्च ।

'ऋदूपे' ( १५ ) इत्युपरिष्टाद् व्याख्यास्यामः । 'ऋदूपे चिद्दवृधा' ( निरु० ६ । ३३ ) इत्यत्र ।

५

'पुलुकामः' ( १६ ) इत्यनवगतम् । 'पुरुकामः' इत्यवगमः[1] । 'इमं नु सोममन्तितो[2] हृत्सु पीतमुप ब्रुवे । यत्सीमागश्चकृमा तत्सु मृळतु[3] पुलुकामो हि मर्त्यः' ( ऋ० सं० १ । १७९ । ५ ) ॥ अगस्त्यलोपामुद्रासंवादे[4] । इमम् अहं सोमम् अन्तितः अन्तिकेऽवस्थितम् उपगम्य चेतसा ब्रुवे । न च बहिरन्तिकेऽवस्थितमुपब्रुवे । किं तर्हि । पीतं सन्तं हृत्स्वेव स्व एव हृदयेऽवस्थितमुपब्रुवे । यत्सीमागश्चकृमा यत्सर्वतः सर्वप्रकारमागश्चकृम पापं कृतवन्तो वयं तदयं सोमः सुमृळतु[5] सुष्ठु सुखविधिपरिणामं[6] करोतु । किं कारणम् । इतो यस्मात् पुलुकामो हि बहुकामो हि मर्त्यः । स बहुकामत्वान्मनुष्यस्वाभाव्यादवश्यमागः करोति । तदयं पीतः सोमः शमयत्वित्यभिप्रायः । एवमत्र पुलुकामशब्देन पुरुकामो बहुकाम उच्यते मर्त्यशब्दसामानाधिकरण्यात्सारूप्याच्च ।

'पुलुकामः' इत्यस्य

१०

१५

'असिन्वती' ( १७ ) इत्यनवगतम् । 'असंखादन्त्यौ' इत्यर्थप्रतीतिः[7] । 'अपश्यमस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु । नाना हनू विभृते सं भरेते असिन्वती बप्सती भूर्यत्तः' [ ऋ० सं० १० । ७९ । १ ] ॥ वैश्वानरस्याग्नेः सौचीकस्य वा[9] वाजम्भ-

२० 'असिन्वती' इत्यस्य

१ ग. °गमः । १५ । इमं°. २ ग. ज. °न्तितः । अग°; घ. झ. ट. °न्तितो०. कामो हि मर्त्यः । अग°. ३ क. ख. च. मृडतु. ४ क. ख. घ. झ. ट. ठ. ड. °वादे अन्तेवासी ब्रह्मचारी इमां सौमीं बृहतीमपश्यत् । इम°; च. °वादे । इम° अन्ते०००पश्यत्. ५ ग. ज. घ. झ. सुमृळतु. ६ क. ख. घ. झ. ट. ठ. ड. °विधिपरि°. ७ ग. °तीतिः । १६ । अप°. ८ ग. ज. °मस्य । वैश्वा°; घ. झ. ट. °मस्य०भूर्यत्तः । वैश्वा°. ९ ग, ज. 'वा' नास्ति; च. °कस्य वाज° वा.

२८

रस्य वा सप्तेरार्षम्[1] । अपश्यमहं भगवतोऽग्नेर्महतो महित्वं माहाभाग्यम्[2] अमर्त्यस्य अमरणधर्मिणो मर्त्यासु मरणधर्मिणीषु विक्षु[3] । मनुष्येष्वित्यर्थः । आह । किंपुनस्तन्माहाभाग्यमिति । उच्यते । नानाभावेनैते हनू हननसमर्थे[4] ज्वाले अवस्थिते विभृते[5] विविधमेवधृते[6] सत्यौ संभरेते एव[7] एकत्र हरेते हवींषि दारूणि वा[8] । संभृत्य च असिन्वती असंखादन्त्यौ असंखादन्त्याविव अथवा संचूर्णयन्त्याविव । अनेन प्रकारेण शीघ्रं[9] बप्सती भक्षयन्त्यौ भूरि अपि दारुजातं हविर्जातं वा यद्दत्तो भक्षयतो न च श्राम्यतः एतदस्य माहाभाग्यमहमपश्यमस्मिन्मनुष्यलोक इति । हनुरूपकसंबन्धाद्धवींष्वपि ज्वालासु द्विवचनमेव कृतम् । एवमत्र हनुसंबन्धात्[10] 'असिन्वती असंखादन्त्यौ' इत्युपपद्यते ।

'कपनाः' (१८) इत्यनवगतम् । 'कम्पनाः' इति शब्दसमाधिः । 'क्रिमयो[11] भवन्ति' इत्यभिधेयवचनम्[12] । 'अभ्राजि

'कपनाः' इत्यस्य — शर्धो[13] मरुतो यदर्णसं मोषथा वृक्षं कपनेव वेधसः । अध स्मा नो अरमतिं सजोषसश्चक्षुरिव यन्तमनु नेषथा सुगम्' [ऋ० सं० ५ । ५४ । ६ ] ॥ श्यावाश्वस्यात्रेयस्येयमार्षम्[14] । भ्राजते वो हे मरुतः तत् शर्धः तद्बलं येन बलेन मेघं वृद्धमुदकपूर्णम् अनुप्रविश्य मोषथ मुष्णीथ यूयम् । निरुदकं कुरुथेत्यभिप्रायः[15] । कथं पुनर्मोषथेति । वृक्षं कपनेव वेधसः । कम्पनाः क्रिमय इव वेद्धारः । यथा वृक्षमनुप्रविश्य क्रिमयो[16]ऽन्तर्गतं दारुचूर्णं रसं वा मुष्णन्त्येवं यूयमुदकं

---

१ क. ख. घ. झ. ट. ठ. ड. वा सप्तेरियमार्षम् । त्रिष्टुबाग्नेयी । अप°; ग. ज 'वा' नास्ति; च. 'रस्य सप्तेरार्षं । अप° त्रिष्टुप् । आग्नेयी. २ ग. ज. महा°; च. माहा° मा. ३ ग. ज. °धर्मणः; घ. ड. °स्यामरणधर्मिणीषु विक्षु; झ. °स्यामरधर्मिणधर्मिणीषु विक्षु. ४ च. हननसामर्थ्ये. ५ झ. ड. बिभृते. ६ क. ख. घ. झ. ट. ठ. ड. विविधमिव धृ. ७ क. ख. घ. झ. ट. ठ. ड. 'एव' नास्ति; च. एवं. ८ च. हवींषि दारूणि वा. ९ च. सांप्र° शी. १० घ. झ. ट. ठ. ड. हनूसं°. ११ क. ख. घ. झ. ट. ठ. ड. क्रिमयो°; च. कृमयो° क्रिं. १२ ग. °चनम् । १७ अभ्रा°. १३ ग. ज शर्धः । श्या°; घ. झ. ट. शर्धो० नेषथा सुगम् । श्या°. १४ क. ख. घ. झ. ट. ठ. ड. °मार्षम् । मारुती । जगती । दाशरात्रिके त्रिवृत्स्तोमे प्रथमेऽहन्याग्निमारुते विनियुक्ता । प्रशर्धायेत्याग्निमा (घ. ट. °ग्निना) रुत इति सूत्रणात् (ठ. ड. °मारुते सूक्तत्वात्) । अभ्राजि भ्राजते°; च. °मार्षम् । भ्राजते° मारुती० ०सूत्रणात् । अभ्राजि. १५ क. ख. घ. झ. ट. ठ. ड. कुरुतेत्य°; ग. ज. कुरुथेत्य°. १६ क. ख घ. झ. ट. किमयो°.

मुष्णीथ । अथवा । हे वेधसो मेधाविन इति मरुद्विषयमेतत्संबोधनं स्यात् । यस्माद्यूयमेवमादिना प्रभावेन युक्ता अथैतस्मात्कारणादस्माकमेवं[1] अरमतिम् अलमतिं पर्याप्तमतिं परिसमाप्तविद्यं यजमानं स्वकृतेनैव कर्मणा विद्यया वा यन्तम् इतो लोकादमुं लोकं सुगं शोभनगमनस्थानं[2] यूयमपि अनुनेषथ हे सजोषसः सहप्रीताः । गमनानुग्रहेऽस्य वर्तध्वमित्यभिप्रायः । कथं[3] पुनरनुनेषथ । चक्षुरिव । यथा गच्छतः पुरुषस्य चक्षुर्गमनानुग्रहे वर्तत एवमनुनेषथैनं सुगमिति । एवमत्र वृक्षसंबन्धात् 'क्रुमयः[4] कम्पनाः' । ते हि वृक्षं मुष्णन्ति मोषयन्ति[5] कम्पयन्ति च यं खादन्ति स्वयमेव वा कम्पन्ते चलनस्वाभाव्यात् ।

'भाऋजीकः' ( १९ ) इत्यनवगतम् । 'ऋजुभाः[6]' इत्यवगमः । 'प्रसिद्धभाः' इति पर्यायशब्देन निर्वचनम्[7] ।

'भाऋजीकः' इत्यस्य 'देवो देवान्परिभूर्[8]ऋतेन वहा नो हव्यं प्रथमश्चिकित्वान् । धूमकेतुः समिधा भाऋजीको मन्द्रो होता नित्यो वाचा यजीयान्'

( ऋ० सं० १० । १२ । २ ) इति ॥ आङ्गस्य[9] हविर्धानस्यार्षम् । त्रिष्टुप् । देवः त्वं दानादिगुणयुक्तो[10] हे भगवन्नग्ने देवान् परिभूः सर्वतो भवसि ऋतेन यज्ञेन सहितः । तदुक्तम् 'अराँ[11] इवाग्ने नेमिर्[12]देवांस्त्वं परिभूरसि' ( ऋ० सं० ५।१३।६ ) इति[13] । यस्त्वमेवंप्रभावस्तं त्वां ब्रवीमि । वह प्रापय नो हव्यं देवान् प्रति । प्रथमो यस्मात्त्वं मनुष्यहोतारमपेक्ष्य तस्मादेतत्कुरु । चिकित्वान् । स्वाधिकारमेतं[14] जानान इत्याभिप्रायः । धूमकेतुः धूमप्रज्ञानो धूमध्वजो वा समिधा समिन्धनेन भाऋजीकः प्रसिद्धभाः मन्द्रः मदनः तर्पयिता देवानां होता आह्वाता नित्यः । इतरं मनुष्यहोतारमनित्यमपेक्ष्याग्निरेव नित्यो होता । वाचा वागधिदेवताभावेनावस्थितः । यजी-

---

१ ग. ज. °कमेतामर°; च. °कमेतांपर° वा (ग). २ क. ख. घ. झ. ट. ठ. ड. °गमनं स्थानं° ३ क. ख. घ. झ. ट. ठ. ड. कथं च पुनर्नेषथ; च कथं पुन° च. ४ क. ख. घ. झ. ट. ठ. ड. क्रिमयः. ५ क. ख. घ. झ. ट ठ. ड. °यन्ति च कम्प°. ६ ग. ज. ऋज्रनाः; च. ऋज्रभाः° जु ७ ग. °नम् । १८ । देवो°. ८ ग. ज. °रिभूः । आङ्ग°; घ. झ. ट. °रिभूः०वाचा यजीयान् । अङ्ग°. ९ ग. ज. अङ्गस्य; च. अंङ्गस्य° आंग. १० ठ. ड. °युक्त हे°. ११ ग. च. ज. अरां इवा°. १२ ग. च. ज. निमि°. १३ घ. झ. ट. ठ. ड. 'इति' नास्ति. १४ क. ख. घ. झ. ट. ठ. ड. स्वमधि°.

यान् यष्टृतरो मनुष्यहोतारमपेक्ष्य । एवमत्र 'भाऋजीको प्रसिद्धभाः' इत्युपपद्यते । ५

'रुजानाः' इत्यस्य

'रुजानाः' (२०) इत्येतदेकैपदमनवगतम् । 'रुजेत्यः' इत्यवगमः । 'नद्यो भवन्ति' इत्यभिधेयवचनम् । 'रुजन्ति कूलानि' इति हेतुनिर्देशः।[3] 'अयोद्धेव दुर्मदं आ हि जुह्वे महावीरं तुविबाधमृजीषम् । नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः' (ऋ० सं० १ । ३२ । ६)॥ हिरण्यस्तूपस्यार्षम् । अग्निष्टोमे निष्केवल्ये शस्यते (आ० श्रौ० ५ । १५) । अयोद्धेव । यथा कश्चिदयोद्धा दुर्मदो दुर्मत्तो वाङ्मात्रसारः । आह । स यथा किं करोतीति । उच्यते । आ हि जुह्वे । आह्वयतीत्यर्थः । कमाह्वयति । महावीरं महाविक्रान्तं तुविबाधं बहूनां शत्रूणां बाधितारम् ऋजीषम् । ऋजीषिणमित्यर्थः । तदुक्तम् 'ऋजीषी वज्री' (ऋ० सं० ५ । ४० । ४) इति । तमेवंप्रभावमिन्द्रमाहूय मेघो नातारीत् इतरवदुर्मदो न तर्तुं शक्नोति अस्य इन्द्रस्य समृतिं समागमं वधानां प्रहाराणाम् । अतरमाणो या एता नद्यः संरुजाना ऊर्मिभिः कूलानि वहन्त्यो रुजन्ति ताः प्रति विशीर्यमाणः पिपिषे इन्द्रशत्रुः । इन्द्रस्य शातयितव्य इत्यर्थः । एवमत्र शब्दार्थोपपत्तेः 'नद्यो रुजानाः' इत्युपपद्यते । १० १५ २०

'जूर्णिः' इत्यस्य

'जूर्णिः' (२१) इत्यनवगतम् । 'जवनाद्वा द्रवणाद्वा दवनाद्वा'[5] इति शब्दसमाधयः । शक्तिरभिधेया । 'जवतेः'[6] गत्यर्थस्य जूर्णिः । 'द्रवतेर्वा' गत्यर्थस्यैव जूर्णिः । 'दुनोतेर्वा' हिंसार्थस्य[7] । 'प्रप्रा वो अस्मे[8] स्वयंशोभिरूती परिवर्ग इन्द्रो दुर्मतीनां दरीमन्[9]दुर्मतीनाम् । २५

---

१ क. ख. घ. झ. ट. ठ.ड. °देकं प°; ग. °देकनवगतं; ज. °देव पद°. २ ग. रुजन्त इ°; च. रुजन्ति इ° त्य; ज. रुजन्त्य इ०; ठ. ड. रुजइत्य°. ३ ग. °देशः । १९ । अयो°. ४ ग. ज. °र्मदः । हिर°; घ. झ. ट. °र्मदः० इन्द्रशत्रुः । हिर°. ५ ग. ज दूनन द्वा; च. दूनदवनाद्वा. ६ क. ख. घ. झ. ट. ठ. ड. जवतेर्वा ग°. ७ ग. °र्थस्य । २० । प्रप्रा°. ८ ग. ज. अस्मे । परु°; घ. झ. ट. अस्मे स्व० क्षिप्ता जूर्णिर्न वक्षति । परु°. ९ च. दरीमं दु°. ३३

स्वयं सा रिषयध्यै या न उपेषे अत्रैः । हतेमसन्न वक्षति क्षिप्ता जूर्णिर्न वक्षति ' ( ऋ० सं० १ । १२९ । ८ ) ॥ परुच्छेपस्यार्षम् । अतिच्छन्दाः । पृष्ठ्यस्य षष्ठेऽहनि निष्केवल्ये शस्यते ( आ० श्रौ० ८ । १ )॥ प्रब्रवीमि हे स्तोतारः प्रब्रूत अस्मै स्वयशोभिः आत्मीयैर्यशोभिः संयुक्ताः स्तुतीः । किं कारणम् । यस्मादेष इन्द्रः स्तुत ऊती अविता रक्षिता परिवर्गे संग्रामे । यत्र हि प्राणाः परिवृज्यन्ते वियुज्यन्ते तत्रायमस्माकं रक्षिता भविष्यति । दुर्मतीनां च पापमतीनामस्मच्छत्रूणां हन्ता भविष्यति । तमेतमेवंगुणविशिष्टमिन्द्रं दरीमन् दारयितृतमं दुर्मतीनां पुनः पुनः स्तुत । आह । कथं पुनरसावस्माकं रक्षिता भविष्यतीति । उच्यते । स्वयं सा रिषयध्यै रेषणाय भविष्यति । किंचिदप्यज्ञात्वास्माकमिन्द्रप्रभावात्स्वयमेव विनङ्क्ष्यतीत्यभिप्रायः । का पुनरसाविति । या न उपेषे अत्रैः । या अस्मान् उपागच्छति अत्रैः अदनैः रक्षोभिः प्रहिता सा । हतेमसन्न वक्षति । ' ईम् ' इत्यनर्थकः । हता सती इन्द्रेण न वक्ष्यति अस्मान् प्रति । क्षिप्ता अपि च तैः पुनरादरेणापि रक्षोभिः जूर्णिः जवसंपन्नापि सती शक्तिर्न वक्ष्यत्यस्मान् प्रति । न प्राप्स्यतीत्यर्थः । एवमत्र क्षेपणसंबन्धात् ' जूर्णिः शक्तिः ' इत्युपपद्यते ।

' ओमना ' ( २२ ) इत्यनवगतम् । ' अवनाय ' इत्यवगमः । ' ओमना ' इत्यस्य ' युवोः श्रियं परि योषावृणीत सूरो दुहिता परितक्म्यायाम् । यद्देवयन्तमवथः शचीभिः परि घ्रंसमोमना वां वयो गात् ' इति ( ऋ० सं० ७ । ६९ । ४ ) ॥ वसिष्ठस्यार्षम् । प्रातरनुवाकाश्विनयोः शस्यते ( आ० श्रौ० ५ । १५ ) । हे अश्विनौ युवोः श्रियं युवयोर्याश्रीस्तां परिवृणीत

१ क. ख. घ. झ. ट. ड. अतिशक्वर्यति°; च. °स्यार्षम् । ४ अति° अतिशक्वरी. २ ग. ज. प्रवोचत. ३ क. ख. घ. झ. ट. ठ. ड. भवति. ४ क. ख. घ. झ. ट. ' च ' नास्ति. ५ ग. च. ज. दरीम. ६ क. ख. च. स्तुतः. ७ क. ख. घ. झ. ट. ठ. ड. °प्यकृत्वा°; च. °प्यज्ञात्वा° कृ. ८ ग. °गमः । २१ । युवोः° ९ ग. ज. योषा । वसि°; घ. झ. ट. योषा० ओमना वां वयो गात् । वसि°. १० क. ख. घ. झ. ट. ठ. ड. °ष्ठस्येयमार्षम् । त्रिष्टुप् । आश्विनी । प्रात°; च. °ष्ठस्यार्षम् । ४ प्रात° त्रिष्टुप् । आश्विनी. ११ क. ख. घ. झ. ट. ठ. ड. परि अवृणीत.

सर्वत: संभजते योषा । अह । कतमेति । उच्यते । सूरो दुहिता सूर्यस्य दुहिता । येयमुष:संज्ञिकेयमवृणीत । परितक्म्यायां रात्र्याम् ऊर्ध्वमर्धरात्रात् । स ह्यश्विनो: काल: । किंच । यद्देवयन्तमवथ: शचीभि: । यस्मात् देवयन्तं देवान्यष्टुमिच्छन्तं यजमानम् अवथ: शचीभि: स्वै: कर्मभि: तेन कारणेन वां पर्यगात् परिगच्छति सर्वासु दिक्षु यजमानैर्दीयमानं युवां प्रति वय: अन्नं हविर्लक्षणं ग्रंसं प्रति अह: प्रति । अहनि प्राप्त इत्यर्थ: । पूर्वाह्णे ह्यश्विनोर्यागकाल: । तदुक्तं 'प्रातर्यावाणा प्रथमा यजध्वम्' (ऋ० सं० ५ । ७७ । १ ) इति । कमर्थं पुरस्कृत्य वयोऽन्नं गच्छति । अवनाय । तर्पणायेत्यर्थ: । एवमत्राश्विनोर्हवि:संप्रदानसंबन्धात् 'ओमना' इत्यस्य शब्दस्य 'अवनाय' इत्येष विपरिणाम उपपद्यते । ५ १०

केचिदत्र 'अवनेनान्नम्' इत्येवमधीयते भाष्यम् । तेषां योजना । 'अवनेनान्नम्' इति भाष्यपाठेऽर्थ: 'अवनेन' तर्पणेन भवतोर्निमित्तभूतेन 'पर्यगादन्नम्' इति ।

केचित् 'अनेनान्नम्' इत्येवमधीयते भाष्यम् । तेषाम् 'अनेनान्नम्' इति पाठे च 'अनेन' मन्त्रेण 'अन्नं' परिगच्छतीति योजना स्यादिति ॥ ४ ॥ १५

एकादशस्य प्रथम: पाद: ।

---

**उपलप्रक्षिण्युपलेषु प्रक्षिणात्युपलप्रक्षेपिणी वेन्द्र ऋषीन्पप्रच्छ दुर्भिक्षे केन जीवतीति तेषामेक: प्र युवाच । शकट: शाकिनी गावो जालमस्यन्दनं वनम् । उदधि: पर्वतो राजा दुर्भिक्षे नव वृत्तय इति । सा निगदव्याख्याता ॥ ५ ॥** २०

---

१ क. ख. घ. झ. ट. ठ. ड. दुहिता । कद्रा तां श्रियमुष:संज्ञि°. २ क. ख. घ, झ. ट, ठ. ड. ग्रंसं परि प्रति अह्नि°, ३ ग्र. झ. ट. ठ. ड. पूर्वाह्णे. ४ क. ख. घ, झ. ट, ठ. ड. ओमना अवना°, ५ क. ख. ५ (४); ग. ५; इतरेष्वङ्को नास्ति. ६ क. ख, घ, झ. ट, °दशाध्यायस्य प्रथ°; ठ. ड. इति ऋज्वर्थायां निरुक्तटीकायां षष्ठाध्याये चतुर्थ: खण्ड: । गुर्जरपाठे निघण्टसह एकादशाध्याये प्रथम: पाद:, ७ छ. त. द. 'इन्द्र०...निगदव्याख्याता' नास्ति; ठ. ड. वा ॥ ४ ॥ अत्र महाराष्ट्रवैदिकपाठ: । इन्द्र° ( ड पुस्तके '४' नास्ति ). ८ क. ख. ड. ५; छ. त. ६, २५ ३१

**उपलप्रक्षिणी इत्यस्य व्युत्पत्तिः**

'उपलप्रक्षिणी' ( २३ ) इत्यनवगतम् । 'सक्तुकारिका' अभिधेया । सा हि 'उपलेषु' यवान् 'प्रक्षिणोति' हिनस्ति । एवमस्योपलप्रक्षिणीशब्दस्याप्रतीयमानार्थस्य विग्रहेणार्थ[१]प्रतीतिरवगमः । अथ 'वा उपलेषु प्रक्षेपिणी' स्यात् । उपलेषु तप्तेषु भर्जनार्थं यवान् प्रक्षिपति । सा हि गौडेषु प्रसिद्धिः । उपलान् वा यवेभ्यः प्रक्षिपति । विचिनोतीत्यर्थः । सेयम् 'उपलप्रक्षेपिणी[२]' सती 'उपलप्रक्षिणी' इत्युच्यते[३] ॥ ५ ॥

---

कारुरहं ततो भिषगुपलप्रक्षिणी नना । नानाधियो वसूयवोऽनु गा इव तस्थिमेन्द्रायेन्दो परि स्रव ( ऋ० सं० ९ । ११२ । ३ ) ॥ कारुरहमस्मि कर्ता स्तोमानां ततो भिषक्तत इति संताननाम पितुर्वा पुत्रस्य वोपलप्रक्षिणी सक्तुकारिका नना नमतेर्माता वा दुहिता वा नानाधियो नानाकर्माणो वसूयवो वसुकामा अन्वास्थिताः स्मो गाव इव लोके[४]मिन्द्रायेन्दो परिस्रवेत्यध्येषणा । आसीन ऊर्ध्वामुपासि क्षिणात्यु[५]पस्थे प्रकलविद्वाणिग्भवति कलाश्च वेद प्रकलाश्च । दुर्मित्रासः प्रकलविन्मिमाना इत्यपि निगमो भवत्य[६]भ्यर्धयज्वाभ्यर्धयन्यजति । सिषक्ति पूषा अभ्यर्धयज्वेत्यपि निगमो भवतीक्ष ईशिषे । ईक्षे हि वस्व उभयस्य राजन्नित्यपि निगमो भवति । क्षोणस्य क्षयणस्य । महः क्षोणस्याश्विना कण्वायेत्यपि निगमो भवति ॥ ६ ॥[७]

---

'कारुरहं ततः' । शिशुराङ्गिरसस्तस्यार्षम् । पङ्क्तिः[९] । स्वदुष्कृ[१०]-

---

१ च. °हेणार्थस्य प्र°. २ ग. ज. °प्रक्षिपीणी. ३ क. ख. १ ( ५ ); ग. २२/६; ठ. ड. °च्यते । इति निरुक्तटीकायां षष्ठाध्याये चतुर्थः खण्डः. ४ ठ. ड. लोक इन्द्रा°. ५ क. ख. छ. त. द. क्षिणाति । उप°. ६ त. °वति । अभ्य°. ७ क. ख. २ ( ६ ): छ. त. ७; द २. ८ घ. झ. ट. ततो भि० येन्द्रो परि स्रव ( झ. स्रव । १२ ) । शिशु°; ठ. ड. °रहमिति । शिशु°. ९ क. ख. घ. झ. ट. पङ्क्तिः । ऐन्द्री । स्वदु°; च. पङ्क्तिः । स्वदु° ऐन्द्री. १० ग. ज. स्वादुःकृ°; च. स्वदुःकृ°.

ताशङ्कया किलापरिस्रवति सोमे पापसंकीर्तनादात्मशुद्धिर्भविष्यतीति मन्यमान आत्मानमेव निर्दिशन्नाह । अहं तावत्कस्मिंश्चिदनाकाले परेषां स्तोमकर्ता स्तुतीनां प्रयोक्ता यज्ञकर्मणि होतृत्वेनावस्थितो बहिर्वा यज्ञात्प्रियवक्ता लौकिकीभिर्वाचोयुक्तिभिर्जीविकापरतया आसम् । ततो मम पिता पुत्रो वा भिषक् आसीद्ब्रह्मा । स हि प्रायश्चित्तरोग उत्पन्ने यज्ञस्य भैषजं करोति । यदुक्तं ' भेषजकृतो ह वा एष यज्ञो यत्रैवंविद्ब्रह्मा भवति ' ( छा० उ० ४ । १७ । ८ ) । इतरो लौकिको वा भिषक् । ' तत इति संताननाम पितुर्वा पुत्रस्य वा ' । पितुर्हि सकाशात्पुत्रस्तन्यते । एवमपादाने कारके ' ततः ' पिता । पुत्रैस्तन्यते । अयं 'ततः' कर्मणि कारके । उपलप्रक्षिणी सवनीयानां पेष्ट्री । ' दासी पिनष्टि ' ( आप० श्रौ० १ । २१ । ८ ) इति ह्युक्तम् । इतरेषां लौकिकानां सक्तूनां पेष्ट्री नना माता ममासीत् । सा हि स्तनसंप्रदानाद्युपकारार्थमपत्यं प्रति नता भवति । ' दुहिता वा ' नना स्यात् । सापि हि परिचर्यार्थं पितुः प्रह्वीभवति । यस्मिन् पक्षे पिता भिषक् तस्मिन् पक्षे ननाशब्देन मातोच्यते । यस्मिन् पुनः पक्षे पुत्रो भिषक् तस्मिन् पक्षे ननाशब्देन दुहितोच्यते । ते वयमेवमनाकाले कस्मिंश्चिज्जीविकाप्रधानाः सन्तो नानाधियो नानाकर्माणो यथोक्तेन क्रमेण कारुरहमित्येवमादिना वसूयवो वसुकामाः । कथं नाम वसु लभेमहि येन प्राणधारणं स्यादित्यनेनाभिप्रायेण । अनु गा इव तस्थिम । अन्वास्थिताः स्मो लोकमिमम् । कथं पुनरन्वास्थिताः स्म इति । गाव इव । यथानेकैरुपकारप्रकारैर्लोकमन्वास्थिता गाव एवमन्वास्थिताः स्मो वयमपीमं लोकम् । स त्वम् इन्दो विज्ञायैतदनेन स्वदुरितानुकीर्तनेन क्षपि-

प्रयोगश्च

' ततः इत्यस्य द्वावर्थौ

' नना ' इत्यस्य च

(Line numbers in margin: ५, १०, १५, २०, २५)

१ क. ख. घ. झ. ट. ठ. ड. पापसंकीर्त°; च. पाप~ कीर्त° सं. २ क. ख. घ. झ. ट. ठ. ड. °तया । ततो; च. °तयासँद्. ३ क. ख. घ. झ. ट. ठ. ड. भेषजं; च. भैषज्ं° ज्यं. ४ क. ख. घ. झ. ट. ठ. ड. पुत्रः पुनस्तन्यते. ५ घ. झ. ट. ठ. ड. तद्दासीत् । दासी पिन°; ग. ज. पेष्ट्री । सदासीत् । पिन°; च. पेष्ट्री । ~ सँदासीत्ँ पिन° तदासीत्. ६ ग. ज. समासीत्. ७ क. ख. घ. झ. ट. ठ. ड. °दित्येतेनाभि°. ८ ग. ज. स्वादु°.

तकल्मषाः स्म इति मन्यमान एतस्माद्दशापवित्रात् इन्द्राय इन्द्रार्थं परिस्रव ।
अस्माभिरेवमध्येष्यमाणः कथं वा न परिस्रविष्यसीत्यभिप्रायः । एवमत्र
' उपलप्रक्षिणी सक्तुकारिका ' शब्दार्थोपपत्तेरित्युपपद्यते ।

' उपसि ' (२६) इत्यनवगतम् । ' उपस्थे ' इत्यवगमः । ' पत्तो
५ जगार प्रत्यञ्चमत्ति शीर्ष्णा शिरः प्रति दधौ वरूथम् । आसीन
ऊर्ध्वामुपसि क्षिणाति न्यङ्ङुत्तानामन्वेति
' उपसि ' इत्यस्य भूमिम् ' (ऋ० सं० १० । २७ । १३ )॥
वसुक्रस्येन्द्रपुत्रस्यार्षम् । ऐन्द्री । त्रिष्टुप् । महाव्रते
मरुत्वतीये शस्त्रे शस्यते ( ऐ० आ० ५ । १ । १ ) । पत्तः पादतो
१० रश्मिभिरितो लोकाद्यदादित्यो जगार गृह्णात्युदकं । तदिन्द्रो मध्यस्थान
आसीनः आत्मानं प्रत्यञ्चितं प्राप्तं तेन भगवतादित्येन शीर्ष्णा उत्सृष्टम्
अत्ति । स्वीकरोतीत्यर्थः । तदेवमसौ स्वीकृत्य चतुर्षु वार्षिकेषु मासेषु
पृथिवीलोकनिवासिनां जनानां शिरः प्रति दधौ शिरस उपरि दधाति
वरूथं वरतममुदकम् । एवमयमिन्द्रो जगदुपकाराय प्रतिसंवत्सरमेतां
१५ द्युलोकाख्यां गाम् आदित्योपसंस्तब्धाम् ऊर्ध्वाम् उपर्यवस्थिताम्
अन्तरिक्षलोके आसीन उपसि आत्मन उपस्थे उपस्थाने अन्तरि-
क्षलोके क्षिणाति प्रक्षारयति । यच्च प्रक्षारयति तदिमं लोकं प्रति
पुनरुत्सृजति । तत्तेनोत्सृष्टं न्यक् नीचैर्वर्षभावेनागच्छति । तत
उत्तानां भूमिं यथानिम्नम् अन्वेति । एवमत्र ' उपसि ' इत्यस्य
२० शब्दसारूप्यादर्थोपपत्तेश्च ' उपस्थे ' इत्येवं प्रतीतिः । ' अपि वा शिर
आदित्यो भवति ' इत्युक्तम् ( निरु० ४ । १३ ) । तस्मात् 'शीर्ष्णा '
इत्यत्रोपपद्यते शिरस्त्वमादित्यस्य ।

---

१ ग. ज. स्थ इति. २ ग. °गमः । २३ । पत्तो°. ३ ग. ज. जगार । वसु°;
घ. झ. ट. जगार प्रत्यञ्चमत्ति० मन्वेति भूमिम् । वसु°. ४ ग. ज. ' आसीनः '
नास्ति. ५ क. ख. घ. झ. ट. ठ. ड. वरतरमु°; ग.ज. वरतरमम्°; च. वरतमम्°
र. ६ क. ख. घ. झ. ठ. ठ. ड. °त्योपसृष्टामूर्ध्वां°; ग. ज. °त्योपसंमूर्ध्वामूर्ध्वां°;
च. °त्योपसंस्तब्धाम्° मूर्ध्वा. ७ क. ख. घ. झ. ट. ठ. ड. उपस्थे आत्मनः; च.
२८ आत्मन उपस्थे. ८ ग. २४ मा; ज. उमा. ९ घ. झ. ट. ठ. ड. इत्येवं.

'प्रकलवित्'[1] (२५) इत्यनवगतम् । 'प्रकलावित्' इत्यवगमः । 'वणिग्भवति' इत्यभिधेयवचनम् । स हि 'प्रकलवित्' 'कलांश्च वेद प्रकलांश्च'[2] । कलासंबन्धेनैवेह इत्यस्य प्रकला उच्यन्ते कला एव ह्यपेक्ष्य प्रकला भवन्तीति । यथाधिष्ठानमपेक्ष्य प्रत्यधिष्ठानमिति[3] । 'इन्द्रेणैते तृत्सवो[4] वेविषाणा आपो न सृष्टा अधवन्त नीचीः । दुर्मित्रासः प्रकलविन्मिमाना जहुर्विश्वानि भोजना सुदासे' ( ऋ० सं० ७ । १८ । १५ ) ॥ वसिष्ठस्यार्षम् । त्रिष्टुप्[5] । महाव्रते निष्केवल्ये दक्षिणे पक्षे शस्यते ( ऐ० आ० ५ । २ । २ ) । इन्द्रेण एते तृत्सवो दारयितव्या मेघा वेविषाणाः पुनः पुनर्व्याप्यमाना आपो न आप इव सृष्टाः केनचित् अधवन्त अगच्छन् नीचीः । नीचैरित्यर्थः । उच्चैर्गतय एते सन्ति[6] । इन्द्रबलादेषां[7] नीचैर्गतयः संवृत्ता इत्यभिप्रायः । किंच । दुर्मित्रासः । सुमित्राण्यपि सन्तो येऽतिसन्धानपरास्ते दुर्मित्राः । के पुनस्त[8] इति । प्रकलविदः । वणिज इत्यर्थः । ते यथाभिद्रोहबुद्ध्या किंचिद् द्रव्यमल्पं ददत्येवमेते मेघाः पूर्वमल्पोदकदातारो भूत्वाधुनेन्द्रबलोद्यताः सन्तः जहुः विश्वानि सर्वाण्यशेषाणि भोजनानि उदकानि सुदासे राजनि यजमाने वा कल्याणदाने । एवमत्रोदकाल्पदानोपमासंबन्धात् 'प्रकलविद्वणिक्' इत्युपपद्यते । अवयवप्रत्यवयवा हि कलाः प्रकलाशब्देनोच्यन्ते । तेषु च वणिगेव निपुणो भवति गणितकुशलत्वान्न तथान्य इति ।

'अभ्यर्धयज्वा' ( २६ ) इत्यनवगतम् । 'अभ्यर्धयन्' अभिवर्धयन् यो 'यजति' । यजतिरत्र दानार्थः[11] [ धा० १ । १०२७ ] ।

---

१ ग ज. प्रलयविद्दि°; च. प्रकलवादि°. २ ग. ज. केवलांश्च प्र°. ३ ग. °मिति । २५ । इन्द्रे°. ४ ग. ज. तृत्सवः । वसि°; घ. झ. ट. तृत्सवो० भोजना सुदासे । वसि°. ५ क. ख. च. झ. ट. ठ. ड. त्रिष्टुबैन्द्री । महा°; च. त्रिष्टुप् । महा° ऐन्द्री. ६ क. ख. च. झ. ट. ठ. ड. सन्तः. ७ क. ख. च. झ. ट. ठ. ड. 'एषां' नास्ति. ८ क. ख. च. झ. ट ठ. ड. °स्ते पुनर्दुर्मित्राः; च. °ऽतेऽनु° पुनः. ९ क. ख. च. झ. ट. ठ. ड. °एव ल्पोदका°. १० क. ख. च. झ. ट. ठ. ड. अभ्यर्धयतिरत्र; च. यजतिरत्र° अभ्यर्धयजाति. ११ ग. °र्थः । २६ । मित्र्य°.

'अभ्यर्धयज्वा' इत्यस्य

'मिम्यक्ष येषु रोदसी नु देवी सिषक्ति पूषा अभ्यर्धयज्वा। श्रुत्वा हवं मरुतो यद्ध याथ भूमा रेजन्ते अध्वनि प्रविक्ते' (ऋ० सं० ६। ५०। ५)॥ ऋजिश्वा नाम तस्यार्षम्। वैश्वदेवे सूक्ते। हे मरुतो येषु युष्मासु रोदसी देवी रुद्रस्य पत्नी मिम्यक्ष पुनः पुनरेकतां गच्छति। 'म्यक्षति मियक्षति' इति गतिकर्मसु पठति [ निघ० २। १४ ]। यश्च युष्माकं मध्येऽवस्थितः सिषक्ति सेवते पूषा सूर्यो रश्मिभिः अभ्यर्धयज्वा अभिवृद्धदानः ते यूयमेवंगुणयुक्ता उच्यध्वे। श्रुत्वा हवम् आह्वानं यद्ध याथ यदा यूयमायाथ अस्मान् प्रति तदा भूमा बहूनि बलानि ध्वजाग्राणि वा रेजन्ते कम्पन्ते एतस्मिन् अध्वनि अन्तरिक्षे प्रविक्ते विविक्ते। विस्तीर्ण इत्यर्थः। एवमत्र 'पूषा अभ्यर्धयज्वा'। स हि स्वरश्मिपोषं पुष्यन् भूतान्याभिमुख्येन वृध्या योजयन्नभिमतानर्थान् भूतेभ्यो ददाति।

'ईक्षे' (२७) इत्यनवगतम्। 'ईशिषे' इत्यवगमः।

'ईक्षे' इत्यस्य

'नृवत्त इन्द्र नृतमाभिरूती वंसीमहि वामं श्रोमतेभिः। ईक्षे हि वस्व उभयस्य राजन्धा रत्नं महि स्थूरं बृहन्तम्' (ऋ० सं० ६। १९। १०)॥ भरद्वाजस्यार्षम्। व्यूढस्य दशरात्रस्याष्टमेऽहनि मरुत्वतीये शस्त्रे शस्यते (आश्व० श्रौ० ८। ७)। नृवत्त। यथा मनुष्याः केचिदुत्पन्नप्रणयाः कंचिदीश्वरं मनुष्यं स्तुतिभिः संभजेरन्नेवं वयं त्वां नृतमाभिः मनुष्यतमयोग्याभिः ऊती अवन्तीभिस्तर्पयन्तीभिः स्तुतिभिः वंसीमहि संभजेमहि

१ ग. ज. रोदसी। ऋजि°; घ. झ. ट. रोदसी, अध्वनि प्रविक्ते। ऋजि°. २ क. ख. घ. झ. ट. ठ. ह नाम भारद्वाजस्यार्षम्;। च. नाम°तस्या° भारद्वाजः. ३ क. ख. घ. झ. ट. ठ. ड. सूक्ते। त्रिष्टुप्। हे; च. सूक्ते हे' त्रिष्टु. ४ क. ख. घ. झ. ट. ठ. ड. इयक्षति; च. म्यक्षति° इय; ज म्यक्षिति. ६ क. ख. घ. झ. ट. ठ. ड. पठितम्; च पठति° ठितं. ७ ग. ज. दाता; च. तादा° तदा. ८ घ. झ. ट. ठ. ड. भूम. ९ ग. ज. 'विविक्ते००० योजयन्नभि' नास्ति. १० ख. भूतान्यं (न्या) भिमुखेन' ख्ये. ११ ग. °गमः। २७। नृव°. १२ ग. ज. इन्द्र। भर°; घ. झ. ट. इन्द्र नृतमाभिः० महि स्थूरं बृहन्तम्। भर°; १३ क. ख. घ. झ. ट. ठ. ड. °स्यार्षम्। त्रिष्टुप्। व्यूढ°; च. °स्यार्षम्। व्यूढ° त्रिष्टुप्.

वामं पार्थिवं[1] वननीयं[2] श्रोमतोभिः श्रवणीयतमैः शब्दैः[3]। केन पुनरर्थेन वंसीमहि। इतो यस्मात् ईक्षे ईशिषे त्वं वस्वः वसुनो धनस्य[4] उभयलक्षणस्य दिव्यस्य पार्थिवस्य च वसुनस्त्वं हे राजन् धा रत्नं देहि धनम्। कीदृशं पुनर्देहि। महि महत् वस्तुभूतं[5] स्थूरं बहु बृहन्तं च बहुकालं यत्स्यात्तद्देहि। एवमत्र वसुसंबन्धात् 'ईक्षे' इत्येष शब्दः 'ईशिषे' इत्येवमुपपद्यते।

'क्षोणस्य' (२८) इत्यनवगतम्। 'क्षयणस्य[6]' इत्यवगमः[7]।

'क्षोणस्य' इत्यस्य — 'युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय। प्रवाच्यं तद्वृषणा कृतं वां यन्नार्षदाय[9] श्रवो अध्यधत्तम्' (ऋ० सं० १। ११७। ८)॥ कक्षीवत आर्षम्[10]। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते (आश्व० श्रौ० ४। १५)। युवं युवां हे अश्विनौ श्यावाय राज्ञे रुशतीं ज्वलितरूपां श्रियम् अदत्तम्। युवामेव च महतः क्षोणस्य क्षयणस्य निवासस्य दातारौ कण्वाय ऋषये। किंच। प्रवाच्यं प्रकर्षेण वचनीयं श्रोतव्यं तद्युवाभ्यां कृतं हे वृषणौ वर्षितारौ यत् नार्षदाय ऋषये बधिरीभूताय श्रवः श्रोत्रम् अध्यधत्तम् अधिकं दत्तवन्तौ स्थः। एवमत्र दानसंबन्धाधिकाराच्छब्दसारूप्याच्च 'क्षोणस्य गृहस्य' इति प्रतीयते।

'क्षीणस्य' (२८) इत्येवमेके मन्यन्ते। तत्पुनरनुपपन्नम्। 'क्षयणस्य' इति भाष्यकारो निराह।

'अस्मे' (२९) इत्येतत्पदं सर्वविभक्त्यन्तं तस्मादनेकार्थम्। एकमेवं ह्येतच्छब्दरूपं सप्तस्वपि विभक्त्यर्थेषु वर्तते। प्रकरणादिवशात्तस्य नियमो भवति। तद्यथा। प्रथमायास्तावत् 'अस्मे ते बन्धुः। वयमित्यर्थः'[11] ॥६॥

---

१ च. पार्थिवं. २ क. ख. घ. झ. ट. ठ. ड. °नीयं धनं श्रो°; च. °नीयं° श्रो° धनं. ३ घ. झ. ट. ठ. ड. शब्दैः। केन तु पुन°. ४ क. ख. घ. झ. ट. ठ. ड. धनस्योभयस्य उभय°. ५ ग. ज. वसुभूतं; च. वसुभूतं स्तु. ६ ग. ज. क्षणस्येत्य°. ७ ग. °गमः। २८। युवं°. ८ ग. ज. रुशतीं। कक्षी°; घ. झ. ट. रुश० अध्यधत्तं। कक्षी°. ९ च यन्नारिषदाय. १० क. ख. घ. झ. ट. आर्षम्। आश्विनी। त्रिष्टुप्; च. आर्षं°। त्रिष्टुप्' आश्विनी. ११ क. ज. २ (६); ग. २९; इतरेष्वङ्को नास्ति.

अस्मे ते बन्धुः । वयमित्यर्थः । अस्मे यातं नासत्या सजोषाः । अस्मानित्यर्थः । अस्मे समानेभिर्वृषभ पौंस्येभिः । अस्माभिरित्यर्थः । अस्मे प्र यन्धि मघवन्नृजीषिन् । अस्मभ्यमित्यर्थः । अस्मे आराच्चिद् द्वेषः सनुतर्युयोतु । अस्मदित्यर्थः ।
५ ऊर्व इव पप्रथे कामो अस्मे । अस्माकमित्यर्थः । अस्मे धत्त वसवो वसूनि । अस्मास्वित्यर्थः । पाथोऽन्तरिक्षं पथा व्याख्यातम् । श्येनो न दीयन्नन्वेति पाथ इत्यपि निगमो भवत्युदकमपि पाथ उच्यते पानात् । आ चष्ट आसां पाथो नदीनामित्यपि निगमो भवत्यन्नमपि पाथ उच्यते पानादेव । देवानां पाथ उप-
१० वक्षि विद्वानित्यपि निगमो भवति सवीमनि प्रसवे । देवस्य वयं सवितुः सवीमनीत्यपि निगमो भवति सप्रथाः सर्वतः पृथुः । त्वमग्ने सप्रथा असीत्यपि निगमो भवति विदथानि वेदनानि । विदथानि प्रचोदयन्नित्यपि निगमो भवति ॥ ७ ॥

---

१५ 'तपसस्तनूरसि प्रजापतेर्वर्णः परमेण पशुना क्रीयसे सहस्रपोषं पुष्यन्ती । अस्मे ते बन्धुः पुषेयम्' इति । सोम-

'अस्मे' इत्यस्य प्रथमार्थे प्रयोगः

क्रयणे द्रव्यापाकरणमन्त्रेष्वजाया एषोऽपाकरणमन्त्रः । सोच्यते । हे अजे । तपसः अग्नेः त्वं तनूः शरीरम् असि । 'आग्नेय्येषा अजा' इति
२० ह्युक्तम् । 'स एवा एभ्यः परोचयत्' इति च । तस्मादुपपद्यतेऽग्नेस्तनुत्वमजायाः । प्रजापतेर्वर्णः वरणीया त्वं सहस्रपोषम् अस्माकं पुष्यन्ती एतस्मिन् कर्मण्यङ्गभावमुपेहि । एवमजामभिष्टुत्याधुना सोमं ब्रवीति । हे सोम अनेन परमेण श्रेष्ठेन पशुना क्रीयसे । किं कारणम् । अस्मे वयं

---

१ ङ. थ. दीयंनन्वे°. २ क ख. ३ (७); छ. त. ८; द. ३. ३ क. ख. 'क्रयणस्य द्रव्या°; घ. झ. ट. 'क्रयणद्रव्या°; ठ. ढ. 'क्रयण द्रव्या°. ४ ग. ज. °मन्त्रः । सोच्यते: च. °करणे(ण) मन्त्रे(ऽ)ष्व°. ५ क. ख. ग. झ. ट. ठ. ढ. अग्नेर्ह्येषा; च. आग्नेय्येषा° र्ह्ये. ६ क. ख. घ. ङ. एता; च एवा; ट एता° वा;
२८ ठ. ढ. एवा ह्येभ्यः°

ते[1] तव बन्धवः । विनियोक्तार इत्यभिप्रायः । एवमत्र प्रथमान्तेन 'बन्धु'-शब्देन सामानाधिकरण्यात् 'अस्मे' इत्यस्य 'वयम्' इत्येवं प्रथमया विपरिणाम उपपद्यते[2] ।

'आ श्येनस्य जवसा[3] नूतनेनास्मे यातं नासत्या सजोषाः । हवे हि वामश्विना रातहव्यः[4] शश्वत्तमाया उषसो व्युष्टौ' ५

तस्यैव द्वितीयार्थे (ऋ० सं० १ । ११८ । ११)॥ कक्षीवत आर्षम् । त्रिष्टुप्[5] । प्रातरनुवाकाश्विनयोः शस्यते (आश्व० श्रौ० ४ । १५) । आयातम् अस्मे अस्मान् प्रति हे नासत्यौ अश्विनौ । कथं च पुनरायातम् । श्येनस्य पक्षिणः जवसा जवेन वेगेन नूतनेन नवतमेन । परिश्रान्तस्य हि श्येनस्यापि मन्दतरो जवो भवति । १० सजोषाः मया सह प्रीयमाणौ परस्परेण वा युवाम्[6] । कस्मात्पुनरेवं ब्रवीमि । इतो यस्मात् हवे हि वाम् आह्वयामि युवाम् । न चैवमेवाह्वयामि[7] । किं तर्हि । रातहव्यः दत्तहव्यः । युवामुद्दिश्योत्सृष्टमेतद्धव्यं मया । तौ युवामेतद्विज्ञाय शश्वत्तमायाः शाश्वतिकतमाया अस्या उषसो व्युष्टौ व्युच्छेदकाले[8] आहूयमानावागच्छतम् । एवमत्र 'आयातम्' इत्यनेन संबन्धात् 'अस्मे' इत्यस्य 'अस्मान्' इत्येवं द्वितीयया विपरिणाम उपपद्यते[9] । १५

'भूरि चकर्थ युज्येभिरस्मे[10] समानेभिर्वृषभ पौंस्येभिः । भूरीणि हि कृणवामा शविष्ठेन्द्र क्रत्वा मरुतो यद्वशाम' (ऋ० सं० १ । १६५ । ७)॥ इन्द्रमरुत्संवादे मरुताम् आर्षम्[11] । महाव्रते[12] (ऐ० आ० ५ । १ । १) २०

तृतीयार्थे

---

१ च. 'ते' नास्ति. २ ग. °चते । ३ ग । आ श्ये°. ३ ग. ज. जवसा । कक्षी°; व. झ. ट. जवसा० उषसो व्युष्टौ । कक्षी°. ४ च. रातहुव्यः° हव्यः. ५ क. ख. व, झ. ट. ठ, ड, त्रिष्टुप् । आश्विनी । प्रात°; च. त्रिष्टुप् । प्रात° आश्विनी. ६ क. ख. घ. झ. ट. ठ. ड, वा वां युवाम्; च. वा॰ युवाम्° वां. ७ क. ख. घ, झ, ट. ठ. ड. न वृथैवाह्व°; च. न चैवमेव ह्व° वृथै. ८ क. ख. घ. २५ झ. ट, ठ. ड. व्युच्छेदनकाले; च. व्युच्छेद॰ का°° न. ९ ग. °चते । ३१ । भूरि°. १० ग. ज. युज्येभिरस्मे । इन्द्र°; घ. झ. ट. युज्येभिः ०यद्वशाम । इन्द्र°. ११ क. ख. घ. झ. ट. °मार्षम् ऐन्द्री । त्रिष्टुप् । महा°; च. °मार्षम् ॰। महा° ऐन्द्री त्रिष्टुप; ठ. ड. मार्षम् । त्रिष्टुप् । महा°. १२ क. ख. घ. झ ट. ठ. ड. °व्रते च व्यू°. ३०

व्यूढस्य दशरात्रस्य च[1] सप्तमेऽहनि मरुत्वतीये शस्त्रे[2] (आश्व० श्रौ० ७।३) शस्यते । इन्द्र उच्यते । स[3] त्वं भूरि बहु चकर्थ कृतवानसि कर्म तस्मिं-स्तस्मिन् संग्रामे । तत्पुनः युज्येभिः[4] अस्मे अस्माभिः एव संयुक्तः समानेभिः समानैः पौंस्येभिः बलैः हे वृषभ वर्षितः । नैकाकीत्यभिप्रायः । किंच । वयमपि भूरीणि बहूनि कर्माणि कृणवाम तस्मिंस्तस्मिन् संग्रामे[5] हे शविष्ठ बलिष्ठ इन्द्र । न च केवलं वाङ्मात्रेणैतद्ब्रूमः । किं तर्हि । क्रत्वा एव कर्मणैव एतत्सं-पादयामो यद्[6] वशाम यच्चत्[7]कामयामह इत्यर्थः । एवमत्र ' युज्येभिः ' इत्यनेन संबन्धात् 'अस्मे' इत्यस्य 'अस्माभिः' इति तृतीयया विपरिणाम उपपद्यते[8] ।

' अस्मे प्र यन्धि[9] मघवन्नृजीषिन्निन्द्र रायो विश्ववारस्य भूरेः । अस्मे शतं शरदो जीवसे धा अस्मे वीराञ्छश्वत इन्द्र शिप्रिन्' (ऋ०सं०३।३६।१०) ॥ घोरस्याङ्गिरसस्येयमार्षम् । त्रिष्टुप्[10] । जातकर्मणि विनियुक्ता (आश्व० गृ०१।१५) ।

चतुर्थ्यर्थे

अस्मे अस्मभ्यं प्रयन्धि देहि हे मघवन् धनवन्निन्द्र ऋजीषिन् रायो धनस्य विश्ववारस्य सर्वा आपदो यद्धनं वारयति तस्य भूरेः बहुनो यस्याधिपतिस्त्वं तस्य अभिलषितां मात्रां देहि । किंच । अस्मे अस्मभ्यं शतं शरदः शतं वर्षाणि जीवनाय धाः देहि । अस्मे अस्मभ्यं वीरान् पुत्रान् शश्वतो दीर्घायुषो देहि[11] हे शिप्रिन् । एवम्[12] ' अस्मे प्र यन्धि ' इत्यनेन याच्ञार्थेन[13] संबन्धात् ' अस्मे ' इत्यस्य ' अस्मभ्यम् ' इति चतुर्थ्या विपरिणाम उपपद्यते[14] ।

---

१ क. ख. व. झ. ट. ठ. ड. 'च' नास्ति. २ क. ख. व. झ. ट. ठ. ड. 'शस्त्रे' नास्ति. ३ व. झ. ट. ठ. ड. सन्यं भूरि°. ४ क. ख. व. झ. ट. ठ. ड. युज्येभिरेवास्मे. ५ व. झ. ट. ठ. ड. 'स्मिन्त्संग्रा°. ६ क. ख. व. झ. ट. ठ. ड. यद्वशाम. ग. यच्चेद्व°. ७ क. ख. व. झ. ठ. ड. यत्काम°; ट. यत्काम °द्य. ८ ग. °द्यते ।३२। अस्मे. ९ ग. ज. यन्धि । घोर ; व. झ. ट. यन्धि मघवन्° इन्द्र शिप्रिन् । घोर°. १० क. ख. व. झ. ट. ठ. ड. त्रिष्टुबैन्द्री; च. त्रिष्टुप् । जात° ऐन्द्री. ११ च. देहि शि° हे. १२ क. ख. व. झ. ठ. ट. ड. एवमत्रास्मे. १३ ग. याश्चर्येन; च. याच्ञार्थेन; ज. याश्वार्थेन. १४ ग. °द्यते ।३३। तस्य°.

‘ तस्य वयं सुमतौ[1] यज्ञियस्यापि भद्रे सौमनसे स्याम । स सुत्रामा स्ववाँ इन्द्रो अस्मे आराच्चिद् द्वेषः सनुतर्युयोतु’

पञ्चम्यर्थे

( ऋ० सं० ६ । ४७ । १३ )॥ गर्गस्य[2] भारद्वाजस्यार्षं षष्ठे मण्डले[3] । ऐन्द्री । त्रिष्टुप् । पुनरपि चेयमेव काक्षीवतः[4] सुकीर्तिर्नाम[5] तेन दशमे मण्डले दृष्टा । षष्ठे चाहनि पृष्ठ्यस्य विश्वजिति चेयं तृतीये सवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता ( आश्व० श्रौ० ८ । ४ )। तस्य इन्द्रस्य यज्ञियस्य यज्ञार्हस्य वयं सुमतौ शोभनेऽध्यवसाये[6] स्याम । अपि चास्य[7] भद्रे भन्दनीये स्तुत्ये सौमनसे शोभनसंकल्पे मनसि नित्यमेव स्याम । स सुत्रामा इन्द्रः स्ववान् धनवान् अस्मे अस्मत्तः आराच्चित् दूरतरमपनीय द्वेषः द्वेष्यं पापं ततः सनुतः स्वन्तर्हितं कृतं यथा तं न पश्येम तथा युयोतु । नाशयत्वित्यर्थः । एवमत्र ‘ द्वेषः ’ इत्यनेन संबन्धात् ‘ अस्मे ’ इत्येतस्य ‘ अस्मत् ’ इत्येवं पञ्चम्या विपरिणाम उपपद्यते[8] ।

‘ आ नो भर भर्गमिन्द्र[9] द्युमन्तं नि ते देष्णस्य धीमहि प्ररेके । ऊर्व इव पप्रथे कामो अस्मे तमा पृण वसुपते वसूनाम्’

षष्ठ्यर्थे

( ऋ० सं० ३ । ३० । १९ )॥ ‘उद्वृह[10] रक्षः’ इत्यस्या एवानन्तरा । आभर[11] नः हे इन्द्र भगं भजनीयं धनराशिं द्युमन्तं दीप्तिमन्तम् । आहृत्य चास्मभ्यं देहि । तथा प्रभूतं देहि यथा भुक्तशेषस्य प्ररेके अतिरेके सति निदधीमहि[12] ते तव स्वभूतस्य देष्णस्य दानस्येत्यर्थः । कस्मात्पुनरेवं ब्रवीमि प्रभूतं देहीति । इतो यस्मात् ऊर्व इव यथा[13] वडवामुखेऽवस्थित ऊर्वोऽग्निः अपः पिबन्

१ ग. च. ज. सुमतौ ( इति प्रतीकमेव ) २ ग. ज. शंयोर्बार्हस्पत्यस्यार्षं षष्ठे मण्डले । पुनरपि°; च. शंयोर्बार्हस्पत्य (गर्गस्य भारद्वाज) स्यार्षं षष्ठे° ऐन्द्री त्रिष्टुप्. ३ ट. मण्डळे. ४ ग. ज ‘काक्षीवतः’ नास्ति; च. °मेव सुकी° काक्षीवतः. ५ घ. झ. ट. ठ. ड. °र्नामा. ६ च. °ध्यवाये ७ ग. च. ज. वास्य. ८ ग. °द्यते । ३४ । आ नो°. ९ ग. ज. °मिन्द्र । उद्वृ°; घ. झ. ट. °मिन्द्र० वसूनाम् । उद्वृ°. १० ज. उद्वृह°. ११ क. ख. ङ. झ. ट. ठ. ड. आभर आहर नोऽस्मभ्यं हे°; च. आभर नः हे° आहर नोऽस्मभ्यं. १२ ग. ज. ‘नि’ नास्ति. १३ च. यथा वा वड°.

पप्रथे प्रथते एवमयम् अस्मे अस्माकं कामः प्रथते विस्तीर्यते । तम् आभिमुख्येन पृण पूरय वसूनां हे वसुपते । एवमत्र ' कामः पप्रथे ' इत्यनेन संबन्धादात्मविषयत्वादाशिषः ' अस्मे ' इत्येस्य ' अस्माकम् ' इत्येवं षष्ठ्या विपरिणाम उपपद्यते ।

५ ' अस्मे धत्त वसवो वसूनि ' । अत्र ' धत्त ' इत्यनेन संबन्धात् ' अस्मे ' इत्यस्य ' अस्मासु ' इत्येवं सप्तम्या विपरिणाम उपपद्यते । सप्तदशेऽध्याये ' सुगावो देवाः सुपथाः ' इति शेषो वक्ष्यत एव ( निरु० १२ । ४२ ) ।

सप्तम्यर्थे

' पाथः ' ( ३० ) इत्यनवगतमनेकार्थं च । ' अन्तरिक्षं तावत्पाथ

१० उच्यते ' । तत्पुनरेतत् ' पथा व्याख्यातं ' ' पन्थाः पततेर्वा ' इत्यत्र ( निरु०२।२८)। ' यत्रा चक्रुरमृता गातुमस्मै श्येनो न दीयन्नन्वेति पाथः । प्रति वां सूर उदिते विधेम नमोभिर्मित्रावरुणोत हव्यैः ' ( ऋ० सं० ७ । ६३ । ५ ) ॥ वसिष्ठस्यार्षम् ।

अन्तरिक्षार्थे पाथः-शब्दः

१५ अस्याः प्रथमोऽर्धर्चः सौर्य इति प्रतिजज्ञे शौनको मैत्रावरुणो द्वितीय इति । एवं ह्याह ' ऋचः सौर्यो हि गीयन्त उद्धतीत्यर्धपञ्चमाः ' इति । यत्र यदा चक्रुः कृतवन्तः अमृता देवा गातुं गमनमार्गम् उदयादारभ्य यावदस्तमय इति यदा चायमारब्धः सूर्यः श्येनो न श्येन इव दीयन्नन्वेति दीयमानो गच्छन् पाथः अन्तरिक्षं तेन मार्गेणाथ तदा प्रारभ्य प्रतिविधेम

२० वाम् । प्रतीत्य चेतसा युवाम् उदिते सूर्ये विधेम परिचरेम वयं हे मित्रावरुणौ नमोभिः नमस्कारैः अपि च हव्यैः । एवमत्र ' श्येनो न दीयन्नन्वेति पाथः ' इत्यनेन संबन्धात् ' पाथोऽन्तरिक्षम् ' इत्युपपद्यते । अपठितमेतदन्तरिक्षनामास्वित्यप्रतीतार्थम् । अथवैवमन्यथा स्यात्प्रथमस्यार्ध-

---

१ च. इत्य॰स्माकं°स्या. २ ग. ज. 'कामित्येवं षष्ठ्या ०००इत्यस्यास्मा' नास्ति.
२५ ३ ग. च. ज. सुपथानीति°. ४ क. ख. ग. ज. घ. झ. ट. ठ. ड. उच्यत; च. उच्यते° वक्ष्य. ५ ग ज. पथते°; च. पथेर° त. ६ ग. °त्यत्र । ३'५। यत्रा°. ७ ग. ज. °मृता । वसि°; घ. झ. ट. °मृता गातुं० मित्रावरुणोत हव्यैः। वसि°. ८ ग. ज. °ह्याह सूर्याय गीयन्त उद्धे°; च. सौर्यः ऋचः गीयन्त उद्धे° ऋचः सूर्याय ( सौर्यो हि ) ९ क. ख. घ. झ. ट. ठ. ड. यद्रा अस्मै सूर्याय
३० चक्रु ; च. यदा॰ चक्रुः° अस्मै सूर्याय.

र्चस्यार्थः सूर्यप्रधानत्वात् । उत्तरार्धर्चो निराकाङ्क्ष एव । यत्र

**अथवा प्रथमार्धस्य सूर्यप्रधानत्वादन्योऽर्थः**

यस्मिन्नभसः प्रदेशे गातुं कृतवन्तः अमृता देवाः सूर्यस्य तेनैव प्रदेशेन श्येन इव दीयन्नन्वेति अनुगच्छति पाथः । न तां मर्यादामीश्वरोऽपि सन्नतिक्रामतीत्यर्थः ।

'उदकमपि पाथ उच्यते पानात्' । 'अभि वो देवीं धियं दधिध्वं प्र वो देवत्रा वाचं कृणुध्वम्' (ऋ० सं० । ७ । ३४ । ९) । 'आ चष्ट

**उदकार्थे**

आसां पाथो नदीनां वरुण उग्रः सहस्रचक्षाः' (ऋ० सं० ७ । ३४ । १०) ॥ वसिष्ठस्यार्षम् । व्यूळ्हस्य दशरात्रस्य चतुर्थेऽहनि तृतीयसवने वैश्वदेवशस्त्रे शस्यते (आश्व० श्रौ० ८ । ८) । हे ऋत्विजः अभिवदामि वः । एतां देवीं धियं यूयमेतान् विश्वान् देवान् प्रति दधिध्वम् धारयध्वम् । किंच । प्र वो देवत्रा वाचं कृणुध्वम् । प्रब्रवीमि चैतत् । देवत्रा देवगामिनीमेतां वाचं स्तुतिलक्षणां कृणुध्वम् । किंच । आ चष्ट आसां पाथो नदीनां वरुणः । वरुणोऽपि देव आदित्य आचष्ट इव प्रकथयतीव जनानां वर्षमुत्सृजन् आसां रश्मिनदीनां स्वभूतमुदकं पाथः । किंलक्षणः पुनर्वरुण आचष्टे । उग्र उद्गूर्णः सहस्रचक्षाः । बहुदर्शन इत्यर्थः । एवमत्र 'पाथः'शब्देन 'उदकम्' उच्यते नदीसंबन्धात् ।

'अन्नमपि पाथ उच्यते पानादेव' । 'वनस्पते रशनया नियूया देवानां पाथ उप वक्षि विद्वान् । स्वदाति देवः कृणवद्धवींष्यवतां

**अन्नार्थे**

द्यावापृथिवी हवं मे' (ऋ० सं० १० । ७० । १० ।) ॥ आप्रीसूक्ते सुमित्रस्यैयमार्षम् । हे वनस्पते रशनया नियूय निबध्य देवानाम् एतत्स्वभूतं पाथः अन्नं हविर्लक्षणम् उपवक्षि समीपं वहसि विद्वान्

१ क. ख. घ. झ. ट. सूर्यश्च. २ ग. पानात् । ३६ । अभि.° ३ ग. ज. धियं । वसि°; ध. झ. ट. धियं० उग्रः सहस्रचक्षाः । वसि°. ४ क. ख. घ. झ. ट. ठ. ढ. व्यूढस्य. ५ क. ख. घ. झ. ट. तृतीये स°. ६ क. ख. घ. झ. ट. ठ. ढ. एनां; च. एतां दैवा° नां. ७ ग. देव । ३७ । वन°. ८ ग. ज. नियूय । आप्री°; घ. झ. ट. नियूय । देवानां पाथ० द्यावापृ°. ९ क. ख. घ. झ, ट. °सूक्ते वाध्र्यश्वस्य सुमि°; च. °सूक्ते सुमि° वाध्र्यश्वस्य.

जानानः । कस्मात्पुनरेवं ब्रवीमि । इतो यस्मात् स्वदाति स्वादयति स स देवः त्वयोढान्येतानि हवींषि यानि कृगवत् अकरोत् एष यजमानः । वनस्पतिमेवनुक्त्वा पुनर्द्यावापृथिव्यावाह । हे द्यावापृथिव्यौ युवामपि अवताम् अवगच्छताम् एनं हवम् आह्वानं मम । एवमत्र हवनसंबन्धादन्नं
५ पाथ इत्युपपद्यते ।

'सवीमनि' ( ३१ ) इत्यनवगतम् । 'प्रसवे' इत्यवगमः । 'देवस्य वयं सवितुः सवीमनि श्रेष्ठे स्याम वसुनश्च दावने । 'सवीमनि' यो विश्वस्य द्विपदो यश्चतुष्पदो निवेशने प्रसवे इत्यस्य चासि भूमनः' ( ऋ० सं० ६ । ७१ । २ )॥
१० भरद्वाजस्यार्षम् । जगती । गवामयने चतुर्विंशं नाम द्वितीयमहः । तत्रेयं तृतीयसवने वैश्वदेवे शस्यते ( आश्व० श्रौ० ७ । ४ ) । देवस्य सवितुः सर्वार्थप्रसवितुः । तस्य वयं सवीमनि श्रेष्ठे प्रसवे सर्वार्थाभ्यनुज्ञाने नित्यकालं वयमेव स्याम । वसुनश्च धनस्य च दावने दाने श्रेष्ठे प्रवृत्ते वयमेव लब्धारः स्याम । हे सवितः यस्त्वं विश्वस्य सर्व-
१५ स्यास्य द्विपदो मनुष्यादेः यश्चतुष्पदो गवादेः भूमनो भूम्नो निवेशने च स्थितौ प्रसवे च सृष्टौ प्रभुः तस्य तवैवंगुणविशिष्टस्य प्रसवे च दाने च वयमेवाङ्गभूताः स्यामेति । एवमत्र 'सवितुः' इत्यनेन संबन्धात् 'सवीमनि' इत्यस्य 'प्रसवे' इत्येवं विपरिणाम उपपद्यते ।

'सप्रथाः' ( ३२ ) इत्यनवगतम् । 'सर्वतः पृथुः' इत्यवगमः ।
२० 'त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः । सप्रथाः इत्यस्य त्वया यज्ञं वि तन्वते' ( ऋ० सं० ५ । १३ । ४ )॥ सुतम्भरस्येयमार्षम् । प्रातरनुवाकाश्विनयोः शस्यते ( आश्व० श्रौ० ४ । १३ ) । हे अग्ने त्वमेव सप्रथाः सर्वतः

---

१ क. ख. घ. झ. ट. ठ. ड. वां युवा°; च. पृथिव्यौ ˅ युवा° वां. २ घ. ट.
२५ ठ. ड. वहनसं'. ३ ग. °गमः । ३८ । देव°; घ. ट. °गमः । ३७ । देव°. ४ ग. ज. सवितुः । भर°; घ. झ. ट. सवितुः सवीमनि० प्रसवे चासि भूमनः । भर°. ५ क. ख. घ. झ. ट. ठ. ड. °दैवशस्त्रे शस्यते. ६ च. प्रसवि°. ७ च. °शने वास्थितौ° च. ८ क. ख. घ. झ. ट. ठ. ड. प्रभुरसि तस्य; च. प्रभुः तस्य° भुरसि. ९ ग. गमः । ३९ । त्वम°. १० ग. ज. सप्रथाः । सुत°; घ. झ. ट. सप्रथा० वितन्वते । सुत°. ११ क. ख. घ. झ. ट. °मार्षम् । गायत्र्याग्नेयी ।
३१ प्रात°; च. °मार्षम् ˅ प्रात° गायत्री आग्नेयी.

पृथुः विस्तीर्णो जुष्टश्च आसेवितो यजमानैः होता आह्वाता देवानां भवसि। वरेण्यो वरणीयः सर्वथापि । किं बहुना । त्वयैव हेतुभूतेनैते यजमाना एतं यज्ञं वितन्वते विविधं तन्वते विस्तारयन्ति । एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च 'सप्रथाः सर्वतः पृथुः' इत्युपपद्यते[1]।

'विदथानि' (३३) इत्यनवगतम् । 'वेदनानि' इत्यवगमः[3]। 5

'विदथानि' इत्यस्य 'होता देवो अमर्त्यः[4] पुरस्तादेति मायया । विदथानि प्रचोदयन्'(ऋ० सं० ३।२७।७)॥ विश्वामित्रस्यार्षम्[5]। प्रातरनुवाकाश्विनयोः शस्यते (आश्व० श्रौ० ४।१३)। अग्नीषोमप्रणयने विनियुक्ता (आश्व० श्रौ० ४।१०)। होता आह्वाता देवः अग्निः अमर्त्यः अमरणधर्मा पुरस्तात् अस्य यज्ञकर्मणः सोमस्य वा प्रणीयमानस्य एति गच्छति मायया स्वया प्रज्ञया एषामृत्विजां विदथानि विज्ञानानि प्रकर्षेण चोदयन् । अनुगृह्णन्नित्यर्थः । एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च 'विदथानि वेदनानि' इत्युपपद्यते[6]। 10

'श्रायन्तः' (३४) इत्यनवगतम्। 'समाश्रिताः' इत्येवमर्थप्रतीतिः॥७॥[7] 15

---

**श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत । वसूनि जाते जनमान ओजसा प्रति भागं न दीधिम(ऋ० सं० ८।९९।३)॥ समाश्रिताः सूर्यमुपतिष्ठन्तेऽपि वोपमार्थे स्यात्सूर्यमिवेन्द्रमुपतिष्ठन्त इति सर्वाणीन्द्रस्य धनानि विभक्ष्यमाणाः स यथा धनानि विभजति जाते च जनिष्यमाणे च तं वयं भागमनुध्यायामौजसा बलेनौज ओजतेर्वोब्जतेर्वाशीराश्रयणाद्वाश्रपणाद्वाथेयमितराशीराशास्तेः । इन्द्राय गाव आशिरमित्यपि निगमो भवति । सा मे सत्याशीर्देवेष्विति च[8] (तै० सं० ३।२।७)। यदा ते मर्तो** 20

---

१ ग. ज. इत्येतदुपप°. २ क. ख. ग. विद्धानि. ३ ग. °गमः। ४०। होता. ४ ग. ज. °मर्त्यः। विश्वा°; घ. झ. ट. °मर्त्यः० प्रचोदयन् । विश्वा°. ५ क. ख. घ. झ. ट. ठ. ड. स्यार्षम् । गायत्री । आग्नेयी । प्रात°; च. °स्यार्षम् ०। प्रात॰° गायत्री आग्नेयी. ६ क. ख. °द्यते। ३ (७)। श्राय°; ग. ४१; ठ. °प्रतीतिः । इति निरुक्तव्याख्यायां षष्ठाध्याये सप्तमः खण्डः ७ ड.वर्जमितरेष्वङ्को नास्ति. ८ क. ख. च। ४ । यदा°; छ. त. च। ९। यदा°; द. च । ४ । यदा°. 25

अनु भोगमानळादिद्धसिष्ठ ओषधीरजीगः । यदा ते मर्तो भोगमन्वापदथ ग्रसितृतम ओषधीरगारीर्जिगर्तिर्गिरतिकर्मा वा गृणातिकर्मा वा गृह्णातिकर्मा वा । मूरा अमूर न वयं चिकित्वो महित्वमग्ने त्वमङ्ग वित्से । मूढा वयं स्मोऽमूढस्त्वमसि न वयं विद्मो महत्त्वमग्ने त्वं तु वेत्थ शशमानः शंसमानः । यो वां यज्ञैः शशमानो ह दाशतीत्यपि निगमो भवति । देवो देवाच्या कृपा । देवो देवान् प्रत्यक्तया कृपा कृप् कृपतेर्वा कल्पतेर्वा ॥ ८ ॥

---

'आयन्त इव सूर्यम्' । बृहती । नृमेधस्याङ्गिरसस्येयमार्षम् । 'अनर्शरातिम्' ( ऋ० सं० ८ । ९९ । ४ ) इतीयमनन्तरैतस्याः । महाव्रते बृहतीसहस्रे विनियोगः ( ऐ० आ० ५ । २ । ४ । ) । 'आयन्तः इत्यस्य' आयन्त इव सूर्यम् । इवोऽनर्थक एतस्मिन् प्रथमेऽर्थे । समाश्रिताः समन्तादाश्रिताः सूर्यम् उपतिष्ठन्ते रश्मयः । किमिति । विश्वेदिन्द्रस्य भक्षत । 'इत्' इत्यनर्थक एव । विश्वानि सर्वाणि इन्द्रस्य धनानि सूर्यस्य स्वभूतान्युदकानि तेन प्रत्तानि विभक्ष्यमाणा विभक्तुमिच्छन्तः । अथ 'वा' 'इव' इत्ययम् 'उपमार्थे स्यात्' नानर्थकः । आह । कथमिति । उच्यते । सूर्यमिवेन्द्रमुपतिष्ठन्ते । यथा सूर्यमहन्यहनि रश्मय उपतिष्ठन्त एवं मध्यस्थानमिन्द्रमुदकेश्वरमुपतिष्ठन्ते तस्य इन्द्रस्य स्वभूतानि धनानि उदकानि तेन प्रत्तानि आत्मनो जनानां वा विभक्तुमिच्छमानाः । किंच । वसूनि जाते जनमान ओजसा । यथेन्द्र आदित्यो वा वसूनि धनानि जाते च उत्पन्ने च जनमाने जनिष्यमाणे च स्वेन ओजसा ऐश्वर्यबलेन विभजति तथैव यथा विभक्तस्तेन तं भागं भूतानि उपजीवन्ति तदैश्वर्यानुप्रवृत्त्यैव । यत एवमतो वयमपि तमेव भागं प्रति न दीधिम । अत्र 'न' इत्ययमनर्थकः ।

---

१ क. ख. छ. त. द. °नळादि°. २ छ. त. द. मूल्हा. ३ छ. त. द. °मूल्हस्त्व°. ४ क. ख. ५ ( ८ ); छ. त. १०; द. ५. ५ घ. झ. ट. सूर्यं° भागं न दीधिम । बृ°; ठ. ड. सूर्यमिति । बृ°. ६ ग. च. ज. नृमेधस आङ्गि°. ७ क. ख. घ. झ. ट. °नन्तरा चास्याः. ८ क. ख. ग. ज. घ. झ. ट. ठ. ड. प्रवृत्तानि; च. प्रवृत्तानि. ९ क. ख. घ. झ. ट. ठ. ड. प्रवृत्तानि; च. प्रन्तानि °वृ. १० ग. ज. °मिच्छतामानाः. ११ घ. ट. ठ. ड. 'च' नास्ति.

अनोर्वा स्थाने । 'तं वयं भागमनुध्यायाम' इति भाष्यकारो निराह । एवमत्र 'श्रायन्त इव सूर्यम्' इति सूर्यसंबन्धाद्रश्मयोऽध्याहृताः । रश्मि-संबन्धाच्च 'श्रायन्तः' इत्येष शब्दः समाङावुपसर्गावध्याहृत्य 'समाश्रिताः' इत्येवमुपमार्थो[1] भवतीत्युपपद्यते ।

'ओजः ओजतेर्वा' वृद्ध्यर्थस्य । 'उब्जतेर्वा' न्यग्भावार्थस्य ।

'आशीः' ( ३५ ) इत्यनवगतमनेकार्थञ्च । 'आशिरम्' इत्येवमर्थ-प्रतीतिः । या यजमानस्य व्रतधुक् तामाशिरं दुहन्ति । एतस्मिन्पक्षे दध्यभिधेयम् । तेन हि सोम उपरि[3] श्रीयते । तस्मात्तदाशिरमित्युच्यते । अथ 'वा श्रपणात्'[4] । ईषद्धि तच्छृतं भवति दधिभावात् । 'अथ' पुनर्या 'इयमितराशीः' इयम् 'आशास्तेः' । आङ्पूर्वस्य शास्तेरभिलाषार्थस्य[5] ( धा० १ । ६३० ) ।

'आशीः' इत्यस्य व्युत्पत्तिः

'इन्द्राय गाव[6] आशिरं दुदुह्रे वज्रिणे मधु । यत्सीमुपह्वरे विदत्' ( ऋ० सं० ८ । ६९ । ६ ) ॥ प्रियमेधस[7] आङ्गिरसस्येयमार्षम् । मध्यमे रात्रिपर्याये ब्राह्म-णाच्छंसिनः शस्त्रे विनियुक्ता ( आश्व० ६ । ४ ) ।

प्रयोगश्च

इन्द्राय वज्रिणे अर्थाय गावः आशिरं श्रपणार्थं[8] पयो यज्ञे च[9] पुनः पुनः दुदुह्रे[10] मधु मध्वास्वादं यत्सीं सर्वत उपह्वरे उपगूढे[11] ऊधःप्रदेशे दोग्धा अविदत् । स्तनैर्दुदुह्रे[12] । एवमत्र गोसंबन्धात् 'आशीः'शब्देन 'आशि-रम्' उच्यत इत्युपपद्यते ।

---

१ क. ख. व. झ. ट. ड. °मुपमार्थे भव°; ग. ज. °त्येवमयमर्थो भव°; च. °मुपमार्थो भव° थें. २ क. ख. घ. झ. ट. °मित्यर्थप्र°. ३ क. ख. घ. झ. ट. उपश्रीय°; ठ. ड.° उपमीयते. ४ घ. च. झ. ठ. ड. श्रयणात्. ५ ग. °र्थस्य । ४२ । इन्द्रा°. ६ ग. ज. गावः । प्रिय°; घ. झ. ट. गाव आशिरं ० विदत् । प्रिय°. ७ ग. ज. °मेधसस्येयमार्षम्; च. 'मेधस आङ्गिरस्ये°. ८ क. ख. श्रयणा°. ९ क. ख. घ. झ. ट. ठ. ड. 'च' नास्ति; च. चं. १० घ. ट. ठ. ड. दुह्रे. ११ क. ख. घ. झ. ट. ठ. ड. उपगूहे. १२ क. ख, घ. झ. ट. ठ. ड. तत्स्तनै°; च. °विदत् । स्तनै °तत्.

'अथेयमितराशीराशास्तेः' इति यदुक्तं तत्रेदमुदाहरणम्[1]। 'सा मे सत्याशीर्देवान् गम्यात्। शृण्वन्तु ते समर्धयन्तु[2]। जुष्टाज्जुष्टतरा पण्यात्पण्यतरा। अहेडता[3] मनसानुगच्छ यज्ञो देवान्गच्छतु'। प्रस्तरे प्रहियमाणे यजमानो जपत्येनम् ( मैत्रा० सं० १ । ४ । ५ ॥ मान० श्रौ० १ । ४ । २ । १७ )। सा मे मम आशीः सत्या यथाप्रार्थितैव देवान् गम्यात् प्राप्नोतु। शृण्वन्तु ते देवाः। श्रुत्वा च समर्धयन्तु। जुष्टात् अपि जुष्टतरा प्रियादपि प्रियतरा पण्यात् अपि पण्यतरा स्तुतादपि स्तुततरा। किंच। अहेडता[4] मनसा अक्रोधवता मनसा प्रहितोऽस्माभिर्हे प्रस्तर त्वमपि देवान्गच्छ। यज्ञः अपि देवान्गच्छतु। त्वमपि चान्यं यज्ञम्। तद्याचामोऽसावपि देवान्गम्यात्[5]। एवमत्राशीरेव 'आशीः' शब्देनाभिधीयते आशिषो हि देवान्प्रति गमनमभीष्टमिति[6]।

आशीर्वादार्थे आशीःशब्दस्य

'अजीगः' ( ३६ ) इत्यनवगतम्। 'अगारीः[7]' इत्यवगमः[8]। 'अत्रा ते रूपमुत्तममपश्यं[9] जिगीषमाणमिष आ पदे गोः। यदा ते मर्तो अनु भोगमानळादिद्ग्रसिष्ठ ओषधीरजीगः' ( ऋ० सं० १। १६३। ७)॥ दीर्घतमस इयमार्षम्। अश्वमेधेऽश्वस्तुतौ विनियुक्ता ( आश्व० श्रौ० १०।८ )। अत्र एतस्मिन्काले ते तव हे अश्व रूपम् अहम् उत्तमम् उत्कृष्टम् अपश्यं जिगीषमाणं जेतुमिच्छमानम् इषे अन्ने जेतव्ये निमित्तभूते आ पदे गोः उपरि भूम्याः शरपथे[10] वेद्यां वा। यज्ञेनापि ह्यन्नमेवामुष्मिँल्लोके जीयते। तस्माद्वेद्यामित्येवमुपपद्यते। किंच। यदा यस्मिन्काले ते तव मर्तो मनुष्यः अनु भोगम् आनट् प्राप्नोति वाहयन्वा[11] अथ परिश्रान्तस्त्वम् ओषधीरगारीः ओषधीर्गृह्णासि गिरसि वा। अन्ये हि प्राणिनः परिश्रान्ताश्चरितुं न शक्नुवन्ति। त्वं तु सुतरामोषधीर्भक्षयसीत्येतदधिकं तव।

'अजीगः' इत्यस्य

१ ग. °रणम्। ४३। सा°. २ ग. ज. 'शृण्वन्तु ते समर्धयन्तु' नास्ति; च. गम्यात्५। जुष्टा° शृण्वन्तु ते समर्धयन्तु. ३ ग. ज. अरेडता; च. अहेड° रे; ठ. ड. अहेळता. ४ ग. ज. अरेडता; ठ. ड. अहेळता. ५ क. ख. घ. झ. ट. तद्वयं याचा°; च. तद्यो° द्वयं या. ६ क. ख. °मिति। ४। अजी°. ७ ग. ज. अजगारीः; च. अजगारीः. ८ ग. °गमः। ४४/१। अत्रा°. ९ ग. च. ज. °मुत्तमं। दीर्घ°; घ. झ. ट, °मुत्तम० ओषधीरजीगः दीर्घ°. १० ग. ज. सर°; च. सैर° स. ११ ग. ज. °हयत्वाऽप्यपरि°.

एवमत्रौषध्यश्वसंबन्धात् 'जिगर्तिर्गिरतिकर्मा वा गृह्णातिकर्मा वा' इत्युपपद्यते ।

'अमूरः' ( ३७ ) इत्यनवगतम् । 'अमूढः' इत्यवगमः । 'मूरा अमूर न वयं चिकित्वो महित्वमग्ने त्वमङ्ग वित्से । शये वव्रिश्चरति जिह्वयादन्रेरिह्यते युवतिं विश्पतिः सन्' ( ऋ० सं० १० । ४ । ४ ) ॥ त्रितस्याप्त्यस्यार्षम् । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते ( आश्व० श्रौ० ४ । १३ ) । हे भगवन्नग्ने अमूर अमूढ मूरा मूढा वयं स्मो भवतो माहाभाग्यपरिज्ञानं प्रति । मन्दबुद्धित्वात् न वयं चिकित्वः न वयं भवतः प्रभावस्यान्तं विजानीमः । हे अग्ने त्वम् एव आत्मनो महिमानं महित्त्वं माहाभाग्यं वेत्सि । कस्त्वदन्यो महाभागस्यान्तं वेत्तुमर्हतीत्यभिप्रायः । किंच । शये शयपरिमाणे प्रदेशे उत्तरवेद्याख्ये वव्रिः विशेषात्मा तव रूपाख्यः चरति । समिद्धत्वान्मुहुर्मुहुश्चरति । स त्वमनेन रूपेणोत्तरवेद्यामवस्थितो जिह्वया ज्वालया तानि तानि हवींषि अदन् भक्षयन् रेरिह्यते युवतिं तां तामाहुतिं पुनः पुनरास्वादयसि विश्पतिः विश्वस्य सर्वस्य पतिः मनुष्यपतिर्वा सन् । यस्त्वमेवं करोषि हितैषित्वाद्यजमानानां सोऽस्माकं त्वमिदं नाम कुर्वित्यभिप्रायः । एवमत्र 'मूराः'इत्यात्मनिन्दाद्वारेणाग्निः 'अमूढः' इत्यनेन स्तूयत इत्यस्य 'अमूरशब्दस्य' 'अमूढः' इत्येष विपरिणाम उपपद्यते ।

'शशमानः' ( ३८ ) इत्यनवगतम् । 'शंसमानः' इत्यवगमः । 'यो वां यज्ञैः शशमानो ह दाशति कविर्होता यजति मन्मसाधनः । उपाह तं गच्छथो वीथो अध्वरमच्छा गिरः सुमतिं गन्तमस्मयू' ( ऋ० सं० १ । १५१ । ७ ) ॥ दीर्घतमस आर्षम् । जगती । यः अयं यजमानो युवां हे मित्रावरुणौ यज्ञैः निमित्तभूतैः शशमानः

१ ग. °गमः । ४५ । मूरा°. २ ग. ज. वयं । त्रित°; घ. झ. ट. वयं० विश्पतिः सन् । त्रित.° ३ च. महा° ४ क. घ. झ. ट. माहाभाग्यस्यान्तं; ग. ज. माहाभागस्यान्तं; च. महाभागस्यान्तं°ग्य. ५ घ. चरति समिति समि°; ट. चरति समिति समि°; ठ. ड. चरति समिति समि°. ६ क. ख. ग. ज. घ. झ. ट. 'त्वं' नास्ति. ७ ग. °गमः । ४६ । यो°. ८ ग. ज. शशमानः । दीर्घ°; घ. झ. ट. शशमा० गन्तमस्मयू । दीर्घ°. ९ क. ख. घ. झ. ट. ठ. ड. जगतीच्छन्दः. १० क. ख. घ. झ. ट. ठ. ड. 'अयं' नास्ति.

शंसमानः[1] स्तुवन् दाशति ददाति हवींषि वां[2] युवाभ्यां कविः क्रान्तदर्शनो होता आह्वाता यजति मन्मसाधनो मननसाधनः। विज्ञानसाधन इत्यर्थः। आह। तस्य किमिति। उच्यते। उपाह तं प्रत्युपागच्छथो युवां वीथः च तस्य अध्वरं अध्वराश्रितानि हवींषि। वयमपि चैवंगुणविशिष्टा एव यतो ब्रूमः।[3] अच्छा गिर एता अस्मद्गिरः आभिमुख्येन आगन्तुमिच्छथो युवाम्। युवाम् अस्मयू। अस्मान्कामयमानावित्यर्थः। एवमत्र 'यज्ञैः शशमानः' इति यज्ञसंबन्धाच्छब्दसारूप्याच्च 'शशमानः शंसमानः' इत्येवमुपपद्यते।

'देवो देवाच्या कृपा' ( ३९ ) इत्येते अनवगते। देवशब्दोऽनयोरेवोपलक्षणार्थोऽत्र समाम्नातः। 'देवः देवाच्या कृपा' इति त्रीण्येतानि पदानि। 'देवाच्या' इत्यस्य 'देवान्प्रत्यञ्चितया' इत्यर्थप्रतीतिः। 'कृपा' इत्यस्यापि 'कल्पितया' इत्येवमर्थप्रतीतिः[4]। 'अग्निं होतारं मन्ये दास्वन्तं वसुं सूनुं सहसो जातवेदसं विप्रं न जातवेदसम्। य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा। घृतस्य विभ्राष्टिमनु वष्टि शोचिषाजुह्वानस्य सर्पिषः' (ऋ० सं० १। १२७। १ )॥ परुच्छेपस्यार्षम्। अतिच्छन्दाः। अग्निचयन इष्टकोपधाने विनियुक्ता ( मैत्रा० सं० २। १३। ८ )। अग्निम् अहम् होतारम् आह्वातारं देवानां मन्ये दास्वन्तं दानवन्तं दातृतमं वसुं वासयितारं सर्वस्य जगतः सूनुं सहसो बलस्य पुत्रं जातवेदसं जातप्रज्ञानं विप्रं न जातवेदसं विप्रमिव जातप्रज्ञानम्। यथा हि कश्चित्कंचिन्म-

(margin notes: 'देवो देवाच्या कृपा' इत्यस्य व्युत्पत्तिः ; प्रयोगश्च)

(line numbers: ५, १०, १५, २०)

---

१ ग. ज. शसमानः; च. °शशमानः ˇ स्तुवन्° शंसमानः. २ क. ख. घ. झ. ट. ठ. ड. 'वां' नास्ति. ३ क. ख. घ. झ. ट. ठ. ड. °ब्रूमः। सुमतिं शोभनप्रज्ञं यजमानमनुलक्ष्य अच्छा°; च. ब्रूमः। ˇअच्छा° सुमतिं शोभनप्रज्ञं यजमानमनुलक्ष्य. ४ ग. °तीतिः। ४७। अग्निं°. ५ ग. च. ख. मन्ये। सर्पिष इति परुच्छे°; घ. झ. ठ. मन्ये० सर्पिषः। परुच्छे°. ६ क. ख. घ. ट. ठ. ड. अतिच्छन्दा अत्यष्टिः; च. °छन्दाः ˇ। अग्नि° अत्यष्टिः. ७ क. ख. घ. झ. ट. ठ. ड. 'अहं' नास्ति. ८ ग. ज. °प्रज्ञानं यथा यावज्जानीयादेव°.

२९

नुष्यं समानपृष्ठोदरपाणिपादं विप्रार्तै[1]ज्ञानं यथावज्जानीयादेवमहमग्निं यथावज्जाने । यः अग्निः स्वध्वरः शोभनयज्ञो देव ऊर्ध्वया [2]कृपा सामर्थ्योद्दयया कल्पितया देवाच्या देवान्प्रत्यञ्चितया गत्या[3] घृतस्य विभ्राष्टिं विभ्रंसनम्[4] अनुवष्टि आहुतिप्रक्षेपम्[5] अनुकामयते । 'वाञ्छति वष्टि' इति कान्तिकर्मसु पठितम् ( नि० घ० २ । ६ ) । आजुह्वानस्य उपरि हूयमानस्य सर्पिषः सर्पणशीलस्य । यमग्निमहमेवं जाने यश्चैवंगुणयुक्तः स इदं नामास्माकं करोत्वित्यभिप्रायः । एवमत्र ' देवाच्या कृपा ' इत्येतौ शब्दौ ' देवान्प्रत्यक्तया ' कल्पनया इत्येवमुपपद्येते शब्दसारूप्यादर्थोपपत्तेश्च[6] ।

' विजामातुः ' ( ४० ) इत्यनवगतम् । उपसर्गस्यापरिसमाप्त्यर्थे वृत्तिरत्रानवगमः । ' असुसमाप्त इव वरोऽभिप्रेतः ' इति हि[7] भाष्यकारो निराह[8] । विगतजामातृभाव इव[9] यो ह्यपर्याप्तजामातृभावः[10] स विजामातेत्युच्यते । स हि दाक्षिणात्येषु प्रसिद्धः[11] ॥ ८ ॥

---

**अश्रवं हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात् । अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम् ( ऋ० सं० १ । १०९ । २ ) ॥ अश्रौषं हि बहुदातृतरौ[12] वां विजामातुरसुसमाप्ताज्जामातुर्विजामातेति शश्वद्दाक्षिणाजाः क्रीतापतिमाचक्षतेऽसुसमाप्त इव वरोऽभिप्रेतो जामाता जा अपत्यं तन्निर्माताोत वा घा स्यालादपि च स्यालात्स्याल आसन्नः संयोगेनेति नैदानाः स्याल्लाजानावपतीति वा लाजा लाजतेः[13] स्यं शूर्पं स्यतेः शूर्पमशनपवनं शृणातेर्वाथ सोमस्य प्रदानेन**

१ च. विप्रास्तैप्र° प्र. २ क. ख. कृपा कृपया; घ. झ. ट. ठ. ड. कृपया. ३ च. गत्या ~ घृत° शोचिषा ज्वालया. ४ क. ख. घ. झ. ट. ठ. ड. विभ्रंशम्. ५ क. ख. घ. झ. ट. ठ. ड. 'क्षेपं शोचिषा ज्वालया अनुका°. ६ क. ख. °पत्तेश्च । ५ (८) । विजा. ७ क. ख. घ. झ. ट, ट. ड. 'हि' नास्ति. ८ क. ख. घ. झ. ट. इव च यो; च. इव ~ यो° च. ९ क. ख. घ. झ. ठ. ड. ह्यप्राप्तजा°; ट. ह्यप्राप्त° पर्या. १० ग. ज. °भावं. ११ ग. ४८/१०; ठ. °प्रसिद्धः । इति निरुक्तव्याख्यायां षष्ठाध्यायेऽष्टमः खण्डः; ड. °प्रसिद्धः । इति भाष्ये ८ खण्डः; इतरेष्वङ्को नास्ति. १२ छ. बहुदायैततरौ; त. द. बहुदायितरौ; ध. बहुधातृतरौ. १३ छ. त. द. राजतेः.

**युवाभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यं नवतरमोमास इत्युपरिष्टाद्व्याख्यास्यामः ( निरु० १२ । ४० ) ॥ ९ ॥**

**इति[1] षष्ठाध्यायस्य द्वितीयः पादः ।**

---

'अश्रवं हि[3]' । कुत्सस्यार्षम् । त्रिष्टुप् । अश्रौषम् अहं युवां हे इन्द्राग्नी भूरिदावत्तरा भूरिदातारौ । कुतः । विजामातुः असुसमाप्ताज्जामातुः । यो ह्यसमाप्तजामातृभावो भवति स जामातृगुणहीनत्वाद्बहुदानेन कन्यापितॄनाराध्य तेभ्य आत्मानं रोचयति । ततोऽपि बहुतरस्य धनस्य दातारौ अहमश्रौषं भवन्तौ । उत वा घा स्यालात् । 'घा' इत्यनर्थकः । स्यालादपि बहुर्दातारौ युवामहमश्रौषं भवन्तौ । स्यालोऽपि हि भगिनीप्रियचिकीर्षया बह्वेव ददाति । यत एवमहमश्रौषं भवन्तावेतस्मात्कारणात्सोमस्य प्रयती प्रदानेन अहं युवाभ्यां स्तोमं जनयामि उच्चारयामि नव्यं नवतरमन्येभ्यः स्तोमेभ्यः । एवमत्र 'विजामातृ'शब्देन 'असुसमाप्तजामातृभावः' उच्यते तस्य बहुदातृत्वादित्युपपत्तिः ।

('विजामातुः' इत्यस्य)

'विजामातेति शश्वत्' । प्रसिद्धमेतत् । 'दक्षिणाजाः[6] क्रीतापतिमाचक्षते' । स[7] हि विगुणत्वादात्मनः क्रीणाति कन्यामात्मनो भार्यार्थे । तस्मात् 'असुसमाप्त इव' असौ 'वरोऽभिप्रेतः' । 'जा[8] अपत्यं तन्निर्माता' जामाता । स्त्रीत्वं हि मैथुनेन व्यवहारेणासौ निर्मिणोति । तेनासौ दुहितुः पतिर्जामाता भवति । 'स्याल आसन्नः संयोगेनेति' निदानविदो मन्यन्ते । अथ 'वा स्यम्' इति 'शूर्पम्' उच्यते । तस्मादसौ गृहीत्वा विवाहे 'लाजानावपति' । तस्मात्स्याल इत्युच्यते । 'स्यं शूर्पं स्यतेः' धातोः क्षेपणार्थस्य (धा०४।४१) ।

(विजामातादिशब्दानां व्युत्पत्तिः)

---

१ क. ख. ६ ( ९ ); छ. त. ११; द. ६. २ ङ. थ. ध. छ. त. 'इति० पादः' नास्ति; द. इति नैरुक्तस्य षष्ठा°. ३ व. झ. ट. हि भूरिदावत्तरा वां० जनयामि नव्यम् । कु°. ४ ग. ज. °दाइतरौ; च. °दायितरौ; ट. °दातारौ° यित. ५ क. ख. घ. ट. °नेन हे इन्द्राग्नी युवा°. ६ क. ख. व. झ. दाक्षिणात्याः; ट. दाक्षिणात्याः° जाः; ठ. ड. दाक्षिणात्याः । जाः. ७ क. ख. व. झ. ठ ड. तस्य विगु°; ट. तस्य° स हि. ८ क. ख. व. झ. ट. ठ. ड. जामाता जा अप°; च. °प्रेतः ~ जा° जामाता. ९ क. ख. व. झ. ट. ठ. ड. पक्षेप°.

तेन हि तुषाः क्षिप्यन्ते। 'शूर्पमशनपवनम्'। तेन ह्यशनं पूयते। 'शृ[1]णातेर्वा'। तद्धि शरमयं भवति।

'ओमासः (४१) इति' एतत्पदम् 'उपरिष्टाद्व्याख्यास्या[2]मः' 'ओमासश्चर्षणीधृतः' इत्यत्र सप्त[3]दशेऽध्याये। (निरु० १२।४०)॥९[4]॥

एकादश[5]स्य द्वितीयः पादः।

---

तृतीयः पादः।

**सोमानं[6] स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं[7] य औशिजः (ऋ०सं० १।१८।१)॥ सोर्मा[8]नं सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते कक्षीवन्तमिव य औशिजः कक्षीवान् कक्ष्यावानौशिज उशिजः पुत्र उशिग्वष्टेः कान्तिकर्मणोऽपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात्तं सोर्मानं सोतारं मां प्रकाशनवन्तं कुरु ब्रह्मणस्पते ॥ १[9]० ॥**

---

'सोमानम्' (४२) इत्यनवगतम्। 'सोता[10]रम्' इत्यवगमः।

'सोमानं स्व[11]रणम्'। मेधातिथेः काण्वस्यार्षम्। 'सोमानम्' इत्यस्य अग्न्युपस्थाने विनियुक्ता। (मैत्रा० सं० १। ५।४।)। 'सोमानं स्वरणमिति ब्राह्मणस्पत्ययोपतिष्ठेत' इति ह्युक्तम् (मैत्रा० सं० १। ५। ११)। सो[12]मानम् अनेकेषां सोमानां सोतारम् अभिषोतारं

---

१ ग. ज. श्रीणा°; च. श्रिणा° शृ. २ क. ख. घ. झ. ट. ठ. ड. °स्यामः सप्तदशेऽध्याये ओमा°. ३ क. ख. घ. झ. ट. ठ. ड. 'सप्तदशेऽध्याये' नास्ति. ४ क. ख. ६ (९); ग. ४९/११; इतरेष्वङ्को नास्ति. ५ क. ख. घ. झ. ट. °दशाध्यायस्य; ठ. ड. इत्येकादशाध्यायस्य द्वितीयः पादः। इति निरुक्तटीकायां निघण्टसहैकादशाध्याये नवमः खण्डः समाप्तः. ६ क. ख. छ. त. ध. सोमानां. ७ छ. त. कक्षावा°. ८ क. ख. छ. त. द. ध. सोमानां. ९ क. ख. १ (१०); छ. त. १२; द. १. १० ग. ज. सोमानामित्य°. ११ क. घ. ट. स्वरणं॰ य औशिजः। मेधा°; च. सोमानां स्वरणं॰ मेधा° औशिजः; ठ. ड. स्वरणमिति। मेधा°. १२ ग. ज. सोमानामनेकेषां स्वरणं स्तोता°; च. सोमानामनेकेषां स्वरणं सोता° सोमानां.

मां स्वरणं शब्दयितारं स्तुवन्तं यशस्विनं कुरु हे ब्रह्मणस्पते। कथं च पुनः प्रकाशनवन्तं कुर्विति। कक्षीवन्तं य औशिजः। लुप्तोपममेतत्। य औशिजः कक्षीवांस्तमिव। अत्र करोतिसंबन्धात् 'प्रकाशनवन्तम्' इत्येतदध्याहृतं भाष्यकारेण।

'कक्षीवान्' कक्षया तद्वान्। 'अपि त्वयं मनुष्यकक्ष्ये एवाभिप्रेतः स्यात्'। स हि कक्ष उत्पन्नः। तदुत्पत्तिसंयोगात्तु कक्षीवान्। 'औशिज उशिजः पुत्रः'। 'उशिक्' पुनः 'वष्टेः' कान्त्यर्थस्य। एवमत्र 'सोमानम्' इत्यस्य शब्दसारूप्यात् 'सोतारं सोमानाम्' इत्येष विपरिणाम उपपद्यते।

अपि वैवमन्यथा स्यात्। योऽहं सोमानां सोता कक्षीवानौशिजस्तमेवंगुणविशिष्टं मां प्रकाशनवन्तं कुरु हे ब्रह्मणस्पते।

'अनवायं' 'किमीदिने' इत्यनयोः

'अनवायं' (४३) 'किमीदिने' (४४) इत्येते अनवगते। 'अनवायम्' इत्यस्य 'अनवयवम्' इत्यवगमः। 'किमीदिने' इत्यस्य 'किमिदं किमिदमित्येवंकारी पिशुनः'॥ १० ॥

---

इन्द्रासोमा समघशंसमभ्य १ घं तपुर्ययस्तु चरुरग्निवाँ इव। ब्रह्मद्विषे क्रव्यादे घोरचक्षसे द्वेषो धत्तमनवायं किमीदिने (ऋ० सं० ७। १०४। २)॥ इन्द्रासोमावघस्य शंसितारमघं हन्तेर्निर्ह्रसितोपसर्ग आहन्तीति तपुस्तपतेश्चरुर्मृच्चयो भवति चरतेर्वा समुच्चरन्त्यस्मादापो ब्रह्मद्विषे ब्राह्मणद्वेष्ट्रे क्रव्यादे क्रव्यमदते घोरचक्षसे घोरख्यानाय क्रव्यं विकृत्ताज्जायत इति नैरुक्ता द्वेषो धत्तमनवायमनवयवं यदन्ये न व्यवेयुरद्वेषेस इति वा किमीदिने किमिदानीमिति चरते किमिदं किमिदमिति वा पिशुनाय चरते पिशुनः पिंशतेर्विपिंशतीति॥ ११ ॥

---

१ ग. ज. मा; च. °षोतारं स्वरणमा° मां. २ क. ख. घ. झ. ट. ठ. ड. सुयश°. ३ ग. ज. °कक्ष्य एवा°; च. °कक्ष्य इवा°. ४ घ. ठ. ठ. ड. 'उशिजः' नास्ति. ५ च. °त्यस्य स्थाने शब्द°. ६ क. ख. १ (१०); ग. ५।१०।१२; इतरेष्वङ्को नास्ति. ७ क. ख. 'क्रव्यादे' नास्ति; छ. त. द. 'द्वेष्ट्रे क्रव्यमदने घोरख्यानाय°. ८ छ. त. द. °मव्यवेयमन°. ९ क. ख. २ (११); छ. १३। द्वितीयःपादः; त. १३; द. २.

'इन्द्रासोमा समघशंसे'[1]। वसिष्ठस्यार्षम् । हे इन्द्रासोमौ संतापयतं[2] भवन्तौ अघशंसं पापस्य शंसितारम्[3] अभ्यघं पापमेव कर्तुमाभिमुख्येन नित्यकालमेव योऽवस्थितस्तं संतापयतम् । स च[4] युवाभ्यां संताप्यमानः चरुरग्निवाँ इव चरुरिवाग्निसंयुक्तो[5] ययस्तु[6]। क्षयं यात्वित्यर्थः। किंच। ब्रह्मद्विषे ब्राह्मणद्वेष्ट्रे क्रव्यादे क्रव्यमदते पृष्ठमांसं भक्षयित्रे घोरचक्षसे घोरदर्शनाय द्वेषः सर्वलोकद्वेष्यतां धत्तं युवाम् अनवायम् अनवयवम् । सकलमित्यर्थः। अथ 'वा यदन्ये' तत्सुहृदः[7] 'अद्वेषसः' अद्वेष्टारो 'न व्यवेयुः'[8] व्यवयवितुं वियोजयितुं घटमाना अपि न शक्नुयुः तादृशं द्वेषो धत्तं किमीदिने[9]। पिशुनायेत्यर्थः। एवमत्र 'अनवायम्' इत्यस्य 'अनवयवम्' अवियोजनीयं वेत्यर्थप्रतीतिस्तथाभीष्टत्वात् ।

किमीदी च पिशुनः। स हि 'किमिदानीं' वर्तते 'इति' एवमन्वेषमाणः 'चरति'। अथ 'वा किमिदं'[10] वर्तते 'इति' एवमन्वेषमाणः 'चरति'। स हि तस्य स्वभावः। 'चरुर्मृच्चयो भवति'। मृदादिसंचितो भवति। 'चरतेर्वा'। 'समुच्चरन्ति' हि 'अस्मादापः'। 'क्रव्यं' मांसम्। तद्धि 'विकृताज्जायते'। 'पिशुनः पिंशतेः'[11] धातोः। स हि स्वल्पमपि पापं 'विपिंशति'। विपुष्यतीत्यर्थः। अमवानित्यनवगतमनेकार्थं च[12] ॥ ११ ॥

> किमीदीत्यादीनां व्युत्पत्तिः

---

**कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन। तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः (ऋ० सं० ४ । ४ । १ ) ॥ कृणुष्व पाजः पाजः पालनात्प्रसितिमिव**

---

१ घ. झ. ट. शंसं० मनवायं किमीदिने । वसि°. २ क. ख. झ. ट. ठ. ड. संतापयंतं. ३ ग. ज. शंसयितारं; च. शंसयितारं°सि. ४ क. ख. घ. झ. ट. ठ. ड. च तपुः यु°; घ. च॒यु° तपुः. ५ ग. ज. °मदने; च. °मदने° ते. ६ क. ख. घ. झ. ट. ठ. ड. °मांसभ°. ७ क. ख. घ. झ. अतद्द्रुहः; ट. अतद्द्रुहः °तत्सुहृदः; ठ. ड. अतद्द्रुहः सुहृदः. ८ क. ख. घ. झ. ट. ठ. ड. व्यवेतुं; ग. ज. नावयवितुं; च. °व्यवेयुः यः नवियितुं° व्यवे. ९ च. किमीदिने पि०दी च. १० घ. झ. ट. ठ. किमिदं किमिदं. ११ च. पिंसतेः° श. १२ क. ख. २ ( ११ ); ग. ५१/१३; इतरेष्वङ्को नास्ति.

पृथ्वीं प्रसितिः प्रसयनात्[1]तन्तुर्वा जालं वा याहि राजेवामात्यवा-नभ्यम[2]नवान्त्स्ववान्वेराभृता गणेन गतभयेन हस्तिनेति वा तृष्व्या-नु प्रसित्या द्रूणानस्तृष्वीति क्षिप्रनाम तरतेर्वा त्वरतेर्वासितासि विध्य रक्षसस्तपिष्ठैस्तप्ततमैस्तृप्ततमैः[3] प्रपिष्ठतमैरिति[4] वा । यस्ते गर्भममीवा दुर्णामा[5] योनिमाशये । अमीवाभ्यमनेन व्याख्यातो दुर्णामा[6] क्रिमिर्भवति पापनामा क्रिमिः क्रव्ये मेद्यति क्रमतेर्वा स्यात्सरणकर्मणः क्रामतेर्वा । अतिक्रामन्तो दुरितानि विश्वा । अतिक्रममाणा दुर्गतिगमनानि सर्वाण्यप्वा यदेनया विद्धोऽपवीयते व्याधिर्वा भयं वा । अप्वे परेहीत्यपि निगमो भवत्यमतिरमामयी मतिरात्ममयी । ऊर्ध्वा यस्यामतिर्भा अदिद्युतदित्यपि निगमो भवति । श्रुष्टीति क्षिप्रनामाशु अष्टीति ॥ १२ ॥

---

' कृणुष्व पाँजः '[7] । वामदेवस्यार्षम् । अग्निचयने पुरुषव्याघारणे विनियुक्ता ( मैत्रा० सं० २ । ७ । १५ ) ।

' अमवान् ' इत्यस्य ' रक्षोघ्नेन[8] व्याघारयेत् ' इति ह्युक्तम्[9] ( मैत्रा० सं० ३ । २ । ६ ॥ मान० श्रौ० ६ । १ । ७ ) ।

हे भगवन्नग्ने कृणुष्व एतदात्मीयं पाँजो[10] बलं प्रसितिं न प्रसितिमिव वागुरातन्तुमिव जालमिव वा[11] पृथ्वीं[12] विस्तीर्णाम् । तत एवमेतद्विस्तीर्णं कृत्वा याहि त्वं रक्षांस्यभिमुखैः[13] । कथं च पुन-र्याहि । राजेव । यथा राजा यायात् अमवान् अमात्यवान् नीतियुक्तो विजयाय तथा[14] याहि । अथवा यथा अभ्यमनवान् रोगभूतः परेभ्यो भयदाता यायात्तथा याहि । अथवा यथा स्ववान् आत्मवित्त-वान् सुभृतसैन्यो यायाद्विजयाय तथा याहि । इभेन इराभृता अन्नभृतेन

---

१ छ. त. द. प्रसहनात्. २ त. °भ्यवनवा°; द. °भ्यमन्वान्त्स्व°. ३ सायण-भाष्यस्थनिरुक्तमूले ' °स्तप्ततमैस्तपिष्ठतमैरिति '. ४ ध. प्रपिष्टतमै°. ५ क. ख. छ. बुर्नामा; त. दुर्णामा °र्ना; द. दुर्नामा° र्णा. ६ क. ख. ३ ( १२ ); छ. त. १४; द. ३. ७ घ. झ. ट. पाजः प्रसितिं न० रक्षसस्तपिष्ठैः । वाम°; ठ. ड. पाज इति । वाम°. ८ ग. च. ज. रक्षो°. ९ ग. च. ज. ' हि ' नास्ति. १० ग. च. ज. बलं पाजः. ११ ग. ज. ' वा ' नास्ति; च. °मिव॰ पृ० वा. १२ घ. झ. ट. पृथिवीं; च. पृथिवीं पृथ्वीं. १३ च. °मुखैः° खः. १४ क. ख. घ. झ. तथा त्वं याहि; च. तथा॰ हि° त्वं या.

गणेन सुपुष्टेन युक्तो यथा राजा यायात्तथा याहि । अथवा । इभेन गतभयेन शूरेण हस्तिना यथा यायात्तथा याहि । किंच । तृष्वीमनु प्रसितिं द्रूणानः । क्षिप्रमनुप्रसितया गत्या संततया गत्या द्रूणानो रक्षांसि हिंसन् याहि । कस्मात्पुनरेवमुच्यसे[2] । इतो यस्मात् अस्तासि असिता क्षेप्ता त्वं रक्षांसि प्रति दीप्ता[3] अर्चिषः । स त्वमेवमागत्य विध्य एतान् रक्षसः अस्मच्छत्रून् तपिष्ठैः तप्ततमैः अर्चिभिः । एवमत्र राजोपमानसंबन्धात् 'अमवान् अमात्यवान्' इत्येवमाद्युपपद्यते ।　　५

'पाजः' इति बलनाम । तेन हि पाल्यते । 'प्रसितिः' प्रसर्हनात् । तन्तुर्वा जालं वा । उभाभ्यामपि ताभ्यामभिभूयन्ते मृगाश्च मत्स्याश्च ।

'अमीवा' (४६) इत्यनवगतम् । 'अभ्यमनवान्' इति यदुक्तमाधस्त्ये मन्त्रेऽनेनैव तत् 'व्याख्यातम्' ।　　१०

'अमीवा' इत्यस्य

'यस्ते गर्भममीवा दुर्णामा योनिमाशये । अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत्' (ऋ० सं० १० । १६२ । २ ) ॥ रक्षोहा नाम ब्राह्मणस्तस्येयमार्षम् । पुत्रकामस्य षडाहुतो नाम स्थालीपाकस्तत्रेयं विनियुक्ता ( मान० गृ० २ । १८ । २ ) । यः ते तव हे स्त्रि गर्भम् अमीवा रोगभूतो दुर्णामा पापनामा क्रिमिः पापप्रदेशे नतः परिणतः उत्पन्नो योनिम् आगत्य शये शेते गर्भहिंसिता तम् अग्निः ब्रह्मणा सह निरनीनशत् नाशयतु क्रव्यादं मांसभक्षयितारम् । एवमत्र 'अमीवा' इत्यस्य 'क्रिमिः' अभिधेयः । क्रिम्युपहते हि योनौ गर्भो न संभवतीत्युपपत्तिः ।　　१५ / २०

'दुरितम्' (४७) इत्यनवगतम् । 'दुर्गतिगमनम्' इत्यर्थप्रतिपत्तिः । 'वैश्वदेवीं सूनृतामारभध्वं शुद्धा भवन्तो यज्ञियासः पावकाः ।

'दुरितानि' इत्यस्य

अतिक्रामन्तो दुरितानि विश्वा शतं हिमाः सर्ववीरा मदेम' ॥ वैश्वदेवीं वाचं सूनृतां सत्याम् आरभध्वम् उपक्रमध्वं वक्तुम् । तयैवंलक्षणया वाचा शुद्धा इहानभिशस्ताः पूताश्च परलोके भवथ यज्ञियाः यज्ञसं-　　२५

१ क. ख घ. झ. ट. ठ. ड. °प्रसृतया २ क. ख. घ. झ. ट. ठ. ड. °च्यते. ३ क. ख. घ. झ. ट. ठ. ड. दीप्तायाः; च. दीताऽअ° याः. ४ च. ट. प्रसर्हनात्° य. ५ ग. °ख्यानम । ५२ । यस्ते°. ६ ग. ज. °मीवा रक्षो°; घ. झ. ट. °मीवा ऽमनीनशत् । रक्षो°. ७ घ. झ. ट. ठ ड. दुर्नामा. ८ च मांसं भक्ष° स. ९ क. ख. घ. झ. ट. ठ. ड. °प्रतीतिः, ग. °पत्तिः । । ५३ । वैश्व°.

पादिनः । किंच । अतिक्रममाणा वयं तस्या वाचो माहाभाग्येन दुरितानि दुर्गतिप्रापकाणि कर्माणि विश्वा विश्वानि शतं हिमाः शतं हेमन्तानां सर्ववीरा अनवखण्डितपुत्रपौत्रा मदेम । हृष्येमेत्यर्थः । एवमत्रातिक्रमणसंबन्धात् 'दुरितं दुष्कृतम्' इत्युपपद्यते तस्य ह्यतिक्रमणमभीष्टमिति ।

'अप्वा' ( ४८ ) इत्यनवगतम् । 'अपव्ययति' इत्यवगमः । रोगजातिर्वाभिधेया भयजातिर्वा । तया हि 'विद्धोऽपवीयते' अपचेष्टयते वा प्राणैः । 'अमीषां चित्तम्' इत्युपरिष्टाच्छेपः ( निरु० ९ । ३३ ) ।

'अमतिः' ( ४९ ) इत्यनवगतम् । 'अमामयी मतिः' अमतिः । एवमपि न प्रतीयत इत्यत आह । 'आत्ममयी यस्य मतिः असौ अमतिः इत्युच्यते । कश्चासौ । आदित्यः । तस्य ह्यात्मप्रकाशमयी मतिः । 'अभि त्यं

'अमतिः' इत्यस्य — देवं सवितारमोण्योः कविक्रतुमर्चामि सत्यसवं रत्नधाममभि प्रियं मतिम् । ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः' (कपि. सं. १ । १९) ॥ नकुलस्यार्षम् । अतिच्छन्दाः । प्रवर्ग्ये शस्यते । सोमसंमाने चाध्वर्यवे विनियुक्ता (मैत्रा० सं० १ । २ । ५ ॥ कपि० सं० ३७ । ६ ॥ मान० श्रौ० १ । ४ । ३ ) । अभ्यर्चामि त्यं तम् अहं देवं सवितारम् ओण्योः द्यावापृथिव्योः यान्यन्तरा भूतानि वर्तन्ते तेभ्यः सर्वेभ्यः सकाशात् कविक्रतुं क्रान्तप्रज्ञानं सत्यसवं सत्याभ्यनुज्ञं रत्नधां रमणीयानां धनानां दातारम् अभिमतिम् अभिमन्तारं सर्वार्थानामीश्वरत्वात् प्रियं च सर्वभूतानाम् । ऊर्ध्वा यस्य सवितुः अमतिः आत्मप्रकाशमयी मतिः । आह । कतमा पुनरसावूर्ध्वेति भाः या अदिद्युतत् अद्योतत ।

---

१ ग. ज दुर्गतिपापकर्माणि विश्वा. २ ग. च. ज. दुःकृतं°. ३ क. ख. घ. झ. ट. ठ. ड. °पवेष्टयते प्राणैः; च. °पचे(वे) यते वा°. ४ ग. मतिः । ५४ । अभि°. ५ ग. च. ज. देवं० कृपा स्वः । नकु°; घ. झ. ट देवं सवितार० कृपा स्वः । इति नकु°. ६ ठ. °तारमूण्यो°. ७ ठ. ड. मतिं कविम् । ऊर्ध्वा°. ८ ठ. ड. स्वरिति । नकु°. ९ क. ख. घ. ट. ठ. ड. °च्छन्दा अष्टिः । प्र°; च. च्छन्दाः । प्र° अष्टिः १० ग च. ज. ठ. प्रवर्गे. ११ ग. ज. °स्यते । संमाने. १२ च. °भूतानाम् ऊ° कविं क्रान्तदर्शनं. १३ ग ज. सवितुः भाः अमति°. १४ घ. झ. ट. ठ. अद्योतत; च. अद्योतत °त्.

तमभ्यर्चयामि । किंच । सर्वमिमनि प्रसवे यस्य सर्वमिदं प्रवर्तते हिरण्यपाणिः रश्मिपाणिः सर्वमिदं जगत् अमिमीत निर्मितवान् सुक्रतुः सुकर्मा कृपा स्वया सामर्थ्यकल्पनया स्वः आदित्यः । सु अरण इत्यर्थः । एवमत्र 'अमति'शब्देन आत्मप्रकाशगतमादित्यस्य विज्ञानमुच्यते । स हि प्रकाशसतत्त्व एव नान्यत्प्रकाशान्तरमपेक्षत इत्युपपत्तिः ।  ५

'श्रुष्टी' (५०) इत्यनवगतं 'पुरन्धिः' (५१) इति च । श्रुष्टीत्यस्य 'श्वशुनम्' इत्यवगमः । 'पुरन्धिः' इत्यस्यापि 'पुरन्धीः' इत्यवगमः ॥ १२ ॥

---

**ताँ अध्वर उशतो यक्ष्यग्ने श्रुष्टी भगं नासत्या पुरन्धिम् ।**  १०
**तानध्वरे यज्ञ उशतः कामयमानान्यजाग्ने[4] श्रुष्टी भगं नासत्यौ चाश्विनौ सत्यावेव नासत्यावित्यौर्णवाभः सत्यस्य प्रणेताराविंत्याग्रायणो नासिकाप्रभवौ बभूवतुरिति वा पुरन्धिर्बहुधीस्तत्कः पुरन्धिर्भगः पुरस्तात्तस्यान्वादेश इत्येकमिन्द्र इत्यपरं स बहुकर्मतमः पुरां च दारयितृतमो वरुण इत्यपरं तं प्रज्ञया स्तौति ।**  १५
**इमामू नु कवितमस्य मायामित्यपि निगमो भवति रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः । समिद्धस्य रुशददर्शि पाज इत्यपि निगमो भवति ॥ १३[6] ॥**

---

ते हि यज्ञेषु यज्ञियास ऊमाः सधस्थं विश्वे अभि सन्ति देवाः ।  २०

'श्रुष्टी' 'पुरन्धिः' इत्यनयोः — ताँ अध्वर उशतो यक्ष्यग्ने श्रुष्टी भगं नासत्या पुरन्धिम्' (ऋ० सं० ७ । ३९ । ४) ॥ वसिष्ठस्यार्षम् । वैश्वदेवी[8] । ते ये विश्वेदेवाः यज्ञेषु यज्ञियासो यज्ञसंपादिन ऊमा अवितारो रक्षितारः अवनीया

---

१ क. ख. घ. झ. ट. ह. ठ. °भ्यर्चामि; च. °भ्यर्चयामि° चा. २ ग. ज. पुरंधीत्यव°; च पुरंधीत्यव° रु. ३ क. ख. ३ (१२); ग. ५५/३४; घ. ट. च. ज. अङ्को नास्ति. ४ ङ. थ. ध.°जाग्नेः श्रुष्टी°. ५ छ. द. °र्बहुभिस्त°; त. °र्बहुधिस्त° भि. ६ क. ख. ४ (१३); छ. त. १५; द. ४. ७ ग. ज. यज्ञेषु । वसि°; ट. ताँ अध्वर उशतः ते हि यज्ञियेषु य० वसि; झ. ताँऽ अध्वर उशत० ते हि यज्ञियेषु य० वसि°. ८ क. ख. झ. ट. ठ. ड. °देवी । त्रिष्टुप् । ते°.  २५ ३०

वो तर्पणीयाः सधस्थं वैश्वदेवं समानं स्थानम् अभिसंतिष्ठन्ते। किं तेषामिति। तान् विश्वान्देवान् हे अग्ने एतस्मिन् अध्वरे यज्ञे उशतः स्वमंशं कामयमानान् श्रुष्टी क्षिप्रम् अविलम्बमानो यक्षि यज भगं च यज नासत्यौ चाश्विनौ यज पुरंधिं च यज। एवमत्र यागस्य विघ्नभयात्क्षिप्रस्येष्टत्वात् 'श्रुष्टीति क्षिप्रनाम' इत्युपपद्यते। अन्यत्र हि वक्ष्यति 'श्रुष्टीवरीः सुखवरीः' इति (निरु० ६। २२)। तस्मादेतदनेकार्थमपि भवति।

**'नासत्यौ' इत्यस्य व्युत्पत्तिः**

'सत्यावेव नासत्यावित्यौर्णवाभः' आचार्यो मन्यते। तौ हि सत्यमेव ब्रूतो न कदाचिदप्यसत्यम्। तस्मान्नासत्यावित्युच्यते। द्विः प्रतिषेधः प्रकृतिमापादयति। अथवा 'सत्यस्य' उदकस्य यज्ञस्य वा 'प्रणेतारौ' नासत्यौ। तथा हि 'आग्रायणः' आचार्यो मन्यते। अथ 'वा' ऐतिहासिकपक्षेण 'नासिकाप्रभवौ हि तौ बभूवतुरिति'। पुरन्धिशब्दोऽत्र गुणपदत्वात्संदिह्यत इति विचार्यते

**'पुरन्धिः' इत्यस्य च**

'तत्कः पुरन्धिः' इति। 'भगः' अत्र 'पुरस्तात्' 'श्रुष्टी भगम्' इति 'तस्य' अयम् 'अन्वादेश इत्येकम्' आचार्यमतम्। नासत्यावनन्तरावपि सन्तौ न संदिह्येते द्विवचनवाच्यत्वात्तयोरेकवचनान्तत्वाच्च पुरन्धिशब्दस्य। 'इन्द्रः' उक्तः स्यात्पुरन्धिशब्देन 'इत्यपरं' मतम्। किं कारणम्। 'स' हीन्द्रो 'बहुकर्मतमः' अन्येभ्यो देवेभ्यः। 'धीः' इति कर्मनामसु पठितम् (निघ० २। १)। तद्यस्य पुरु बहु स पुरन्धिः। स चेन्द्रः। तस्मात्पुरन्धिरिन्द्र इत्युपपद्यते। अथवा। अन्येन पुरन्धित्वमिन्द्रस्य स्यात्। 'पुरां च दारयितृतमः'। मेघपुरो ह्यसावेव दारयति। 'वरुणः' पुरन्धिशब्देनोच्यते 'इत्यपरं' मतम्। किं कारणम्।

---

१ ग. ज. 'वा' नास्ति. २ क. ख. व. झ. ट. ठ. ड. स्थानं अभिसन्ति अभितिष्ठन्ते; ग. स्थानमभिसं॰ तिष्ठ॰ति; च. स्थानमभि॰ सं॰ सन्ति अभि. ३ ... व. ट. ठ. ड. 'पुरंधिं च यज' नास्ति. ४ ग. ज. °त्युपपेदे; च. °त्युपपेदे प्रपद्यते. ५ क. ख. व. झ. ट. ठ. ड. वा नेतारौ; ग. ज. प्राणे॰; च. प्राणे॰ प्र. ६ ग. च. ज. आग्रय॰. ७ क. ख. व. झ. ट. ठ. ड. 'हि तौ' नास्ति. ८ क. ख. व. झ. ट. ठ. ड. 'च' नास्ति. ९ क. ख. व. झ. ट. ठ. ड. °शब्दस्य च.

'तं' ह्यन्यत्रापि मन्त्रदृक् 'प्रज्ञया' बुद्ध्या 'स्तौति'। तद्यथा । इमामू नु कवितमस्य मायां महीं देवस्य नकिरा दधर्ष । एकं यदुद्रा न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम्' ( ऋ० सं० ५। ८५ । ६ ) ॥ अत्रेरार्षम् । इमां मायां प्रज्ञां कवितमस्य मेधावितमस्य महीं महतीं मायां न किरा दधर्ष न कश्चिदप्याधर्षयितुं शक्नोति ।

अस्यामृचि वरुणस्य प्रज्ञा स्तूयते

कतमां मायामिति । एकम् एतं सन्तं वरुणम् आदित्यं यत् एता उद्रा उदकेन रश्मिनद्यः एनीः गमनशीलाः । सततमुदकमादायादित्यमण्डलं गच्छन्ति । एवं नामाहर्निशमेता गच्छन्त्यः अवनयो नद्य इव समुद्रं सिञ्चन्त्यो न पृणन्ति न प्रीणयन्ति। तेषां रश्मीनां च मायामेवंलक्षणां भगवतो वरुणस्य आधर्षयितुम् अभिभवितुं विज्ञातुं न शक्नोति कश्चिदपि कथयितुं कथमप्ययं न संपूर्यत इति । एवमत्र वरुणः प्रज्ञया स्तूयते । धीरिति च प्रज्ञानाम ( निघ० ३।९) । सा यस्य पुर्वी बह्वी स पुरन्धिः । वरुणश्च प्रज्ञया स्तूयते । तस्मात् 'वरुणः पुरन्धिः' इत्युपपद्यते ।

तस्माद्वरुणोऽपि पुरन्धिः स्यात्

'रुशत्' ( ५२ ) इत्यनवगतम् । 'रोचतेर्ज्वलतिकर्मणः' इति निर्वचनम् । 'रोचनम्' इत्यग्रगर्भः । 'अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात् । समिद्धस्य रुशददर्शि पाजो महान्देवस्तमसो निरमोचि' ( ऋ० सं० ५ १ । २ ) ॥ गविष्ठिरबुधयोरार्षम् ।

'रुशत्' इत्यस्य

१ ग. तद्यथा । ५६ । इमा.° २ ग. ज. कवितमस्य । अत्रे°; घ. झ. ट. कवित० नयः समुद्रम् । अत्रे°. ३ क. ख. घ. झ. ट. ठ. ड. °रार्षम् । वारुणी । त्रिष्टुप् । इमां°; च. °रार्षम् । इमां° वारुणी । त्रिष्टुप्. ४ क. ख. घ. झ. ट. ठ. ड. °तमस्य देवस्य द्योतमानस्य महीं°; च. °तमस्य महीं° देवस्य द्योतमानस्य. ५ ग. ज. 'न पृणन्ति' नास्ति°. ६ ग. ज. °तेषां माया एवंलक्षणा भग°. ७ च. स्तूयत इति । धी°. ८ ग. °गर्भः । ५७ । अबो°. ९ ग. ज. होता यजथाय । गवि°; घ. झ. ट. होता० स्तमसो निरमोचि गवि°. १० क. ख. घ. झ. ट. ठ. ड. °रार्षम् । आग्नेयी । त्रिष्टुप् । अग्नि°; च. °रार्षम् । अग्नि° आग्नेयी त्रिष्टुप्.

अग्निचयन इष्टकोपधाने विनियुक्ता ( मैत्रा० २ । १३ । ७ )। अबोधि होता बुध्यते होता अग्निः यजथाय यजनाय यष्टव्यतया देवान्। ऊर्ध्वो ज्वलनक्रियायोगात् प्रातरस्थात्। अग्निहोतॄणां[1] गृहेषु योऽवतिष्ठते सुमनाश्च शोभनमनाः। समिद्धस्य च यस्य रुशत् रोचिष्णुर्वर्णः अदर्शि दृश्यते। पाजश्च बलं यस्याप्रतिमं[2] यश्च प्रभावतो महान् तमसश्च[3] सर्वमिदं निरमोचि निर्मोचयति। बुध्यते देवान् यष्टव्यतया। एवमग्न्यधिकारादत्र शब्दसारूप्याच्च 'रुशत् इति' एतत् 'वर्णनाम' इत्युपपद्यते।

'रिशादसः' (५३) इत्यनवगतम्। 'रेशयदासिनः'[4] इत्यवगमः ॥ १३[5]॥

---

**अस्ति हि वः सजात्यं रिशादसो देवासो अस्त्याप्यम्। अस्ति हि वः समानजातिता रेशयदारिणो देवा अस्त्याप्यमाप्यमाप्नोतेः सुदत्रः कल्याणदानः। त्वष्टा सुदत्रो विदधातु राय इत्यपि निगमो भवति सुविदत्रः कल्याणविद्यः। आग्ने याहि सुविदत्रेभिरर्वाङित्यपि निगमो भवत्यानुषगिति नामानुपूर्वस्यानुषक्तं भवति। स्तृणन्ति बर्हिरानुषगित्यपि निगमो भवति तुर्वणिस्तूर्णवनिः। स तुर्वणिर्महाँ अरेणुपौंस्य इत्यपि निगमो भवति गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति। जुष्टं गिर्वणसे बृहदित्यपि निगमो भवति ॥ १४[6] ॥**

---

'अस्ति हि वः सजात्यं[7] रिशादसो देवासो अस्त्याप्यम्। प्र णः पूर्वस्मै सुवितायं वोचत मक्षु सुम्नाय नव्यसे'

'रिशादसः' इत्यस्य ( ऋ० सं० ८ । २७ । १० ) ॥ मनुर्वैवस्वतस्तस्येयमार्षम्[8]। सतोबृहती। वैश्वदेवे सूक्ते ( ऋ० सं० ८ । २७ )। हे रिशादसो रेशयदासिनो देवाः[9]। यो हि रेशयति हिंसावान् भवति तस्मै त आयुधान्य-

---

१ क. ख. घ. झ. ट. ठ. ड. °होत्रिणां; च. होतॄणां° त्रि. २ क. ख. घ. झ. ट. ठ. ड. °प्रमितं. ३ ठ. ड. तमश्च. ४ च. रेशाय° श. ५ क. ख. ४ ( १३ ); ग. ५८; इतरेष्वङ्को नास्ति. ६ क. ख. ५ ( १४ ); छ. त. १६; द ५. ७ ग. ज. वः सजात्यम्। मनु°; घ. झ. ट. वः सजात्यं °य नव्यसे। मनोर्वै'. ८ क. ख. घ. झ. ट. ट. ड मनार्वैवस्वतस्ये°. ९ ग. ज. रिशयदासिनो देवाः; च. रिशाद॰सिनो° सो रेशयदा.

स्यन्ति । ' रेशयदारिणः ' इति केचिदधीयते निर्वचनम् । तेषां रेशयन्तं हिंसन्तं दारयन्तीत्यर्थः । अस्ति युष्माकं सजात्यं समानजातिता देवत्वम् । अस्ति च युष्माकम् आप्यम् आप्तव्यं मनुष्यैः । ईश्वरा यूयमित्यभिप्रायः । यत एवमतो ब्रवीमि प्रवोचत यूयमनुजानीत सुविताय सुगताय सुभोगाय स्थानाय सुम्नाय सुखाय च पूर्वस्मै स्वभूताय नव्यसे नवतराय । कथं च पुनः प्रवोचतेति । मक्षु । क्षिप्रमित्यर्थः । एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च ' रिशादसो रेशयदासिनो वा रेशयदारिणो वा ' इत्युपपद्यते ।

' सुदत्रः ' ( ५४ ) इत्यनवगतम् । ' सुदानः ' इत्यवगमः ।

' सुदत्रः ' इत्यस्य — ' ता नो रासन्रातिषाचो वसून्या रोदसी वरुणानी शृणोतु । वरूत्रीभिः सुशरणो नो अस्तु त्वष्टा सुदत्रो वि दधातु रायः ' ( ऋ० सं० ७ । ३४ । २२ ) ॥ वसिष्ठस्यार्षम् । दशरात्रस्य चतुर्थेऽहनि तृतीयसवने वैश्वदेवशस्त्रे द्विपदा एताः शस्यन्ते ( आश्व० ८ । ८ ) । ताः देव्यः अस्मभ्यं रासन् वसूनि । ददत्वित्यर्थः । किंलक्षणा देव्यः । रातिषाचः हविर्दानं याः सचन्ते सेवन्ते । किं च आभिमुख्येन स्थित्वा रोदसी रुद्रस्य पत्नी शृणोतु वरुणानी च । किंच । वरूत्रीभिः वरयितव्याभिः सहितः सुशरणः स्वाश्रयणः अस्माकम् अस्तु त्वष्टा सुदत्रः कल्याणदानो विदधातु चास्माकं रायः । धनमित्यर्थः । एवमत्र ' रायः ' संबन्धात् ' सुदत्रः कल्याणदानः ' इत्युपपद्यते ।

' सुविदत्रः ' ( ५५ ) इत्यनवगतम् । ' सुविद्यः ' इत्यवगमः ।

' सुविदत्रः ' इत्यस्य — ' कल्याणविद्यः ' इत्यभिधेयवचनम् । ' ये तातृषुर्देवत्रा जेहमाना होत्राविदः स्तोमतष्टासो अर्कैः । आग्ने याहि सुविदत्रेभिरर्वाङ् सत्यैः कव्यैः पितृभिर्घर्मसद्भिः ' ( ऋ० सं० १० । १५ । ९ ) । शङ्खस्य

१ व. झ. ट. ठ. ह. दारयती° । २ क. ख. घ. झ. ट. यूयमस्मभ्यमनु° । ३ च. °तराय । कथं° च. ४ ग. °गमः । ५९ । ता° । ५ ग. ज. °षाचः । षासि°; घ. झ. ट. °षाचो० वि दधातु रायः । वसि° । ६ च. तृतीये स° । ७ घ. झ. ट. हविर्द्धानं; ज. हविर्द नं; ठ. ड. हविर्धानं । ८ ग. च. ज. °मुख्येन याः स्थित्वा° । ९ ग. °चनम् । ६० । ये° । १० ग. ज. देवत्रा । शङ्ख°; घ. झ. ट. देवत्रा० पितृभिर्घर्मसद्भिः । शङ्ख° ।

यामायनस्यार्षम्[1] । पितृयज्ञे स्विष्टकृद्याज्यैषा ( आश्व० श्रौ० २ । १९ ) । ये[2] तातृषुः स्तीर्णवन्तो देवत्रा देवान् प्रति जेहमाना गच्छन्तो होत्राविदः स्तुतिविदः स्तोमतष्टासः स्तोमकर्तारः अर्कैः मन्त्रैः । स्तोमकर्तारो ये एवंलक्षणाः पितरस्तैः साकम् आयाहि हे अग्ने सुविदत्रेभिः कल्याणविद्यैः अर्वाङ् अस्मानाभिमुख्येन । तैश्च साकमेवंगुणयुक्तैः पितृभिरागत्य सत्यैः

५ एतैर्यथावत्संस्कृतैः[3] कव्यैः पितृदेवत्यैर्हविर्भिस्तृप्तिमुपयाहि[4] । अथवा । सत्यवादिभिः पितृभिः कव्यवाहैः साकमायाहीति । एवं पितृविशेषणत्वेनैव योज्यमेतदपि पदद्वयम् । एवमत्र शब्दसारूप्यात् 'सुविदत्र'शब्दः कल्याणविद्यवाचीत्युपपद्यते ।

१० 'आनुषक्' ( ५६ ) इत्यनवगतम् । 'अनुषक्तम्' इत्यवगमः । 'नामानुपूर्वस्य' इत्यर्थवचनम्[5] । 'आ घा ये 'आनुषक्' अग्निमिन्धते[6] स्तृणन्ति बर्हिरानुषक् । येषामिन्द्रो इत्यस्य युवा सखा' ( ऋ० सं० ८ । ४५ । १ )॥

त्रिशोकस्यार्षम् । बृहतीसहस्रे तृचाशीतिषु विनियुक्ता ( ऐ० आ० ५ । २ । ३ ] । य एव नित्यमग्निम् आभिमुख्येना-

१५ वस्थिता इन्धते यज्वानो य एव यज्ञेषु बर्हिः अनुषक्तं स्तृणन्ति तेषामेव इन्द्रो युवा[7] समानख्यानो याज्ञे कर्मणि भवति नेतरेषामयज्वनाम् । बर्हिःसंबन्धात् 'आनुषक्' इति 'नाम' एतत् 'आनुपूर्वस्य' इत्युपपद्यते ।

२० 'तुर्वणिः' ( ५७ ) इत्यनवगतम् । 'तूर्णवनिः' इत्यर्थवचनम् ।

---

१ क. ख. घ. झ. ट. ठ. ड. °रार्षम् । त्रिष्टुप् । पैत्री । पितृ°. २ ग. ज. 'ये' नास्ति. ३ च. संपंक्तै.° स्कृ. ४ क. ख. °वत्यैः घर्मसद्भिर्यज्ञसादिभिर्हवि°; घ. झ. ट. ठ. ड. 'वत्यैः घर्मसद्भिर्यज्ञस्यादितिहावि°; च. °वत्यैः ˇहावि 'घर्मसद्भिर्यज्ञसादिभिः. ५ ग. °चनम् । $\frac{६१}{४}$ । आ०. ६ ग. च. ज. अग्निं । त्रिशो°; घ. झ. ट. अग्निमि०युवा सखा । त्रिशो°. ७ क. ख. घ. झ. ट. ठ. ड. युवा नित्यः

२६ सखा समा०; च. युवाˇसमा 'नित्यः सखा.

तूर्णं हि यः संभजते स तूर्णवनितो सन् तूर्णवनिरित्युक्तः । 'स तुर्वणि-
र्महाँ अरेणु पौंस्ये गिरेर्भृष्टिर्न भ्राजते तुजा शवः ।
'तुर्वणिः' इत्यस्य — येन शुष्णं मायिनमायसो मदे दुध्र आभूषु रामयन्नि दामनि' ( ऋ० सं० १ । ५६ । ३ ) ॥
इन्द्रस्य सव्यत्वमापन्नस्येयमार्षम् । वैषुवतेऽहनि    ५
निष्केवल्ये शस्त्रे शस्यते ( आश्व० श्रौ० ८ । ६ ) । स इन्द्रः तूर्णवनिता । इन्द्रो हि स्तोतारं तूर्णं संभजते । महान् प्रभावतः । अरेणुपौंस्ये । अन्तरिक्षे हि यद्बलं भवति तत्र न रेणवः सन्ति तस्मादरेणुपौंस्यमित्युच्यते । 'पौंस्यम्' इति बलनामसु पठितम् ( निघ० २ । ९ । २४ ) । तस्मिन्नरेणुपौंस्ये बले अन्तरिक्षे संग्रामे वा गिरेः भृष्टिः गिरिशृङ्गमिवो-    १०
च्छ्रितो भ्राजते तुजा वज्रेण प्रगृहीतेन शवः शविष्ठो बलिष्ठ इन्द्रः । येन वज्रेण शुष्णं शोषयितारम् असुरं मेघं मायिनं प्रज्ञावन्तं आयसो देवान् प्रति अयनशीलस्य सोमस्य मदे प्राप्ते दुध्रो दुर्धरः शत्रूणाम् आभूषु उपर्युपर्यात्मनो भवनमिच्छन् रामयन्नि दामनि दाम्नीव न्यरमयत् । सुप्राव-
भ्रादित्यर्थः । एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च 'तुर्वणिस्तूर्णवनिः' इत्युपपद्यते ।    १५

'गिर्वणसे' ( ५८ ) इत्यनवगतम् । 'गीर्वननीयः' इत्यवगमः । 'गीर्भिः' स्तुतिभिः 'एनं वनयन्ति' इत्यर्थवचनम् । 'आमासु पक्व-
मैरय आ सूर्यं रोहयो दिवि । घर्मं न सामन्तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत्' ( ऋ० सं० ८ । ८९ । ७ ) ॥ नृमेधसः प्रियमेधसो वा-
'गिर्वणसे' इत्यस्य    २०
र्षम् । ऐन्द्रे सूक्ते ( ऋ० सं० ८ । ८९ ) । आमासु अपक्वासु गोषु

---

१ ग. ज. °वनितः सं तूर्ण°; च. 'वनितः सं तूर्ण' ता सन्. २ ग. °त्युक्तः । ६२ । स°. ३ ग. ज. महान् । इन्द्र°; घ. झ. ठ मही अरेणु० रामयन्नि दामनि । इन्द्र°. ४ क. ख. घ. झ. ट. ठ. ड. °मार्षम् । जगती । ऐन्द्री । वैषु°;    २५
च. °मार्षम् ~ । वैषु° जगत्यैन्द्री. ५ च. °रिक्षे कियद्ब° हि. ६ ग. ज. भृष्टिं गिरि°. ७ ग ज वज्रेग नित्यशुष्णं; च. वज्रेग अहिं नित्यं (त्यं). ८ ग.० ज. °भूषुरुपर्यु°. ९ क. ख. घ. झ. ट. ठ. ड. °मयत् सुबभ्रा°; च. °मयन् स्वबभ्रा° त् सु. १० ग. °चनम् । ६३ । आमा°. ११ ग. ज. °रयः । नृमे°; घ. झ. ट. °रयः ० गिर्वणसे बृहत् । नृमे°. १२ क. ख. घ. झ. ठ. ठ. ड. वा इयमार्षम् ।    ३१
बृहती । ऐन्द्रे°; च. वार्षम् ~ । ऐन्द्रे° बृहती.

क्षीरं पक्वम् ऐरयः त्वमिन्द्र । 'तस्मादामा सती पक्वं दुहे' [ मैत्रा० सं० ४ । ६ । ९ ] इति ह विज्ञायते । तदिदमामायां सत्यां गवि शृतं पय इति । किंच । आ सूर्यं रोहयो दिवि । आरोहयः सूर्यं दिवि । द्युलोक इत्यर्थः । एवमिन्द्रमुक्त्वा स्तोतॄनाह । अस्मा इन्द्रायैवंगुणविशिष्टाय घर्मं न घर्ममिव सुतप्तं सुष्टुं सुगुणं सामन् तपत । स्थानकरणानुप्रदानवदुच्चारयतेत्यर्थः । सुवृक्तिभिः शोभनाभिः स्तुतिभिः जुष्टं प्रियं गिर्वणसे इन्द्राय स्तुतिसंभक्त्रे । कतमत्पुनस्तत्सामेति । बृहत् । तद्धि प्रियमिन्द्रस्य । एवमत्र 'गिर्वणा देव' उच्यते शब्दसारूप्यादित्युपपद्यते ।

'असूर्ते सूर्ते' ( ५९ ) इत्येते अनवगते । 'असुसमीरिताः सुसमीरिते' इत्यवगमः ॥ १४ ॥

---

**असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि । असुसमीरिताः सुसमीरिते वातसमीरिता माध्यमका देवगणा ये रसेन पृथिवीं तर्पयन्तो भूतानि च कुर्वन्ति त आयजन्तेत्यतिक्रान्तं प्रतिवचनम् । अम्यक्सा त इन्द्र ऋष्टिः । अमाक्तेति वाभ्यक्तेति वा । यादृश्मिन्धायि तमपस्यया विदत् । यादृशेऽधायि तमपस्यया विदत् । उस्रः पितेव जारयायि यज्ञैः । उस्र इव गोपिताजायि यज्ञैः ॥ १५ ॥**

---

'त आयजन्त द्रविणं समस्मा ऋषयः पूर्वे जरितारो न भूना ।

'असूर्ते सूर्ते' इत्यनयोः असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि' ( ऋ० सं० १० । ८२ । ४ )॥

विश्वकर्मणो भौवनस्येयमार्षम् । 'वैश्वकर्मणाभ्यां जुहोति' इति ह्युक्तमग्निप्रणयने ( मैत्रा० सं० ३ । ३ । ७ ) । तत्र

१ क. ख. घ. झ. ट. ठ. ड. दुह्; च. दुहे° ह्. २ ग. सुष्टुं; च. सुष्टुं° ष्टु. ३ क. ख. घ. झ. ठ. सामन् साम तप°. ४ क. ख. ५ ( १४ ); ग. १४; ठ. ड. 'पद्यते । इति निरुक्तटीकायां षष्ठाध्याये चतुर्दशः खण्डः; इतरेष्वङ्को नास्ति. ५ छ. वाजसमी°; त. वाजसनी° त; द. वातसनी° ज. ६ क. ख छ त. द. °गणास्ते रसे°. ७ क. ख. ६ ( १५ ); छ. त. १७; द. ६. ८ ग. च. ज. द्रविणं । विश्व°; घ. झ. ट. °विणं०समकृण्वन्निमानि । विश्व°. ९ क. ख. ग. ज वैश्वकर्मणीभ्यां; च. विश्वकर्मणाभ्यां° वै.

विनियोगः । असूर्ताः । असुः प्राणः प्राणश्च वायुः । 'योऽयं वायुः पवेन एष प्राणः' इति ह्युक्तम् । तेन समस्ता ईरिता असुसमीरिताः । वातसमीरिता इत्यर्थः । के पुनस्त इति । माध्यमका देवगणा मेघा इतरे च मरुदादयः । ते[2] हि वातेन समीर्यन्ते । वात एव हि तान्वहति । क पुनरव[3]स्थिताः समीरिता इति । सूर्ते सुसमीरिते विक्षिप्ते । विस्तीर्ण इत्यर्थः । रजसि अन्तरिक्षलोके निषत्ते । निषण्ण इत्यर्थः । ये[4] किं कुर्वन्तीति । ये भूतानि समकृण्वन् समस्तानि कृतवन्त इमानि । तेषां किमिति । त आयजन्तेति । अतिक्रान्तं प्रतिवचनम् । प्रतिनिर्देशः प्रतिवचनमुच्यते । स एव पूर्वकाले प्रयोगार्हो यच्छन्दः पश्चात्प्रयुक्तः पश्चात्प्रयोगार्हश्च तच्छन्दः पूर्वं[5] प्रयुक्तो मन्त्रपाठक्रमेण । तदेतद्भाष्ये[6] क्रमेण प्रदर्शितमस्मिन्मन्त्रे 'त आयजन्तेत्यतिक्रान्तं प्रतिवचनम्' इति । त आयजन्तेत्यस्य पादस्य समासेनैतद्भाष्यकारेण निर्वचनमुक्तं 'ते रसेन पृथिवीं तर्पयन्तो भूतानि च कुर्वन्ति' । ते मेघा रसेन उदकेन पृथिवीं तर्पयन्तो भूतानि सर्वाण्युत्पादयन्ति स्थितिं चैषां[7] कुर्वन्ति । आयजन्त द्रविणम् उदकम् । आभिमुख्येन ददति सर्वमुदकम् । समस्मै सर्वस्मिन् भूतजाते । एवं भूतान्युदकेन कुर्वन्त्यनुगृह्णन्ति च । अधुना दृष्टान्तमाह । ऋषयः पूर्वे विश्वसृजो जरितारो न भूना भूम्ना कर्मणा वार्षसाहस्रिकेण[8] सत्रेण । तर्हि सर्वो भूतग्रामः[9] पूर्वं सृष्टोऽनुगृहीतश्च । एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च 'असूर्ते सूर्ते' इत्येतयोः 'असुसमीरिताः सुसमीरिते' इत्येते शब्दसमाधी उपपद्येते ।

'अम्यक्' (६०) इत्यनवगतम् । 'अमाक्तेति वाभ्यक्तेति वा' शब्दसमाधी । 'ऋष्टिः' अभिधेया । तां हि संग्रामे शत्रवो मन्यन्ते मामेवां[10] प्रत्यञ्चिता क्षिप्ता मामेवाँ[11] प्रत्यञ्चितेति । अथवा 'अभ्यक्तेति वा' । अभिगतैव

१ क. ख. ठ. ड. पवत; ग. ज. पचन. २ घ. झ. ट. तेन वाते°. ३ क. ख. घ. झ. ट. ठ. ड. पुनरेतेऽवस्थि°. ४ क. ख. झ. °त्यर्थः । समीरिताः किं°; ग. ज. ये कुर्वन्तीति; घ. ट. ठ. ड. ये समीरिता किं°; च. ये॰कु° किं. ५ ग. ज. पूर्वप्रयु°. ६ क. ख. घ. झ. ट. ठ. ड. °द्भाष्यकारेण प्र°. ७ ग. ज. च तेषां. ८ क. ख. घ. ट. ठ. ड. वार्षसह°. ९ च. भूतः ग्रा°. १० क. ख. ग. ज. घ. झ. ट. ठ. ड. मामेषा प्रत्य°. ११ क. ख. ग. ज. मामेषा प्रत्य°.

नित्यकालं शत्रून्प्रति भवतीत्यभ्यगित्युच्यते । 'अभ्यक्सा ते इन्द्र ऋष्टि-

'अभ्यक्' इत्यस्य — रस्मे सनेम्यभ्वं मरुतो जुनन्ति । अग्निश्चिद्धि ष्मातसे शुशुक्वानापो न द्वीपं दधति प्रयांसि' ( ऋ० सं० १ । १६९ । ३ । ) ॥ अगस्त्य-

५ स्यार्षम् । त्रिष्टुप् । ऐन्द्री । छन्दोमेषु द्वितीयेऽहनि मरुत्वतीये शस्त्रे शस्यते ( आश्व० श्रौ० ८।७)। अभ्यक्सा ते । यदा एवंलक्षणा रेषणा[3] शक्तिः आभिमुख्येन मेघम् अञ्चिता त्वया क्षिप्ता भवति आत्मनस्तव या स्वभूता अथ तदा मरुतोऽपि तदनुविवृत्सयैव हे इन्द्र अस्मे अस्मदर्थं सनेमि चिरंतनम् अभ्वं बहूदकमिह पातयितव्यमिति स्वान्यायुधानि मेघविदारणाय

१० जुनन्ति गमयन्ति । किंच । सर्वेषामेवायुधानां मध्ये भावत्कैव शक्तिः अग्निश्चित् अग्निरिव अतसे काष्ठे शुशुक्वान् देदीप्यमान एतस्मिन्मेघ आस्ते। किंच । आपो न द्वीपं यथा नादेया आपो द्वीपं परिवार्यात्मानं धारयन्त्येवमेतानि मेघ्यानि प्रयांसि उदकानि महत्त्वादृष्टेः तानि मज्जयितुमशक्नुवन्ति द्वीपमिव परिवार्य धारयन्ति । एवमत्राञ्चतेर्गत्यर्थस्य 'अभ्यक्' इत्येतद्

१५ ऋष्टिसंबन्धादित्युपपद्यते ।

'यादृश्मिन्' ( ६१ ) इत्यनवगतम् । 'यादृशे' इत्यवगमः ।

'यादृश्मिन्' इत्यस्य — 'ज्यायांसमस्य यतुनस्य केतुन ऋषिस्वरं चरति यासु नाम ते । यादृश्मिन्धायि तमपस्यया विदद्य उ स्वयं वहते सो अरं करत्'

२० ( ऋ० सं० ५ । ४४ । ८ ) ॥ अवत्सारस्येयमार्षम् । जगती । आग्नेयी । 'तं प्रत्नथा' इत्येतस्मिन्सूक्ते ( ऋ० सं० ५।४४ ) । उपहव्ये तृतीयसवने वैश्वदेवे शस्यते (आश्व०श्रौ०९।१०)। ज्यायांसं महत्तरम् । अस्य यतुनस्य

१ ग. °च्यते । ६५ । अभ्य°. २ ग. तेति । अग°; च. त इन्द्र प्रयांसि । अग°; घ. झ. ट. त इन्द्र० दधति प्रयांसि । अग°; ज. त । अग°. ३ ग. ज. रेषा श°. ४ च. त्वामाक्षिप्ता. ५ ग. ज. भावशक्ति°. ६ क. ख. घ. झ. न द्वैप्या आपो°; ट. नै द्वैप्या° नादेया. ७ ग. ज. परिचार्य; च. परिवर्य. ८ ग. ज. मेघानि. ९ ग. °गमः । ६६ । ज्याया°. १० ग. ज. °मस्य । अव°; घ. झ. ट. °मस्य यतुनस्य० सो अरं करत् । अव°; च. °मस्य यतुनस्य केतुन० रं करत् । २५ अव°. ११ क. ख. घ. झ. ट. °नस्य कर्मणि षष्ठ्यौ वा यतन°.

यतनशीलस्य भगवत: सूर्यस्य केतुना कर्मणा प्रज्ञया वा ऋषिस्वरम् । ऋषिभि: स्वर्यते स्तूयते इत्यृषिस्वरस्तमृषिस्वरं स्तुवन् चरति प्रचरति क्रियासु यासु[1] नाम ते । यासु क्रियासु[2] नाम नमनं ते तत्र हे भगवन्नग्ने । स एवं चरंस्तासु[3] क्रियासु यादृश्मिन् यादृशे कामे धायि मनो धत्ते तादृशं कामं तया[4] अपस्यया क्रियया[5] हवि:स्तुत्यादिलक्षणया तत्र प्रसादात् अविदत् । अलभतेत्यर्थ: । किंच । य उ स्वयं वहते त्वां प्रति आदरवान् प्रापयति स्तुती: स एव अरं करत् पर्याप्तमात्मनोऽभिप्रेतमर्थं करोति । एवमत्र शब्दसारूप्यात् ' यादृश्मिन् ' इत्यस्य ' यादृशे ' इत्येवं विपरिणाम उपपद्यते । ५

' जारयायि ' ( ६२ ) इत्यनवगतम् । ' अजायि ' इत्यवगम:[6] । १०

'जारयायि' इत्यस्य ' सास्माकेभिरेतरी न शूषैरग्नि: ष्टवे दम आ जातवेदा: । द्र्वन्नो वन्वन् क्रत्वा नार्वोस्र: पितेव जारयायि यज्ञै: ' ( ऋ० सं० ६ । १२ । ४ )॥ भरद्वाजस्यार्षम्[7] । आग्नेयी । त्रिष्टुप् । प्रातरनुवाकाश्विनयो: शस्यते ( आश्व० श्रौ० ४ । १३ ) । ' सास्माकेभि: ' इति छान्दसमात्वम् । १५

स: अग्नि: अस्माकेभि:[8] शूषै: सुखै: स्तोत्रै: स्तवे स्तूयते एतरी न अतिथिरिव दमे यज्ञैगृहे[9] आभिमुख्येनावस्थितै: स्तूयते जातवेदा: जातविद्यो वा जातधनो वा । द्रन्न: द्रुमान्न: वन्वन् क्रत्वा वननीयकर्मा वननीयप्रज्ञानो वा अनार्वा अनर्वा अनाश्रित: कंचिदन्यम् उस्र: पितेव साण्ड इव गोपिता गवां पिता अजायि । यथा साण्ड: पुत्रपौत्रादिभिरनेकधा प्रजायत एवं यज्ञेषु विह्रियमाणोऽनेकधा जायतेऽग्नि: । एवमत्र ' जारजायि ' इत्यस्य ' अजायि ' इत्यर्थप्रतीति: । २०

---

१ घ. ट. 'यासु' नास्ति. २ ग. ज. 'क्रियासु' नास्ति. ३ ग. सरंस्ता°; ज. स्वरंस्ता°. ४ ग. ज. अर्थे मनो धायि धारयति तदर्थं तया अप°. ५ ग. ज. क्रियया तत्र प्रसा°. ६ ग. °गम: । ६७ । सास्मा°. ७ ग. ज. न । भर°; घ. झ. ट. न शू० जारयायि यज्ञै: । भर°. ८ च. अस्मा° आ. ९ क. ख. घ. झ. ट. ठ. ड. °गृहे यज्ञे आभि°; ग. ज. यज्ञे गृहे.

'अग्रिया' (६३) इत्यनवगतम् । 'अग्रगमनेन' अग्रियाः[1] अग्रगाः । ते ह्यग्रे देवसैन्यस्य गच्छन्ति । अथ वा । अग्रमात्मानं संपादयन्तीत्यग्रियाः । अथवा । अग्रमेव अग्रियाः[2] । अनर्थक एवाग्रशब्देन[3] 'इया'-कार उपबन्ध उपात्तः । 'अपि वाग्रमित्येतदनर्थकमुपबन्धमाददीत' इति ह्युक्तं[4] भाष्यकारेण ॥ १५ ॥[5]

*('अग्रिया' इत्यस्य व्युत्पत्तिः)*

५

---

**प्र वोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः।**
**प्रास्थुर्वो जोषयमाणा अभवत सर्वेऽग्रगमनेनेति वाग्रगरणेनेति[6]**
१० **वाग्रसंपादिन इति वापि वाग्रमित्येतदनर्थकमुपबन्धमाददीत ।**
**अद्धीदिन्द्र प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमम् ।**
**अद्धीन्द्र प्रस्थितानीमानि हवींषि चनो दधिष्व चन इत्यन्ननाम**
**पचतिर्नामीभूतस्तं[7] मेदस्तः प्रति पचताग्रभीष्टामित्यपि निगमो**
**भवत्यपि[8] वा मेदसश्च पशोश्च सात्त्वं द्विवचनं स्याद्यत्र ह्येक-**
१५ **वचनार्थः प्रसिद्धं तद्भवति । पुरोळां[9] अग्ने पचत इति यथा**
**शुरुध आपो भवन्ति शुचं संरुन्धन्ति । ऋतस्य हि शुरुधः सन्ति**
**पूर्वीरित्यपि निगमो भवत्यमिनो[10]ऽमितमात्रो महान् भवत्यभ्य-**
**मितो वा । अमिनः सहोभिरित्यपि निगमो भवति जञ्झतीरापो**
**भवन्ति शब्दकारिण्यः । मरुतो[11] जञ्झतीरिवेत्यपि निगमो भवत्य-**
२० **प्रतिष्कुतोऽप्रतिष्कृतो[12]ऽप्रतिस्खलितो वा । अस्मभ्यमप्रतिष्कुत**
**इत्यपि निगमो भवति शाशदानः शाशाद्यमानः । प्र स्वां मति-**
**मतिरच्छाशदान इत्यपि निगमो भवति ॥ १६ ॥[13]**

**इति षष्ठाध्यायस्य तृतीयः पादः ॥[14]**

---

१ ग. ज. °ग्रियोऽग्रगाः; च. °ग्रियोग्राः° योऽ ( यः अ ). २ ग. ज.
२५ अग्रिया अन°; च. अग्रिया अन° याः ३ ग. ज. एवाग्रिश°; च. एवाग्रि ( ग्र ) शब्दे॰ याका° ने. ४ क. ख. घ. झ. ट. ठ. ड. 'हि' नास्ति. ५ क. ख. ६(१५); ग. १६ ( ६८ ); ठ. ड. १५ । इति निरुक्तटीकायां षष्ठाध्याये पञ्चदशः खण्डः; इतरेष्वङ्को नास्ति. ६ छ. त. द. 'वाग्रगरणेनेति' नास्ति. ७ क. ख. छ. त. °भूतः। तं; द. °भूतः स्तं°. ८ त. °वत्यपि° ति । अ. ९ क. ख. छ. त. द. पुरोला. १० त. °वत्यमि° ति । अ. ११ क. ख. प्रदिवो ज°. १२ क. ख. °प्रतिस्कृतो; द. °प्रतिष्कृतो° स्कु. १३ क. ख. ७ ( १६ ); छ. त. १६; द. ७. १४ ङ. थ. ध. 'इति° पादः' नास्ति; छ. 'इति षष्ठाध्यायस्य' नास्ति; त. इति षष्ठाध्याये तृ°;
३० द. इति नैरुक्तस्य पूर्वषट्के षष्ठ°.

'अयं वो यज्ञ ऋभवोऽकारि यमा मनुष्वत्प्रदिवो दधिध्वे । प्र वोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः' (ऋ० सं० ४ । ३४ । ३)॥ वामदेवस्यार्षम्[2]। व्यूढस्य दशरात्रस्य पञ्चमेऽहनि

प्रयोगश्च

तृतीयसवने वैश्वदेवे शस्यते (आश्व० श्रौ० ८ । ८)। हे ऋभवो युष्माकम् अयं यज्ञो यम् अहमकार्षं तम गम्य मनुष्वत् मनुष्यवत् दधिध्वे धारयध्वे । एतद्वः प्रब्रवीमि । किंच । प्र वोऽच्छा जुजुषाणासो अस्थुः । प्रस्थितानि यान्येतानि हवींषि तानि यूयं जोषयमाणा देवैः सेव्यमाना वा आत्मना अग्रिया भवत । उत वाजाः । अपि च हे वाजा यूयमप्येवमेव भवत । एवमत्र 'अग्रगामिनोऽप्रसंपादिनो वाग्रमेव वाग्रिया' तथार्थोपपत्तेः शब्दसारूप्याच्च ।

'चनः (६४) इत्यन्ननाम । पचता' (६५) इत्यनवगतम् । एतच्चैकवचनं द्विवचनं वा भवति प्रकरणविशेषात् । आख्यातस्वरूपं चैतन्नाम । 'पचतिर्नामीभूतः' इति भाष्यकारो ब्रवीति[7] । 'अद्धीदिन्द्र प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमम् । प्रयस्वन्तः प्रति हर्यामसि त्वा सत्याः सन्तु यजमानस्य कामाः' (ऋ० सं० १० । ११६ । ८)॥ इयमग्नियुतस्य वाग्नियूपस्य वार्षम् । अद्धि

'चनः' 'पचता' इत्यनयोः

भक्षय हे इन्द्र प्रस्थितानि इमानि हवींषि । चनः अन्नमेतद्धविर्लक्षणं दधिष्व प्रक्षिप जठरे । पचता पक्वानि[10] इमानि हवींषि । अत एवं ब्रवीमि दधिष्वेति ।

१ ग. ज. °कारि । वाम°; घ. झ. ट. 'कारि० अग्रियोत वाजाः । वाम°. २ क. ख. घ. झ. ट. ठ. ड. °स्यार्षम् । आर्भवी । त्रिष्टुप् । व्यू°; च. °स्यार्षम्˘ । व्यू° आर्भवी । त्रिष्टुप्. ३ क. ख. घ. झ. ट. ठ. ड. °वत् प्रदिवः प्रकर्षेण द्योतमानाः सन्त आदधि°. ४ ग. °णासो अस्थुः˘ । प्र° प्रास्थुः; च. ज. °णासः प्रास्थुः प्रस्थि°; घ. ट. °णासः प्रास्थुः । प्र°; ठ. ड. °णासः । प्रास्थुः प्रस्थि. ५ क. ख. घ. झ. ट. ठ. ड. 'अत्र' नास्ति. ६ घ. झ. ट. ह. वा बहुवचनं वा भ°; च. °चनं˘वा° बहुवचनं. ७ ग. °ति । ६१/६७ । अद्धि°. ८ ग. °दिन्द्र प्रस्थितेमेति इय°; ज. 'दिन्द्र प्रस्थितेमा । इय°; घ. झ. ट. दिन्द्र ० यजमानस्य कामाः । इय°. ९ क. ख. घ. झ. ट. ठ. ड. °वार्षम् । त्रिष्टुप् । ऐन्द्री । अद्धि°; च. °वार्षम्˘ । अद्धि° त्रिष्टुबैन्द्री. १० च. °इमालीमानी ह° नि.

उत सोमम् अपि च सोमं दधिष्व । प्रयस्वन्तः अन्नवन्तो वयं हवींषि कामयमानं त्वां प्रतिहर्यामसि प्रतिकामयामहे सत्याः सन्तु यजमानस्य कामाः इत्यभिप्रायेण । इह 'हवींषि' इत्यनेन संबन्धात् 'पचता' इत्येतदन्नविषयं बहुवचनेनम् । 'पचतिर्नामीभूतः' इति धातुनिर्देशः ।

अत्र 'पचता' बहुवचने

द्वितीयमुदाहरणं ब्रवीत्यर्थवैशेष्यदर्शनादस्येति 'तं मेदस्तः प्रति पचताग्रभीष्टाम्' (मैत्रा० सं० ४ । १३ । ९ ) इति । तं पशुं मेदस्तः यतस्तस्य मेदो वपासहयोगि ततस्तेन प्रदेशेन प्रत्यग्रभीष्टाम् इन्द्राग्नी पचता । पक्वमित्यर्थः । एवमेतदेकवचनं भवति । अपि वा मेदसश्च वपासहयोगिनः पश्ववदानस्याभिधायकमेतत् 'सात्त्वं' सत्त्वविषयं 'द्विवचनं स्यात्' । सन्ति ह्येवंरूपाणि द्विवचनान्यपि । तद्यथा । 'दैव्या होतारा भिषजा' ( मैत्रा० सं० ३ । ११ । ११ )।

अत्रैकवचनम्

अथवा द्विवचनम्

किं कारणमुच्यते 'द्विवचनम्' एतत् 'स्यात्' इति । यतो यस्मात् 'यत्र ह्येकवचनार्थः प्रसिद्धम्' एव निःसंदेहमेव 'तद्भवति' ।'पुरोळा अग्ने पचतस्तुभ्यं वा घा परिष्कृतः । तं जुषस्व यविष्ठ्य' ( ऋ० सं० ३ । २८ । २ )॥ विश्वामित्रस्यार्षम् । आश्विनस्य द्विकपालस्यातिरात्रे यदि स्विष्टकृद्भवति तस्येयं पुरोनुवाक्या भवति ( आश्व० श्रौ० ६ । ९ )।

अत्रैकवचनमेव

---

१ क. ख. घ. झ. ट. ठ. ड. प्रतिहर्यामः काम°; च. प्रति॰काम° हर्यामः. २ क. ख. घ. झ. ट. ठ. ड. °चनमुपपद्यते. ३ क. ख. घ. झ. ट. ठ. ड. °र्थवि-शेषदर्श°; ग. र्थविशिष्टादर्श° वै; ज. °र्थवैशेष्टादर्श°. ४ क. ख. °नस्य चाभि°; घ. झ. ट. ठ. ड. °नस्य वाभि°; च. °नस्यौ (स्य) चा भिधेयक° धा; ग. ज. °नस्याभिधेयकतत्°. ५ ग. °वति । ७० । पुरो°. ६ क. ख. ग. घ. ज. ध. ट. पुरोला. ७ ग. पचतस्तुभ्यमिति । विश्वा°; ज. पचतस्तुभ्यं । विश्वा°; घ. झ. ट. पचतः० यविष्ठ्य । विश्वा°. ८ क. ख. घ. झ. ट. ठ. ड. °स्यार्षम् । गायत्री । आग्नेयी । आश्वि°; च. स्यार्षम् ० । आश्वि° गायत्र्याग्नेयी.

पुरोळाः पुरोडाशः पचतः । पक्व इत्यर्थः । तुभ्यं त्वदर्थं भगवन्नग्ने । 'वा घा' इत्यनर्थकौ । न केवलं पक्वः । किं तर्हि । परिष्कृतः । सुसंस्कृत इत्यर्थः । तं जुषस्व सेवस्व हे यविष्ठ्य युवतम । अथवा । मिश्रयितृतम । 'एवमत्र परिष्कृतः' इत्येतस्मादेकवचनसंबन्धात् 'पचतः' इत्येकवचनमिति सिध्यति ।

**'शुरुधः' इत्यस्य व्युत्पत्तिः**

'शुरुधः' (६६) इत्यनवगतम् । 'आपो भवन्ति' इत्यभिधेयवचनम् । 'शुचं संरुन्धन्ति' इति निर्वचनम् । 'शुग्रुधः इति न्याय्यम् । 'ऋतस्य हि शुरुधः' इति । दैवते शेषः ( निरु० १० । ४१ ) ।

**'अमिनः' इत्यस्य**

'अमिनः' (६७) इत्यनवगतम् । 'अमितमात्रः' इत्यवगमः । न यस्य मात्राणां मानमस्ति सोऽमिन इत्युच्यते । 'अभ्यमितो वा' । अनभिहिंसितो यः केनचित्सोऽमिनः । 'महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः । अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत्' [ ऋ० सं० ६ । १९ । १ ) ॥ भरद्वाजस्यार्षम् । दशरात्रस्याष्टमेऽहनि मरुत्वतीये शस्त्रे शस्यते [ आश्व० श्रौ० ८ । ७ ] । माहेन्द्रश्च ग्रहोऽनयैव गृह्यते [ मैत्रा० सं० १ । ३ । २५ ] । महान् प्रभावतः इन्द्रो नृवत् मनुष्यवत् आचर्षणिप्राः आपूरयिता चर्षणीनां मनुष्याणां कामैः । यथा हि मनुष्य ईश्वरः परितुष्टः कामैर्वश्यं भृत्यमापूरयत्येवमिन्द्रोऽपि स्तोतारम् । उत द्विबर्हाः । अपि च द्वयोः

---

१ क. ख. ग. च. ज. पुरोहाः; घ. झ. पुरोलाः पुरोलाशः; ट. पुरोळाः पुरोळाशः. २ ठ. ड. °त्यर्थः । भृमृदृशीत्यादिना कर्मण्यच् । पच्यतेऽसौ पचतः । तुभ्यं°. ३ च. केवलः. ४ ग. च. युवतम यविष्ठ्य; ज. युवतम यविष्ठ्य. ५ क. ख. घ. झ. ट. ठ. ड. °चनमेव सि°. ६ ग. ज. अनभ्यमि°; च. अनभ्यमि°. ७ क. ख. घ. झ. ट. ठ. ड. °चिदसौ अमि°; ग. ज. त्सोऽमिनः । ७१ । महा°; च. °चित्सोमि° दसौ अ. ८ ग. वदाने । भर°; व. झ. ट. °वत् ० कर्तृभिर्भूत । भर°; ज. °वदा । भर°. ९ क. ख. घ. झ. ट. ठ. ड. °स्यार्षम् । त्रिष्टुप् । ऐन्द्री । दश°; च. °स्यार्षम् । दश° त्रिष्टुबैन्द्री.

स्थानयोर्मध्यमोत्तमयोः परिवृद्धैः[1] अमिनश्च अमितमात्रः । अथवा । अनभिहिंसितः केनचित् । केन पुनरमिन इति । उच्यते । सहोभिः । बलैरित्यर्थः । न हीन्द्रस्य बलमात्राः केनचिन्मितपूर्वा इत्यर्थः । अनभिहिंसितपूर्वो वा केनचिदिन्द्रः । अस्मद्र्यक् अस्मदनुग्रहाय अस्मद्दर्शनाय वावृधे[2] वर्धते । वीर्याय वीरकर्मणे वर्षार्थम् उरुः महान् परिमाणतः पृथुश्च विस्तीर्णो यः सोऽस्माकं प्रत्यभिमुखो दानायाभिप्रेतानामर्थानां सुकृतः स्तुतिभिरेतैः कर्तृभिः ऋत्विग्भिः भूत् । भूयादित्यर्थः । एवमत्र 'अमिन'शब्देन 'अमितमात्रः' अनभिहिंसितमात्रो वोच्यते[3] शब्दसारूप्यादर्थोपपत्तेश्च ।

'जज्झतीः' इत्यस्य

'जज्झतीः' (६८) इत्यनवगतम् । शब्दानुकरणात् 'आपः' इति प्रतीयन्ते[4] । 'आ रुक्मैरा युधा[5] नर ऋष्वा ऋष्टीरसृक्षत । अन्वेनाँ अह विद्युतो मरुतो जज्झतीरिव भानुरर्त त्मना दिवः' [ऋ० सं० ५।५२।६] ॥ यावाश्वस्यार्षम्[6] । आभिमुख्येन शत्रून् शातयितव्यान् मेघान् प्रति एतान्यायुधानि रुक्मैः विकृतानि एताश्च ऋष्टीः शक्तीः असृक्षत असृजन्त हे नरः मरुतः । किंच । अनु एनान् प्रहारान् विद्युतो भानुः आदित्य इव आत्मना दिवो द्युलोकादपगच्छन्तु[7] । मेघेभ्यो हन्यमानेभ्यस्तदन्वेव चापोऽपि आर्त आगच्छन्तु । कथमिति । जज्झतीरिव शब्दकारिण्य इव स्रोतस्या आप ऋष्वाः । प्रभूता[8] इत्यर्थः । एवमत्र शब्दानुकरणात् 'आपो जज्झतीः' इत्युपपद्यते ।

'अप्रतिष्कुतः' इत्यस्य

'अप्रतिष्कुतः' (६९) इत्यनवगतम् । 'अप्रतिष्कृतोऽप्रतिस्खलितो वा' इति शब्दसमाधी[9] । 'स नो वृषन्नमुं चरुं[10] सत्रादावन्नपा वृधि । अस्मभ्यमप्रतिष्कुतः[11]' (ऋ० सं० १।७।६) ॥ मधुच्छन्दस आर्षम्[12] । पृष्ठ्याभिप्लवयोः प्रातःसवनिके आवापे विनियुक्ता ब्राह्मणाच्छंसिनः शस्त्रे

१ क. ख. घ. झ. ट. ठ. ड. परिवृढः. २ ग. ज. घ. झ. ट. ट. ड. ववृधे. ३ क. ख. घ. झ. ट. ठ. ड. वेत्युच्यते. ४ ग. °यते । ७२ । आ°; ज. °यते । आ°. ५ ग. युधेति । श्या°; घ. झ. ट. युधा नरः० भानुरर्त त्मना दिवः । श्या°. ६ क. ख. घ. झ. ट. ठ. ड. °स्यार्षम् । मारुती । पङ्क्तिः । आभि°; च. °स्यार्षम् । आभि° मारुती पङ्क्तिः. ७ क. ख. घ. झ. ट. ठ. ड. °काद्दार्तापगच्छ°; ग. ज. °कादागच्छ°; च. °कात् अप° आर्त. ८ घ. झ. प्रसूताः; ट. प्रसूताः °भू. ९ ग. मार्धी । ७३ । स°. १० ग. ज. चरुं । मधु°; घ. झ. ट. चरुं० मप्रतिष्कुतः । मधु°. ११ च. °तिस्कुतः. १२ क. ख. घ. झ. ट. ठ. ड. आर्षम् । गायत्री । ऐन्द्री । पृ°.

( आश्व० श्रौ० ७ । ५ ) । हे वृषन् इन्द्र वर्षितः यस्त्वमनुग्रहीतास्माकं स त्वं शृणु यत्कुरुष्व । अमुं चरुम् अमुं[1] मेघं हे सत्रादावन् सततदा[2]न अपावृधि अपावृणु उदकदानार्थमस्मभ्यम् । [3]अप्रतिष्कुतः । न हीन्द्रः प्रतिष्कुतः परान् प्रति पराङ्मुखः कृतपूर्वः केनचित् । अथवा । ' अप्रतिस्खलितः ' संग्रामेषु । एवमत्र ' अप्रतिष्कुत ' शब्दः ' अप्रतिष्कृत '-वाची अथवा ' अप्रतिस्खलित' वा[4]ची । तथार्थाविरोधः ।

' शाशदानः ' ( ७० ) इत्यनवगतम् । ' शाशाद्यमानः ' इत्यवगमे[5]: । ' अभि सिध्मो अजिगा[6]दस्य शत्रून्वि तिग्मेन वृषभेणा पुरोऽभेत् । सं वज्रेणासृजद्वृत्रमिन्द्रः प्र स्वां मतिमतिरच्छाशदानः' ( ऋ० सं० १ । ३३ । १३ ) ॥ हिरण्यस्तूपस्यार्षम् । गोसवविवधयोर्निष्केवल्ये शस्यते ( आश्व० श्रौ० ९ । ८ ) । अभ्यजिगात् अभ्यगच्छत् अस्य इन्द्रस्य स्वभूतः तिग्मः

' शाशदानः ' इत्यस्य

उत्साहवान् वज्रः शत्रून् प्रति सिध्मः साधयिता शत्रूणां वितिग्मेन तीक्ष्णेन वृषभेण वर्षप्रवर्तकेन पुरः मेघं[7]पुरः असुरपुरो वा अभेत् । किंच । समसृजद्वज्रेण वृत्रमिन्द्रः । स च भिद्यमानः प्रातिरत् स्वां मतिं न दातव्यमुदकमेषामित्येतां मतिं स्वां प्रातिरत् । प्राजहादित्यर्थः । शाशदानः पुनः पुनः शाशाद्यमानः इन्द्रेण । एवमत्र ' शाशदानः शाशाद्यमानः ' इत्युपपद्यते शब्दसारूप्यादर्थाविरोधाच्चेति ॥ १६[8] ॥

एका[9]दशस्य तृतीयः पादः ॥

---

१ क. ख. घ. झ. ट. ठ. ड. °ममुमन्तरिक्षे चरणशीलं मेघं°; च. °ममुं ~ मेघं °अन्तरिक्षेण चरणशीलं. २ च. °दानि अपा° नः; ट. °दानि अपा° ता. ३ ग. ज. हेऽप्रतिष्कृतः. ४ च. °वाची वा; ज. वाची वा. ५ ग. °गमः । ७४ । अभि°. ६ ग. ज. °जिगात् । हिर°; घ. झ. ट. °जिगादस्य० प्र स्वां मतिमतिरच्छाशदानः । हिर°. ७ च. मेघः पु°. ८ क. ख. ७ ( १६ ); ग. १८; इतरेष्वङ्को नास्ति. ९ ठ. ड. °च्चेति । इति गुर्जरपाठे निघण्टुपञ्चकेन सह एकादशाध्यायस्य तृतीयः पादः । इति निरुक्तटीकायां षष्ठाध्याये षोडशः खण्डः.

चतुर्थः पादः ।

सृप्रः सर्पणादिदमपीतरत्सृप्रमेतस्मादेव सर्पिर्वा तैलं वा । सृप्रकरस्नमूतय इत्यपि निगमो भवति करस्नौ बाहू कर्मणां प्रस्नातारौ सुशिप्रमेतेन व्याख्यातम् । वाजे सुशिप्र गोमतीत्यपि निगमो भवति शिप्रे हनू नासिके वा हनुर्हन्तेर्नासिका नसतेः । वि ष्यस्व शिप्रे विसृजस्व धेने इत्यपि निगमो भवति धेना दधाते रंसु रमणात् । स चित्रेण चिकिते रंसु भासेत्यपि निगमो भवति द्विबर्हा द्वयोः स्थानयोः परिवृढो[1] मध्यमे च स्थान उत्तमे च । उत द्विबर्हा अमिनः सहोभिरित्यपि निगमो भवत्यक्रः[2] आक्रमणात् । अक्रो न बभ्रिः समिथे महीनामित्यपि निगमो भवत्युराण[3] उरु कुर्वाणः । दूत ईयसे प्रदिव उराण इत्यपि निगमो भवति । स्तिया आपो भवन्ति स्त्यायनात् । वृषा सिन्धूनां वृषभः स्तियानामित्यपि निगमो भवति स्तिपा स्तियोपालन[4] उपस्थितान् पालयतीति वा[5] । स नः स्तिपा उत भवा तनूपा इत्यपि निगमो भवति जवारु जवमानरोहि[6] जरमाणरोहि गरमाणरोहीति वा । अग्रे रुप आरुपितं जबार्वित्यपि निगमो भवति जरूथं गरूथं गृणातेः । जरूथं हन्यक्षि राये पुरन्धिमित्यपि निगमो भवति कुलिश इति वज्रनाम कूलशातनो भवति । स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः । स्कन्धो वृक्षस्य समास्कन्नो भवत्ययमपीतरस्कन्ध[7] एतस्मादेवास्कन्नं कायेऽहिः शयत उपपर्चनः पृथिव्यास्तुञ्जस्तुञ्जतेर्दानकर्मणः ॥ १७ ॥[8]

---

'सृप्र' (७१) इत्यनवगतम् । 'सर्पः' इत्यवगमः । 'सर्पणात्'

'सृप्रः' इत्यस्य इति निर्वचनम् । 'इदमपीतरत्सृप्रमेतस्मादेव' सर्पणात् । यदेतत् 'सर्पिर्वा तैलं वा' तदपि हि सर्पति । 'सृप्रकरस्नमूतये' इति निगमः । 'वृत्र- दुक्थं हवामहे' इति व्याख्यातः शेषः ( निरु० ६ । ४ ) । 'करस्नौ बाहू कर्मणां प्रस्नातारौ' । निर्वर्तयितारावित्यर्थः ।

---

१ छ. त. द. परिवृल्हो. २ ठ. ड. त. °वति । अक्र°. २ क. ख. द. °वति ।१। स्तिया ; छ. त. °वति ।१९। स्तिया°. ४ छ. त. द. स्तृषां पाल°. ५ छ. त. द. 'वा' नास्ति. ६ क. ख. छ. त. द. जवमा°; 'जबारु जरमाणरोहीति वा जवमानरोहीति वा' इति सायणपाठः. ७ छ. त. द. भवतीदमपीतरत्स्कन्ध° (द. °रस्कन्न). ८ क. ख. २ (१७); छ. त. २०; द. २.

'सुशिप्रः' (७२) इत्यनवगतम् । तत्पुनरेतत् 'एतेन' एव सृप्र-

'सुशिप्रः' इत्यस्य

शब्देन 'व्याख्यातम्' । सर्पतेरेवैतदपि । 'शिप्रे[1] हनू नासिके वा' । ते यस्य शस्ते स सुशिप्रः । 'वाजे सुशिप्र गोमति' इति निगमो 'विद्मा सखित्वम्' इति व्याख्यातः[2] (निरु० ५ । २३) । नास्मिन्मन्त्रे नासिकयोर्हन्वोर्वा शिप्रशब्दवाच्यत्वे विशेषलिङ्गमस्तीति यतः 'शिप्रे हनू नासिके वा' इत्युक्त्वा विशिष्टतर[3]लिङ्गमन्यदुदाहरणं ब्रवीति 'वि ष्यस्व शिप्रे' इति[4] ।

'मादयस्व हरिभिर्ये त इन्द्र वि ष्यस्व शिप्रे वि सृजस्व धेने । आ त्वा सुशिप्र हरयो वहन्तूशन्हव्यानि प्रति नो जुषस्व' (ऋ० सं० १ । १०१ । १०) ॥

शिप्रे' इत्यस्य

कुत्सस्येयमार्षम् । ऐन्द्री[6] । जगती । दशरात्रस्य नवमेऽहनि मरुत्वतीये शस्त्रे शस्यते (आश्व० श्रौ० ८ । ७) । मादयस्व हर्षयस्व स्वम् आत्मानं हे इन्द्र हरिभिः अश्वैः ये ते तव स्वभूताः तैः सह । कथं च पुनर्मादयस्वेति । विष्यस्व विमुञ्चस्व शिप्रे सृप्रे दीर्घे हनू हविर्भक्षणाय । नासिके वा । ते अपि हि गन्धाघ्राणाय सर्पत इव । भक्ष्यं द्रव्यं ह्यास्वादयतो वा जिघ्रतो वा हर्ष उत्पद्यते । अत इदमुक्तं विमुञ्चस्व हनू हविर्भक्षणाय नासिके वा गन्धा[7]घ्राणाय । एवं मादयस्वात्मानमिति । विसृजस्व धेने आधरत्ये दंष्ट्रे वा । 'जिह्वोपजिह्विके[8] वा' इत्येके । तयोर्ह्यन्नं धीयते । किंच । आ त्वा वहन्तु हरयः[9] । हृष्टाः सन्त आवहन्तु त्वां हरयोऽस्मान्प्रति हे सुशिप्र । उशन् कामयमानो हव्यानि हवींषि एतानि अस्मत्प्रत्तानि स्तुतिभिरस्मासिरासेवितः प्रतिजुषस्व नः । प्रतिसंसेवस्व[10] नः कामैरित्यभिप्रायः । एवमत्र मादनसंबन्धाद्धविःसंप्रदानसंबन्धाच्च 'शिप्रे हनू नासिके वा' इत्युपपद्यते ।

यत्तदुक्तं 'शिप्रे इत्युपरिष्टाद् व्याख्यास्यामः' (निरु० ४ । १०) इति एतद् व्याख्यातं 'शिप्रे हनू नासिके वा' इति ।

'हनुर्हन्तेः' धातोः । 'नासिका नसतेः' । 'नसतिराप्नोतिकर्मा वा नमतिकर्मा वा' इति हि[11] वक्ष्यति (निरु० ७ । १७) ।

---

१ च. सिप्रे. २ घ. °ख्यात । जास्मिन्मन्त्रे°; ट. °ख्यात ४ । ना° शेषः; ठ. ड. °ख्यातशेषः । अस्मिन्मन्त्रे°. ३ क. ख. घ. झ. ट. ठ. ड. तल्लिङ्ग°. ४ ग. इति । ७५ । माद°. ५ ग. ज. हरिभिः । कुत्स°; घ झ. ट हरिभिर्ये त० प्रति नो जुषस्व । कुत्स°. ६ ग. ज. 'ऐन्द्री' नास्ति. ७ ग. ज. गन्धघ्रा°. ८ ग. ज. °जिव्हके. ९ ग. ज. 'हरयः' नास्ति. १० च. °सेवयस्व. ११ ग. ज. 'हि' नास्ति.

'रंसु' (७३) इत्यनवगतम् । रमणीयेषु इत्यवगमः[1] । 'रमणात्' इति निर्वचनम्[2] । 'आ यन्मे अभ्वं वनदः[3] पनन्तोशिग्भ्यो नामिमीत वर्णम् । स चित्रेण चिकिते रंसु भासा जुजुर्वाँ यो मुहुरा युवा भूत्' (ऋ० सं० २।४।५)॥ सोमाहुतेर्भार्गवस्यार्षम् । त्रिष्टुप् । आग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते ( आश्व० श्रौ० ४ । १३ ) । आपनन्त आभिमुख्येन पनन्त आस्तुवत[4] मे मम स्वभूते कर्मणि अभ्वं महान्तम् अग्निम् । वनदो वननीयस्य हविषो दातार ऋत्विजो यं वर्णं वरं वृण्वन्ति अस्मदर्थं तेभ्यः उशिग्भ्यः मेधाविभ्यः तमसौ वर्णं वरणं प्रार्थनां नामिमीत न हिनस्ति । किं तर्हि । यथाप्रार्थितमेव समर्धयतीत्यर्थः । किंच । सः अग्निः चित्रेण चायनीयेन भासा युक्तो रंसु रमणीयेषु स्थानेषु द्युलोकादिषु अग्निहोत्रेषु वा चिकिते । किंलक्षणो योऽग्निरिति । जुजुर्वान् पुनः पुनर्जरावान् अपि भूत्वा इन्धनक्षयात्पुनरिन्धनं प्राप्य तस्योपरि दीप्यमानो मुहुर्मुहुर्युवेव भवति । एवमत्र शब्दसारूप्यादर्थाविरोधाच्च 'रंसु' इत्यस्य 'रमणीयेषु' इति विपरिणाम उपपद्यते ।

'द्विबर्हाः' (७४) इत्यनवगतम् । 'द्विपरिवृढः' इति न्याय्यम् । मध्यमे च स्थाने वैद्युतात्मना उत्तमे च सूर्यात्मना । 'उत द्विबर्हाः' इति निगमः । 'महाँ इन्द्रः' इति व्याख्यातः शेषः ( निरु० ६ । १६ ) ।

'अक्रः' (७५) इत्यनवगतम् । 'आक्रमणः' इति न्याय्यम् । 'आक्रमणात्' इति निर्वचनम् । प्राकारोऽभिधेयः[5] । 'अक्रो न बभ्रिः समिथे महीनां दिदृक्षेयः[6] सूनवे भाऋजीकः । उदुस्रिया जनिता यो जजानापां गर्भो नृतमो यह्वो अग्निः' ( ऋ० सं० ३ । १ । १२ )॥ विश्वामित्रस्यार्षम्[7] । त्रिष्टुप् । आग्नेयी[8] । प्रातरनुवाकाश्विनयोः शस्यते

१ ग. ज. °णीयमित्यव°; च. °णीयेष्वित्यनवगमः. २ ग. °चनम् । ७६ । आ°. ३ ग. ज. वनदः पनन्त इति । गृत्समदस्यार्षम् । प्रात°; घ. झ. ट. वनदः० मुहुरा युवा भूत् । सोमा°. ४ क. ख. घ. झ. ट. ठ. ड. अस्तु°; ग. ज. असुवत. ५ च. तथा°. ६ ग. धेयः । ७७ । अक्रो°. ७ ग. बभ्रिः समिथ इति । विश्वा°; ज. बभ्रिः समिथे विश्वा°; घ. झ. ट. बभ्रिः सः यह्वो अग्निः । विश्वा°. ८ ग. ज. 'त्रिष्टुप् । आग्नेयी' नास्ति.

(आश्व० श्रौ० ४ । १३ )। अक्रो न अक्र इव प्राकार इव बभ्रिः भर्ता धारयिता । क्व । समिथे संग्रामे । कस्य । महीनां महतीनां शत्रुसेनानाम् । एवंलक्षणो योऽग्निः । किंच । दिदृक्षे यः दृश्यते यः सूनवे सोमाभिषवकर्त्रे यजमानाय नित्यकालमेव भाऋजीकः प्रसिद्धभाः प्रसिद्धदीप्तिः । नित्यो ज्वलित इत्यर्थः । किंच । सर्वस्य लोकस्य जनयिता उस्रिया उज्जजान उस्रिया आहुतीः आत्मनि प्रक्षिप्ताः सतीः देवतातृप्तिसमर्थेन रूपेण ऊर्ध्वा यो जनयति । अथवा । गाव एव वोस्रियाः स्युः । ता अपि ह्यसौ पशुकामकर्मण्यङ्गभावं गच्छन् जनयति । यश्च अपां गर्भो यश्च नृतमो मनुष्यतमो यश्च यह्वो महान् अग्निः स इदं नामास्माकं करोत्विति । एवमत्र शब्दसारूप्यादर्थाविरोधाच्च 'अक्रः प्राकारः' इत्युपपद्यते । असौ ह्याक्रम्यते जनैः । १०

'उराणः' (७६) इत्यनवगतम् । 'उरु कुर्वाणः' इत्यवगमः ।

'उराणः इत्यस्य' वेरध्वरस्य दूत्यानि विद्वानुभे अन्ता रोदसी संचिकित्वान् । दूत ईयसे प्रदिव उराणो विदुष्टरो दिव आरोधनानि' (ऋ० सं० ४।७।८)॥

वामदेवस्यार्षम् । त्रिष्टुप् । आग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते (आश्व० श्रौ० ४ । १३ ) । हे भगवन्नग्ने वेः त्वं जानीषे । किम् । अध्वरस्य यज्ञस्य दूत्यानि दूतकर्माणि यानि दूतेन कर्तव्यानि । किंच । उभौ अपि अन्तौ रोदस्योः विद्वान् असि विजानीषे । किंच । समस्तमप्येतज्जगत् चिकित्वान् असि । न ते विज्ञानप्रतीघातोऽस्ति कृत्स्नेऽपि जगति । विजानीषे सर्वाणि देवतास्थानानि । प्रदिव एवासि दूतः चिरंतनः सर्वेषां यजमानानाम् । यतोऽस्माभिस्त्वमेतस्मिन्कर्मणि दूतो दूतत्वेन ईयसे याच्यसे । स त्वम् उराणः अल्पमपि हुतं हविर्देवतातृप्तिसमर्थं बहु कुर्वाणो विदुष्टरो विद्वत्तरो मनुष्यहोतुः सकाशात् दिवः आरोधनानि आरोढव्यानि देवतास्थानानि प्रति । वहैतानि हवींषीत्यभिप्रायः । एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च 'उराणः' इत्यस्य 'उरु कुर्वाणः' इत्येष विपरिणाम उपपद्यते । २५

१ ग. ज. 'किंच । उदुस्रिया उज्जजानोसृश आहुती°. २ ग. च. ज. सती दे°. ३ ट. °समर्थेन० सामर्थ्ये; ठ. ड. तृप्तिसामर्थ्येन. ४ ग. °गमः । ७८ । वे°. ५ ग. ज. दूत्यानि विद्वान् । वाम°; घ. झ. ट. दूत्यानि० दिव आरोधनानि । वाम°. ६ ग. ज. 'त्रिष्टुप् । आग्नेयी' नास्ति. ७ ग. च. ज. रोदस्यो वि°. ८ ग. ज. 'विद्वत्तरः' नास्ति; च. विदुत्तर० ह्व. ९ घ. ट. ठ. ड. °नानि आनानि आरो°. १० क. ख. °घते । १ । स्त्रियः°. ३१

'स्तियाः' (७७) इत्यनवगतम्। 'स्त्यायनाः'[1] इति न्याय्यम्।

'स्तियाः' इत्यस्य व्युत्पत्तिः — 'आपो भवन्ति' इत्यभिधेयवचनम्। 'स्त्यायनात्' संहननात् इत्यर्थः। आप एव हि पार्थिवानामवयवानां संहनने[2] हेतुभूता भवन्ति। अथवा[3]। हिमभावेन[4] ता आत्मनैव संहता भवन्ति[5]।

प्रयोगश्च — वृषासि दिवो वृषभः[6] पृथिव्या वृषा सिन्धूनां वृषभः स्तियानाम्। वृष्णे त इन्दुर्वृषभ पीपाय स्वादू रसो मधुपेयो वराय' (ऋ० सं० ६। ४४। २१)॥

शंयोर्बार्हस्पत्यस्येयमार्षम्। ऐन्द्री[7]। हे इन्द्र वृषासि। दिवो वर्षितासि। पृथिव्याश्च वर्षिता। सिन्धूनां स्यन्दमानानामपां[8] च वर्षिता। स्तियानां संहन्त्रीणामपाम्। अथवा। संहतानामात्मनैव हिमभावेन। यावत्किंचित्सेचनकर्म तत्सर्वं त्वदधीनमित्यभिप्रायः। तस्मै ते एवंगुणविशिष्टाय वृष्णे वर्षित्रे तुभ्यम् एष इन्दुः सोमो हे वृषभ वर्षितः पीपाय पुनः पुनराप्याय्यते। अथवा। पानाय संस्कृतः। स्वादू रसः स्वादुरससंयुक्तो मधुपेयो मधुरपेयो वराय तुभ्यम्। श्रेष्ठायेत्यर्थः। एवमत्र 'स्तिया' शब्देन 'संहन्त्र्यः संहता वा आप' उच्यन्ते शब्दसारूप्यात् 'स्त्यै शब्दसंघातयोः' (धा० १। ९३५) इत्यस्य।

'स्तिपाः' (७८) इत्यनवगतम्। 'स्तियापालनः'[9] इत्यवगमः।

'स्तिपाः' इत्यस्य — 'कूपः' अभिधेयः। स हि 'उपस्थितान्[10] पातृन् 'पालयति'[11]। 'यं त्वां पूर्वमीळितो[12] वध्र्यश्वः समीधे अग्ने स इदं जुषस्व। स नः स्तिपा उत भवा तनूपा दात्रं रक्षस्व यदिदं ते अस्मे' (ऋ० सं०

१ क. ख. घ. झ. ट. स्त्यायजाः; ठ. ड. स्तियजाः. २ ग. ज. सहनेन; च. अथवा हसनेन° संहनने. ३ ग. ज. 'अथवा' नास्ति; च. °न्ति। °हिम° अथवा. ४ क. ख. ग. ज. घ. झ. ट. ठ. ड. °भावन च ता°; च. °भावेन च ता°. ५ ग. °वन्ति। वृषा° ७९। ६ ग. ज. °षभः। शं°; घ. झ. ट. °षभः ०मधुपेयो वराय। शं°। ७ घ. झ. ट. ठ. ड. ऐन्द्री। त्रिष्टुप्। हे°. ८ ग. ज. स्पन्द°. ९ ग. ज. स्तिप इ°; च. स्तिपे इ° पा. १० ग. ज. स्तिपाल°; च. स्तिपपाल° या. ११ ग. °यति। ८०। यं°. १२ ग. ज. °मीलितः। वाध्र्य°; च. °मीलितो; घ. झ. ट. °मीलितो वध्र्यश्वः ०दात्रं रक्षस्व यदिदं ते अस्मे। वाध्र्य°.

१० । ६९ । ४ )॥ वाध्र्यश्वस्य सुमित्रस्येयमार्षम् । त्रिष्टुप्[1] । हे अग्ने यं त्वां वध्र्यश्वः ईडितः[2] अपि सर्वैर्महर्षिभिः पूर्वं समीधे समेधितवान् उप-चीर्णवान् तं त्वामहमपि समिन्धे । को हि नाम त्वां न समिन्ध्यात् । सं त्वं समिध्यमानोऽस्माभिः इदं हविः जुषस्व संसेवस्व । किंच । य एवमस्माभिरीडयसे त्वं स नः स्तिपा कूप इव तनूपाः भव । कूपो हि तृष्णया आर्तान् पातॄन् पात्युदकसंप्रदानेन । किंच । दात्रं दानं रक्षस्व । कतमत् । यदिदं ते अस्मे अस्मासु । वर्तत इत्यर्थः । एवमत्राविरोधाच्छब्दसारूप्याच्च 'स्तिपाः कूपः' इत्युपपद्यते ।

'जवारु' इत्यस्य

'जवारु'[3] ( ७९ ) इत्यनवगतम् । 'जवमानरोहि'[4] इत्येवमाद्याः शब्दसमाधेयः[5] । 'तमिन्वे[6] इव समना[7] समानमभि क्रत्वा पुनती धीतिरश्याः । ससस्य चर्मन्नधि[8] चारु पृश्नेरग्रे रुप आरुपितं जबारु' ( ऋ० सं० ४ । ५ । ७ )॥ वामदेवस्यार्षम् । 'वैश्वानराय मीह्ळुषे सजोषाः' इत्येतस्मिन् वैश्वानरीये सूक्ते ( ऋ० सं० ४ । ५ ) । तम् एव हे यजमान त्वम् अभ्यश्याः प्राप्नुयाः वैश्वानरं सूर्यं समना समानयैव तदनुरूपयैव स्तुत्या समानम् । केन पुनरभ्यश्याः । क्रत्वा पुनती स्वात्मपवनसमर्थेन कर्मणा प्रज्ञानेन[9] वा । किंलक्षणः पुनर्यो वैश्वानरस्तमभ्यश्या इति[10] । ससस्य पृश्नेः स्वपनस्य द्युलोकस्य पृश्नेः प्राष्टवर्णस्य अधि उपरि । स्वपितीव हि द्युलोको निश्चलत्वात् । चर्मन् चरणार्थम् । कथं नाम सौर्येण प्रकाशेन जनाश्चरेयुरित्यनेनाभिप्रायेण । चारु दीप्तिमत् । अग्रे पूर्वसर्गादौ रुप आरुपितम् । 'रिपः' इति विपरिणामः । भूम्या इत्यर्थः । आरुपितम् आरोपितं देवैः जवारु मण्डलं यस्य तं त्वमभ्यश्याः । 'इह वा आदित्य आसीत्तमाभ्यां परिगृह्योपरिष्टाच्चासां प्रजानां न्यदधुः' ( मैत्रा० सं० २ । २ । २ ) इति[11] विज्ञायते । एवमत्र 'जवारु आदित्यमण्डलम्' उच्यते । तद्धि जवमानं गच्छन्नभसो

---

१ क. ख. घ. झ. ठ ढ. ड. त्रिष्टुप् । आग्नेयी । हे°; च. त्रिष्टुप् । हे° आग्नेयी. २ ग. ज. ईरित; च. ईरित° डि. ३ घ. च. ट. ठ. जवारु. ४ ड. जबमा°. ५ ग. °धयः । ८१ । तमि°. ६ ट. °न्वे १ व; ठ. ड. °न्वे २ व. ७ ग. समना समानं॰ जवारु । वाम°; घ. झ. ट. समना॰ रुप आरुपितं जवारु । वाम°. ८ घ. झ. ट. ठ. जवारु. ९ घ. झ. ट. ठ ड प्रज्ञातेन. १० क. ख. घ. झ. ट. ठ. ड. 'इति' नास्ति; च. इति. ११ ग. ज. °इति ह विज्ञा°.

मध्यमारोहति जायते वा । उदेतीत्यर्थः । जवमानमेव हि तत्र तत्रोदेति । 'जरमाणरोहि'[1] वा स्यात् । तद्धि जरयमाणं सर्वभूतानि रोहति । 'गरमाणरोहि वा' । तद्धि गरमाणं रसानारोहति ।

'जरूथम्' (८०) इत्यनवगतम् । 'गरूथम्' इत्यवगमः । 'गृणातेः' इति धातुनिर्देशः[2] । 'त्वामग्ने समिधानो वसिष्ठो[3] जरूथं हन्यक्षि राये पुरन्धिम् । पुरुणीथा जातवेदो जरस्व यूयं पात स्वस्तिभिः सदा नः' ( ऋ० सं० ७ । ९ । ६ ) ॥ वसिष्ठस्यार्षम्[4] । प्रातरनुवाकाश्विनयोः शस्यते ( आश्व० श्रौ० ४ । १३ ) । हे भगवन्नग्ने वसिष्ठः त्वां समिधानः संदीपयन् जरूथं स्तोत्रं हन् गमयन् त्वां प्रति । 'हन्ति सेधति' ( निघ० २ । १४ । १०९–११० ) इति गतिकर्मसु पठितम् । यक्षि यजति राये धनप्राप्त्यर्थम् । पुरन्धिं बहुकर्मतमम् । धनसंबन्धाद्वा बहुदातृतममिति स्यात् । यस्त्वं वसिष्ठेनैवमिज्यसे तं त्वां वयमपि यजाम एव । स त्वं पुरुनीथ[5] बहुस्तुत जातवेदः अस्माभिरिज्यमानो जरस्व जुषस्व एतद्धविरस्मत्प्रत्तम् । किंच । यूयम् अस्मान् पात रक्षत । एकस्यैव पूजनार्थे बहुवचनम् । स्वस्तिभिः स्वस्त्ययनैराशीःप्रयोगैः पात नः सदा । नित्यमेवेत्यर्थः । एवमत्र जरतेः स्तुत्यर्थस्य शब्दसारूप्यादर्थाविरोधाच्च 'जरूथं स्तोत्रम्' उपपद्यते ।

'जरूथम्' इत्यस्य

'कुलिशम्' (८१) इत्यनवगतम् । 'वज्रनाम' इत्यभिधेयवचनम् । 'कूलशातनः' इति शब्दसमाधिः[6] । अहन्वृत्रं वृत्रतरं[7] व्यंसमिन्द्रो वज्रेण महता वधेन । स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः' ( ऋ० सं० १ । ३२ । ५ ) ॥ ऐन्द्री । त्रिष्टुप्[8] । हिरण्यस्तूपस्यार्षम् । अग्निष्टोमे निष्केवल्ये शस्यते ( आश्व० श्रौ० ५ । १५ ) । अहन् हतवान् हन्ति

'कुलिशम्' इत्यस्य

१ च. °रोहि तंतं वा°. २ ग. 'देशः । ८२ । त्वा°. ३ ग. ज. वसिष्ठः । वसि°; घ. झ. ट. वसिष्ठो जरूथं० सदा नः । वसि°. ४ क. ख. घ. झ. ट. ठ. ड. °स्यार्षम् । आग्नेयी । त्रिष्टुप् । प्रात°; च. °स्यार्षम् ४ । प्रात° अग्नेयी । त्रिष्टुप्. ५ घ. झ. ट. ठ. ड. °नीथा. ६ ग. °माधिः ।८३ अह°. ७ ग. ज. °तरं व्यंसं । हिर°; च. °तरं० पपृक्पृथिव्याः । ऐन्द्री; घ. झ. ट. °तरं व्यंसं० उपपृक्पृथिव्याः । ऐन्द्री. ८ ग. ज. 'ऐन्द्री । त्रिष्टुप्' नास्ति.

या इन्द्रः वृत्रं मेघम् । 'वृत्रतरम्' इति तस्यैव वा विशेषणम् । अन्यो वा वृत्रतरो यस्तमपि हन्ति । कथं पुनर्हन्तीति । व्यंसं विच्छिन्नसंधिबन्धनं कृत्वा । केन पुनर्हन्तीति । वज्रेण महता प्रहारेण । किंच । स्कन्धांसीव वृक्षशाखा इव कुलिशेन कूलशातनेन वज्रेण विवृक्णानि । स एवम् अहिः अगमनो मेघः छिद्यमानः अस्याः पृथिव्याः उपपृक् उपपर्चनः संपर्कस्य कर्ता भूत्वोदकभावेनास्यामेव पृथिव्याम् अहिः शयते अगमयत् । अवस्थानमात्रमेव स्वप्नोऽभिमतः । एवमत्र वधसंबन्धात् 'कुलिशो वज्रः' इत्युपपद्यते[2] ।

'तुञ्जे' ( ८२ ) इत्यनवगतम् । 'तुञ्जतेः' दानार्थस्येति निर्वचनम् । 'तुञ्जनम्' इति [3]स्यात्[4] ॥ १७ ॥

---

**तुञ्जेतुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः । न विन्धे अस्य सुष्टुतिम् ( ऋ० सं० १ । ७ । ७ ) ॥ दाने दाने य उत्तरे स्तोमा इन्द्रस्य वज्रिणो नास्य तैर्विन्दामि समाप्तिं स्तुतेर्बर्हणा परिबर्हणा । बृहच्छ्रवा असुरो बर्हणा कृत इत्यपि निगमो भवति ॥ १८ ॥**

---

'तुञ्जेतुञ्जे[6] य उत्तरे' । मधुच्छन्दस आर्षम् । ऐन्द्री[7] । गायत्री । 'तुञ्जे' इत्यस्य प्रातःसवने ब्राह्मणाच्छंसिन आवापे विनियुक्ता । तुञ्जे तुञ्जे दाने दाने उत्तरोत्तरे दानपरितुष्टेन मया स्तोमा इन्द्रस्य वज्रिणः क्रियन्त एतैः स्तोमैरसौ योग्यः स्तोतुमिति । किं तेषाम् । न विन्धे न अस्य सर्वैरापि तैर्विन्दामि सुष्टुतिं समाप्तिं स्तुतेरित्यर्थः । यावत्य एव स्तुतय [8]उपादीयन्ते ताः सर्वा एवेन्द्रं प्राप्य न्यूना भवन्तीत्यभिप्रायः । एवमत्र स्तोमसंबन्धात् 'तुञ्जे'शब्दो दानपर्यायवचनस्तुञ्जतेश्च दानार्थस्य ( धा० १० । ३३ ) दर्शनात् ।

---

१ ग. ज. 'हिरयनो°. २ ठ. ड. °घते । इति निरुक्तटीकायां निघण्टपञ्चकेन सह निरुक्तैकादशाध्याये सप्तदशः खण्डः। तुञ्जे'. ३ च यावत्. ४ क. ख. (२) १७; ग. २० । ८४; इतरेष्वङ्को नास्ति. ५ क. ख. ३ (१८); छ. त. २१; द. ३. ६ घ झ. ट. °तुञ्जे य उत्तरे० सुष्टुतिम्। मधु'; च. °तुञ्जे सुष्टुतिं । इति मधु°; ठ. ड. तुञ्जेतुञ्जे इति. ७ ग. ज. 'ऐन्द्री । गायत्री' नास्ति. ८ ड. उदीर्यन्ते.

'बर्हणा' (८३) इत्यनवगतम् । 'परिबर्हणा' इत्युपसर्गाध्याहारेणार्थप्रतीतिः । परिबर्हणा परिवृद्धिः परिहिंसा वा । 'अर्चा दिवे बृहते शूष्यं[१] वचः स्वक्षत्रं यस्य धृषतो धृषन्मनः । बृहच्छ्रवा असुरो बर्हणा कृतः पुरो हरिभ्यां वृषभो रथो हि षः' (ऋ० सं० १। ५४। ३)॥ सव्यस्त्रमापन्नस्यास्येन्द्रस्यार्षम्[३] । जगती । ऐन्द्री[४] । चतुर्थे पादे रथः हि सः[५] इति पदानि । हे स्तोतः अर्च प्रोच्चारय इन्द्राय दिवे द्योतनवते बृहते च महते शूष्यं धनसंयुक्तं[६] बलकृतिसंयुक्तं वा वचः । किंलक्षणायेन्द्रायार्चेति । स्वक्षत्रं यस्य स्वमेव क्षत्रं धनं बलं वा यस्य । न कदाचिदपि यः परकीयमाकाङ्क्षतीत्यभिप्रायः । किंच । यस्य धृषतो धर्षयतः शत्रून् धृषत् एव धृष्टं मनो भवति । तदर्थमर्चेति । किंच । येनेन्द्रेण बृहच्छ्रवाः बृहद्घोषः असुरः मेघो वा बर्हणा परिवृध्या[७] परिवृद्धेन वधेन परिहिंसया वा पुरः अर्वाक् हरिभ्यां प्राप्तेः । नैव तावदश्वौ हरी रथे युक्तौ तमसुरं प्राप्नुतः अथेन्द्रेण शीघ्रास्त्रत्वात् दूरपातित्वाच्च वृषभः वर्षिता कृतः । अथ च तावत् रथो हि षः । रंहणो हि शीघ्रः स मेघः । तथा हि येनेन्द्रेण पुरैव हरिभ्यां प्राप्तेः प्रहारैर्जर्जरीकृत्य[८] वर्षिता कृतो मेघस्तमभ्यर्च । एवमत्र शब्दसारूप्यादसुरसंबन्धाच्च 'बर्हणा परिबर्हणा' इत्युपपद्यते ।

'ततनुष्टिः' (८४) इत्यनवगतम् । 'तितनिषुः' अयं स्यात्[९] ॥१८॥

---

यो अस्मै घ्रंस उत वा य ऊधनि सोमं सुनोति भवति द्युमाँ अह । अपाप शक्रस्ततनुष्टिमूहति तनूशुभ्रं मघवा यः कवासखः (ऋ० सं० ५। ३४। ३)॥ घ्रंस इत्यहर्नाम

---

१ ग. वा । ८५ । अर्चा°. २ ग. ज. वचः । सव्य°; व. झ. ट. वचः° वृषभो रथो हि षः । सव्य°. ३ ग. ज. °न्नस्येन्द्रमार्षम्. ४ ग. ज. 'ऐन्द्री' नास्ति. ५ ग. ज. पदे रथं हिं स°; च. पादे रथः हिं स°. ६ च. ज. °युक्तं वा 'बलकृतिसंयुक्तं. ७ ग. ज. 'परिवृध्या' नास्ति. ८ च. प्रहरै°. ९ क. ख. २ (१८); ग. २१। ८६; ठ. ड. °स्यात् । इति निरुक्तटीकायां-षष्ठाध्याये अष्टादशः खण्डः; इतरेष्वङ्को नास्ति.

ग्रस्यन्तेऽस्मिन्नसा गोरूध उद्धततरं भवत्युपोन्नद्धमिति वा स्नेहानुप्रदानसामान्याद्रात्रिरप्यूध उच्यते स योऽस्मा अहन्यापि वा रात्रौ सोमं सुनोति भवति ह द्योतनवानपोहत्यपोहति शक्रस्तितनिषुं धर्मसंतानादपेतमलंकरिष्णुमयज्वानं तनूशुभ्रं तनूशोभयितारं मघवा यः कवासखो यस्य कपूयाः सखायः । न्याविध्यदिलीबिशस्य दृह्ळा वि शृङ्गिणमभिनच्छुष्णमिन्द्रः । निरविध्यदिलाविलशयस्य दृह्ळानि व्यभिनच्छृङ्गिणं शुष्णमिन्द्रः ॥ १९ ॥

---

'यो अस्मै घ्रंस० उत वा यः' । प्राजापत्यस्य संवरणस्यार्षम् । ऐन्द्री [6] । जगती । यो अस्मै इन्द्राय घ्रंसे अहनि अपि वा य ऊधनि रात्रौ सोमं सुनोति अभिषुणोति । नित्यकालमेव यः सोमाभिषवे प्रयतत इत्यर्थः । तस्य किमिति । स एव निश्चयेन द्युमान् द्योतनवान् भवति । अथ पुनरितो यो विपरीतो भवति पूर्वैश्च पूर्वतरैश्च धर्मसंतानात् अनुष्ठितात् अपेतः तमलं कर्मभिरित्येवं वादिनम् अलंकरिष्णुम् अयज्वानम् अयजनशीलम् आत्ममण्डनपरं वा विषयोपभोगपरतया स्ववित्ततितनिषुम् अनेकैः प्रकारैर्यो वित्तानि तनितुमिच्छति तम् अश्रद्दधानं धर्मे शक्रः शक्त इन्द्रः अपोहत्यपोहति । उपसर्गाभ्यासदर्शनादूहतेरप्यभ्यास आदरार्थं कृतः । पुनःपुनरपोहति नाशयतीत्यर्थः । तनूशुभ्रं शरीरशोभयितारम् । ततनुष्टेरेवैतद्विशेषणम् । यश्चान्योऽपि कवासखः कपूयसखो भवति तमप्यपोहति मघवा धनस्वामी इन्द्रः । अवश्यंभावी तस्य हि विनाश इत्यभिप्रायः । केचित्तु कवासखशब्दं तनूशुभ्रविशेषणमेव वर्णयन्ति । इतरो विषयप्रधानोऽपि भूत्वा साधुसंपर्कात्कदाचित्प्रपद्येत । इतरस्त्वसाधुसंपर्कादत्यन्तनष्ट एवेत्यनेनाभिप्रायेण । एवमत्र 'ततनुष्टि' शब्देन विषयोपभोगप्रधान उच्यते शब्दार्थाविरोधादित्युपपत्तिः ।

'ततनुष्टिः' इत्यस्य

१ छ. त. द. दृल्हा. २ छ. त. द. न. भ. दृल्हानि. ३ क. ख. ४ (१९); छ. त. २२; द. ४. ४ घ. झ. ट. यः० कवासखः । प्रा°; च. ठ. ड. यः कवासख इति सर्वा ऋग्दीयते. ५ च. इति प्राजा°. ६ ग. 'ऐन्द्री जगती' नास्ति. ७ ग. ज. पुनरतो. ८ क. ख. °शुभ्रं वि°; च. °शुभ्रं वि° भ्र. ९ ग. ज. °त्मत्यापद्येत.

'ग्रंस इत्यहर्नाम । ग्रस्यन्तेऽस्मिन्रसाः' सूर्येण । 'गोरूव उद्धततरम्' इति शब्दसारूप्यप्रसक्तम् । तद्ध्यन्येभ्योऽङ्गेभ्यः 'उद्धततरं भवति', 'उपोन्नद्धमिति वा' । तद्धि विज्ञायते केनचिदुपश्लिष्य गोरुदरे नद्धमिति[1] । तत्सामान्यात् 'रात्रिरप्यूध उच्यते' । सापि ह्यवश्यायानोषधिवनस्पतिस्नेहकान् दधाति ।

'इलीबिशः' (८५) इत्येतदेकपदमनवगतम् । 'इलाबिलशयः'[3] इत्यवगमः । 'मेघः' अभिधेयः । स हि इलाहेतोरु[4]-

'इलीबिशस्य' इत्यस्य

दकस्यात्मीयानि निर्गमनबिलानि[5] संरुध्य शेते । तस्यैव वा बिलेष्विलाहेतुरुदकं[6] शेत इति इलीबिशः[7] ।

'न्याविध्यदिलीबिशस्य दृह्ळा वि शृङ्गिणमभिनच्छुष्णमिन्द्रः । यावत्तरो मघवन्यावदोजो वज्रेण शत्रुमवधीः पृतन्युम्' (ऋ० सं० १ । ३३ । १२) ॥ हिरण्यस्तूपस्यार्षम् । ऐन्द्री । त्रिष्टुप्[9] । गोसवविवधयोर्निष्केवल्ये शस्यते (आश्व० श्रौ० ९ । ८) । न्यविध्यत्[10] निरताडयत् इलीबिशस्य[11] मेघस्य दृह्ळानि[12] दृढानि दुर्भेदानि उदकसंरोधक्षमाणि स्थानानि । न च केवलमेताडयदेव[13] । किं तर्हि । वि शृङ्गिणमभिनत् शृङ्गिणं शिखरवन्तं दीप्तिमन्तं वा विद्युद्भिः शुष्णं बलवन्तं मेघम्[14] । इन्द्रः एवं स्तूयमानः प्रत्यक्षीभूतः । प्रत्यक्षकृतः उत्तरोऽर्धर्चः । हे मघवन् यावत्तरः यावद्बलमेतस्मिन्मेघेऽस्ति तावदेनं जहि । यावच्च तव व्यथनसमर्थम् ओजो बलमस्ति या ते शक्तिस्तयैनं वज्रेण शत्रुं शातयितव्यम् अवधीः ।

---

१ ग. ज. नद्धं भवति. २ क. ख. ट. 'बिशस्येत्ये'; घ. च. झ. ठ. ड. °विशस्येत्ये°. ३ घ. झ. °विलश°; ठ. इळाबिळश°; ड. इळाबिल°. ४ च. ठ. ड. इळाहे°. ५ घ. झ. °नविलानि. ६ घ. झ. विले°; ठ. ड. बिलेष्विळाहे°. ७ ग. बिशः।८। न्या°; घ. झ. ट. ड. °विशः. ८ ग. ज. °बिशस्य । हिर°; घ. झ. ट. °विशस्य० मवधीः पृतन्युम् । हिर°; च. ठ. ड. °दिलीविशस्य (ठ. ड. °दिळीवि°) दृह्ळेत्यादि सर्वा ऋग्दीयते. ९ ग. ज. 'ऐन्द्री त्रिष्टुप्' नास्ति. १० क. ख. ग. ज. न्यावि°. ११ घ. झ. ट. ठ. ड. °विशस्य. १२ क. ख. च. दृढा; ग. ज. 'दृळ्हा' नास्ति; घ. झ. दृल्हा. १३ क. ख. घ. झ. ट. ठ. ड. केवलमेतावदेव. १४ क. ख. घ. झ. ट. ड. मेवम् इन्द्र°; ग. च. ज. मेघमिन्द्र°.

जदीत्यर्थः । पृतन्युं पृतनामिच्छन्तम् । एवमत्र 'इलीविशो मेवः' शब्द सारूप्यादर्थाविरोधाच्च ।

'क्रियेधा' इत्यस्य व्युत्पत्तिः

'क्रियेधाः' (८६) इत्यनवगतम् । 'कियद्धाः क्रममाणधा वा' इत्यवगमः । कियदप्युदकमपरिमाणं धोः धारयतीति कियद्धा मेघः । क्रममाणो वा धारयतीति क्रममाणधा मेघ एव ॥ १९ ॥ ५

---

**अस्मा इदु प्र भरा तूतुंजानो वृत्राय वज्रमीशानः क्रियेधाः । गोर्न पर्व वि रदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै (ऋ० सं० १ । ६१ । १२) ॥ अस्मै प्रहर तूर्णं त्वरमाणो वृत्राय वज्रमीशानः क्रियेधाः कियद्धा इति वा क्रममाणधा इति वा गोरिव पर्वाणि विरद मेघस्येष्यन्नर्णांस्यपां चरणाय भूमिभ्राम्यतेः । भूमिरस्यृषिकृन्मर्त्यानामित्यपि निगमो भवति विष्पितो विप्राप्तः । पारं नो अस्य विष्पितस्य पर्षन्नित्यपि निगमो भवति ॥ २० ॥** १०

--- १५

व्युत्पत्तिश्च

अस्मा इदु प्र भरा । नोधा नाम गौतमस्तस्यार्षम् । त्रिष्टुप् । ऐन्द्री । आहीनिकेष्वहःस्वहीनसूक्ते विनियुक्ता । (आश्व० श्रौ० ७ । ४) । हे इन्द्र यः एष वृत्रः कियदप्युदकमपरिमाणं धारयति क्रममाणो वा धारयति अस्मै त्वं तूतुजानः त्वरमाणो वज्रं प्रभर । ईशानः ईश्वरो यस्मात्त्वमस्माकं तस्मादेवमुच्यसे । किंच । २० प्रहृत्य वज्रं वज्रप्रहारसंमूढस्यास्य मेघस्य गोर्न पर्व गोरिव पर्वाणि विरद विदारय । यथा गोविकर्ता गोः पर्वाणि विरदेत् विच्छिन्द्यात् एवं त्वमप्येतं मेघमवयवशो विरद विच्छिन्द्धि । कथं च पुनर्विरदेति । तिरश्चा वज्रेण तिर्यग्गामिना । केन पुनरर्थेन विरदेति । इष्यन्नर्णांसि उदकानीच्छन् चरध्यै चरणाय अपां प्रजाभ्यो दातुम् । एवमस्माद्विशकलीकृतादापो निश्चरिष्यन्तीत्यनेनार्थेन विरद । एवमत्र 'क्रियेधाः मेघः' शब्दसारूप्यादर्थाविरोधाच्च । २५

१ घ. झ. ट. ठ ड. 'विशो. २ क. ख. झ. 'धाः' नास्ति. ३ क. ख. ४ (१९); ग. ८८; च. ५; ठ. ड. 'एव । इति निरुक्तटीकायां षष्ठाध्याये एकोनविंशतिः खण्डः; इतरेष्वङ्को नास्ति. ४ क. ख. ५ (२०); छ. त. २३; द. ५. ५ घ. झ. ट. भरा तू० चरध्यै । नोधा°; च. सर्वा ऋक् पठ्यते; ठ. ड. भरेति । नोधा. ६ ग. ज. 'त्रिष्टुप् । ऐन्द्री' नास्ति. ७ क. ख. घ. झ. ट. ठ. ड. 'यः' नास्ति. ८ ठ. ड. प्रभर प्रहर. ९ च. °प्रहर°. १० ग. ज. 'वि' नास्ति. ३२

'क्रियेधा इन्द्रः' इत्येवमेके मन्यन्ते। स हि यदपि न ज्ञायते कियत्परिमाणमेतद्बलमिति तदपि धारयति। क्रममाणो वा शत्रुबलं धारयतीति क्रियेधाः। एवं सतीयं योजना। यस्मादीशानस्त्वं क्रियेधाश्च तस्मात्प्रहर वज्रमिति।

' क्रियेधाः ' इत्यस्येन्द्रार्थे ऋचोऽन्योऽर्थः

' भृमिः ' (८७) इत्यनवगतम्। 'भ्रमणम्' इत्यवगमः। 'भ्राम्यतेः' इति निर्वचनम्। 'अग्निः' अभिधेयः। ' इमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरात्। आपिः पिता प्रमतिः सोम्यानां भृमिरस्यृषिकृन्मर्त्यानाम्' ( ऋ० सं० १।३१।१६ )॥ हिरण्यस्तूपस्यार्षम्।

' भृमिः ' इत्यस्य

प्रातरनुवाकाश्विनयोः शस्यते ( आश्व० श्रौ० ४।१३ )। हे भगवन्नग्ने इमां शरणिं मरणलक्षणां हिंसाम् इमां संसृतिं वा मीमृषो नः मार्जयस्व नाशयस्व नः। कतमां शरणिम्। इममध्वानं यमेतं संसाराध्वानम् अगाम गतवन्तो वयममुष्माल्लोकादिमं लोकम्। अस्मास्वेतां संसारहिंसामेतां वा संसारसृतिमेतम् आजवं जैवीभावं त्वमस्माकं मार्जयस्व। कस्मात्पुनरेवमुच्यसे। इतो यस्मात् आपिः त्वमस्माकम् आप्तः। अथवा। व्यापयिता कृत्स्नस्य जगतो महिम्ना। पिता च रक्षिता सोम्यानां सोमसंपादिनां मनुष्याणाम्। प्रमतिश्च प्रकृष्टमतिः भृमिश्च त्वमेव संसारे भ्रामयिता। पञ्चाग्निविद्योक्तेन प्रक्रमेण त्वदधीन एव संसारो मोक्षश्च। ऋषिकृच्च दर्शनकर्तासि त्वम्। त्वदधीनमेव दर्शनं मर्त्यानां मनुष्याणाम्। सर्वविज्ञानप्रकाशेनानुगृह्यास्मान्मोचयस्वास्मात्संसारादित्यभिप्रायः। देवयानेनैव पथा गमय मा पितृयाणेनेति। एवमत्र ' भृमिः अग्निः ' अर्थाविरोधात्।

---

१ ग. °धेयः। ८९। इमा°. २ ग. ज. शरणिं। हिर°; घ. झ. ट. शरणिं मीमृ० स्यृषिकृन्मर्त्यानाम्। हिर°. ३ ग. ज. शरणिमिमां स्मृतिं वा मी°. ४ ग. ज. आगाम. ५ च. जीवी° ज. ६ ग. ज. घ. झ. ट. ठ. ड. °याणेनेति.

'विष्पितः' इत्यस्य

'विष्पितः' (८८) इत्यनवगतम्। विस्तीर्ण इतश्चेतश्च सर्वतो यः प्राप्तः सः विष्पितः । 'इमे दिवो अनिमिषा पृथिव्याश्चिकित्वांसो अचेतसं नयन्ति । प्रव्राजे चिन्नद्यो गाधमस्ति पारं नो अस्य विष्पितस्य पर्षन्' (ऋ० सं० ७।६०।७)॥ 'यदद्य सूर्य ब्रवोऽनागाः' इत्येतस्मिन् सूक्ते (ऋ० सं० ७। ६०)। अस्य पुनः सूक्तस्य प्रथमा सौरीति प्रतिजज्ञे शौनकोऽन्याः सर्वा मैत्रावरुण्य इति । 'इमे' इति द्वयोरेव मित्रावरुणयोः पूजनार्थे बहुवचनम् । अर्यमा वा तृतीयः स्यात्। असावपि ह्यस्मिन् सूक्ते श्रूयते। शौनकाभिप्रायस्त्वेवं सति परीक्ष्यः। इमे मित्रावरुणार्यमाणो दिव एत्य अनिमिषाः आदरवन्तः पृथिव्याः। पृथिवीलोकादित्यर्थः । चिकित्वांसः सुकृतदुष्कृतानि कर्माणि प्राणिनां जानन्तः अचेतसम् अचेतयमानं प्राणिनं कर्मानुरूपेणामुं लोकं नयन्ति । यत एवमतस्तानहं ब्रवीमि । प्रव्राजे प्रकृष्टे एतस्मिन् व्रजने मरणाख्ये मृत्युकाले उपस्थिते यदि गाधं संसारगाहनसमर्थं कर्म विज्ञानं वा अस्त्यस्माकं ततोऽस्य विष्पितस्य विप्राप्तस्य संसाराध्वनो नद्या इव पारं पर्षन्। पारयन्त्वित्यर्थः । एवमत्र शब्दसारूप्यादर्थाविरोधाच्च 'विष्पितो विप्राप्तः' संसाराध्वेत्युपपद्यते ।

'तुरीपम्' (८९) इत्यनवगतम्। 'तूर्णापि' इत्यवगमः। 'उदकम्' इत्यभिधेयम् । तद्धि तूर्णमाप्नोति ॥ २० ॥

---

**तन्नस्तुरीपमद्भुतं पुरु वारं पुरु त्मना । त्वष्टा पोषाय वि ष्यतु राये नाभा नो अस्मयुः (ऋ० सं० १।१४२।१०)॥ तन्नस्तूर्णापि महत्संभृतमात्मना त्वष्टा धनस्य पोषाय विष्यत्वि-**

---

१ क. ख. °धात् विशेष्यते । विष्पित°; च. °धात् । विशिष्यते विष्पित°. २ ग. °ष्पितः । २३ । इमे°. ३ ग. ज. अनिमिषा । यदद्य°; घ. झ. ट. अनिमि० तस्य पर्षन् । यदद्य°. ४ क. ख. घ. झ. ट. ठ. ६ पूजार्थे. ५ ग. च. ज. °दुःकृ°. ६ च. प्राणिनां. ७ ठ. ड. °द्यते । २० । इति निरुक्तटीकायां षष्ठाध्याये विंशतिः खण्डः । तुरी°. ८ क. ख. घ. झ. ट. ठ. ड. 'इति' नास्ति. ९ क. ख. ५ (२०); ग. २४ । ९१; इतरेष्वङ्को नास्ति.

त्यस्मयुरस्मान् कामयमानो रास्पिनो रास्पी रपतेर्वा रसतेर्वा। रास्पिनस्यायोरित्यपि निगमो भवत्यृञ्जतिः प्रसाधनकर्मा। आ व ऋञ्जस ऊर्जा व्युष्टिष्वित्यपि भवत्यृजुरित्यप्यस्य भवति। ऋजनीती नो वरुण इत्यपि निगमो भवति प्रतद्वसू प्राप्तवसू। ५ हरी इन्द्र प्रतद्वसू अभि स्वरेत्यपि निगमो भवति ॥ २१ ॥

---

तन्नस्तुरीपमद्भुतं पुरुवारमिति निगमः। दीर्घतमस आर्षम्। आप्रीसूक्ते। तन्नस्तुरीपं तदस्माकं तुरीपमुदकम् अद्भुतं च। महत् इत्यर्थः। 'अद्भुतः बर्हिष्ठः' इति महन्नामसु पठितम् (निघ० १० ३।३)। पुरु वारं च बहु देशान्तरमावृणोत्युदकम्। पुरु त्मना बहु आत्मना। यदेवंलक्षणमुदकं तदस्माकं नाभा नाभौ मध्ये त्वष्टा विष्यतु विमुञ्चतु वर्षभावेन अस्मयुः अस्माननुग्रहीतुं कामयमानो राये पोषाय। धनपोषायेत्यर्थः। वर्षे हि सति पशवः पुष्यन्ति। अथवा 'नाभानः' इत्येतत्त्वष्टुरेव १५ विशेषणं स्यात्। 'नाभानः' न अदीप्यमानः। किं तर्हि। दीप्यमान एव विष्यतु। एवमत्र माध्यमिकस्त्वष्टेति विष्यत्वित्यनेन संबन्धात् 'तुरीपमुदकम्' इत्युपपद्यते।

(margin: 'तुरीपम्' इत्यस्य)

'रास्पी' (९०) इत्यनवगतम्। 'रापी' इति वा स्यात् 'रासी' इति वा। 'रपतेर्वा' शब्दार्थस्य 'रसतेर्वा' शब्दार्थस्यैव। २० रपणशीलो वा रसनशीलो वा यः स रास्पी। 'उत त्या मे यशसा

---

१ त. °वति। ऋञ्ज°. २ छ. त. द. °कर्म ऋजुरित्य°. ३ क. ख. ६ (२१); छ. त. २४; द. ६. ४ घ. झ. ट. °रीपमद्भुतं ० नाभा नो अस्मयुः। दीर्घ°; ठ. ड. तुरीपमिति। दीर्घ°. ५ क. ख. घ. झ. ट. ठ. ड. आर्षम्। त्वाष्ट्री। अनुष्टुप्। आ°; च. आर्षम्॰। आ° त्वाष्ट्री। अनुष्टुप्. ६ ग. ज. 'बहु आत्मना' नास्ति. ७ घ. झ. ट. ठ. ड. इत्येवं त्व°. ८ क. ख. घ. झ. ट. ठ. ड. रास्पिन इत्यन°. ९ घ. झ. ट. ठ ड. रास्पीति. १० ग. ज. 'शब्दार्थस्य रसतेर्वा' नास्ति; च. रपतेर्वा॰ शब्दा° शब्दार्थस्य रसतेर्वा. ११ ग. रास्री। १२। उत°. २८ १२ ग. ज. यशसा। कक्षी'; घ. झ. ट. यशसा० रास्पिनस्यायोः। कक्षी°.

श्वेतनाये व्यन्ता पान्तौशिजो हुवध्यै । प्र वो नपातमपां कृणुध्वं प्र मातरा रास्पिनस्यायोः ' ( ऋ० सं० १ । १२२ । ४ ) ॥ कक्षीवत आर्षम्[1] । वैश्वदेवे सूक्ते । उत

' रास्पी ' इत्यस्य

त्यौ अपि तौ अश्विनौ मे मम यशसा हविर्लक्षणेन धनेन तर्प्यमाणौ श्वेतनाया उषसः काले प्राप्ते व्यन्ता पान्ता वीतां भक्षयेतां पुरोडाशं पिबेतां सोमम् । यतो ब्रवीमि । हे औशिजो मेधाविन ऋत्विज आह्वयध्वं तावश्विनौ । किंच । ब्रवीमि[2] वः । कृणुध्वमपां नपातम् अप्येतस्मिन् कर्मणि भागिनम् । किंच । प्र मातरौ द्यावापृथिव्यावपि सर्वभूतनिर्मात्र्यौ कृणुतैव एतस्मिन् कर्मणि भागिन्यावित्येतच्च वः प्रब्रवीमि[3] । कं च पुनरर्थं पुरस्कृत्यैतत्कुरुध्वमिति । रास्पिनस्य आयोः । रपर्णशीलस्य[4] वा रसनशीलस्य वा शब्दकारिणो वर्षभूतस्योदकस्य प्राप्त्यर्थम् । अथवा । स्तोतुः पुत्रस्य प्राप्त्यर्थम् । ' आयवः ' इति हि[5] मनुष्यनाम । ( निघ० २ । ३ । १७ ) । एवमत्र ' रास्पि[6] 'शब्देनोदकं स्तोता वाभिधीयते शब्दसारूप्यादर्थाविरोधाच्च ।

' ऋञ्जतिः ( ९१ ) प्रसाधनकर्मा ' । ' भाऋजीकः ' इत्यनेन गतार्थतामस्य मन्यमानो भाष्यकारो निगमं नाधीते । केचित्त्वत्रैतं शेषमधीयते[7] । ' दूतं वो विश्ववेदसं[8] हव्यवाहममर्त्यम् । यजिष्ठमृञ्जसे गिरा ' ( ऋ० सं० ४ । ८ । १ ) ॥ वामदेवस्यार्षम्[9] । प्रातरनुवाकाश्विनयोः शस्यते ( आश्व० श्रौ० ४ । १३ ) । ' वः ' इत्येतस्य ' त्वम् ' इति विपरिणामः । हे यजमान त्वं दूतं विश्ववेदसं सर्वप्रज्ञानं हव्यवाहं हविषां वोढारम् अमर्त्यम् अमरणधर्माणं याजिष्ठं यष्टृतमम् ऋञ्जसे प्रसाधयसि गिरा । स्तुत्येत्यर्थः । एवमत्र ' ऋञ्जतिः प्रसाधनकर्मा ' । दूतसंबन्धाच्च ।

ऋञ्जसे

१ क. ख. घ. झ. ट. आर्षम् । त्रिष्टुप् । वै°; च आर्षम् । ˅ वै° त्रिष्टुप्. २ क. ख. घ. झ. ट. ठ. ड. प्रब्रवीमि. ३ क. ख. घ. झ. ट. ठ. ड. ' प्र ' नास्ति. ४ च. रपनशी°ण. ५ क. ख. घ. झ. ट. ठ. ड. 'हि' नास्ति. ६ क. ख. घ. झ. ट. ठ. ड. रास्पिनशब्दे°. ७ ग. °यते । ९३ । दूतं°. ८ ग. ज. °वेदसं । वाम°; घ. झ. ट. °वेदसं० मृञ्जसे गिरा । वाम°. ९ क. ख. घ. झ. ट. ठ. ड. °स्यार्षम् । गायत्री । आग्नेयी । प्रात°; च. °स्यार्षम् । ˅ प्रात° गायत्र्याग्नेयी.

'ऋजुः' (९२) इत्यप्यस्य' एव ऋजुतेः 'भवति'।

ऋजुः 'ऋजुनीती नो वरुणो मित्रो नयतु विद्वान्। अर्यमा देवैः सजोषाः' (ऋ० सं० १। ९०। १)॥ गोतमस्यार्षम्। वैश्वदेवसूक्ते।

५ गवामयनस्य द्वितीयेऽहनि शस्यते मैत्रावरुणस्य शस्त्रे (आश्व० श्रौ० ७। २)। ऋजुनीती ऋजुनयनः ऋजुप्रज्ञो वा वरुणः अस्मानितो लोकादमुं लोकं कर्मफलप्राप्त्यर्थं नयतु। मित्रश्च विद्वान्नयतु। अर्यमा देवैः सह प्रीयमाणो नयतु। एवमत्र 'ऋजु' शब्देन प्रसिद्धं नयनं प्रसिद्धा वा मतिरुच्यते।

१० 'प्रतद्वसू' (९३) इत्यनवगतम्। 'प्राप्तवसू' इत्यवगमः।

प्रतद्वसू 'अश्वौ' अभिधेयौ। 'इह त्या सधमाद्या युजानः सोमपीतये। हरी इन्द्र प्रतद्वसू अभि स्वर' (ऋ० सं० ८। १३। २७)॥

नारदस्येयमार्षम्। उष्णिक्। महाव्रते औष्णिही तृचाशीतिस्तस्यां शस्यते १५ (ऐ० आ० ५। २। ५)। हे इन्द्र इह कर्मणि त्या तावश्वौ हरी प्रतद्वसू प्राप्तवसू प्राप्तधनौ। तयोर्हि ऋजीषं धानाश्च धनम्। स हि ताभ्यां यज्ञे भागः प्राप्तः। सधमाद्या सहमदनौ युंजानो युक्त्वा रथे ततः सोमपीतये सोमपानार्थम् अभिस्वर अभ्यागच्छास्मान् प्रति। एवमत्र 'हरी' इत्यनेन संबन्धात् 'प्रतद्वसू प्राप्तवसू' अश्वावित्युपपद्यते।

२० 'हिनोत' (९४) इत्यनवगतम्। 'प्रहिणुत' इत्यवगमः॥ २१॥

---

**हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानाम्। ऋतस्य योगे वि ष्यध्वमूधः श्रुष्टीवरीर्भूतनास्मभ्यमापः (ऋ० सं० १०। ३०। ११)॥ प्रहिणुत नोऽध्वरं देवयज्यायै प्रहिणुत ब्रह्म**

---

२५ १ म. ज. नः। गोत°; घ. झ. ट. नः० देवैः सजोषाः। गोत°. २ क. ख. घ. झ. ट. ठ. ड. °सूक्ते। गायत्री। गवा°; च. सूक्ते। ~ गवा° गायत्री. ३ ग. °धेयौ। ९४। इह°. ४ ग. ज. °माद्या। नार°; घ. झ. ट. °माद्या युजानः सो° प्रतद्वसू अभि स्वर। नार°. ५ च. युंजानो. ६ घ. झ. ट. ठ. ड. अस्मान्प्रत्य-भ्यागच्छ। एव°. ७ ठ. ड. °द्यते। इति निरुक्तटीकायां षष्ठाध्याये एकविंशतिः ३० खण्डः। हिनो°. ८ क. ख. ६ (२१); ग. २५ (९५); इतरेष्वङ्को नास्ति.

धनस्य सननाय ऋतस्य योगे यज्ञस्य योगे याज्ञे शकट इति वा शकटं शकृदितं भवति शनकैस्तकतीति वा शब्देन तकतीति वा । श्रुष्टीवरीर्भूतनास्मभ्यमापः । सुखवत्यो भवतास्मभ्यमापः। चोष्कूयमाण इन्द्र भूरि वामम् । ददिन्द्र बहु वननीयम् । एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् । व्युदस्यत्येधमानानहर्द्वेष्टिचसुन्वतः सुन्वतोऽभ्यादधात्युभयस्य राजा दिव्यस्य च पार्थिवस्य च चोष्कूयमाण इति चोष्कूयते-श्चर्करीतवृत्तं सुमत्स्वयमित्यर्थः । उप प्रागात्सुमन्मेऽधायि मन्म । उपप्रैतु मां स्वयं यन्मे मनोऽध्यायि यज्ञेनेत्याश्वमेधिको मन्त्रो दिविष्टिषु दिव एषणेषु । स्थूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु । स्थूरः समाश्रितमात्रो महान् भवत्यणुरनु स्थवीयांसमुपसर्गो लुप्तनामकरणो यथा संप्रति कुरुङ्गो राजा बभूव कुरुगमनाद्वा कुलगमनाद्वा कुरुः कृन्ततेः क्रूरमित्यप्यस्य भवति कुलं कुष्णातेर्विकुषितं भवति दूतो व्याख्यातो जिन्वतिः प्रीतिकर्मा । भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नय इत्यपि निगमो भवति ॥ २२ ॥

इति षष्ठाध्यायस्य चतुर्थः पादः ॥

---

हिनोता नो अध्वरम् । कवषस्येयमार्षम् । अपोनप्त्रीयासृक्षु शस्यते (आश्व० श्रौ० ५ । १ ) । हे ऋत्विजो हिनोत

'हिनोत' प्रहिणुत प्रगमयत प्रोत्सर्पयत एतम् अध्वरं यज्ञं देवयजनार्थम् । किंच । प्रहिणुत ब्रह्म स्तुत्याख्यं यथाशास्त्रदृष्टक्रमेण सनये लब्धये अस्माकं धनानाम् । किंच । ऋतस्य

---

१ त. स(श)कृदटं (दितं); द. शकृदटं. २ छ. त. द. सुखवतीर्भूत°.३ छ. त. द. 'सुखवत्यो भवतास्मभ्यमापः' नास्ति. ४ क. ख. छ. त. द. °द्विलुभ°. ५ छ. त. द. मां यन्मम मनो°. ६ क. ख. द. 'णेषु । ७ । स्थूरं°; छ. त. 'णेषु । २५ । स्थूरं. ७ छ. °सर्गो लुप्तो (प्त) नाम°; त. सर्ग (र्गो) लुप्तो (प्त) नाम°; द. °सर्गलुप्तो नाम°. ८ क. ख. ८ (२२); छ. त. २६; द. ८; ठ. अङ्को नास्ति. ९ ङ. थ. ध. 'इति०० पादः' नास्ति. १० क. ख. घ. झ. ट. °ध्वरं० भूतनास्मभ्यमापः । कव°; ठ. ड. हिनोता न इति । कव°. ११ ग. ज. आपोनप्त्री-सृक्षु; च. अपोनाप्त्रियाब्वृक्षु° सृ.

यज्ञस्य योगे संयोगे यदेतत् ऊधः इव सोमपूर्णमधिषवणचर्म वर्तते। अथवा। योगसंबन्धाच्छकटं योगः। तद्धि तर्हि युज्यते। तेनाधिषवणचर्मणा ऊधसेवाधस्तादवस्थितेनेति मन्यमानो भाष्यकारो ब्रवीति। 'याज्ञे शकटे इति'। यदेतद्यज्ञशकटस्याधस्तादुपरि वाधिषवणचर्म एतत् विष्यध्वं विमुञ्चध्वम्।
५ ग्रहचमसस्थाल्यादिषु यो निषेकः सोमस्यैतद्विमोचनमधिषवणचर्मोधसः। तद्धि सोम उत्सिच्यमाने श्लथीभवति यथेतरद्गोरूधो दुह्यमानायां गवि। एवमृत्विज उक्त्वाधुना ताः एव सोमसंमिश्रा अपो ब्रवीति। यूयमपि हे आप एभिर्ऋत्विग्भिरुत्सिच्यमानाः श्रुष्टीवरीः सुखवत्यो भूतन भवत अस्मभ्यम्। एवमत्र 'प्र'शब्देनार्थस्य सुतरां प्रकटता भवतीति भाष्यकारेण 'प्र'शब्दोऽ-
१० ध्याहृतः। 'अध्वरम्' इत्यनेन संबन्धाद्धिनोतेर्गत्यर्थत्वमुपपद्यते। प्रहिणुतेत्याप उच्यन्त इति केचित्।

'शकटं शक्रदितं भवति'। यदानड्वान्युक्तः शकृन्मुञ्चति तेन तदेति। 'शनकैस्तकतीति वा'। तद्धि भाराक्रान्तं शनकैर्गच्छति। 'शब्देन तकतीति वा'। तद्धि शब्देन गच्छति।

१५ 'चोष्कूयमाणः ( ९५ ) चोष्कूयते ( ९६ )' इत्येते अनवगते। धातुरेवायमप्रतीतः। एते सुबन्ततिङन्ते। तदनयोः पूर्वं सुबन्तमुत्तरं तिङन्तं दानार्थे वर्तमानस्य। चोष्कूयमाण इन्द्र भूरीति निगममुक्त्वा 'ददादिन्द्र' इति हि पूर्वस्य निर्वचनं चकार भाष्यकारः। व्युदसने वर्तमानस्योत्तरस्य 'चोष्कूयते विश इन्द्रो मनुष्यान्' इति
२० निगममुक्त्वा 'चोष्कूयते' इत्यस्य शब्दस्य 'व्युदस्यति' इति निर्वचनमाह भाष्यकारः। उभयत्रापि तु चोष्कूयतिशब्दश्चर्करीतवृत्तेन द्रष्टव्यः।

---

१ च. संयोगे; ठ. ड. 'संयोगे' नास्ति. २ घ. झ. ट. ठ. ड. °यदेनदूध इव°. ३ क. ख. घ. झ. ट. ठ. ड. तत्र; च. तर्हि° त्र. ४ च. °धस्तादेव स्थि°. ५ ग. ज. °तरं गोरू°; च. तरं गोरू° रत्. ६ ग. ज. 'ताः' नास्ति; च. एताः ७ क. ख. घ. झ. ट. ठ. ड. °तेनेतामिति. ८ ग. ज. 'एते' नास्ति; च. °तीतः।
२६ ~ सु° एते.

'चोष्कूयमाण इन्द्र भूरि वामम्' इत्यस्य शेषः[1] । 'नि सर्वसेन इषुधीँ[2]रसक्त समर्यो गा अजति यस्य वष्टि ।

'चोष्कूयमाणः' चोष्कूयमाण इन्द्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्ध[3]' ( ऋ० सं० १ । ३३ । ३ ) ॥

हिरण्यस्तूपस्यार्षम्[4] । उद्भिद्बलभिदोर्निष्केवल्ये शस्यते । न्यसक्त न्यबध्नात् इषुधीन् तूणान् पृष्ठे रथस्य सर्वसेनः समग्रसेन इन्द्रः । एवं तूणान् संनह्य बद्ध्वा गोधाङ्गुलित्रवान् भूत्वा समर्यो गा अजति । इषुभिर्मेघांश्छिन्दन् समजति समस्ताः क्षिपति गा अपः अर्य ईश्वर इन्द्रः । कस्मै समजति । यस्य वष्टि । यस्य राज्ञो देशे कुटुम्बिनो वा क्षेत्रे कामयते क्षेप्तुं तस्यैव क्षिपति । वर्षं प्रवर्तयत इत्यर्थः । एवं स्तूयमानः स इन्द्रः प्रत्यक्षीभूतः । यतः प्रत्यक्षकृत उत्तरोऽर्धर्चः । हे इन्द्र चोष्कूयमाणस्त्वं ददत्[5] एतदुक्तं जनेभ्यो भूरि बहु वामं वननीयं सस्यसंपत्करं शृणु यत्कुरुष्व । मा पणिर्भूः । मा वणिक्शीलोऽस्मान् प्रति मन्दोदकदाता कृपणो भूः । किं तर्हि । प्रवृद्धो[6]दक उन्नतचित्तोऽस्मान् प्रति बहूदकदाता भव । एवमत्र 'मा पणिर्भूर्[7]भूरि वामम्' इत्येभिः पदैः संबन्धात् 'चोष्कूयमाणः' इत्यस्य 'ददत्' इत्येवमर्थ उपपद्यते । एवमत्र दानार्थश्चोष्कूयतिः[8] ।

'एधमानद्विळ्भयस्य' इत्यत्र व्युदसनार्थः । अस्य शेषः[9] । 'शृण्वे वीर उग्रमुग्रं[10] दमायन्नन्यमन्यमतिनेनीयमानः ।

'चोष्कूयते' एधमानद्विळु[11]भयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान्' ( ऋ० सं० ६ । ४७ । १६ ) ॥

गर्गस्य बार्हस्पत्यस्येयमार्षम्[12] । 'दमायन्' इत्येकं पदम् । शृण्वे वीरः ।

१ ग. शेषः । ९६ । नि सर्व°. २ ग. ज. इषुधीन् । हिर°; घ. झ. ट. इषुधी-रसक्त०रस्मदधि प्रवृद्धः । हिर°. ३ क. ख. घ. झ. ट. च. प्रवृद्धः°. ४ क. ख. घ. झ. ट. ठ. ड. °स्यार्षम् । ऐन्द्री । त्रिष्टुप् । उद्भि°; च. °स्यार्षम् । ~ उद्भि-०ऐन्द्री । त्रिष्टुप् । ५ क. ख. घ. झ. ट. ठ. ड. ददद्दुदकं ज°; च. दददेतदुक्तं ज° दुदकं. ६ ग. ज. प्रवृद्धो दक्ष उन्न°. ७ ग. च. ज. पणिर्भूरि. ८ क. ख. ग. च. ज. घ. झ. °द्विलुभ°. ९ ग. शेषः । ९७ । शृण्वे°. १० ग. ज. °मुग्रं । शंयोर्बार्ह°; घ. झ. ट. °मुग्रं०इन्द्रो मनुष्यान् । गर्ग°. ११ क. ख. °द्विलुभ°; च. °द्विडुभ°. १२ क. ख. घ. झ. ट. ठ. ड. °मार्षम् । त्रिष्टुप् । ऐन्द्री । दमा°; च. मार्षम् । ~ दमा०त्रिष्टुप् । ऐन्द्री ।

अश्रौषमहं वीरमिन्द्रम् उग्रम् उद्गूर्णवज्रम् । आदरार्थो द्विरभ्यासः । आदरे चार्थभूयस्त्वम् । 'अभ्यासे भूयांसमर्थं मन्यन्ते' ( निरु० १० । ४२ । ) इति हि वक्ष्यति । अथवा । उग्रं शत्रुं प्रत्युद्गूर्णवज्रं दमायन् दमयितारं शत्रूणाम् । कथं पुनरश्रौषमिति । अन्यमन्यं देवताविशेषमतिशयेन स्वाभीष्टेनैव कामेन तुष्टूषया अमुष्मात्तुतात्कामान् प्राप्स्यथेत्येवं पुनः पुनर्निर्णीयमानः । किंलक्षणं पुनर्वीरमश्रौषमिति । एधमानद्विट् । एधमानान् दीप्यमानानपि द्वेष्टि असुन्वतः सोमाभिषवमकुर्वाणान् । अयज्वन इत्यर्थः। अत एवं वैपरीत्येन 'सुन्वतोऽभ्यादधाति' इत्यध्याजहार भाष्यकारः। क्व पुनरादधाति । 'सुकृतस्य लोके' इति सामर्थ्याद्गम्यते । ये हि सुन्वते त इष्टा इन्द्रस्य ये न सुन्वन्ति ते द्वेष्या इत्यभिप्रायः । उभयस्य राजा दिव्यस्य च धनस्येश्वरो मानुषस्य च । किंच । चोष्कूयते व्युदस्यति यो विशः एधमानानसुन्वत इतरांश्च सुन्वतो मनुष्यानादधाति सुकृतलोक इति । एवमत्र 'एधमानद्विट्' इत्यनेन संबन्धात् चोष्कूयतिः व्युदसनार्थ उपपद्यते ।

'सुमत्' ( ९७ ) इत्यनवगतम । 'स्वयम्' इत्यवगमः । 'उप प्रागात्सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः । अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम्' ( ऋ० सं० १ । १६२ । ७ ) ॥ दीर्घतमस आर्षम् । अश्वमेधेऽश्वस्तोमीयेन षोडशाहुतयो हूयन्ते तत्रेयं विनियुक्ता ( मैत्रा० सं० ३ । १६ । १ ) । उपप्रैतु मां प्रकर्षेण एतु सुमत् स्वयमेव यदनेन यज्ञेन प्राप्नुयामिति मे मम मनः अप्यध्यायि । अहं मनसा ध्यातवानित्यर्थः । किं पुनस्तत् । मन्म मननीयमर्थजातम् ।

**सुमत्**

---

१ ग. ज. मन्यत इति वक्ष्यति. २ ग. ज. 'मुष्मात्सुतानुकामा'; च. °मुष्मात्सुं (त्सु) तान्कां (त्का) मा°. ३ क. ख. घ. झ. ठ. ड. पुनर्नयमानः; ट. पुनर्नय° निर्णी. ४ ग. ज. सुतरांश्च; च. सुतेरां च° इतरांश्च. ५ क. ख. घ. झ. ट. ट. ड. °ष्यानभ्यादधाति सुकृतस्य लोक°. ६ ग. °गमः । ९८ । उप°. ७ ग. ज. प्रागात्सुमत् । दीर्घ°; च. प्रागात् । दीर्घ°; घ. झ. ट. प्रागात्सुमन्मे० चकृमा सुबन्धुर् । दीर्घ°. ८ क. ख. घ. झ. ट. ठ. ड. आर्षम् । त्रिष्टुप् । अश्वदेवताका । अश्व°; च. आर्षम् । ~ अश्व° त्रिष्टुप् । अश्वदेवताका ।. ९ घ. ट. ठ. ड. षोडशतपथे हुतयो°. १० ग. ज. उपैतु. ११ क. ख. घ. झ. ट. यत् यदनेन. १२ क. ख. घ. झ. ट. ठ. ड. °ध्यायि । अनेकविधान् संकल्पान् ( क. ख. झ. संकल्पविकल्पान् ) चकार तत्तदहमेव । अहं°; ग. ज. ध्यायि ध्यातवानित्यर्थः.

किंच । अयमपि वीतपृष्ठः कान्तपृष्ठः अश्वः उपैतु उपगच्छतु देवानामाशाः यमेतं वयं देवानां पुष्टे पोषणाय चक्रम कृतवन्तः सुबन्धुं शोभनयूपबन्धनम् । तमेतमुपगच्छन्तम् अनुमदन्ति अनुमन्यन्तां विप्रा ऋषयो मेधाविनः । एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च 'सुमत्' इत्यस्य 'स्वयम्' इत्येष विपरिणाम उपपद्यते । 'आश्वमेधिको मन्त्रः' इति प्रकरणोपप्रदर्शनार्थमाह । मन्त्रार्थं निर्ब्रुवता प्रकरणमप्युपेक्षितव्यमित्येतदनेन[1] प्रदर्शितं भवति ।

'दिविष्टिषु' ( ९८ ) इत्यनवगतम् । 'दिव एषणेषु' इत्यवगमः । याभिः क्रियाभिर्दिवमिच्छन्ति[2] गन्तुं ता दिविष्टयः[3] ।

'स्थूरं राधः शताश्वं[4] कुरुङ्गस्य दिविष्टिषु । राज्ञस्त्वेषस्य सुभगस्य रातिषु तुर्वशेष्वमन्महि' ( ऋ० सं० ८ । ४ । १९ ) ॥

'दिविष्टिषु' मेधातिथेरार्षम् । बृहती । दानमनया प्रशस्यते । स्थूरं स्थूलं महत् राधो धनं शताश्वं बह्वश्वसंयुक्तं कुरुङ्गस्य राज्ञस्त्वेषस्य महतः सुभगस्य शोभनस्य दिविष्टिषु क्रियासु दक्षिणाभूतं सर्वेष्वपि तुर्वशेषु मनुष्येषु या रातयो दत्तयस्तासु चैतदेव स्थूलमित्येवं वयम् अमन्महि । मन्यामह इत्यर्थः । एवमत्र 'दिविष्टि' शब्देन 'क्रिया' उच्यन्ते । ताभिर्हि द्युलोकमिष्यते गन्तुम् ।

'स्थूरः समाश्रितमात्रो महान् भवति' । समस्ता हि तत्र मात्रा आश्रिता भवन्ति । स्थूलप्रसङ्गेनैव अणुशब्दो निरुच्यते । 'स्थवीयांसमनु' यो वर्तते सः 'अणुः' इत्युच्यते । अन्वित्ययम् उपसर्गो लुप्तनामकरणः । येन प्रत्ययेन न्याय्यमेतन्नाम स्यात्सोऽत्र लुप्तः । न श्रूयत इत्यर्थः । कथं लुप्त इति । 'यथा संप्रति' इति । अस्मिन्नामकरणलोपेन प्रयोगप्रसिद्धिः[6] । सांप्रतमिति न्याय्यम् । तथापि संप्रतीत्येवमपि वर्तमानकालविषयः[7] प्रयोगः प्रसिद्धः । एवमिहाप्यनुशब्दे । 'कुरुङ्गो नाम राजा बभूव' । कुरुगमनाद्वा कुरुङ्गः । स हि कुरून् प्रति पुत्रत्वेन गतो जेतुं वा । 'कुलगमनाद्वा' । शत्रुकुलानि हि स नित्यमेव याति विजेतुम् । 'कुरुः कृन्ततेः' ।

१ व. झ. ट. ठ. ड. तदेतेन. २ ग. ज. °भिर्दिवमि°. ३ क. ख. °ष्टयः ।७। स्थूरं°; ग. °ष्टयः । २६ ( १९ ) स्थूरं°. ५ ग. ज. शताश्वं । मेधा°; व. झ. ट. शताश्वं० तुर्दशेष्वमन्महि । मेधा°. ६ क. ख. व. झ. ट. ठ. ड. °गसिद्धिः. ७ क. ख. घ. झ. ट. ठ. ड. °विषयप्रयोगः.

स हि शत्रून् कृन्तति । 'क्रूरमिति' एतत् 'अप्यस्य' एव कृतन्तेः 'भवति' । 'कुलं कुष्णातेः' । तद्धि 'विकुषितम्' इव 'भवति' विस्तीर्णत्वात् ।

'दूतः' (९९) इत्यनवगतम् । 'जूतः' इति न्याय्यम् ।
'दूतः' 'जवतेर्वा द्रवतेर्वा' इति व्याख्यातम् (निरु० ५ । १) ।

'जिन्वतिः (१००) प्रीतिकर्मा' इत्यर्थवचनमप्रतीतार्थत्वात् ।
'जिन्वतिः' 'समानमेतत्' इत्यत्र उपरिष्टाद् व्याख्यास्यामः (निरु० ७ । २३) ॥ २२ ॥

इति निरुक्तटीकायामेकादशाध्यायस्य चतुर्थः पादः ।

---

पञ्चमः पादः ।

अमत्रोऽमात्रो महान् भवत्यभ्यमितो वा । महाँ अमत्रो वृजने विरप्शीत्यपि निगमो भवति । स्तवे वज्र्यृचीषमः । स्तूयते वज्र्यृचा समोऽनर्शरातिमनश्लीलदानमश्लीलं पापकमश्रिमद्विषमम् । अनर्शरातिं वसुदामुपस्तुहीत्यपि निगमो भवत्यनर्वाप्रत्यृतोऽन्यस्मिन् । अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं वर्धया नव्यमर्कैः । अनर्वमप्रत्यृतमन्यस्मिन् वृषभं मन्द्रजिह्वं मन्दनजिह्वं मोदनजिह्वमिति वा बृहस्पतिं वर्धय नव्यमर्कैरर्चनीयैः स्तोमैरसामि सामिप्रतिषिद्धं सामि स्यतेः । असाम्योजो बिभृथा सुदानवः । असुसमाप्तं बलं बिभृथ कल्याणदानाः ॥ २३ ॥

---

१ ग. ज. कृन्तेर्भ°; च. कृ^न्तेर्भ° त. २ क. ख. घ. झ. ट. ड. ठ. °स्यामो द्वादशेऽध्याये ( ठ. ड. द्वादशाध्याये ). ३ क. ख. ८(२३); ग. २७; इतरेष्वङ्को नास्ति. ४ ग. च. ज. एकादशस्य चतुर्थः; ठ. ड. इति निरुक्तटीकायां निघण्टुपञ्चकेन सह एकादशाध्यायस्य चतुर्थः पादः। इति त्रयोविंशतिः खण्डः. ५ च. पादः समाप्तः. ६ छ. द. °मश्लिमद्वि°; त. °मश्रिमद्वि° श्लि. ७ छ. त. द. °वाति। अन°. ८ क. ख. १ ( २३ ); छ. त. २७; द. १.

'अमत्रः' (१०१) इत्यनवगतम् । 'अमात्रः' इति शब्द-समाधिः । 'महान् भवति' इत्यर्थवचनम् । यो हि महान् भवति न तस्य मात्राः प्रमातुं शक्यन्ते । अतोऽसौ 'अमत्रः' इत्युच्यते । 'अभ्यमितो वा' स्यादनभिहिंसितः केनचित् । 'महाँ अमत्रो वृजने विरप्श्यु१ग्रं शवः पत्यते धृष्ण्वोजः । नाह विव्याच पृथिवी चनैनं यत्सोमासो हर्यश्वममन्दन्' (ऋ० सं० ३ । ३६ । ४) ॥ विश्वामित्रस्यार्षम् । पृष्ठ्यस्य चतुर्थपञ्चमयोरह्नोर्माध्यन्दिने सवनेऽच्छावाकस्य शस्त्रे संपातसूक्तं नाम तत्रेयं विनियुक्ता (आश्व० श्रौ० ७ । ५) । महान् प्रभावतः अमत्रश्च अपरिमाणमात्रः इन्द्रो वृजने संग्रामे विरप्शी विरावणशीलः उग्रम् उद्गूर्णम् अभ्युद्यतं शवः शत्रुबलं पत्यते पातयते । धृष्णु ओजः धर्षयितृ यस्य बलम् ओजः तत् पत्यते । किंच । नाह विव्याच नैनं व्याप्नोति पृथिवी नापि द्यौरुपमानत्वेन । कदा पुनरेवं भवति । यत्सोमासः यदा सोमाः हर्यश्वम् इन्द्रम् अमन्दन् । अतर्पयन्नित्यर्थः । एवमत्र 'शवः पत्यते वृजने' इत्यनेन संबन्धात् 'अमत्रो महान्' इत्युपपद्यते ।

'ऋचीषमः' (१०२) इत्यनवगतम् । ईकारोऽत्रानवगतः । 'ऋचा समः' इत्यवगमः । 'इह श्रुत इन्द्रो अस्मे अद्य स्तवे वज्र्यृचीषमः । मित्रो न यो जनेष्वा यशश्चक्रे असाम्या' (ऋ० सं० १० । २२ । २) ॥ विमदस्यार्षम् । आस्तारपङ्क्तिः । स पुनरैन्द्रो वा प्राजापत्यो वा । वासुक्रस्य वा वसुकृतः । पृष्ठ्यस्य चतुर्थेऽहनि निष्केवल्ये शस्यते (आश्व० श्रौ० ७ । ११) । श्रुतो विख्यातः सर्वासु दिक्षु इह एतस्मिन् कर्मणि अद्य स्तवे विजेतुं स्तूयतेऽस्माभिः वज्री । किंलक्षणः ।

'अमत्रः' 'ऋचीषमः'

५ १० १५ २०

१ ग. °चित् । १०० । महाँ°. २ ग. ज. वृजने । विश्वा°; घ. झ. ट. वृजने विर० हर्यश्वममन्दन् । विश्वा°. ३ क. ख. घ. झ. ट. ठ. ड. °स्यार्षम् । त्रिष्टुप् । ऐन्द्री । पृ°; च. °स्यार्षम् । ४ पृ° त्रिष्टुप् । ऐन्द्री . ४ क. ख. घ. झ. ट. ठ. ड. संपातं नाम सूक्तं. ५ ग. °गमः । १०१ । इह°. ६ ग. ज. अद्य । वि°; घ. झ. ट. अद्य० चक्रे असाम्या । वि°. ७ क. ख. घ. झ. ट. ठ. ड. °पङ्क्तिः । ऐन्द्री । स°; च. पङ्क्ति. । ८ स० ऐन्द्री ।

२१

ऋचीषम ऋचा समः । यावत्तैवार्थेन युक्तोचार्यते ऋक् स्तुत्यभिप्रायेण तावानेवासौ भवत्यैश्वर्ययोगात् । किंच । मित्रो न मित्र इव । यथा हि कश्चिदाप्तो मित्रो जनेषु यशः कुर्यादेवं य इन्द्रो यश आचक्रे आभिमुख्येन सर्वासु दिक्षु करोति । किंलक्षणं पुनर्यशः करोति । असामि असमाप्तम् । अनन्तमित्यर्थः । य एवंगुणयुक्त इन्द्रोऽस्माभिरिह स्तूयते । एवमत्र स्तुतिसंबन्धाच्छब्दसारूप्याच्च 'ऋचीषम ऋचा समः' इत्युपपद्यते ।

'अनर्शरातिम्' ( १०३ ) इत्यनवगतम् । 'अनश्लीलदानम्' इत्यवगमः । विग्रहप्रसक्तस्याश्लीलशब्दस्यार्थमाह ।

'अनर्शरातिम्' 'अश्लीलं पापकम्' इति । न यस्याश्लीला रातिर्दानं सोऽनर्शरातिः । शब्दसारूप्यप्रसक्तमाह 'अश्लीलम् अश्रिमद् विषमम्' । तत्सारूप्योपपत्तितोऽश्लीलमित्युच्यते । 'अनर्शरातिं वसुदामुप स्तुहि भद्रा इन्द्रस्य रातयः । सो अस्य कामं विधतो न रोषति मनो दानाय चोदयन्' ( ऋ० सं० ८ । ९९ । ४ ) ॥ 'श्रायन्त इव सूर्यम्' इत्यस्या अनन्तरैव । सतोबृहती । हे स्तोतः अनर्शरातिम् अपापदानम् एतमिन्द्रं वसुदां वसुदातारम् उपगम्योपगम्य चेतसा स्तुहि । किंकारणम् । यस्मात् भद्राः भन्दनीयाः इन्द्रस्य रातयो दत्तयः । किंच । सः अस्य कामम् अभिप्रायं विधतो दधतः कामिनां कामान् रोषति न पीडयति । मनश्च इन्द्रस्य आत्मनो दानाय चोदयन् भवति य एवं स्तुत्वा याचते । एवमत्र शब्दसारूप्यादर्थाविरोधाच्च 'अनर्शरातिम् अनश्लीलदानम्' इत्युपपद्यते ।

'अनर्वा' ( १०४ ) इत्यनवगतम् । 'अप्रत्यृतः' इत्यवगमः ।

अनर्वा यः 'अन्यस्मिन्' नाश्रितो भवति स्वप्रधान एव सः 'अनर्वा' इत्युच्यते । ' 'अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं वर्धया नव्यमर्कैः । गाथान्यः सुरुचो यस्य देवा आशृण्वन्ति नवमानस्य मर्ताः ( ऋ० सं०

१ ग. °च्यते । २ । अनर्श°. २ ग. वसुदामुप स्तुहि भद्रा० चोदयन् । श्राय°; घ. झ. ट. वसुदां० दानाय चोदयन् । श्राय°. ३ क. ख. घ. झ. ट. °रैव । नेमस्यार्षम् । ऐन्द्री । सतो°; च. °रैव । ~ सतो° नेमस्यार्षम् । ऐन्द्री ।; ठ. ड. °रैव । भार्गवो नेमस्यार्षम् । ऐन्द्री । सतो°. ४ क. ख. घ. झ. ट. ठ. ड. °मेनामि°; च. °मेतामि° न. ५ ग. °च्यते । ३ । अन°. ६ ग. ज. वृषभं । अग°; घ. झ. ट. वृषभं० नवमानस्य मर्ताः । अग°.

१ । १९० । १ ) ॥ अगस्त्यस्यार्षम्[1] ॥ त्रिष्टुप् । हे स्तोतः अनर्वाणं स्वेन महिम्ना युक्तम् अप्रतिगतं कंचिदन्यं प्रति अर्वानत्वेन वृषभं वर्षितारं मन्द्रजिह्वं मन्दनजिह्वम्[2] । हर्षकरो हि तस्य जनानां स्तनयित्नुघोषः । 'जिह्वा घोषः' ( निघ० १ । ११ ) इति हि वाङ्नामसु पठितम् । बृहस्पतिं वर्धय नव्यं स्तुत्यम् अर्कैः[3] मन्त्रैः । किंलक्षणं बृहस्पतिमिति । गाथान्यः स्तुतिप्रापणार्हा देवाः सुरुचो दीप्तिमन्तो[4] यस्य शुष्णम् आभिमुख्येन स्थित्वा शृण्वन्ति आदरेण मर्ताश्च । नवमानस्य । नवो हि मानस्तस्याहन्यहन्यनया स्तुत्या[5] स्तुत्यस्य भवति । तेनासौ नवमानः[6] । अथवा । नवमानस्य प्रशासत इत्यर्थः । अथवा । अयमन्यो मन्त्रार्थः स्यादैतिहासिकपक्षेण[7] । मन्द्रजिह्वः । हर्षकरी हि जिह्वा तस्य स्तुतिः । गाथानीः । स एव पौरोहित्येन गाथाः स्तुतीर्नयति प्रापयति देवान् प्रति । स एव च सुरोचनः । तस्यैव च नवमानस्य स्तुवतो देवा आशृण्वन्ति मर्ताश्च । 'बृहस्पतिर्वै देवानां पुरोहितः' ( मैत्रा० सं० १ । ११ । ५ ॥ शत० ब्रा० ५ । ३ । १ । २ ) इति ह विज्ञायते[8] । तस्मादेवमप्युपपद्यते । एवं मन्त्रार्थाविरोधात् 'अनर्वा अप्रत्यृतः' इत्युपपद्यते ।

**असामि** 'असामि' (१०५) इत्यनवगतम् । सामीति समाप्तमुच्यते । तस्य प्रतिषेधः असामि[9] । 'असाम्योजो[10] बिभृथा सुदानवोऽसामि धूतयः शवः । ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत द्विषम्' ( ऋ० सं० १ । ३९ । १० ) ॥ कण्वस्यार्षम् । सतोबृहती[11] । हे सुदानवः कल्याणदानाः मरुतो

---

१ ग. ज. अगस्त्यमार्षम् ; घ. झ. ट. ठ. ड. आ ( ठ. ड. अ ) गस्त्यस्यार्षम् । बार्हस्पत्या । त्रि°; च. अगस्त्यार्षम् ।~ त्रि°बार्हस्पत्या ।. २ ग. ज. मद्न°. ३ ठ. ड. °अर्कैःस्तुत्यैर्मन्त्रैः. ४ क. ख, घ. झ. ट. ठ. ड. सुदीप्ति°. ५ घ. ट. ठ. ड. 'स्तुत्या' नास्ति. ६ क. ख. घ. झ. ट. ठ. ड. °मानस्तस्य; च. °मानः ~ । अथ° तस्य. ७ ग. ज. स्यादिति°. ८ ठ. ड. इति ब्राह्मणे श्रूयते. ९ ग. °सामि । ४ । असा°. १० ग. ज. बिभृथः सुदानवः । कण्व°; घ. झ. ट. बिभृ० सृजत द्विषम् । कण्व°. ११ क. ख. घ. झ. ट. ठ. ड. °हती । मारुती । हे°; च °हती ।~ हे °मारुती।.

यूयम् असामि अपारिसमाप्तम् अनन्तम् ओजो बलं बिभृथ धारयथ। असामिधूतयः असमाप्तगतयः। धवनं धूतिः। 'धवति धावति' (निघ० २। १४।) इति गतिकर्मसु पठितम्। एतत्कुरुध्वे। य एव ऋषिद्वेष्टा स्तोतृद्वेष्टा तस्मै हे मरुतः परिमन्यवे प्रकृष्टक्रोधाय इषुमिवं सर्वलोकद्वेष्यतां सृजत क्षिपत। एवमत्र 'असामि असुसमाप्तम्' इत्युपपद्यतेऽर्थाविरोधात्। ५

'गल्दया' (१०६) इत्यनवगतम्। 'गलितधानी स्यात्'। गलितं हि तस्यां धीयते। 'धमनिर्भवति' इत्यभिधेयवचनम्। नाडीत्यर्थः। २३।

---

**मा त्वा सोमस्य गल्दया सदा याचन्नहं गिरा। भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् (ऋ० सं० ८। १। २०)॥** १०

**मा चुक्रुधं त्वा सोमस्य गालनेन सदा याचन्नहं गिरा. गीत्या स्तुत्या भूर्णिमिव मृगं न सवनेषु चुक्रुधं क ईशानं न याचिष्यतें इति गल्दा धमनयो भवन्ति गलनमासु धीयते। आ त्वा विशन्त्विन्दव आगल्दा धमनीनाम्। नानाविभक्तीत्येते भवतं आगलना धमनीनामित्यत्रार्थः॥ २४॥** १५

---

मा त्वा सोमस्य गल्दया। मेधातिथेरार्षम्। बृहती। महाव्रते बृहतीसहस्रे विनियुक्ता (ऐ० आ० ५। २। ४)। हे इन्द्र मा चुक्रुधं त्वा मा क्रोधयेयम् अहं सोमस्य

गल्दया गल्दया गलनेन धमनिपूरणेन सोमस्य सदा २०

नित्यकालमपि याचन् गिरा च गीत्या स्तुत्या च सवनेषु यज्ञेषु। कथं च

---

१ क. ख. घ. झ. ट. ठ.ड. बलं शवः अभिवृद्धिरूपं च बलं बिभृ°; च. बलं॰ बिभृ° शवः अभिवृद्धिरूपं च बलं. २ क. ख. घ.झ. ट. ठ. ड. °मित्र द्विषं सर्व°; च. °मित्र॰सर्व° द्विषं. ३ क. ख. १ (२३); ग. ५/२७; ठ. ड. °त्यर्थः। इति नैरुक्तटीकायां षष्ठाध्याये त्रयोविंशतिः खण्डः; इतरेष्वङ्को नास्ति. ४ छ. त. द. याचिष्यतीति. ५ त. °भक्तीत्वेते°. ६ छ. त. द. भवतो गल°. ७ क. ख. २ (२४); छ. त. द. अङ्को नास्ति. ८ घ. झ. ट. सोमस्य गल्दया॰ न याचिषत्। मेधा°; ठ. ड. सोमस्येति। मेधा°. ९ क. ख. घ. झ. ट. ठ. ड. °रार्षम्। ऐन्द्री। बृ°; च. °रार्षम्।॰ बृ° ऐन्द्री। १० क. ख. घ. झ. ट. ठ. ड. °नेन धमनेन पूर°; ग. ज. °नेन च धमनिर्मनिपूरणेन; च. °नेन धमनिपूर° नेन. ११ क. ख. घ. झ. ट. ठ. ड. 'च' नास्ति. २५ ३१

पुनर्मा चुक्रुधमिति । भूर्णिमिव मृगम् । भ्रमणशीलो भूर्णिः । कः पुनरसौ । व्याघ्रो वा सिंहो वा । स हि भ्रमणशीलो बिभर्ति च शृगालादीन् । तेनेन्द्र उपमीयते । यथा शृगालादयो लाङ्गूललालनादिनोपचारेणोपसर्पमाणास्तं न क्रोधयन्त्येवमहं सोमसंप्रदानपूर्विकया स्तुत्योपसर्पमाणो मा चुक्रुधं भवन्तमिति । अथ मतं यदि[1] क्रोधाद्बिभेषि मास्मान्याचिष्ठा[2] इति । क ईशानं न याचिषत् । को हि नाम सोऽस्ति लोके य ईशानमीश्वरं न याचिष्यति[3] । न ह्ययाचतां वृत्तिः सिध्यति । एवमत्रेन्द्रस्य या गलै[4]धमनिर्यया सोम आगल्यते[5] सा तेनैव गलनेनोपलक्ष्यमाणा 'गल्दा' इत्युच्यते । न ह्यत्रमर्थविरोधोऽस्ति ।

'गल्दा धमनिर्भवति' इत्यस्य भाष्यकारवाक्यस्य मन्त्रे नात्र धमनिलिङ्गं विशिष्टमस्तीत्यतो विशिष्टलिङ्गमन्यदुदाहरणं[6] ब्रवीति[7] । 'आ त्वा विशन्त्विन्दवः' इति । हे इन्द्र आविशन्तु त्वा त्वाम् इन्दवः सोमाः । कथं च पुनराविशन्तु[8] । आगल्दा धमनीनाम् । याः[9] आगलनाः धमनयो याभिरनुप्रविष्टाः[10] सन्तो नवं मदमुत्पादयन्ति अधोवाहिन्यो याः ताभिराविशन्तु । शेषो मृग्यः । एवमिह 'धमनी'शब्दसहयोगी 'गल्दा'शब्द इति कृत्वा 'आगल्दा धमनिः' इति उपपद्यते ।

**तस्यैवान्यदुदाहरणम्**

'नानाविभक्ती त्वेते[11]' पदे 'भवतो' गल्दया गल्दा' इति न तु नानार्थे । आह कोऽभिप्राय इति । उच्यते । पूर्वस्मिन्मन्त्रे यद्यपि धमनिशब्दो नास्ति तथापि[12] 'गल्दाशब्देन' धमनिरेवोच्यते । तत्र 'आगल्दा धमनीनाम्' इत्येतदेव ज्ञापकमित्यभिप्रायः । 'गल्दया' इति तृतीयान्तं

१ क. ख. घ. झ. ट. ठ. ड. यदि मम क्रो°; च. °यदि ~ क्रो° मम. २ क. ख. घ. झ. ट. °न्याचेथा इ°; ठ. ड. न्याँचेथा इ°; च. °न्याचिष्ठा' चेथा. ३ क. ख. घ. झ. ट. ठ. ड. याचिष्यते; च. याचिष्यति° ते. ४ क. ख. घ. झ. ट. ठ. ड. गलना धम°; च. गल~ध° ना. ५ ग. ज. आगाल्यते. ६ च. विशिष्टमन्यदु°. ७ ग. ब्रवीति । ६ । आ त्वा°. ८ क. ख. घ. झ. ट. ठ. ड. °शन्तु त्वामिन्दवः । आग°; च. °शन्तु~ । आग° त्वामिन्दवः. ९ ग. ज. 'याः' नास्ति. १० ग. ज. याचि घननुप्रवि°. ११ क. ख. घ. झ. ट. ठ. ड. °भक्तीत्येते;° च. °भक्ती त्वेते° त्ये. १२ क. ख. घ. झ. ट. ठ. ड. तथापि निगमे गल्दा°; च. तथापि~ गल्दा° निगमे.

'गल्दाः' इति प्रथमाबहुवचनान्तम् । एतदनयोर्नानाविभक्तित्वम्[1] ।

' जल्हवः ' ( १०७ ) इत्यनवगतम् । ' ज्वलनहीनाः ' इत्यवगमः । २४[2] ।

---

न पापासो मनामहे नारायासो न जल्हवः । न पापा मन्यामहे नाधना न ज्वलनेन हीना अस्त्यस्मासु ब्रह्मचर्यमध्ययनं तपो दानकर्मेत्यृषिरवोचद्भकुरो भास्करो भयंकरो भासमानो द्रवतीति वा ॥ २५[3] ॥

---

'न पापासो मनामहे नारायासो न जल्हवः । यदिन्न्विन्द्रं वृषणं सचा सुते सखायं कृणवामहे ' ( ऋ० सं० ८ । ६१ । ११ ) ॥

जल्हवः

भर्गो[4] नाम प्रगाथपुत्रस्तस्येयमार्षम्[5] । बृहती । तस्यामेव तृचाशील्यां विनियुक्ता ( ऐ०आ०५ । २ । ४ ) । न वयं पापाः इत्येवं मन्यामहे । किंकारणम् । अस्त्यस्मास्वपापत्वहेतुः[6] ब्रह्मचर्यम् अध्ययनं तपो दानकर्म[7] च । अथ मतमेतैरपि युक्तो यो निर्धनः स पाप एवेति । तच्च न । किंकारणम् । नारायासः । न वयमधनाः । अथापि स्याद्धनवत्त्वेऽपि[8] सत्यनाहिताग्नित्वाज्ज्वलनहीनत्वेन पापत्वमिति[9] । तदपि न । किंकारणम् । न जल्हवः । न वयं ज्वलनहीनाः[10] । किं तर्हि । आहिताग्नयो वयम् । तदेतदध्ययनादि अपापत्वहेतुभूतं सर्वमस्मास्वस्ति । किं च । यदिन्न्विन्द्रं यस्माद्वयम् इन्द्रं वृषणं वर्षितारम् एतस्मिन्यज्ञकर्मणि सखायं सहभूतस्य सोमपानस्य ख्यापयितारम् अमीभिः सह मया सोमः पीत इत्येवं वक्तारं कृणवामहे तस्मान्न वयं पापा नापि वयमरायासो नापि जल्हव इत्येवमात्मानं मन्यामहे । न हि पापानामधनानामनाहिताग्नीनां[11] चेन्द्रः सखा भवतीत्यभिप्रायः । एवमत्र ' जल्हवो ज्वलनहीनाः ' शब्दसारूप्यादर्थाविरोधाच्च ।

---

१ क. ख. °क्तित्वम् । २ (२४) जल्ह°. २ ग. ७; ठ. ड. °गमः । इति निरुक्तटीकायां षष्ठाध्याये चतुर्विंशतिः खण्डः; इतरेष्वङ्को नास्ति. ३ क. ख. २ (२५); छ. त. २८; द. २. ४ ग. ज. °महे । भर्गो°; घ. झ. ट. °महे० कृणवामहै । भर्गो°. ५ क. ख. घ. झ. ट. ठ. ड. °मार्षम् । ऐन्द्री । बृ°; च. °मार्षम् ।^ बृ° ऐन्द्री ।. ६ क. ख. घ. झ. ट. ठ. ड. °पापत्वे हे°; ग. ज. °पापत्वहेतु ब्र°. ७ ग. ज. 'दानकर्म' नास्ति; च. तपश्च^ । अथ° दानकर्म च. ८ ग. ज. °द्धनमत्त्वे°. ९ क. ख. घ. झ. ट. ठ. ड. पापवत्त्व°. १० ग. ज. ज्वलहीनाः; च. ज्वल^हीनाः° न. ११ घ. ज. °पापानामनाहि°; च. °पापाना^ मनाहि° मधनाना.

'बकुरः' ( १०८ ) इत्यनवगतम् । 'भास्करो भयंकरो भास्वद्व-
वणो वा' इति शब्दसमाधयः ॥ २५ ॥[1]

---

यवं वृकेणाश्विना वपन्तेषं दुहन्ता मनुषाय दस्रा । अभि
दस्युं बकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय ( ऋ० सं० १ ।
११७ । २१ )॥ यवमिव वृकेणाश्विनौ निवपन्तौ वृको लाङ्गलं
भवति विकर्तनाल्लाङ्गलं लगतेर्लाङ्गूलवद्वा लाङ्गूलं लगतेर्लङ्ग[2]-
तेर्लम्बतेर्वान्नं दुहन्तौ मनुष्याय दर्शनीयावभिधमन्तौ दस्युं बकु-
रेण ज्योतिषा वोदकेन वार्य ईश्वरपुत्रो[3] बेकनाटाः खलु कुसी-
दिनो भवन्ति द्विगुणकारिणो वा द्विगुणदायिनो वा द्विगुणं काम-
यन्त इति वा । इन्द्रो विश्वान्बेकनाटाँ अहर्दृश उत क्रत्वा पणीँ-
रभि । इन्द्रो यः सर्वान् बेकनाटानहर्दृशः सूर्यदृशो य इमान्यहानि
पश्यन्ति न पराणीति वाभिभवति कर्मणा पणींश्च वणिजः ॥ २६ ॥[4]

---

यवं वृकेणाश्विना[5] । कक्षीवत आर्षम्[6] । प्रातरनुवाकाश्विनयोः शस्यते ( आश्व० श्रौ० ४ । १५ ) । यवादि धान्यं वृकेण लाङ्गलेन वपन्तौ युवां हे अश्विनौ । तत्कृते[7] महानुग्रहे सति वर्षादौ लाङ्गलकर्मणः

'बकुरः'

फलसंपद्भवतीत्यतस्तावेवाश्विनौ वपन्तावित्युच्यते । इषम् अन्नं दुहन्तौ प्रपूरयन्तौ मनुषाय मनुष्याय दस्रौ शत्रूणां दासयितारौ दंसयितारौ वा कर्मणां कृष्यादीनां कारयितारौ वा वर्षाद्यनुग्रहेण । एतावेवंविधं कर्म कारयन्तौ कुर्वाणौ वा अभि दस्युं दासयितारमनाकालं दुर्भिक्षं धमन्तौ विनाशयन्तौ कृत्स्नं जगदभिपुष्यन्तौ युवाम् । केन पुनरभिधमन्ताविति ।

---

१ क. ख. २ ( २५ ); ग. ८ । २८; ठ ड. °धयः । इति निरुक्तटीकायां षष्ठाध्याये पञ्चविंशतिः खण्डः; इतरेष्वङ्को नास्ति. २ क. ख. ध. लङ्गते°. ३ ङ. थ. छ. त. द. ईश्वरः पुत्रो°. ४ क. ख. ३ ( २६ ); छ. त. २९; द. ३. ५ क. ख. घ. झ. ट. वृकेणाश्विना० रार्याय । कक्षी°; ग. च. ज. वृकेणाश्विना । कक्षी°; ठ. ड. वृकेणेति । कक्षी°. ६ क. ख. घ. झ. ट. ठ. ड. आर्षम् । आश्विनी । त्रिष्टुप् । प्रात°; च. आर्षम् । प्रात° आश्विनी । त्रिष्टुप् । ७ क. ख. घ. झ. ट. ठ. ड. तत्कृतौ यत्कृते महा°; च. तत्कृते° त्कृतौ य.

बकुरेण जलसमूहेन ज्योतिःसमूहेन वा। मध्यस्थानो ह्युदकसमूहेन द्युस्थानो ज्योतिषा सस्यमनुगृह्णाति ततो दुर्भिक्षं ध्वस्यते जगच्च पुष्यति। किंच। युवामेव उरु ज्योतिश्चक्रथुः। विस्तीर्णमविकलं चक्षुः चक्रथुः आर्याय ईश्वरपुत्राय ऋज्राश्वाय। स हि युवाभ्यामन्धीभूतश्चक्षुष्मान् कृत इत्यभिप्रायः। एवमत्र ज्योतिःसमूह उदकसमूहश्च 'बकुर'शब्देनोच्यते शब्दार्थाविरोधात्। 'ज्योतिषा वोदकेन वा' इति भाष्यपाठः।[1]

'बेकनाटान्' (१०९) इत्यनवगतम्। 'द्विगुणकारिणो वा द्विगुणदायिनो वा द्विगुणकामिनो वा' इति शब्दसमाधयः[3]। 'इन्द्रो विश्वान् बेकनाटाँ अहर्दृश उत ऋत्वा पणीँरभि। कदू महीरधृष्टा अस्य तविषीः कदु वृत्रघ्नो अस्तृतम्' (ऋ० सं० ८।६६।१०)॥ प्रागाथः कलिर्नाम तस्यार्षम्[5]। बृहती। महाव्रते बार्हस्पत्यां तृचाशीत्यां विनियुक्ता (ऐ० आ० ५।२।४)। इन्द्रः सर्वान् बेकनाटान् कुसीदिनो वृद्धिजीवनान् अहर्दृशः। यैरिहैव जन्मनि सूर्यो दृष्टः। न पुनर्द्रक्ष्यन्तीत्यर्थः। अथवा। य इमानि एव अहानि पश्यन्ति विषयभोगप्रधाना नास्तिकतया न पारलौकिकेष्वहःस्वस्य दुष्कृतस्य[6] कर्मणः कोऽपि फलपरिणामो भविष्यतीत्येवंभाविनः पश्यन्ति। तानभिभवति ऋत्वा स्वेन कर्मणा। उत पणीन्[7] अपि च पणीन्। 'पणिर्वणिग्भवति' (निरु० २।१७)। न हि ते विशुद्धेन कर्मणा व्यवहरन्ति। याभिरेतत्कर्म करोति याभिः पुनरेवमादीन् दुष्कृतकारिणोऽभिभवति कदु महीः क्व ता महत्यः सेना इन्द्रस्य अधृष्टाः अनाधर्षितपूर्वाः परैः तविषीः याश्च महत्यः। कदु वृत्रघ्नः। क्व च[8] वृत्रघ्नः इन्द्रस्य तत् अस्तृतम् अनुपहतं बलं येनैतान् हन्तीति। एवमत्र 'बेकनाटाः कुसीदिनः' अर्थाविरोधादित्युपपद्यते।

'अभिधेतन' (११०) इत्यनवगतम्। 'अभिधावत' इत्यवगमः। २६।[9]

---

१ क. ख. घ. झ. ट. च; च. वाँ° च. २ च. भाष्यपाठः° कारः. ३ ग. °धयः। ९। इन्द्रो°. ४ ग. ज. °नाटान्। कदू महीरधृष्टा० स्तृतम्। प्रागा°; ठ. ड. द्वयोरधर्चयोर्विपर्यासोऽत्र. ५ क. ख. घ. झ. ट. ठ. ड. तस्यार्षम्। ऐन्द्री। बृ°. ६ ग. च. ज. दुःकृ°. ७ घ. झ. ट. ठ. ड. 'अपि च पणीन्' नास्ति. ८ ग. ज. च इन्द्र वृत्रस्य घ्न तत्°. ९ क. ख. ३ (२६); ग. १०। २९; ठ. ड. °पद्यते। इति निरुक्तटीकायां षष्ठाध्याये षड्विंशतिः खण्डः.

जीवान्नो अभि धेतनादित्यासः पुरा हथात् । कद्ध स्थ हवनश्रुतः ( ऋ० सं० ८ । ६७ । ५ ) ॥ जीवतो नोऽभिधावतादित्याः पुरा हननात्क नु स्थ ह्वानश्रुत इति मत्स्यानां जालमापन्नानामेतदार्षं वेदयन्ते मत्स्या मधा उदके स्यन्दन्ते माद्यन्तेऽन्योन्यं भक्षणायेति वा जालं जलचरं भवति जलेभवं वा जलेशयं वांहुरोंऽहस्वानंहूरणमित्यप्यस्य भवति । कृण्वन्नंहूरणादुर्वित्यपि निगमो भवति । सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात् । सप्तैव मर्यादाः कवयश्चक्रुस्तासामेकामप्यधिगच्छन्नंहस्वान् भवति स्तेयं तल्पारोहणं ब्रह्महत्यां भ्रूणहत्यां सुरापानं दुष्कृतस्यै कर्मणः पुनः पुनः सेवां पातके नृतोद्यमिति बत इति निपातः खेदानुकम्पयोः ॥ २७ ॥

---

जीवान्नो अभिधेतन । उक्तमार्षं भाष्यकारेणैवात्रोपप्रदर्शनार्थमेवं सर्वत्र परिज्ञेयमार्षमिति । हे आदित्याः जीवान्नः जीवतः 'अभिधेतन' अस्मान् अभिधावत यूयं पुरा हथात् पुरा हननात् । अहतानस्मान् संभावयतेत्यभिप्रायः । क्व नु स्थ । क्व नु स्थिता यूयं येन न शृणुत क्षिप्रं नोऽभिधावत हे हवनश्रुतः । ते ह्यार्तानामाह्वानं शृण्वन्ति । एवमत्र 'पुरा हथात्' इत्यनेन संबन्धात् 'अभिधेतन' इत्यस्य 'अभिधावत' इत्येष विपरिणाम उपपद्यते ।

ऋषेर्वा मत्स्यवधकारुण्याभिभूतस्यैतदार्षम् । मत्स्यानां केचिन्मन्यन्ते । 'मत्स्या मधौ उदके स्यन्दन्ते'। मध्वित्युदकनाम ( नि० १ । १२ ) । तत्र हि ते स्यन्दन्ते गच्छन्ति । 'स्यन्दति कसति' इति गतिकर्मसु पठि-

---

१ क. ख. छ. त. द. 'एव' नास्ति. २ ड. थ. ध. स्तेयमतल्पा°; त. स्तेयमतल्पा० यं. ३ थ. °पाणं. ४ छ. दुष्कृतकर्मणः; त. दुष्कृतस्य क°; द. दुष्कृतक° स्य. ५ क. ख. ४ ( २७ ); छ. त. ३०; द. ४. ६ घ. झ. ट. जीवान्नो अभिधेतना० हवनश्रुतः । उक्त°; ठ. ड. जीवान्न इति । उक्त°. ७ क. ख. घ. झ. ट. ठ. ड. °मिति । गायत्री । आदितेयी । हे°; च. °मिति । हे° गायत्री । आदितेयी । . ८ क. ख. घ. झ. कद्ध स्थ क्व नु स्थ यूयं°; ट कद्ध स्थ क्व नु स्थ यूयं° स्थिता; ठ. ड. कद्ध स्थ क्व नु स्थ स्थिता यूयं°. ९ ग. ज. 'स्थिताः' नास्ति. १० ठ. ड वाभि°. ११ क. ख. घ. झ. ट. ठ. ड. °नां वा केचि°; च. °नां केचि° वा. १२ ग. च. ज. स्पन्द°.

तम् ( निघ० २ । १४ ) । 'माद्यन्ते ' हृष्यन्ति 'अन्योन्यं भक्षणाय इति वा' मत्स्याः । ते हीतरेतरभक्षजीविनः । 'जालं जलचरं भवति' । तद्धि जले चरति । जले वा भवति । जले वा शेते इति जालम् ।

'अंहुरः' ( १११ ) इत्यनवगतम् । 'अंहस्वान्' इत्यवगमः । रो मत्वर्थे । 'अंहूरणमित्यप्यस्य भवति' इति प्रासङ्गिकम् । एवमपि हि प्रयोगो भवतीति । 'त्रितः कूपेऽवहितो देवान्हवत ऊतये' । तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी' ( ऋ० सं० १ । १०५ । १७ ) ॥ 'सप्त मर्यादा' इत्येते त्रितस्यैव कूपे पतितस्यार्षम् । एतयोः पूर्वा कुत्सस्य वा । प्रातरनुवाकाश्विनयोर्विनियोगः । त्रितः कूपे अवहितः पतितो देवान् ह्वते आह्वयते ऊतये रक्षणायात्मनः । तस्याह्वानं बृहस्पतिः शुश्राव । 'वित्तं मे अस्य रोदसी' इत्येतत्पुनःपुनरुच्यमानं द्यावापृथिव्यौ शुश्रुवतुः । किमित्येतदसौ श्रावयांचकारेति । कृण्वन्नंहूरणात् अंहस्वतः कूपादात्मन उरु विस्तीर्णं त्राणं कुर्वन् । एवमत्र 'अन्धकूपोऽहूरणः' इत्युपपद्यते प्रकरणाविरोधात् ।

'अंहुरः'

'सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात् । आयोर्ह स्कम्भ उपमस्य नीळे पथां विसर्गे धरुणेषु तस्थौ' ( ऋ० सं० १० । ५ । ६ ) ॥ सप्त मर्यादाः सप्त स्थितीः कवयो मेधाविनो हिरण्यगर्भमनुप्रभृतयः ततक्षुः कृतवन्तः । निस्या एव हि ताः । तैस्तु तत्प्रत्याख्यायकानुस्मरणार्थं निराकरणार्थं ग्रन्थसंदर्भोऽभिव्यञ्जितः । एतदेव करणमित्युपचर्यते । तासामेकामिदभ्यंहुरो गात् ।

स्पष्टार्थाय तस्यैव द्वितीयमुदाहरणम्

---

१ ग. °तीति । ११ । त्रितः°; ठ. ड. 'इति' नास्ति. २ ग. ज. °हितः । सप्त°; घ. झ. ट. °हितो० अस्य रोदसी । सप्त°. ३ क. ख. घ. झ. ट. ठ. ढ. °स्यार्षे; च. °त्रितस्यैवार्षम्° स्या. ४ क. ख. घ. झ. ठ. ठ. ड. °वा । वैश्वदेवी । पङ्क्तिः । प्रात°; च. °वा । ~ प्रात° वैश्वदेवी । पङ्क्तिः । ५ क. ख. घ. झ. ट. ठ. ड. °नियुक्ता. ६ ग. ज. 'त्राणं' नास्ति. ७ ग. °धात् । १२ । सप्त°. ८ ग. ज. मर्यादा । सप्त°; घ. झ. ट. मर्यादाः कवयः० धरुणेषु तस्थौ । सप्त°. ९ क. ख. नीळे; च. नीले. १० ग. ज. स्थितयः; च. स्थितयः° तीः. ११ क. ख. घ. झ. ट. ठ. ड. तत्प्रख्यापकोऽनुस्मरणार्थो ग्रन्थ°; ग. ज. तत्प्रत्याख्यायकानिराकरणार्थं नुस्मरणार्थं ग्रन्थ°; च. तत्प्रत्याख्यायकां(पकोऽ)नुस्मरणार्थं निराकरणार्थं(र्थो)ग्रन्थ°.

' इत् ' इत्यनर्थकोऽप्यर्थे वा । तासां मर्यादानाम् एकामभिगच्छन् अतिक्रामन् अंहस्वान् भवति । ' अगात् ' इत्येतत् अभेः समीपमाकृष्य ' एकामप्यभिगच्छन् ' इति । कतमाः पुनस्ता मर्यादा इति । स्तेयं तल्पारोहणमित्येवमाद्याः । यः पुनरेता नाभिगच्छति तस्य किमिति । स आयोः अयनस्य सूर्यस्य स्कम्भे स्कम्भने मण्डले उपमस्य सर्वभूतोपनिर्मातुरादित्यान्तरपुरुषस्य नीडे निलये[2] स्थाने यानि धरुणानि धारयितृणि स्थानानि अप्रध्वंसीनि आभूतसंप्लवस्थायीनि[3] तेषु तस्थौ तिष्ठति । आह । कस्मिन् काले[4] इति । उच्यते । पथां विसर्गे विषयानुप्रवेशमार्गभूतानामिन्द्रियाणां विसर्गे विसर्जनेकाले[5] प्राप्ते । मृत्युकाल इत्यर्थः । मर्यादासंबन्धात्स्पष्टतर एष निगम इत्यतो[6] द्वितीय उपात्तः । स्मृतिसमाचारस्थानेन प्रतिविशिष्ट उपदर्शितो भविष्यतीति[7] । एवं मन्त्रेभ्य एवोपश्रुत्य सर्व एष समाचारो विशिष्टैः स्मृतिकारैः संदृष्टो न स्वतन्त्रैरिति[8] ॥

' बत इति निपातः खेदानुकम्पयोः ' । ' बत ' ( ११२ ) । इत्यनवगतमनेकार्थं च । ' निपातः ' इति पदजात्यवधारणम् । ' खेदानुकम्पयोः ' इत्यर्थवचनम् ॥ २७[9] ॥

---

**बतो बतासि यम नैव ते मनो हृदयं चाविदाम । अन्या किल त्वां कक्ष्येव युक्तं परिष्वजाते लिबुजेव वृक्षम् ( ऋ० सं० १० । १० । १३ ) ॥ बतो बलादतीतो[10] भवति दुर्बलो बतासि यम नैव ते मनो हृदयं च विजानीमोऽन्या किल त्वां परिष्वङ्क्ष्यते कक्ष्येव युक्तं लिबुजेव वृक्षं लिबुजा व्रततिर्भवति लीयते विभजन्तीति[11] व्रततिर्वरणाच्च सयनाच्च[12] ततनाच्च वाताप्यमुदकं भवति वात एतदाप्याययति । पुनानो वाताप्यं विश्वश्चन्द्रमित्यपि निगमो**

---

१ घ. झ. ट. ठ. ड. अगात्. २ क. ख. घ. झ. ट. ठ. ड. निलयने. ३ ग. ज. °सीन्याहूतसं°; च. °सीन्याहूतसं° भू. ४ च. काले । उच्यते इति. ५ च. ज. विसर्जने काले. ६ ग. ज. °त्यतोहुरशद्वाद्विती°. ७ क. ख. घ. झ. ट. ठ. ड. °ष्यतीत्येवं; च. °ष्यन्त्येवं° ती. ८ क. ख. घ. झ. ट. स्वतन्त्र इति; ठ. स्वतन्त्र इति निरुक्तटीकायां षष्ठाध्याये सप्तविंशतिः खण्ड; ड. स्वतन्त्र इति । २७ खण्डः ।. ९ क. ख. ४ ( २७ ); ग. १३ ( ३० ); इतरेष्वङ्को नास्ति. १० छ. त. द. बलादतितो. ११ छ. त. °भजतीति. १२ क. ख. छ. शयना°; त. सैयना° श.

भवति। वने न वायो न्यधायि चाकन्। वन इव वायो वेः पुत्रश्चायन्निति वा कामयमान इति वा वेति च य इति ष चकार शाकल्य उदात्तं त्वेवमाख्यातमभविष्यदसुसमाप्तश्चार्थो रथर्यतीति सिद्धस्तत्प्रेप्सू[1] रथं कामयत इति वा। एष देवो रथर्यतीत्यपि

५ निगमो भवति॥ २८॥

इति षष्ठाध्यायस्य पञ्चमः पादः[2]॥

---

'बत' — बतो बतासि[3]। यमी यमं ब्रवीति। दुर्बलो बत दुर्बलहृदयस्त्वम्। अधर्मभीरुर्मोहमयस्त्वमेवमसकृन्मया प्रार्थ्यमानः खेद-
१० मुपयासि नेच्छसि मया संभोक्तुम्। स त्वं सर्वथा ह्यनुकम्प्यः। शोच्य इत्यर्थः। अथवा। नैव ते तव मनः संकल्पं[4] हृदयं हृद्गतं हृद्गतमध्यवसायं च विजानीमः। अथवा। लब्धस्ते मयाभिप्रायः। अम्या किल त्वां मत्तो विशिष्टतरा योषित् परिष्वङ्क्ष्यते। ततः किल त्वं मां तयापहृतचेतस्त्वान्नेच्छसि
१५ परिष्वक्तुम्। कथं च पुनरन्या त्वां परिष्वङ्क्ष्यते। कक्ष्येव युक्तं लिबुजेव वृक्षम्। कक्षजातेव[5] सुवृद्धा लिबुजा वल्ली यथा युक्तम् आत्मना संयुक्तं समीपजं परिष्वजेत्परिवेष्टयेदेवं किल त्वामन्या परिष्वङ्क्ष्यत इति। एवमत्र प्रकरणाविरोधाद् बत इत्येष निपातः खेदानुकम्पयोः। अत्र 'कक्ष्येव युक्तं लिबुजेव वृक्षम्' इत्येक 'इव'शब्दोऽनर्थकः। अथवा। उपमानद्वयमेव
२० स्यात्कक्ष्येव च लिबुजेव च। यथा कक्ष्या च लिबुजा च परिष्वजनीयौ[6] वस्त्ववृक्षौ परिष्वजेते एवं परिष्वङ्क्ष्यत इति।

'वाताप्यम्' — 'वाताप्यम्' (११३) इत्यनवगतम्। 'उदकं भवति' इत्यभिधेयवचनम्। वातो ह्युदकम् आप्याययति[7] शीती करोति। अथवा आप्यायतिर्वृद्ध्यर्थः स्यात्। पुरो-
२५ वातेन हि वृष्टिभूतमुदकं संवर्धते[8]। 'नू नो रयिमुप मास्व[9] नृवन्तं पुनानो वाताप्यं विश्वश्चन्द्रम्। प्र वन्दितुरिन्दो

१ छ. त. द. भवति। धेनुं न°. २ ङ. थ. ध. 'इति०० पादः' नास्ति. ३ घ. झ. ट. बतासि यम० जेव वृक्षम्। यमी°, ठ. ड. बतासीति। यमी°. ४ ग. ज. संकल्पा हृद्°. ५ घ. झ. ट. ठ. ड. कक्षं कक्षजा°. ६ ग. ज. °नीयाश्ववृक्षौ. ७ ग. च. ज. अप्या°. ८ ग. संवर्धयते। १४। नू°; ज. संवर्धयते. ९ ग. मास्व नृवन्तं पु। नोध°; ज. मास्व। नोध°; व. झ. ट. मास्व› वसु-
३२ र्नेगम्यात्। नोध°.

तार्यायुः प्रातर्मक्षू धियावसुर्जगम्यात्' ( ऋ० सं० ९ । ९३ । ५ ) ॥ नोधसो गौतमस्येयमार्षम् । पावमानी सौमी । हे सोम नु नः क्षिप्रमस्माकं रयिं धनम् उपमास्व उपनिर्मिनुहि नृवन्तं पुत्रपौत्रैः सहितं पुनानः पूयमानो वाताप्यम् उदकं प्राप्य द्रवीभूतः चन्द्रं चायनीयमुदकं विश्वः च सर्वः पूयमानः । किंच । प्रतारि प्रतीर्णं दीर्घं कुरु हे इन्दो सोम वन्दितुः स्तोतुः आयुः । किंच । तथोपमास्व यथा प्रातः नित्यमेव धियावसुः कर्मवसुः इन्द्रः त्वां पातुमस्माकम् आजगम्यात् । आगच्छेदित्यर्थः । एवमत्र 'वाताप्यमुदकम्' अर्थाविरोधाच्छन्दोपपत्तेश्च ॥

'चाकन्' ( ११४ ) इत्यनवगतम् । 'चायन्निति वा कामयमान इति वा इति शब्दसमौधी । 'वने न वायो न्यधायि चाकञ्छुचिर्वां स्तोमो भुरणावजीगः । यस्येदिन्द्रः पुरुदिनेषु होता नृणां नर्यो नृतमः क्षपावान्' ( ऋ० सं० १० । २९ । १ ) ॥ वसुक्रस्येयमार्षम् । वने न वने इव वृक्षे इव शकुनिः स्वे नीडे वायम् आत्मीयं पुत्रं न्यधायि निदधाति शिशुकम् अजातपक्षम् । स यथा तत्र निहितः चाकन् पश्यन् भयाद्दिशो निरीक्षमाणः आसीदथवा कामयमानः तदुत्सुकमना आसीत् एवमयमस्मासु वृक्षस्य नीडभूतेषु शकुनिपुत्रभूतः शुचिः व्यपगतसर्वदोषः युवयोः स्वभूतः स्तोमः हे भुरणौ भर्तारावश्विनौ शीघ्रौ वा । भुरण्युरिति क्षिप्रनाम ( निघ० २ । १५ ) इति । किंच । यस्य स्तोमस्य पुरुदिनेषु बहुष्वहःसु इन्द्रो होता इन्द्रोऽप्याह्वाता भवति ममायं स्तोमः स्यादिति । किंलक्षणः पुनरिन्द्र आह्वाता । यो नृणां नृतमो मनुष्याणामपि मनुष्यतमः । शूराणामपि मध्ये शूरतम इत्यर्थः । नर्यश्च नृभ्यो हितः । यः क्षपावान् च रात्रिपर्यायेषु सोमभागी । एवंगुणयुक्तेन यः स्तोम इन्द्रेणापि प्रार्थ्यते अस्मासु वर्तमानः स युवां प्रति अजीगः । नित्यकालमेव गच्छतीत्यर्थः ।

---

१ क. ख. घ. झ. ट. ठ. ड. 'इयं' नास्ति. २ ग. ज. तथा जुषस्व. ३ क. ख. घ. झ. ट. ठ. ड. 'वा' नास्ति; च. वाँ. ४ क. ख. घ. झ. ट. ठ. ड. 'वा इति' नास्ति. ५ ग. °माधी । १५ । वने°. ६ ग. ज. चाकन्। वसु°; घ. झ. ट. चाकन्० नृतमः क्षपावान् । वसु°. ७ क. ख. घ. झ. ट. ठ. ड. °मार्षम् । ऐन्द्री । त्रिष्टुप् । वने°; च. मार्षम् । ~ वने° ऐन्द्री । त्रिष्टुप् । .

एवं तावदेतामृचमाश्विनीमिति कृत्वा व्याचक्षते । तदसाधु । ऐन्द्रे हि सूक्ते प्रथमैवेयं[1] भवति । तच्च पुनः पृष्ठ्यस्य षष्ठेऽहनि स्तोमे वर्धमाने माध्यन्दिने सवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुज्यते ( आश्व० श्रौ० ७ । १२ ) । हे भुरण्यौ भर्तारौ देवतानां पती य एष स्तोमोऽस्मासु निहितः शुचिः व्यपगतदोषः शकुनिपुत्र इव वने वनावयवे वृक्षे चाकन् पश्यन्निव कामयमान इव वा ऐन्द्रम्[2] आस्ते। यस्य स्तोमस्य[3] किमिति । यस्येन्द्रः पुरुदिनेषु बहुष्वहःसु आह्वाता अभूदपि नाम मामनेन स्तोमेन स्तुयुरिति । किंलक्षणः पुनराह्वाता यस्येन्द्र इति । नृणां नृतमः नर्यश्च क्षपावांश्च । समानमेतत्पूर्वेणार्थेन[4] । यमेवमिन्द्रः[5] प्रार्थयते स एष स्तोमस्तं प्रत्यजीगः । गच्छतीत्यर्थः । अथवा । स एष स्तोमोऽस्माभिरुदीर्यमाणस्तस्येन्द्रस्य गुणान् गृह्णातीति स्यात् । 'जिर्गिर्तिर्गृह्णातिकर्मा'[6] इति ह्युक्तम् ( निरु० ६ । ८ ) । एवमत्र 'चाकन्' इत्यस्य 'चायन् इति कामयमानः इति वा' इत्येतौ विपारिणामावुपपद्येते शब्दसारूप्यादर्थाविरोधाच्च ।

*प्राकृतविवरणस्यासाधुत्वे कारणम्*

एतस्मिन्निगमे पदविभागतः कश्चिद्विचारोऽस्ति । तमाह भाष्यकारो 'वेति च य इति च चकार शाकल्यः' इति । वा इति य इति च पदे चकार शाकल्यः पदकारः । तदेतद्विचार्यमाणं न साधु भवति । किंकारणम् । 'उदात्तं त्वेवमाख्यातमभविष्यत्' । एवम् एतस्मिन् पदद्वये सति यदेतत् आख्यातं 'न्यधायि' इत्येतत् उदात्तमभविष्यत् । यद्वृत्तात्परस्य नित्यमाख्यातस्य निघातो[7] न भवतीति लक्षणविदो मन्यन्ते । न चेदमुदात्तम् । तस्मात् 'यः' इति नेदं यद्वृत्तम् । किं तर्हि । 'वायः' इत्येकमेव पदम् । किंच । 'असुसमाप्तश्चार्थः' अपुष्कलः । एवमेतस्मिन् पदद्वये सति मन्त्रार्थो[8]ऽसुसमाप्तो भवति । कथम् । द्विपदत्वे हि सति वाशब्दस्यार्थेन केनचिद्भवितव्यम् । न चेह विकल्पः

*अस्यामृचि 'वायम्' इति यत्पदं तत्संबद्धो विचारः*

---

१ क. ख. घ. झ. ट. ठ. ड. °वेर मृगभवति. २ ग. ज. इन्द्रनाम्ने. ३ क. ख. घ. झ. ट. ठ. ड. यः स्तोमस्तस्य कि°. ४ क. ख. घ. झ. ट. ठ. ड. पूर्वेणैवार्थेन; च. पूर्वेणार्थेन 'नैषा. ५ घ. ट. यजेवार्तिंद्रः प्रा°; ठ. ड. यजेवतेर्नेन्द्रः प्रा°. ६ ग. च. ज. जिगर्ति गृण्हा°. ७ ग. ज. विघातो. ८ क. ख. घ. झ. ट. ठ. ड. मन्त्रस्यार्थो.

समुच्चयो[2] वा कश्चिदर्थोऽस्ति । स्यादेतदुपमार्थो[1] भविष्यतीति । तदपि न संभवति नकारेणोपमार्थस्य कृतत्वात् । 'यः' इत्यस्यापि पृथग्भूतस्य न कश्चिदर्थोऽस्ति । तस्मादाख्यातस्यानुदात्तत्वादर्थासंभवाच्च द्विपदत्वे 'वायः' इत्येतदेकपदमेव । 'शकुनिपुत्रः' एव चास्याभिधेय उपपद्यते ।

'रथर्यति' (११५) इत्यनवगतम् । 'रथं[3] हर्यति' इत्यवगमः । ५

हर्यतिशब्दो हि प्रेप्सायाम् (निघ० २ । ६) ।

'रथर्यति' 'रथं' हि यः 'कामयते' स रथहर्यति[4] ।

'एष देवो रथर्यति[5] पवमानो दशस्यति । आविष्कृणोति वग्वनुम्' (ऋ० सं० ९ । ३ । ५) ॥ शुनःशेपस्यार्षम् । पावमानी सौमी[7] । प्रातस्तुत आवापे (आश्व० श्रौ० ५ । १२) । एष सोमो १० देवो रथर्यति रंहणमात्मनो गमनमिच्छति । पवमानो दशस्यति दानमात्मन इच्छति कथं नाम मां देवेभ्यो दद्युरिति । किंच । आविष्कृणोति प्रकाशीकरोति वग्वनुं वाचो वननीयं दत्त मां देवेभ्य इति । एवमत्र 'रथर्यति[8] रथप्रेप्सुः' शब्दसारूप्यादित्युपपद्यते[10] ॥ २८ ॥

एकादशस्य[11] पञ्चमः पादः ॥ १५

---

## षष्ठः पादः ।

**धेनुं न इषं पिन्वतमसंक्राम् । असंक्रमणीम्[12] । आधव आधवनात् । मतीनां च साधनं विप्राणां चाधवमित्यपि निगमो भवत्यनवब्रवोऽनवक्षिप्तवचनः । विजेषकृदिन्द्र इवानवब्रव इत्यपि** २० **निगमो भवति ॥ २९[13] ॥**

---

१ च. झ. ट. ठ. ड. 'मार्थे. २ घ. झ. ट. ठ. ड. °वतीति नका°. ३ ग. ज. रथहर्य°. ४ क. ख. ज. घ. झ. ट. रथर्यति; ग. रथर्यति । १६ । एष°; ठ. ड. रथयति. ५ घ. झ. ट. °र्यति॰ वग्वनुम् । शुन°. ६ ग. न. स्याति । शुन°. २५ ७ क. ख. घ. झ. ट. सौमी । गायत्री । प्रात°. ८ च. °र्यति॰ रथ°ः. ९ क. ख. घ. झ. ट. ठ. ड. °रूप्यादेतदुप°. १० ग. ३१; इतरेष्वङ्को न विद्यते. ११ क. ख. °द्यते । असङ्कामि°; ठ. ड. °द्यते । इति निरुक्तभाष्ये निघण्टपञ्चाध्यायेन सह एकादशाध्याये पञ्चमः पादः । इत्यष्टाविंशतिः खण्डः. १२ क. ख. द. °मणीम् । ५ । इति (द. इति नैरुक्तस्य) षष्ठाध्यायस्य पञ्चमः पादः; छ. त. °मणीम् । २१ । पञ्चमः पादः (त. 'चतुर्थः पादः' इति प्रान्ते लिखितम्). १३ क. ख. १ (२१); छ. त. ३२; द. १. ३२

'असक्राम्' (११९) इत्यनवगतम् । 'असंक्रमणीम्'[1] इति शब्दसमाधिः[2]। 'पुरु हि वां पुरुभुजा[3] देष्णं धेनुं न इषं पिन्वतमसक्राम् । स्तुतश्च वां माध्वी सुष्टुतिश्च रसाश्च ये वामनु रातिमग्मन्' (ऋ० सं० ६।६३।८)॥ भरद्वाजस्यार्षम्[4] । प्रातरनुवाकाश्विनयोः शस्यते (आश्व० श्रौ० ४।१५)। पुरु हि वां बहु देष्णं दानं युवाभ्यां यज्ञे यस्मात् हे पुरुभुजा बहुभोजिनौ अश्विनौ तस्माद्युवां ब्रूमः[5]। धेनुं नः तर्पयन्तीमस्मभ्यम्[6] इषम् अन्नलक्षणं पिन्वतं प्रक्षारयतम्[7] असक्राम् असंक्रमणशीलाम् अनपायिनीमस्मत्तः। अथवा। असंक्रमणशीलां द्याम् इव[8] इषम् इषो हेतूदकमस्मदर्थं[9] प्रक्षारयतमिति स्यात्। किं पुनः तद्युवयोर्बहुदानमिति। स्तुतश्च स्तुतशस्त्रैर्वांश्च[10] सोमो युवयोरन्नं हे माध्वी मधुपौ। सुष्टुतिश्च शोभनाभिः स्तुतिभिः सुष्टु स्तुतः। रसाश्चाज्यादयः य एते रातिं पुरोडाशस्यानुगच्छन्ति[11]। सर्व एते युवयोरेव। तस्माद्युवां ब्रवीमि पिन्वतमिति। एवमत्र शब्दसारूप्यादर्थाविरोधाच्च 'असक्राम्' इत्यस्य शब्दस्य 'असंक्रमणीम्' इत्येष विपरिणाम उपपद्यते। इडाभिधेया द्यौर्वा[12]।

'आधवः' (११७) इत्यनवगतम्। 'आधवनात्' इत्यवगमः। आकम्पनादित्यर्थः[13]। 'मंसीमहि त्वा वयमस्माकं[14] देव पूषन्। मतीनां च साधनं विप्राणां चाधवम्' (ऋ० सं० १०।२६।४)॥ विमदस्यार्षम्[15][16]। मंसीमहि त्वां

---

१ ग. ज. असंक्रामिणी°; च. असंक्राम °क्र. २ ग. °माधिः। १७। पुरु°. ३ ग. ज. °भुजा। भर°; घ. झ. ट. °भुजा देष्णं० मनु रातिमग्मन्। भर°. ४ क. ख. घ. झ. ट. ठ. ड. °स्यार्षम्। त्रिष्टुप्। आश्विनी। प्रात°; °स्यार्षम् ˅ प्रात° त्रिष्टुप्। आश्विनी।. ५ ग. ज. ब्रूम; च. ब्रूमः°मः. ६ क. ख. घ झ. ट. तर्पयित्रीम°; ग. तर्पयाति तर्पयितीत्रीम°; ज. तर्पयितर्पयतीत्रीम°; च. तर्पयन्ती° यित्री; ठ. ड. तर्पयित्री अस्म°. ७ क. ख. ग. ज. °यन्तम्°. ८ च. ईवं; इतरेषु 'इव' नास्ति. ९ ग. ज. °मिषहेतू°. १० ग. ज. °शत्रवां°; च. °शत्रैवां° स्त्र. ११ क. ख. घ. झ. ट. ठ. ड. °च्छति. १२ क. ख. °द्यौर्वा ॥ ५ ॥ इति निरुक्तवृत्तौ एकादशाध्यायस्य (षष्ठाध्यायस्य) पञ्चमः पादः. १३ ग. °त्यर्थः। १८। मंसी°. १४ ग. ज. वयं। विम°; घ. झ. ट. वयं० णां चाधवम्। ऐन्द्रस्य विम°. १५ क. ख. घ. झ. ट. ठ. ड. ऐन्द्रस्य विम°; च. ˅ विम° ऐन्द्रस्य. १६ क. ख. घ. झ. ट. ठ. ड. °स्यार्षम्। अनुष्टुप् पौष्णी। मं'; च. °स्यार्षम्। ˅ मं° अनुष्टुप्। पौष्णी।

हे पूषन् देव मतीनां च प्रज्ञानामस्माकं साधयितारम्। आदित्येन हि प्राणिनां प्रज्ञा अभिव्यज्यन्ते। किंच। ये चान्येऽपि[1] विप्राः प्राप्तप्रज्ञा मेधाविनः तेषाम् आधवम् आकम्पयितारम्। स्वयमेव तथा त्वमात्मनो गुणवत्तां दर्शयसि यथा प्रोत्कम्पमानहृदयास्ते त्वां स्तुवते। एवमत्र शब्द-सारूप्यादर्थाविरोधाच्च 'आधवः आकम्पयिता' इत्युपपद्यते।

'अनवब्रवः' (११८) इत्यनवगतम्। 'अनवक्षिप्तवचनः' इत्यवगमः[2]। 'विजेषकृदिन्द्र इवानवब्रवो[3]ऽस्माकं मन्यो अधिपा भवेह। प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आबभूथ (ऋ॰ सं॰ १०।८४।५)॥ मन्योरार्षम्[4]। मान्यवे सूक्ते। श्येनादिषु निष्केवल्ये[5] शस्यते (आश्व॰ श्रौ॰ ९।७)। विजेषकृत् विजयकृत् इन्द्रः इव अनवब्रवः इन्द्र इवानवक्षिप्तवचनः। न हीन्द्रस्य केनचिदाक्षिप्यते वचः। हे मन्यो यस्त्वमनवक्षिप्तवचन इन्द्र इव स त्वमस्माकम् अधिपाः अधि-ष्ठाय पाता भव। किंच। हे सहुरे[6] शत्रूणां सहनशील प्रियं ते यत् नाम तेन त्वां गृणीमसि। नित्यमेव स्तुम इत्यर्थः। किंच। विप्र जानीमो वयं तमुत्सम् उत्स्यन्दनं यतः त्वम् आबभूथ। आभवसीत्यर्थः। एवमत्र शब्दसारूप्यादर्थाविरोधाच्च 'अनवब्रवोऽनवक्षिप्तवचनः' इत्युपपद्यते[7]।

'सदान्वे' (११९) इत्यनवगतम्। 'सदानोनुवे' इति शब्द-समाधिः॥ २९[8]॥

---

**अरायि काणे विकटे गिरिं गच्छ सदान्वे। शिरिम्बिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि (ऋ॰ सं॰ १०।१५५।१)॥**

---

१ क. ख. घ. झ. ट. ठ. ड. 'अपि' नास्ति; ग. ज. °न्येऽपि विप्राप्तप्रज्ञाः. २ ग. °गमः। १९। विजे°. ३ ग. ज. इव। मन्यो°; घ. झ. ट. इवा॰ यत आबभूथ। मन्यो°. ४ क. ख. घ. झ. ट. ठ. ड. °रार्षम् त्रिष्टुप्। मान्य°; च. °रार्षम्। ॰ मान्य° त्रिष्टुप्।. ५ ग. झ. ट. ठ. ड. °वल्ये सूक्ते श°; च. °वल्ये ॰ श° सूक्ते. ६ ग. ज. 'हे सहुरे शत्रूणां सहनशील' नास्ति; च. 'किंच ॰ प्रियं° हे सहुरे शत्रूणां सहनशील. ७ क. ख. °द्यते। १ (२६)। सदा°; ठ. ड. °द्यते। इति निरुक्तटीकायां षष्ठाध्याये एकोनत्रिंशः खण्डः. ८ ग. २०। ३२; इतरेष्वङ्को नास्ति.

अदायिनि काणे विकटे काणोऽविक्रान्तदर्शन इत्यौपमन्यवः कणतेर्वा स्यादणूभावकर्मणः कणतिः शब्दाणूभावे भाष्यतेऽनुकणतीति मात्राणूभावात्काणो दर्शनाणूभावात्काणो विकटो विक्रान्तगतिरित्यौपमन्यवः कुटतेर्वा स्याद्विपरीतस्य विकुटितो भवति गिरिं
५ गच्छ सदानोनुवे शब्दकारिके। शिरिम्बिठस्य सत्वभिः। शिरिम्बिठो मेघः शीर्यते बिठे बिठमन्तरिक्षं बिठं बीरिटेन व्याख्यातं तस्य सत्त्वैरुदकैरिति स्यात्तैष्ट्वा चातयामोऽपि वा शिरिम्बिठो भारद्वाजः कालकर्णोपेतोऽलक्ष्मीर्निर्नाशयांचकार तस्य सत्त्वैः कर्मभिरिति स्यात्तैष्ट्वा चातयामश्चातयतिर्नाशने पराशरः पराशीर्णस्य वसि-
१० ष्ठस्य स्थविरस्य जज्ञे। पराशरः शतयातुर्वसिष्ठ इत्यपि निगमो भवतीन्द्रोऽपि पराशर उच्यते पराशातयिता यातूनाम्। इन्द्रो यातूनामभवत्पराशर इत्यपि निगमो भवति क्रिविर्दती विकर्तनदन्ती। यत्रा वो दिद्युद्रदति क्रिविर्दतीत्यपि निगमो भवति करूळती कृत्तदती। अपि वा देवं कंदित्कृत्तदन्तं दृष्ट्वैवम-
१५ वक्ष्यत्॥ ३०॥

———

अरायि काणे विकटे। शिरिम्बिठस्य भारद्वाजस्यार्षम्। दुर्भिक्षाधिदेवतोच्यते कालकर्णा वा अलक्ष्मीः। हे अरायि

'सदान्वे' अदायिनि दुर्भिक्षाधिदेवते। अथवा। हे अलक्ष्मि।

२० दुर्भिक्षोपनिपीडितानां न दाने मतिः प्रभवति नाप्यलक्ष्म्याभिभूतानाम्। काणे। दुर्भिक्षेण ह्यभिभूतानां मान्द्यं चक्षुषो-

---

१ त. °ष्यतेणूक° नु. २ क. ख. छ त. द. °भावात्कणो°. ३ छ. त. द. 'विपरीतस्य' नास्ति. ४ छ. त. द. 'बिठमन्तरिक्षं' नास्ति. ५ क. ख. त. द. °लक्ष्मीर्निर्गाश°; छ. °लक्ष्मी निर्णाश°. ६ छ. त. द. 'परा' नास्ति. ७ क. ख.
२५ छ. त. द. करूलती. ८ छ. त. द. 'अपि वा० वक्ष्यत्' नास्ति. ९ क. ख. २ (३०); छ. त. ३३; द. २. १० क. ख. काणे० चातयामसि। शिरि°; घ. झ. ट. काणे विकटे० चातयामसि। शिरि°; ठ. ड. काण इति। शिरि°. ११ क. ख. घ. झ. ट. ठ. ड. °स्यार्षम्। अनुष्टुप्। दु°. १२ ग. ज. कालवर्णा. १३ क. ख. घ. झ. ट. ठ. ड. दुर्भिक्षेण पीडि°; च. दुर्भिक्षोपनिपी° क्षेण. १४
३० ग. ज. ह्यतिभू°.

र्भवत्यश्नाभावात् । अलक्ष्मीपक्षेऽपि तद्रूपा अलक्ष्मीरिति प्रतीयते । लोकेऽपि[1] या विरूपा भवति अलक्ष्मीरिति सोच्यते । विकटे । दुर्भिक्षे दुर्बलत्वाद्विकटेव प्राणिनां गतिर्भवति । अलक्ष्मीरपि तद्रूपा । गिरिं गच्छ । मात्रात्रस्थानं कार्यः । सदान्वे सदानोनुवे शब्दकारिके । दुर्भिक्षे हि क्षुत्पीडिताः प्राणिनो निःश्वसन्तः[2] सदैव शब्दं कुर्वन्ति । अलक्ष्मीरपि तद्रूपा । पिशाचादीनि नित्यमव्यक्तं शब्दं कुर्वन्ति । पिशाचाया[3] हि शृणु नसुनायन्तस्थेति लोके वक्तारो भवन्ति । एतत्प्रसिद्धम् । शिरिम्बिठस्य मेघस्य स्वभूतैः सत्त्वभिः उदकैः । 'सत्त्वम्' इति ह्युदकनामसु पठितम् ( निघ० १ । १२ )। तैरुदकैर्वयं त्वां चातयामः । चातयतिर्नाशने[4] प्रसिद्धः । प्रचातित इति हि लोके श्रूयते । चतति पैततीति गतिकर्मसु पठितम् ( निघ० २ । १४ )। मेघोत्थैरेव ह्युदकैर्दुर्भिक्षं नाश्यते । 'अथ वा शिरिम्बिठो भारद्वाजः । तस्य सत्त्वैर्नामभिः' । तेन यानि दृष्टानि नामानि संभवनसमर्थानि स्तुतिसंयुक्तानि तैर्वयं त्वां नाशयामः । एवमत्र शब्दार्थाविरोधात् 'सदान्वे' इत्यस्य 'सदानोनुवे' इत्येष विपरिणाम उपपद्यते ।

निगमप्रसक्तान्यधुनोच्यन्ते । रातीति दातीति[5] दानकर्मसु पठितः ( निघ० ३ । २० ) । तस्य प्रतिषेधपूर्वस्य 'अरायि' इति भवति । 'काणतिः शब्दाणूभावे भाष्यतेऽनुकणतीति । मात्राणूभावात्कणः' श्यामाकादिः । तत्सामान्यात् 'दर्शनाणूभावात्काणः' । अथवा 'काणो विक्रान्तदर्शनः इत्यौपमन्यवः' । विक्रान्तं हि तस्य दर्शनं भवत्येकीभूतत्वात्[9] । 'अविक्रान्तदर्शनः' इति वा मन्दचक्षुष्ट्वात् । 'विकटो विक्रान्तगतिः' । विकृतगतिरित्यर्थः । 'अथवा कुटतेः धातोः स्यात्' । असौ हि 'विकुटितो भवति' । कुब्जीभूत[10] इत्यर्थः । 'बिठम्' इत्यपठितमन्तरिक्षनामे[11] । तत्पुनरेतत् 'बीरिटेन व्याख्यातम्' । तत्र[12] ह्युक्तम् 'बीरिटमन्तरिक्षं भियो वा भासो वा ततिः' ( निरु० ५ । २८ ) । तस्मिन्

---

१ क. ख. घ. ट. 'पि च या; च. °पि॰ या° च. २ ग. ज. निः स्वमन्तः; च. निःस्वसन्तः° श्व. ३ ग. ज. पिशाचो सुणुन् सुनायंतस्था (ग. स्थ) ति लोके; च. पिशाचोणन् सुनायंतस्थति लोके. ४ ग. च. ज. °यतिर्णाशने. ५ घ. झ. ट. ठ. ड. अतती°. ६ क. ख. 'शति रारुति इति°; घ. ट.-ठ. ड. 'दातीति' नास्ति. ७ च. पठितः° तं. ८ ट. 'त्काणः त्क°. ९ घ ट. ठ. ड. °त्येकभू°. १० क. ख. घ. झ. कुत्सीभू°; ट. कुत्सीभू° ब्जी. ११ क. ख. घ. झ. ट. ठ. ड. °नामसु. १२ क. ख. झ. अत्र; घ. ट. ठ. ड. अतत्र.

'बिठे' यः 'शीर्यते' सः 'शिरिम्बिठो (१२०) मेघः'। 'अपि वा शिरिम्बिठो भारद्वाजः'। सोऽनेन सूक्तेन 'अलक्ष्मीर्निर्नाशयांचकार' इति निदानमन्वाख्यातम्। अद्यापि योऽलक्ष्म्याभिभूतो भवति स आस्यदघ्न उदकेऽवतीर्य सूक्तमेतज्जपति। तस्यालक्ष्मीर्निर्नश्यति।

५ 'पराशरः' (१२१) इत्यनवगतमनेकार्थं च। 'पराशीर्णजः' इत्यवगमः। 'प्र ये गृहादममदुस्त्वाया पराशरः शतयातुर्वसिष्ठः। न ते भोजस्य सख्यं मृषन्ताधा सूरिभ्यः सुदिना व्युच्छान्' (ऋ० सं० ७। १८। २१)॥ वसिष्ठस्यार्षम्। ऐन्द्रे सूक्ते। प्रकर्षेण ये अममदुः तृप्तवन्तः सोमेन हृष्टवन्तो वा यज्ञेषु हे इन्द्र त्वाया त्वया सह पराशरः च शतयातुः बहूनां रक्षसां यातयिता। तेन हि रक्षोघ्नं सत्रमाहृतमासीदिति भारते श्रूयते। वसिष्ठश्चेत्येवमादयः। किं तेषामिति। न ते भोजस्य भोगिनः तव सख्यं सखिभावं मृषन्त मार्जयन्ते। नाशयन्तीत्यर्थः। अथैवंगुणयुक्तेभ्यः सुदिना शोभनानि दिनानि व्युच्छान्। विभान्तीत्यर्थः। तेषामेव सुप्रभाता रात्रय इत्यभिप्रायः। एवमत्र 'ऋषिः पराशरो' वसिष्ठसंबन्धात्।

*(margin: 'पराशरः')*

'इन्द्रोऽपि पराशर उच्यते'। स हि परितः 'शातयिता यातूनां' यातयितॄणामसुरादीनामिति। 'इन्द्रो यातूनामभवत्पराशरः' (ऋ० सं० ७। १०४। २१) इति। व्याख्यातः शेषः (निरु० ३। २०)।

*(margin: इन्द्रोऽपि पराशरः)*

२० 'क्रिविर्दती' (१२२) इत्यनवगतम्। 'विकर्तनदन्ती' इत्यवगमः। 'यूयं न उग्रा मरुतः सुचेतुनारिष्टग्रामाः सुमतिं पिपर्तन। यत्रा वो दिद्युद्रदति क्रिविर्दती रिणाति पश्वः सुधितेव बर्हणा' (ऋ० सं० १। १६६। ६)॥ अगस्त्यस्यार्षम्। जगती। हे मरुतः। उद्गूर्णाः

*(margin: 'क्रिविर्दती')*

२५ १ ग. °लक्ष्मीं निर्नाश°; च. लक्ष्मीं निर्नाश°; ज. लक्ष्मीर्निनाश°. २ क. ख. झ. °शीर्ण इत्य° ३ ग. 'गः। २१। प्र°. ४ ग. ज. गृहादममदुः। वसि°; घ. झ. ट. मृषन्त० व्युच्छान्। वसि°. ५ क. ख. घ. झ. ट. ठ. ड. सूक्ते। त्रिष्टुप्। प्रक°; च सूक्ते। प्रक° त्रिष्टुप्. ६ क. ख. घ झ. ट. ठ. ड. °क्तेभ्यस्तेभ्यः सूरिभ्यः सुदि°; च. °क्तेभ्यः सुदि° तेभ्यः सूरिभ्य. ७ ग. °गमः। २२। यूयं°.
३० ८ ग. ज. मरुतः। अग°; घ. झ. ट. मरुतः ० बर्हणा। अग°.

अरिष्टग्रामा: अनुपहिंसितसंघाता यूयमस्माकं सुचेतुना शोभनेन प्रज्ञानेन एतां सुमतिं शोभनां मतिं पिपर्तन पूरयत प्रीणयत[1] वा । केन पुन: पूरयत कुतो वा पूरयतेति । यत्रा वो दिद्युत् यत्र यस्मिन् मेघे दिद्युद् आयुधं क्षिप्तं युष्माभिस्तमेव मेघं रदति विलिखति विदारयति वर्षार्थम् । किंलक्षणा पुनर्दिद्युदिति । क्रिविर्दती विकर्तनसमर्थैर्दन्तैर्या रदति । कथं पुनर्या रदति । रिणाति पश्वः सुधितेवेति । यथा पशोरङ्गानि निरिणाति पृथक्करोति सुधिता स्वधित्या बर्हणा परिवृद्धया हिंसया । एवं यस्मिन् मेघे दिद्युद् अस्ता रदति ततः प्रभ्रष्टेनोदकेन सुमतिमस्माकं पिपर्तन । एवमत्रार्थाविरोधादायुधं क्रिविर्दतीशब्देनोच्यत इत्युपपद्यते ।

'करूळ[2]ती' (१२३) इत्यनवगतम् । 'कृत्तदती' इत्यवगम:[3] ॥३०॥

---

**वामंवामं त आदुरे देवो ददात्वर्यमा । वामं पूषा वामं भगो वामं देवः करूळती[4] ( ऋ० सं० ४ । ३० । २४ )॥ वामं वननीयं भवत्यादुरिरादरणात्तत्कः करूळती भगः पुरस्तात्तस्यान्वादेश इत्येकं पूषेत्यपरं सोऽदन्तकोऽदन्तकः पूषेति च ब्राह्मणम् । दनो विश इन्द्र मृध्रवाचः । दानमनसो नो मनुष्यानिन्द्र सुदुवाचः कुरु । अवीरामिव मामयं शरारुरभि मन्यते । अवलामिव मामयं बालोऽभिमन्यते संशिशरिषुरिदंयुरिदं कामयमानोऽथापि तद्वदर्थे[5] भाष्यते । वसूयुरिन्द्रो वसुमानित्यत्रार्थः । अश्वयुर्गव्यूरथयुर्वसूयुरिन्द्र[6] इत्यपि निगमो भवति ॥ ३१[7] ॥**

---

'वामं वामं ते[8]' । वामदेवस्यार्षम् । ऐन्द्रे सूक्ते[9] । रात्रिपर्याये प्रशास्तुः शस्त्रे विनियुक्ता ( आश्व० श्रौ० ६ । ४ ) ।

'करूळती' वामं वामं त इति भूयस्त्वार्थेऽभ्यासः । 'अभ्यासे भूयांसमर्थं मन्यन्ते' इति हि वक्ष्यति ( निरु० १० । ४२ ) । यद्यत्सुष्ठु वननीयम् इष्टं च तव धनं तत्तत् हे आदुरे

---

१ क. ख. घ. झ. ट. ठ. ड. पालयत वा; च. प्रीणय॑ प.ल. २ क. ख. ग च ज. घ. ट. करूलती. ३ क. ख. २ ( ३० ); ग. २१ । ३३; ठ. ड. °गमः इति निरुक्तभाष्ये षष्ठाध्याय त्रिंशत् खण्डः. ४ क. ख. छ. त. द. करूलती. ५ ड. थ. ध. तद्वर्थे; छ. तद्वर्थे° द. ६ क. ख. छ त. द. 'इन्द्रः' नास्ति. ७ क ख. ३ ( ३१ ), छ त. ३४; द. ३. ८ ध. झ. ट. त आदुरे॰ देवः करूल ( ट. ळ ) ती । वाम°; ठ. ड वामं त इति । वाम°. ९ क. ख. घ. झ. ट. ठ. ड. सूक्ते । अनुष्टुप् । रा°; च. सूक्ते । रा° अनुष्टुप् । .

आदरवन् यजमान। स हि यागं प्रति नित्यमादृतो भवतीत्यत एवं संबोध्यते। हे आदुरे वामं ददात्वर्यमा। यदर्यम्णो वामं वननीयम् इष्टमात्मनो धनं तदसौ तुभ्यं ददातु। किंच। वामं पूषा ददातु। वामं भगो ददातु। वामं देवः करूळती ददात्वित्येतदेवानुवर्तते। 'करूळती' इत्येतद्गुणपदत्वात्संदिह्यते। 'तत्' एतद्विचार्यते। 'कः करूळती' इति। भगः पुरस्तात्' करूळतीशब्दस्य। 'तस्य' एषोऽयम् 'अन्वादेशः' संनिधानसामर्थ्यात्। 'इत्येकम्' आचार्यमतम्। 'पूषेत्यपरम्'। किं कारणम्। 'सः' हि पूषा 'अदन्तकः'। आह। कुत एतदिति। उच्यते। 'अदन्तकः पूषेति च ब्राह्मणम्'। प्राशित्रभागब्राह्मणे हि श्रूयते। 'तत्पूष्णे पर्याजहुस्तत्पूषा प्राश्नात्तस्य दतो निर्जघान तस्मादाहुरदन्तकः पूषा' (शत० ब्रा० १।७।४।६)। इति। यत् पुनरेतदुक्तं संनिधिसामर्थ्याद्भगः करूळती स्यादित्यकारणमेतत्। 'यस्य येनार्थसंबन्धो दूरस्थमपि तस्य तत्। अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्' इति न्यायविदः पठन्ति। तस्मात्पूषैव करूळती इत्युच्यते शब्दसारूप्यादर्थोपपत्तेश्चेति।

कः करूळती

'दनः' (१२४) इत्यनवगतम्। 'दानमनसः' इत्यवगमः। 'दनो विश इन्द्र मृध्रवाचः सप्त यत्पुरः शर्म शारदीर्दर्त्। ऋणोरपो अनवद्यार्णा यूने वृत्रं पुरुकुत्साय रन्धीः' (ऋ० सं० १।१७४।२)॥ अगस्त्यस्यार्षम्। हे इन्द्र दनो दानमनसः एतान् अस्मभ्यं विशो मनुष्यान् कुरु मृदुवाचः। कस्मात्पुनरेवमुच्यते। इतो यस्मात्त्वं सप्त सृताः पुरः मेघपुरः शारदीः शरत्कालोत्थाः संवत्सरोत्था वा। संवत्सरोऽपि शरदित्युच्यते 'स जीव शरदः शतम्' इति लिङ्गात्। शर्म सुखमिच्छन् जनानां दर्त् त्वं दारयसि च। किंच। अनवद्यार्णा अनवद्योदकाः ताः

'दनः'

---

१ क. ख. ग. च. ज. घ. झ. करूलती. २ क. ख. घ. झ. करूलती; ग. च. ज. करूढती. ३ ग. ज. 'इति' नास्ति; च. करूडती। भगः° इति. ४ क. ख. घ. झ. ट. ठ. ड एवायं°. ५ ग. °गमः। २४। दनो°. ६ ग. ज. इन्द्र। अग°; च. झ. ट. इन्द्र० कुत्साय रन्धीः। अग°. ७ क. ख. घ. झ. ट. ठ. ड. कुरू मृध्रवाचो मृदु°; च. कुरु मृदु° मृध्रवाचः. ८ क. ख. घ. झ. ट. ठ. ड. 'त्वं' नास्ति. ९ क. ख. घ. झ. ट. ठ. ड. 'च' नास्ति; च. चै.

पुरः ऋणोरवैः गमितवानसीमं लोकं प्रति अपः । स्वभाव एवैष तव लोकाननुग्रहीतुमित्यभिप्रायः । किंच यूने वृत्रम् । यौतिः स्तुत्यर्थः । स्तोत्रे यजमानाय पुरुकुत्साय बहुस्तुतिकर्त्रे वृत्रं धनं रन्धीः । संपादितवानसीत्यर्थः । यत एवमुपकारप्रवृत्तो भवान् स्तोतॄणामन्येषां च जनानां तस्माद्ब्रूमोऽस्माकमप्येतान् मृदुवाचः कुरु मनुष्यानिति । एवमत्र 'दनः' इत्येतस्मिन् पदे दकारे 'दानमनसः' इत्येतान्यक्षराण्यध्याहृतानि भाष्यकारेण नकारश्चास्मद्योगे विभज्योदाहृतस्तथार्थोपपत्तिदर्शनात् । 'कुरु' इत्येतच्चार्थपरिसमाप्त्यर्थमध्याहृतम् । उत्तरास्त्रयः पादा हेतुभावेन 'सप्त यत्पुरः' इत्येतस्मात्सर्वनामसंबन्धात् ।

'शरारुः' (१२५) इत्यनवगतम् । 'संशिशरिषुः' इत्यवगमः ।

'शरारुः' 'अवीरामिव मामयं शरारुरभि मन्यते । उताहमस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वस्मादिन्द्र उत्तरः (ऋ० सं० १० । ८६ । ९) ॥ इन्द्रपत्न्येवं ब्रवीति । अवीरामिव अपरिग्रहामिव अबलामिव मामयं शरारुः बालो मूर्खः संशिशरिषुः संशर्तुमिच्छन् । शरीरं तित्यक्षुरित्यर्थः । अभिमन्यते । अभिभविष्याम्येतामित्येवमभिमन्यते क्षुद्रया बुद्ध्या नहुषोऽन्यो वा कश्चित् । नहुषेण हीन्द्राण्यभिभवितुमारब्धासीदित्याख्यानं श्रूयते । उताहमस्मि वीरिणी । अथ च तावदस्मि वीरिण्येव । केन च पुनर्वीरेण वीरिणी । इन्द्रपत्नी इन्द्रस्याहं पत्नी । मरुत्सखा य इन्द्रः सर्वस्माद्य उत्तरो जगत उद्गततरः प्रभावेण स मम वीरः । तदयं बालो न बुध्यते येन मामभिभवितुमिच्छतीत्यभिप्रायः । एवमत्र 'शरारुः संशिशरिषुः' शब्दसारूप्यादर्थोपपत्तेश्च ।

'इदंयुः' (१२६) इत्यनवगतमनेकार्थं च । इदमिति यत्किंचिदभिप्रेतं निर्दिश्यते । तद्यः कामयते स इदंयुरित्युच्यते । 'युः' इत्येष शब्दोऽप्रसिद्धः कामयतेरर्थे । तेनानवगतमेतत् । 'नानाधियो वसूयवः' (निरु० ६ । ६)

१ क. ख. घ. झ. ट. ठ. ड. 'रपगमि°. २ क. ख. ग. च. ज. घ. झ. ट. ठ. ड. °नुगृहीतु°. ३ क. ख. घ. झ. ट. ठ. ड. °कारे प्र°. ४ क. ख. घ. झ. ड. ठ. ठ. इत्यस्मिन्. ५ ग. °गमः । २५ । अवी°. ६ ग. ज. मां । इन्द्र°; घ. झ. ट. मामयं॰ दिन्द्रः उत्तरः । पङ्क्तैन्द्री । इन्द्रप°. ७ च. उत्तरः । ~ इन्द्रप° पङ्क्तैन्द्री ।; ठ ड. उत्तरः । पङ्क्तैन्द्री । इन्द्र°. ८ क. ख. घ. झ. ट. ठ. ड. °पत्न्येवं ब्र°. ९ च. मूर्खः °र्खः. १० क. ख. घ. झ. ट ठ. ड. मे. ११ क. ख. घ. झ. मन्यते; ट. मन्यते बुध्यते; ठ. ड. मन्यते बुध्यते.

इत्यनेन गतार्थं मन्यमानो भाष्यकारो निगमं न ब्रवीति । वार्तिककारेणाप्युक्तम् । ' निगमवशाद्धर्थं भवति पदं तद्धितस्तथा धातुः । उपसर्गगुणनिपातौ मन्त्रगताः सर्वथा लक्ष्याः ' ।

' अथापि यु इत्येष तद्वदर्थे मत्वर्थे भाष्यते' । आह । किमुदाहरणम् ।
' वसूयुरिन्द्रः ' इति । वसुमानित्यर्थः[3] । ' इन्द्रो
५ तद्वदर्थे युः अश्रायि सुँध्यो निरेके पज्रेषु स्तोमो दुर्यो न यूपः । अश्वयुर्गव्यूरथयुर्वसूयुरिन्द्र इद्रायः क्षयति प्रयन्ता ( ऋ० सं० १ । ५१ । १४ ) ॥ सव्यत्वमापन्नस्येन्द्रस्येयमार्षम् । दशरात्रस्य सप्तमेऽहनि मरुत्वतीये शस्यते । यः इन्द्रः अश्रायि श्रृणाति ।
१० हिनस्तीत्यर्थः । सुँध्यः शुद्धविक्रमः अजिह्मयोधी । अथवा । शोधयिता योधानां प्रहारैः । सुँधीर्वा स्यात् । क पुनः श्रृणाति । निरेके संग्रामे । यत्रैकोऽप्यन्यः सहायो नास्ति तत्रैक एव शत्रून् हन्ति । पज्रेषु प्रार्जितायुधेष्वपि परेषु संग्रामेषु । किंच । स्तोमो न स्तोम इव यः प्रधानः । त्रिवृत्स्तोमः पञ्चदश इति हि व्यपदेशः सोमे प्रभवति स्तोमेन तस्य प्राधान्यात् । किंच ।
१५ य इन्द्रो दुर्यो न दुर्य इव यूपः यः प्रधानः । तस्य किमिति । स इन्द्रः अश्वयुः अश्वैस्तद्वान् गव्युः गोभिस्तद्वान् रथयुः रथैस्तद्वान् वसूयुः इत्यन्यैर्वसुभिस्तद्वान् । एवं गुणविशिष्टो य इन्द्रः स रायेषु धनेषु जनानां दातव्येषु क्षयति ईष्टे । प्रयन्ता । प्रकर्षेण दातेत्यर्थः । एवमत्र ' वसूयुः ' इत्ययं युशब्दः ' तद्वदर्थे ' । किं कारणम् । न हीन्द्रो वसु कामयते संपूर्ण-
२० त्वात् । परिशेषादयं ' तद्वदर्थे ' दृश्यत इत्युपपद्यते ।

' कीकटेषु' ( १२७ ) इत्यनवगतम् । ' किंकृताः ' इति शब्दसमाधिः । ' किं क्रियाभिः ' इति वा ॥ ३१ ॥

---

१ च. ठ. ड. पदं न तद्धित°. २ च. ट. ठ. ड. °निपातमन्त्र°. ३ ग. °त्यर्थः
२५ । २६ । इन्द्रो°. ४ ग. ज सुध्यः । सव्य°; च. झ. ट. सु ( च. शु; ट. शुँ सु ) ध्यो० क्षयति प्रयन्ता । सव्य°. ५ क. ख. च. झ. ट. ठ. ड. °मार्षम् । ऐन्द्री । त्रिष्टुप् । दश°; च. °मार्षम् । ८ दश° ऐन्द्री । त्रिष्टुप् । ६ क. ख. च झ ट. ठ. ड. °शुध्यः; च. सुँध्यः° शु. ७ ग. ज. योद्धानां, च. योद्धानां° धा. ८ च. सुर्वा° धीर्वा. ९ ग. ज. प्रधानस्तृत्व°; च. प्रधानस्तृत्व° त्रि १० च. गव्यूः. ११ च. तद्वदर्थे° द १२ क. ख. च. झ. ट ठ. ड. सुपू°. १३ ग. च. ज. तत्वदर्थे. १४ क. ख. °पद्यते । ३ ( ३१ ) । कीक°; ठ. ड. °पद्यते । ३१ । कीक°.
३२ १५ ग. ज. इति च. १६ ग. २७ । ३४; इतरेष्वङ्को नास्ति.

किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम् । आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन्रन्धया नः ( ऋ० सं० ३ । ५३ । १४ ) ॥ किं ते कुर्वन्ति कीकटेषु गावः कीकटा नाम देशोऽनार्यनिवासः । कीकटाः किंकृताः किं क्रियाभिरिति प्रेप्सा वा नैव चाशिरं दुह्रे न तपन्ति घर्मं हर्म्यमाहर नः प्रमगन्दस्य धनानि मगंदः कुसीदी मांगदो मामा- गमिष्यतीति च ददाति तदपत्यं प्रमगन्दोऽत्यन्तकुसीदिकुलीनः प्रमदको वा योऽयमेवास्ति लोको न पर इति प्रेप्सुः पण्डको वा पण्डकः पण्डगः प्रार्दको वा प्रार्दयत्याण्डावाण्डावाणी इव व्रीडयति तत्स्थं नैचाशाखं नीचाशाखो नीचैःशाखः शाखाः शक्नोतेराणिररणात्तन्नो मघवन्रन्धयेति रध्यतिर्वशगमने बुन्द इषुर्भवति बुन्दो वा भिन्दो वा भयदो वा भासमानो द्रवतीति वा ॥ ३२ ॥

---

'किं ते कृण्वन्ति'। विश्वामित्रस्यार्षम्। हे इन्द्र याः कीकटेषु अनार्यदेशनिवासिषु मनुष्येषु गावः ताः तव कमुपकारं
'कीकटेषु' कुर्वन्ति । न कंचिदपीत्यभिप्रायः । किं पुनः कारणं न कुर्वन्तीति । नाशिरं दुह्रे न तपन्ति घर्मम् । नाप्याशिरार्थं दुह्यन्ते नापि घर्मे तप्यमानेऽङ्गभावं गच्छन्ति नाप्यग्निहोत्रादिषु कर्मसु । अन्यास्वपि क्रियास्वित्यभिप्रायः । यत एवमतो ब्रूमः । आहर नः ता गाः । वयं तव ताभिराशिरादिविनियोगेनोपकारं करिष्याम इत्यभिप्रायः । किंच । यदप्येतत् प्रमगन्दस्य वृद्धिजीविनो धनमेतच्चास्मभ्यमाहर । तदपि न क्रियासु तत्स्थं विनियुज्यते । वयं तद्विनियोक्ष्याम

---

१ छ. त द. 'वा' नास्ति. २ 'घर्मं वरणम्। आ हर' इति सायणभाष्ये. ३ छ त. मां गमिष्यन्तीति; द मां गमिष्यतीति. ४ छ. त द °कुसीदः कुली°. ५ द. पन्नगः. ६ छ. त. द व्रीलयति. ७ छ. त. द. 'बुन्दो वा' नास्ति. ८ क. ख. ४ ( ३२ ); छ. त ३५; द. ४. ९ घ. झ. ट. °ण्वन्ति ० रन्धया नः. १० क. ख. घ झ. ट ठ. ड. °स्यार्षम् । ऐन्द्री । त्रिष्टुप् हे°; च. °स्यार्षम् । हे° ऐन्द्री । त्रिष्टुप् । . ११ ग. ज. किंचि°; च. किंचि° कं. १२ ग. ज. यद्याप्ये°; च. यद्याप्ये° द.

७६

इत्यभिप्रायः । 'प्रमदको वा' । नित्यप्रमुदितोऽपि विषयपरः प्रमगन्दः स्यात् । 'पण्डको वा' । नपुंसकः प्रमगन्दः स्यात् । तयोर्वापि[1] धनानि क्रियासु न विनियुज्यन्ते । शब्दसारूप्यं च प्रमगन्दशब्द उभयोरस्ति तस्मात्तावप्युपपद्येते । नैचाशाखं मघवन्रन्धया नः । यदेतेषामन्यतमस्य नीचोशाखाप्रसूतस्य नीचवंशप्रसूतस्य[2] हीनकुलस्य[3] धनं तत् हे मघवन् शीघ्रं रन्धय संसाधय[4] । अस्मद्वशं कुर्वित्यर्थः । एवमत्र 'कीकटाः किं कृताः' किमेते कृता इत्येवमभिव्याहारमर्हन्ति न तैः कश्चिदर्थोऽस्ति । न ते देवपितृमनुष्याणामुपकारं कुर्वन्तीत्यर्थः । अथ 'वा । किं क्रियाभिरिति' एवं 'प्रेप्साः'[5] । ते नास्तिका एवमभिप्राया इत्यर्थः । एतस्माच्छब्दसारूप्यादर्थोपपत्तेश्च 'कीकटा' अनार्यदेशनिवासिन इत्युपपद्यते ।

'मगन्दः कुसीदी' इत्युच्यते । स हि 'माम्' इयादद्यतनोऽर्थोऽयं श्व आगमिष्यतीत्येवमनुचिन्त्य परेभ्यो धनानि 'ददाति' । 'तदपत्यं प्रमगन्दः । अत्यन्तकुसीदिकुलीनः'[6] । तद्धितार्थे[7] प्रमगन्दः 'प्रस्कण्वस्य' इति यथा ( निरु० ३ । १७ ) । 'प्रमदकः' प्रमादशीलः[8] । 'अयमेव' एको 'लोकोऽस्ति न पर इति' एवं प्रेप्सुः । नास्तिकः । 'पण्डकः'[9] तृतीयाप्रकृतिः । स हि पण्डं गच्छति स्त्रीरूपत्वात् । 'प्रार्दकः' इति 'वा' स्यात् । प्रकर्षेण ह्यसौ 'अर्दयत्यण्डो'[10] । अज्ञातैः[11] स्त्रीत्वेन गच्छति । 'आण्डौ' कस्मात् । तौ 'आण्डौ[12] आणी इव व्रीडयति' । तौ ह्यसौ पण्डको मुखेन मैथुने कर्मणि वर्तमान आणी इव व्रीडयति । संस्तभ्नातीत्यर्थः[13] ।

'बुन्दः' ( १२८ ) इत्यनवगतम् । 'इषुर्भवति' इत्यभिधेयवचनम् । 'भिन्दो वा भयदो वा भासमानो द्रवतीति वा' इति शब्दसमाश्रयः[14] ॥३२॥

---

१ क. ख. घ. झ. ट. ठ. ड. 'अपि' नास्ति. २ क. ख. घ. झ. ट. ठ. ड. नीचशा°. ३ च. हीनस्य कुल°. ४ च. संसाराधय. ५ ग. च. ज. एवप्रे°. ६ घ. झ. ट. ठ. ड. 'कुसीदकु°; च. °कुसीदेकु° द. ७ क. ख. घ. झ. ट. ठ. ड. °तार्थे प्रः प्रम°. ८ ग. ज. प्रमद°. ९ ग. ज. पण्डि. १० क. ख. ग. ज. 'आण्डौ' नास्ति; च. °यनि । अज्ञा° आण्डौ. ११ क. ख. घ. झ. ट. ठ. ड. °ज्ञातैः सह स्त्री°; च. ज्ञातैः स्त्री° सह. १२ च. तौ आणी° आण्डौ. १३ ठ. त्यर्थः । इति नैरुक्ते षष्ठाध्याये द्वात्रिंशत्खण्डः ३२ । बुन्द°ः; ड. °त्यर्थः । इति निरुक्तटीकायां षष्ठाध्याये ३२ खण्डः । बुन्दः°. १४ क. ख. ४ ( ३२ ); ग. २४ ( ३५ ); इतरेष्वङ्को नास्ति.

तुविक्षं ते सुकृतं सूमयं धनुः साधुर्बुन्दो हिरण्ययः । उभा ते बाहू रण्या सुसंस्कृत ऋदूपे चिदृदूवृधा (ऋ०सं०८।७७।११)॥ तुविक्षं बहुविक्षेपं महाविक्षेपं वा ते सुकृतं सूमयं सुसुखं धनुः साधयिता ते बुन्दो हिरण्मय उभौ ते बाहू रण्यौ रमणीयौ सांग्राम्यौ ऋदूपे अर्दनपातिनौ गमनपातिनौ शब्दपातिनौ दूरपातिनौ वा मर्मण्यर्दनवेधिनौ गमनवेधिनौ शब्दवेधिनौ दूरवेधिनौ ॥ ३३ ॥ ५

---

'तुविक्षं ते सुकृतं' 'निराविध्यद्गिरिभ्यः' इति कुरुस्तुतेरार्षमेतद्द्वयम् । हे इन्द्र तुविक्षं ते बहुविक्षेपं बहूनां विक्षेपाणां सोढृ । सुकृतम् । शोभनानि हि तेन कर्माणि क्रियन्ते । तदेव वा शोभनं कृतम् । सूमयं च सुखकरं सुदृढम् । किं पुनस्तदिति । धनुः । किंच । साधुर्बुन्दो हिरण्ययः । साधयिता स्तोमानां शत्रुसंघातानां वा । बुन्दः इषुः । हिरण्ययः । हिरण्यविकृत इत्यर्थः । किंच । उभा ते बाहू उभावपि ते बाहू रण्या रमणीयौ स्वायतौ पीनौ च । अथवा । रणयोग्यौ रण्यौ । सुसंस्कृतौ समलंकृतौ । ऋदूपे अर्दनपातिनौ । अर्दनेन हि गमनेन क्षेपणेनेषूणां तौ शत्रून् पातयतः । ऋदूवृधा । 'ऋदु' इति मर्मोच्यते । तत्र यौ विध्यतौ तौ ऋदूवृधौ । मर्मवेधिनावित्यर्थः । भाष्यमत्र न सम्यगिव लक्ष्यते । तस्य सम्यक् पाठोऽन्वेष्यः । ततो योज्यम् । एवमत्र धनुःसंबन्धात् 'बुन्दः इषुः' । इदं त्वन्यत्स्फुटतरमुदाहरणम् ॥ ३३ ॥

'बुन्दः'

१० १५ २०

---

१ छ. त. द. बहुविक्षं. २ छ. त. द. 'रण्यौ' नास्ति. ३ छ. त. द. 'ग्राम्यावर्दू°. ४ छ. त. द सायणश्च 'शब्दपातिनौ दूरपातिनौ' नास्ति. ५ छ. त. द. सायणश्च 'शब्दपातिनौ दूरवेधिनौ' नास्ति. ६ क. ख ५ (३३); छ त. ३६; द. ५. ७ घ. झ. ट. कृतं ० चिदृदूवृधा । निराविध्यदिति च कुरु°; ठ. ड. °कृतमिति । निराविध्यदिति च कुरु°. ८ क ख. घ. झ. ट. ठ. ड. °द्वयम् । ऐन्द्री । सतोबृहती पूर्वा गायत्र्युत्तरा । हे°. ९ ग. च. ज. °क्षेपणं सोढृ (च. सोढृ° ढृ). १० क. ख. घ. झ. ट. ठ. ड. येन. ११ घ. ट. ठ. ड. 'हिरण्ययः' नास्ति. १२ क. ख. घ. झ. ट. ठ. ड. 'रण्यौ' नास्ति. १३ घ. झ. ट. ठ. ड. विध्यतः. १४ क. ख. इषुः । ५ (३३) । इदं; ठ ड. इषुः । इति निरुक्तभाष्ये षष्ठाध्याये त्रयस्त्रिंशत्खण्डः (ड. 'खण्डः ३३) । इदं°. १५ ग. २९(३६); इतरेष्वङ्को नास्ति. २५ ३१

निरा॑विध्यद्गि॒रिभ्य॒ आ धा॒रय॑त्प॒क्वमो॑द॒नम्। इन्द्रो॑ बु॒न्दं स्वा॑ततम् (ऋ० सं० ८। ७७। ६)॥ निरविध्यद्गिरिभ्य आधारयत्पक्वमोदनमुदकदानं मेघम्। इन्द्रो बुन्दं स्वाततम्। वृन्दं बुन्देन व्याख्यातं वृन्दारकश्च॥ ३४॥

५

निराविध्यत्। बहूनां मेघानां मध्ये यः पक्वो मेघः उदकदानं-समर्थः तम् इन्द्रः निराविध्यत्। विद्ध्वा च तस्यैवान्यदुदाहरणम् तावत् अधारयत् अदारयत् यावन्निरुदकः संवृत्त इति। कथं पुनर्निरविध्यदिति। बुन्दं स्वाततं

१० स्वाकृष्टम् आकर्णाकृत्वा। एवमत्राकर्षणसंबन्धात् 'इषुर्बुन्दः' इत्युपपद्यते।
'वृन्दम्' (१२९) इत्येतत्पदं 'बुन्देन' एव 'व्याख्यातम्'।
'वृन्दम्' अस्यापि हि ता एव व्युत्पत्तयो या बुन्दशब्दस्य।
'वृन्दारकः' 'वृदारकश्च' बुन्देनैव 'व्याख्यातः'।
हस्ती वृन्दारकः प्रकरणवशाद्वान्यः कश्चित्।

१५ 'किः' (१३०) इत्यनवगतम्। 'कर्ता' इत्यवगमः॥ ३४॥

---

अ॒यं यो होता॒ किरु॒ स य॒मस्य॒ कम॒प्यूहे॒ यत्स॑म॒ञ्जन्ति॑ दे॒वाः। अह॑रहर्जायते मा॒सिमा॑स्य॒था दे॒वा द॑धिरे हव्य॒वाह॑म् (ऋ० सं० १०। ५२। ३)॥ अयं यो होता कर्ता स यमस्य कमप्यू-

२० हेऽन्नमभिवहति यत्समश्नुवन्ति देवा अहरहर्जायते मासे मासेऽर्धमासेऽर्धमासे वाथ देवा निदधिरे हव्यवाहमुल्बमूर्णोतेर्वृणोतेर्वा।

१ क. ख. ६ (३४); छ. त. ३७; द. ६. २ घ. झ. ट. °ध्यद्गिरि° बुन्दं स्वाततम्। ऐन्द्री गायत्री। बहू°; ठ. ड. °ध्यादिति। ऐन्द्री। गायत्री। बहू°. ३ ग. ज. बहुनो. ४ क. ख. घ. झ. ट. ठ. ड. °दाने सम°. ५ क. ख. घ. झ. ट. ठ. ड. निरवि°. ६ घ. झ. ट. ठ. ड. °तावदाधारयत्। आ अदार°. ७ क. ख. °श्चित्। ६ (३४)। किः°; ठ. ड. °श्चित्। इति निरुक्तभाष्ये षष्ठाध्याये चतुस्त्रिंश खण्डः (ठ. खण्डः ३४)। अयं यो°. ८ ग. २८ ३७। ३०; इतरेष्वङ्को नास्ति. ९ क. ख. छ. त. द. कमप्यन्नमभि°.

**महत्तदुल्बं स्थविरं तदासीदित्यपि निगमो भ[3]वत्यूर्वीसमपगतभा[1]समपहृतभासमन्त[2]र्हितभासं गतभासं वा ॥ ३५ ॥**

अयं यो होता[4] । सौचीकस्याग्नेर्विश्वेषां देवानां संवादसूक्तं तत्रेयं विश्वेदेवानामार्ष[5] महत्तदुल्बम् (ऋ०सं० (१०।५१।१)।

'किः' इतीयं च[6] । योऽयम् अग्निः आह्वाता देवानां पृथिवीस्थानः । किं तस्येति । किरु स यमस्य । कर्ता[7] यमस्य भगवत आदित्यस्य । अग्नेर्हि सकाशात्प्रातरादित्यः प्रसूयते । तदुक्तम् 'एष प्रातः प्रसुवति तस्मात्प्रातर्नोपतिष्ठन्ते' (मैत्रा०सं० १।५।७) इति । 'यस्मिन् वृक्षे सुपलाशे' इत्यस्यामृचि यमत्वमादित्यस्य वक्ष्यति ( निरु० १२।२९ ) । किंच । कमप्यूहे । कमप्यन्नमभिवहति । कमित्यन्ननाम । अन्नमपि चायमेवाभिवहति । कतमत् । यत् एतद्धविर्लक्षणं समञ्जन्ति समश्नन्ति देवाः । अञ्जतिरत्र प्रकरणवशाद्भोजनार्थः । किंच । अयमेव अहरहः अहन्यहन्यग्निहोत्रिणां गृहेषु उद्धोध्यमानो महान् जायते । मासि मासि जायते पितृयज्ञेषु अर्धमासे[8] चार्धमासे च दर्शपूर्णमासेषु[9] । यस्मादेवंगुणविशिष्टोऽयमग्निः अथ[10] एतस्मात्कारणादेतमग्निं सर्वे देवा निदधिरे हव्यवाहम् । हविषां वोढारमित्यर्थः । एवमत्र शब्दसारूप्यात् 'यमस्य' इत्येतस्माच्च षष्ठीयोगात् 'किः' इत्यस्य 'कर्ता' इत्येष विपरिणाम उपपद्यते ।

'उल्बम्' ( १३१ ) इत्यनवगतम् । 'ऊर्णोतेः' इति धातुनिर्देशः । 'ऊर्णम्' इति तत्[11]स्यात् । 'वृणोतेर्वा' स्यात् । तेन हि गर्भ आवृतो भवति[12] । 'महत्तदुल्बं[13] स्थविरं तदासीद्येनाविष्टितः प्रविवेशिथापः[14] । विश्वा अपश्यद्बहुधा ते अग्ने जातवेदस्तन्वो देव एकः (ऋ०सं० १०।५१।१) ॥ महत्[15]परिमाणतः तदुल्बं जरायु आसीत् । स्थविरं

---

१ 'भासमपचितभासमप°' सायणभाष्ये. २ सायणभाष्ये 'अन्तर्हितभासं' नास्ति. ३ क. ख. ७ ( ३५ ); छ. त. ३८; द. ७. ४ क. ख. घ. झ. ट. होता ० हव्यवाहम् । सौ°; च होना किः । सौ°; ठ. ड होतेति । सौ°. ५ घ. झ. ट. ठ. ड. च । त्रिष्टुभावाग्नेय्यौ । यो°. ६ घ. झ. ट. ठ. ड. स एव कर्ता°. ७ ग. ज. अञ्जन्ति°; घ. ट. ठ. ड. अजति°. ८ ग. ज. झ. 'अर्धमासे' सकृदेव. ९ क. ख. घ. झ. ट ठ. ड °सेषु च. १० ग. च. ज. °ग्निः तथैत°. ११ क. ख. घ. झ. ट. 'तत्' नास्ति. १२ ग. भवति ।३१। मह°. १३ ग. ज. °दुल्बं स्थविरम् । मह°; घ. झ. ट. °दुल्बं स्थविरं तदासीत् ० जातवेदस्तन्वो देव एकः । मह°; ठ. ड. °दुल्बमिति मह°. १४ च. प्रविविशिथा° वे. १५ च. बृहत्.

चिरंतनं च तदासीत् येन त्वम् आवेष्टितः आवृतो हे भगवन्नग्ने प्रविवेशिथ[1] प्रविष्टवानसि पूर्वम् आदिसर्गे अपः। किंच। विश्वाः सर्वाः तन्वः तव हे जातवेदो बहुधा अनेकेष्वभिधानेषु वर्तमानाः अपश्यत् एको देवः प्रजापतिः। कोऽन्यस्तव[2] तनूनामन्तं वेत्तुमर्हतीत्यभिप्रायः। एवमत्र जरायु 'उल्ब'-
५ शब्देनोच्यत आवेष्टनसंबन्धादित्युपपद्यते[3]।

'ऋबीसम्' ( १३२ ) इत्यनवगतम्। 'अपगतभासम्' इत्येवमाद्याः शब्दसमाधयः। 'पृथिवी' अभिधेया। सा हि कृष्णच्छाया। तस्मादपगतभासमित्येवमाद्याः शब्दसमाधय उपपद्यन्ते[4] ॥ ३५ ॥

---

१० हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम्। ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ( ऋ० सं० १। ११६। ८ ) ॥ हिमेनोदकेन ग्रीष्मान्तेऽग्निं घ्रंसमहरवारयेथामन्नवतीं चास्मा ऊर्जमधत्तमग्नये योऽयमृबीसे पृथिव्यामग्निरन्तरौषधिवनस्पतिष्वप्सु तमुन्निन्यथुः सर्वगणं सर्वनामानं गणो गणनाद्गु-
१५ णश्च यद्दृष्ट ओषधय उद्यन्ति प्राणिनश्च पृथिव्यां तदश्विनो रूपं तेनैनौ स्तौति स्तौति[5] ॥ ३६ ॥

इति[6] षष्ठाध्यायस्य षष्ठः पादः ॥

---

हिमेनाग्निं घ्रंसमवारयेथाम्। कक्षीवत आर्षम्।
२० 'ऋबीसम्' प्रातरनुवाकाश्विनयोः शस्यते ( आश्व० श्रौ० ४। १५ )। हे अश्विनौ हिमेन उदकेन अभिप्रवृद्धं ग्रीष्मान्ते अग्निं घ्रंसम् अहर्लक्षणम् इमाँल्लोकान् दिधक्षन्तमिव युवाम् अवारयेथाम्। वारयित्वा च पितुमतीम् अन्नवतीं पुरोडाशाद्यन्नसहिताम् ऊर्जम् आज्यलक्षणां युवाम् अधत्तम् अस्मै अग्नये हविर्भाजे वर्षानुग्रहपूर्विकयौषधि-

---

२५ १ च. प्रविविशि वे; व. ट. ठ. ड. प्रविवेशि प्रविष्टं°. २ क. ख. घ. झ. ट. ठ. ड. कोऽन्यस्तनस्तव. ३ ठ. ड. °द्यते। ३५ (ठ. '३५' नास्ति)। इति निरुक्तभाष्ये षष्ठाध्याये पञ्चत्रिंशत् खण्डः। ऋबी°. ४ क. ख. ७ (३५); ग. ३८। ३२; इतरेष्वङ्को नास्ति. ५ क. ख. ८ (३६), छ. त. ३ ; द. ८। ४३. ६ द. इति नैरुक्ते षष्ठा°; ड. थ ध. छ. त. 'इति० पादः' नास्ति. ७ द पादः समाप्तः. ८ घ. झ. ट. °नाग्निं घ्रंसम० सर्वगणं स्वस्ति। कक्षी°; ठ. ड. °नाग्निमिति। कक्षी°. ९ क. ख. व. झ. ट. ठ. ड आर्षम्। त्रिष्टुप्। आश्विनी।
३२ प्रात°. १० क. ख. झ. °केनातिप्र°; व. ट. ठ. ड. °केनातिप्रवृद्धं.

निष्पत्त्या । किंच । ऋबीसे अत्रिमश्विनावनीतम् । युवामिव हे अश्विनौ योऽयम् ऋबीसे पृथिव्याम् अग्निरनुप्रविष्टोऽन्तर्येनेमानि पृथिवीगर्भेपूर्वनिहितानि तिन्दुकादीनि पच्यन्ते यमवेक्ष्योक्तम् 'ऋबीसपक्वं नाश्नीयात्' ( मान० श्रौ० १।५।६।१४ ) इति तमुन्निन्यथुः युवामोषध्याद्यन्तर्वर्तिनमोषध्यादिरूपेणैव सर्वगणं सर्वनामानम् । अग्निरेव ह्ययमनेनौषध्यादिरूपेणावस्थितः सर्वैर्नामभिरभिधीयते अग्नेः सर्वत्रोपपत्तिदर्शनात् । कं[2] पुनरर्थं पुरोधायोन्निन्यथुरिति । स्वस्त्ययनायास्य जगतः । ओषध्याद्यभावेन हि सर्वमेव जगद्विनङ्क्ष्यति[3] । एवमत्र 'ऋबीस'शब्देन पृथिव्युच्यते ।

'गणो गणनात्' । स हि गण्यते बहुसंयोगात् । 'गुणश्च' । गुणोऽपि गणनादेव । असावपि हि गण्यत एव द्विगुणस्त्रिगुण इति । निगमप्रसक्तमेतदुक्तम् । अधुनास्य मन्त्रस्य भाष्यकारः समस्तार्थमाह । 'यद्वृष्ट ओषधय उद्यन्ति प्राणिनश्च पृथिव्यां तदश्विनो रूपम्' । सोऽश्विनोरधिकारस्तदश्विनोर्माहाभाग्यम् । 'तेन' माहाभाग्यलक्षणेन रूपेण 'एतौ' अश्विनौ मन्त्रदृक् स्तौति[5]' ॥ ३६[6] ॥

एकादशस्य षष्ठः पादः[7] ॥

इति श्रीजम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तावेकादशोऽध्यायः[9] ॥[10]

---

त्वमग्नेऽलातृणउद्वृहाजासिउपलप्रक्षिणीकारुरहमस्मेतेश्चार्यन्त-इवाश्वंहिसोमानस्वरणमिन्द्रासोमाकृणुष्वपाजस्ताअश्वरेऽस्तिहि-

---

१ घ. झ. ट. ड. सर्वत्रोत्पत्तिद°; ट. सर्वत्रोत्पत्तिद° पय. २ च. किं पु° कं. ३ क. ख. घ. झ. जगद्भक्ष्यत; ट. जगद्विनङ्क्ष्यते द्विनङ्क्ष्यति; ठ. ड. जगद्भक्ष्यत. ४ च. महाभा°. ५ घ. झ. ट. ठ. ड. स्तौति स्तौति. ६ क. ख. ८ (३६); ग. ३९; इतरेष्वङ्को नास्ति. ७ ठ ड. इति निघण्टपश्चाध्यायेन सह एकादशनिरुक्ताध्यायस्य षष्ठः पादः । इति श्री°. ८ ग. °पादः । षष्ठेऽध्यायः । इति जम्बू°; च. ज. °पादः । समाप्तश्चैकादशोऽध्यायः । ग्रन्थसंख्या १५५६ । अस्मिन्नध्याये व्याख्यातऋचः १७० । एवमध्यायषट्के ऋचः ४६० पूर्वार्धे ऋक्संख्या । इति नैरुक्तभाष्यपूर्वार्धः समाप्तः ( ज. 'इति० समाप्तः' नास्ति ) । इति जम्बू°. ९ ग. निरुक्तदीपिकायामेका°; च. ज. निरुक्तटीकायामेका°. १० क. ख. च. ज. °ध्यायः समाप्तः.

वोऽ[१५]सूर्तेसूर्ते[१६]मंवोच्छासूं[१७]प्रस्तु ऋ्ते[१८]तुं ऋ यो[१९]अं स्मा अ स्मां[२०]इदुतन्नं[२१]स्तुरीपां[२२]हे-
नोतामं[२३]त्रोमात्वां[२४]नपांपां[२५]सोयं[२६]वंवृकेणजीवां[२७]न्नोवतोर्वं[२८]तासिधेनुं[२९]नोऽरां[३०]-
यिकाणेवां[३१]मंवामं[३२]किंतेतुं[३३]विक्षंतेनिरां[३४]विध्यदयं[३५]योहिमेनां[३६]ग्निं षट्त्रिंशत् ÷ ।

इति निरुक्ते पूर्वषट्के षष्ठोऽध्यायः ॥ ६ ॥

इति नैरुक्तपूर्वार्धः समाप्तः ॥

---

÷ छ. त. द. पुस्तकेष्वियं खण्डशृङ्खला नास्ति

# टिप्पणी ।

—::—

पत्रं पङ्क्तिः

१ १ 'अथ किमर्थं०'। च. वर्जं सर्वेषु पुस्तकेषु प्रारम्भे 'आदितः पाणिनीयं तु' इत्यादिश्लोकद्वयं वर्तते। तत्प्रक्षिप्तमिव भाति। यस्मात् पाणिनीयं शिक्षेत्यादिक्रमो भाष्यक्रमाद्भिन्नः। शिक्षा छन्दः कल्पो ज्योतिर्व्याकरणं निरुक्तमिति भाष्यक्रमः। श्लोके तु व्याकरणं शिक्षा ज्योतिश्छन्दः (ग. पुस्तके छन्दःस्थाने कल्पः) निघण्टुपञ्चाध्यायी निरुक्तमिति। भाष्यक्रमे निघण्टोर्निर्देशोऽपि नास्ति। रुद्रायेति चतुर्थी सदोषैव यतो नमःप्रसङ्गे चतुर्थ्यधिकृता। अत्र द्वितीयैवात्र भाव्यम्। श्लोकरचना सर्वथा सदोषा। मङ्गलकार्यम् 'अथ'शब्देनैव निवृत्तं स्यात्। च. पुस्तके इदं श्लोकद्वयं पत्रस्योपरितनभागे भिन्नाक्षरैर्भिन्नमस्या च लिखितम्।

८ प्रतिनियतः अर्थः प्रयोजनं स एव विषयः तस्मिन् वृत्तिः। अङ्गस्याङ्गस्य भिन्नं प्रयोजनं भिन्नो विषयः। तत्रैव तस्य प्रवृत्तिः। भिन्नैः प्रयोजनैर्वेदमास्कन्दन्ति = वेदार्थं विशदीकुर्वन्ति।

९ 'आत्मा बुद्ध्या समर्थ्यार्थान्मनो युङ्क्ते विवक्षया'। समर्थ्य = अवगम्य।

११ 'मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्। प्रातःसवनयोगं तं छन्दो गायत्रमाश्रितम्। कण्ठे माध्यंदिनयुगं मध्यमं त्रैष्टुभानुगम्। तारं तार्तीयसवनं शीर्षण्यं जागतानुगम्' (पा० शि० ७–८)।

१२ स्वरसौष्ठव० = स्वरः उदात्तादिः। 'सुतीर्थादागतं व्यक्तं स्वाम्नायं सुव्यवस्थितम्। सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते' (पा० शि० ५१)।

१३ अपूर्वं पुण्यं तस्य अङ्गभावाय साहाय्याय।

१५ 'इन्द्रशत्रुः' इत्यत्र स्वरभेदेन विग्रहो द्विप्रकारः। इन्द्रस्य शत्रुः। अथवा। इन्द्रः शत्रुः (शातयिता) यस्य। इन्द्रस्त्वष्टुः पुत्रं विश्वरूपाख्यं जघानेति त्वष्टा सोमयागे इन्द्रं नोपाह्वयत्। इन्द्रश्च यज्ञविघ्नं कृत्वा बलात्सोमं पीत्वा जगाम। अवशिष्टेन सोमरसेनेन्द्रस्याभिचारं कर्तुं त्वष्टा 'स्वाहेन्द्रशत्रुर्वर्धस्व' इत्यनेन मन्त्रेणाजुहोत्। तत्र शत्रुशब्दो घातकमाचष्टे। भो उत्पत्स्यमानपुरुषेन्द्रस्य घातकस्त्वं वर्धस्वेति विवक्षित्वा मन्त्रमुच्चारितवान्। तदानीं तत्पुरुषसमासत्वादन्तोदात्तेन भवितव्यम्। प्रमादात्त्वनेनाद्युदात्तो मन्त्रः प्रयुक्तः। स च स्वरो

पत्रं पङ्क्तिः

१ बहुव्रीहौ समासे लभ्यः । ततश्चेन्द्रो घातको यस्येत्यर्थे पर्यवसानादिन्द्रेण वध्यो वृत्र उदपद्यत ( तै० सं० २।५।२ )।

१७ पठनस्य गुणा दोषाश्च शिक्षायां विस्तरेण कथिताः । ते गुणदोषा लौकिकग्रन्थपठनेऽपि समाना एव । ग्रन्थविस्तररचनानां = विस्तृत-ग्रन्थानाम् ।

१८ अक्षर०=किंसंख्याकोऽक्षरसमुदायः ( कोशः ) श्लोके कियन्तः पादाः पादानां का व्यवस्था कः क्रमः । छन्दोविचितिर्नाम छन्दःशास्त्रीयो ग्रन्थः । छन्दःशास्त्रे छन्दोलक्षणानि दीयन्ते । छन्दोविचितिः = गायत्र्यादिछन्दोविवेचनम् । इदं सर्वं पिङ्गलछन्दःसूत्रे स्पष्टम् ।

२ १ ' गायत्र्या वसवः ' ' जगत्या आदित्याः ' इत्यादिसूत्रैश्छन्दसां प्रत्येकपादेऽक्षरसंख्या निश्चीयते । त्रिपाद् गायत्री । सैवाष्टाक्षरेण चतुर्थेन पादेनानुष्टुब्भवति । षट्कसप्तकाष्टकैः पादैर्वर्धमानागायत्री भवति । सैव विपरीता प्रतिष्ठागायत्री भवति । गायत्रयोः पादयोर्मध्ये जागतश्चेत्पादो भवति तदा उष्णिक्ककुब्संज्ञां लभते । छन्दसां पादे पादेऽक्षरसंख्या पादानां पृथक् पृथग्विन्यासस्तेनोत्पद्यमानानि भिन्नानि छन्दांसि एतत्सर्वं पिङ्गलछन्दःसूत्रैः स्पष्टीक्रियते ।

२ अर्धुकः = फलोत्पादनसमर्थः ।

३ यस्य मन्त्रस्य ऋषिः छन्दः दैवतं ब्राह्मणं ( ब्राह्मणकृतो विनियोगः ) च न ज्ञायन्ते । आर्षेयः=ऋषिभिः संबन्धः ।

४ वर्च्छति=वा ऋच्छति गच्छति । 'गर्तं वा प्रतिपद्यते' इति शङ्करकृतशारीरभाष्ये ( १ । ३ । ३० ) ' गर्तं वा पात्यते प्रमीयते वा पापीयान्भवति तस्मादेतानि मन्त्रे विद्यात्' इति सायणभाष्यपाठः । ' छन्दोदैवतविनियोगेन ब्राह्मणेन मन्त्रेण ' इति ' वा स स्थाणुं ' इति ' पद्यते वा प्रमीयते ' इति पिङ्गलाचार्यकृतच्छन्दःसूत्राणां हलायुधभट्टकृतवृत्तौ पाठः ।

५ यातयामानि = याता यामाः क्षपांशा येषां तानि भुक्तोज्झितानि गतरसानि । व्यर्थानीत्यर्थः ।

७ ' लौकिकम् ' इति पिङ्गलछन्दःशास्त्रेऽधिकारसूत्रम् ( अ०४ सू० ८ ) । ' पादस्यानुष्टुब्वक्त्रमित्यपि च ' ( अ० ५ सू० ९ ) । ' अनुष्टुब्वक्त्रं ' इति छन्दोनाम । वक्त्रमित्यनुष्टुभो विशिष्टं नाम।

पत्रं पङ्क्तिः

२ तस्य पथ्यादयो भेदाः । तेषां लक्षणानि पञ्चमाध्याये दीयन्ते । 'अनुष्टुब्वक्त्रादि' इति ठ. पाठः ।

योहत्वेति ब्राह्मणवाक्यमल्पपाठभेदेन सप्तमाध्यायेऽपि पठितम् ( निरु० ७ । १ ) ।

९ 'इषे त्वेति छिनत्ति' ( मान० श्रौ० १ । १ । १ । १३ )
'ऊर्जे त्वेत्यनुमार्ष्टि' ( मान० श्रौ० १ । १ । १ । १४ )

१५ 'प्रयाजाः सविभक्तिकाः कर्तव्याः' । इदं महाभाष्यस्य प्रथमाह्निके वर्तमानमवतरणम् । अस्य मूलं नोपलब्धम् । 'अग्नेऽग्नेऽग्नावग्नेऽग्निनाग्नेऽग्निमग्न इति चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्दधाति' ( आप० श्रौ० ५ । २८ । ६ ) । तेनैवं मन्त्रपाठः संपद्यते । 'समिधोऽग्नेऽग्न आज्यस्य वियन्तु । तनूनपादग्नावग्न आज्यस्य वेतु । इडोऽग्निनाग्न आज्यस्य वियन्तु । बर्हिरग्निमग्न आज्यस्य वेतु' इति ( तै० सं० सायणभाष्यं १ । २ । ५ ) । संबुद्धिः सप्तमी तृतीया द्वितीया । एवं चतस्रो विभक्तयः । प्रयाजा इति केषांचिद्यागानां नाम । सविभक्तिकाः प्रयाजाः पुनराधेये कर्तव्याः ।

१७ दर्शपूर्णमासेष्टौ प्रकृतियागे 'अग्नये जुष्टं निर्वपामि' इति मन्त्र आम्नातः । स च मन्त्र ऐन्द्राग्नेष्टौ विकृतियागेऽतिदिष्टः । स कर्मसमवेतार्थप्रकाशनायाग्निपदं परित्यज्य 'इन्द्राग्निभ्यां जुष्टं निर्वपामि' इत्यूहनीयः । ऊहः = मन्त्रे शब्दपरिवर्तः । 'अग्नये जुष्टं निर्वपामि' इत्यस्य सौर्यचरौ सूर्याय जुष्टमित्येवं पदान्तरप्रक्षेप ऊहः । व्रीहीनवहन्तीत्यत्र प्रकृतानामवघातविषयाणां व्रीहीणां परित्यागेन व्रीहिस्थानेऽवघातविषयत्वेन नीवाराणां प्रयोग ऊहः । धान्यमसि धिनुहि देवानिति मन्त्रे मांसमसि धिनुहि देवानिति धान्यस्थाने मांसादेश ऊहः । ऊहितुं मन्त्रान् = मन्त्रेषु शब्दान्तराणि प्रयोक्तुम् ।

'अध्ययनविध्यधीतानां मन्त्रवाक्यानां स्वाध्यायपाठावधृतस्वरूपाणामर्थवशाद्रूपान्तरकरणमूहः । न प्रकृतावूहो विद्यते ( प्रकृतौ लिङ्गसंख्याविरोधेऽपि नोह्यते इति हरदत्तटीका ) । उपदिष्टमन्त्रा नोह्यन्ते । अतिदिष्टा एवोह्यन्ते । विकृतौ यथार्थमूहः' ( आपस्तम्बपरिभाषासूत्रम् ) ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| २ | | अयमूहविचारः पूर्वमीमांसायां नवमाध्याये वर्तते । तत्र प्रकृतौ विद्यमाना संख्या न विकृतौ परिवर्त्यते नापि लिङ्गमिति प्रतिपादितम् । १६ 'संख्यादयो न विवर्धन्ते' इति कुत्रत्यमिदं सूत्रमिति न ज्ञायते । |
| | १९ | नान्तरीयकः = व्यापकः । अवच्छेदकः । ( च. ट. पुस्तकयोः 'प्रासङ्गिकः' इत्यर्थो दीयते ) । |
| | | अनन्तरेण = व्याकरणज्ञानादेव । |
| ३ | १ | अर्थाभिधानसंयोगात् मन्त्रेषु शेषशेषिभावः=गौणमुख्यभावोऽर्थज्ञानावलम्बी । |
| | १६ | पदविभागपरिज्ञानं निरुक्तशास्त्रादेव जायत इति प्रतिज्ञा । अवबोधः अथवा तदवबोधः तेषां मन्त्राणामवबोधः अर्थज्ञानं तस्मिन् पदविभागपरिज्ञानस्यावलम्बित्वं तस्य प्रदर्शनाय । |
| | १७ | याज्ञिकस्य अपरिज्ञानं निरुक्ताज्ञानमेव । तत् देवताया अपरिज्ञाने फलति । |
| | १८ | मन्त्रार्थानवबोधे महाननर्थो जायत इति निश्चयोक्तिः । च. ज. पुस्तकयोः 'अनर्थाव° र्थज्ञा इति पाठो दीयते । न अर्थज्ञः अनर्थज्ञः । अनर्थज्ञः कः का तस्य गतिर्भवतीति निश्चयेन कथ्यते । अधेन्वा चरतीत्यत्रानर्थज्ञस्य वेदपठनमफलं भवतीत्युच्यते । |
| | १९ | निघण्टुसमाम्नायविरचनस्य प्रयोजनं तस्मिन्प्रकरणे नैव कथितम् । वेदवेदाङ्गव्यूहस्य प्रयोजनं कथ्यते । सप्रयोजनः इति कदाचित् पाठः स्यात् । तच्च 'व्यूहः' इत्यस्य विशेषणं भवेत् ( १२१ पत्रं १० पङ्क्तिः तथा १४२ पत्रं १७ पङ्क्तिश्च द्रष्टव्या ) । प्रयोजनं = कारणम् । |
| | २० | शब्दानामर्थेषु वृत्तयः तासु विष ( श ? ) यः संशयः तस्योपदेशः । बहुसंशयवत्यः शब्दानामर्थेषु वृत्तयो भवन्तीति वक्ष्यते । |
| | २३ | अन्तस्थाः = यरलवाः । अन्तर्धातु = धातुमध्ये । अन्तस्था अन्तर्धातु भवन्ति तन्निमित्तेन । |
| | २४ | भाषिका ( भाषायां ) प्रायोवृत्तिर्येषां तेभ्यः । |
| ४ | २ | तत्त्व° निर्वचनोदाहरणं व्यवस्था यस्यां तया ( व्याख्यया ) । |
| | ३ | 'नामाख्यातोपसर्गनिपातानां विभागेन' इत्यस्य न किंचिदप्यत्र प्रयोजनम् । अयं विभागः प्रथमाध्यायस्य १–२ पादेषु व्याख्यातः । |

पत्रं पङ्क्तिः

४ ६ एतेभ्यो हेतुभ्यो निदानपरिज्ञानं भवतीति कथयितुम्। येन प्रसङ्गेन विशिष्टो मन्त्र ऋषिभिर्दृश्यते स प्रसङ्गो निदानम्।

७ अध्यात्मोपदेशः = सर्वे आत्मनो विकाराः सर्वमात्मन्यारोपितमित्युपदेशः। प्रकृतेर्भूमत्वं बाहुल्यम् अनेकधा विपरिणामः।

११ 'स्तुत्युदाहरणं' इत्यत्रानुस्वारः प्रामादिकः (निरु० ७। १४ वृत्तिः)।

## विषयाणामध्यायाः खण्डाश्च—

३ ११–१२ नामा० लक्षणं (निरु० १।१॥१।३॥१।४)।

१२ भावविकारलक्षणं (१।२)।

१३–१५ नामान्याख्यात०न्यपीति (१।१२–१४)।

१५–१६ मन्त्राणामर्थ० वधारणं (१।१५–१६)।

१६–१७ पदविभाग० दर्शनाय (१।१७)।

१७ आदिमध्यान्ता० प्रतिज्ञा (१।१७)।

१८ अर्थज्ञप्रशंसा (१।१८–२०)।

अनर्थज्ञावधारणं (१।१८–२०)।

१९ वेदवेदाङ्गव्यूहः (१।२०)।

सप्रयोजननिघण्टु० विभागेन (१।२०)।

२० नैघण्टुकप्रधानदेवता० लक्षणं (१।२०)।

२०–२१ निर्वचनलक्षण० प्राधान्यात् (२।१)।

२१–२३ लोपोपधा० दाहरणचिन्ता (२।१–२)।

२३–२४ अन्तस्था० संप्रसार्या० नोपदेशः (२।२)।

२४–२५ भाषिक० सिद्धिः (२।२)।

२५ नैगम० सिद्धिः (२।२)।

४ १ शब्दरूढ्युपदेशः (२।२)।

तद्धितसमास० लक्षणं (२।२–३)।

२ शिष्यलक्षणं (२।३–४)।

२–४ विशेष० नैघण्टुकप्रकरणानुक्रमणं (२।५ तृतीयाध्यायान्तं यावत्)।

४ अनेकार्थानवगतसंस्कारानुक्रमणं (अध्यायाः ४–६)।

४–५ परोक्षकृत ० मन्त्रलक्षणं (७।१–२)।

पत्रं पङ्क्तिः

४ ५–६ स्तुत्याशीः० निदानपरिज्ञानख्यापनाय ( ७ । ३ ) ।

६–७ अनादिष्ट० प्रकृतिभूमत्वं ( ७ । ४ ) ।

७ इतरेतरजन्मत्वं ( ७ । ४ ) ।

७–८ स्थानत्रय० नामधेयप्रतिलम्भः ( ७ । ५ ) ।

८–९ पृथगभिधानं स्तुतिसंबन्धाद्वा ( ७ । ५ ) ।

९ देवतानामाकारचिन्तनं ( ७ । ६–७ ) ।

९–१० भक्तिसाहचर्य० भाक्तानि ( ७ । ८–१३ ) ।

१०–१२ पृथिव्यन्तरिक्ष० दैवतप्रकरणनिर्णयः ( ७ । १४ द्वादशाध्यायान्तं यावत् ) ।

१२–१३ विद्यापार० द्वारेण ( १३ । १२–१३ ) ।

१३ देवताताद्भाव्यं ( १३ । १३ )

---

४ १५ निघण्टुग्रन्थस्य पञ्चाध्यायी पाणिनेरष्टाध्यायीसदृशी ।

५ १५ तस्या निघण्टुपञ्चाध्याय्या इयं द्वादशाध्यायी भाष्यविस्तरः पतञ्जलिभाष्यवत् । दुर्गवृत्तिः काशिकावृत्तिसदृशी । अत एव वृत्तिसंज्ञा अन्वर्थका न टीका व्याख्या पद्धतिर्वा ।

पञ्चाध्यायीरूपं शास्त्रं तस्मिन् संग्रहः तस्य भावो रूपम् । अयं समाम्नायो निघण्टुपञ्चाध्याय्यां संगृहीतः ।

२०–२१ मृगः ( निरु० १ । ६ ) कर्णः ( १ । ९ ) दक्षिणा ( १ । ७ ) लक्ष्मीः ( ४ । १० ) निघण्टुः ( १ । १ ) भद्रं ( ४ । १० ) अधः ( २ । ११ ) ।

२१ ' एवमाद्यानां ' व्यर्थमेव ।

२५ एतावद्भयां लक्षणोद्देशाभ्यामुदाहरणभूतः निघण्टुशब्दसमुदायो यस्य । अथवा । एतावन्तौ लक्षणोद्देशौ यस्य । तादृश उदाहरणभूतो निघण्टुशब्दसमुदायस्तेन तत्साहाय्येन ।

६ २ आगमवता = शास्त्रज्ञानवता ।

८ यथासमाम्नातव्याख्यातव्य इति च.पाठः समीचीनः । समाम्नातमनतिक्रम्य समाम्नातक्रमेणैव व्याख्यातव्यः ।

२२ दुर्गाचार्यो यस्मादिति पदमध्याहरति । वस्तुतस्तु छन्दोभ्यः० समाम्नाता इति ' ते ' इत्यस्य विशेषणम् ।

पत्रं पङ्क्तिः

७ ५ समाम्नानं समाम्नायः । तमेव निघण्टुपदेन दर्शयति । 'समाम्नात-मात्रं' इति पाठे समाम्नातानेव ।

६ नित्याः = एकार्थसंबद्धाः ।

८ उदाहृताः किंतु असमाम्नाताः । च. पुस्तके 'उदाहृताः समाम्नाये' इति पाठः । तदिदं स्वतन्त्रमेव वाक्यं भवति । किंत्वयमसमीचीनः पाठः । ठ. पुस्तके 'उदाहृतासमा' इत्यत्र 'ता' अक्षरस्य पश्चात्केनापि भिन्नमस्या विसर्गो लिखितः ।

११–१३ 'अतिपरोक्षवृत्तिना........टकारं कृत्वा' इत्यसंपूर्णमेव वाक्यम् ।

१६ च. पुस्तकस्थं 'अविद्यमानक्रिया अतिपरोक्षवृत्तयः' इत्यधिकं वाक्यमावश्यकम् ।

अन्तर्लीना अथवा अन्तर्णीता = गूढा ।

१७ एषः = निघण्टुशब्दव्युत्पत्तौ दर्शितः ।

११–१८ 'अतिपरोक्षवृत्तिना शब्देन० प्रत्यक्षवृत्तिना शब्देन निर्वक्तव्याः' इति वाक्यसमुदायो न सुबद्धः । केचिच्छब्दा गलिता भवेयुः ।

८ २ के एते लक्षणविद इति न ज्ञायते ।

३ पृषत उदरम् इति यथा पृषोदरशब्दः साध्यते तथा । द्रष्टव्याः सिद्धा इति । 'सिद्धिरेव द्रष्टव्या' अस्मिन्पाठे या पृषोदरादिशब्दानां सिद्धिः सातिपरोक्षवृत्तिषु शब्देषु द्रष्टव्या ।

४ अभिव्याहारः उच्चारणं तस्य अनभिघाताय तत्साधु इति दर्शयितुम् ।

१६ ओवशब्दवत् ( निरु० २ । २ ) ।

२० आहतं पठितम् इत्यर्थो नैव प्रसिद्धः ।

९ ९ यदा शब्दाः परोक्षवृत्तितामापादयितुं न शक्यन्ते तदा रूढिशब्दे एव धातुरुत्प्रेक्ष्यः ।

१५–१७ रूढिशब्दे स्वरवर्णसामान्येन यो धातुरुत्प्रेक्ष्यते तस्मिन् रूढिशब्द-वाच्येऽर्थे या क्रिया तस्या योगश्चेदयं निर्वचनाभ्युपायः । नोचेद्धातुलिङ्गमकिंचित्करम् । अयं निर्वचनमार्गः व्याकरणशास्त्रविरुद्धः । व्याकरणं प्रसिद्धमर्थं नैवापेक्षते । व्याकरणे धातुलिङ्गमेव व्युत्पत्तिसमर्थम् ।

१७–१८ धातौ विवक्षितक्रियाया अभावे तद्धात्वाश्रितं यन्निर्वचनं तदुपेक्ष्यम् ।

२१ व्यापन्नं = वर्णान्तरमापादितम् ।

वस्तुतस्तु अयं निघण्टुशब्दक्षुरादिगणस्थेन निउपसर्गयुक्तेन वटिघा-

पत्रं पङ्क्तिः

९ तुना व्युत्पादयितुं युक्तः । घटि भाषायाम् । घण्टयति । नि एकस्मिन्संग्रहे घण्ट्यन्ते भाष्यन्ते संगृह्यन्त इति निघण्टवः ।

१० ११-१२ ऐन्द्रं व्याकरणमधुना नैवोपलभ्यते । कातन्त्रमेवैन्द्रं व्याकरणमिति डाक्टर बेलवलकराः । किंतु कातन्त्रेऽनेकपदानि । इन्द्रो देवैः प्रार्थितो व्याकरणं निर्ममे । ऐन्द्रवाययग्रहब्राह्मणे श्रूयते ' वाग्वै पराच्यव्याकृतावदत्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति । सोऽब्रवीद्वरं वृणै मह्यं चैवैष वायवे च सह गृह्याता इति तस्मादैन्द्रवायवः सह गृह्यते तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुच्यते ' ( तै० सं० ६ । ४ । ७ ॥ मैत्रा० सं० ४ । ५ । ८ ) ।

१३ प्रादयः क्रियायोगे उपसर्गसंज्ञका गतिसंज्ञकाश्च भवन्ति । क्रियाभ्यो व्यवहिताः सन्तः कर्मप्रवचनीयसंज्ञां लभन्ते ।

११ १ इतरेतराकाङ्क्षित्वादिति पाठः स्यादथवा समासेनाभिधाने इति स्यात् । समासेन = द्वन्द्वसमासेन ।

९ अल्पाच्तरम् ( पाणिनि २ । २ । ३४ ) ।

९-१० आख्यातस्यार्थो नामपदवाच्यार्थाश्रयक्रिययोपलक्ष्यते ।

१२ ६ इदमन्तरेण = लक्षणोपदेशं विना । तात्पर्येण = तत्तदर्थपरतया ।

१६ अनेकेषु कारकेषु अनेकैः कारकैर्वा प्रविभक्ता । स्फुरमाणः प्रधानद्रव्यभावः तस्याभिव्यक्तिः तस्यै उन्मुखीभूता ।

१७ स्वात्मलाभः [ = स्वस्यास्तित्वं ) प्रधानं यस्य ।

२१ ' एकपदे ' इति ग.ज.योः पाठः । इतरेषां तु ' एकदेशे ' इति । ' एकदेशे ' इत्यस्य ' एकपदे ' इत्यर्थो न कुत्रापि दृष्टः ।

२६ स्वरूपस्था = क्रियारूपेण वर्तमाना ।

१३ ८ प्रकृतेः धातोरर्थः । प्रत्ययार्थः प्रकृत्यर्थं विशिनष्टि । आदिशब्देन साधनानि लक्ष्यन्ते ।

९ अनर्थान्तरं नार्थभेदः । समानार्थाः शब्दा इति भावः ।

१०-११ आख्यातरूपात् स्त्रीपुंनपुंसकानि कथं ज्ञायेरन्निति न स्पष्टम् । ' क्रियावाचकमाख्यातं लिङ्गतो न विशिष्यते ' इत्यस्माद्वाक्यात् ' स्त्रीपुंनपुंसकानि ' इति पाठोऽसाधुरयुक्तश्च । स्त्रीपुंनपुंसकस्थाने ' साधनानि ' इति स्यात् ।

१७ ' यत्किंचित् ' ' साधनं ' इत्यनेनान्वेति ।

पत्रं पङ्क्तिः

१४ १८ पक्त्रादौ साधने सति ।

२० सोऽर्थ एव तस्य शब्दस्य ।

२५ 'ननु ००० आख्यातमिति' इयं शङ्का ।

१ निरुपाख्या निर्देष्टुमशक्या । ४ तथा+अग्रहणे ।

७ पूर्वं गृहीता गृहीतपूर्वा ।

८ ओदनकर्मिका या देवदत्तकर्तृका क्रिया सा ।

१० ग. च. ज. पुस्तकेषु 'व्यापरं' वर्तते ।

११ अपाकरोति आकाङ्क्षाम् । पूरयतीत्यर्थः ।

१५ ४ 'अवयवार्थानि' इत्यस्य पाठस्य न कोऽप्यर्थः ।

५ लक्ष्यमाणः शब्दः । तयैव = तया क्रिययैव ।

१३ क्रिया = अविवक्षिता ।

१४ क्रियाजनितं क्रियाशेषभूतम् उत्तरकालम् इति समानार्थाः । तत् द्रव्यं हि क्रियया जनितम् । क्रिया संपूर्णा विनष्टा । तस्याः शेषभूतं पाकरागाख्यं सत्त्वं द्रव्यम् उत्तरकालम् उत्तरकालीनम् अभिधाय क्रियारूपोऽसौ धात्वर्थो निवृत्तो भवति । स्वजनितं स्वशेषभूतम् उत्तरकालीनं सत्त्वमभिधाय क्रियासौ निवृत्ता भवति ।
'तद्विक्रिया' इति नायं पाठः समीचीनः । तस्मिन् द्रव्ये ओदने विक्रिया तया जनितं पाकम् अभिधाय । द्रव्यं पाकाख्यं क्रियाशेषभूतं तत् विक्रियाजनितम् । विक्रिया च ओदने तण्डुलादौ भवति ।
च. ठ. पुस्तकयोः 'धात्वर्थः' इत्यस्य स्थाने 'कृतार्थः' इति पाठः । असौ आख्यातशब्दः कृतार्थो भूत्वा व्यावर्तते ।

२४ कृदन्ते विहिताः कृत्प्रत्ययाः ण्वुलादयः ।

१६ ५ तदक्षरविधौ युक्तं = तस्य शब्दस्य अक्षरविधौ अक्षररचनायां युक्तम् । तम् अक्षरसमुदायम् इत्यर्थः ।

७–८ यत् विभक्तिप्रत्ययान् गृह्णाति यस्य च भिन्नानि लिङ्गानि वचनानि च सन्ति तन्नाम ।

१८ परस्पराविनाभूतयोः = परस्परासंबद्धयोः । एते नामाख्याते वाक्यस्थे परस्परसंबद्धे । यदा न वाक्यस्थे तदा नामानि सत्त्वप्रधानान्याख्यातं भावप्रधानम् । च. पुस्तके 'परस्परविना' इति शुद्धः पाठः । केनाप्यशास्त्रज्ञेन 'परस्पराविना' इति स पाठोऽशुद्धीकृतः ।

पत्रं पङ्क्तिः

२ यतः = अतः ।

१७ ८ तासामनेकासाम् उपानदधिनहनादिकानाम् अभिनिर्वृत्तिः निष्पादनम् । अभिनिर्वर्त्यमानं भावम् ।

१८ ५ अभिनिर्वर्तमानं = अभिनिर्वर्त्यमानम् । अकर्मकप्रयोगः सौकर्य-दर्शनार्थः ।

९ भावप्रधानमाख्यातमिति प्रयुक्तं लक्षणम् ।

१०–११ संख्या = एकवचनादीनि । विभक्तिव्ययः = प्रथमादिभिः रूपभेदः । लिङ्गानि प्रसिद्धानि ।

१४–१६ एवंशब्दस्त्रिवारं प्रयुक्तो निश्चयद्योतनार्थम् ।

१७ उक्तप्रयोजनम् । = अविभक्तकर्तृकमिति ।

२१ १३ व्याहारौ ( पाठभेदः ) = पाठौ । प्राप्नुतः = संभवतः ।

१५ मतमाशङ्क्य तद्द्वारेण । अवतार्यते = अवतरणमिति दीयते । प्रतार्यते ( ग. ज. ज. पाठः ) = विस्तरेण कथ्यते ।

१७ अभिधानाभिधेयाभिधातॄणां व्याप्तिरूपेण सहवासः । यदा अभिधेयानि वाच्यार्था अभिधातारश्च कल्पान्ते ब्रह्मणि विलीना भवन्ति तदा अभिधानान्यपि कारणभावमापद्यन्ते ।

१८ अधिकं कार्यभावादन्यम् ।

१९ अन्यस्मिन् पूर्वस्मिन्कल्पे कृतानि विशिष्टानि कर्माणि (हिरण्यगर्भेण) तैर्निर्जितानि कार्यकारणानि येन । अत्र च शाङ्करभाष्यम् 'अतीतकल्पानुष्ठितप्रकृष्टज्ञानकर्मणामीश्वराणां हिरण्यगर्भादीनां वर्तमानकाले प्रादुर्भवतां परमेश्वरानुगृहीतानां सुप्तप्रतिबुद्धवत्कल्पान्तरव्यवहारानुसंधानोपपत्तिः' (ब्र० सू० १ । ३ । ३० )। 'निर्जित' 'निर्मित' इति उभावपि पाठौ दुर्बोधौ । 'निर्मित' इति पाठस्तु दुर्बोधतरः ।

२२ ११ तयोरभिधानरूपेत्यादिवाक्यमशुद्धं कठिनं च । च. पुस्तकस्थपाठः 'तयोरभिधानरूपा शास्त्राभिमतप्रयोजनविजिज्ञापयिषया पुरुषेण तदभिव्यक्तिसामर्थ्येन स्वगुणभूतेन प्रयत्नेनोदीर्यमाणा सत्युरःकण्ठादिषु वर्णस्थानेषु निषद्यमानतया पुरुषार्थाभिधानसमर्थवर्णादिभावमापद्यमानः पुरुषप्रयत्नेन बहिर्विनिक्षिप्तोऽविनाशिनि व्यक्तिभावमापन्नः श्रोत्रद्वारेणानुप्रविश्य प्रत्याय्यस्य बुद्धिं सर्वार्थरूपां सर्वाभिधानरूपां व्याप्नोति' । अभिधानरूपा बुद्धिः । शास्त्राभिमतप्रयोजनं कमपि पुरुषार्थं विज्ञाप-

पत्रं पाङ्क्तिः

यितुं पुरुषः तत्प्रयोजनाभिव्यक्त्यै यदावश्यकं सामर्थ्य तेन प्रयत्नं कृत्वा तां बुद्धिमुदीरयति। उदीर्यमाणा सती सा बुद्धिः उरःकण्ठादिस्थानेषु निपद्य ( स्थानानि व्याप्य ) पुरुषार्थं कथयितुं ये वर्णा आवश्यकास्तेषां रूपाणि गृह्णन्ती ( 'आपद्यमानः' इति पुल्लिङ्गमाकस्मिकमेव यस्मात् ' उदीर्यमाणा सती ' इति स्त्रीलिङ्गम् ) पुरुषप्रयत्नेन बहिर्विनिक्षिप्ता व्यक्तिभावमापन्ना यस्मिन्प्रतीतिरुत्पाद्या तस्य बुद्धिं व्याप्नोति। च. पुस्तके बुद्धिकर्तृकं वाक्यं शब्दकर्तृकं च वाक्यं मिश्रिते। मूलपुस्तके बुद्धिकर्तृकमेव वाक्यं स्यात्। तदर्थमजानता केनापि शब्दकर्तृकं वाक्यं रचितं स्यात्। अभिधानरूपा बुद्धिः सामान्या। सा व्यक्तिभावं भिन्नभिन्नवर्णभावमापद्यते।

१२ अभिधानरूपया बुध्या = अभिधानबुद्धिसाहाय्येन।

१४ तथा = अत एव।

१५ अविनाशिनि = आकाशे।

१६ प्रत्याय्यः प्रत्याययितुं योग्यः इष्टो वा। प्रत्युपसृष्टस्य इण्धातोः णिजन्तस्य कृत्यप्रत्ययान्तं रूपम्। ' मानतया ' अथवा ' निष्पद्यमानतया ' इत्यस्यार्थौ न ज्ञायते।

२२ स्फोटविचारः शाङ्करभाष्ये ब्रह्मसूत्रे १–३–२८। शब्दनित्यत्वं मीमांसादर्शने प्रथमाध्यास्य प्रथमपादे ४–२४ सूत्रेषु प्रतिपाद्यते।

१९ ' आदधीत ' इत्यस्य शब्दः कर्ता।

२० शब्दः प्रथमं परस्य बुद्धिं प्रविश्य तां व्याप्नोति। अनन्तरं च तस्य प्रत्ययमुत्पादयति। बुद्धौ अनवस्थितो तां न व्याप्नुयात्।

२३ २ तिरोभवितुमुपक्रमते शब्दस्य नित्यत्वपक्षे। विनाशं वोपैति अनित्यत्वपक्षे।

२–३ नामाख्यातादयः शब्दाः स्वस्वदेशे उपजन्यन्ते। वाक्यान्ते एते प्रदेशविशेषाः स्मर्यन्ते। अनन्तरं वाक्यस्थशब्दानां परिसंख्यानं भवति। तस्य विशिष्टशब्दस्य विशेषप्रदेशोपजनितस्य स्वस्वदेशे उपजनितैरन्यैः शब्दैः परिसंख्यानम्।

५ घ. पुस्तकस्थपाठः ' पुरुषप्रयत्नोपजनिता वक्त्रोद्याताः शब्द-

२३ ५ व्यक्तयः' = पुरुषप्रयत्नेनोपजनिताः वक्त्रादुद्याताः ( उत्+याताः ) शब्दव्यक्तयः।

पत्रं पङ्क्तिः

‘ भूयः ’ इत्यस्य = ‘ बुद्धिद्वारेणावस्थिताः ’ इत्यनेनान्वयः।

१२ ‘ उपचर्येते ’ इत्यस्य ‘ गुणप्रधानभावौ ’ कर्ता।
तदर्थया = धात्वर्थया व्यक्त्या।

१४ तदभिधायकत्वाच्छब्दस्य = शब्दस्तां धात्वादिबुद्धिमभिधत्ते।

१७ अनैकान्तिकः = अव्यापकः।

२१ तदाश्रयस्य = पदचतुष्टयाश्रयस्य।

२४ ९ आगमनमात्रं = केवलं सिद्धान्तवचनम्।

१५ दोषैर्न संभक्ष्यामहे = दोषभाजो न भविष्यामः।

१६ ‘ अतिक्लेशेनेति ’ अत्र ‘ इति’पदस्यान्वयः ‘ नोपादेयं ’ (१३) इत्यनेन।

२१ तत् निःसंदिग्धीकरणं येन अभिनयार्थो ज्ञायते तस्यैव नेतरस्य।

२३–२४ पदचतुष्टयदोषा नाध्ययनकृताः। अतोऽध्ययनकृतैर्दोषैरिति प्रमादादनवधानाद्वा।

२५ ९ मनुष्याः परस्परमभिदधति। एवमेव देवानपि।

२२ नाभिदधते = नाभिदधीरन् पुरुषाः।

२४ अयथावत् ( घ. झ. ट. पाठः) = सप्रमादम्।

२६ १ विद्यानित्यत्वात् तदभावो मन्त्राभावः। तेन कर्म विगुणम्।

२ ग. च. ज. पाठः ‘देवताहीनं कर्मफलं न संपद्यते ’ = देवताहीनत्वहेतोः कर्मफलं न जायते।

३ दुरिष्टं = विगुणं कर्भ।

४ विनियमो विशेषेण नियमः। प्रयोगस्यानुपारिपाटिः प्रयोगार्थं शब्दानां विशिष्टः क्रमः।

६ ‘ उच्यन्ते ’ इत्यस्य कर्ता न ‘ मन्त्राः ’ किंतु ‘ पदजातम् ’। उच्यते इति रूपं शुद्धम्।

८ प्रथमम् इदं वाक्यं द्वितीयम् इदमिति क्रमेण। अयमर्थः इदं वस्तु वा प्रथमम् इति क्रमेण। अर्थः वस्तु इत्यनर्थान्तरम्।

१० ‘ तेनैव वाक्यविरचनानुक्रमेणैव ’ अत्र द्वितीय ‘ एव’शब्दो व्यर्थः।

१२ ‘ तद्दोषं वा ’ अत्र वा = प्रायः।

१६ अविचारितमेव अत्र ‘ एव’शब्दो व्यर्थः। अविचारितमेव वेदे पठ्यते इति न। किंतु वेदे विचारितमेव पठ्यते। ‘ न ह्यविचारि-

पत्रं पङ्क्तिः

१७ तमेव विज्ञायते ' अस्मिन्पाठे अविचारितमेव विज्ञायते इति न। किंतु यद्विचार्यते तदेव सुष्ठु ज्ञायते इत्यर्थः। सम्यग्ज्ञानायेदृशेन विचारेणेदृशो वाद आवश्यकः। ' वादे वादे जायते तत्त्वबोधः '।

१ स्वात्मस्थो विशेषः क्रियात्वद्रव्यत्वरूपः। कार्यात्मभावात् प्रध्वस्तयोः।

३ ' सदन ' ( क. ख. ट. पाठः ) इत्यस्यार्थो न ज्ञायते। ' सीदन्नेव न किंचित्करोति अचलस्तिष्ठति ' इत्यर्थः स्यात्। भवनमेव भवनमात्रं तेनाभिसंबन्धस्तद्वतात्मभावेन। ' मात्राभिसंबन्धिना तनुमात्रा ' ( घ. च. झ. ट. पाठः ) इदमपि न ज्ञायते। ठ. पुस्तके 'तनुमात्रः'।

६ ' प्रहीणसर्वविशेष ' अत्र ' विशेष' इत्यस्य पश्चाद्विसर्गेण भाव्यम्। च० पुस्तके भिन्नमस्या विसर्गोऽधोभागे लिखितः।

८ शब्दस्य विभ्वी गतिः। अस्मिन्ब्रह्माण्डे न किंचिद्वस्तु वर्तते यच्छब्देन नाक्रम्यते। अस्माच्च कारणाच्छब्दे नानाप्रकारा नाना विशेषा विद्यन्ते। तान् सर्वान् विशेषानपोह्य शब्दः केवलस्तिष्ठति। यथा शब्दः सोपपदस्तथा निरुपपदोऽपि। ' शब्दगत ' इति पाठे शब्दसंबन्धि विभुत्वम्।

९ आस्कन्दतः = आक्रमतः। यतः = अतः। सत्त्वं साधारण्यमित्येकार्थौ। साधारण्यं = सामान्यरूपम्।

१२ एके सांख्याः।

१३ एते सर्वे भावविकारा इति हेतुः।

१५ तेनैव हेतुना शक्तिः पुरुषमप्याक्रामति। पुरुषभाव इति सोपपदप्रयोगः।

१७ शून्यशब्दस्थाने भावशब्दः प्रयुक्तो न दृष्टः। शून्यशब्देन सह भावशब्दः प्रयुक्तो न कदापि दृष्टः। यथा प्रधानभावः परमाणुभाव इति प्रयोगस्तथा शून्यभाव इति प्रयोगो न दृष्टः। भावशब्दस्य आसङ्गः इति संधिविग्रहे शून्यभाव इति प्रयोगो दृश्यते। शून्यशब्दोऽपि भावशब्देन संगतो दृष्टः।

१९ ' तस्मान्न शून्यशब्देनेहाभाव एवोच्यते ' इति ट. पाठः। शून्यशब्देन इह एषूदाहरणेषु केवलः अभावो नैवोच्यते किंतु सोपपदोऽभाव उच्यते।

पत्रं पङ्क्तिः

२७ अयं कारणात्मभाववादो दुर्गाचार्येण विद्वत्ताप्रदर्शनार्थमेव प्रसञ्जितः। शङ्कराचार्यकृतब्रह्मसूत्रभाष्येऽयं वादः प्रसिद्धः। शङ्कराचार्यभाष्येण दुर्गाचार्यस्य परिचयस्तत्र तत्र स्पष्टः।

२० प्रत्यपेक्षाकृतम् अथवा अपेक्षाकृतं किंचिद्वस्तुसंबद्धं न तु केवलं यथा गृहस्य शून्यत्वं ग्रामस्य शून्यत्वमिति।

२८ १ अस्मिन् कारणात्मवादे कारणात्मा अभावोऽथवा कारणं शून्यमिति वैनाशिको मन्यते। तथा सति वैनाशिकपक्षे भावो नाम शून्यम्। तस्मात् शून्यभाव इतिवत् भावभाव इति प्रयोगो भवेत्। न चेदृशः प्रयोगो दृष्टः। प्रसिद्धपूर्वः पूर्वं प्रसिद्धः। पूर्वप्रयोगः पूर्वः प्रयोगः। अत्र द्वावपि पाठौ समीचीनौ।

३ भू = अञ् ( घञ् ) = भावः।

६ एतं सद्भावं ( सर्वोपपदहीनम् आत्मभावं ) विदन्ति ते।

७ ' अवधृत'स्थाने च० पुस्तके ' विवृत'शब्दः।

आत्मनः संप्रपातः प्रणाशः भावविकारा एवात्मा इति दुर्दर्शनेन। तस्मात् संप्रपातात् कातर्यं तेन हीनाः।

८ विशुद्धौ दर्शनं ज्ञानं प्रयोगश्च येषाम्।

तानि तानि कर्माणि कृत्वा मुक्तानि गतानि अधिकारबन्धनानि कर्मबन्धनानि येषाम्।

७–८ ' आत्मसंप्रपातेत्यादि°तत्तत्कारितया ' इत्यस्य स्थाने ' आत्मकृत्स्नकारितया ' इति घ. झ. ट. पाठः समीचीनतरः। आत्मा कृत्स्नं करोतीति सर्वं खल्विदमात्मेति ज्ञानेन कर्मबन्धनान्मुक्ताः।

१० वेदानुशासनस्य एकदेशान्। वेदो ब्रह्मभावं भावं वानुशास्ति। प्रधानादयस्तस्यैकदेशाः।

११ स्वमतौ या याः कल्पनास्तासां ये हेतवस्तैरेते प्रधानादयो व्यवहिताः। ' स्वमत'इति पाठे स्वेष्टाः स्वग्राह्या वा। न ह्येते साक्षात्स्रष्टारः। प्रधानादीन् तैस्तैः श्रुतिविरुद्धैर्हेतुभिरेते सांख्यादयः प्रस्थापयन्ति। ते एते प्रधानादयः श्रुतिप्रतिपादितब्रह्मणो व्यवहिता दूरे स्थिताः। एते कारणात्मेति कृत्वा ( घ. झ. ट. पाठः ' मत्वा ' सुबोधः समीचीनश्च ) अस्थिरानपि स्थिरीकृत्य नित्या एते इति मन्यन्ते। इदं नित्यत्वं सापेक्षं न तु निरपेक्षम्।

पत्रं पङ्क्तिः

१२ तदेतस्मात् = तस्मादेतस्मात् । केवलादात्मन एते सांख्यादयो बिभ्यति । 'भवनमात्राभिसंबन्धेन' इत्यस्य 'उद्विजन्तः' इत्यनेन संबन्धः । यदि वयं केवलात्मनि श्रद्दध्याम कर्माणि उपभोगांश्च त्यजेम सत्यं खलु वयं प्रणश्येमेति मत्वा कर्मसु व्यापृता भवन्ति उपभोगांश्च भुञ्जते ।

१३ 'कर्मोपभोगसंमामाप्य संतानं' इति घ. झ. ट. पाठो दुर्बोधोऽशुद्धत्वात् ।

१४ एते ज्ञानसमर्थाः किंतु भीताः । केचित्पुनर्ज्ञानमवाप्तुमसमर्थाः । तेषां शक्तिहानम् असंबोधनात् अज्ञानात् एव ।

१५ कृदन्तप्रत्ययः घञ् । तेन भवतेर्भावः । भवतेर्भावस्य वा ।

१७ वेदरहस्यब्राह्मणैः = आरण्यकैः उपनिषद्भिर्वा । 'ब्राह्मणे' इति च.-पुस्तकपाठः । किमिदं रहस्यब्राह्मणमिति न ज्ञायते ।

२९ १ कारणे यावत् स्थितिः तावत् भावस्याविकृतिः । तस्यामवस्थायां भावोऽभिन्न एवेति सुष्ठु ज्ञायते ।

४ उपचारतः = विस्तरेण ।

७ भू सत्तायामिति भवतिपदस्य वाच्यार्थः सत्ता । तस्या भवनं संपादनं भावः । पूर्णा भवतिक्रिया भाव इति उच्यते । ७ सन्मात्रं = सत्त्वैव ।

९ प्रस्कन्दाः = निर्झराः । उपलब्धकोशेष्वयं शब्दो न विद्यते । वैशेषिकेण = गुणेनेत्यर्थः । भावविकारात्मलाभाय भवन्ति = भावविकाररूपाणि लभन्ते । अनेन भवन्तिशब्दस्य स्वारस्यं कथ्यते ।

१० भवन्तिशब्द इतिपरः ।

१२ 'तिकादिभ्यः फिञ्' (पा० ४ । १ । १५४) ।

१३ सुखार्थम् = अल्पमपि शङ्काकारणं न स्यादिति ।

१८ ग. ज. पाठः ध्रिविद्ययमान = ध्रियमाण = विद्यमान । च. पाठः ध्रियमाण ।

२४ निष्ठा = 'क्तक्तवतू निष्ठा' इति पाणिनिसूत्रम् (पा० १ । १।२६) ।

३० ७ द्वारद्वारिभावेन = अस्तिविकारो द्वारी जनिर्द्वारम् । अस्तिविकारो जनिद्वारान्निःसरति ।

८ 'विपरिणमतिः' इति पाठे विपरिणमतिविकारः । किंतु 'अस्ति'

पत्रं पङ्क्तिः

शब्दस्यानन्तरं विसर्गो न विद्यते । च. पाठो 'विपारिणमति'। च. पुस्तकेऽनन्तरीयवाक्ये 'विपारिणमते' इत्यात्मनेपदरूपं वर्तते।

२२ च. पुस्तके ट. पुस्तकस्थशुद्धीकृतपाठे च 'अपूर्णत्वात्' इत्यस्य स्थाने 'अपूर्वत्वात्' इति वर्तते ।

३२ २ उपेक्षितव्याः = उपगम्य ईक्षितव्याः ।

१८ यो यस्मिन्वचने यथा स्यात्तथा । अथवा । वचनमनतिक्रम्य ।

३३ ७ 'प्रेत्यादि...भृशार्थेषु'। 'प्र' आदिकर्मणि उपदीर्णे भृशे अर्थे वर्तते । आदिकर्मणि यथा प्रारभते । भृशे यथा प्रकृष्टम् । उपदीर्णे यथा प्रभ्रष्टम् ।

३४ ९ स्वप्रत्ययेन विदुषाम् = अस्माकमयमभ्युद्यमोऽभ्युदयनिःश्रेयसार्थ इति विद्वांसो निश्चयेन प्रतियन्ति जानन्ति श्रद्दधते ।

१४ स्वार्थाभिधानशक्त्याः आधारभूते । उपसर्गाः नामाख्यातसंबन्धेनैव स्वमर्थमभिधातुं शक्नुवन्ति ।

२४ अयं तावत् आ उपसर्गः ।

३५ उपजायत इति यदुक्तं तत्र ब्रूमः ।

३५ १० अपरभावः = पश्चाद्भाविनी क्रिया ।

११ 'अपीति संसर्गे' इत्यस्योदाहरणानि 'अपिधानम्' 'अपिकक्षे' 'अपिशर्वरी' इत्यादीनि । 'सर्पिषोऽपि' इत्यत्र 'अपिः' लेशवाचकपदस्थाने प्रयुज्यते । 'अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु' (पा० १।४।९६)।

१२ परिधापयति [ च. पाठः ] = परितः सर्वतः आच्छादयति ।

१३ अधितिष्ठपतिरिति ( घ. ट. पाठः ) = अधितिष्ठति+अधिपतिरिति ।

१६ न गृह्यते = न सम्यगुक्तम् ।

१७ 'सिद्धः' इति घ. झ. ट. ठ. पाठः ।

३६ २३ नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्तीति सामान्यलक्षणं निपातानामपि । तदनुषक्तं निपातलक्षणम् ।

२३ वर्तयिष्यामः = कथयिष्यामः । २५ ये एतेषामर्थाः इति वाक्यसमाप्तिः ।

३७ १ 'उच्यन्ते' इति झ. ट. ठ. पाठः। च. पुस्तके 'उच्यन्ते' इति पाठः संशयास्पदं यस्मादनुस्वारचिह्नमतीवाल्पमितरत्रस्थानुस्वारविसदृशं च । उच्यन्ते अर्थाः ।

पत्रं पङ्क्तिः

३७ ४ तस्य गुणस्य प्रकाशनमिति सुवचम् । 'तद्गुण'शब्दो न केवलं व्यर्थः किंतु व्यामोहकारकः ।

१५ 'का वोपमा' पाठभेदः । अत्र वा = च ।

२२ क. ख. घ. झ. ट. ठ. पुस्तकानि ग. च. ज. पुस्तकेभ्योऽर्वाचीनानि । यतः कादिपुस्तकवर्गे 'अथर्व'शब्दो विद्यते । पुरातनकाले 'अथर्वसंहिता' वेदसमुदाये बहुभिर्नान्तरभाव्यत ।

३८ १ ऐतरेयके रहस्यब्राह्मणे = ऐतरेयारण्यके ।

३ शतर्चिनः माध्यमाः गृत्समदः इत्येकैकं मन्त्रद्रष्टारमनुक्रमेण गृहीत्वा तत्तन्नाम व्युत्पादयति । ततश्च पर्यायेण 'एतमेव प्राणं शतर्चिन आचक्षते' इत्यादिना सर्वे एते मन्त्रद्रष्टारः प्राण एवेति दर्शयति । 'पर्यायवृत्या' 'पर्यावृत्या' इति द्वावपि पाठावेकार्थौ ।

६ 'एता ऋचः शौनकेन संदृष्टाः' इति वचनस्य क आधारः । सर्वानुक्रमणी कात्यायनेन विरचिता ।

७ श्रुतिस्मृत्योर्विरोधेऽनुमानगम्यं तर्कमूलं स्मृतिप्रामाण्यमुपेक्ष्यम् । असति विरोधेऽनुमानं प्रमाणम् ।

१० परिशयः = आश्रितः । अयं शब्दो न कस्मिंश्चिदपि कोशे दीयते । 'यदेष एकादशः प्रयाजः परिशय आत्मा वा एतदात्मानं परिशये' (मैत्रा० सं ३ । ९ । ८)। अत्रत्यः परिशयशब्दो दुर्गेण आश्रितार्थे प्रयुक्तः स्यात् । परिशय एवेति परिशयमात्रम् । शेषशब्दो व्यर्थः । अकस्मात् = परमेश्वरानुग्रहाद्विना ।

उभावपि क्षेत्रज्ञौ जीवात्मपरमात्मानौ मन्त्रद्रष्टारौ । १२ '°विपाकानुरूपेण' इति ग. च. ज. ठ. पाठः । किंतु 'अनुरूपेण' इत्यस्य विशेष्यं न दृश्यते ।

१८ ताण्डकरहस्यब्राह्मणं छान्दोग्योपनिषदेव ।

२० विशिशेषाष्यार्षं° (घ. झ. ट. पाठः) = विशिष्यार्षं° + विशेषार्षं° । विशेषार्षम् अथवा विशिष्टार्षं = विशिष्ट ऋषिः ।

२१ श्येनादिषु = श्येनयागादिषु । श्येनयागाः केचिदभिचारयागाः । निष्केवल्यं = मध्यंदिने पठ्यमानं (गद्यरूपं) शस्त्रम् । मान्यवी = मन्युदेवताका । मान्यवे ग. च. ज. पाठः । मान्यत्रे = मन्युदृष्टसूक्तसंग्रहे ।

पत्रं पङ्क्तिः

२१ मन्युः पुनरिन्द्र एवेति समर्थयितुं 'मन्युरिन्द्रो मन्युरेवास देवो मन्युर्होता वरुणो जातवेदाः' (ऋ० सं० १०।८३।२) इति मन्त्रः क. ख. पुस्तकयोरुदाह्रियते।

२२ 'मांहाभाग्यो ००० स्तुत्यभिधानसंबन्धात्' इदं सप्तमाध्याये द्वितीयपादस्य प्रथमे खण्डे स्पष्टम्। पृथगभिधानानां स्तुत्यभिधानैः संबन्धात्। पृथगभिधानेन स्तुतिः। तस्माद्देवतान्तरम्। °संबन्धत्वात् (ग. च. ज. पाठः)। त्वप्रत्ययो हेतुं दर्शयति। 'स्तुत्यभिधान' अत्र 'अभिधान'शब्दो व्यर्थः। भूमिकायां विषयसंग्रहे 'स्तुतिसंबन्धात्' इत्येव वर्तते।

३९ १ यजिः = यागः। अभिहितिः = अभिधानम्।

२ अभिहितिसंस्कारेणासमर्थो वक्तुं = महेन्द्रस्य नामास्मिन्मन्त्रे न विद्यते।

३ स्तुत्युत्पाद्यं फलं भिन्नम्। तन्माहेन्द्रग्रहयजिसंनिधौ वर्तते। अतस्तन्मुख्यफलस्योपकरोति। ग्रहः = आहुतिपात्रम्।

५ स्तौतिशंसती = स्तोत्रं स्तौति शस्त्रं शंसति। एते प्रधानत्वेन क्रियोत्पत्तिम् अपूर्वोत्पत्तिं कर्तुं समर्थे यतो मुख्ययागमेते स्तुतः शंसतश्च।

८–१० इन्द्र आपः सूर्यादयश्च देवताः स्तुतिभाज एव।

१६ 'येऽपि' इत्यत्र 'यद्यपि' इति च. ठ. पाठः। अपि च यदि केचित् प्रत्याजिहीर्षन्त्येतद्वनं (तर्हि) तेषामित्यन्वयः।

४० ६ विभूतियोगेऽवस्थितम् = विभूतियुक्तं समृद्धम्।

११–१२ 'किं पुनर्लक्षणम्' इत्यस्य नेन्द्रं देवममंसतेति प्रतिषेधार्थीयेन संबन्धो नोपमार्थीयेन। किंतु 'प्रतिषेधार्थीयः पुर०' इत्यादि क. ख. झ. पुस्तकेष्वेव विद्यते।

१२ उपचारः = प्रयोगः।

४१ ९ कुल्माषाः = अर्धस्विन्ना यवाः कुत्सितमाषा वा। 'आचार्यः कस्मा०००बुद्धिमिति' (३६।८।९) क्षेपकमिव भाति यस्माद्दुर्गाचार्यस्तन्न विवृणोति।

९ आहरिष्यति (च. पाठः) = अयं वराकः किमन्यदाहरिष्यति।

पत्रं पङ्क्तिः

४१ ७ हेत्वपदेशे ( ३६ । ११ ) = हेतुर्न भविष्यतीति शङ्काकथने। 'इदं नु कारिष्यति ' अयं प्रथमः प्रश्नः । तस्योत्तरं करिष्यतीति । 'कथं नु कारिष्यति ' अयं द्वितीयः । तस्योत्तरं प्रश्नपुनरुक्तिः । केवलमुत्तरे संदेहाभावद्योतकः स्वरभेदः । 'पुनः पृच्छसि कथं नु कारिष्यति ' इति । कारिष्यत्येवेति ममोत्तरम् ।

८ 'कथं नु कारिष्यति ' अस्मिन्प्रथमप्रश्ने नुनिपातोऽनावश्यकः । ठ. पुस्तके च नास्ति । कथं नु कारिष्यतीति द्वितीयप्रश्ने करिष्यतीति वचनस्य संदेहपूर्वकमनुज्ञानम् अनुज्ञा । दुर्गाचार्येण कृतं विवरणं दुर्बोधम् ।

११ ग. च. ज. झ. ट. पुस्तकेषु 'कथं'स्थाने 'कटं ' घ. पुस्तके च 'कठं ' वर्तते । कथमित्यस्यायं तिरस्कृतिव्यञ्जक उच्चारः स्यात् ।

२२ पर्यायवचनः पर्यायवाचकः शब्दः । वक्तीति वचनः ।

४२ ४–५ सरूपविरूपैकशेषात् = 'सरूपाणामेकशेष एकविभक्तौ ' ( पा० १ । २ । ६४ ) यथा रामश्च रामश्च रामौ रामश्च रामश्च रामश्च रामाः इति सरूपसमासे । रामश्च लक्ष्मणश्च रामलक्ष्मणौ इति विरूप-समासे । माता च पिता च पितरौ इत्येकशेषसमासे । एषु समा-सेषु चलोपः । 'च'शब्दो न श्रूयते । अभ्याहृतश्च द्वौ भिन्नौ रामौ अनेके भिन्ना रामा इति ज्ञापयति ।

६ 'अर्थतो वा ' क. ख. च. पुस्तकेषु विद्यते । किंतु 'वा ' इत्यस्य कैमर्थ्यं न ज्ञायते । च. पुस्तकस्थप्रतीकेऽपि 'पृथक्त्वतो वा मह ' ( ४२ । २ ) इत्यत्र 'वा ' विद्यते । किन्त्वयं पाठोऽशुद्धो दुर्बोधश्च ।

७ न तु इत्यादि = सत्यं श्रूयेते किंतु तयोर्न पृथक्कथनम् ।

९ तेन 'च'शब्देन । 'नात्वेन ' इति ठ.पाठोऽशुद्धः । 'नानात्वेन ' इति स्यात् ।

१२ तद्भवति = स भवति ।

१७–१८ अरातीवा चित् = अदानशीलोऽपि ।

१८ अद्रिवज्रः तद्वन् हे वज्रिन् ।

२० 'पङ्क्त्या ' इति पाठभेदः । पङ्क्तिनाम च्छन्दः ।

पत्रं पङ्क्तिः

४३ ९ यामी=यमपुत्रस्य दमनस्यार्षम् ।

४४ १६ 'वायुर्वा त्वा मनुर्वा त्वेति युनक्ति न वा एतन्मनुष्या योक्तुमर्हन्ति देवताभिरेवैनान्युनक्ति' ( मैत्रा० सं० १।११।६ )। 'वायुर्वा त्वा मनुर्वा त्वेत्याह। एतं वा एता देवता अग्रे अश्वमयुञ्जन्। ताभिरेवैनान्युनक्ति' ( तै० ब्रा० १।३।९ )।

४५ २ द्वयोरर्थयोः उद्दिष्टयोः ।

११ अभिमतरसगोपायनस्य = अभिमतः दुग्धरूपः रसो यासां ताभ्यो गोभ्य उदकदानं पानाय। अथवा। अभिमतरसेन उदकेन गवां पायनम् ।

२२ घ. झ. ट. पाठः विध्वंसस्यते = विध्वंसते + विध्वस्यते ।

४६ ९ उपह्वानम् = आह्वानम् ।

९ अपिन्वत् = पुष्टा अकरोत्

१४ व्याकरिष्यति = व्याकर्तुं स्पष्टीकर्तुं शक्नुयात् ।

१८ विद्याप्रकर्षे = स्वज्ञानविशेषं दर्शयितुम् ।

४७ २–३ अयमर्थ एवं नेति मत्वा ततः°। पूर्वस्य पूर्वेणोक्तम्। इतरम् अर्थम्। अन्यः अर्थः अर्थान्तरम् ( च. पाठः )। देवदत्तो यदवदत्त तत्तादृशमित्यन्यं पृच्छति। ६ 'खल्विति च' प्रतिषेधे। मेत्ययं प्रतिषेधे एव। ८ खलुनिपातः पदपूरणेऽपि। खल्वित्यस्य प्रतिषेधार्थीयः प्रयोगः क्वचिदेव। पदपूरणेऽपि विरलः। खलु भाषायां सत्यमित्यर्थे वर्तते। यास्ककाले नायमस्यार्थ आसीदिति भाति।

९ शश्वत् = नित्यम् ( भाषायाम् )। विचिकित्सार्थो न दृश्यते। छन्दसि के तेऽन्येऽर्था इति न ज्ञायते। 'अनुपृष्टे अस्वयं पृष्टे' ( ४४।१२ ) अस्यार्थो न ज्ञायते ।

२२ स्त्यै शब्दसंघातयोरित्यस्य निष्ठान्तं रूपम् ।

२२ च. पुस्तके कुम्भ इत्यस्य स्थाने कुजः ।

४८ १८ 'अथ'स्थाने ज. ठ. पाठः 'अद्य'।

४९ ९ कारकनियमः=' सतः ' इत्यनेन कारकम् अत्र नियतं द्रष्टव्यम्।

६ सचेतसा=बुद्धिमता। 'चेतसा' अयं युक्ततमः पाठः ।

९ नानात्वेत ( न ? ) व्यवास्थितपा ( स्या ? ) पन्य ( त्य ? ) मसभकुलजस्येति घ. झ. ठ. पुस्तकस्थोऽशुद्धः पाठः ।

पत्रं पङ्क्तिः

४९ १० सतामानेयः=सतां वश्यः शास्यो वा।

५० २३ 'अन्येभ्योऽपि दास्यसि चेद्देहि' अयं ठ. पाठः समीचीनतरः।

५१ ५–७ दक्षिणानयनं ( मैत्रा. सं. ४।८।२।३ मान० श्रौ० २।४।५।९—१३ )।

१२ 'न त्वन्येन' इत्यपपाठः। 'तु' 'नु' इत्यस्य स्थाने प्रमादात्।

१४ परिवृल्हं हि परिवृल्हं ( ग. च. ज. पाठः ) = 'परिवृल्हं। परिवृल्हं हि' एवं स्यात्।

१६ वासाभविमुखः ( च. पाठः ) = वासामभिमुखः। 'मभि' इत्यस्य स्थाने 'भवि' प्रमादात्।

५२ ४ सीमिति परिग्रहार्थीयं चेत्।

६–७ स्पन्दनाः स्पन्दन्ते। हस्तलिखितपुस्तकेषु 'प''य'वर्णौ सदृशौ भातः। 'स्यंदनात् स्पंदनात् स्यंदते स्पंदते' द्वावपि पाठौ साधू।

१२ शीघ्रा एव शीघ्रिका। स्वार्थे कन्। 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः' इति पाणिनिसूत्रेण ( ७।३।४४ ) 'शीघ्रका'–पाठोऽशुद्धः।

१४ प्रतिसर्गः प्रविसर्गो वा दाने। एतौ शब्दौ न कस्मिन्नपि शब्दकोशे वर्तेते।

५३ ११ 'विषीव्यति' ( ९०।१३ ) इत्येव शुद्धं 'विसीव्यति' अशुद्धम् ( पा० ८।३।७० )

१३ 'विनिग्रहार्थीयम्' इत्यस्य व्याख्या ( पत्रम् ४५।१० ) इत्यत्र।

५५ ११ 'तदाहुर्महावदा३ः ( = ब्रह्मवादिनः ) यद्दचैव हौत्रं क्रियते यजुषाध्वर्यवं साम्नोद्गीथं व्यारब्धा त्रयी विद्या भवत्यथ केन ब्रह्मत्वं क्रियत इति त्रय्या विद्ययेति ब्रूयात्' ( ऐ० ब्रा० २५।८ )। अत्र 'अनया'– शब्दो न वर्तते।

१४ घ. झ. ट. पाठः नानाप्रकाशाम्। कस्मिंश्चिन्मूलपुस्तके 'नानाप्रकाराम्' इत्यत्र 'रां' 'श्नां'सदृशः स्यात्।

१७ 'इमान्वै लोकान्प्रजापतिः सृष्ट्वेदं सर्वमशक्नोद्यदिदं किंच यदिमाँल्लोकान्प्रजापतिः सृष्ट्वेदं सर्वमशक्नोद्यदिदं किंच तच्छक्वर्योऽभवंस्तच्छक्वरीणां शक्वरीत्वम्' ( ऐ० ब्रा० २२।२ )।

पत्रं पङ्क्तिः

५५ १७ 'तच्छक्करीणां शक्करीत्वम्' इत्यत्र क. ख. घ. झ. ट. ठ. पाठः 'तदेव शक्करीत्वं' ग. ज. पाठश्च 'तदेतच्छक्करीत्वम्' इति । किंतु निरुक्तमूले इमौ पाठौ न दृश्येते ( पत्रं ५४ । ११ ) ।

२० 'आख्यातजानि नामानि' इत्यस्य 'शक्कर्य ऋचः शक्नोतेः' इति लिङ्गम् ।

२१–२२ ऋगादि ब्रह्म परं च ब्रह्म ।

५६ ३ वसूनि कामयन्ते इति वसूयवः ।

४ मञ्चस्थेषु क्रोशमानेषु यथा मञ्चाः क्रोशन्ते इत्युच्यते तथाध्वरमधीयाने ब्राह्मणे अध्वरोऽधीते इति केनचिदुक्तं भवेत् । अत्र युः केवलो नामकरणः ।

१८ 'अन्यत्र चापवादात्' अत्र 'च' अधिको यतः पूर्वपाठः 'अन्यत्रापवादात्' ( ५३ । १९ ) ।

१९ अत्रत्यपाठाः पूर्वस्थलस्थपाठेभ्यः किंचिद्भिन्नाः । ग. ज. पूर्वपाठे 'नेम' अत्र न । च. पुस्तके पूर्वत्र 'त्वत्त्व' अत्र 'त्वत् त्व' । ठ. पुस्तके पूर्वत्र 'त्वत् नेम' अत्र 'त्वनेम' ।

२० तुशब्दो हेत्वर्थे प्रायो न वर्तते । अनुदात्तप्रकृतिशब्दरूपमेतत् अव्ययं भवेत् । किंतु तद् दृष्टव्ययं भवति यथैषूदाहरणेषु । इयं व्याख्या सरला ।

२२ क. ख. द. वर्जं निरुक्तमूलपाठः 'द्रष्टव्ययम्' । ग. ज. पाठोऽपि तथैव । ( निरु० ५ । २३ ) ।

२२ 'नामेति' इत्यत्र 'नामैवेति'( च. ठ. पुस्तकयोः) पाठे च 'इति–' शब्दो व्यर्थः ।

२२ दृष्टानुविधिश्छन्दसि ( महाभाष्ये ) । अपवादश्रवणात = अपवादोदाहरणं श्रुतौ वर्तते । 'अपवादस्मरणात्' इति पाठे अपवादः प्रातिशाख्ये स्मर्यते ।

५७ ३ 'कृतापवादत्वात्' अयं पाठः 'श्रुतापवादत्वात्' इति स्यात् ।

५८ ५ 'समानं किम्' इति ग. ज. पाठः । एते अक्षियुक्ताः कर्णसंयुक्ताश्च भवेयुः । किंतु किं तेषु सामान्यम् ।

११ घ. झ. ट. पाठः आस्यदघ्नहृदयप्रमाणाः ( 'हृद' शब्दः केनचिदज्ञानात् 'हृदय' इति लिखितः ) = आस्यदघ्नाः = हृद-

पत्रं पङ्क्तिः

प्रमाणाः । 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' ( पा० ५ । २ । ३७ ) ।

५८ १२ कक्षः = तृणम् ।

१६ अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु ( धा० ७ । २२ ) ।

५९ १–२ यच्छब्दो विद्यमानश्चेदन्वाकृष्यतेऽविद्यमानश्चेदुत्पाद्यते । विद्यमानं यच्छब्दमन्वाकृष्याविद्यमानं वोत्पाद्य ।

८ खे कर्णौ प्रत्युद्गच्छतः । अथवा । कर्णौ आकाशभागौ । आकाशान्न भिद्येते इत्यर्थः ।

५९ १५ पूर्वतरात्परिमाणात् ततू अधः स्रवतीव । ' उत्तरात् ' इति च.-पाठः साधुतरः । उत्तरात् अथवा उत्तरस्मात् = उच्चतरात् ।

२० ' अथापि समुच्चयार्थे भवति ' इति मूलम् । दुर्गस्तु समुच्चयार्थे वर्तमानो निपातोऽपरः ' त्व ' इत्येतस्माद्भिन्न इति मन्यते । यास्कमते ' त्व ' ' त्वत् ' न भिन्नौ ।

६० ५ कर्मोपसंग्रहार्थे निपाताः ' च ' ' आ ' ' वा ' इति । ' अह ' ' ह ' ' उ ' विनिग्रहे वर्तमाना अपि समुच्चयमेव दर्शयन्ति । विनिग्रहार्थप्रसङ्गेन ' हि ' ' किल ' ' न किल ' ' ननु किल ' ' मा ' ' खलु ' ' शश्वत् ' ' नूनम् ' इत्येते निपाता उदाहृताः । ' त्व ' विनिग्रहार्थे वर्तमान उदाहृतः । त्वत् समुच्चयार्थेऽपि वर्तते । वस्तुतस्तु यथा ' अह ' इत्यादयो वाक्ये विशिष्टस्थले प्रयुज्यन्ते तथा ' हि ' इत्येवमादयोऽपि । एतेन प्रसङ्गेन तेऽत्र कथिताः । न केवलं यास्केन त्रयोऽपि वर्गाः परस्परैर्मिश्रिताः वर्गत्रयभिन्ना अपि निपाता वर्गत्रयमध्ये प्रवेशिताः ।

६ च. पुस्तके 'अन्यार्था' इत्यत्र 'नार्था' इत्यशुद्धः पाठ आदौ लिखितः । तस्य दुर्बोधत्वात् केनाप्यज्ञेन 'नानार्था' इति पाठः कृतः । प्रायः ' च ' इत्यादयः सर्वेऽपि नानार्थाः ।

' हि ' इत्यादय उपमार्थकर्मोपसंग्रहार्थपदपूरणार्थेषु वर्तमानेभ्यो निपातेभ्यो भिन्ना अत एव ' अन्यार्थाः ' ।

८ ग. च. ज. पुस्तकेषु ' प्रवृत्ते परिप्रापिते ' ठ. पुस्तके च 'प्रवृत्ते प्रापिते परिसमाप्ते ' इति पाठौ । ' प्रवृत्ते समाप्तिं परिप्रापिते ' इति शुद्धः पाठो भवेत् । ' एमेनं सृजतां सुते ' ( १ । ९ । २ ऋ० सं० ) इत्यस्य सायणभाष्ये ' अथ ये प्रवृत्ते = अन्यैरेव पदैर्विवक्षितेऽर्थे समाप्ते सति ' ।

पत्रं पङ्क्तिः

६० १२ पदपूरणवाक्यपूरणान्नान्यत् अर्थान्तरम् । यदि किंचिदर्थान्तरं भवेत् पदपूरणं वाक्यपूरणं वा तदर्थान्तरं स्यान्नान्यत् । एवम् अन्यत्पदं सार्थम् ।

१६ च. पाठः 'येऽप्रवृत्तेऽर्थे'। पूर्वपाठः 'ये प्रवृत्ते'। ग. ज. पूर्वपाठः (८) 'येऽप्रवृत्ते°। अप्रवृत्ते=असमाप्ते । इदं 'परिप्रापितेऽन्यैरेकवाक्यगतैः पदैः' इत्यस्य विरुद्धम् । अन्यैः पदैर्वाक्यार्थः समाप्यते । एते केवलं वाक्यपूरणाः ।

६१ ७ 'गम्यते' अशुद्धः पाठो लेखकप्रमादात् ।

११ च. पाठः 'उकारवन्ततौ' = उकारवन्तौ + उकारवत्तौ। 'खलु' 'नूनम्' इत्येतयोः उकारो वर्ततेऽतस्तौ उकारवन्तौ । 'उ' इत्यनेन सर्वे उकारवन्तो निपाता गृहीता द्रष्टव्याः । उकारवत् तावपि अर्थवन्तौ अनर्थकौ च । दुर्गाचार्यकृतमिदं समर्थनं शुष्कम्। यास्ककृतं निपातवर्गीकरणं सदोषमित्युक्तमेव पूर्वम् ।

१७ 'अर्थलवे' 'अर्थलाभे' 'अर्थे तावत्' एते सर्वेऽपि पाठाः साधवः । 'अर्थलवे' पाठस्तु साधुतमः । 'वाक्यपूरणाः' इति यद्यास्केनास्मिन् खण्डे उक्तं तत्सर्वथार्थासंभवे । यः कश्चिच्छब्दो वाक्ये वर्तते स सार्थ एवेति दुर्गाचार्यमतं विचारार्हम् ।

६२ ११ अनुयोगः = निमन्त्रणम् ।

१२ अन्ते भवम् अन्त्यम् । आसनमित्यर्थः।

१३ अत्रापि 'येऽप्रवृत्ते°' इति ग. च. जे. पाठः ।

१३ व्यत्ययः = शब्दानां वाक्ये यत्र कुत्रापि प्रयोगः ।

१५–१६ ब्रह्म (वेदार्थः) परिरक्षितव्यमित्युद्देशेनादिमध्यान्तभवाः शब्दाः कदाचिल्लुप्यन्ते कदाचित्प्रच्छाद्यन्ते वापिधीयन्ते वा (प्रच्छन्नापिहितशब्दावेकार्थावेव) कदाचित्स्वस्वस्थानेभ्यः प्रच्याव्यान्यत्र प्रयुज्यन्ते ।

६४ ५ प्रतिविशिष्टम् = अतिशयेन विशिष्टम् ।

१७–१८ 'कतमः सः' इति पाठोऽपि साधुः । ग. ज. पाठः 'कयः तमः' = यः कतमः ।

६९ २२ वयमेतद् ब्रूम (इति) न वितर्कयासि।

पत्रं पङ्क्तिः

६६ ४ 'न वै सु विदुरिव मनुष्या नक्षत्रं मीमांसन्त इव' ( काठ. सं० ८।३ )। 'न वै सु विदुरिव मनुष्या यज्ञम्' ( ८ । १३ इति । इदमवतरणद्वयमाधानब्राह्मणे । 'तस्मात्पुरुषश्चाश्वश्च नक्तं प्रत्यञ्चौ न सु विज्ञायेते इव' ( ६ २ )। इदं दर्शपूर्णमासब्राह्मणे । 'कठानां दर्शपूर्णमासप्रकरणे आधानेप्रकरणे' ट. पुस्तकप्रान्ते टिप्पणी ।

६७ १ भर्तॄन्प्रति विप्रलभ्यमानाः ।

६ तेन तेन कर्मणा ।

८ 'एतानपि' 'एतेषामपि' अत्र अपिशब्देन तेषां दुष्टाचरणं लक्ष्यते ।

६७ १९ तर्हि नरकं पताम पतिष्याम इत्यस्माकं परिभयम् ।

२० समाहृताः = संक्षेपेणोदाहृताः ।

२४ निगमनार्थः = विषयसमाप्तिद्योतनार्थः ।

तद्यान्येतानीति प्रतिज्ञा प्रथमे खण्डे कृता । तस्या अभ्यासः पुनरुक्तिरत्र क्रियते ।

६९ ११ डवित्थः = दारुमयो मृगः । अरविन्दः = कमलं बको वा । 'अवार्विड'शब्दो न कुत्राप्युपलभ्यते ।

१४ समर्थता = उपपत्तिः ।

१९ लक्षणेन अविप्रतिपत्तिरविरोधः ।

७० १ अविप्रतिपत्तिः = मताभेदः ।

६–७ उपलक्षणभूताः = सहायभूताः ।

७ अनुसहायभावं प्रति = सहाया इति ।

८ शब्दस्याप्रच्युतौ = शब्दो धातोर्न प्रच्यवते । धातुः शब्दे दृश्यते । शब्दोऽभिधानं वा धातावुपलक्ष्यत दृश्यते । तदिदमभिधानं लोके प्रवर्तते प्रयुज्यते । गच्छति काले शब्दोऽर्थान्तरमापद्यते ततश्च धातुस्था क्रिया न लक्ष्यते । कर्तृकर्मदर्शकाः प्रत्यया अपि उपरता अदृष्टा भवन्ति । तदा क्रिया न साक्षाल्लक्ष्यते किंतु निरूप्या प्रकल्प्या भवति । अभिधानं केवलं विशिष्टं वस्तु निर्दिशति । तदिदमभिधानं रूढ्यभिधानमित्युच्यते । इदं वाक्यं प्रायो दुर्बोधमेव ।

पत्रं पङ्क्तिः

७० १० रूढिशब्देषु प्रकल्पिताः क्रियाः केवलं शब्दान् व्युत्पादयन्ति शब्दार्थान्नानुगच्छन्ति । शब्दार्थाः क्रियाभिर्न समर्थ्यन्ते । शब्दार्थे या क्रिया शब्दरूपे च या क्रिया तयोर्न कोऽपि संबन्धः ।

१४ 'अन्वितौ अतौ अनुगतौ' इति घ. ट. पाठः । 'अतौ' अन्वितौ इति शब्दः स्यात् । 'अन्वितौ । अन्वितौ अनुगतौ' इति पाठः स्यात् ।

१५ न्यायवान् = अष्टाध्यायीलक्षणोपेतः । कर्मकृतम् अथवा कर्मण आख्यातादुत्पन्नं नाम कर्मनाम । 'तस्येदम्' अनेन पाणिनिसूत्रेण (४ । ३ । १२० ) कार्मनामिकः (संस्कारः) । यदाख्यातेभ्यो नामान्युत्पाद्यन्ते तदा विशिष्टाः प्रत्यया विशिष्टपाणिनिसूत्रानुसारेणोपयुज्यन्ते । 'कारक' इत्यत्र अकप्रत्ययो वृद्धिश्च । 'कर्ता' इत्यत्र तृप्रत्ययो गुणश्च । एतादृशानि न्यायवत्कार्मनामिकसंस्कारस्योदाहरणानि ।

'न्याय०० 'संयुक्तेन संस्कारेण' इति क. ख. घ. झ. ट. ठ. पाठः । न्यायवन्तः कार्मनामिकाः कर्मनामान्युत्पादयितुमावश्यकाः प्रत्यया गुणवृद्ध्यादयश्च विकाराः । तैः संयुक्तः संस्कारः । नायं पाठः समीचीनः ।

१७ आख्यातजं = गुणकृतं धातूत्पन्नम् ।

१८ अनुगतौ = दृष्टौ । अथवा । 'धातुरूपेणानुगतौ' इत्यन्वयः स्यात् ।

१८ न्याय्यः = न्यायादनपेतो न्यायवान् ।

२१–२२ च. पुस्तके 'संविज्ञानपदत्वम् । यत्तु संविज्ञानभूतं स्यात् । तथा वृत्रहा पुरन्दर इत्येवमादीनां' नास्ति ।

७१ ३ 'पाचक' इत्यत्र ग. च. ज. पाठः 'पावक' । लेखते चवौ सदृशौ भातः ।

७ तत्कृतः = प्रदेशकृतः ।

लक्षणेन शब्देऽनुग्रहः क्रियते शब्दरूपं व्युत्पाद्यते । शब्दावयवो वा व्युत्पाद्यते । लक्षणरूपोऽनुग्रहोऽवयवो वा ।

पत्रं पङ्क्तिः

७१ १२ 'संविज्ञानानि' इति न कस्मिन्नपि पुस्तके पाठः ।

१३ 'अथवा' इत्यस्य न किमपि स्वारस्यम् । अत्र न कश्चि- न्नवीनः पक्षः प्रस्थाप्यते ।

१४ प्रदेशशब्दः सत्त्ववाचीति मत्वा ।

२१ यत्किंचित् कर्म ।

७२ ४ ईदृशक्रियानिरपेक्षः ( च. ठ. पाठः ) = आख्यातजानि सर्वाणि नामानीति मत्वा अशनादिसदृशक्रियाभ्यो नामव्यु- त्पत्तये योऽयं प्रयत्नः सर्वोऽपि स व्यर्थो यस्मान्नामानि व्यवहारे क्रियानिरपेक्षाण्येव प्रयुज्यन्ते ।

१६ 'दरसया' इति ठ. पुस्तके निरुक्तमूले पाठः ( ६८।१२) टीकायां तु 'दर्शया' । 'दर्शया' इति छ. द. पाठः ।

७३ २० प्राप्नोति = आवश्यकं शब्दरूपं भवति ।

७४ १८–१९ निरुक्तं चतुर्दशप्रभेदं=निरुक्तस्य चतुर्दशाध्यायाः ।

२३–२५ भू + लट् ( वर्तमानकालप्रत्ययः ) । 'हलन्त्यं' ( पा० १ । ३ । ३ ) 'लशक्वतद्धिते' ( पा० १ । ३ । ८ ) इत्येताभ्यां सूत्राभ्यां लटौ इतौ । 'तस्य लोपः' ( पा० १ । ३ । ९ ) इत्यनेन तयोरनुबन्धयोर्लोपः । भू + अ । 'लस्य' ( पा० ३ । ४ । ७७ ) तिबादय आदेशा भवन्ति । भू + ति । 'कर्तरि शप्' ( पा० ३ । १ । ६८ ) इत्यनेन भू + अ + ति । गुणादेशेन भवतिरूपम् । कृतः अनुबन्धयोः ( लटोः ) लोपो यस्य । अनच्कस्य = अज्विरहितस्य । ल एव स्थाने आदेशा नाकारस्य स्थाने । 'लट्' इति सानुबन्धं सूत्रमधीयते लटोश्च लोपं कुर्वन्ति ।

७५ ८ धातुसमुदायमात्रम् अनेकधातुजं नामेति शब्दानुवि- धानमार्गः तेषां गार्ग्यपाणिन्यादीनाम् अप्रसिद्धः न शास्त्रसिद्धोऽत एवासंमतः ।

८ यतः = अतः ।

१० प्रतायमाणः = व्युत्पाद्यमानः संस्क्रियमाणो वा ।

१६ पदेतरार्धान्=एकस्य पदस्य इतरान् इतरान् अर्धान् भागान् । भागवाची 'अर्ध'शब्दः पुंसि । समांशकवाची नपुंसकः ( 'अर्धं नपुंसकम्' पा० २ । २ । २ ) ।

पत्रं पङ्क्तिः

७५ १७ इतराणीतराण्याख्यातपदानि तेषामवयवैः ।
अन्यमर्धम्=अन्यमन्यमर्धम्। 'अन्यदन्यदर्धम्' इति सप्रमादः पाठो यतोऽस्मिन्नेव वाक्ये 'अर्धान्' इति पुंलिङ्गः प्रयोगः।

२० कारितान्तं कारितप्रत्ययान्तम् । 'कारितम्' इति 'णिज्' इत्यस्य प्राचीनसंज्ञा । 'इ' इत्यस्य कारितरूपम् 'आयय्'।

२२ न कारितान्तं किंतु शुद्धमेव । तकारितान्तं ( पाठभेदः ) = तकारितः तकारयुक्तः अन्तो यस्य ।

७६ १९ सा संज्ञा ।

७७ २४ वाक्योपादाने=गार्ग्यस्यैकैकं वाक्यमुपादत्ते निरसनाय।

७८ १ आचार्येण गार्ग्येण । प्रसिद्धमाख्यातजत्वं गार्ग्याचार्येण प्रतिषिद्धम् ।

२ समीकरिष्यामि=प्रतिपादयिष्यामि ।

६ समीकरिष्यामः = निराकरिष्यामः ।

१२ आख्यातशब्दो नपुंसकः । तस्मात् 'आख्यातान्' ( पाठभेदे ) इत्यपपाठः ।
उत्प्रेक्ष्य = कल्पयित्वा ।
अनुविधेयौ अष्टाध्यायीलक्षणैः । यावद्दृश्यं यावदुपलब्धुं शक्यौ तावत् ।

१२–१३ लक्षणानां गतिः विभ्वी = व्याकरणलक्षणान्यप्रतिहतसंचराणि । प्रायः सर्वे शब्दा लक्षणैः व्युत्पादयितुं शक्यन्ते ।

१९ अन्यत् = शाकटायनव्याकरणात् त्वदधीताद्वा ।

१६ लक्षणानामेकैकदेश इन्द्रचन्द्रकाशकृत्स्नापिशलिशाकटायनपाणिन्यमरजैनेन्द्राणां व्याकरणेषूपलभ्यते ।

१७ अपि च पाणिनिव्याकरणेऽपि ( अष्टाध्याय्यां ) केचिद्विधयः सूत्रेषु स्पष्टं दीयन्ते । केचित्पुनः 'तु च वा' निपातेभ्योऽतिरिक्तम् अभिव्याहारम् अर्थं गृहीत्वा एकं सूत्रं द्विधा विभज्य अन्यैश्चैतादृशैः साधनैर्लभ्यन्ते । 'अतिरिक्ताध्याहार' इति पाठे एतेषां निपातानामतिरिक्तः अधिकः

पत्रं पङ्क्तिः

७८ अर्थः अध्याहारश्च । पाणिनिसूत्रेषु न कदाऽप्यध्याहारः क्रियते । 'अतिरिक्तः अध्याहारः' इत्यत्र अतिरिक्त-पदस्य न कोऽप्यर्थः ।

१७ 'धाविधिः तुः' इति घ. झ. ट. पठे 'धातुः + विधिः' इति द्वौ पाठौ । 'धातुः' इत्यपपाठः ।

१८ व्याकरणसंप्रदायेषु प्रायशोऽभिन्नेष्वपि कश्चिद्विधिरेकस्मिन् व्याकरणे दीयते कश्चिदन्यस्मिन् ।

२० यथा वैयाकरणाः शब्दरूपाणि साधयितुं भिन्नभिन्नव्याकरण-स्थलक्षणान्यवलम्बन्ते तथा स्वरसंस्कारावनुविधातुं सशास्त्रा-विति प्रतिपादयितुं निरुक्तकारैरवश्यं प्रयतितव्यम् ।

२० 'अखिलस्वर°' इति पाठे अखिलशब्दो व्यर्थः । यत्र स्वरसंस्कारौ साधारणलक्षणैरनुविधातुं न शक्येते तत्रैव सर्वाणि लक्षणशास्त्राण्यपेक्ष्याणि न तु अखिलस्वरसंस्कार-सिद्धये ।

२१ अनिर्विण्णः = निर्वेदनं नैराश्यं न गत्वा ।

७९ ८ अत्र द्वौ पाठौ । 'न चेदानीं' 'न वेदानीं' 'सं-युक्तः' 'संयुज्यते' 'एकेन वा' 'सत्यमेकेन वा' । 'न चेदानीं न वेदानीं' तथा 'संयुक्तः संयुज्यते' इत्यत्र च न कोऽप्यर्थभेदः । 'एकेन वा सत्यं लब्धम्' इत्येकस्य पाठस्यार्थः । 'एकेन वा वस्तु लब्धम्' इत्यन्यस्य ।

१३ कश्चिन्मनुष्यः कस्मिंश्चित्स्थले कस्मिंश्चित्काले च तक्षतीत्य-स्मात्कारणान्न स तक्षा । प्रसङ्गेन तक्षणं कुर्वाणो न तक्षा ।

८० १ यो जात्या तक्षा यः सर्वेषु स्थलेषु कालेषु च तक्षेत्यभिधीयते स एव नियमेन तक्षति अन्येऽनियमेन तक्षन्ति । तस्मान्न ते तक्षाणः ।

'तक्षेति' इति पाठे यः सर्वदा सर्वत्र च तक्षा स एव तक्षेत्याभिधातव्यः ।

२ 'लक्षणम्' इत्यपपाठः । 'तक्षणम्' इति मूलपाठः

पत्रं पङ्क्तिः

८० स्यात् । तदेतत्तक्षणम् अनियतम् अन्येषु ये जात्या न तक्षाणस्तेष्वपि भवेत् । किंतु ते न तक्षाणः ।

'कदाचित्काचित्' इत्यस्य 'काममन्येष्वप्यस्तु' इत्यनेनान्वय इष्टः । तक्षभिन्नैः पुरुषैः तक्षणं क्रियमाणं कादाचित्कं काचित्कं चात एवानियतम् । ३ किंतु तेषां तक्षणानियमः (लक्षणानियमत इत्यशुद्धः पाठः) । तक्षायाः (=तक्षणायाः) अनियमः । अत एव तक्षतीति कर्म तेषु विशिष्टम् । तक्षभिन्नाः पुरुषा यत्तक्षकर्म कुर्वन्ति स तेषां विशेषः । न सा तेषां वृत्तिः । 'तेषां तु तक्षणानियमतस्तक्षतीति विशेषः' इति मूलपाठः स्यात् ।

४ 'अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः' इति पञ्च मङ्गलस्य (अमरः १ । ३ । २५) ।

१३ उभयम् अपि ।

१८ सर्वाणि सत्त्वानि ।

८१ १ एवमाख्यायमानानि कानिचित् ।

३ प्रकृत्यादिना अप्रतीतार्थानि = का प्रकृतिः कः प्रत्यय एषु शब्देषु इत्यप्रतीतार्थान्यपि सत्त्वनामानि ।

३ शास्त्रार्थत्वं=शास्त्रम् इति अर्थः प्रयोजनम् उपयुक्तता वा । शास्त्रं शास्तीति तस्योपयुक्तता । 'शास्त्रत्वम्' इति समीचीनतरः पाठः ।

५ अप्रतीतार्थेषु शब्देषु लक्षणशास्त्रं रूढिमनुविधत्ते रूढशब्दान् प्रतिपादयति । अत्र लक्षणं न मुख्यया वृत्त्या साकल्येन वर्तते । लक्षणस्य तत्र गौणी वृत्तिः ।

६ प्रतीतार्थान्यपि शब्दरूपाणि सन्ति । प्रतीतार्थाः शब्दाः अल्पप्रयोगा इति वस्तुतोऽन्वयः ।

७ 'कृदतिङ्' (पा० ३ । १ । ९३) = तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् यथा क्तः क्तिन् इष्णुच् । 'ऐकपदिकम्' इति निरुक्तस्य द्वितीयप्रकरणस्य संज्ञा ।

८ तद्धर्माणः = अनवगतसंस्काराः । एते शब्दा ऐकपदिकप्रकरणे न वर्तन्ते किंतु तत्सदृशा एते ।

पत्रं पङ्क्तिः

८१ ९ व्रततिः = प्रततिः । पस्य वभावः । प्रकृष्टा ततिर्यस्याः । ततिः = तन् + क्तिन् । दुर्गमते व्री+ततिः= ततिं व्रीणातीति । व्रीततिः = व्रततिः । वृणीते ततिमित्यपि स्यात् । 'वृ' इत्यस्य व्रभावः ।

१० 'दमेरुनसि' इत्यनेन दमुना दमूना वा ।

१० 'अग्निरतिथिर्वा इति 'दमूना' इत्यस्यार्थः ।

११ 'जाड्यः = जटाभ्यः ष्यञ् ( काल्पनिक उणादिः ) । अट्+णारः ( काल्पनिक उणादिः ) । जागरूकः । 'जागुरूकः' ( पा. ३।२।१६५ । )

१२ दर्वि+हु+मिन् । नैते शब्दाः सुगमाः । यास्कमते तु प्रतीतार्था एते भवेयुरिति सुगमत्वेनैत आख्यायन्ते । एतेषां शब्दानां प्रयोगा ऋग्वेदेऽन्वेष्याः ।

८२ १ अन्यथाऽपि हि = प्रथनक्रियाभावेऽपि पृथुदर्शनक्रिया विद्यत एव ।

४ दृष्टप्रवादाः = यथा दृष्टं तथा ये प्रवदन्ति ते ।

५ 'दोषः' अयम् अशुद्धः पाठो भाति । 'दोषयुक्तः' इत्यर्थः ।

१२ अनुगमय्य = अनेके धातव एकाभिधानगतानर्थाननुगच्छन्ति । आचार्यस्तैर्धातुभिस्तानर्थाननुगमयति ।

१२ "तान् धातून्" इति द्वितीययास्मिन्वाक्ये भाव्यम् । यथा 'शत्रूनगमयत्स्वर्गम्' इत्यत्र ।

१४ सैषा पुरुषगर्हा = एतां गर्हां योऽनन्वितेऽर्थे संचस्कार सोऽर्हति न शास्त्रम् । अयं सरलोऽर्थः । दुर्गस्तु 'य आचार्यशाकटायनस्याभिप्रायं न जानाति स गर्ह्यः' इत्यर्थं करोति ।

८३ १. यस्मात्कारणादप्स उद्भ्रियमाणं सन्नवमैत् नवं नूतनं रूपमभवत्तस्मान्नवं च तन्नीतं चेत्युद्धृतस्य सारपिण्डस्य नवनीतनाम संपन्नम् । यस्मादग्निसंपर्के सति पिण्डो विलीयमानोऽसर्पत्प्रसृतोऽभूत्तस्मात्सर्पिरिति नाम ।

'यन्नवमैत्तन्नवनीतमभवद्यदसर्पत्तत्सर्पिरभवद्यदध्रियत तद्घृतमभवत्' ( तै० सं० २ । ३ । १० ) । संहिताक्रमो दुर्गेण किमर्थं त्यक्त इति न ज्ञायते ।

पत्रं पङ्क्तिः

८३ ४ तत्र = ब्राह्मणे । अथवा । तत्र तत्र ।

६ अभिहरन्ति बलिम् ।

७ ददन्ति वीर्यम् ।

५–९ लिखितपुस्तकेषु स्वरा न विद्यन्ते ।

१० तद्ब्राह्मणप्रमाणमनुदृश्य ।

१७ योगेन = क्रियायोगेण ।

१८ क्व चान्यत्र० = अन्येषु केषुचिन्नामसु नोपपद्यते । 'क्व चान्यत्रोपपद्यते' इति पाठे एषोपपत्तिरन्यत्रापि केषुचिन्नामसु दृश्यते । अन्यान्यपि कानिचित्सत्त्वानि पश्चात्कालीनया क्रिययाख्यायन्ते ।

१९ अनैकान्तिकत्वात् = अव्यापकत्वात् । नैतद्युष्माकं वचनं सार्वत्रिकम् ।

२१ बीजानां भृतं = बीजपूर्णम् ।

२२ भक्ष्यमाणं सत् जनं बिभर्ति पोषयति ।

२४ अतिबह्विव = अतिविस्तृतम् । इवो भृशार्थे ।

२–६ यस्मादव्युत्पन्नबुद्धिः शिष्य इदं व्याकरणं निरुक्तं वाऽप्रमाणमिदमन्यत्प्रमाणमिति वक्तुमसमर्थस्तस्मात्तेनेदृशेनाभ्यासेन व्युत्पन्नबुद्धिना भाव्यम् ।

८४ ६ वदुक्तुं ( घ. ट. पाठः ) = वक्तुं + वदितुम् ( ? ) ।

८५ ४ अपीति संभावने = इदं शास्त्रं विनाऽर्थसंभवो नास्ति । पदस्य वाक्यस्य वाऽर्थो न लभ्येत ।

८ अपि वाक्यार्थे = नापि वाक्यार्थे ।

९ निराकाङ्क्षं साकाङ्क्षं वा पदं भवति ।

१४ गौर्न वहति न दुग्धे किंतु गच्छत्येव । यो गच्छति स गौर्नाश्वो न वा गर्दभः ।

८५ १५ 'प्रकरणविरोधी' इत्यशुद्धः पाठो यस्माद्वाक्यार्थस्य प्रकरणेन विरोधोऽयोग्यः । प्रकरणाविशेषेण ( च. पाठः ) = प्रकरणाभेदेन प्रकरणाविरोधेन । विशिष्टस्य पदस्य कोऽर्थ इति वाक्यार्थान्निश्चीयते ।

१६ 'सुप्तिङन्तं पदम्' पा० १ । ४ । १४ ) । अत्रार्थस्य न किमपि प्रयोजनम् । पदार्थः पदाद्भिन्नः ।

पत्रं पाङ्क्तिः

८५ १६—१७ पदानां का प्रकृतिः कः प्रत्यय इत्यादिज्ञाने पदार्थसंनियोगो नावश्यको न वा पदानामर्थाः। निरुक्तशास्त्रगौरवार्थमिदमप्रमाणमभिधीयते दुर्गाचार्येण।

१७ पदानां प्रकृतिप्रत्ययादिपृथक्करणं व्याकरणाद्भवति।

१९ 'अनवत्तार्थस्य' (ग. ज. पाठः)। अवत्तः (अव+दा) = गृहीतः।

२४ स्वरसंस्कारावर्थेऽवलम्बेते इति वचनमप्रमाणम्। 'हरिः' इत्यस्य बहवोऽर्थाः। तथाप्यर्थभेदे स्वरसंस्कारौ न भिद्येते।

८६ ७ व्याकरणे यत्स्वरसंस्कारानुचिन्तनं तदर्थाधीनम्। अर्थश्च निरुक्तादेवाधिगम्यते।

८ यथा 'उणादि'प्रकरणं पाणिनिव्याकरणस्य शेषभूतं तथा।

९ स्वार्थाजहद्वृत्त्या = स्वार्थमपरिहाय। 'जहल्लक्षणा' 'अजहल्लक्षणा' एतौ शब्दावलंकारशास्त्रे उपलभ्येते।

१० 'अपरिहाप्य' इति णिचोऽत्र न किमपि प्रयोजनम्। 'आत्मानं स्वार्थमपरिहाप्य' इत्यन्वयः स्यात्।

१४ अर्थनिर्वचनरूपं विद्यास्थानम्।

२२ चेदं शास्त्रं च (च. पाठः) = अत्र चद्वयस्य न किमपि प्रयोजनम्।

२३ वृथेति वा = वृथा वेति।

२५ 'केचिदाहुः' इत्यस्मात् दुर्गसदृशा अन्येऽपि निरुक्तव्याख्याकारा अभवन्निति भाति।

८७ १ वाचोयुक्तयः = प्रयुक्ता वाचः। 'पटुवचनानि' इति सामान्यार्थः।

१ नियतम् आनुपूर्व्यं याताः। नियतनिष्ठेत्यादि घ. झ. ट. पाठोऽशुद्धो दुर्बोधश्च। 'नियतानुपूर्वी' इति ठ. पाठोऽतीव सुगमः।

४ इति मन्त्रेऽभिधानानि नियतानि सन्ति।

५ नियतनिष्ठा = नियता। अथवा नियता = निष्ठा। नियता आनुपूर्वी तया।

पत्रं पङ्क्तिः

८७ ९ यथा गवादिप्रयोगे।

'गौणी' इति गवार्थे देशीशब्दः। अभ्याज = बहिर्नय।

२० 'उरु प्रथा इति प्रथयति' (कात्या० श्रौ० सू० २।५।२०)।

२१ नियताक्षरपादावसाना ऋक्। अनियताक्षरपादावसानं यजुः।

२४ 'अध्वर्युणा सोमाभिषवे कृते उद्गातारो हस्तद्वयेन द्रोणकलशमालभेरन्। ऋतुपात्रमसीति (हविर्धानशकटस्य) अक्षस्याधस्ताद् द्रोणकलशं प्राञ्चं प्रोहेयुः। वानस्पत्योऽसि ब्राह्मणस्पत्योऽसि प्रजापतेर्मूर्धास्यत्यायुपात्रमासि इदमहं मां प्राञ्चं प्रोहामि तेजसे ब्रह्मवर्चसायेति' (अग्निष्टोमपद्धतिः पत्रं ३९ कलिकातायां १७९६ शके मुद्रिता)। 'अभिषुते राजनि ऋतपात्रमसीति द्रोणकलशमालभ्य वानस्पत्य इति प्रोहेयुः' (लाटयायनश्रौ० सू० १।९।२०)।

२४ 'प्रोहाणि' इत्यनुज्ञाप्रश्न.। अनुज्ञाप्राप्तौ प्रोहति। इदं ब्राह्मणं द्रोणकलशस्य प्रोहणं विधत्ते।

२४–२६ कुत्रत्योऽयं यजुर्मन्त्र इति न ज्ञायते। लाटयायनब्राह्मणस्थः स्यात्। इदं ब्राह्मणं न कुत्राप्युपलभ्यते।

८८ १ लिङ्गसंपन्नस्य लिङ्गयुक्तस्य मन्त्रस्य कर्माणि विधानात्।

५ कस्मिन्देशे कस्मिन्काले केन का च दक्षिणा देयेति ज्ञानं ब्राह्मणादेवोपलभ्यते। कर्मसंपत्तय एतज्ज्ञानमावश्यकम्। तैर्विना कर्म साङ्गं न स्यात्।

६–७ 'मन्त्रब्राह्मणयोर्वेदनामधेयम्'। (हिरण्य० श्रौ० १।१)। वेदैकदेशस्य = ब्राह्मणस्य। 'वैदैकदेशस्य ब्राह्मणाख्यस्य' इति च. पाठः।

८ 'कर्मविधानं ब्राह्मणानि' (हि० श्रौ० १।१) इति ब्राह्मणानां विध्यर्थत्वं 'तच्छेषोऽर्थवादः' (हि० श्रौ० १। १) इत्यर्थवादानां स्तुत्यर्थत्वम्।

१० कामं = मन्त्रा अनर्थका इत्यनुमन्तव्यमेव मन्त्रा। अनर्थकाः। किंतु यदाकदाचिदेतेष्वर्थः कल्प्येत स महता श्रमेण लभ्यमानोऽर्थो नोपपद्यते।

१२ मन्त्राः कर्मसु विधेया विनियोज्याः। वस्तुतस्त्वनर्थकास्ते

पङ्क्तिः

१८ यदा यूपवृक्षस्य कुशमन्तर्धानं करोति तदा कुशं ब्रवीति 'हे कुश (ओषधे) इमं यूप्यवृक्षं स्वधितिभयात्त्रायस्व' इति। यदा परशुना (स्वधितिना) वृक्षं प्रहरति तदा 'हे स्वधिते (परशो) यूपवृक्षमेनं मा हिंसीः' इति ब्रवीति। 'ओषधे त्रायस्वैनं स्वधिते मैनं हिंसीः' इति मन्त्रः क्षौरकर्मणि पशुमारणे च विनियुज्यते। 'ओषधे त्रायस्वैनमित्यूर्ध्वाग्रं दर्भद्वयमतर्न्धाय स्वधिते मैनं हिंसीरिति स्वधितिना प्रहरति' इत्यापस्तम्बः।

२-३ 'विप्रतिषेधः' इत्यस्य द्वावर्थौ। विरुद्धार्थेन प्रतिषेधः। अथवा। विप्रतिषेधः = व्याघातः।

१८ रुद्ररूपतामापन्नस्याग्नेरुपशमनार्थो होमः शतरुद्रियः। 'शतरुद्रीये' (ग. ज. पाठः) इति दीर्घमपि (तै० सं० का० ५। ४। ३ शतरुद्रीयं जुहोति)। 'जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा' 'अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण जुहोत्याग्नेयी वा एषा यदजा' (तै० सं० का० ५। ४। ३)। 'स्वयमातृण्णां च विकर्णीं चोत्तमे उपदधाति। नान्यामुत्तरामिष्टकामुपदध्यात्' (तै० सं० का० ५। ३। ७)।

१९ अग्निचयने = इष्टकानामग्निसंज्ञके चयने।
गवेधुकाः= आरण्या गोधूमाः।
सक्तुस्थानेऽजाक्षीरमिति केचित्।
गवेधुकाः सक्तवः= गवेधुकानां भर्जितं पिष्टम्। उत्तरस्यां श्रोणौ = उत्तरपश्चिमस्यां स्रक्तौ।

२० चयनस्योत्तरस्यां श्रोणौ अन्त्यायां चरमायामिष्टकायामेव नाग्नौ।

४ षोडशि शस्त्रम्। स्तोत्रं गीयते शस्त्रं पठ्यते। स्तोत्रियानुरूपं शस्त्रम्। साम्नो या प्रथमा ऋक्सैव शस्त्रस्य प्रथमा ऋक्। षोडशिनाम्नी संस्था यागो वा। तत्र 'त्वं सिन्धून्' इति तृचं शस्यम्।

१६ साग्निचित्ये क्रतौ चित्यग्निषु प्रणीयमानेषु दक्षिणतो व्रजता

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९० | | ब्रह्मणैतत्सूक्तं जप्यम्। अप्रतिरथ इन्द्रोऽस्या ऋचो देवता। अप्रतिरथे सूक्ते। |
| | १६–१७ | 'रुद्रो वा एष यदग्निः' ( तै० सं० ५। ४। ३ ) इति चयनस्यैवाग्निसंज्ञा। तस्मिन्नग्न्याख्ये चयनेऽग्निः प्रणीयते। तदेदं सूक्तं ( ऋ० सं० १०। १०३। १ ) पठनीयम्। |
| ९१ | ८ | 'अग्नये समिध्यमानायानुब्रूहि' इत्यध्वर्युर्होतारं संप्रेष्यति होता च सामिधेनीमन्त्रान् पठति। |
| | १८ | एवमर्थम् = एतेनोद्देशेन। इयम् = ऋक्। |
| | १९ | किमपि= कारणं विना। |
| | २४–२५ | अम्यक् इत्यादयः शब्दा निघण्टुचतुर्थाध्याये समाम्नाता निरुक्ते निरुच्यन्ते। |
| | २७ | अर्धवैशसम् = अपूर्णा हत्या। अन्याय इत्यर्थः। |
| ९२ | १७ | निदानं = निश्चयः। |
| ९३ | ३ | 'कर्मणो यदङ्गं रूपसमृद्धं भवत्येतदेव यज्ञस्याङ्गेषु समृद्धं संपूर्णम्। न तु तस्मिन् किंचिदपि वैकल्यमस्ति। केयं रूपसमृद्धिरिति चेत् पठ्यमानेयमृगनुष्ठीयमानं कर्माभिवदति साकल्येन ब्रवीतीति यदस्ति एषैव रूपसमृद्धिः' ( सायण-भाष्यम् ऐ० ब्रा० १। ४ )। दुर्गकृतोऽर्थो न स्पष्टः। |
| | ४ | ऐ० ब्राह्मणे 'यजुर्वा' नास्ति ( ऐ० ब्रा० १। ४॥ १। १३॥ १। १६॥ १। १७। )। डेक्कनकॉलेजस्थ-ग्रन्थालये $\frac{१०}{१८७९–८०}$ निरुक्तमूले 'ऋगभिवदति' इति पाठः। अन्यत्र सर्वत्र वृत्तिपुस्तकेष्वपि 'ऋग्यजुर्वाभिवदति' इति। |
| | ७ | घ. ञ. ट. पुस्तकेषु ब्राह्मणवाक्ये ( ३ ) अत्र च 'यद्रूपसमृद्धं' नास्ति। 'यद्रूपसमृद्धं तदेव हि०' इत्यादि ठ. पाठः साधुतरः। यद्रूपसमृद्धं मन्त्रलिङ्गैरभिधीयते = यदा मन्त्राः कर्म कर्माङ्गं वा रूपसमृद्धं रूपसंपन्नं कुर्वन्ति तदैव तत्समन्त्रकत्वात्समृद्धं भवति। मन्त्रैर्विना रूपसमृद्धिर्नास्ति। या रूपसमृद्धिः सैव यज्ञकर्मणः समृद्धिः। १३ 'अथापि.... विधीयन्त' इति ब्रुवता भवता। |

पत्रं पङ्क्तिः

९३ १७ यस्मात् क्रीळन्ताविति ऋगेवोदाह्रियते तस्मात् ' ऋगभिवदति ' इति ऐ० ब्रा० मूलपाठः स्यात् ।

१९ विवाहरूपं कर्म ऋङ्मन्त्रैः समृद्धं क्रियते ।

२० ' वियुज्येताम् ' इत्यशुद्धः पाठः ।

९४ ४ नियतानुपूर्वत्वं ( च. ठ. पाठः ) = नियतम् आनुपूर्वं येषां तेषां भावः । आनुपूर्वम् आनुपूर्व्यम् आनुपूर्वी इति त्रीणि रूपाणि ।

५ 'अजाद्यदन्तम्' (पा० २।२। ३३ ) इत्यनेन ' इन्द्राग्नी '। ' अभ्यर्हितम् ' इति वार्तिकेन च पितापुत्रौ ।

१३–१४ असमर्था इति न विधीयन्ते । आत्मनः ( मन्त्राणां ) विनियोगः ( कर्मणि ) । तस्याश्रयः कारणम् ( अनुरूपः ) अर्थः ।

१५ मन्त्राणां योऽर्थस्तस्य संशुश्रूषा सम्यक् स्तोतुमिच्छा ।

१८ प्रकरणे = कर्मणि ।

१९ यथा धान्यखले कपोताः संनिपतन्ति तद्वत् ।

९५ १ त्वं पूर्वा यस्य सः त्वत्पूर्वकः । त्वमस्य छेदनस्य साक्षिणी ।

५ प्रतिभन्त्स्यते ( च. पाठः ) = छेदनस्य प्रतिबन्धं करिष्यते।

७ अतत्र ( घ. झ. ट. पाठः ) = अत्र + तत्र ।

८ ' प्रतीयेत ' इति निरुक्तपाठः ( ९२ । ७ ) । अत्र तु ' प्रतीयते ' ।

११ आम्नायः = आगमः ।

१५ अपि चैतत् = अन्यत्समर्थनं यत् ।

' इन्द्राय राज्ञे सूकरो वरुणाय राज्ञे कृष्णः ' इति तैत्तिरीयसंहितायाम् ( ५ । ५ । ११ अनुवाकादारभ्य ५ । ६ । २४ इत्यनुवाकेषु ) पशुमृगपक्षिसरीसृपा यज्ञियाः कथ्यन्ते । तेषु हन्यमानेषु ' न वा उ एतन्म्रियसे ' इत्यस्यातिदेशः क्रियते । पशवः = सूकरादयः । मृगाः = कृष्णमृगादयः । पक्षिणः = चटकादयः । सरीसृपाः = नीलङ्ग्वादयः । ओषधिः = दर्भाः ।

१८ ' पर्व ते राध्यासमित्याहच्छे आच्छेत्ता ते मा रिषमित्याह च ' ( तै० ब्रा० ३ । २ । २ ) इति दर्भच्छेदने । ' वैष्णवो वै देव-

पत्रं पङ्क्तिः

९५ तया यूपः स्वयैवैनं देवतयाऽच्छैति ' ( तै० सं० ६ । ३ । ३ ) इति यूपच्छेदने ।

१९ एवमपि = छेदेऽपि हिंसायामपि ।

९६ ८ ' शदेरगतौ तः ' ( पा० ७३ । ४२ ) इत्यनेन शातयति । संशातिते = भृशं विशीर्णे ।

१२ वशिनः = सर्वं तेषां वशे वर्तते ।

अधिकरणधर्माणः = अधिकरणाय धर्मा गुणा येषाम् । वस्तुतस्ते धर्मविहीना गुणविहीनाः ।

१८ सतत्त्वं = सम्यक्तत्त्वम् ।

१९-२० अवभोत्स्यते ( अव +बुध् ) भवान् । अवभोत्स्यसे त्वम् ।

२० कथम् अवभोत्स्यसे तं वेदम् ।

वेदार्थावबोधे विभ्रान्ताः ।

२२ बौद्धजैनदर्शनानि दर्शनान्तराणि ।

९७ ३ देवदत्तोऽहमभिवादय इति ।

६ विहितः = विध्युक्तः । विध्युक्तस्य शास्त्रोक्तस्य अर्थस्य ख्यापनम् ( आख्यापनं वा ) अर्थः प्रयोजनं येषां शब्दानां तेषां सामान्यात् । ' विहित'स्थाने ' विदित ' इति मूलपाठः स्यात् ।

१० भक्तिवादः = भाक्तः गौणः वादः ।

१५ गुणवृत्त्या = लक्षणया ।

१६ ' इतरेतरविरुद्धं किमपि बह्वत्र ' एतद्वृत्तिस्थं = ' किमपि च बह्वत्र परस्परासंबद्धमुच्यते ' ( ९१ । १९-२० )

१९ एतत् स्थाणु० ( ग. च. ज. पाठः ) = अत्र स्थाणु० ।

२३ विज्ञायन्ते मन्त्राः ।

२४ यो भो ( ग. ज. पाठः ) । 'भो भवत एवापराधोऽस्ति यो भवान्० ' । अयं पाठः युक्ततरः ।

९८ ४ केचित्पुरुषा ये सु० इति ग. च. ज. घ. झ. ट. पाठे ' सति ' इत्यत्र ' सन्ति ' इति पाठ आवश्यकः ।

७ ' परोवरपरम्परपुत्रपौत्रमनुभवति ' ( पा० ५ । २ । १० ) इति ख ( = ईन् ) प्रत्ययसंनियोगेनैव परोवरेति निपात्यते इति

पत्रं पङ्क्तिः

१८ भट्टोजीदीक्षिताः । पराश्चावराश्चेति परोवरा इति समासे अवरस्योत्वं निपात्यते । किंतु नायं स्वतन्त्रः शब्दः । तेन ' पारोवर्यम् ' इति शब्दोऽसाधुरेव । यदि यास्कः पाणिनेः प्राचीनस्तर्हि ' पारोवर्यवित्सु ' इति शब्दः पाणिनिना ज्ञात एव स्यात् । तेन स शब्दः साधुरेव भवति । पुत्रपौत्रवत् ' परोवर ' इति शब्दः स्वतन्त्रः स्यात् ।

परोवराः = प्राचीनार्वाचीना आचार्याः ।

१३ अनेकविषये बहुदृष्टत्वात् = नानाविषयसंबद्धं बहुज्ञानं तेनाप्तम् । ' जानपदीषु० ' इत्यस्य च. ट. पुस्तके प्रान्ते विवरणं ' यथा जनपदे भवा याः ओदनउदकाद्याः शिल्पक्रिया वा चित्रकर्माद्याः तासु विद्यातः पुरुषाणां विशेषः । य आगमने शिक्षति अभ्यस्यति च स सुष्ठु जानाति च । इतरस्तु मनाक् नैव जानात्येवमत्रापीति वाक्यशेषः । ततश्च येन मन्त्रार्थः शिक्षितोऽभ्यस्तश्च तस्य न किंचिदप्यविस्पष्टार्थम् । ग्रन्थान्तरे ' ।

' पारोवर्यवित्सु भूयोविद्यः ' इत्यस्य च तत्र व्याख्यानं ' पारोवर्यम् आगमपरम्परा तया ये विदन्ति वेदितारः तेषां मध्ये यो भूयोविद्यः स प्रशस्यो भवति नेतरो य उत्प्रेक्षया कल्पयत्यल्पविद्यो वा । अत आगमपरम्परया निरुक्तव्याकरणादिविद्याभिर्भूयोविद्यो भूत्वा । अविस्पष्टार्थानामर्थो ज्ञेय इत्यर्थः । ग्रन्थान्तरे ' । किमिदं ग्रन्थान्तरमिति न ज्ञायते ।

२०–२१ इति प्रभिन्नेष्विति श्लोक आनन्दस्फूर्त्या दुर्गाचार्येणैव रचित इति भाति ।

१९ अस्मिन्खण्डे क. ख. छ. त. द. पुस्तकेषु तत्र तत्र विरामचिह्नानि स्वराश्च विद्यन्ते ।

१५ ' अथापीत्यादि प्रयोजनान्तरवचनम् । अपि च । इदमन्तरेण पदविभागः । पदविभागेनात्र ज्ञानं लक्ष्यते । इदं निरवग्रहमिदं सावग्रहमिति तुल्यायां संहितायामिदं पञ्चम्यन्तमिदं षष्ठ्यन्तमिति च । इदमाःकारान्तमिदं चतुर्थ्यन्तमैका-

पत्रं पङ्क्तिः

९९ रान्तमित्यादिभिर्यः पदविभागस्तस्य ज्ञानं न विद्यते तस्यार्थ-ज्ञानाधीनत्वात्। भाष्यान्तरे ' [ ट. ]।

१७ यदि मन्त्रार्थप्रत्ययायानर्थकं भवतीति कौत्सेन निरुक्त-शास्त्रस्यानर्थक्यमुपपादितम्।

१८ तेषु हेतुषु प्रत्युक्तेषु।

१९ तेषां = मन्त्राणाम्।

२० आख्यातजानि नामानीति प्रसक्तम्। तद्दूषणं कैश्चिच्चोदितं निराकृतम्। तत्प्रसङ्गेन निरुक्तशास्त्रस्यार्थवत्ता प्रतिपा-दिता।

कश्चिच्चोदको दोषोत्पादकः कश्चिच्च शास्त्रकार इति मिथं कृत्वा।

२१ हेतवः परेण प्रस्थापिताः। शास्त्रस्य समयाः सिद्धान्ताश्च। अविवृद्धप्रज्ञः = अपक्वबुद्धिः। विवृद्धप्रज्ञः ( क, ख. घ. झ. ट. ठ. पाठः ) = अनेन खण्डनखण्डनेन परि-पक्वबुद्धिः। अयं पाठो न समीचीनो यतः परिपक्वबुद्धिर्हेतु-समयाभिज्ञः स्यादेव।

गूढाः शब्दा अर्था न्यायाः ( शब्दसंस्काराश्च ) तैर्दुर्बो-धेषु स्थलेषु अपक्वबुद्धिरपि न मुह्येदिति।

२५ अपिशब्दः प्रभावने वर्तते ( १०५। ८ ' संभावने ' इति सार्वत्रिकः पाठः )। प्रभावनं = संभावनम्। ठ. पुस्तके ' संभावने ' इति पाठः। संभावनं = संभवः। प्रभावनं विशेषणं ' महत् उत्कृष्टम् ' इत्यर्थे। प्रभावना = आविष्करणम्। अत्र ' संभावनम् ' अर्थः। इदमपरं प्रयो-जनं संभवति प्रभवति वेत्यपिशब्दस्यार्थः।

१०० ५–६ ' इदमन्तरेण ' इत्यस्य द्वावर्थौ। इदं निरुक्तशास्त्रमिति दुर्ग-व्याख्या। इदं मन्त्राणामर्थवत्त्वमित्यन्येषां निरुक्तटीका-काराणां व्याख्या। पदविभागो न व्यर्थः किंतु सार्थ इति समर्थयितुं मन्त्राणामर्थवत्त्वमवश्यं ग्राह्यम्। अयमर्थो न दुर्गसंमतः। ' अथापीदमन्तरेण ' ( निरु० १। १५) इत्यत्र ' इदं ' निरुक्तशास्त्रमित्यर्थे वर्तते तथात्रापि।

पत्रं पङ्क्तिः

१०० ७ प्रसिद्ध एव पदविभागः । सर्वासु तैत्तिरीयादिशाखासु संहिताया अनन्तरं पदानि पठ्यन्ते ।
'पद्वदवसं गावः पथ्यदनम्' ( ९९ । ३ ) इत्यत्र 'गावः'-पदं दुर्गेण न व्याख्यातम् ।

८ के एते केचिदिति न ज्ञायते ।

९ ग्रन्थेषु=वाक्येषु ।

१० 'अवसाय पद्वते । अवसमिति पथ्यदनमुच्यते । गावश्च पथ्यदनं तत्संभवस्य पयआदेः पथ्यद्यमानत्वात् । पथ्यदनाय पद्वते गोलक्षणाय पादसंयुक्ताय । हे रुद्र मृळ सुखं देहीत्यर्थः । एवमत्रावसायेति न स्यतेरवपूर्वस्य ल्यबन्तस्य रूपम् । धातूपसर्गयोर्ल्यबश्चात्रार्थासंभवात् । पद्वत इत्यनेन सामान्याधिकरणाच्चतुर्थ्यन्तत्वावगतेश्च । किं तर्हि । अवतेर्गत्यर्थस्यासो नामकरणः । नाम क्रियते येन शब्दस्य नामकरणः प्रत्यय उच्यते । तस्मादेतत्पदं नावगृह्णन्ति पदकाराः । अवग्रहस्यार्थभेदप्रतिपादनार्थत्वात् तस्य चेहाभावात्' (ढ.) ।

११ पथ्यदनं=गोलक्षणं पाथेयमित्यर्थः ।

१२ निगमप्रसक्तस्य=ऋच्युपलब्धस्य ।

१३ उपसर्गेण संयुक्तो धातुर्वैदिकैः समस्त इत्यभिधीयते ( १०१ । ७ ) ।

१७ इदं सूक्तं कक्षीवद्गोत्रस्य शबरस्यार्षमित्यनुक्रमण्यामुच्यते ठ. पुस्तके च । सुभरा नाम गौतमस्तस्यार्षमिति वचनं किमाधारमिति न ज्ञायते ।

१०१ २ रोगेण दुष्टास्तान्पान्तीति रोगदुष्टपातृकाः ।

९ यतः=अतः ।

११ 'योनिष्ट इन्द्र । कुत्सार्षम् । योनिः स्थानं वेद्याख्यं ते तव हे इन्द्र निषदे उपवेशनाय अकारि कृतमस्माभिः । तम् आ । तमिति कर्मणः आ इति चोपसर्गश्रुतेः क्रियापदमध्याहार्यम् । तमागत्य निषीदोपविश । स्वानो नार्वा । स्वन शब्दे । स्वनति स्वान्यत इति वा स्वानः । आगमनस्येदमुपमानम् । अर्वेत्यश्वनाम । यथा हेषितशब्दं कुर्वन्

पत्रं   पङ्क्तिः

१०१   शब्द्यमानो वाश्वः शीघ्रमागच्छति तद्वत् । आगत्य च विमुच्य वयः । अश्वरश्मयोऽत्र वय इत्युच्यन्ते । अश्वं च सारथिं च प्रगन्तृत्वात्तान्विमुच्याश्वेभ्यः अवसायाश्वान्। अवेत्येष वीत्येतस्य स्थाने । अश्वान् विमुच्य योक्त्रेभ्यो रथाद्वा। दोषावस्तोः रात्रावहनि च । वहीयसः अतिशयेन वोढ़ून् प्रपित्वे प्राप्ते यागकाले । एवमत्रागमनकारणं यद्बन्धनं तद्विमोककरणस्य विमुच्या वय इति प्रस्तुतत्वात् अश्वानिति च कर्मश्रुतेः अवसायेति स्यतिरयमुपसृष्ट उपसर्गेणावेत्यनेन युक्तो विमोचने वर्तत इति गम्यते । तस्मादेतत्पदमवगृह्णन्ति धातूपसर्गयोरर्थभेदप्रदर्शनार्थम् ' । ( ट. पुस्तके इदं भाष्यं सायणभाष्यं च दीयते )।

१३ अनुक्रमण्यां कुत्सस्यार्षमित्येव न कुत्सस्याङ्गिरसस्य ।

१६ अश्वं बध्नातीत्यश्वबन्धः ।

१०२   ८ निर्ऋत्या इति पदे निरुच्यमाने व्याख्यायमाने । निरुच्यमानः ( घ. झ. ट. ठ. पाठः ) = प्रतिपाद्यमानो निष्कर्षेणोच्यमानः ।

१२ निर्ऋतिपुत्रस्य कपोताख्यस्यार्षमित्यनुक्रमण्याम् ।

१३–१४ कपोतो यदि गृहं प्रविशेत्तदानेन सूक्तेन होतव्यम् । सूत्र्यते हि 'कपोतश्चेदगारमुपहन्यादनुपतेद्वा देवाः कपोत इति प्रत्यृचं जुहुयाज्जपेद्वा' ( आ० गृ० ३ । ७ । ७ ) इति । कपोतस्य गृहे निलयनम् आगमनम् । तस्य पदस्पर्शाज्जातस्य पापस्य निर्हरणम् ।

१८ पापस्य विपाकलिङ्गम् ।

१०३   १२ ' प्रकृष्टम् आप्तः ' इति ग. ज. पाठोऽपि समीचीनः ।

१४ बुद्धिः अधिकरणं यस्य ।

१७ विभागवैलक्षण्यं = भिन्नः पदविभागः ।

१०४   ७ ' संहृयमानानि ' इत्यशुद्धः पाठः । ' संहन्यमानानि ' ' संघात्यमानानि ' इति वा शुद्धं रूपम् ।

१० पर्षद् = परिषद् सभा । पार्षदमित्यृक्प्रातिशाख्यनाम । तासु तासु शाखासु प्रवीणाः सभायां ( पर्षदि ) एकीभूय

पत्रं पङ्क्तिः

१०४ क्रमेत्यादीनां लक्षणानि विदधति । स लक्षणसमूहः पार्षदं प्रातिशाख्यमित्युच्यते ।

१० शाखान्तराणाम् = अन्यासां शाखानाम् । कस्याः शाखाया अन्या इति न ज्ञायते। ' शाखानाम् ' इति पाठः स्यात् । च. पुस्तके ' शाखांन्तराणां ' ग. ज. पुस्तकयोः ' शाखानूत्तराणाम् ' इत्यनयोः पाठयोरर्थौ न ज्ञायते ।

११ स्वचरणपर्षद्येव = प्रतिशाखानियतमेव ।

११–१२ प्रातिशाख्ये पदस्य अवग्रहस्य प्रगृह्यस्य अप्रगृह्यस्य च क्रमस्य संहितायाः स्वराणां च लक्षणानि दीयन्ते ।

२२ ( वचेर्लिटि शानच् ) अनु – उच् – आनः = अनूचानः । साङ्गो वेदो येनाधीतः सोऽनूचानः ।

१०५ २ समयमात्रमितरत् = इतरे सर्वसमयाः सर्वसिद्धान्ताः । ' तदेनोपेक्षितव्यम् ' ( ९.९ । ९ । १० ) इति न व्याख्यातम् ।

१० बहवो विधिप्रदेशा भवन्ति = मन्त्राणां बहुप्रकारो विनियोगो भवति । सर्वेषु मन्त्रेषु देवता न स्पष्टा । मन्त्रलिङ्गैः सा निर्णीयते । विधौ प्रदेशः मन्त्राणां विनियोगो दैवतेन लिङ्गेन । तद्दैवतलिङ्गं न सर्वत्र स्पष्टम् । ' प्रदेशाः = वचनानि आग्नेय्याग्नीध्रमित्यादीनि ' (ट) । ' लिङ्गं= देवताभिधानसमर्थः शब्दः' ( ट. ) ।

११ ' उपतिष्ठते ' इत्यादि ( मान० श्रौ० २।३।१।१ ) ।

११–१२ ऐन्द्र्या = इन्द्रदेवताकया ऋचा । तथा च । अग्निदेवताकया ऋचा आग्नेय्या । विष्णुदेवताकया ऋचा वैष्णव्या । ' सदः आग्नीध्रं हविर्धानम् ' इत्येते यज्ञमण्डपास्तत्तद्देवताकाः । सदस इन्द्रदेवता । आग्नीध्रीयस्याग्निः । हविर्धानस्य विष्णुः । तेषामुपस्थानं तत्तद्देवताकैर्मन्त्रैः क्रियते । तस्माद्देवताज्ञानमावश्यकं तच्च निरुक्तादेव लभ्यम् । ' उपतिष्ठते ' इत्यादि ज्योतिष्टोमे श्रूयते ।

१४ ' लिङ्गक्रमसंख्यानात्कस्य युक्तं समाम्नानम् ' इति घ. झ. ठ. पाठः । च. पुस्तके ' काम्य ' इत्यस्य स्थाने शुद्ध

पङ्क्तिः

१०५ इति कृत्वा 'कस्य' इति पाठः स्वीकृतः । ठ. पुस्तके 'संख्यानात्कस्य' इत्यस्य स्थाने 'समाख्यानात्काम्य' इति पाठः स्वीक्रियते । को मूलपाठ इति न ज्ञायते । जैमिनीयन्यायमालायां शाबरभाष्ये चान्ये पाठा न दीयन्ते । सर्वासु यजुःसंहितासु काम्ययाज्यानुवाक्याकाण्डं वर्तते । ता याज्यानुवाक्याः किं काम्यकर्मभ्योऽन्यत्र विनियोज्या उत काम्येष्वेवेति प्रश्नः । यद्यपि केवलाल्लिङ्गात्तत्तद्दैवताके कर्मणि ताः शेषत्वम् अङ्गभावं गन्तुमर्हन्ति तथापि य एव काम्यकर्मणां क्रमः यच्च समाख्यानं ते एवासु याज्यानुवाक्यासु दृश्येते । तेन काम्यकर्मस्वेव तेषां विनियोगो युक्तः । समाख्यानम् = काम्ययाज्यानुवाक्याकाण्डमिति काम्यकर्मसंबद्धं नाम । शेषभावः = अङ्गत्वम् । कर्म अङ्गि । मन्त्राः अङ्गानि ।

१६ 'अधिकारे एव च' इति घ. झ. ट. पाठः । अधिकारे मण्डपोपस्थाने मन्त्राणां विधिर्वर्तत एव । आग्नीध्रसदोहविर्धानानां मण्डपानामुपस्थानाय प्रकरणाद्वहिर्वर्तमाना मन्त्रा नावश्यका यस्मात्तल्लिङ्गा मन्त्रा ज्योतिष्टोमप्रकरणे अतदाख्येषु उपस्थानभिन्नेषु वैसर्जनादिकार्येषु विहिता एव । त एव मन्त्रा अत्रातिदेष्टव्याः ।

१०६ ३ नैघण्टुकं = गौणम् । 'तद्यदन्यदैवते मन्त्रे निपतति नैघण्टुकं तत्' (निरु० ४ । २० ) ।

४ एकमन्त्रगतानां देवताभिधानानां गुणप्रधानभावमजानन्तः ।

८ दुरिष्टहेतुकः = अन्यदेवतैर्मन्त्रैर्योगो दुष्ट इति ।

११ एतन्निरुक्तशास्त्रं प्रतिविशिष्टमुपकारं करोति ।

१३–१४ ( ट. पुस्तके ) 'भरद्वाजस्यार्षम् । त्वां हि । हिर्यस्मादर्थे । यस्मात्त्वां मन्द्रतमम् अतिशयेन स्तुत्यम् । अर्कशोकैः । अर्को मन्त्रः । शोको दीप्तिः । अर्कश्च ते शोकाश्चार्कशोकास्तैः । स्वदीप्त्या । दीप्तैर्मन्त्रार्थैरित्यर्थः । ववृमहे संभजामहे । नित्यं स्तुम इत्यर्थः । यस्मादिति श्रुतेस्तस्मादित्यध्याहार्यः । तस्मात् महि मह स्तुतिरूपं नः अस्माकं श्रोषि शृणु

पत्रं पङ्क्तिः

१०६ हे अग्ने । कतम उच्यते । इन्द्रमिव त्वां शवसा । शव इति बलनाम । अन्तर्णीतमत्वर्थं चेह द्रष्टव्यम् । बलवता सारवता । सारवस्येति पाठः । स्वारस्यवतेत्यर्थः । देवता देवतां वायुम् । लुप्तोपममेतत् । वायुसदृशं गृणन्ति प्रीणन्ति राधसा धनेन हविर्लक्षणेन नृतमाः प्रकृष्टा नराः ’। (नेदं सायणभाष्यम्) ।

१५ आग्नेये क्रतौ प्रातः पठ्यमानानि सूक्तानि प्रातरनुवाकसंज्ञानि । तेषां प्रतीकानि आश्वलायनश्रौतसूत्रे ४ । १३ दीयन्ते । तान्येवाश्विनशस्त्रे शंसनीयानि ।

२४ ‘ बलवतीभिः ’ इति पाठः समीचीनतरः । स्तुतयः कथं बलकृतयो भवेयुः । ता हि बलकृतीः स्तुवीयुः ।

१०७ ५ अग्निरिवेति मन्त्रः निरु० १ । ४ इत्यत्र व्याख्यातः ।

७ मान्यवे = मन्युदैवते ।

८ अनेकदेवतानां लिङ्गैः संकटेषु पूर्णेषु ।

९ दुरवधारं = दुःखेनावधार्यते ।
मन्त्राणां व्याख्यानस्य यः प्रसिद्धः शास्त्रसिद्धः समयः सिद्धान्तो मार्गस्तेन निरुक्तशास्त्रमनधीतवता ।

१२ ‘ अस्य ’ इन्द्रस्य त्विषिरपि भवति । ‘ इन्द्राय मनस्वते त्विषीमते एकादशकपालं निर्वपेत् ’ ( काठ० सं० १० । ८ ) । ज्वाला त्विषिः न केवलमग्नेः । इन्द्रस्यापि । निघण्टुप्रथमाध्याये ज्वलतो नामधेयान्येकादशैव ( निघ० १ । १७ ) । तेषु त्विषिवत् दीप्तिरपि न विद्यते ।

१३ अन्यान्यपि ज्वलतो नामधेयानि सन्ति । ‘ दीप्तिनाम भवति ’ इति मूले । वृत्तौ ‘ भवति ’ शब्दो न दृश्यते । दुर्गदृष्टे निरुक्तमूले ‘ भवति ’ शब्दो न स्यात् ।

१०८ १ ‘ स्थाणुरित्येतौ पूर्वाचार्यश्लोकौ । छिन्नशाखं बहुमूलं स्थाणुशब्देनोच्यते । लुप्तोपमश्चायम् । स्थाणुरिव भारहार इति ’ ( ढ. ) । अनयोः श्लोकयोः केषुचित्पुस्तकेषु ( क. ख, छ, त. ) किलाभू सकलं भद्रमश्नुते नाकमेति इत्येवं स्वरा दीयन्ते । थ. पुस्तके द्वितीयः श्लोको न स्वर्यते । निरु० २ । ४ इत्यत्र नाकशब्दो व्युत्पाद्यते ।

पत्रं पङ्क्तिः

१०८ १९ स्थाणुः = गर्दभः । अयमर्थः कस्मिन्कोशे दीयत इति न ज्ञायते ।

२२ ' यद्गृहीतमिति । ग्रन्थतो वेदस्य । विज्ञातं नार्थतः । निगद उच्चारणमात्रम् । तेनैवाध्येत्रा शब्द्यते । नास्यार्थज्ञानमस्मिन्भवति । यथाग्निरहिते प्रदेशे शुष्कैधो न ज्वलति । एवमग्निस्थानीयेनार्थज्ञानेन रहितेऽस्मिन्नध्येतरि न ज्वलति । स्वकार्यं न करोतीत्यर्थः । कर्हिचित् कदाचिदपि । एवमनयोः स्मृतिश्लोकयोः पूर्वेणार्धेनाज्ञाननिन्दापरेण ज्ञानप्रशंसा । उत्तरेण श्लोकेनाज्ञानस्य निन्देति ' ( ट. ) ।
अर्थतः किंचिदप्यविज्ञातम् ।

२३ निगदमात्रेण = शब्दमात्रेण ।

१०९ ७ ' स्थाणुस्ति० स हि तिष्ठत्येव न चलति । अर्थोऽर्तेर्गत्यर्थस्य । यस्तावच्छब्दस्यार्थः स तस्माद्गम्यते । यो हिरण्यादिः सोऽप्यनादिव्यवहारेणान्यस्मात्पुरुषादन्यं गच्छति । अरास्थो वा । अरणं गमनं शब्दस्य तावदुच्चरितस्य तिरोधानं तस्मिन्नर्थस्तिष्ठति न शब्देन सह तिरोधीयते । इतरत्रापि गमनम् । मरणस्वामिनि तत्वान् हिरण्यादिरर्थस्तिष्ठति न स्वामिना सह गच्छतीति ' ( ट. ) ।

८ आसीत = आस् इत्यस्य विध्यर्थे रूपम् । आसनस्य संभवोऽपि नास्ति । ' आसीदति ' इति पाठः समीचीनः ।

११ दीनारशब्देन सुवर्णम् ( ट. ) ।

१३ शिष्टैरनुगम्यते या स्मृतिस्तस्याम् । शास्त्रे इत्यर्थः ।

१४ लोके वेदे शास्त्रे चेति घ. झ. ट. ठ. पाठः ।

११० ५ अनर्थज्ञस्तीक्ष्णविद्य उच्यते । केवलपठनेन तस्य विद्या तीक्ष्णा ।

१० मूले ' अर्धमाह ' इत्यन्वयः ( १०९ । २० ) । ' अर्धेन मन्त्रदगाह ' इति दुर्गकृतोऽन्वयः ।

११ ' उतो इति उ शब्दस्यार्थे । एकस्मै तु अर्थज्ञाय तन्वं शरीरम् आत्मीयं वाक् सर्वप्रकारं विसस्रे । सर्तेर्गत्यर्थस्यान्तर्णीतण्यर्थस्येदं रूपम् । विविधं गमयति विवृणुते प्रकाशयतीत्यर्थः ( ट. ) ।

पत्रं पङ्क्तिः

११० १४ अनया वाचा (ऋगर्धम्) अर्थस्य प्रकाशनमाह इति यास्कमतोऽन्वयः । चतुर्थे पादे 'उत्तमया वाचा उपमा' (१०९।२१) । वस्तुतस्तु जायया उत्तमाया वाच उपमा ।

१९ नीरजस्का शुद्धा भवति ।

२१ य इतरस्तामेव घनपटाच्छादितां पश्यति न स तां सम्यक्पश्यति ।

२३ समस्तं = वाक्यार्थम् । व्यस्तं = पदार्थम् । 'सुवासाः कल्याणवासाः कामयमाना ऋतुकालेषु' (१०९।२२) इदं छ. त. द. पुस्तकेषु न विद्यते दुर्गेणापि न व्याख्यायते । 'स शृणोति' (१०९ । २४) इत्यपि न व्याख्यायते ।

१११ २–३ अमुना ज्ञानप्रशंसाख्येन फलेन । प्रतिविशिष्टम् = उत्तमम् ।

११२ १७ 'आहुः' इत्यस्य लोका विद्वांसो वा कर्ता । वाक् कथंकारं कर्ता स्यात् । मूले 'वाक्सख्ये' इति समासः । वाचा सख्यं वाक्सख्यं तस्मिन् । वाक्परिचयेऽध्ययने ज्ञाने च । ग. च. ज. पुस्तकानां निरुक्तपाठः छ. त. द. पाठसदृशः ।

१९ 'बलवत्सु' इत्यनेन 'अपि' नान्वेति । अपि=अपि च ।

२० देवतापरिज्ञानं पदविभागो मन्त्रार्थप्रत्यय इत्यादिषु । व्याकरणम् = विवरणम् ।

२५ 'धिवि प्रीणने' (धा०१।५९४) । धिनोति प्रीणयति । 'वाग्धिनोति' इति यदि पाठस्तदा वाक् हिनोति प्रेरयति । किंतु 'धिनोति' 'धेन्वा' इत्यनेन संबद्धम् । 'वाक् हिनोति' 'हिन्वन्त्यपि वाजिनेषु' इत्यनेन ।

११३ १ यां वाचमसौ बिभर्ति न सा वाक् किंतु अवाक् वाङ्माया । वाक्प्रतिरूपा माया । 'वाक्प्रतिरूपया' (१११।११) एतत्पदं दुर्गेण न व्याख्यातम् ।

२५ अधिदैवतं सर्वं ज्ञानेनाध्यात्मं भवति ।

२६ कार्याणां करणानां च या अधिदेवतास्तेषां द्वारेण । सोऽयमुपासकः ।

११४ ३ अध्यात्मज्ञानमेव पुरुषार्थः । पुरुषार्थस्य निष्ठानम् आत्यन्तिकी निष्ठा अन्त्यं स्थानमध्यात्मे । 'न निष्पन्नत्वात्'

पत्रं पङ्क्तिः

इति घ. झ. ट. ठ. पाठः । पुरुषार्थः अध्यात्मे अध्यात्मज्ञाने निष्पन्नः । फलतीत्यर्थः । 'न' पदं प्रामादिकम् । ग. ज. पाठः 'निष्पन्नत्वात्' इति ।

१२ औपचारिक्या वृत्त्या=लक्षणया ।

११४ १८ 'द्वन्द्वमनोज्ञादिभ्यश्च' ( पा० ५ । १ । १३३ ) इति सूत्रेण 'शैष्योपाध्यायिका' इति रूपम् । 'शिष्योपाध्यायिका' इति प्रामादिकम् ।

११५ ३ 'इत्येतवमर्थं' ( घ. झ. ठ. पाठः ) = इति एतमर्थं + इति एवमर्थम् ।

५ कालानुरूपाम्=आयुःसंकोचानुरूपाम् ।
इमं ग्रन्थं निघण्टुसंज्ञकम् ।

९ व्यासेन भेदेन विशिष्टरचनया ।

१२ यास्कः पाणिनेः प्राचीनः । तेन शाकटायनादीनां व्याकरणानि सर्वाणि प्रातिशाख्यानि च तस्य परिचितानि । यास्कात्पुरातनानि सर्वाणि निरुक्तशास्त्राणि चतुर्दशाध्यायात्मकान्यासन्निति कथं ज्ञायते ।

१६ भाष्यवाक्यप्रसक्तं = भाष्यवाक्ये प्रसङ्गेनागतम् । 'भाष्यकारप्रसक्तं' ( घ. झ. ट. ठ. पाठः ) । इदं 'भाष्यकारः प्रसक्तम्' इति स्याद्यस्माद्यो निर्ब्रवीति स भाष्यकार एव ।

१६ 'बिल्मम्=उपायः' ( ट. ) । "बिल्ममिति बिभर्तेः रूपम् । उपायो बिभर्त्युपेयं भासते च प्रकाशीभवति । तत्तेन बिल्मशब्दस्य साक्षात्प्रसिद्धस्य लोके यदुपादानं निर्वचनं च क्वचित्तस्य मन्त्रेषु प्रयोगोऽस्ति तदर्थं तद्दर्शयिष्यामः । 'अस्मै बहूनामवमाय सख्ये० परि वन्द ऋग्भिः' ( ऋ० सं० २ । ३५ । १२ ) इति । गृत्समदस्यार्षम् । अस्या ऋचोऽपान्नपाद्देवता अपोनप्त्रीयसूक्ते समाम्नातत्वात् । अपान्नपाच्च मध्यमः । अस्मै प्रकृतायापान्नप्त्रे बहूनां यजमानानाम् । अवमाय अन्तिकनाम । अन्तिकाय संनिकृष्टाय प्राप्तायेत्यर्थः । सर्वत्र द्वितीयार्थे चतुर्थी । बहूनां सख्ये सख्याय यज्ञैः सोमयागैः ज्योतिष्टोमादिभिः । विधेम परिचरेमेत्याशास्महे ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ११५ | | नमसा स्तुत्या हविर्भिः पुरोडाशादिभिः । तदर्थं च सानु समुच्छ्रितं प्रदेशं गार्हपत्यादिस्थललक्षणं वेदिलक्षणं च संमार्ज्मि गोमयपाण्डुरमृत्तिकादिना । दिधिषामि । धिष धारणे । धारयितुं चेच्छामि गार्हपत्यमग्निम् । बिल्मैः उपायैः ज्वलनस्म( म ? )यैः भस्मनि गोमयनिखननादिभिः दधामि धारयामि चैनम् अन्नैः सायंप्रातरग्निहोत्रहोमद्रव्यलक्षणैः यवाग्वादिभिः । परिवन्दे सर्वतः स्तौमि ऋग्भिः स्तुतिभिः । एवमस्मिन्मन्त्रे बिल्मशब्दस्य प्रयोगादिहोपादानं निर्वचनं चैवमर्थं द्रष्टव्यम् ( ठ. ) । |
| | २० | आगयातम् ( घ. ढ. पाठः ) = आगतम् + आयातम् । आगमः वेदः परिशोधितः विवृतः स्पष्टीकृतः । |
| ११६ | २२–२३ | अस्मिन्मन्त्रे इदं देवतानाम नैघण्टुकम् ( इदम् ) अन्यत् ( देवतानाम ) अत्र प्राधान्येन वर्तते इत्यन्वयः । |
| ११७ | १०–११ | ' क० ' इत्यस्य ' यज्ञानां मध्येऽवस्थितमुत्तरवेद्यादिषु धिष्ण्येषु ' ( ११ ) इत्युत्तरम् । ' कथम् ' इत्यस्य न किमपि । |
| ११८ | १ | ' तेनानभिभूयमानः ' इति ठ. पाठः समीचीनः । तेन प्राणिविशेषेण । तैः कैः । |
| | ६ | ' मृधः संग्रामयु( मोद्यु )क्तान् युयुत्सून् ' इति ठ. पुस्तकेऽधिकं सायणभाष्याद्गृहीतम् । |
| | २० | तद्वान् = पर्ववान् । |
| ११९ | १ | संधय एवेति संधिमात्रं तदेव सामान्यम् । यथा शिलानां संधयस्तथा कालानाम् । ' मात्र'शब्दो मूले न विद्यते । इतरत् शिलापर्व कालपर्वप्रकृति । कस्मात्कारणात् शिलासंधिः पर्वेत्यभिधीयते । कालसंधेः । वस्तुतस्तु शिलासंधेः कालसंधिः पर्वेत्यभिधीयते । |
| | २ | कालसंधिश्च शिलासंधिश्चेत्यत्र संधित्वं समानम् । |

———

पत्रं पङ्क्तिः

द्वितीयोऽध्यायः ।

१२० २६ ' तत्र निर्वचनीयपदसमूहमध्ये येष्वग्न्यादिपदेषु पूर्वोक्तरीत्या स्वरसंस्कारौ समर्थौ व्याकरणसिद्धौ स्याताम् । स्वर उदात्तादिः संस्कारो निप्रत्ययादिः । किंच तौ स्वरसंस्कारौ प्रादे० ताम् । शब्दस्यैकदेशः पूर्वोक्तोऽगिधातुः प्रदेशः । तत्र भवो गुणो गतिरूपोऽर्थः । तेनान्वितौ । तान्यग्न्यादिपदानि तथा व्याकरणानुसारेण निर्ब्रूयात् । तच्च निर्वचनमस्माभिः प्रदर्शितम् । अथ पूर्वोक्तवैलक्षण्येन कश्चित्त्वेन विवक्षितोऽर्थोऽनन्वितः तस्मिञ्छब्देऽनुगतो न भवेत्तस्यैवं व्याख्यानमप्रादेशिके विकारे इति । अग्रनयनादिरूपः क्रियाविशेषो विकारः । स च प्रदेशेनाग्निशब्दैकदेशेनात्र नाभिधीयते इति अप्रादेशिकः । एवं सति यः पुमानर्थनित्यः स्वविवक्षितेऽर्थे नियतो निर्बन्धवान् ब्राह्मणानुसारेण वा देवतान्तरविशेषणत्वेन योजयितुं वा सनिर्बन्धः । तदानीं स पुमान् केनचिद्वृत्तिसामान्येन विवक्षितमर्थं परीक्षित तस्मिञ्छब्दे योजयेत् । वृत्तिः क्रिया । तद्रूपेण सामान्यं सादृश्यम् । अस्माभिश्चाग्रनयनादिरूपं क्रियात्वसाम्यमुपजीव्याग्रणीत्वाद्यर्थो योजितः । तदिदं यास्काभिमतं निर्वचनम् । स्थौलाष्ठीविरक्षरसाम्यान्निर्वक्ति । अक्नोपनशब्दस्यादौ निषेधार्थमकाररूपमक्षरं विद्यते । अग्निशब्दस्याप्यादावकारोऽस्ति । तदिदमक्षरसाम्यम् । शाकपूणिस्तु वर्णसाम्यान्निर्ब्रूते । दग्धशब्दाग्निशब्दयोर्गकारेण वर्णेन साम्यम् । सर्वथापि निर्वचनं न त्याज्यमिति विद्यारण्याः ' ( ट. ) इदमवतरणं ' अग्निमीळे० ' विद्यारण्यकृतभाष्ये वर्तते ।

१२१ १३ ' निर्वचनलक्षणतः ' ( ठ. ड. ) निर्वचनस्य लक्षणं दत्वा ते नैघण्टुकनैगमे प्रकरणे व्याख्यास्यामः ।

१४ अपिहितस्य = प्रच्छन्नस्य ।

१३–१४ ' अथ निर्वचनं लक्षणतो व्याख्यास्यामः ' इत्यन्वयोऽनावश्यकः । अधुना निर्वचनं कथं कर्तव्यमिति प्रदर्शयिष्यामः । यास्को निर्वचनशब्दस्यात्र लक्षणं न ददाति ।

१५–१६ ' स एष०, इत्युच्यते ' अत्र ' इति'शब्दो व्यर्थः । अथवा । ' एवम् ' अर्थे । एवम् उच्यते वर्ण्यते ।

पत्रं पङ्क्तिः

१२१

१९ अवैपरीत्येन संगतार्थौ = 'लक्षणशास्त्रविहितयोपपत्त्या युक्तौ नान्यथा । लक्षणाविप्रतिपत्त्या स्वरोऽवस्थित एवं संस्कारोऽपि '( दुर्गवृत्तिः ६९ । १४–१६ ) ।

२० 'प्रदेशाभिधायिना० वनुगतौ' इत्यस्यार्थः = अभिधेयस्थे धातुरूपे स्याताम् । यथा हरः = संहारस्य कर्ता शिवः । हृ हरणे इत्यस्य हर इति रूपम् । 'हर'शब्दस्य योऽर्थस्तदनुरूपमिदं धातुरूपम् । 'हर'शब्दे विशिष्टः स्वरो विशिष्टः संस्कारश्च वर्तेते । हृधातोर्यः विशिष्टरूपसिद्धये संस्कारः व्याकरणशास्त्रानुरूपा या रूपसिद्धिः यश्च व्याकरणशास्त्रानुरूपः स्वरः तौ च इमौ च उभावपि एकौ एव । दुर्गः 'शब्दे स्वरसंस्कारौ संगतार्थौ स्याताम् अभिधेये या क्रिया लक्ष्यते तदभिधायकं च धातुरूपं वर्तेत' इति 'च'शब्देन धातुरूपात् स्वरसंस्कारौ भिन्नौ मन्यते तद्दुर्बोधम् । इदं सर्वं १ । १२ खण्डस्य टीकायां सुगमम् ।

२०–२१ अभिधेयस्थे धातुरूप० = अभिधेयं द्रव्यम् । द्रव्यस्याभिधानं तस्मिन् द्रव्ये ( अभिधेये ) या क्रिया लक्ष्यते तस्याः क्रियाया अभिधायकं यद्धातुरूपं वर्तते तदनुरूपं प्रायशो भवति । तस्मिन् रूपे वर्तमानौ स्वरसंस्कारौ लक्षणशास्त्रानुसारिणौ यदि स्याताम् ( दुर्गः १ । १२ ) ।

१२२

३ अन्विष्यमाणः = व्युत्पाद्यमानः ।

४ शब्दे कश्चिद्धातुर्लक्ष्यते तस्य धातोरर्थः शब्दस्य वाच्यार्थाद्भिन्नो यत्र वर्तते तत्र किं कर्तव्यम् ।

७ अभिधेयं = सत्त्वं द्रव्यम् । तत्तथा क्रिया ।

९ 'मुद्गनित्यः' ईदृशो नित्यशब्दस्य 'प्रधानम्' इत्यर्थे प्रयोगो न कुत्रापि दृष्टः । अर्थनित्यः = अर्थतत्परः अर्थावलम्बी ।

१२ अर्थसामान्यम् = अर्थसादृश्यम् । वृत्तिसामान्येन = अस्मिन् शब्देऽस्य धातोरर्थसादृश्येन वृत्तिरस्तीति धातुः कल्प्यः । धातोर्विशिष्टोऽर्थो न स्यात् ।

१३ ततः = अर्थप्राधान्येन ।

पत्रं पङ्क्तिः

१२२ २१ सूत्रेण बद्धं वस्तु यथा सूत्रान्मुक्तं प्रसार्य प्रदर्श्यते तथा स सूक्ष्मो धात्वर्थः विस्तार्य प्रदर्शयितव्यः ।

१२३ १ 'स्वार्थाभिधेय' इत्यत्र 'अर्थ'शब्दः 'अभिधेय'-शब्दो वा व्यर्थः । एभिः शब्दैः स्वार्थैः संबन्धस्त्यक्तः ।

२ क्रियागुणः धातुरूपम् । क्रियासादृश्यमेव हेतुः भिन्नार्थेषु शब्दस्य प्रयोगे कारणं नान्यत्किंचित् ।

अन्येषु अर्थान्तरेषु = अन्येषु अर्थेषु । अन्ये अर्था अर्थान्तराणि । तस्मात् 'अन्येषु'शब्दो व्यर्थः ।

५ अभिधेयम् = अभिधातुं योग्यम् । 'प्रवीणः' इत्यस्य गान्धर्वं गानम् अभिधेयोऽर्थः । स त्यज्यते । केवलम् अभ्यासपाटवं गृह्यते । सर्वेष्वर्थेष्वभ्यासपाटवमेव सामान्यम् ।

८ आरः अथवा आरं = कशा अङ्कुशो वा । आरा = चर्मप्रभेदिका । महाराष्ट्रभाषायाम् 'आरी' इति ख्याता । तस्मात् । 'प्रागारसं०' इति पाठः शुद्धः ।

'आकूतेनैव' इत्यस्य स्थाने 'वाक्संकेतेनैव' इति ठ. ड. पाठः । व्याहृते शब्दोच्चारणे आकूतस्य न प्रयोजनम् । व्याहृतमात्रेणैव = वाक्संकेतेनैव संकेतितशब्दोच्चरणेनैव । संकेतः = निश्चितो वाक्प्रयोगः । आकूतम् = उद्देशः संकेतो वा तस्य ज्ञानम् ।

९ उद्गतारत्वात् = आरः अश्वशरीरे नैव पतति । नित्यं स उद्धृतो धार्यते ।

१३ शसति ( च. पाठः ) = हिनस्ति ।

१४ 'मुखग्रहणात्' घ. झ. ट. ड. पाठो दुर्बोधः । मुख्यग्रहणात् मुख्यार्थस्य ग्रहणात् ।

१५ निर्गतस्त्रिंशतोऽङ्गुलिभ्यः इति वस्तुतो व्युत्पत्तिः । अधुनापि निस्त्रिंशशब्दः खड्गार्थे एव वर्तते । क्रूर इत्यर्थो लाक्षणिक एव । इदं दुर्गस्य केवलं वाचालत्वं प्रदर्शयति ।

१२४ १ 'सिद्धैव' इति पाठः साधुतरः । तथा 'आद्रियेत' (५) इत्यपि ।

९ ग. च. ज. पुस्तकेषु द्वौ पाठौ । यदा कश्चिच्छब्दो नानार्थेषु वर्तते मुख्योऽर्थः क इति च न निश्चीयते तदा अर्थानव-

पत्रं पङ्क्तिः

१२४ स्थितौ चेतसा प्रतीत्य विचार्यापि निश्चयाभावेन ( अप्रतिपन्नः = प्रतिपत्तिं निश्चयं न प्राप्तः ) अयमर्थः स्यादयं वेति संमुह्य नरोऽस्मिन्नर्थनिर्धारणे शेत इवेति विशयः संशयः। इदं च. दत्तपाठभेदस्य विवरणम्।

९–१० विचारयन् शेत इति विशयः। अयं पाठः सुबोधः।

१० शब्दानामर्थेषु नानाप्रकारा प्रवृत्तिः। अस्मात्कारणादयमर्थ इत्थं प्रवृत्त इति निश्चयं कर्तुमशक्नुवन्तः प्रतिपक्षसंमोहात् परस्परविरुद्धव्युत्पत्तिभिः संमूढा ईदृशेऽनिश्चये शेरत इवेति विशयः संशयः।

१४–१५ सुपां स्थाने सुपो भवन्ति = 'सुपां सुलुक्' इति पाणिनिसूत्रेण ( ७।१।३९ ) एकस्या विभक्त्याः स्थाने वेदेऽन्या विभक्तिर्भवति। यथा साधु मत्या उरुणा इत्येतेषां स्थाने साधुया मती उरुया।

१४ व्यत्ययः = एकस्य स्थानेऽन्यस्य प्रयोगः।

२२ दा = द् + आ। 'क्तक्तवतू निष्ठा' (पा० १। २६ ) इति 'त' प्रत्ययस्य निष्ठासंज्ञा।

२३–२४ 'दो दद्घोः' इत्यस्य 'अच उपसर्गात्तः' इत्यपवादः।

१२५ ६ प्र + द् + आ + तं = प्र + द् + त् + तं = प्र + द् + तं = प्र + त् + तं = प्रत्तम्।

७ अव + दो + तं = अव + द् + ओ + तं = अव + द् + आ + तं = अव + द् + त्+ तं = अव + द् + तं = अव + त् + तं = अवत्तम्। एवं 'दा' इत्यस्य 'दो' इत्यस्य च 'त्' एव शिष्यते।

१० परगमनं 'परः संनिकर्षः संहिता' इत्यनेन।

१२ निवृत्तिंस्थानेषु = येषु प्रत्ययेषु परतो गुणवृद्धी न भवतस्तत्र। गुणवृद्ध्यभावस्य निवृत्तिरिति प्राचां संज्ञा। तस्य 'क्ङिति' इति पाणिनिसंज्ञा।

२३ 'अनुदात्तोपदेशवनोतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' ( पा० ६। ४। ३७ )। गमेरनुदात्तोपदेशः। अतो निष्ठाप्रत्यये क्त्वाप्रत्यये च परे 'मः' लोपः। 'गम०लोपः क्ङित्यनङि' ( पा० ६। ४।

पत्रं पङ्क्तिः

१२५ ९८)। परस्मैपदे लिटि अतुस् उस् इत्यादि प्रत्ययः कितः।

१२६ १ नोपधायाः=नान्तस्योपधायाः। इन्नन्तस्योपधायाः सौ परे दीर्घः।

२ अनपुंसकाः स्वादिपञ्चप्रत्ययाः सर्वनामसंज्ञाः (पा० १। ४। १७)।

८ 'याच्' इत्यस्य चकारलोपः।

१३ 'यजमानः हरिश्चन्द्र इति' (ट.)।

१५–१६ उपाकृतः=बर्हियुक्तया प्लक्षशाखया मन्त्रपुरःसरं समुपस्पृश्य स्वीकृतः। तत ऊर्ध्वं यूपबन्धनं विशसनं च।

१६–१८ प्रथमाग्निष्टोमस्यानन्तरं चयनं भवति। एतादृशे साग्निचित्याग्निष्टोमे समिष्टयजुर्नामका एकादशाहुतयो दीयन्ते। तदनन्तरमेका आज्याहुतिरनेन मन्त्रेण दीयते (तै० सं० ५। ७। ६)।

१८ चातुर्मास्येषु वरुणप्रघासनामको यागः। तत्र वरुणदेवताकं हविरनेन मन्त्रेण दीयते (तै० सं० ४। २। ११)

२२–२३ सांनाय्यः=दधिपयोमिश्र आहुतिविशेषः।

१२७ १ त्रि+ऋचः= तृचः। अत्र त्रिगतौ 'र इ' इत्येतौ लुप्येते। ऋवर्णस्यात्र क्व लोप इति न ज्ञायते। 'ऋवर्ण' इत्यस्य स्थाने 'इवर्ण' इति मूलपाठः स्यात्। 'त्रि' इत्यत्र रेफ इवर्णोदरमनुप्रविष्टः। स इवर्णेन सह लुप्यते।

२ घ. ट. ठ. ड. पाठः 'रेफ एव ऋवर्णोदरं क्रमिवत् बदरं क्रमिवदनुप्राविष्टः'। अत्र 'बंदरं क्रमिवत्' इति 'क्रमिवत्' इत्यस्यार्थ इति भाति।

९ वाटी गृहोद्यानं तस्य वाट्यः।

१२ स्तोकाः=वपाबिन्दवः।

१४ तर्कुः=कर्तनसाधनम्। इदं स्त्रीलिङ्गं पुल्लिङ्गं वा। न नपुंसकं यथात्र।

१२८ १८ 'गाधम्' इति ग. च. ज. पाठः। निरुक्तमूले तु (ग. च. ज. पुस्तकेष्वपि) 'गाधः' एव।

पत्रं पङ्क्तिः

१२८ १९ ' मद तृप्तियोगे ' इति धातुपाठः ( १० । १७२ ) ।

२३ वृञ् इति ग. च. ज. घ. ट. पाठः । ' वृञ् वरणे ' ( ५ । ८ ) ' वृञ् आवरणे ' ( १० । २८० ) इति धातुपाठः । ' वृञ् संभक्तौ ' धातुपाठे न वर्तते । ( आ ) वृणोति आच्छादयति इति द्वारः इति समीचीना व्युत्पत्तिः ।

२५ ' भरूजा ' इति पाठः । न भरूजः । भरुजा=क्रोष्टी ।

२७ ' दृष्टः ' इत्यशुद्धं दृष्टाः इति स्यात् ।

१२९ ६ ' चतस्रोऽन्तस्थास्ततः ' इति ऋक्प्रातिशाख्यस्य प्रथमपटले सूत्रम् । ' अन्तस्था ' इति स्त्रीलिङ्गं किमर्थमिति न ज्ञायते । स्पर्शानाम् उष्मणां च मध्ये वर्तन्त इत्यन्तस्थाः ।

२० ' सिद्धायामनुपपद्यमानायां=यदैका प्रकृतिः सिद्धा सती नानुपपद्यते तदा ।

२२–२३ ' यया ' ( ठ. ड. पाठः ) = यया प्रकृत्या । तया = तया प्रकृत्या ।

२३ ' उभयथाप्यनु° ' इदं वाक्यं दुर्गेण स्वकपोलकल्पितम् । नेदं कस्यचिन्निरुक्तवाक्यस्य विवरणम् ।

१३० १ अर्थशास्त्रं = निरुक्तम् । लक्षणशास्त्रम् = व्याकरणम् ।

८–९ ' च्छ्वोः शूट् ' इत्यनेन ' अव ' इत्यस्य ' व 'स्यैव ऊठ्भावः स्यात् । ' ज्वरत्वर° ' इत्यनेन ' अ व ' इत्युभयोः स्थाने ऊठ् भवति ।

१३ ' पृषु सेचने ' ( धा० १ । ७०६ ) न तु स्नेहने । ' प्रुषु दाहे ' ( धा० १ । ७०४ ) इत्यत्र रकारस्य संप्रसारणं स्यात् । किंतु दाहार्थः पृषत्सु ( जलबिन्दुषु ) न युज्यते । ' पृषु ' इत्यत्र संप्रसारणप्राप्तिर्नास्ति । ' पृष स्नेहनसेवनपूरणेषु ' ( धा० ९ । ५६ ) अयमेव धातुः स्यात् ।

१४ कुणारुः = मेघः ।

१३२ १० मृतकः = मृतदेहः ।

१२–१३ प्रकृतिविकारयोः ' चेतनावच्चेतनारहितौ ' इत्येतावर्थौ यास्केन नैवाभिप्रेतौ ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १३२ | १८ | 'अनेनैव' (ठ. ड. पाठः) समीचीनः। |
| | १९ | रूढिव्यवस्थया=देशभाषाप्रसिद्धिविभागेन। 'भाषाव्यवस्थया वा निगमव्यवस्थया वा' (१८–१९) इत्येवालम्। |
| १३३ | १९ | केचिद् द्वन्द्वसमासा एकवद्भवन्ति केचिन्न। |
| | २० | उपसर्गनिपातः = उपसर्गप्रयोगः। 'निपात'शब्दोऽत्र व्यर्थः। |
| | २२ | समानाधिकरणः समासः। |
| | २६ | 'दण्ड्यः पुरुषो दण्डपुरुषः' इति मूले केषुचित्पुस्तकेषु (१२८।५–६)। 'दण्डपुरुषः' दुर्गेण न व्याख्यायते। |
| १३५ | ५ | 'एवं किमस्मिन्' इति पाठे 'अस्मिन् कक्षे एवं ख्यापनीयं किमस्ति इत्यन्वयः। |
| | ९–१० | अस्यां कक्षशब्दव्युत्पत्तौ अन्योन्याश्रयः। अश्वकक्षसामान्यान्मनुष्यकक्षः। मनुष्यकक्षसामान्यादश्वस्य। स्त्री मनुष्यगणे न वर्तते किमिति दुर्गः प्रष्टव्यः। वस्तुतस्तु कक्षस्तृणं तद्भवा कक्ष्या। कक्षो जलं गाहत इति गाह+क्सः=कक्षः। अथवा। कक्षः=कख्यः। इदं तृणं निःसारं कः पदार्थ इति न ख्यापनमर्हति। अथवा। कषति हिनस्ति घर्षतीति कक्षः। कषणसामान्यान्मनुष्यस्य बाहुमूलप्रदेशः कक्षः। बाहुमूलसामान्याच्चाश्वस्य कक्षः। तं सेवत इति कक्ष्या। वस्तुतस्तु द्वयोरनयोः कोऽपि संबन्धो नास्ति। |
| | १२ | यास्कस्तद्धितार्थं समासार्थं च पूर्वं निर्वक्ति ततः पदार्थान् (१३३।२३–२५)। तद्धिते समासे च वर्तमानं पूर्वं पदं पूर्वं निर्वक्तव्यमपरं पदमपरं निर्वक्तव्यमित्यर्थे कल्प्यमाने 'दण्ड्यम्' इत्यत्रैकमेवपदं वर्तते। तत्र पूर्वं पूर्वमित्यस्य न किमपि प्रयोजनम्। तस्मान्नायमर्थः साधुः। के इमे अन्ये इति न ज्ञायते। |
| | १४ | 'यद्ययमेवार्थः स्यान्नान्यस्तर्हि' इति 'एव'पदस्यार्थः। |
| १३६ | १–२ | यस्मात्परमिति श्लोको छ. त. द. पुस्तकेषु एकधा स्वर्यते। त.= नापरमस्ति। दिवि। पुरुषेण सर्वं। छ. = नापरमस्ति। ज्यायोऽस्ति। पुरुषेण सर्वं। |

पत्रं पङ्क्तिः

१३६ ङ. थ. ध. पुस्तकेषूत्तरार्धो न स्वर्यते । श्वेताश्वतरोप-
निषदि सर्वोऽपि श्लोकः स्वररहित एव ।

१३ स्वम् = आत्मीयम् ।

१६–१८ ‘ स्वात्मनि स्वात्मना ’ ‘ विनिवर्त्य निवर्त्य ’ इति भेदः
सार्थः । ‘ स्वात्मनि विनिवर्त्य ’ इत्येतौ शब्दौ राजाधिकारं
दर्शयतः । ‘ स्वात्मना निवर्त्य ’ राजवश्यतां दर्शयतः ।

१६–१७ पुरुषः भृत्यार्थे एव वर्तमानो राजानमन्येभ्यो भृत्येभ्यो निवर्त-
यति किंतु न सर्वथा ।

१८ अन्योन्यविमिश्रपदार्थकौ = मिथः संस्पृष्टपदार्थौ ।

१९ घ. ट. पाठः संसृस्पृष्ट° = संसृष्ट° + संस्पृष्ट° ।

२१ राज्ञः = राजन् + अस् । अत्र ‘ राजन् ’ उपसर्जनम् ।
‘ अस् ’ प्रत्ययः तस्यार्थः प्रधानम् । षष्ठीप्रत्ययः स्वम्स्वा-
मिभावं व्यनक्ति । राज्ञः स्वामिभावः षष्ठीप्रत्ययेन व्यज्यते ।
राज्ञः = राजस्वामिकं धनादि ।

१३७ ६ सर्वात्मा ‘ अन्तरपुरुष ’ इति किमित्युच्यते । सोऽन्तःकरणं
सर्वं विश्वं च पूरयतीत्येतस्मात्कारणात् ।

१२ ‘ स एव सर्वम् ’ इति वाक्यशेषो नावश्यकः । ‘ स एको
दिवि तिष्ठति ’ ( १० ) इत्यन्वयः ।

१४ च. पुस्तके ‘ सर्वर्द्धिभावेन’शब्दः ‘ सर्वविभागेन ’ इति
शुद्धीक्रियते । ट. पुस्तके च. ‘ सर्वविभागेन’शब्दः
‘ सर्वर्द्धिभावेन ’ एवम् ।

१६ विश्वकद्राकर्षस्य द्विप्रकारा व्युत्पत्तिः । उभयत्र ‘ वि ’ मत्वर्थः ।
अयं शब्दः कस्मिन् ग्रन्थे विद्यत इति न ज्ञायते ।

१३८ ८ पादविकल्प इति कस्माज्ज्ञायते । कोऽप्यन्यः पाठः स्यात् ।

११ रूपसमासः इति प्राचां केषां चिदुपमायुक्तबहुव्रीहिसमा-
सानां नाम । इदमेकमेव द्योतयति यद्यास्कः पाणिनेः
प्राचीनः ।

१३९ ३ ‘ संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः ’ इत्यमरः ( २ ।
७ । ४१ ) । अत्र ‘ उपाकरणं ’ = व्युत्पादनम् ।

१२ ‘ नानुपसन्नाय । धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि

पत्रं पङ्क्तिः

१३९ तद्विधा। तत्र विद्या न वक्तव्या शुभं बीजमिवोषरे, (ट.)।

१६ 'अनिदंविदे। विद्ययैव समं काममिति च स्वामी' (ट.)।

१८ 'किंचित्' प्रकरणम्।

२३ आस्फालितं=संचालितं फुल्लं वा। 'चिस्फुरोर्णौ' (पा० ५६। १। ५४) इत्यनेन स्फारयति। स्फारितस्फालितौ समानौ। कुड्मलमित्यनेन हृदयं गम्यते। शास्त्रेण यस्य हृदयं न पूर्णं विकसितं नाक्षालितम् (२४) आसमन्तान्न धौतं वा तस्मै। विशेषणद्वयं दुर्गस्य वावदूकत्वं दर्शयति।

१४० १ 'असूया अक्षमा परगुणासहिष्णुत्वं चेतोधर्मः प्रादुर्भवतीति शेषः। ततश्चासावसकृदपि विविक्तमुच्यमानोऽपि अपरिगच्छन्नसूयकत्वात्स्वावबोधमुपाध्याये न्यसे (स्ये?)त्। यदयमेवं न बुध्यते तत्कथमन्यान्बोधयिष्यतीति। तथा च सति अस्य यशः काम + नै = स्यादिति स्वामी। असूयकः परगुणप्रध्वंसनशीलः' (ट.)।

६ अखिन्नमनसे=अनम्रचेतसे साहंकाराय। 'खिन्नमनसे' (ट. ठ. पाठः) = असूयापरिघातितमनसे। 'खिद् (तुदादि ६। १९५) परिघाते'। अथवा। खिन्नमनसे=अनुल्लसितमनसे।

८ 'जन्मान्तर' इत्युक्ते 'अन्य'शब्दो व्यर्थः। अनुभाविता=अनुभवयुक्ता ज्ञानयुक्ता कृता।

२२ ङ. तृणत्त्यवितथेन २४ मन्येत पितरं मातरं च तस्मै न द्रुह्येत्कतमच्चनाह। २४ अध्यापिता ये गुरुं नाद्रियन्ते। मनसा। २५ यथैवेत्यादि न स्वर्यते। २३ थ. तं मन्येते-त्येवं न स्वर्यते। २४ अध्यापिता ये गुरुं नाद्रि।

२५ थ. मनसा कर्मणा। यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति। यमेवं विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम्। वस्तेन द्रुह्येदित्यादि न स्वर्यते।

पत्रं पङ्क्तिः

१४१ ४—५ ' चतुर्दशानां विद्यास्थानानामधिष्ठात्री देवता स्वयमेव वा विद्या विग्रहिणी यथादर्शनं शिष्यानध्यापयन्तं कंचिद्ब्राह्मणमुपाध्यायमाजगाम । किमिति । अध्येषणार्थम् । त्वं गोपाय त्रायस्व माम् । किमेवं स्यादित्युपचयं दर्शयति । रक्षिता सती शेवधिः सुखनिधानं ते तवास्मि भवामि । कीदृशी रक्षेति च दर्शयति । असूयकेत्यादि । असूयकः परगुणप्रध्वंसनशीलः । उपाध्यायद्विट् हैतुको वा । तत एव निर्दग्धश्रद्धास्तिक्यभावनः सर्वमेवासूयन्न किंचित्प्रतिपद्यते । अनृजुः शठः । अन्यथावाक् अन्यथाचारः । अयतः अप्रयतोऽशुचिः भिन्नवृत्तो वा । अयतेन्द्रियः । एवंविधाय मा ब्रूयाः । मा वोच इत्यर्थः । वीर्यवती फलस्य साधिका तथाच स्यां भवेयम् ' ( ट. ठ. ) ।

१२ ग. ज. पाठः ' ब्रूयात्स्त्वम् = ब्रूयात्त्वम् + ब्रूयास्त्वम् । ब्रूयास्त्वं रि अ इति घ. ट. पाठः । अत्र ठ. पुस्तके ' °कार्यशुचिः ' ( ११ ) इत्यत्र यो ' र्य ' तस्य ' रि अ ' इति विश्लेषः पत्रस्याधस्तनभागे लिख्यते । स विश्लेषो वृत्तौ मिश्रितो भवति ।

१४ ' परतः श्रोतुरुपदेशः । य आतृणत्ति विध्यति सत्येन ब्रह्मणा कर्णौ । अदुःखम् । असमर्थसमासोऽयम् । सूचीवर्तिप्रवेशनादिनिमित्तं दुःखमकुर्वन् । अमृतम् अमृतत्वहेतुभूतमधिदेवादिविषयं ज्ञानं सम्यक् प्रयच्छन्तम् । तं मन्येत जानीयात् पितरं च मातरं च नेतरौ । तौ हि रत्यर्थं प्रवर्तेते । पुत्रस्तु वाजिनवदनुनिष्पादि । अयं तु स्वार्थमनपेक्ष्यैतदनुजिघृक्षयैव प्रवर्तते । तस्यापि वाजिनस्थानीयं यशः । तस्मै न दु० नाह । अह शब्दो विनिग्रहार्थीयः ' (ट. ठ. ) ।

१४२ ५—७ ' यथा ते गुरोः न फ ( पा? ) लकाः तथैव तान् श्रुतं तन्न भुनक्ति न पालयति ' ( ट. ठ. ) ।

१० ' च'पदं ' ब्रह्मचर्येणोपपन्नम् ' इत्यस्य पश्चाद्युक्तम् ।

१४३ १४ ' सर्वनाम्नाम् ' इत्यत्र ' सर्व'शब्दो व्यर्थः ।

१७ आगमः वेदः । परिशोधितः सार्थ इति प्रतिपादितः ।

१४४ २३ ' आधावतेति । अयास्यस्यार्षम् । आधावत आगच्छत हे

पत्रं पङ्क्तिः

१४४ सुहस्त्यः । अध्वर्यूणामिदं संबोधनम् । क्षिप्रकारित्वात्सुवर्णेन चालंकृतत्वात्सुशोभनो हस्तः सुहस्तः । स यस्यास्तीति सुहस्ती । छन्दसीवनिपौ चेति मत्वर्थे । इन्नन्त इदं बहुवचनं सुहस्त्यः । आगत्य शुक्रा गृभ्णीत मन्थिनौ ग्रहौ गृह्णीत । गृहीत्वा चानन्तरं गृहीतं गोभिर्गोविकारैः पयआदिभिः श्रीणीत मिश्रयत मत्सरं मादयितारं सोमम् । मैत्रावरुणादिकं पयसा मैत्रावरुणः श्रीणाति दध्नादित्यमिति श्रुतेः प्रकृतित्यागोऽत्र द्रव्येण पृथिव्यादिभिश्च मिश्रणसंभवात् । पयश्च श्रुत्वा निश्चित्याह । पयस इति । मत्सरं निगमप्रसक्तं निराह । मत्सरः सोमः । अत्रापि प्रसिद्धस्य सोमस्य मिश्रणासंभवात्सोमस्य मिश्रणोपदेशात्क्रियायोगमङ्गीकृत्य मत्सरः सोम इत्याहेति स्वामी ' ( ट. ) ।

१४५ ८ तेन = मत्सरेण लोभेन । धनाभिमुख्येन = धनस्यानुकूलतया । ' मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ' ( अम० ३ । ३ । १७२ ) ।

१६ ज्ञापकम् ईरो नामकरण इत्यस्य ।

१८ ' सौगन्ध्याक्रान्तत्वम् ' अयं किम् ईरप्रत्ययस्यार्थः ।

१४६ ३ अभ्यग्रम् = अन्तिकम् । ' उपकण्ठान्तिकाभ्यर्णाभ्यग्राः ' ( अमर० ३ । १ । ६७ ) ।

९ सोमाभिषवे युक्तानां ग्राव्णाम् अधीनम् ।

११ अष्टमात्रः = व्याप्तमात्रः अभिषुत एव । अशू व्याप्तौ । अंशुः = अश् +शम् । ' शमष्टमात्रो व्याप्तमात्रः पीतमात्रः सुखो भवतीत्यर्थः । अपाम सोमममृता इति श्रुतेरिति स्वामी ' ( ट. ) ।

२० सश्लेष्मकाः ( च. पाठः ) = श्लेष्मणा सहिताः । अयं पाठः साधुतरः । संश्लेषिताः = संयोजिताः ।

१४७ १ ' गोपयसोर्यत् ' ( पा० ४ । ३ । १६० ) इति गव्या गोर्विकारः । ज्यार्थे वर्तमानो गोशब्दः कथं ताद्धितः स्यात् ।

२ गौः गोरवयवाद्भिन्नद्रव्यस्य विकारः ।

पत्रं पङ्क्तिः

१४८ ४ ततो ( धनुषः )= तस्मात् ।

'विरिति शकुनिनाम वेतेर्गतिकर्मणोऽथापीषुनामेह भवत्ये-तस्मादेव' ( १४७ । ८ ) इत्यस्य दुर्गकृता व्याख्या न-सरला । यास्कमतेऽत्र पक्षिसंबन्धो नास्ति । गुणवृत्त्या पक्षिसंबन्धः स्यादिति दुर्गमतम् ।

१२ 'वृत्वा क्षां तिष्ठतीति वा क्षा क्षियतेर्निवासकर्मणः' ( १४७ । ५ ) इत्यस्य दुर्गो व्याख्यां न करोति । दुर्गेण छ. त. द. निरुक्तमूलं स्वीकृतमिति भाति ।

१३ कः शेषो विवरणीय इति न ज्ञायते ।

१४९ ७ हेरणमयं=हेरणं हेडनम् अवहेलनं तन्मयम् । कालचक्रं ( ६ ) सर्वभूतान्यवहेलते ।

१५ 'अव्मयम्' इति रूपं प्रामादिकं 'प्रत्यये भाषायां नित्यम्' इत्यनेन ( पा० ८ । ४ । ४५ वार्तिकम् ) ।

१६ 'तत्तेजःसंबन्धात्' अत्र तस्य= आदित्यस्य ।

२२ साम्राज्याभिषेके राष्ट्रभृन्नाम्न्यो द्वादशाहुतयो हूयन्ते ।

१५० ४ गमनस्य गोशब्दवाच्यता । गोमतः= गमनवतः । गन्धर्वः= गां ( गमनं ) धारयतीति ।

६ स्वाहा=सु+ आहा = आहुतिः ।

१५१ १९ अत्राह=अत्र+ अह ( खलु ) ।

२३-२५ 'बहुशृङ्गाः' ( १५० । १७ ) 'शम्नातेर्वा' 'शरणायोद्गतमिति वा' ( १५१ । २ ) इत्येतद्दुर्गेण न व्याख्यातम् ।

२६ 'अर्धाद्यत्' ( पा० ४ । ३ । ४ ) 'परावराधमोत्तम-पूर्वाच्च' ( पा० ४ । ३ । ५ ) इत्येताभ्यां सूत्राभ्यां परेऽर्धे स्थितं=परार्ध्यम् ।

१५२ १ 'परया ऋद्ध्या युक्तं परार्द्ध्यम्' इति रूपसाधनार्थं किं सूत्रम् । परेऽर्धे स्थितमिति तद्धिते परार्ध्यस्थम् इत्यत्र स्थः पुनरुक्तः । सा पुनरुक्तिः परमया ऋद्ध्या युक्ते स्थाने स्थितमित्यत्रापि वर्तत एव । किंच परा ऋद्धिः परर्द्धिरित्येव स्यात् । तया युक्तं परर्द्ध्यम् । प्रथमा व्युत्पत्तिरेव समीचीना ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १५२ | २ | तस्य पादनिधानात् । |
| | ४ | वस्तुनः प्रभागेण यः पादः चतुर्थो भागः स पशुपादप्रकृतिः । पशोः पादसमुदायस्यैकः पादश्चतुर्थांशः स प्रकृतिर्यस्य । पादः अंशः भागः इति सामान्यात् । |
| | १६–१७ | यस्य भूतजातस्याभिधानानि । यद् भूतजातम् आश्रयो यासां क्रियाणां तासां वचना अभिधायकाः । |
| | १७ | तेषां = लोकानाम् । |
| | १९ | 'भागरूपनामभ्यो धेयः' (पा० ५।४।२५ वार्तिकं) इति नामधेयम् । |
| १५३ | २१ | 'अस्य वामस्य पलितस्य होतुः' इति ऋ० सं० १। १६४ सूक्तम् । अस्य वामीयमिति तस्य सूक्तस्य नाम 'मतौ छः सूक्तसाम्नोः' इति (५।२।५९) पाणिनिसूत्रेण । |
| | २२ | अपत्यानि दुष्पोषत्वाद्व्यापन्नानि मृतानि । |
| | २३ | क एते परिव्राजकाः । 'परिव्राजकानाम् आत्मविदां दर्शनेऽस्या ऋचोऽर्थः । नैरुक्तानां त्वग्रिमः' (ट.) । |
| १५४ | ५ | 'यः पश्यति० तस्मात् तस्यैव०' अस्मिन् वाक्ये 'तस्मात्'-शब्दो व्यर्थः । |
| | ७ | द्वितीयः 'सः' व्यर्थः । |
| | १६ | 'यो रेतः सिञ्चति सः भूयो०' इति वाक्यं शुद्धम् । 'यद्रेतः सिञ्चति तद् भूयो०' इति वा । यत् तत्=यदा तदा । |
| १५५ | ८–१० | 'मातुर्योनौ' इत्यत्र माता तद्योनिश्च द्वे अपि 'अन्तरिक्षम्' इति दुर्बोधम् । |
| | १२ | मूले 'परिवीतः'शब्दो न तु 'परियुतो भवति' इति । |
| | १९ | 'दधिक्राव्णो अकारिषमिति दधिक्रावत्योपतिष्ठते' (मैत्रा० सं० १।५।६) । |
| | २१–२२ | 'दधिक्राव्णो अकारिषमित्याग्नीध्रीये दधिद्रप्सान् प्राश्य' (आश्व० श्रौ० ६।१२।१२) । 'आग्नीध्रे दधि भक्षयन्ति' इत्यन्यसूत्रस्थं स्यात् । |
| १५५ | २२–२३ | 'ऊर्ध्वामेनामुच्छ्रयतात्' इत्यनेन महिषीमितरा राजदारा |

पत्रं पङ्क्तिः

१५५ बोधयन्ति। 'दधिक्राव्णो अकारिषम्' इति सर्वाः सुरभिमतीमृचमन्ततो जपन्ति (तै० सं० ७ । ४ । १९.)। दुर्गेण दत्तः कल्पोऽन्यसूत्रस्थः स्यात् ।

१५६ १–२ 'अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च । पुरुषविशेषं प्राप्य भवन्ति योग्या ह्ययोग्याश्चेति' (ट)।

३ लक्षणोद्देशमात्रं० = एकैकस्य मन्त्रस्य निर्वचनं निर्वचनस्य लक्षणमुद्देश्यं च प्रतिपादयितुमेव क्रियते । न तु सर्वेऽर्था दीयन्ते ।

५ ग. च. ज. पाठः नात्रापरोधोऽस्ति = उपपन्नार्थकरणे न कोऽपि प्रतिबन्धः ।

६ संदेहाविकारं (घ. ट. ठ. ड. पाठः) इत्यत्र 'वि' प्रामादिकम् । 'धि'स्थाने 'वि' लेखनदोषात् । संदेहप्रकरणमिदम् । तदुपजीवन् = तदन्तरेणैव ।

७ पूणयति = संहन्ति = राशीकरोति ।
'जानामीति' च. पुस्तके 'जानानीति' शुद्धीक्रीयते । किंतु निरुक्तमूले नैकस्मिन्नपि पुस्तकेऽयं पाठो विद्यते (१५३ । १५)

१५७ १–३ सायणस्यापि विस्तृतं भाष्यमस्या ऋचः ।

८ सायणभाष्ये अयं खण्डः २ । ८ न तु २ । ९ ।

१५८ २० निर्णेक्तव्यः (च. पाठः) = संशोध्यः निर्णेतव्यः ।

२३ सर्वा देवता जानामीति शाकपूणेः साभिमानं मतं (संकल्पः) तस्मै देवता प्रादुर्बभूव तां स न जज्ञ इत्येवमादीदमत्र संदेहप्रकरणसंबन्धेन कथितम् । गवादिशब्दानुक्रमणं तु मुख्यो विषयः ।

२४ अभ्युह्य = वितर्क्य ।

१५९ २ 'नैघण्टुका हि ये शब्दाः प्रत्यर्थं गणशः स्थिताः' इत्येवं प्रथमार्थेन भवितव्यम् । अन्यथान्वयो दुर्लभ एव । तेषां तत्त्वार्थान् छन्दोभ्योऽन्विष्य योगतस्तान् निर्ब्रूयात् ।

१६० ११ आयम्यमानं = शिल्पिभिः ००० विस्तीर्यमाणम् । धनिभिर्ह्रियत एव । 'ह्रियते चोरैः' आयम्यमानं बध्यमानं

पत्रं पङ्क्तिः

१६० यत्नतो रक्ष्यमाणमपीत्यर्थः ' ( ट. ) । ' आयाम्यमान ' इति च. पाठः । ' यमोऽपरिवेषणे ' ( धा० १ । ८४४ ) इत्यस्य ' आयामयति ' रूपम् । भोजने एव ' आयमयति ' । 'आयम्यमानं ' रूपं प्रामादिकम् । किंतु निरुक्तमूलपुस्तकेषु सर्वेषु इदमेव रूपं प्रयुक्तं दृश्यते ( १९९। ७ ) ।

१३ ' हृदयरमणं भवतीति वा ' ( १५९ । ८ ) इदं दुर्गेण न व्याख्यातम् ।

१६–१७ मूले ' प्रेप्साकर्मणः ' ( १५९ । ८–९ ) सर्वेषु पुस्तकेषु । अत्र तु प्रेप्सार्थस्य । दुर्गलब्धं निरुक्तमूलं भिन्नं स्यात् ।

१७–१८ ' लोकानुक्रमेण ' इति क. ख. ग. ज. पाठः । ' पृथिवी हिरण्मयम् ' इत्यत्र लोकानुक्रमो नास्ति । निघण्टुषु हिरण्यनाम्नामनन्तरमन्तरिक्षनामानि पठयन्ते ।

२१ व्योमन् = वि + आ + ऊमन् । ऊ अवतेः + मन् ।

२३ क्षान्तं = क्षमायुक्तम् । द्यावापृथिव्योर्मध्ये स्थितमेतदतीव क्षमायुक्तम् । क्षमाशीलेनैतेन मेघादि सर्वं धार्यते नाधः पात्यते । दुर्गव्याख्याने ' द्यावापृथिव्योरन्तरा हीदमवस्थितं ' पुनरुक्तं भवेत् । ' अन्तरेमे ' इत्यस्य तद्व्याख्यानम् ।

क्षायाः अन्तः = क्षान्तः इति शुद्धं रूपम् । ' अन्त– ' शब्दो नैव नपुंसकः । क्षायाः अन्तो यस्मिंस्तद् इति बहुव्रीहौ ' क्षान्तं ' कदाचिच्छुद्धं स्यात् ।

१६१ १२ ' उद्र ' इति घ. झ. ट. ठ. ड. पाठः । किंतु ' उद्र– ' शब्दो न कुत्राप्युपलभ्यते ।

२१ शन्तनुर्नामवान् घ. ट. ठ. ड. पाठः प्रामादिकः । ' शन्तनुनामवान् ' इति शुद्धः पाठः ।

१६२ २ ' अधर्मस्त्वया चारितः ' ( १५९ । १७ ) इति दुर्गेण न व्याख्यायते ।

५ ' शिक्षति व्रतेन ' 'शिशिक्षं राज्येन' इत्यत्र शिक्ष योजने दाने वा। धातुपाठे तु ' शिक्ष विद्योपादाने ' ( धा० १ । ६०६ )।

पत्रं पङ्क्तिः

१६२ आत्मनेपदे च । 'शशास' इदं किं शास्तेः शसतेः शशतेर्वेति न ज्ञायते । 'शस हिंसायाम्' इत्ययं धातुरत्रायुक्तः । 'शासु अनुशिष्टौ' (विद्यादाने)। दुर्गः 'शशास' इत्यस्य 'अभिगमितवान्' इत्यर्थं करोति । 'शासु अभिगमने' इत्यर्थो धातुपाठे नास्ति । 'शश प्लुतगतौ' (त्वरितायां गतौ) तस्य 'शशाश' इति रूपं स्यात् । राज्येन (राज्यं दातुमिच्छया) त्वरितं तमभिगतवान् । 'अभिगमितवान्' इत्यत्र णिचो न किमपि प्रयोजनम् । अपि 'शशाश' इति मूलपाठः स्यात् । देवापिः राज्यमभिगच्छति शंतनुस्तं राज्यमभिगमयति स्वीकारयति । राज्येन शशास=तेन राज्यं स्वीकारयितुं येते ।

६ अभ्युद्यतेन = अर्पितेन दत्तेन । ७ वार्षिकेण = वर्षकारिणा ।

१६ 'पुनरकम्' इत्येकस्मिन्नेव पुस्तके लभ्यते । इतरेषु 'पुंनरकम्' इत्येव ।

१७ 'तद्यदेनान्' इत्यस्य स्थाने तै० आ० २ । ९ इत्यत्र 'अजान्हि पृश्नीन्' इति वर्तते ।

१६३ ७ तथा तथा (च. पाठः) = तेन तेन प्रकारेण । साधुतरोऽयं पाठः ।

११–१३ 'स देवाप्यधिकारे००० अभिसंबध्यते' इति न सुबोधम् । अन्यस्मिन् कल्पे देवाप्यधिकारे वर्तमानः स आर्ष्टिषेण इदमकरोत् । शन्तनोरिव ममाप्येतदेवमेवास्तु । एवं वाक्यद्वयं स्यात् । देवाप्यधिकारे=होतृत्वे । बृहस्पतिना दिव्या वाग्देवापये दत्ता तेन सोऽधिकारसंपन्नो भूत्वा वृष्टिमकरोत् । एवमधिकारसंपन्नोऽन्योऽपि देवापिरस्मिन्कल्पे शन्तनुसदृशस्य ममापि वार्षिकं कर्म करोतु । सर्वा ऋक् एकमेव वाक्यम् । दुर्गेण तस्य वाक्यस्य त्रीणि वाक्यानि कृतानि ।

१४ ऋष्टिः खड्गस्तरवारीति त्रिकाण्डशेषः । 'आर्ष्टिषेणशब्दस्य प्रकारान्तरेण व्याख्यानम् । ऋष्टयः शक्तयः । तत्प्रधाना सेना मरुतां यस्य । असेषुत्र (?) ऋष्टयः । विद्युद्रथा मरुत ऋष्टिमन्तः (ऋ० सं० ३ । ५४ । १३) । औच्चिला-

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १६३ | | न्मरूतां विशेषणम् । ऋष्टयस्ते च मध्यमानुचराः ' ( ट. ) । |
| | २० | ' पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुत इति स्मृतिः ' (ट. ठ. ) । |
| | २१ | ' ऋषिर्दर्शनात् । देवापिरस्यैव सूक्तस्य । सामान्येनैतन्निर्वचनम् । स्तोमान् त्रिवृदादीन् ददर्शेति विशिष्टमन्त्रदर्शनादेवेत्यौपमन्यवः । व्याख्यान्तरम् ' ( ट. ) । |
| | २३ | ' ब्राह्मणमप्यस्मिन्नर्थे सामान्येन दर्शयति । तद्यदेनान् मधुच्छन्दःप्रभृतीन् तपस्यमानान् तस्यैव तपसोऽनुभावात् ब्रह्म ऋगादि स्वयंभु अकृतकं नित्यं पूर्वाधीतमिवाभ्यानर्षत् । ऋ गतावित्यस्य लिटि (?) रूपम् । आगतम् आविर्भूतम् ' ( ट. ) । अभ्यागच्छत्=आविरभवत् । |
| १६४ | १ | ' त ऋषयोऽभवन् ' ( १६२ । १८ ) इति दुर्गेण न व्याख्यातम् । |
| | ३ | यस्मात्तस्योपरिष्टादवस्थानं स्थितिस्तस्मात्स उद्गततरः । |
| | ४ | न धावति = नोत्पतति । |
| | २१ | ' ह्यकाग्निकर्मणि ' ( च. पाठः ) । अत्र 'वा'स्थाने ' का ' हस्तदोषेण । |
| | २३ | ' अन्वध्यायत् ध्यातवान् । किम् । सामर्थ्यात् वृष्टिम् । मनोरथैः प्रार्थितवान् ' ( ट. ) । |
| | २४ | ' देवश्रुतं देवैः श्रुतं वृष्टिवनिम् । वनु याचने । चतुर्थ्यर्थे चोभयत्र द्वितीया । देवैः श्रुत्या ( ता? ) य वृष्टिवनये वृष्टियाचिने । रराणः । रातेः ' व्यत्ययो बहुलम् ' ( पा० ३ । १ । ८५ ) इति शपः श्लुः । दददृष्टिमित्यर्थः ' (ट. ) । ट. पुस्तकस्थमिदं टिप्पणद्वयं ठ. ड. पुस्तकयोः दुर्गवृत्तौ मिश्रितम् । |
| १६५ | १ | घ. ट. ठ. ड. पुस्तकेषु 'सः' नास्ति । तेन ' रराणो ददिह ००० वाचमयच्छददादित्यर्थः ' इत्येकं वाक्यम् । |
| | ५ | ' यं यं करेण स्पृशति जीर्णं स सुखमश्नुते । पुनर्युवा च भवति तस्मात्तं शन्तनुं विदुरिति भारते आदिपर्वणि वंशानुकीर्तने ' ( ट. ) । इदमपि ठ. ड. पुस्तकयोर्मूले मिश्रितम् । |

पत्रं पङ्क्तिः

१६५ ७ सत् = शम् ।

८ ' पुरोहितः पुर एनं शान्त्यर्थं राजानं दधति कुर्वत इत्यर्थः ' ( ट. ) ।

१६६ २२–२३ अन्यग्रहापेक्षमेतत् = चन्द्रादीनामयं प्रभानाशो न शाश्वतिकः किंतु सूर्यप्रकाशापेक्षः । आर्यज्योतिषे सूर्यो ग्रह एव ।

१६७ ६ उपर्युपरि = सातत्येन । ऋचामयम् आर्चः । अभितः साकल्येन आम्नायन्ते अस्मिन् सोऽभ्याम्नायः । ' संख्याया अवयवे तयप् ' ( पा० ५ । २ । ४२ ) इत्यनेन दश अवयवा अस्य स दशतयः । दाशतयः = ऋग्वेदो दशमण्डलात्मकः ।

९ चोदितपूर्वं = पूर्वं चोदितम् । अद्यावधि आध्वर्यवे याजुषे कर्मणि आदितेयनाम्ना हविर्देयमिति चोदनाविधिर्नास्ति । वस्तुतस्तु ' पूर्व'शब्दो व्यर्थः ।

९ नैघण्टुकवृत्त्या=गौणवृत्त्या ।

१० आदितेयं ' स्त्रीभ्यो ढक् ' ( पा० ४ । १ । १२० ) ।

१४ तै० सं० २ । १ । १० इत्यत्र ' सौर्यं बहुरूपमालभेत ' इति विद्यते न ' आदित्यम् ' इति ।

१८ किंतु अल्पः हविःसूक्तविषयो यस्य तत् ।

' सूक्तभाक्शब्दस्यायमर्थः । सूक्तमध्ये इदं पदमस्ति । हविर्भाक्शब्दस्यायमर्थः । आदितेयायानुब्रूहि । आदितेयं यज । ये यजामहे आदितेयं यदेदेनम० इति नास्ति । अनेन पदेनाध्वर्यवे हौत्रे च हविश्चोदितं नास्तीति न हविर्भागिति ' ( ट. ) ।

१६८ १८ ' दानपत्नी ' ( १० ) न व्याख्यातम् ।

१९ व. ट. ठ. ड. पाठः ' अनवनुध्यमातौ ' । अत्र हस्तदोषेण ' रु ' स्थाने ' नु ' । ' रु ' केषुचित्पुस्तकेषु ' नु'एवं लिख्यते । अनव्हवरम् अवपूर्वस्य ह्वरतेरतिकर्मणः । ' ह्वृ कौटिल्ये ' ( धा० १ । ९५६ ) । ' अवह्वरो ' भक्षः । अनवभक्षितम् अनवहिंसितं रक्षोभिरित्यर्थः ( ट. ) ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १६८ | १९ | अनन्हवरम् अकुटिलमिति यजमानविशेषणमेव सायणभाष्ये। 'सचेते इति लोडर्थे लट् । सचेतां सेवेताम्। किम्। सामर्थ्यादस्मद्यज्ञम् '(ट.)। |
| १६९ | ४ | यदि 'अथापि मित्रस्यैकस्य' इत्यत्र 'अपि'शब्दस्य अयं विशिष्टोऽर्थस्तर्हि 'अथापि मित्रावरुणयोः' इत्यत्रापि स एवार्थः स्यात्। |
| | ८ | ट. पुस्तके 'कर्मणा' इत्यस्य 'यागाख्येन' इति सव्यप्रान्ते व्याख्या दीयते। सा ठ. ड. पुस्तकयोर्वृत्तावेव 'कर्मणा यागाख्येन' इति लिख्यते। व्रतेन शिक्षति = व्रतमर्पयति। 'राज्येन शिशिक्ष' (१५९।१९) = राज्यमर्पयामास। ऋग्वेदे शिक्षतेः कर्मणो द्वितीया तृतीया वा भवति। यथा। 'दोहेन गामुपशिक्ष' (१०।४२।२)। 'स शक्र शिक्ष पुरुहूत नो धिया' (८।४।१५)। 'शिक्षा शचीवस्तव नः शचीभिः' (१।६२।२)। एतेषु तृतीया। अथ द्वितीया। 'शिक्षा ण इन्द्र रायः' (८।९२।९)। 'शिक्षा शचीवस्तव ताः' (९।८७।९)। 'अस्मभ्यं सु त्वमिद्र तां शिक्ष' (१०।१३६।७)। |
| | १२ | त्वोतं = त्वया ऊतं रक्षितम्। |
| १७० | १ | वारुणस्य = वारुण्या आमिक्षायाः। निष्काषः = भाण्डलेपः। तेनावभृथेष्टौ हविः। वारुणस्य तु निष्काषहविषः (ग. च. ज. पाठः) = वारुण्या आमिक्षाया यो निष्काषो भाण्डलेपः (अवशेषः) यवानां च तुषास्ते हूयन्ते। 'वारुण्या निष्कासेन तुषैश्चावभृथमवयन्ति' (सत्या० श्रौ० सू ५।२)। वरुणप्रघासाः = चातुर्मास्यान्तर्भूतो यागः। |
| | १३ | सर्वेषु लिखितपुस्तकेषु 'व्रतमिति कर्मनाम निवृत्तिकर्म०' (१६६।६) इत्येव पाठः। क ख. पुस्तकयोर्दुर्गवृत्त्यनुसारेण पाठो व्यत्यस्तः। किंतु दुर्गव्याख्यानं प्रामादिकमेव भाति। व्रतमिति कर्मनाम। यदा व्रतं निवृत्तिकर्म तदा तद्वार- |

पत्रं पङ्क्तिः

१७० यतीति सतः । यमनियमाख्यं तद् व्रतं पापाद्वारयति । इदमपी-तरत्कर्माख्यं व्रतं वारयतीत्येतस्मादेव । तदादित्यादिदेवादिष्टं कर्म कृतं सदानिष्टं वारयति । कर्माकरणे तु वरुणादयः क्रुध्यन्ति पीडयन्ति चोग्रशासनेन । अथवा वृणोतीत्येव सतः। दुर्गः ' निर्ह्रसितोपसर्ग आहन्तीति ' ( १७९ । २९ ) इत्यत्र ' अथवा ' शब्दमध्याहरति । तथात्रापि स शब्दोऽ-ध्याहर्तव्यः । अन्नमपि व्रतमुच्यते वृणोतीति सतो यस्मात्तदा-वृणोति शरीरम् । दुर्गेण ' एतस्मादेव ' ( १६६ । ७ ) न व्याख्यायते । तेन यः पाठव्यत्यासः कृतः स किमाधार इति न ज्ञायते ।

१५ व्रतं यमनियमाख्यं भवेत् । वेद्यां वेद्या बहिर्वा कर्तव्यत्वे-नादिष्टं स्यात् । द्विविधमपि तत्कर्म वारयतीति सतः ।

१६ आन्तर्वेदिकं = वेद्याम् इति अन्तर्वेदि । तत्र भवम् आन्तर्वे-दिकम् ' अन्तःपूर्वपदाट्ठञ् ' ( पा० ४ । ३ । ६० ) इत्यनेन सूत्रेण । वेद्याः बहिः बहिर्वेदि । तत्र भवं बहिर्वे-द्यम् ' अव्ययीभावाच्च ' ( पा० ४ । ३ । ५९ ) इत्यनेन सूत्रेण । बाहिर्वेदिकं रूपं केन सूत्रेण ।

१७ दीक्षितः स्त्रियं नोपेयादनृतं न वदेदिति ब्राह्मणे ब्राह्मणे आदि-ष्टम् । ' तदनु स्मृत्वा ' इति ग. च. ज. पाठः । तदनु तद्व्रतानुकूल्येन स्वकर्तव्यं स्मृत्वा । ' तदनुस्मृत्य ' इति पाठः साधुः ।

१८ ' अवकीर्णी क्षतव्रतः ' ( अमर० २ । ७ । ५४ ) इति द्वे नष्टब्रह्मचर्यस्य ।

१७२ १६–१७ ' नेता रसानाम् ' ( १७१ । ६ तथा १४ ) इति द्विवा-रमस्मिन् खण्डे ङ. थ. ध. ठ. ड. पुस्तकेषु । दुर्गेण तन्न व्याख्यायते ।

१८ ' बंभ्रम्यते ' ' बंभ्रमीति ' द्वे अपि साधुनी ।

२० ' प्रतिषिध्येत ' ( १७१ । ७ ) इति निरुक्तमूले । वृत्तौ तु ' प्रतिषिध्यते ' ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १७३ | ११ | आविष्टः = आभिमुख्येन विष्टः । तेन 'आभिमुख्येन आविष्टः' इति प्रयोगे पुनरुक्तिः । |
| | १५ | 'ये चान्ये' इत्यत्र 'अन्ये'शब्दो व्यर्थः । नो चेज्ज्योतींष्यपि पुण्यकृतस्त्वन्तर्भवेयुः । |
| १७४ | १२ | 'दय दानगतिहिंसारक्षणदानेषु' ( धा० १ । ४८२ ) । |
| | २३ | गुर्जरपुस्तकेषु 'नाम' नास्ति । तथापि 'अनेकस्यापि सत्त्वस्य नाम भवति' इति पाठो दुर्गेणापि स्वीकृतः । |
| | २४ | 'सत्त्वस्य = द्रव्यस्य' [ ट. ] । |
| १७५ | १ | आग्नेय्यादिका उपदिश इतराम् इतरां दिशं क्रान्त्वा स्थिता भवन्ति । मुख्यदिशानां मेलनेन ह्युपदिशो जायन्ते । |
| | २ | स्वं स्थानं = स्वं प्रदेशम् । |
| | ७ | मेध्याः = मेघे भवाः । मेध्या इत्यपपाठः । |
| १७६ | ८ | 'नीचैर्णमति' इति ग. च. ज. पाठः 'निर्णामम्' ( १७५ । १५ ) इत्यनुसारेण । |
| | ११ | तमःसतत्त्वः = तमः सतत्त्वं तात्त्विको भावो यस्य सः । मेघतमसोरैकरूप्यमेव । 'धूमज्योतिःसलिलमरुतां संनिपातः क्व मेघः' इति कालिदासो मेघदूते । |
| | १२ | नीचैः पतितुमारप्स्यमाणा अत एव निम्नमनुसरन्त्यस्ता आपो मेघस्य यावन्तं प्रदेशं यावतः प्रदेशात् स्रुता ( गताः ) भवन्ति तस्मादपीत्यादि । ११ 'यावत्तम्' इति ग. च. ज. पाठः प्रामादिक एव भाति । १२ 'स्रुताः' 'निःपित्सन्त्यः' इति घ. ट. ठ. ड. पाठौ प्रामादिकावेव । मेघस्य प्रदेशं 'स्रुताः' इति दुर्बोधम् । |
| | ११–१२ | मेघस्य तं प्रदेशं यावत् स्रुता भवन्ति ( तावत् ) ततः इत्यादिः ग. च. ज. पाठेऽन्वयः स्यात् । |
| | १६ | क्र्यादिगणे 'शम्'धातुर्नास्ति । 'शम उपशमे लोचने' इत्येतयोरेवार्थयोर्वर्तते । १६–१७ 'द्राघ सामर्थ्ये आयामे च' । |
| | २१ | 'तदेव तत्' ग. च. ज. पाठे 'तत्' द्विर्वर्तते । तस्य 'एव' इत्यस्य च प्रयोजनं न ज्ञायते । |

पत्रं पङ्क्तिः

१७७ ३ 'य एव मन्त्रेषु तत्र तत्र संग्रामः श्रूयते तत्र कः समाधिः' इति घ. ट. ठ. पाठोऽपि साधुः ।

६ उद्भूतवृत्तेः = प्रत्यक्षस्य ।

८ इन्द्रः = वैद्युतं ज्योतिः । तद्धि वायुना वेष्ट्यते आविश्यते वा । 'वाय्वाविष्टेन' इति च. पाठः ।

११ सर्वेषु लिखितपुस्तकेषु 'रूपकानि' इत्येव वर्तते । क. ख. पुस्तकयोरेव 'रूपकाणि' इति ।

१७८ ३–६ 'शत्रुं न विवित्से' इति सरलोऽन्वयः । दुर्गेण तस्य द्वे वाक्ये कृते ।

१३ वृत्रो मेघो वा त्वाष्ट्रोऽसुरो वेत्यत्र वादः । किंतु मन्त्रेषु ब्राह्मणेषु च वृत्रोऽहिरिति वर्ण्यत इत्यत्र न कोऽपि वादः । तु-शब्दोऽत्र भेदं दर्शयति न समुच्चयम् । 'च' इति क. ख. ब. ट. ठ. ड. पाठो व्यर्थः ।

१५ 'शाखान्तरेषु' पदं व्यर्थम् । का प्रस्तुता शाखा काश्चान्या इति न ज्ञायते । ऋक्शाखा प्रस्तुता चेत्तस्यामपीदृशानि वर्णनानि सन्त्येव । ऐतरेयब्राह्मणे यदीदृशं वर्णनं न स्यात्तर्हि शाखान्तराणां ब्राह्मणेषु तदन्वेष्यम् ।

१७९ १२ कस्मिंश्चिद्वीध्यन्तरे = कस्यांचिद्वीध्याम् । 'कस्मिंश्चिद्द्वीपान्तरे' ( ठ. ड. पाठः ) ।

१८ दासपत्नीः = 'दासः कर्मकर्ता यजमानस्तत्पालयित्र्यः' ( च. ) ।

१८० २ 'पणिरसुरो वा' ( ट. ) ।

८ 'यदिमाँल्लोकानवृणोत्तद्वृत्रस्य वृत्रत्वम्' ( तै० सं० २ । ५ । २ ) ।

१० 'तस्य ( सोमस्य ) यदत्यशिष्यत तत्त्वष्टा हवनीयमुपप्रावर्तयत्स्वाहेन्द्रशत्रुर्वर्धस्वेति' ( तै० सं० २ । ५ । २ ) ।

१०–११ विश्वरूपो नाम त्वष्टुः पुत्र इन्द्रेण हतः । तस्मात्त्वष्टेन्द्रं यज्ञे नामन्त्रयत्तस्मै सोमं च नाददात् । इन्द्रो बलात्कारेण सोमं पपौ । सोमावशेषं त्वष्टा 'इन्द्रशत्रुर्वर्धस्व' इत्युक्त्वाग्नावजुहोत् । ततः सोमोऽसुररूपेण प्रादुरभवत् । यथा पशुरा-

पत्रं पाङ्क्तिः

१८० लभ्यते हूयते च तथा सोमोऽपि ( तै० सं० २।५।२)।

१३ 'स इषुमात्रमिषुमात्रं विष्वङ्ङवर्धत स इमाँल्लोकानवृणो-द्यदिमाँल्लोकानवृणोत्तद्वृत्रस्य वृत्रत्वम्' (तै० सं० २।५।२)।

२१ 'अनेकस्यापि सत्त्वस्य भवति' इति क. ख. छ. त. द. पाठः (१७४।२) दुर्गसंमतो यतोऽत्र सर्वेषु पुस्तकेषु 'सत्त्वस्य' इत्यनन्तरं 'नाम'शब्दो नास्ति।

१८१ ११ 'प्राशायां' च.पाठः प्रामादिकः।

१६ 'विप्रुषः' इति ग. ज. पाठः 'प्रुष्वाः' इति च. पाठः। द्वयोरपि जलबिन्दव इत्यर्थः।

२४ अस्या उषस उच्छतीत्येतस्मिन् कर्मणि वर्तमानाया उषा इति नाम।

१८२ १८ अथ विशीतः (घ. ट. पाठः)। अत्र 'थ्य' स्थाने 'थ' लेखनदोषात्।

१८३ ५ एको योनिशब्दः परियौतेरभियौतेश्च व्युत्पाद्यत इत्याश्चर्यम्।

१८४ ११ श्वेतो वर्ण एति अस्यां सा श्वेत्या इति क. ख. घ. ट. ठ. ड. पाठः।

१६ निरुक्तमूले 'एने' (१८३।२१) वृत्तौ 'एते'।

१९ 'अनूच्यौ' 'आभिन्वाने' (२४) वृत्तौ न व्याख्यायेते।

१८५ ३ 'शब्दत्वा॰' घ. ट. ठ. ड. पाठः प्रामादिकः=शब्दतत्त्वा॰.

७ 'वस्तोर्वहमानम् (ऋ० सं०१०।४०।१) इत्यादि' (ट.)।

१८६ १० 'अपहरन्ति' घ. ट. ठ. ड. पाठः प्रामादिकः=अपहन्ति। यास्कः 'अवातिरत्' इति पदम् 'अवाहन्' इत्यनेन व्याख्याति। वृत्तौ 'अपाहरत्' इति पदं तस्य व्याख्यानम् 'अपहन्ति' इति।

११ अत्र 'न' (१८५।१८) पादपूरण इव भाति। उपमाया न किमपि प्रयोजनम्।

१३ तमसः अपघातः = तमोपघातः।

१९ गो + अत्र = गोत्र (:)। विचित्रेयं व्युत्पत्तिः। कदाचिदन्यः पाठः स्यात्।

१८७ २ एकस्मिन् शब्दे उपरे उपले वा निरुक्ते।

पत्रं पङ्क्तिः

१८८ ३ सायणभाष्ये ' माध्यमिका देवगणाः ' । अत्र सर्वेषु लिखित-पुस्तकेषु ' माध्यमकाः ' ( १८७ । १४ ) ।

९ ' कृतन्त्रमन्तरिक्षं विकर्तनं मेघानाम् ' ( १८७ । १५ ) इति वृत्तौ न व्याख्यातम् ।

१० तात्स्थ्यात् ( च. तात्स्थ्ये ) ताच्छब्द्यम् । तस्मिन् मेघे तिष्ठन्ति इति तत्स्थाः आपः । तासां भावः तात्स्थ्यम् । सः शब्दो यासां ते तच्छब्दाः । तेषां भावः ताच्छब्द्यम् । यस्मादापो मेघे तिष्ठन्ति तस्मान्मेघनाम्ना ता उच्यन्ते । यथा मञ्चस्थेषु क्रोशत्सु मञ्चाः क्रोशन्तीत्युच्यते ।

११ ' प्रोहिताः ' ( क. ख. घ. ट. ठ. ड. पाठः प्रामादिकः ) तथा ( ग. ज. पाठः ) 'पुरोहिताः' = प्ररोहिता ।

१२ ' तपन्ति = संतापयन्ति पाचयन्तीत्यर्थः । पृथिवीलोकं तत्रस्था ओषधीरित्यर्थः ' [ ट. ] ।

१४ यथार्थं = यथा इष्टं भवेत्तथा ।

१५ ' वाय्वादित्यौ वहतः = पाचितास्त्वोषधिषु स्थितम् आदित्यमण्डलं प्रति शोषणेन रश्मिभिश्च वहत इत्यर्थः ' [ट] ।

१८९ २ प्र + अञ्च् = प्राच् + ईन = प्राचीन । किंतु अनु + आप् = अन्वाप् = अनूप् । अत्र कीदृशं सादृश्यमिति न ज्ञायते । ' ऊदनोर्देशे ' ( पा० ६ । ३ । ९८ ) इत्यनेन अनोः पश्चात् आप इत्येतस्य ऊप भवति ।

१९० २२ ' पृष्ठ्यः षळहे चतुर्थेऽहनि व्यूळ्हपक्षे प्रउगतृचे विनियुक्तेयम् ' [ ट. ] । इयं टिप्पणी ठ. ड. पुस्तकयोः वृत्तावन्तर्भाविता । सायणभाष्ये विनियोग एभिः शब्दैर्न दत्तः ।

२४ ' वनति ' ( घ. झ. ट. ड. प्रामादिकः पाठः ) = खनति ।

१९१ ७ ' शोभनाभिः ' ( १९० । १० ) ' नदीं ' ( १९० । ११ ) वृत्तौ न व्याख्याते ।

११ ' सत इति ' कारकावधारणं ' ' विपर्ययेणापि ' इत्यादिकं च दुर्गस्य वावदूकत्वं दर्शयति । अत्रास्य न किमपि प्रयोजनम् ।

१५ ' उच्छृतम् ' इति ग. च. ज. पाठे लेखनदोष एव ।

पत्रं पङ्क्तिः

१९१ १७ नदीसत्त्वं = नद्या बलम् । इमे त्रयः शब्दा नदीसत्त्वं दर्शयन्ति । सरस्वत्यत्र नद्येवेति स्पष्टमेतेभ्यो ज्ञायते । सरस्वत्या नद्यभिधायकत्वे इमानि विशेषलिङ्गानि ।

१९ 'अतः सरस्वतीशब्दस्य नद्यभिधायकत्वम्' इति च. पाठः। अतः = एतेभ्यो विशेषलिङ्गेभ्यः ।

२० मैत्रायणीयके = मैत्रायणीसंहितायाम् । अस्मिन् षडर्चे चतस्र ऋचः ७।९५ सूक्तात् द्वे च ६।६।१ सूक्तात्।

२१ उत्तमा= अन्तिमा।

२२ मैत्रायणीसंहितायाश्चतुर्थेऽध्याये याज्यानुवाक्याः पठ्यन्ते । द्वितीयेऽध्याये काम्याः पशवः कथ्यन्ते । पशोर्वपायाः ( १ ) पुरोडाशस्य ( २ ) हविषः ( ३ ) चैकैका पुरोनुवाक्या याज्या च। एवं तिस्रः पुरोनुवाक्यास्तिस्रो याज्याः। एवं प्रत्येकस्य पशोरेकैकं षडर्चम् । यावन्तः पशवस्तावन्ति षडर्चानि । षडर्चानामनुक्रमेण पशूनामनुक्रमेण च 'उत स्या नः सरस्वती' इति षडर्चं सारस्वत्या धेनुष्ट्न्याः । तत्र 'इयं शुष्मेभिः' याज्या । यया ऋचा हूयते सा याज्या । प्रथमं वपायागः । तदनन्तरं पुरोडाशः । तदनन्तरं च हविः । एवं पशुहविष इयं याज्या ।

१९२ २ 'इयमपि' ( क. ख. घ. झ. ट. ठ. ड. पाठः ) ऋक् । 'इदमपि' ( ग. च. ज. पाठः )=अभिधानम् ।

६ विभवः=तं तमर्थं वक्तुं समर्थाः ।

९ यदा सरस्वती देवता तदा सरस्वद्देवताकपशुयागेऽस्या ऋचो याज्यात्वेन विनियोगोऽनुविहितो मैत्रायणीसंहितायाम् तदभिप्रायेण तदनुसारेण ।

१० माध्यमिका वाक्= 'वाग्वै सरस्वती वाचैवैषाँ वाचँ वृङ्क्ते' ( मैत्रा० सं० २।५।४ )। पशुसंबन्धिनि क्षेत्रसंबन्धिनि वा वादेऽनेन पशुयागेन प्रतिस्पर्धिनां वाच एव नश्यन्ति।

११ 'भञ्जति' इति सर्वेषु लिखितपुस्तकेषु । 'भञ्जयति' क. ख. पुस्तकयोः । किंतु चुरादिगणस्थो 'भजि'धातुर्भाषणे वर्तते । भञ्जति ( ग्रामादिकं ) = भनक्ति ।

पत्रं पङ्क्तिः

१९३

४ ' इमाः ' ( १९० । १३ ) दुर्गेण न व्याख्यायते ।

१५ " संगतम्=अपृथग्भूतमित्यर्थः (ट.)। १६ सुष्ठु पात्रेभ्यो ददातीति सुदाः । वित्तम् = वृतम् । वृङ् संभक्तौ । ' दुतनिभ्यां दीर्घश्च वा ' इति चकारस्यानुक्तसमुच्चयार्थत्वात् क्तप्रत्ययः । ' संभज्यते सर्वैः । स वित्तं गृहीत्वा विपाट्छुतुद्र्योः संभेदमाययौ इत्यत्र वृतमिति धननामेति स्कन्दस्वामिभाष्ये इति निघण्टुभाष्यकारः ' ( ट. ) ।

१८ स्पर्धतव्य० इति ग. ज. पाठः । अत्र ' तव्यत्तव्यानीयर ' इत्यादि ' स्पर्ध ' ' नीय ' इत्येतयोर्मध्ये लिङ्गितम् । स्पर्धनीयशब्दः ' तव्यत्तव्यानीयरः ' (पा० ३ । १ । ९६) इत्यनेन सूत्रेण स्पर्धधातोर्निष्पन्नः ।

१९४

३ निघण्टोः पञ्चाध्यायाः + निरुक्तस्य नव = एवं चतुर्दशाध्यायाः । दुर्गो निरुक्ताध्यायान्निघण्ट्वध्यायैः सह संख्याति ।

२० त्रिष्टुभ एताः ' रमध्वं मे ' ' इन्द्रो अस्माँ ' ' आ ते कारो ' इति तिस्र ऋचः ।

२३ इदं सोमसंपादि वचः सत्यं भवतु ।

१९५

७ ' प्रवर्तते ' ( ग. च. ज. पाठः ) इति वर्तमानकालः प्रार्थनाया औत्कट्यं दर्शयति । ' प्रबवृते ' इतीतरेषां पाठः सरल एव ।

९ ' महत्या ' ( १९४ । १५ ) पदं न व्याख्यायते ।
' सिन्धुं = शुतुद्रीम् इति वार्थः ' ( ट. ) ।

११ ' अवस्युः अवनम् आत्मनो रक्षणं वा ( इच्छन् )। क्यच् । ' क्याच्छन्दस्युः ' ( ट. ) ।

१७ मूढः = अज्ञः ।

२२-२३ काल ( धा० १० । ३४७ ) इति पृथग्धातुरित्येके । अथवा । ' कल क्षेपे ' ( धा० १० । ७१ ) इत्येतस्मात्कालः ।

२४ ' क्रुश आह्वाने रोदने च ' ( धा० १ । ८८१ ) । ' क्रोशति ' इत्येव रूपम् । कथं क्रोशयति ( २६ ) । णिच् स्यात् । राजपुरुषाः क्रोशन्ति स तान् क्रोशयति । तैराघोषणां करोतीत्यर्थः ।

पत्रं पङ्क्तिः

१९५ २६ 'क्रंश' नैव धातुपाठे नापि कस्मिन्नपि कोशे ।

१९६ १ 'उक्तवन्तं विश्वामित्रम्' (ठ.) ।

२ 'वज्रबाहुः । वज्रयुक्तो बाहुर्यस्यासौ' (ट.) । इदं सायणभाष्यस्थम् । 'बाहुनात्र हस्तो लक्ष्यते वज्रहस्त इत्यर्थः' (ट.) । इदं ट. ड. पुंस्तकयोर्वृत्तावन्तर्भाव्यते ।

११ 'रद विलेखने' (धा० १ । ५३) ।

१९ 'कल्याणपाणिः' (७) न व्याख्यायते ।

१९७ १ 'अन्ते = मध्ये' (ट.) ।

१–२ 'प्रावृषि प्रवृद्धोदकाः प्रत्याख्यायैनं तदर्थानामन्ते वर्षाणां शरदि प्रत्यं (?) तारतम्येन क्षीयमाणोदका आशुश्रुवुः तदर्थानां कृतवत्य इत्यर्थः' (ट.) ।

११ निनमै इति एकवचनमात्मनेपदे लोटि ।

२१ 'ययाथेति मध्यमः प्रथमपुरुषस्य स्थाने । यान्तु सर्व एव जना इति स्वामी' (ट.) । 'ओषु स्वसारः कारवे श्रृणोत ययौ वो दूरादनसा रथेन । नि षू नमध्वं भवता सुपारा अधोअक्षाः सिन्धवः स्रोत्याभिः' (ऋ. सं. ३ । ३३ । ९) । ओषु पादपूरणौ । हे स्वसारः भगिन्यः कारवे स्तोत्रे श्रृणोत श्रृणुत । ययौ वः युष्मान् दूराद्विप्रकृष्टात् अनसा शकटेन रथेन च आत्मनः । नि षू नमध्वम् । सुः पादपूरणः । निनमध्वम् । भवतेत्यादि । सिन्धवो नद्यः । स्रोत्याभिः रसनदनैः सह भवथ । सूक्तस्यान्ततः आशुश्रुवुः तथेति प्रतिज्ञातवत्यः । स्वामी' (ट.) ।

१९८ २० प्रथमः 'अथवा' शब्दो व्यर्थः ।

२०० १ वरत्रद्व्रण (ग. ज. पाठः) = वरत्रेण +वध्रेण ।

२ 'अथासानि' (क. ख. घ. झ. ट. ठ. ड. पाठः) । 'अप्या' त्वरितलेखने 'अथा' इव भाति ।

५ अश्वारोहस्याभिप्रेतमर्थं मनसि कृत्वा शीघ्रगमनेन तस्य कामं पूरयति ।

७ 'सन्ति' 'सानि' इत्येतस्य विशेषणम् । पाठान्तरे 'सन्ति' इत्येतत् क्रियापदम् ।

पत्रं पङ्क्तिः

२०० १२ 'अनुसन्तवीःवत्' पूर्वा प्रकृतिः कथमिति न ज्ञायते ।

१८ 'पन्थतेर्वा पद्यतेर्वा' ( ग. च. ज. पाठः ) निरुक्तमूलपुस्तकेषु नास्ति ।

२१ चर्करीतेन वृत्तं रूपम् । यङ् इत्येतस्य चर्करीत इति पूर्वेषां नाम । कृधातोः चर्करीति । तस्माच्च चर्करीतशब्दः ।

२०१ ७ 'जमु अदने' ( धा० १ । ४७२ ) । गमनार्थो दुर्गेण कुतो लब्धः ।

---

तृतीयोऽध्यायः ।

२०३ ११–१२ अयं खण्डयोः कल्पितः संबन्धो बादरायणसंबन्ध एव ।

१४ 'अपस्' इत्येतत् लातिनभाषायाम् 'ओपस्' इत्यनेन सदृशम् ।

२१ 'तनयम्' इति किमिति नपुंसकम् । निघण्टुपाठः 'तनयः' एव ।

२०४ २५ स्वयंजातम् = स्वयंजनितम् ।

२०५ १ 'क्षेत्रजं क्रीतकं वा' इति च. पाठः साधुः । एक एव 'वा' शोभनतरः । 'क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् । पुत्रप्रातिनिधीनाहुः क्रियालोपान्मनीषिण इति मनुः' ( मनुस्मृतिः ९ । १८० ) ( ट. ) ।

९ 'विदुदुषः दुष वैकृत्ये' ( ट. ) ।

२१ 'अनेनैव चापत्य°' इत्यत्र चः व्यर्थः । च.पाठे स नास्ति ।

२३ 'अस्यैवार्थस्योत्तरा० इदतराय (?) निर्विविच्य वचनाय ग्राह्यत्वस्य स्पष्टत्वाय । अधाचिदोक इति च हेतुवचनात् भूयस्त्वम्' ( ट. ) ।

२०६ १० प्रभाय = पुत्रत्वेन ग्रहणाय । १८ 'ममायं पुत्रः' ( ४ ) इत्यत्र 'पुत्रः' न व्याख्यायते ।

१३ 'सुसुखतमः' ( ३ ) इत्यत्र 'सु' न व्याख्यायते ।

२०७ १० के धर्मविद उदाहरन्ति ।

पत्रं पङ्क्तिः

२०८ ११ ' कुशिकः प्रसङ्गात्कंचिच्छास्त्रार्थं ब्रूते। अपुत्रो यः पिता कन्यामन्यकुलं प्रापयति स वह्निरित्युच्यते। अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम्। अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ( वासि० १७। १७.) स्मृत्युक्तमनुशासनं कुर्वन् दुहितुः पुत्रिकाया नप्त्यं नप्तृभावं पिण्डदानादिकं कर्तव्यतया गात् गच्छति। किं कुर्वन्। विद्वान् अस्यां दुहितरि जातः पुत्रो मम स्वधाकरो भविष्यतीति जानन्। ऋतस्य पुत्रोत्पादने सत्यस्य समर्थस्य रेतसो दीधितिं धर्तारं विट्पतिं जामातरं सपर्यन् वस्त्रालंकारादिना पूजयन् पिता नप्तृभावं गच्छति यत्र यस्या दुहितुः पिता पालकः पतिर्जामाता सेकं तस्यां रेतःसेकं ऋञ्जन् प्रसाधयन् संशग्म्येन केवलं सुखनिमित्तेन मनसा तया स्वशरीरं संदधन्वे संधत्ते न तु पुत्रनिमित्तेन मनसा। सायणभाष्यम् ' ( ट. ड. ) ' शासत् शास्ति आचष्टे इत्यर्थः। वह्निः पिता। अत्र जातमात्राया उत्सङ्गेन दानकाले वा जामातरं प्रति वोढृत्वात् वह्निरित्युच्यते। स दुहितुः पुत्रमिति शेषः ' ( ट. ड. )। ठ. पुस्तके इदं वृत्तावन्तर्भाव्यते तथा पूर्वा टिप्पणी च।

२४ ' अपुत्रस्य पौत्रः ' इत्यस्मात् ' अपुत्रस्य पुत्रः पौत्रः ' इति ग. च. ज. पाठः साधुतरः स्पष्टतरश्च।

२०९ ५ हृदयानुस्मरणनिमित्तेन = मया जननयज्ञस्तन्यत इति हृदये स्मृत्वा स्मृत्वा। तस्मात् तद्रेतो हृदयादभिजायते। ' हृदयानुसरणनिमित्तेन ' इति च. पाठः स्पष्टतरः। तद्रेतो हृदयादनुसरति ततश्च मातरि प्रत्यृतं भवति।

१० मिथुनाः = पुत्रा दुहितरश्च। यथा पुत्रः पुत्रस्तथा दुहितापि। अत एवोभयेऽपि दायादाः। ' मिथुनाः पुत्राः ' इत्यत्र ' पुत्राः ' इत्येतस्य स्वारस्यं दुर्गेण न ज्ञातम्।

१२ ' तदेतदृक्श्लोकाभ्यामभ्युक्तम् ' (कौ० आ० ३। ६)। ऋक् श्लोकश्च। अथवा। ऋक् श्लोकरूपः ऋक्श्लोकः। ' अङ्गादङ्गात्० ' ' अविशेषेण पुत्राणाम् ' इति ऋचौ श्लोक-

पत्रं पङ्क्तिः

२०९ रूपे । तयोः 'अङ्गादङ्गात्' इति कौषीतक्यारण्यके (४।११)

२३ 'मिथुनाः' इत्येतत् 'पुत्राः' इत्येतस्य विशेषणम्। मिथुनाः = युग्मजाताः।

२४ 'अथ प्रोष्यायन् पुत्रस्य मूर्धानमभिमृशति। अङ्गादङ्गात्संभवसि हृदयादधिजायसे। आत्मा वै पुत्रनामासि स जीव शरदः शतम्॥ असाविति नामास्य गृह्णाति। अश्मा भव परशुर्भव हिरण्यमस्तृतं भव तेजो वै पुत्रनामासि स जीव शरदः शतम्॥ असाविति नामास्य गृह्णाति। येन प्रजापतिः प्रजाः पर्यगृह्णीतारिष्ट्यै। तेन त्वा परिगृह्णाम्यसावित्यथास्य दक्षिणे कर्णे जपति। अस्मै प्रयन्धि मघवन्नृजीषिन्नितीन्द्र श्रेष्ठानि द्रविणानि धेहीति मा च्छेत्ता मा व्यथिष्ठाः शतं शरद आयुषो जीव पुत्र। ते नाम्ना मूर्धानमभिजिघ्राम्यसाविति त्रिरस्य मूर्धानमभिजिघ्रेत्। त्वा हिंकारेणाभिहिंकरोमीति त्रिरस्य मूर्धानमभिहिंकुर्यात्' (कौषीतक्यारण्यके ३।११)।

२१० १४ शरदि जीवनं न कष्टं यस्मात्तस्मिन्नृतौ सस्यसमृद्धिरस्ति। शरद् संपन्नफला अत एव इष्टा।

१९–२० पूर्वार्धं नैव ऋजु। 'पुत्राणां मिथुनानाम्' इत्यस्य कोऽर्थः। 'पुत्राणां' पदं व्यर्थमेव। अथवा। 'मिथुनानां पुत्राणाम्' इत्यस्य 'पुत्रयुगलानां युग्मजातानां पुत्राणाम्' इत्यर्थो भवेत्। तेन दुहितृदायाद्यत्वेऽस्य श्लोकस्य नानुकूल्यम्।

२५–२६ 'आग्रयणद्रव्यं मृन्मय्यां स्थाल्यां गृह्यते दारुमयेन पात्रेण च हूयते न तया स्थाल्या यस्मात् स्थाली होमसाधनं न भवति। यदावभृथं गच्छन्ति तदानीं स्थालीर्वेद्यामेव परास्यन्ति परित्यजन्ति। दारुपात्राण्युद्धरन्त्यवभृथदेशे नयन्ति। तस्मात्स्थालीवल्लोकेऽपि स्त्रियं दुहितरं विवाहेन वरकुले परित्यजन्ति। पुमांसमुद्धरन्ति सम्यक्पोषयन्ति' (सायणभाष्यं तै० सं० ६।४।२८)। 'यत्स्थालीं रिञ्चन्ति' इति मैत्रायणीसंहितापाठः। 'रिचिर् विरेचने' (भा०

| पत्रं | पङ्क्तिः | |
|---|---|---|
| २१० | | ७ । ४ ) । 'ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु ( धा० ६ । १६ ) । |
| | | परास्यन्ति त्यजन्ति वने यस्मात्स्त्रियोऽनिष्टाः । वरकुले परित्यजन्तीत्यर्थः न सरलः । श्रूयते च यथा केचित्क्षत्रियाः जातामेव बालां घ्नन्ति । अनृतं स्त्रीत्येव प्राचीनानां मतम् । |
| २११ | १–२ | 'तस्मात्स्त्रियं जाताम्' इतीदं वाक्यं मैत्रा० सं० अन्यत्रापि विद्यते ( मैत्रा० सं० ४ । ७ । ९ ) । तत्र स्त्रियः पुरुषेभ्योऽतिरिच्यन्ते तस्मात्स्त्री परस्मै दीयत इत्यर्थः । |
| | ४ | हवनकर्मणः । ( अपादाने पञ्चमी ) परास्यन्ति । |
| | १२–१३ | 'चातुर्मास्येषु' इति पदं 'दर्शयति' इत्यनेनान्वेति । चातुर्मास्येषु प्रतिप्रस्थाता यजमानपत्नीं पृच्छति कस्ते जार इति । यदि सा कथयति सर्वे जारा वरुणेन गृह्यन्ते । सा चांहसो मुच्यते वरुणपाशाच्च मुक्ता भवति । 'अथ यद्वाचयति ( अध्वर्युः ) मेध्यामेवैनां करोति' ( मैत्रा० सं० १ । १० ११ । तै० सं० १ । ८ ३ ) । |
| | १४ | ब्राह्मणं स्त्रीविक्रयं दर्शयति । |
| | १५ | 'गृह्णञ्छुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी' (मनु० ३।५१)। |
| | १६–१७ | अतिसर्गः = त्यागो वनादिषु । न स्वयंवरेण । |
| | १९ | 'अदायादत्वे' इति पाठः साधुः । यस्मात् 'अदायादत्वं स्त्रियाः' इति पङ्क्तित्रयादनन्तरम् ( २२ ) । इतरेषु वर्णेषु कन्याया अदायार्हत्वे लिङ्गम् । |
| | २२ | अनैकान्तः = न सर्वेषामनुमतः । असिद्ध इत्यर्थः । |
| | २३–२४ | च. पाठे द्वितीयो 'हि' नास्ति । स एव पाठः साधुः । |
| २१२ | १ | 'बह्वृचानामाख्याने = ऐतरेयब्राह्मणे शुनःशेपाख्याने दर्शनात् । सप्तमपञ्चिकायां 'हरिश्चन्द्रो ह वैधसः' इति खण्डे ( ऐ० ब्रा० अ० ३३ खण्डाः १–५ ) । दानं तावत् 'अनेन त्वा यजा' इति ( खण्डः ३ ) । क्रयः 'आत्मानं निष्क्रीणा' इति ( खण्डः ३ ) । 'स ज्येष्ठं पुत्रं निगृह्णान उवाच नन्विममिति कनिष्ठं माता तौ ह |

पत्रं पङ्क्तिः

२११ मध्यमे संपादयांचक्रुः शुनःशेपे ’ । अतिसर्गः । ‘ तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः पञ्चाशदेव ज्यायांसो मधुच्छन्दसः पञ्चाशत्कनीयांसस्तद्ये ज्यायांसः० ’ इति स्वामी ’ ( ट. ठ. ड. ) ।

२१२ ३ मधुच्छन्दआदीनामिति प्रामादिकम् । ज्येष्ठो मे त्वं पुत्राणां स्या इति विश्वामित्रः शुनःशेपमुवाच । मधुच्छन्दसो ये ज्यायांसस्त एतन्न कुशलं मेनिरे । तान्विश्वामित्रः शशाप । मधुच्छन्दास्तु ये आत्मनः पञ्चाशत्कनीयांसस्तैः सह तदनुमेने ।

११ ‘ अन्यः ’पदं व्यर्थम् ।

१८ ‘ अभ्रातृका इव योषा०=यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा । तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेदिति स्मृतिः ( मनु० ९ । १३० ) स्कन्दस्वामिभाष्ये ’ (ट.) ।

२२ ‘ अमूर्या यन्ति जामयः सर्वा लोहितवाससः ’ इदमर्धं गुर्जरपुस्तकेषु नास्ति ।

२२–२३ ‘ अमूर्या यन्ति योषितो हिरा लोहितवाससः । अभ्रातर इव जामयस्तिष्ठन्तु हतवर्चसः ( अथ० सं० १ । १७ । १ ) । अत्र निरुक्तमूलाद्भिन्नः पाठः ।

२४ इयमथर्वणामृक् । प्रसवमार्गवहनरोगः तद्वती ।

२१३ १ वृत्तौ ‘ तिष्ठन्तु ’ इति पाठः । घ. झ. ट. पुस्तकेषु ‘ अमूर्या० ’ इत्यस्यामृचि ‘ तिष्ठन्तु ( २१२ । २३ ) इत्येव । इतरेषु पुस्तकेषु ‘ तिष्ठन्ति ’ ।

२१४ ६–७ ‘ अभ्रातृका स्त्री येभ्य उत्पन्ना तानेव पुंसः पितृनेति गच्छति संतानकर्मणे पिण्डदानाय च । एवमुषा यत उत्पन्ना तमेवादित्यं गच्छति । तत्रैव प्रलीयत इत्यर्थः । स्कन्दस्वामी । गौतमपुत्रस्य कक्षीवत आर्षं प्रत्यन्तरे ’ ( ठ. ) ।

७ पित्रा दत्ता । भर्त्रा ऊढा ।

१२ ‘ दाक्षिणाजा ’ अथवा ‘ दाक्षिणात्या ’ ( २१ । ३ । १४ ) इति दुर्गस्वीकृतनिरुक्तमूले पाठः स्यात् ।

१३ निवपनं = प्रक्षेपः ।

१४ कितवः = अक्षधूर्तः द्यूतकृत् ( अमरः २ । ९ । ४४ ) ।

१६ ‘ जायेव पत्ये० द्वितीयार्थे चतुर्थी । पतिम् उशती कामयमाना सुवासाः निर्विशङ्कया परमया प्रीत्या युक्ता गच्छति

पत्रं पङ्क्तिः

२१४ तद्वत् । रीणीते = गमयति । प्रकाशमतिज्ञापयति । रूपं कृत्स्नं जगत् ' ( ट. ) । ' कामयमाना ' ( २१३ । २३ ) ' उशती ' ( २१३ । ११ ) च न व्याख्यायेते ।

२१५ १३ ' प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ' ( पा० ७ । ३ । ४४ ) इत्यनेन ' अपुत्रका ' ( पाठभेदे ) इति रूपं प्रामादिकम् । ' अपुत्रिका ' इति शुद्धम् ।

' कोऽयं देशाचार इति न ज्ञायते । ' अत्रौचित्येन ( गर्तशब्देन ) राजपुरुषैर्न्यायनिर्णेतृभिश्चाधिष्ठितं स्थानमुच्यते । यथा लोके काचिद्गतभर्तृका योषिद्धनानां स्वकीयधनानां सनये लाभाय गर्तमागच्छति तां तु सभ्या विचार्य यदीयं रिक्थं लभते चेत् अक्षैः संताड्य तदीयं धनं वितरन्ति तथा ' इत्यादि सायणः ।

१६ ' तां तत्राक्षेणा ( अक्षैर्वा ) घ्नन्ति ' ( २१३ । १६ ) इत्येतन्न व्याख्यायते ।

२१६ १ ' शरीरं शृणातेः शम्नातेर्वा ' इयं पुनरुक्तिर्विस्मृतिमूलैव ।

२ तत्र = यच्छरीरं पूर्वोक्तं तस्मिन् ।

७ श्मशानसंचयशब्दात् पुरा शवानि गर्तेषु निखातान्यासन्निति भाति ।

८ ' नोपरस्याविः कर्तवै यदुपरस्याविः कुर्याद्रथेष्ठाः स्यात्प्रमायुको यजमानः ' ( मैत्रा० सं० ३ । ९ । ४ ) । श्मशानसंचयोऽपि गर्त इत्यर्थं दर्शयितुं ' नोपरस्या० ' उदाहरणम् ।

१५ ' यानेभ्यः ' इति प्रामादिकम् । सर्वेषु यानेषु स्तुततममिति शुद्धम् ।

२२ अध्वर्युर्यजमानाय ' धनुस्त्रीन् बाणांश्च प्रयच्छति । हिरण्यवर्णमुषसो व्युष्टा इत्युद्यता अभिमन्त्रयेतोर्ध्वत्राद्धास्तिष्ठन्तमभिषिञ्चति ' ( मैत्रा० सं० ४ । ४ । ३ ) ।

२१७ २ ' उदिता उदयवेलायां सूर्यस्य आरोहथः युवां हे वरुण हे मित्र गर्तं रथम् आत्मीयम् अतश्च अनन्तरमिति शेषः ।

पत्रं पङ्क्तिः

२१७ चक्षाथे पश्यथः अदितिं दितिं च अक्षीणं क्षीणं च कर्म । अथवा अदितिं दितिं चेति ददातेरेते रूपे । अदातारं दातारं च हविषाम् । लोकपालौ हे मित्रावरुणौ यश्च यत्करोति शुभमशुभं वा तत्सर्वं पश्यथः = स्वामी ' ( ट. ) ।

८ ' अयमप्यर्धर्चः ' इत्यत्र ' अपिः ' व्यर्थः ।

१३ ' नाभ्रात्रीम् ' ( २१३ । २५ ) इति सर्वेषु निरुक्तमूलपुस्तकेषु पाठः । वृत्तौ तु ' नाभ्रातृकाम् ' इति ।

१८ आहत्यविधानं = स्पष्टं वचनम् ।

२२ यत् = यस्मात् ।

२२ ' तत्पितुर्भवति ' इति ग. ज. पाठः ।

२३ ' तेनेत्युच्यते ' ' नेत्युच्यते ' इति द्वौ पाठौ । ' तोकं ह्यस्य तद्भवति ' इति ' तेन वाक्येनेतरस्य विवाहप्रतिषेध एव । इतरस्य च पुत्रिकापितुः दुहिता पुत्रभावे वर्तते तस्य चापत्यप्राप्तिरित्येतस्मात्कारणाद्विवाहप्रतिषेध एव । ' नेत्युच्यते ' । विवाहप्रतिषेधो न यस्मादितरस्य पुत्रिकापितुरपत्यप्राप्तिः दुहितुः पुत्रभावात् । यद्यभ्रातृकां न कोऽप्युपयच्छेत्तस्याः पितुरपत्यप्राप्तिः कथं स्यात् । अनयोः पाठयोः ' तेन ' इत्येव पाठः साधुर्यस्माद्यास्क उपयमनप्रतिषेधमेव ब्रवीति । ' तेनेत्युच्यते ' इत्यत्र ' इति'शब्दो व्यर्थः ।

२३–२४ एवं पुत्रभावादितरस्य पुत्रिकापितुरपत्यप्राप्तेरित्यस्य विवाहप्रतिषेध एव तेनोच्यत इत्यन्वयः ।

२१८ १ उत्क्रुष्टः = न व्याख्यातः । क. ख. पाठः ' उत्सृष्टः ' किमाधार इति न ज्ञायते ।

५ पुत्रिकाविधानम् = ' अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् । यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम् ' ( मनु० ९ । १२७ ) ॥

९ द्व्यामुष्यायणः । ' नडादिभ्यः फक् ' ( ४ । १ । ९९ ) । द्वि + अमुष्य = द्व्यमुष्य । द्व्यमुष्य गोत्रापत्यम् । द्विगोत्रीय इत्यर्थः ।

पत्रं पङ्क्तिः

२१८ ११ अभिसंधिपूर्वकम् = ' अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् । अस्यां यो जायते पुत्रः स मे पुत्रो भवेत्' ( वासिष्ठधर्मशास्त्रम् १७ । १७ ) इति ॥ अभिसंधिः = समयः ।

११ ' अभिसंधिमात्रात्पुत्रिकामेकेषामिति गौतमः ' ( कुल्लूक-व्याख्या मनु ९ । १३६ ) ।

१२ दायादस्येदं दायाद्यं दाय इत्यर्थः । ' दौहित्र एव च हरे-दपुत्रस्याखिलं धनम् ( मनु ९ । १३१ ) ।' दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत् । स एव दद्याद् द्वौ पिण्डौ पित्रे माता-महाय च' ( मनु ९ । १३२ ) ॥ ' अकृता वा कृता वापि यं विन्देत्सदृशात्सुतम् । पौत्री मातामहस्तेन दद्यात्पिण्डं हरे-द्धनम् ' ( मनु ९ । १३६ ) ॥

१६ उपावर्तयति = अनुनयति प्रेरयति ।

२५ संतान एव संतानकः = पुत्रः । स एव वंशं संतनोति । संतानः = वंशः ( अमरः २ । ६ । १ ) ।

२६ जनयितुः पिता तस्य पौत्राः । ' पुत्राः ' इति क. ख. पाठो निराधार एव ।

२७ ' कदाचित् ' शास्त्रे । लोके सर्वदा ।

२१९ १२ नेतराणि । तानि जनयितुरेव ।

१४ उत्सृष्टायां = दत्तायाम् ।

१४–१५ ' पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते । समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः ' ( मनु ९ । १३४ ) ( ट. ) ।

१६ यथाभागमितरान्पुत्रान् विभजेत् = ' एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्धं ततोऽनुजः । अंशमंशं यवीयांस इति धर्मो व्यवस्थितः ' ( मनु ९ । ११७ ) ।

१५–१६ ' पुत्रिकायै व ' ( पाठभेदः ) अत्र ' व ' प्रामादिकः । ' च ' एव शुद्धः पाठः ।

२२० ६ आत्मनो धियः कथं जायते ।

वृत्तौ ' जामिरन्येऽस्यां० निर्गमनप्राया भवन्ति ' ( २१९ ।

पत्रं पङ्क्तिः

२२० (२२–२४) न व्याख्यायते ।

१२ 'यदी' दुर्गपाठो न 'यदिह'।

१७ अर्धयित्वा = 'ऋधु वृद्धौ' (धा० ४ । १३९ । धा० ५ । २५) इत्यस्य णिच् ।

२२१ १९ 'स देवान्सृष्ट्वा मनस्यतेव तेन मनुष्यानसृजत' (मैत्रा० सं० ४ । २ । १)

२२३ ११ रो मत्वर्थे यथा 'ऊषसुषिमुष्कमधो रः' (पा० ५ । २ । १०७) इत्यत्र

१३–१४ 'ऊर्ध्वमुदतृणत्०' इति मैत्रा० सं० १ । ९ । ३ इत्यत्र । किंतु तत्र 'तत्सुराणां सुरत्वम्' इति नास्ति । 'अवातिरत्' इत्यस्य स्थाने तत्र 'अवातृणत्'। 'उदतृणत्' = उदतृणात् । 'तॄ प्लवनतरणयोः' (१।९६९)। अत्र 'तॄ' नवमगणस्थश्छान्दसः । पञ्चदशदिनप्रमाणः पूर्वपक्ष आकाशमारोहत् ।

२० 'पक्वं सदेतत्सुप्रवृक्णं भवति' इत्यनेन यास्कमते व्रश्चतेरेव 'ऊर्क्' न पचेः । द्वयोर्धात्वोः 'ऊर्क्'शब्द उत्पन्न इति केवलः कल्पनातिरेकोऽयम् ।

२५ एके मन्यन्ते । क एत एके । 'निषादः = प्रतिलोमजन्मा कश्चित्' (ट.)।

२६ 'निषदनो भवति' (२२२ । ११) इत्यस्य दुर्गव्याख्या 'निषद्य निषद्य हन्तीति'। कदाचिद्दुर्गपाठो भिन्नः स्यात् ।

२७ 'नि प्रकर्षे । प्रकर्षेण सन्नं गतं व्यवस्थितम्' (ट.)।

२२४ १ आधानम् = अग्न्याधानम् । 'वसन्ता ब्राह्मणोऽग्निमादधीत ग्रीष्मे राजन्य आदधीत शरदि वैश्य आदधीत' (तैत्ति० ब्रा० १ । १ । २)। ऋभूणां रथकारत्वमृग्वेदे (४ । ३६ । २) प्रसिद्धम् ।

'अपरे त्वाहुः । रथकारशब्देनात्र सौधन्वनानां ग्रहणम् 'ऋभूणां त्वा इत्याधानमन्त्रवर्णात् सौधन्वनाश्च ऋभवः 'सौधन्वन ऋभवः' (ऋ० सं० १ । ११० । ४ ॥

| पत्रं | पङ्क्तिः | |
|---|---|---|
| २२५ | | ३ । ६० । ४ ) इति सामानाधिकरण्यनिर्देशात् । तथा चाह मनुः ( १० । २३ ) ' व्रात्यात्तु जायते वैश्यात्सुधन्वा ' इति । तस्य सुधन्वनः पुत्राः सौधन्वनाः । तेषामेवाधानाधिकारः । जैमिनेरपि तदेव मतम् ' ( पूर्वमीमांसा ६ । १ । ४६ ) इति कात्यायनश्रौतसूत्रस्य १ । १ । १० व्याख्यायाम् । |
| | | " सौधन्वना रथकारा निषादशब्दवाच्या इत्यन्ये । ' वर्षासु रथकारस्य ' ' एतया निषादस्थपतिं याजयेत् ' इत्येवमादिदर्शनात् । सौधन्वनः० लिङ्गात् । भाष्यान्तरे " ( ट. ) । |
| | १–२ | ' वर्षासु रथकारः ' इति कस्यां शाखायां विद्यत इति न ज्ञायते । ' यस्य वा अयथादेवतमग्निराधीयते आ देवताभ्यो वृश्च्यते । तस्माद्यथादेवतमग्निराधेयः । ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्य ' ( तैत्ति० ब्रा० १ । १ । ४ ) । अनेन मन्त्रेण रथकारेणाग्निराधेयः । |
| | | वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः । शूद्रायां वैश्यादुत्पन्ना करिणी । तस्यां करिण्यां माहिष्यादुत्पन्नो रथकारः । तस्येदमाधानं कालविशिष्टं विधीयते । |
| | १२ | स्तुतीः = स्तुतयः । ' स्तुतीः ' प्रामादिकम् । |
| २२६ | १ | पृक्ता ' पृची संपर्के ' ( धा० ७ । २५ ) । पृक्ता = संपृक्ता संबद्धा । |
| | १८ | ' अग्रशब्दादकाररेफावाद्यन्तौ कृत्वा ( अग्र = अगर ) । गमेराद्यन्तविपरीतस्य मगौ । मध्ये ( अम् गर ) उपधाव्यापत्त्या अकारस्योकारः ( गुर ) । रेफस्य लत्वम् ( गुल ) । इकारो नामकरणः ताच्छील्ये । इत्थम् अङ्गुलिरूपसिद्धिः ' ( ट. ड. ) । अग्रगामिन्यः = ' हस्तस्य पूर्वं कर्मसु व्यापारं गच्छति ' ( ट. ) । |
| | १९ | ' गल स्रवणे ' ( १० । १६६ ) गालयति । ' गल अदने ' ( धा० १ । ५४७ ) । |

पत्रं पङ्क्तिः

२२१ २० 'अग्रे गालयन्ति ह्येता उदकानि' इति शुद्धम् ।

२१ 'अग्रसारिण्यो भवन्तीति वा' ( २२२ । १७ ) 'अञ्जना भवन्तीति वा' ( २२२ । १८ ) इति च न व्याख्यायेते ।

२२७ ७ 'अजरेभ्यः = जरावर्जितान्' । सायणकृतमिदं विवरणं ट.-पुस्तकप्रान्ते लिखितं ठ. ड. पुस्तकयोर्वृत्तावन्तर्भाव्यते ।

९ दश युक्ता अङ्गुलीः वहद्वयः ।

१५ निगदसिद्धं = स्पष्टम् । निगदेनैव सिद्धम् । यथा निगद्यते उच्यते तथा स्पष्टम् ।

१९ धूर्वतिः वधकर्मसु पठितः ।

२१ 'स्कन्धदेशे त्वस्य ( वृषस्य ) वहः' ( अमरे २ । ९ । ६२ ) । तं विहन्ति सततं घर्षयति । 'वहं = स्कन्धं' ( ट. ) । धारयति स्थिरीकरोति ।

२४ 'साङ्गुलः' ( च. व्यतिरिक्तपुस्तकपाठः ) इति समासान्तः 'अङ्गुलेर्दारुणि' ( पा० ५ । ४ । ११४ ) इति सूत्रेण प्रामादिक एव । 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः' ( पा० ५ । ४ । ८६ ) इत्यनेन तत्पुरुष एव भवति न बहुव्रीहिः । 'तेन सहेति तुल्ययोगे' ( पा० २ । २ । २८ ) इत्यनेन 'साङ्गुलिः' ।

२५ 'सपादः' कुत्र व्याख्यातः ।

२२८ ३ निघण्टौ ( २ । ६ ) 'वेति' एव न तु 'अववेति' ।

५ कान्तं = कान्ततरम् । 'सर्वभावेषु कान्ततमम्' इति शुद्धः प्रयोगः ।

८ अयं = यास्कः ।

९ धातुपाठे 'वाज' धातुर्नास्ति ।

११ भजनाय ( घ. ट. ठ. ड. पाठः ) = सेवायै ।

२२ 'ओज' धातुपाठे नास्ति । 'उब्ज आर्जवे' ( धा० ६ । २३ ) ।

२३ भ्रियते = पोष्यते । अथवा । इतरेषां स्कन्धस्योपरि भ्रियते वाह्यते ।

| पत्रं | पाङ्क्तिः | |
|---|---|---|
| २२९ | ५–६ | धिनोतीत्येवं कर्तरि कारके सतः शब्दस्य । |
| | १८ | ' हरः ' न व्युत्पाद्यते । |
| | २२ | ' वर्तते अयते इत्येवमादयः ' इति ट. पुस्तके प्रान्तभागे लिख्यते तत् ठ. ड. पुस्तकयोर्वृत्तौ ' द्वाविंशं शतम् ' इत्यस्यानन्तरमन्तर्भाव्यते । |
| | २३ | एते खण्डानां संबन्धाः प्रायशः काल्पनिका निराधाराश्च । |
| २३० | ६ | निरुक्तमूले ' विकर्षः ( २२६ । १८ ) न तु ' विकृष्टः ' । विकर्षः= दूरमन्तरम् । |
| | १८ | ' विवाक् ' ' नदनुः ' इत्येतयोर्मध्ये ' विखादः ' वर्तते । |
| २३१ | ४ | तस्य [ च. पाठः ] = खलशब्दस्य । व्यपदेशात् = प्रयोगात् । |
| २३२ | ३ | सर्वानुक्रमण्याम् ' इन्द्रस्य ' न तु ' इन्द्रपुत्रस्य ' आर्षम् । त्रिष्टुप् न जगती । ' अभीद० = इन्द्रो वैकुण्ठः स्वसामर्थ्यमाचष्टे ' [ ट. । |
| | १४ | धान्यखलो गाह्यते हन्यते लगुडहस्तैः कृषीवलैः । गम्यमानः = अवबुध्यमानः । अत एवाध्याहतः । १५ कर्षकेण = कृषीवलेन । ' गम्यमानेऽन्ने ' इति क. ख. घ. ट. ठ. ड. पाठः । अन्नं धान्यमत्र गम्यते । तच्च खले संचितं सत् स्त्रीपुरुषैर्गाह्यते आलोड्यते हन्यते ताड्यते च । |
| | १६ | ' क्षुधेरन् = व ( क ? ) र्षकाः प्रतिक्षुधेरन् ' ( ट. ) । |
| | १५–१६ | पूलान् = भारान् । ' मूलान् ' इति ग. च. ज. पाठः प्रामादिको यतो मूलशब्दो नपुंसकः । |
| | १९ | ' विदुः ' ( क. ख. छ. त. द. पाठः २३१ । २१ ) । विदेर्लट् । ' विविदुः ' ( २३१ । २१ ) विदेर्लिट् । दुर्गपाठः ' विदुः ' एव । २० ' अनिन्द्रा इतर इति ' ( २३१ । २१ ) क. ख. छ. त. द. पाठे ' वा ' नास्ति । अहमेवेन्द्र इतरेऽनिन्द्रा इति ये न विदुः । |
| २३३ | ६ | ' नात्राप्ता वा ' ( २३१ । १३ ) न व्याख्यायते । |
| | ७ | ' दसु उपक्षये ' ( धा० ४ । १०७ ) । दस्ता=उपक्षीणा समाप्ता । |

पत्रं पङ्क्तिः

२३३ १३ ' अयुतेति=कोटयः क्रमश इति लीलावत्याम् ' [ ट. ] ।

१३ सहस्रम् × १० = अयुतम् । अयुतं × १० = प्रयुतम् । प्रयुतं × १० = नियुतम् । नियुतम् × १० = अर्बुदम् । अर्बुदं × १० = न्यर्बुदम् । न्यर्बुदं× १० = निखर्वकम् । निखर्वकं × १० = बद्रम् । बद्रम् × १० = अक्षितम् । अक्षितं × १० = गौः । ( ताण्ड्यमहाब्राह्मणम् १० । १४ । २ ) । ' अयुतं नियुतं प्रयुतम् ' इति यास्कमते क्रमः । ताण्ड्यमहाब्राह्मणे ' अयुतं प्रयुतं नियुतम् ' इति ।

१४ ' आमिश्रीभूतम् ' इति किम् ' अयुतशब्दस्यान्या संज्ञा । अथवा । आमिश्रीभूतं = सहस्रं दशकृत्वो मिश्रीभूतम् । अयुतम् = आयुतम् । ' यु मिश्रणे ' ( धा० २ । २३ ) ।

१८ ' अम्बुमद्भातीति वाऽम्बुमद्भवतीति वा ' ( २३१ । १६ ) न व्याख्यायते ।

१८–१९ यदार्बुदो वर्षति तदा महान् कथं भवति ।

२१ 'स्खल संचलने ' ( धा० १ । ५४५ ) । ' खल संचये ' ( धा० १ । ५४६ ) । ' खल हिंसार्थे ' धातुपाठे न विद्यते ।

२३४ २ समास्कन्नः = आघातितः । ' समास्कन्नो भवति ' इति न खलशब्दस्य व्युत्पत्तिः किंतु व्युत्पत्त्यर्थः ।

६ ' इन्वति नक्षति ' इति निघण्टुपाठः ( २ । १८ ) । अत्र तु ' इन्वति ननक्षे ' ।

१६ वियातय= विशेषेण अत्यन्तं पीडय शत्रून् ।

२३–२४ ' शाचिगो इति चैकं पदम् ' इत्यत्र चशब्देन दुर्गमते शाचि गो इति द्वे पदे स्याताम् । पदपाठे शाचिगो इत्येकं पदम् । ठ. ड. पुस्तकयोः 'च' नास्ति ।

२३५ १ पशुयागः सोमयाग इत्यादिका इष्टिः शच्याख्यस्य कर्मण एव संततिः याज्ञिककर्मणः प्रकाराः ।

३–४ तयैव शाच्या = तयैवेन्द्राण्या । ' तस्यैव ' ( ट. ड. पाठः ) = इन्द्रस्यैव । ' तयैव शाच्यां ' ( क. ख. घ,

| पत्रं | पङ्क्तिः | |
|---|---|---|
| २३५ | | ट. पाठः ) = यथा ' शाचिगो ' संबोधनं तथा शाचि पूजन ' । शाच्यां = कर्मणि । |
| | १० | ' तळित ( २१ ) आखण्डल ' ( २२ ) इति क्रमः ( निघ० २ । १९ ) । |
| | १३–१४ | ' ताडयतीति सतः ' इत्यन्तिकवधयोर्द्वयोरप्यर्थयोर्व्युत्पत्तिः । अत्र विद्युतो न कोऽपि संबन्धः । |
| २३६ | १३ | ' मनुष्या = पञ्चम्याः स्थान आकारः । मनुष्येभ्यः सामर्थ्याच्छत्रुभूतेभ्य आददीमहि गृह्णीम इत्यर्थः ' ( ट. ) । |
| | १४ | ' आददीमहि = गृह्णीमहि ' ( ट. ) । एतत् ठ. ड. पुस्तकयोर्वृत्तावन्तर्भाव्यते । |
| | २० | ये न ददति ते अदानकर्माणः । येषां न दातव्यमिति प्रज्ञा मनीषा तेऽदानप्रज्ञाः । अयं सरलोऽर्थो न दुर्गसंमतः । ' अस्माकं दाने प्रतिबन्द्धारोऽन्येषां च दाने प्रतिबन्द्धारः ' ईदृशं तस्य विवरणं निर्मूलं काल्पनिकं च । न दातव्यमिति येषां निश्चयस्ते दुःखं महता प्रयासेन संनाश्यन्ते संनाम्यन्ते वा । ये केवलं न ददति ते सुखेन संनाश्यन्ते संनाम्यन्ते वा । एतत् ग. च. ज. पुस्तकेषु अध्याहर्तव्यं यतस्तत्र ' येऽदानकर्माणस्ते सुखसंनाश्याः ' इति नास्ति । ' संनाम्याः ' इति ग. च. ज. पाठः साधीयान् । ' जभी जृभी गात्रविनामे ' ( धा० १ । ३८८ ) । ' जम्भय ' इति णिचि रूपम् । जम्भय = गात्राणि विनामय । ' जभ नाशने ' ( धा० १० । १८३ ) । जम्भय = नाशय । |
| | २२ | ' अनप्नसः = अरूपाः प्रनष्टसर्वरूपाः कृत्वेत्यर्थः ' ( ट. ) |
| २३७ | २ | ' अवताडयति जनस्य चक्षूंषि यस्य चोपरि निपतन्ती ' ( ट. ठ. ) । |
| | ३–४ | ' अन्तिकनामत्वाभावं दर्शयति । अपि त्विदमित्यादि । अपि संभावनायाम् । तुशब्दो वधकर्मपक्षान्तरं दर्शयितुम् । इदमिति बुद्ध्यधिकरणवक्ष्यमाणमन्त्रविषयं तळिन्नामोपदेशार्थम् । 'एव'शब्दोऽवधारणे । अभिप्रेतमिति निर्विचिकित्सावचनम् ' ( ट. ) । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| २३७ | १९–२० | दुःखं शक्यते = न शक्यते । २० 'दीपयितव्य' इति प्रामादिकं भाति । 'सर्वभूतदीप' इति पाठः स्यात् । |
| २३८ | ३ | 'पुनः पुनः ०० दिद्युत्' इति ग. च. ज. पुस्तकेषु न विद्यते । |
| | ८ | 'कुत्सः कृन्ततेः । स्तुवृश्चिकृन्त्यृषिभ्यः किदिति त्सप्रत्ययः । कृन्ततेः ऋकारस्य बाहुलकात् रपरत्वं च न भवति । कृन्तति शत्रूनिति । यद्वा कुत्स अवक्षेपणे चुरादिरात्मनेपदी । घञ् । कुत्सयत्यनेन शत्रून् । 'सद्यो दस्यून्प्रमृण कुत्स्येन' ( ऋ० सं० ४ । १६ । १२ ) इति निगमः । यकार उपजनः । कृन्तते छिनत्तीति कुत्सः वज्रः । ऋकारस्योकारः । सो नामकरण इति भाष्यान्तरे' ( ट. ) |
| | ११ | मूले 'भवति' इति पदं न तु 'स्यात्' । |
| | १३ | तत्सखः इन्द्रः शुष्णं जघान = 'अत्र काचिदाख्यायिका श्रूयते । कथम् । रुरुनामकः कश्चिद्राजर्षिरासीत् । तस्य पुत्रः कुत्साख्यो राजर्षिरासीत् । स च कदाचिच्छत्रुभिः सह युयुत्सुः संग्रामे स्वयमशक्तः सन् शत्रूणां हननार्थमिन्द्रस्याह्वानं चकार । स चेन्द्रः कुत्सस्य गृहमागत्य तस्य शत्रूञ्जघान । तदनन्तरमतिप्रीत्या तयोः सख्यमभवत्' ( सायणभाष्यम् ऋ० सं० ४ । १६ । १० 'भुवत्त कुत्सः सख्ये निकामः' ) । एकदा कूपे निपतितं कुत्समिन्द्रो बहिरुच्चकर्ष ( ऋ० सं० १ । १०६ । ६ ) । 'अध्वर्यवो यः स्वश्नं जघान यः शुष्णम्' ( ऋ० सं० २ । १४ । ५ ) । 'वज्रेण वज्री नि जघान शुष्णम्' ( ऋ० सं० ५ । ३२ । ४ ) । |
| २३८ | १४–१५ | सूर्य आतपेन जलं शोषयति मेघस्तु वर्षति । मेघोदये धान्यानि कथं शुष्येयुः । धान्येभ्यो जलाशयेभ्यो वा मेघ उदकं गृह्णातीति कल्पना । |
| | १८ | निघण्टुपाठः 'क्षयति' न तु 'क्षियति' ( निघ० २ । २१ । ३ ) । क्षियति = निवसति न तु राजति । |

पत्रं पङ्क्तिः

२३९ १७ ' सुपर्णाः ' ( २ ) छ. त. द. पुस्तकेषु न विद्यते। दुर्गोऽपि तन्न व्याख्याति ।

२४० १७ कृष्णसारः = कनीनिका ।

१८ पूर्वम् ' अमरणधर्मिणः ' ( २३९ । २१ ) अत्र तु ' अमरणधर्मणः ' । अस्य रूपभेदस्य प्रयोजनं न दृश्यते ।

२३ ' विषयविज्ञानेन पुरुषस्यापि भोक्तुर्दुःखं कुर्वन्ति ' इति क. ख. घ. ट. ठ. ड. पाठः । ' विषयविज्ञानेन ' इति पाठे ' अभितपन्ति ' = तापं दुःखं कुर्वन्ति । ' विषयविज्ञानम् ' इति पाठे ' अभितपन्ति ' = पटु कुर्वन्ति । च. पुस्तके पटु° उप । विषयविज्ञानेन पुरुषस्योपकुर्वन्ति ।

२४१ १ आभिमुख्येन बुद्धिं गच्छन्ति ।

४–५ ' पाकम् ' इति द्वितीया । ' पाकः पक्तव्यो भवति ' ( २३९ । ५–६ ) इति यास्केन व्युत्पत्तय एव प्रथमारूपं गृहीतम् । किंतु दुर्गः ' पाकः ' इति गृहीत्वा तस्य ' सः ' इत्यनेनान्वयं करोति । पाकः पक्तव्यो भवति न त्वद्यापि तस्य प्रज्ञा पक्वा परिणता । आदित्यस्तु विपक्वप्रज्ञः इति यास्ककृतो भेदः । विपक्वप्रज्ञ आदित्यः पाकं पक्तव्यप्रज्ञं मामाविवेश न त्वाविशतु ॥

१०–१२ अधिदैवते आदित्यमण्डले वर्तमानः अध्यात्मे च बुद्ध्यधिदेवताभूतः असौ एक एव ।

१४ ' तस्य ये रश्मयस्ते विश्वे देवाः ' ( शतपथ० ४ । ३ । २६ ) । ' रश्मयो वै देवाः ' ( मैत्रा० सं० ४ । ५ । ५ ) ।

२४३ २ ' कुवित् ' बहुनामसु पठयते ( निघ० ३ । १ । १२ ) न तु ह्रस्वनामसु । ' ऋहन् ' नतु ' रिल्हम् ' इति पाठः ( निघ० ३ । २ । १ ) । ' रिहम् ' इति पाठान्तरम् । ऋक्संहितायां ' रिल्हं रिढं रीहं ऋहन् ' चत्वार्यपि न सन्ति । अयं कोऽप्यन्यरूपः शब्दो भवेत् ।

८ सर्वेषु लिखितपुस्तकेषु ' महः ' न तु ' महत् ' । अत

पत्रं पङ्क्तिः

२४३ एव ग. ज. पुस्तकयोः ( २४३ । १२ ) महर्नामके इति पाठः ।

१२ ऋक्संहितायां ' ववक्षिथ ' इति क्रियारूपमेव सर्वत्र भाति वोढुम् इच्छसि इत्यर्थे । ' विवक्षसे ' इत्यस्य प्रायशो महदर्थः । अनयोराख्यातयोर्महन्नामसु पठनीयत्वं महद्वाचकत्वं चोपपादितं स्कन्दस्वामिना इति देवराजयज्वकृतनिवण्टुटीकायामुक्तं किंतु तदुपपादनं न मया दृष्टम् ।

' ववक्षिथ= आ पप्रौ० ववक्षिथ ( ऋ० सं० १ । ८१ । ५ ) गोतमार्षम् । आपूरयतीन्द्रो वृष्ट्या पार्थिवं रजः पृथिवीलोकं वृष्ट्या वृष्टिद्वारेण । एवं च बद्धधे आबध्नाति रोचना रोचनानि नक्षत्राणि दिवि । तेषां दिवि बन्धनस्य धर्ममूलत्वाद्धर्मस्य वृष्टिमूलत्वाद् वृष्टिप्रदानद्वारेण बध्नातीत्युच्यते । परोऽर्धर्चः प्रत्यक्षत्वाद्भिन्नवाक्यम् । न त्वावान् त्वत्सदृशः हे इन्द्र कश्चिदपि । पूर्वं न जातो नापि जनिष्यते । कुतः। यतः अतिशयेन सर्वं भुवनं विवक्षिथ अनुशासितुं वोढुं वेच्छसि । अनुशास्सि वहसि वेत्यर्थः । अतिशयवतः सामर्थ्यात् । महानसि । अतो भवन्तं स्तुम इति शेषः । अनेकार्थत्वाद्धातूनां महद्भावार्थस्य वक्तेर्वा वहतेर्वा साभ्यासस्येदं रूपम् । अत्युपसर्गाद्योग्यक्रियाध्याहारः । अतीत्य सर्वं महान् भवसीत्यर्थः ' ( द. ) ।

' विवक्षसे = अग्निं न० विवक्षसे ( ऋ० सं० १० । २१ । १ ) । विमदस्यार्षम् । आ इत्याख्यातेन । अग्निं न । अभ्युपमार्थस्य संप्रत्यर्थे प्रयोग इत्येवं पदपूरणः । स्ववृक्तिभिः स्वयमात्मनैव विवर्जितदोषैः । काभिः । स्तुतिभिः । होतारं त्वा त्वाम् आभिमुख्येन वृणीमहे । यज्ञाय यज्ञस्य स्तीर्णबर्हिषे अर्थाय । विशब्दो वैविध्ये । विविधमावृणीमह इति । वः युष्माकं सर्वेषामेव देवानां मदे निमित्ते सोमजन्यमदार्थमित्यर्थः । कीदृशं त्वाम् । शीरं संभूतानुशायिनाम् । आशीनं वा । पावकशोचिषं पावकदीप्तिम् । किंच । विवक्षसे । अनिघातो नानावाक्यत्वात् । महां-

पत्रं पङ्क्तिः

२४३ त्वं भवसि । तत्र समिध्यमान इति शेषः । इत्युपाध्याय-व्याख्यानम् ' ( ट. ) ।

१६ निघण्टुपाठे तथा घ. ट ठ. ड. पुस्तकेषु च 'कृदरः' इत्यस्यानन्तरं ' गर्तः ' विद्यते ।

१७ यास्ककाले गृहशब्दोऽनेकवचनः पुल्लिङ्गश्चासीदिति भाति ।

२४४ ५ ' शान्ततापानाम् ' इति च. पुस्तके पाठान्तरम् ।

१८ क. ख. घ. ट. ठ. ड. पुस्तकेषु ' अस्तेमाः ' इत्यस्य व्युत्पत्तिर्दीयते ।

२० ' प्रज्ञानामान्युत्तराणि द्वादश ' ( च. पाठः ) । इतरत्र सर्वेषु पुस्तकेषु निघण्टुपाठे च ( ३ । ९ ) एकादश ।

२४५ ३ ' किद ज्ञाने ' ( धा० ३ । १९ ) ' कित निवासे रोगापनयने च ' ( धा० १ । १०१८ ) ।

८ ' भूतेनार्थेन संबद्धं सत् बद्धमिव भवति ' इत्यन्वयः ।

१३ अष्टा उत्तराणि ( २४२ । ११ । १३ ) इत्यादिकं वाक्यमतीव दुर्बोधम् । तत्रस्थौ चिक्यत् आचक्षा इति द्वौ शब्दा ऋक्संहितायां न विद्येते । ' चायति 'शब्दो निघण्टुपाठे नास्ति नाप्यृक्संहितायाम् । ' चन 'शब्दो निघण्टुपाठे न विद्यते । यास्ककालीनो निघण्टुपाठो भिन्नः स्यात् ।

२४ ' अप द्वेषांस्याकृतम् ' इत्युदाहरणं निघण्टुभाष्ये न दीयते ' ( ट. ) । निगमोऽन्वेषणीय इति तत्र लिख्यते ।

२४६ १ प्रकारः पुंस्येव न कदापि नपुंसकः । पदप्रकारं = पद-जातम् ।

१९ ' उपमीयते ' इति घ. ट. ठ. ड. पाठः प्रामादिक एव ।

२४७ ११ ' तनूं त्यक्त्वा ' इति ग. च. ज. पाठः स्पष्टतरः । तन्वा त्यक्तौ तनूत्यक्तौ ।

१३ उपमार्थत्वेन = उपमाया अयमेवार्थः । प्रसृतौ चौर्याय । अग्निपक्षे मन्थनाय ।

१८ उत्पादनात्प्राक् अग्निररणिरूप एव ।

२१ प्रधानसंयुक्ता = त्वमत्र प्रधानं न नैघण्टुकः ।

पत्रं पङ्क्तिः

२४८ ८ तस्करः = ततकरः संततं करोतीति । " अहोरात्रकर्मेति = अहनि पथि मोक्षणेन रात्रौ संधिच्छेदनेन। ततश्चात्र ' वा ' इत्यपपाठः " ( ट. )। दुर्गवृत्तौ ' वा ' त्यक्तः।

९ दशभी रशनाभिर्बन्धनम् एतदेव संततकर्मत्वम् । एतद्दुर्गविवरणम् । यास्कस्तु ' रशनाभिर्दशभिरभ्यधीताम् ' इति ' अभ्यधीतामित्यभ्यधाताम्. ( २४७ । ५ ) ' इति व्याख्यार्थं पठति । अभ्यधीताम् = अभ्यधातां बध्नीताम्।

२२ ' इदमिव इदं यथा अग्निर्न ये ' इति निघण्टुक्रमः ( निघ० ३ । १३ )। ' इदमिव ' इत्यस्योदाहरणं ' विधवेव देवरम् ' ( अस्मिन्नेव खण्डे वर्तमानम् ) इति कदाचित्स्यात्। ' अथ निपाताः ' इत्यस्य प्राक्त द्वर्तते । यास्कः ' इदं यथा ' इत्यस्योदाहरणं न ददाति । ' यथेति कर्मोपमा ' इत्यारभ्य त्रीण्युदाहरणानि ' यथा ' इत्यस्यैव ददाति। आधुनिकान्निघण्टुक्रमाद्यास्ककालीननिघण्टुक्रमो भिन्न आसीदिति स्पष्टम्।

२४९ ८ घोषा नाम ब्रह्मवादिनी। तस्या आर्षम् । चिरादागतावश्विनौ दृष्ट्वा सप्रणयं सोपालम्भमाह। कुह क स्विदिति पादपूरणः परिदेवनायामीर्ष्यायां वा। केति सप्तमीसामानाधिकरण्याद्दोषा वस्तोरित्यपि सप्तम्या एवाव्ययलुगध्यवसितः। दोषा रात्रौ कुह क वस्तोः अन्हि युवामश्विनौ कुह वाभिपित्वम् अभिप्राप्तिमतिगमनं करतः कुरुथः। क वा ऊषतुः। सामर्थ्यादत्र सर्वत्र वर्तमानकालता वर्तत इत्यर्थः। को वां युवां यजमानोऽस्मत्तोऽपि विशिष्टोऽन्यः शयुत्रा शयने विधवेव देवरं यथा विधवा देवरं मर्यं न योषा यथा च सर्वमेव मनुष्यं संभोगकाले सर्वा स्त्री एवं परिचर्यार्थम् । ऋगन्त्याकारः कृणुत इत्यनेन संबन्ध्यते। अतिशयेनार्वाकरोति विस्मृतान्यवृत्तान्तावभिमुखीकरोति । परिचरतीत्यर्थः । सधस्थे सहस्थाने विद्याख्ये येनात्मयं ( ?.) चिरादागतौ स्थ इति । अत्रापि निकृष्टनियोगकर्मणा देवरेण प्रशस्तावश्विनौ विधव-

पत्रं पङ्क्तिः

या चाप्रशस्तया प्रशस्तकर्माणं यजमानं कनीयसा उपर्याशम् उपमिमीत इति ' ( ट. ) ।

२४९ १० ' स्वित्प्रश्ने च वितर्के च ' ( अमरे ३ । ३ २४१ ) । १५ आगमनाय प्रवृत्तिः ।

२१ समाने = समानौ सहयोगिनौ इति दुर्गव्याख्या ।

२९ ' विधवा विधातृका सर्वस्य द्रष्टा दृष्टस्योपचारस्य विधाता पतिः स्त्रियाः । स विगतो यस्याः सा विधवा । धूञ् कम्पने ' ( ट. ) ।

२५० २–३ अननुरुध्यमाना = अप्रतिबध्यमाना स्वैरगतिः ।

३ ' चर्मशिराः = अन्वर्थं संज्ञेयम् । चर्मैव शिरसि यस्य न केशाः सन्ति । स हि खलतिरभूत् ' ( ट. ) ।

४ ' देवरः कस्माद् द्वितीयो वर उच्यते ' ( २४८ । १८ ) इति न व्याख्यायते ।

५ ' देवनार्थं = क्रीडार्थम् ' ( ट. ) । ८ आत्मनः परिचरणायाभिमुख्येन कुरुते ।

१३ सविशेषैव तत्र प्रथमाध्यायस्य ४–११ खण्डेषु व्याख्या ।

१४ ' कर्मोपमा । कर्म = क्रिया ' ( ट. ) ।

१७ ' यथा वात इति । यथा वातो वायुः यथा वनम् उदकं निम्नप्रदेशं प्रति यथा च समुद्रो नदीमुखानि एजति गच्छति एवं त्वं हे दशमास्य दशभिर्मासैर्निष्पन्नगर्भ सह जरायुणा अवेहि अधो गच्छ मातुरुदरात् । एवं मात्र स्था इत्यर्थः ' [ ट. ] ।

२५१ ४ " आत्मनेपदबहुवचनस्थाने परस्मैपदैकवचनम् ' अदश्रम ' इति " [ ट. ] ।

२२ ' यदिमा इति । यत् यदा इमाः वाजयन्स्तुवन्नहं ओषधीः यवकुशपिञ्जूललक्षणाः स्वहस्ते आदधे स्थापयामि । हस्ते गृह्णामीत्यर्थः । तदा आत्मा यक्ष्मस्य रोगस्य नश्यति । पञ्चमो लोडर्थे । नश्यतु । पुरैव हननात् जीवगृभो यथा कस्याचिद्राजविद्विष्टकारिणः करे जीवग्राहं गृहीतस्य । भयाज्जीव इति शेषः । अत्रापि जीवनाशेन यक्ष्मनाश उपमीयते ' ( ट. ) । इयमेव व्याख्या ठ. ड. पुस्तकयोर्दीयते ।

पत्रं पङ्क्तिः

२५१ न तु वृत्तौ वर्तमाना । वृत्तिस्थाया व्याख्याया अन्त्यमेव वाक्यम् 'एवमात्मा रोगस्यापि' (२५२ । ४—५) इत्यादिकं वर्तते ।

२५२ ७ "अपि चात्त इव स्यात् । जीवेन हि प्राज्ञेनात्मा संपरिष्वक्तः परिगृहीत आत्त उच्यते । स्मर्यते हि । जीवसंज्ञोऽन्तरात्मान्यः सहजः सर्वदेहिनाम् । येन वेदयते जन्तुः सुखं दुःखं च जन्मसु ॥ 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' (भ० गी० १५ । १७)" । ट. पुस्तकस्थमिदं ठ. ड. पुस्तकयोर्वृत्तावन्तर्भाव्यते ।

८ कार्यकरणेन = कार्यसंपादनाय यद्वस्तुजातमवश्यं तेन । दधिसंपादनाय दुग्धातञ्चनादि वस्त्रसंपादनाय तूलतुरीवेमादिकम् । कार्यकरणसंघातस्याप्ययमेवार्थः ।

१४ 'निघण्टुसूत्रस्य' । टीकाकारा निघण्टुसमाम्नायं सूत्रसमुदायममन्यन्त । घ. ट. ठ. ड. पुस्तकेषु सूत्रशब्दोऽस्मादेव कारणात्क्वचित्प्रयुज्यते । तन्त्रं = शास्त्रं न तु सूत्रम् ।

१७ 'अग्निर्न । न उपमार्थीयः । अग्निरिव ये मरुतो भ्राजसा दीप्त्या रुक्मं रोचिष्णु वक्षो येषां ते रुक्मवक्षसः । आभरणविशेषो वा रुक्मविकारो रुक्मशब्देनोच्यते । स उरःसु येषां ते । वातासो न वाता इव च ये स्वयुजः आत्मनैवात्मनः सर्वकार्येषु नियोक्तारः । सद्यऊतयः ऊतिर्गतिः । सद्योगतयश्च । प्रज्ञा० नीतयः । यथा च प्रज्ञातिशयेन वृद्धा ये ते सुनीतयः स्युरेवं ये सुनीतयः । सुशर्माणो न सोमाः । शर्म सुखम् । सुष्ठुसुखाः । वर्षानुग्रहेण सोमा इवाभिलषितफलसिद्ध्या ऋतं यज्ञं यते गच्छते यजमानायेत्यर्थः । ये इत्थंगुणा मरुतस्तेऽभिलषितमर्थं संपादयन्त्वित्याशीः' (ट.) ।

२० क. ख. 'स्यूमरश्मेः' इत्यस्य स्थाने 'त्रसदस्यो' इति पठतः ।

२५३ १ यास्कभाष्ये भ्राजसा = भ्राजस्वन्तः (२४९ । ५) । 'मरुतो भ्राजमाना रोचिष्णूरस्काः' (२४९ । ५)

पत्रं पङ्क्तिः

२५३ — इत्येतत् प्रक्षिप्तमिव भाति । यदि मूलस्थमेव तर्हि 'भ्राजस्वन्तो रुक्मवक्षसः' इत्यस्य पश्चात्तैः शब्दैर्भाव्यम् । 'भ्राजमाना भ्राजस्वन्तः' ( २४९।५ ) इत्येतद्दुर्गो न व्याख्याति।

५ 'यथा केचित्प्रकर्षेण' इत्यत्रानावश्यकमसंबद्धं च ।

२५४ — ७ 'चतुरश्चिदिति । कण्वस्यार्षम् । चिदुपमायाम् । यथा चतुरोऽक्षान् ददमानात् धारयतः कितवात् कितवोऽन्यो बिभीयात् किमयं पातयिष्यति येन मामयं जेष्यति एवं बिभेति । आनिधातोः आ पतनात् आ क्षेपणात् तेषामक्षाणाम् । एवं दुरुक्ताद्बिभीयात् । अतोऽस्मै दुरुक्ताय न स्पृहयेत्कदाचित् । न दुरुक्तं ब्रूयाच्छृणुयाद्वेत्यर्थः' ( ट. )।

८ पतिष्यते । 'पतॢ गतौ' ( धा० १ । ८७० ) इति परस्मैपदम् । तस्मात् 'यतिष्यते' इति मूलपाठः स्यात्। अयं कितवः कमपि यत्नं कुर्यात् ।

१३ दुरुक्ते दुरुक्तस्य शास्ता वरुणः ।

१६–१८ यास्कभाष्ये 'ब्राह्मणा व्रतचारिणः' 'वृक्षस्य नु ते पुरुहूतवयाः' ( २५३ । १९ ) इत्येतयोर्निर्देशो नास्ति ।

२५५ — ५ 'अङ्गपुत्रः = अङ्गिरसः पुत्रः' ( ट. ) ।

१८ स्वपस्यते = सुशोभनम् अपः कर्म इच्छते यजमानाय। 'सुप आत्मनः क्यच्' ( पा० ३ । १ । ८ ) ।

२०–२१ इच्छते ( च. पाठः ) यजमानाय मन्त्रान् विवक्ति पितरौ प्रति विशेषात्मलाभाय अभ्युदीरिते त्वयि । मखः सानाय्यं हविः तविष्यते । च. पाठः साधीयान् । इतरपाठे 'स्वपस्यते =' कर्म इच्छति इति क्रियारूपम् । च. पाठे 'स्वपस्यते' इति यजमानविशेषणम् ।

२५६ — १ आ अपवर्गात् ।

९ तस्या आनन्तर्यात् = यज्ञेनात्यन्तं संबद्धासौ । तस्या एव सातिशयं यज्ञनैकट्यम् ।

१५ यजमानौ = पत्नीयजमानौ 'पुमान् स्त्रिया' ( पा० १ । २ । ६७ ) इति सूत्रेण ।

१६ अग्न्याधेयम् = अग्न्याधानम् ।

पत्रं पङ्क्तिः

२५७ २ जघनं= १ स्त्रीकट्याः पुरोभागः । २ अन्तिमभागः ।
४ ग. च. ज. पाठे ' रात्रिर्माता तस्य । स एव ' इति विरामचिह्नव्यवस्था ।
११–१२ उदकेनेन्द्रेण वा कथमसौ दीप्यत इति न ज्ञायते ।
२१ रसहरणं = सहभोजनं ( दुर्गः ) । द्वावपि रसं हरतः इति सामान्यम् ।

२५८ १ तु = अपि ( दुर्गः ) । अपिशब्देन आदित्यः तुशब्देन मनुष्यजारः पारजायिकोऽभिप्रेतः स्यात् । किंतु ' तु ' भेदे । अपि तु अयं जारो मनुष्यजारः० इत्यन्वयः सरलः ।
८ ' तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ' ( पा० ५ । २ । ७ ) इत्यनेन ' सर्वाङ्गीणः ' इत्येव रूपम् । ' सर्वाङ्गिक '-शब्दः प्रामादिक एव । ९ तं जारम् ।
१० उदीरितः = उद्गतः उत्क्षिप्तः उत्कम्पितो वा ।
१४ ' मिष सेचने ' ( धा० १ । ७०० ) । अथवा । ' स्पर्धायां ' ( धा० ६ । ७१ ) । ' मिष दर्शने ' धातुपाठे नास्ति ।
२२ वर्तमानः= आधुनिकः ।

२५९ ३ ' मेधातिथिं हि काण्वायनिं मेषो भूत्वा जहार ' ( षड्विं० ब्रा० १ । १ ) ।
५ अपवृत्ते= मृते ।
६–७ अस्य मनोरन्तरे= अस्मिन्मन्वन्तरे ।
७ अन्यं मेधातिथिं प्राप्नोतीति अन्यमेधातिथिप्रापकम् । अनेन कर्मणा इन्द्रोऽन्यं मेधातिथिं लभते ।

२६० १६ ' तं प्रत्नथा० । उपयाम गृहीतोऽसि मर्काय त्वा ' ( मै० सं० १ । ३ । ११ ) ।
' मन्थिग्रहेण मर्को निरस्यते ' ( मैत्रा० सं० १ । ३ । १२ )
१९–२१ ' या प्रथमा संस्कृतिर्यज्ञे अस्मिन्यः परमो बृहस्पतिश्चिकित्वान् । यो मध्यमो वरुणो मित्रो अग्निस्तस्मा इन्द्राय सुतमाजुहोत

पत्रं पङ्क्तिः

२६० तस्मै सूर्याय सुतमाजुहोत ' ॥ अयं हवनमन्त्रः ( मैत्रा० सं० १ । ३ । १२ ) ।

२३–२४ ' को नु वां वैश्वदेवानि एकादश धराण्यतः ' ( बृहद्दे० ५ । ३६ ) ।

२६१ ३ ' सा प्रथमा संस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रो अग्निः । स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय सुतमाजुहोत स्वाहेति ' ( शत० ब्रा० ४ । १ । ६ । २७ ) । यथायं हवनमन्त्र ऐन्द्रस्तथा ग्रहणमन्त्रोऽपि ।

५ अन्यदेवत्यौ गृह्येते = शण्डामर्काभ्यां गृह्येते ।

१० ' षण्डामर्कौ वा असुराणां पुरोहिता आस्तां तान्देवा नाशक्नुवन्हन्तुं ब्राह्मणवन्तो ह्यासंस्तौ अपाशासुरुप ना आवर्तेथामिति ता अब्रूतां भागो ना अस्त्विति वृणाथामित्यब्रुवंस्ता एतौ शुक्रामन्थिना अवृणातां ते देवा अमन्यन्त यदिमा असुर्यौ सोमौ होष्यामस्तदन्वसुरा आभविष्यन्ति यन्न होष्यामस्तदन्वा भविष्यन्तीति ता अपनुद्याथेन्द्राया जुहुवुस्तस्मादेता अन्यदेवत्यौ गृह्येते अथेन्द्राय हूयेते अपनुत्तौ षण्डामर्कौ ' ( मैत्रा० सं० ४ । ६ । ३ ) ।

२०–२१ ' त्वं क्रियासु त्वं गिरा त्वं प्रतीचीनम् ' एवं ' त्वम् ' एकस्मिन्वाक्ये त्रिवारं प्रयुक्तः ।

२२ ग. च. ज. पुस्तकेषु 'वृजनम्' इत्यस्य स्थाने 'वृजिनं' वर्तते । वृजिनशब्द ऋक्संहितायां चतुर्वारं प्रयुज्यते त्रिवारं कुटिलार्थे । बलार्थे एकवारमेव । अत्र संहितापाठः ' वृजनम् ' (२६१ । १० ) एव ।

२६२ १६ ' वृषलो वृषशीलो भवति वृषाशीलो वा ' ( १५४ । ४ । ५ ) इति न व्याख्यायते ।

२६३ १७ ' न देहे ' वृत्तौ पठ्यते किंतु न व्याख्यायते । ' अञ्जना ' ( २६२ । २४ ) न व्याख्यायते । ' यज्ञे देवस्य वितते महतो वरुणस्य च । ब्रह्मणः सरसं दृष्ट्वा रेतश्चस्कन्द कर्हिचित् ॥ तत्प्रतीक्ष स ( ठ. ड. सु ) पर्णेन संजुहाव विभावसौ । ततोऽर्चिषोऽभूद्भगवान् भृगुरङ्गारतोऽङ्गिराः ॥ अत्रे-

पत्रं पङ्क्तिः

२६३ वान्वेषणादत्रिः खननाद्विखना मुनिः । इत्थं प्रजापतेर्जाताः पुराणा ऋषिसत्तमाः ॥ इति टीकान्तरे ' ( ट. ठ. ड. ) । ' त्रिसांवत्सरिकं सत्रं प्रजाकामः प्रजापतिः । आहरत्सहितः साध्यैर्विश्वैर्देवैः सहेति च ॥ तत्र वाग्दीक्षणीयायामाजगाम शरीरिणी । तां दृष्ट्वा युगपत्तत्र कस्याथ वरुणस्य च ॥ शुक्रं चस्कन्द तद्वायुरग्नौ प्रास्यद्यदृच्छया । ततोऽर्चिभ्यो भृगुर्जज्ञे अङ्गारेष्वङ्गिरा ऋषिः ॥ प्रजापतिं सुतौ दृष्ट्वा दृष्टा वागभ्यभाषत । अभ्यामृषिस्तृतीयोऽपि भवेदत्रैव मे सुतः ॥ प्रजापतिस्तथेत्युक्तः प्रत्यभाषत भारतीम् । ऋषिरत्रिस्ततो जज्ञे सूर्यानलसमद्युतिः ' ( बृह० ५ । ९७ । १०१ ) ।

२५ व्युदुह्य = वि + उद् + उह्य ( वहतेः ) = विसर्ज्य ।

२६ ' विखननाद्वैखानसोऽभूत् ' इति दुर्गस्वीकृतो निरुक्तपाठः । इदम् ' अभूत् ' इति पदं नैकस्मिन्नपि पुस्तके उपलभ्यते ।

२६४ १९–२० इत्येवमादिभिः शब्दैः = ' अग्निर्न ये ' इत्यादिषु वाक्येषु ' न यथा इव ' एवमादिशब्दैरर्था उपमीयन्ते ।

२१ उपमानम् = उपमितिः ।

२६५ ३ लिङ्ग्यन्ते = अनुमीयन्ते ।

३–४ भाष्यस्य विस्तरविषयत्वात् = विस्तरो विषयो यस्य तद्विस्तरविषयं भाष्यम् । सर्वं विस्तरेण कथनीयमिति भाष्यस्योद्देशः ।

८ तत्र = तस्मिन् देवदत्ते ।

तस्य शौर्यादेः अभिधानं कथनं तस्य । तदभिधानस्येदं तदभिधानीयम् ( ग. च. ज. पाठः ) । यस्मिन् वाक्ये तस्य शौर्यादेरभिधानं वर्तते तद्वाक्यम् ।

८–९ उपमार्थं कृत्वा ( पाठभेदे २४ ) = उपमा रचयित्वा ।

९ ' एवम् ' ' एव ' द्वावपि पाठौ सार्थौ ।

उपमाशब्दानामिवादीनामन्यतमम् = उपमादर्शकं शब्दम् ।

१९ ' वाश शब्दे ' ( धा० ४ । ५७ ) । इति आत्मनेपदम् । ' वाश्यति ' ( ग. च. ज. ड. पाठः ) प्रामादिकम् ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| २७० | ७ | कारुः = 'कर्ता स्तोमानाम्' इत्यर्थे वर्तते। 'कातु' शब्द ऋक्संहितायां न विद्यते। कम् उदकम् अत्रेति व्युत्पत्त्या दुर्गपाठः 'कातुः' इति भाति। |
| | ९ | कुपानं = कौ पृथ्व्यां भूमध्ये पानम्। भूखननात्कूपः। तत्रस्थजलेन पानम्। |
| | १० | कुत्सितं = कष्टं न संतोषदायि यस्माज्जलोत्कर्षणार्थं रज्जु-घटाद्यपेक्ष्यते। |
| | ११ | संबाधः = जनसंमर्दादल्पावकाशः। तेन जनाः परस्परैः कलहायन्ते। |
| | १४ | 'तृपुः तक्वा रिम्वा रिपुः' इति निघण्टुपाठः (निघ० ३। २४)। |
| | १७ | संस्त्यानं 'स्त्यै संघाते' (धा० १।९३५) इत्यस्य निष्ठान्तं रूपम्। |
| | २० | 'निर्णीतं कस्मान्निर्णिक्तं भवति' (२६७।१९-२०) न व्याख्यायते। |
| २७१ | ५ | 'दूरं कस्मादुच्यते' एवं सर्वपुस्तकेषु पाठः। दुर्गः प्रायः 'उच्यते'शब्दं विश्लेषयति। |
| | ८ | कालाध्वनोर्महत्त्वं दूरपुराणयोः समानम्। |
| | १३ | ग. च. ज. पाठः 'पलेव'। छ. त. द. पुस्तकेष्वपि स एव पाठः। |
| | १५-१६ | नूतनं = नु (नवं क्षिप्रम्) उतनं उत्पन्नम्। |
| २७२ | १४ | ठ. ड. पुस्तकयोः 'व्याख्यातानि' इत्यस्यानन्तरं विरामो न प्राक्। |
| | १८ | 'अधुनैवं सामान्यत उक्त्वा' इत्यन्वयः। |
| २७३ | ६ | अपाकृतम् = अप + आ + कृतम्। अथवा। अपा (उदकेन) + कृतम्। 'अपाकृतं पानीययोग्यं नास्ति स्वल्पोदकत्वात्। अपानीयमात्रकृतम् उदकेन वा कृतम्' इति च. पाठः। 'अपाकृतं पानीययोग्यं नास्ति। स्वल्पोदकत्वादपानीयमात्रकृतम्' इति वाक्यव्यवस्था स्यात्। 'अपाकृतम्' इति 'मरुदेशम्' इत्यस्य विशेषणं भवेत् |

पत्रं पङ्क्तिः

२७३ ' जलाशयस्थानम् ' इत्यस्य वा । ' यत्र ( जलम् ) अपाकृतम् अपानीयम् आपानयोग्यं नास्ति स्वल्पोदकत्वात् । ( स्वल्पत्वात् ) तत्र कृतं जलाशयस्थानम् ' इति पुस्तकस्थपाठान्वयः । अयं पाठो न समीचीनो यस्मान्मृगः स्वल्पोदकस्थानं नैव शीघ्रं गच्छेत् । अथवा । ' तृषा बाध्यमानः स्वल्पोदकमपि जलाशयस्थानं शीघ्रं गच्छति इत्यर्थः ।

१० ' संयोगेन तृष्यन् ' इत्यस्यार्थान्वयौ कठिनौ । ' संयोगेन तुष्यन् ' इति ग. ज. पाठः सुबोधः ।' ऋत्विजां संयोगेन तुष्यन् पिब ' इत्यर्थः । ' पिबेति ' क्रियासंबन्धेन उपमासंबन्धेन वा ' तृष्यन् ' इति पदमिन्द्रेण सह योज्यम् इत्यर्थः स्यात् ।

१५–१६ सर्वपृष्ठा ( तै० सं० २ । ३ । ७ ) ।

१९ ' अग्रतोरथम् = इन्द्ररथस्याग्रतो वर्तमानं बलम् ' ( ट. ) ।

२१ समत्सु = सम् + अत्सु ( अद भक्षणे ) ।

२२ ' लोककृत् = लोकस्थितिकृत् । लोकानां पालयितेत्यर्थः ' ( ट. ) ।

२२ ' शत्रुहन्ता = वृत्राणामावरकाणाम् ' ( ट. ) ।

२७४ ३ दभधातुर्धातुपाठे नास्ति ।

९ न भावयव्यस्य किंतु तत्पत्न्या रोमशाया इयमार्षम् । ' भावयव्यपत्न्याः ' इति स्यात् यस्मात् ' सा'शब्देन काचित्स्त्र्युद्दिश्यते सा भावयव्यपत्न्येव ।

' रोमशा ऋषिका ' एतौ शब्दौ ट. पुस्तके ' भावयव्यस्य ' इति शब्दस्य विवरणार्थं प्रान्ते दीयेते । ठ. ड. पुस्तकयोस्तौ वृत्तावन्तर्भाव्येते ।

१४ यतः = अतः ।

१७ या = यादृशी । तथा = तादृशी ।

२७५ २ दुःशस्ते = दुःशंसने सदोषायां स्तुतौ ।

४ ' अप्राप्तस्य ' इति नैकस्मिन्नपि निरुक्तमूलपुस्तके पाठः । के एते एके ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| २७५ | १९ | ' अर्यऽया ' इति सावग्रहं पदम् । तस्माद्द्विवचनम् । ' शीघ्रगामिणौ ' इत्यर्थः । |
| | १७ | ' अनिवृत्तौ = अभिप्रस्थितौ ' ( ट. ) । |
| २७६ | ८-९ | ' रक्षसो भिन्दन् सतः = रक्षांसि प्राप्तस्येति प्रक्षेप्तुं प्राप्तान् राक्षसानिति योजनीयम् ' ( ट. ) । |
| | ९ | तिरः ( २७५ ) सतः इत्येतौ शब्दौ अप्राप्ते दूरार्थे एव दुर्गेण गृहीतावत्र । |
| | १२ | ह्व विपरीतः ऋ + ह् = अर्ह्=अर्ध । धृ विपरीतः ऋ + ध् = अर्ध । ' देवाश्च वा असुराश्चास्पर्धन्त नेमे देवा आसन्नेमेऽसुराः ' ( मैत्रा० सं० १ । ११ । ९ ) । |
| २७७ | ८ | नक्षतिर्धातुपाठे नास्ति । |
| | ९ | ' नाना ह वा एतान्यग्रे क्षत्राण्यासुः । यथैवासौ सूर्य एवं तेषामेष उद्यन्निव वीर्यं क्षत्रमादत्त तस्मादादित्यो नाम यदेषां वीर्यं क्षत्रमादत्ते ' ( शत० ब्रा० २ । १ । २ । १८ ) । ' ते ह देवा ऊचुः । यानि वैतानि क्षत्राण्यभूवन्न वै तानि क्षत्राण्यभूवन्निति तद्वै नक्षत्राणां नक्षत्रत्वम् ' ( शत० ब्रा० २ । १ । २ । १९ ) । न + क्षत्राणि = नक्षत्राणि । इमानि क्षत्राणि वीर्याणि न यस्मात्सूर्य एषां वीर्याण्यादत्ते । नक्षतेर्गतिकर्मण इत्येका व्युत्पत्तिः । ब्राह्मणे पुनरन्यो व्युत्पत्तिप्रकारः । |
| | ११ | अम्मयानि ( = अप् + मयानि ) = जलमयानि । |
| | १९ | ' शतपथश्रुतेः अमी सप्त सप्त ऋषय इति वा ' ( ट. ) । |
| | २०-२१ | चिद्दिवेयुः = चित् + दिवा + ईयुः । |
| | २२ | वरुणो वरुण एवात्र नादित्यः । वरुणोऽत्र स्तूयते न सूर्यः । |
| २७८ | ११ | ' एवंगुणयुक्तं = विशिष्टं ' ( ट. ) । |
| | १७ | ' स्यमु शब्दे ' ( धा० १ । ८५१ ) । ' स्यम वितर्के ' ( धा० १० । १६० ) । |

पृष्ठं पङ्क्तिः

१७८ २१ इयमृक् ऋ० सं० ८। १०२। २१। वा० सं० ११। ७४। मैत्रा० सं० २। ७। ७। काठकसं० १६। ७। कापिष्ठल सं० ३०। ८। इत्यत्रापि पठ्यते। ऋक्संहितायां 'तज्जुषस्व यविष्ठ्य' इति नास्ति।

२४ 'प्रयोगस्य' इत्यस्य स्थाने ग. च. ज. पाठः 'प्रउगस्य'।

२४ 'यदग्ने यानि कानि चेति पञ्चभिरौदुम्बरमपरशुवृक्णमुल्य इध्ममभ्यादधाति' (आप० श्रौ०)। उल्यो नामाग्निस्तस्मिन् परशुना यदिध्मं छिन्नं न भवति तत्क्षिपति।

१७९ ६ 'ऊर्दरमिति वा यमाहुः' इति ग. च. ज. पाठो दुर्बोधः।

७ तदावपनम् ऊर्दरम् कूदरम् इत्युच्यते। प्राकृतेन = अर्वाचीनभाषायाम्।

२१ समिद्धो अञ्जन्निति यमृक् तै० सं० ५। १। ११ मै० सं० ३। १६। २ काठक सं० ५। ६। २ इत्यत्र वर्तते।

१८१ १० 'आ वा ये अग्निमिन्धत इति सप्तदश' (आ० श्रौ० ६। ४) इत्यनेनादितः सप्तदशर्च एवातिरात्रे विनियुज्यन्ते। इयं तु विंशतितमा।

१८ 'एष ते रुद्र भागस्तं जुषस्व तेनावसेन० परो मूजवतोऽतीह्यवततधन्वा पिनाकहस्तः कृत्तिवासाः' (तै० सं० १। ८। ६)। 'रुद्रैष ते भागः। पिनाकहस्तः कृत्तिवासा अवततधन्वा' (मैत्रा०सं० १। १०। ४)। 'कृत्तिवासाः पिनाकहस्तोऽवततधन्वा' (काठक सं० ९। ८)। यास्कभाष्येऽयं पाठः स्वीकृतः। 'एतत्ते रुद्रावसं तेन परो मूजवतोऽतीहि। अवततधन्वा पिनाकावसः कृत्तिवासा अहिंसन्नः शिवोऽतीहि' (वा० सं० ३। ६१)।

२१ 'व्रीहियवादीन् बद्ध्वा वहनार्थं तृणवंशादिनिर्मितः पात्रविशेषो मूत इत्युच्यते। तयोरुभयोर्मूतयोस्त्र्यम्बकान् हविःशेषान् प्रक्षिप्य स्वकीयेनांसेन वोढुं शक्ययोर्वा वंशयष्ट्यामग्रद्वये तन्मूतद्वयमवासज्योन्नते स्थाणौ वृक्षे वंशे वल्मीके मूतद्वय-

पत्रं पङ्क्तिः

२८१ युतां वंशयष्टिं संसृजति '- ( महीधरटीका वा० सं० ३।६१ )।

२८२ ४ 'ओलजी (धा० ६ । १० ) ओलस्जी ( धा० ६। ११ ) व्रीडने आत्मनेभाषः '। 'लज्जति' रूपं ( पाठ-भेदे ) प्रामादिकम्।

१७ तत्तद्देवतानाम्ना गृहीता दक्षिणा न हिनस्ति। साक्षाद्ग्रहणाद्वीर्यमपक्रामति यथा वरुणदत्तदक्षिणास्वीकरणादग्न्यादीनां वीर्यमपाक्रामत् ( सत्या० श्रौ० १० । ६ )।

१७–१८ 'देवस्य त्वा० हस्ताभ्यां प्रतिगृह्णामि' इति मन्त्रो विशिष्ट-वस्तुग्रहणे युज्यते। २३ ताण्ड्य० इत्यादि प्रक्षिप्तं यस्माच्छाखाशब्देन संहिता एव निर्दिश्यन्ते न तु ब्राह्मणानि।

२३–२४ माध्यंदिनसवने हिरण्यं गौर्वासोऽश्व इति चतुर्विधा दक्षिणा। तत्तद्दक्षिणायाः प्रतिग्रहे विशिष्टो मन्त्रः। 'देवस्य त्वा० प्रतिगृ०' अयं वाससः प्रतिग्रहमन्त्रः। 'क इदं० कामैतत्ते' इति वाक्यं सर्वेषु प्रतिग्रहमन्त्रेष्वनुषज्यते। वस्तुतस्तु 'ग्नास्त्वा कृतन्नपसोऽतन्वत धियोऽवयन्' 'बृहस्पतये वासः' इति शब्दसमुदायं विहाय शेषं सर्वमनुषङ्ग एव। ( वा० सं० ७।४।७ काठक सं० ९।११।१२ सत्या० श्रौ० १०। ६ )।

२८३ २ 'कर्तितः' ( पाठभेदे ) इत्यपपाठो यस्माद्वासःशब्दो नपुंसकः।

४ परिकर्मकराः = भृत्याः सहाया वा। ६ बार्हस्पत्ये आत्मन्यवस्थिताय = यज्ञे बृहस्पतिकर्म कृतव्रते।

६ 'बृहस्पतये त्वा मह्यं वरुणो ददाति सोऽहममृतत्वमशीय' इति मैत्रायणीपाठो दुर्गेण व्याख्यायते। दुर्गस्वीकृतमन्त्रपाठस्तु भिन्न एव। अयं पाठः कुतस्त्य इति न ज्ञायते। संहितासु सूत्रेषु च भिन्नाः पाठा विद्यन्ते।

७–८ अभिसंहितम् = अपेक्षितं प्रत्याश्रुतं वा। ८ मानस्य = वीर्यस्य। ११ यश्वादाता = यश्च + आदाता।

पत्रं पङ्क्तिः

२८३ १५ ‘ कामः समुद्र आविशत्कामेन त्वा प्रतिगृह्णामि ’ ( २८२। २२ ) इति न व्याख्यातम् । इदं वाजसनेयिसंहितायां न विद्यते । मैत्रायणीसंहितायां ‘ कामः समुद्रमाविशत् ’ इति नास्ति । ‘ कामेन ’ इत्यस्य स्थाने ‘ कामाय ’ वर्तते ( मैत्रा० सं० १ । ९ । ५ )

२८४ १ ‘ तां पूषन्निति । पत्नीमुपयच्छन्ननयर्चोपस्थं परामृशति । इमां योनिं हे पूषन् शिवतमाम् अतिशयेन सुखाम् एरयस्व आभिमुख्येन प्रेरय गर्भग्रहणाय यस्यां पुत्रजन्मार्थं बीजं रेतोलक्षणं मनुष्या वपन्ति । कामयमाना ऊरू विश्रयाते विवृतौ करोति । यच्च योनिः स्त्री कामयन्ते (?) । विवृणोति वोरू । नद्यो नावेवोपचर्यन्ते । अथवा । तामिति वधूर्येवोच्यते । किंच । यस्यामुशन्तः कामयमाना वयं प्रहराम क्षिपाम शेपम् । स्कन्दस्वामी ’ ( ट. ) ।

४ तामीरयस्व = शिवतमामत्यन्तमङ्गलभूतां ( भाष्यम् ) ‘ आ ईरय सर्वतः प्रेरय ’ ( ट. ) । ठ. ड. पुस्तकयोरिदं ‘ तामीयरस्व ’ इत्यस्य स्थाने लिख्यते । ‘ भाष्यम् ’ इत्यस्य स्थाने ‘ भाव्यं ’ लिख्यते ।

१०–११ ‘ तव केतः अहम् अनु आयम् ’ इत्यन्वयः ।

१९ ‘ तदा आसीः । नेदानीम्० ’ इति च. पाठः । ‘ तदा आसीः नेदानीम् ’ इत्यन्वयः स्यात् । अस्मिन्नन्वये त्वं संप्रति तथा वर्तसे इत्यत्र ‘ न ’ गलितो भवेत् । इतरः पाठः सुलभः । तदा आसीः तदानीम् । त्वं संप्रति न तथा० ।

२८६ ४ ग. ज. पुस्तकयोः ‘ इह प्रियं० ’ त्रिष्टुबुच्यते ।

१३ स्वरेण अन्तो यस्य स स्वरान्तः । स्वरान्तोऽयम् एनाशब्दः द्वयोरप्यृचोः समान एव । ‘ एकस्मिन् ’ इति पाठान्तरे ‘ समाने एकस्मिन् ’ इति पुनरुक्तिः । द्वावपि पाठौ प्रामादिकाविव भातः । ‘ स्वरान्ते ’ इत्यस्य न प्रयोजनं ज्ञायते ।

पत्रं पङ्क्तिः

२८६ २३ अभ्यमनहा= ' अभ्यमन'शब्दः कोशेषु न लभ्यते।

२८७ १ ट. पुस्तके ' पुत्रः ' इत्यस्यार्थः ' स ब्रह्मणस्पतिः अस्मान् परिगृह्यानुगृह्णात्वित्यर्थः ' इति सायणभाष्यस्थशब्दैः प्रान्तभागे दीयते। एते शब्दाः ठ. ड. पुस्तकयोर्वृत्तावन्तर्भाव्यन्ते।

११ ' अविनाशनाम ' इति छ. त. द. पाठः।

१५-१६ ठ. ड. यो जात एवेति सर्वा ऋक् पठ्यते 'उपरिष्टाच्छेदः' इत्यपि लिख्यते।

२४ मरुतां गणः स्तनयित्नुशब्दं करोति। स शब्दः कृत्स्नं जगद् व्याप्नोति। उपशब्दयते सशब्दं कुर्वते।

२५-२६ ' कीदृशानां पुनर्मरुतां गणो यस्मै प्रभरध्वमिति ' ग. च. ज. पाठः सुबोध एव।

२८८ ४ वैश्वदेवे पर्वणि मारुतसप्तकपालस्य यदेयं याज्या तदाग्निरप्रधानः।

१२ साहचर्यमाख्यापयतीति साहचर्याख्यापिका। ' आख्यायिका' पाठः प्रामादिकः।

२८९ ६ ' कश्चिद्विस्पष्टं जानाति ' इति ग. च. ज. पाठः प्रश्नरूपः।

७ आगमः = छान्दोग्योपनिषद्। ' असदेवेदमग्र आसीत्। तत्सदासीत्तत्समभवत्तदाण्डं निरवर्तत तत्संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्डकपाले० ' ( छा० उ. ३। १९। १-२ )। कपाले = शकले।

११ ' यद्धैनयोः कर्म ' ( २८८। १७ ) इति ' यद्ध नाम ' इत्यस्य भाष्यं दुर्गेण न व्याख्यायते। विश्वधारणमनयोः कर्म।

१२ एते द्यावापृथिव्यौ विश्वधारणार्थं नते भवतः। इदं विश्वं तयोः परिणाम इति कृत्वा तत्सर्वमेते बिभृतः।

१५ ' द्यावापृथिव्योर्महिमानमाचष्टे ' इत्येतद्भाष्यं मन्त्रव्याख्यानेन त्विवृतमतो गतार्थम्।

पत्रं पङ्क्तिः

अध्यायः ४

२९१ ११ यच्च वक्ष्यमाणं तदनुक्तमपि प्रतीयत इति वाक्यशेषः ।

१२ यदुक्तं यद्वा वक्तव्यं तत्संक्षेपतो निगमनाय अवबोधायेति प्रतिजानीष्व अभ्युपगच्छ । 'प्रतिजानीथ प्रतिजानीषे प्रतिजानीष्य '(?) इति भिन्नाः पाठाः । 'तत्प्रतिजानीष्व' इति पाठः समीचीनः । आधस्त्यम् = अधस्ताद्वर्तमानम् ।

१३ गृहीतार्थः गतार्थः तस्य संक्षेपेण कथनात् ।

१४ 'विस्तीर्यैतन्महज्ज्ञानमृषिः संक्षिप्य चाब्रवीत्' इति महाभारतपाठः ।

२२ तत्त्वपर्यायादीनामर्थो निरु० २ । ५ इत्यस्य वृत्तौ पत्रे १४३–१४४ इत्यत्र दीयते ।

२३ स एषः = तत्प्रपञ्चनरूपोऽर्थः । निगमव्याजेन = निगमनाय प्रकरणसमाप्तये प्रकरणोपसंहाराय । 'निगमनव्याजेन' इति ग. ज. पाठः सुलभः । सवर्थापि = सर्वोऽपि ।

२४ द्वयोः प्रकरणयोः संबन्धः शास्त्रसंबन्धः । नैगमप्रकरणं नैघण्टुकप्रकरणाद्भिन्नमिति द्वौ हेतू यदुक्तं यद्वक्तव्यमित्यत्र (११) ।

२९२ ४ अभिधालक्षणाव्यञ्जना इति तिस्रो वृत्तयः । 'एकार्थम्' = अनेकेषां शब्दानामेकोऽर्थो यस्मिन् प्रकरणे तत् । 'अनेकशब्दम्' = एकार्था अनेकशब्दा यस्मिन् प्रकरणे तत् । एवमत्र लक्षिते लक्षणावृत्तिः ।

६ प्रसिद्ध्यनुपरोधाय = प्रसिद्धेः प्रसिद्धस्यार्थस्य अनुपरोधः अविरोधः तस्मै । ७ प्रतिनियतं = विशिष्टम् । ८ उद्गता कटिर्यस्य स सिंहादिचतुष्पात्प्राणी । ११ अकामकारेण = स्वेच्छाया अभावात् ।

१५–१६ 'सामान्यवाचिनः शब्दा विशेषे स्थापिताः क्वचित् । पलायने यथावृत्ति को नु मर्या इतीषते । विशेषवाचिनस्त्वन्ये सामान्ये स्थापिताः क्वचित् । हिमेनाग्निमिति मन्त्रे हिमशब्दो निदर्शनम्' (बृहद्दे० २ । १०९–११० ) ।

पत्रं पाङ्क्तिः

२९२ २६ इतरेतरविशेषणविशेष्यभावोपलक्षितानि = एकदा पदानि विशेष्यम् उपदयादयोऽर्था विशेषणम् । एकदा अर्थाः विशेष्यं पदानि विशेषणम् ।

२९३ १ निगमे वेदे वर्तमानाः शब्दा निगमाः ।

८ ज्ञापितः शब्दरूपैः । अयं पाठः समीचीनतरः । 'ज्ञायते' इत्यनेन वाचकानामज्ञानं दर्श्यते । 'अत्र' 'तत्र' द्वौ पाठौ । 'अस्मिन् प्रकरणे व्याख्यायन्ते' इत्यस्मात् 'अत्र'-पाठः समीचीनतरः ।

९ पूर्वाणि = पूर्वं कथितानि ।

१८ अनवगतसंस्काराः क्रमशो व्याख्यायन्ते । तत्र 'जहा' इति प्रथमं पदम् । 'वर्णवृत्तित्वाच्च' इति दुर्बोधम् ।

२९४ १० पूर्वोत्तरपदयोरविरोधः प्रकरणं शब्दसारूप्यमर्थोपपत्तिश्च ।

१३ हे शूर इन्द्रेत्यादिः ठ. ड. पुस्तकयो पाठः सायणभाष्याद् गृहीतः ।

१६ ऋक्संहितायां मर्या इति मरुत उच्यन्ते । मर्याः = वीराः । हे मरुतो युष्मन्नायक इन्द्रः कथंकारमस्मभ्यं ऋध्येत् ।

२९५ १ भूयास्थ इति प्रामादिकम् । भूयास्त इत्याशिषि लिङ् । आशिषिलिङोऽत्र न किमपि प्रयोजनम् ।

१६ 'मर्यादा मर्यैरादीयते' इति छ. त. द. पुस्तकेषु नास्ति (२९४ । ३)। तथाप्ययं पाठो दुर्गेण स्वीक्रियते ।

१७ का न्वेषा मर्यादा = एषा न मर्यादा किंतु मर्यादोल्लङ्घनम् ।

१८ असन् असत्यः अभियोगः अभिशंसनम् । मिथ्यापराधारोपः । असदभियोगं दत्त = मिथ्या मामपराधिनमभिशंसथ ।

१९ मृता उपक्षीणा समाप्ता । विषयस्य प्रदेशस्य । संश्रिता इति पाठान्तरम् । संश्रिता = संयुक्ता न तु उपक्षीणा ।

२१ मृता=(समाप्ता भूमिः) अन्यस्या आदिश्च तयोः विभागकारिणी । २२ आक्रोशः = गालिप्रदानम् । चतस्रो जायाः 'महिषी वावाता परिवृक्ता पालागली च' (शतपथ ब्रा० १३ । ४ । ८)। 'ब्रह्मोद्गाताहोताक्षत्तारस्ता यथासं-

पत्रं पङ्क्तिः

२९५ ह्यमभिमेथन्ति ताश्चानुक्रमेण तान्प्रत्यभिमेथन्ति ' ( शत० ब्रा० १३ । ५ । ८ )। ' अम्बे अम्बाल्यम्बिके न मा यभति कश्चन । ससस्त्यश्वकः ॥ इति त्रिर्महिष्यश्वं गर्हते त्रिरितरा पत्नयस्तामभिमेधन्ते ' ( तै० सं० ७। ४।१९ )। अश्वगर्हणमत्रैका महिष्येव कुरुते । चतस्रोऽपि गर्हन्तीत्यस्य मूलं नोपलब्धम् । अभिमेथनम् = आक्रोशः ग्राम्यवचसा निन्दा । ' भोगाभावदुःखेन गर्हणम् ' इति सायणः ( तै० सं० ७ । ४ । १९ ) ।

२३ मेथनकशब्दः कोशेषु नोपलभ्यते ।

२६ ' आक्रोशकर्मापापकम् ' ( २९४ । ४ ) इत्यत्र द्वौ पाठौ स्याताम् ' आक्रोशकर्मा पापकम् ' ' आक्रोशकर्मा अपापकम् ' इति च । अपरव्याख्यायां द्वावपि पाठौ दुर्गेण गृहीतौ ।

२९६ १ बलकृतयः = इन्द्रस्य वीर्यकर्माणि । इदं सूक्तमिन्द्रस्य वीर्यकर्मणां स्तुतिभिः पूर्णम् ।

२ इन्द्रो वीर्यकर्मकृत् त्रिशोको याचकः । एवं सति त्रिशोक एवेन्द्र इति न युक्तम् ।

६ अस्मत्कृतेऽर्थे न कोऽपि प्रकरणादिविरोधः ।

७ जहा = जघान ( यास्कः ) । अस्मिन् द्विचत्वारिंशदृचात्मके सूक्ते ' मा वधीः वसु स्पार्हं तदा भर मृळय आवृत्वद् भूतु ते मनः ' इति प्राय इन्द्रः संबोध्यते । इन्द्रस्य बलकृतयश्च स्तूयन्ते । तस्मादस्यामेवैकस्यामृचीन्द्रो वक्तेति न साधु । ऋषिर्ब्रवीति । अस्मदनुकूलमिन्द्रस्य मनोऽस्तु । हे मरुतः ( मर्त्याः ) अनाक्रुष्टः सखा सखायं ' जहा ' इत्यब्रवीदिति कदा श्रुतं भवद्भिः । सर्वे एव यूयमस्मदनुकूलाः । इन्द्रोऽपि तथा । अस्मत्तो ( मत्तो ) न कोऽपि क्रोधेन गतः न मह्यं कोऽपि क्रुद्धः । नेन्द्रोऽपि । अत्र ' जहा ' याहीत्यर्थे स्यात् । याहीति न कोऽप्यनाक्रुष्टः अक्रुद्धः सन् सखायमब्रवीत् ब्रवीति वा । क्रोधाद्भीतः कोऽस्मान् अद्यावधि अजहात् । न कोऽपि । जहा = याहि ।

१५

पत्रं पङ्क्तिः

२९६ चत्वारिंशत्तमायामृचि ' जहि'शब्दो वर्तते । अत्र स एव शब्दो ' जहा ' इति किमर्थं प्रयुक्तः । यदि जहा = जहि अथवा = जहाहि तर्हि अयमर्थः स्यात् । हे मर्त्याः कः सखा अनाकुष्टः सन् सखायम् अब्रवीत् जहा जहीति । इन्द्रो मम सखा युष्माभिः न कदाप्याकुष्टः । स मां सखायं त्रिशोकम् एनान् जहि जहाहि वा इति कथं ब्रूयात् । अस्मत्तो भीतो न कोऽपि ईषते पलायते । नाहं युष्मान् हनिष्यामि हास्यामि वा । न भेतव्यम् । एतादृशोऽस्या ऋचोऽर्थः स्यात् ।

१० प्रकृतं प्रकरणं तदनुवृत्त्या । १० ' स व्याख्यातव्यः ' इत्यत्र ' सः'पदेन किमुद्दिश्यत इति न ज्ञायते ।

११–१२ ' तत् ब्रूमः ' इत्यन्वयः ।

१६–१७ सा पाश्या निधा निधानीति वा रूपेण प्राप्ता सती ।

१९ निर्वचने प्रत्ययो विश्वासस्तस्योत्पादनार्थम् । इदं निर्वचनशास्त्रं नियमबद्धं सत्यं चेति दर्शयितुम् ।

१९ ' पाश्या ' इति तद्धितरूपम् । ' पाश्या ' इति पदात् तद्धितप्रत्ययार्थो निकृष्टः ।

२० ' पाशयतेर्बन्धनार्थस्य ' इति ग. च. ज. पाठः । ' पश बन्धने ' ( धा० १० । १८६ ) ।

२९७ १२ शक्तेरपत्यं पुमान् शाक्त्यः न तु शाक्तः । ट. ठ. ड. पुस्तकेषु वेदभाष्यमैतरेयब्राह्मणभाष्यं च प्रान्तभागेषु लिख्येते ।

१४ वयः वयांसि पक्षिणः । सुपर्णाः शोभनपक्षाः दृढपक्षाः । एते पक्षिणः प्रियमेधा ऋषय इवेन्द्रम् आदित्यं याचन्ते । ध्वान्तं तमः अपसारय । तेजसास्मच्चक्षूंषि पूरय । अनेन तमसा वयं पाशबद्धा इव स्मः । तानस्मान् तेजसा मोचय । इति सरलार्थः ।

१४ वयः = पक्षिणः । त एव याचमाना ऋषयः । पक्षिणो मतिमद्भिर्ऋषिभिरुपमीयन्ते । पक्षिणो निधया बध्यन्ते । तमो जालसदृशम् । तमसि जालपतिता इव वयं नेतस्ततश्चलितुं

पत्रं पङ्क्तिः

२९७ शक्नुमः । अयमेव स्वाभाविकोऽर्थः । पक्षिणां कविंत्वश- क्तिर्द्वितीयार्धे दृश्यते । ' ध्वान्तमपोर्णुहि चक्षुः पूर्धि जल- सदृशतमसो मुमुग्धि ' इति काव्ययोग्याः कल्पनाः । ' गृभ्णाति रिपुं निधया निधापतिः ' ( ९ । ८३ । ४ ) इत्यत्रापि निधा = जालम् ।

२६ ' यावदेतत्तावत् ' इति पाठान्तरम् । ' यावन्मोचयसि तावत् ' इत्यर्थः ।

२९८ १० सामर्थ्यात् इतरेषां पदानाम् ।

१४–१५ ' जहा जघानेत्यर्थः ( २९१ । ८ ) निर्धा पाश्या भवति' (२९४।५ ) एवमुक्त्वा ' शितामेति ' पदं तस्यायमर्थ इति वक्तव्यम् । यास्कस्तु निगममेव पठति । किमर्थम् । 'शिताम' इत्यस्यानेकार्था यस्मादेकार्थे एकमताभावः । दुर्गदत्तमिदं कारणं केवलं काल्पनिकम् ।

१६ यजेत्यादिपदयुक्तेन येन वाक्येन होत्रादिरध्वर्युप्रभृतिभिः प्रेर्यते तद्वाक्यं प्रैषः । मैत्रावरुणनामा ऋत्विक् ' आ भरतं शिक्षतम् ' इति मन्त्रं पुरोनुवाक्यां ब्रवीति तदन्त इमं प्रैषं ' होता यक्षदिन्द्राग्नी ' इति । अयं प्रैषः पुरोनुवाक्यायाः शेषः ।

२९९ ४ ' अन्त्राणाम् अङ्गानां स्वमंशभूतम् ' ( च. ) ।

८ सुमत् = स्वादुत्वात् अथवा स्वयमेव इति दुर्गः ।

१० बहुशो रुग्णानां = बहुशः रोगमुक्तानाम् इत्यर्थः स्यात् । रुग्णं भेदो रुजमेव कुर्यात् । अतस्तन्न स्पृहणीयम् । ' रुग्णा- नाम् ' इति पाठः प्रामादिको भवेत् ।

११–१२ उपवस्तानाम् आच्छादितानां पुष्टच्छागशरीरस्थानाम् ।

१३ अवत्तानां = कर्तितानाम् । उच्छेदनस्थानात् = उच्छेदन- योग्यात्स्थानात् । १७ वङ्क्रयः = वक्राणि पार्श्वास्थीनि षड्विंशतिः । १८ पटलम् = आच्छादनम् ।

२२ कार्येण = कर्मकरणात्तस्य गतिः । कायेन ( च. पाठः ) = शरीरेण । गतं = संबद्धम् । कालेन

| पत्रं | पङ्क्तिः | |
|---|---|---|
| २९९ | | गच्छता तत् गतं नष्टं भवति । 'कालन' इत्यस्यार्थो न ज्ञायते । 'कालेन' इति स्यात् । |
| | २४ | 'श्रोणृ संघाते' ( धा० १ । ४५७ ) । श्रोणिः संहता दृढा भवति । |
| ३०० | ३ | तस्य बाहोः प्राणेन बलेन पशुः द्रवति पलायते । बाहुः कस्य मनुष्यस्य पशोर्वेति न ज्ञायते । |
| | ४ | अंसभावेन = अंससंबन्धेन । काये शरीरे श्रितं भवति । 'कार्ये' इति पाठान्तरं किंतु न साधु । अंससंबन्धेन बाहुः कार्यं कर्तुं क्षमः । |
| | ६ | अवदानं = स्थापितहविषो होमपरिमितस्य भागस्य ग्रहणार्थं खण्डनं खण्डितभागो वा । |
| | ८ | 'पार्श्वतः श्रोणितः शितामतः' इत्यत्र 'शितामतः' पदं 'पार्श्वतः श्रोणितः' इत्यनयोरनन्तरं वर्तते नान्तरा । श्रोण्यनन्तरं च शितामशब्द उच्यते इति स्वयमेव दुर्गो ब्रवीति । अन्तरा = संनिधौ इत्यर्थः स्यात् । |
| | ९ | किमन्यदभिदध्यात् । प्रायेण बाहुल्येन दोरेवाभिदध्यात् । एवं बाहुल्येन शितामशब्दस्यार्थो नियतो भवति । |
| | ९ | प्रायः = बाहुल्यम् अपि अर्थनियामकं भवति । |
| | ११–१२ | योनेरवदानं न कुत्रापि कथ्यते । |
| | १४ | 'षिञ् बन्धने' ( धा० ५ । २ ) । विषितः शिथिलः मृदुलः । |
| | २५ | 'ष्यैङ् गतौ' । यकृत् मृदुत्वात् गतं संपृक्तमुदरेण भवति । |
| | २७ | मूलपाठः 'यथाकथाच' ( २९७ । ८ ) । अत्र तु 'यथाकथं चित्' । 'यथाकथाच'शब्देन यत्नाभावो लक्ष्यते । यकृदतीव सुच्छेदम् । तच्छेदे न कोऽपि प्रयासः । 'तेन यथाकथाचहस्ताभ्यां णयतौ' ( पा० ५ । १ । ९८ ) इत्यत्र 'यथाकथाच = अनादरेण' इति भट्टोजीदीक्षिताः । |
| ३०१ | १४ | डॉ. मॅक्डॉनेलेन संस्कृते बृहद्देवतापुस्तके 'अनेकार्थं |

पत्रं पङ्क्तिः
३०१

( श्लो० १०८ ) १९ गुणशब्दं ( श्लो० १०३ ) २१ समस्तार्थज० ( १०४ ) इति पाठाः ।

१४ शब्दस्य यदा अनेके अर्था भवन्ति तदा एतानि पञ्च कारणानि । अनेकार्थे कथमेतानि कारणानि स्युः । रूपं कदाचित्कारणं स्यात् यथा ' मेहना ' इत्यस्य ( ३०२ । १७ ) । पदार्थः अनेकार्थानां कथं कारणम् । व्युत्पत्तिः शब्दरूपे एवावलम्बते । प्रकृतिगुणयोः कोऽर्थः । यथा ' गुणाः ' इत्यस्य कारणानि इत्यर्थस्तथा अत्रापि गुणशब्दः कारणवाची भवेत् । अनेकार्थे एतानि चत्वारि कारणानि । तेन एकः अर्थः अन्यान् अर्थान् उत्पादयेत् । भिन्नाभिर्व्युत्पत्तिभिरपि अनेकार्थाः संभवेयुः । प्रकृतिशब्दस्यार्थो न ज्ञायते ।

१५ अनवगमे दश गुणाः कारणानि । पदजात्यादीनामुदाहरणानि २३ पङ्क्तिमारभ्य ।

१९ ' धातूपसर्गावयवगुणसत्त्वम् ' अस्य केनान्वयः कश्चार्थः । यदि ' पदम् ' इत्यनेनान्वयः तर्हि कीदृक् समासोऽयम् । पदे धातोः उपसर्गस्य वा द्वयोर्वा अवयवाः स्युः । गुणः क्रिया स्यात् । एतेषां सत्त्वम् अस्तित्वं यस्मिन् इति कदाचिद्विग्रहोऽर्थश्च स्यात् ।

२० निर्वाच्यस्य पदस्य किं लक्षणम् । तत् एकस्माद्धातोः द्वाभ्यां बहुभ्यो वा धातुभ्य उत्पन्नं स्यात् । बह्वेकधातुजं = बहुधातुजम् एकधातुजं वा ।

२१ पदं धातुजं स्यात् । अथवा । धातुजात् शब्दात् जातं स्यात् । अथवा । समर्थार्थः । व्याकरणशास्त्रनियमानुरूपः अर्थो यस्य तादृशः । एतादृशशब्दादुत्पन्नं स्यात् । किंचित्पदं वाक्ये एव उत्पन्नं भवति । वाक्यार्थाय नवीनं पदम् उत्पादयितव्यं भवति यथा मेहना इत्यत्र । ' व्यतिकीर्णम् ' इत्यस्य कोऽर्थः । अध्याहार्यमित्यर्थः स्यात् ।

२३ पदजातयः = पदजातानि नामाख्यातोपसर्गनिपाता इत्येतानि । ' त्व ' ( निरु० १ । ७ । ९ ) ।

पत्रं पङ्क्तिः

३०२ १ शितामशब्दस्यार्थो न ज्ञायते ( पत्राणि २९८–२०१ )। 'वने न वायो' (नि० ६ । २८) । 'ईर्मान्तासः' (४ । १३)। 'करूलती' ( ६ । ३० )। गुणः = विशेषणम् । 'करूलती' एतत्कस्य देवस्य विशेषणं भगस्य पूष्णो वा । 'मेहना' ( ४ । ४ )। 'उपरमध्वम्' ( २। २५ ) । अत्र 'उप' उपसर्गः 'रमध्वम्' इत्यस्मात् बहुभिः पदैर्व्यवहितः पश्चाच्च प्रयुक्तः । 'द्यावा नः पृथिवी' ( ९ । ३८ ) । अत्र 'द्यावापृथिवी' इति समस्तं पदम्। 'द्यावा' इत्यस्मात् 'पृथिवी' इत्यवयवो विक्षिप्तः। 'दानमनसः' ( ६ । ३१ ) तत्र दुर्गवृत्तिः ( ९९९। ५– ७ ) द्रष्टव्या । 'वायुश्च नियुत्वान्' ( ५ । २८) दुर्गवृत्तिः ( ४८७। १२-१४ )। 'पुरुषादः' (२।६)। 'गर्भनिधानीं' (२ । ६) । 'सर्वाणीन्द्रस्य' (६।८)। पदजात्यनवगतम् = केषांचिच्छब्दानां पदजातिरेव अनवगता । केषांचित् अभिधेयम् ( अर्थः ) अनवगतम् । केषांचित्स्वरोऽनवगतः । केषांचित्संस्कारः । केषांचित् गुणत्वम् अनवगतम् । तानि कस्य विशेषणानीति न ज्ञायते । 'मेहना'-सदृशः शब्दः किमेकं पदमथवा अनेकेषां पदानां समुच्चयः। केषांचित् ऋचि क्रमो व्यत्यस्तो व्यवहितश्च तेन तान्यनवगतानि । समस्तपदानि विक्षिप्यन्ते विभज्यन्ते व्यवधीयन्ते च तेन तान्यनवगतानि । कानिचित् अध्याहारं विना न ज्ञायन्ते । केषांचित् मध्ये अन्ये शब्दाः प्रयुज्यन्ते । तेन व्यवधानेन तेषामन्वयो न ज्ञायते ।

३०३ १ चित्र = शूर । ऋक्संहितायां चित्रशब्दस्य बहवोऽर्थाः। ( अग्निः ) चित्रः = तेजस्वी । चित्रासु ( गोषु ) = विविधवर्णयुक्तासु । चित्रं राधः = नानाप्रकारम् । चित्रा ( ऊतयः ) = आश्चर्यभूताः । 'इन्द्र चित्र वज्रहस्त' 'उग्र चित्र चेतिष्ठ' इत्यत्र चित्र = शूर । अद्रिवानिन्द्रः चित्र इति वीरः ।

पत्रं पङ्क्तिः

१०३ १ 'मिह सेचने' इत्यस्मात् मेहनाशब्दः स्यात्। '(इन्द्रः) व्यानशी रोदसी मेहनावान्' इत्यत्र मेहनावान् = सेचनवान् वर्षणवान्। वृष्टेः कर्ता इन्द्र उभे रोदसी व्यानशिः। बृहस्पतिरपि मेहनावानित्युच्यते। 'अस्मे रुद्रा मेहना पर्वतासः' अत्र वर्षस्य कर्तारो रुद्राः। 'शुष्मासो ये ते अद्रिवो मेहना' अत्र वर्षकारिणो मरुतः। 'गां भजन्त मेहनाश्वं भजन्त मेहना' इत्यत्र मेहना गोरश्वस्य च विशेषणम्। वर्षसदृशीमसंख्यातां गामश्वं च भजत गृह्णीध्वम्।

हे वज्रिन् शूर विदद्वसो इन्द्र यद्वर्षसदृशं राधस्त्वया गृहीतं तदुभाभ्यां हस्ताभ्यां न आभर। मेहना = वर्षः वर्षणीयं वा। मेहनाशब्दोऽव्ययरूपः।

३–४ 'यतः सुचिरमपि स्थित्वा यत्तदस्मभ्यो दातव्यमेवावश्यम्' इत्यन्वयः। ६ चिराय = विलम्बं कुरु।

६ 'यत् इन्द्र चित्र मे इह न अस्ति' इत्यत्र 'यत् अस्ति' इत्यनयोर्मध्ये पञ्च पदानि न तु 'मे इह न' इति त्रीणि। १२–१३ तस्मात् 'इन्द्र चित्र' इति द्वौ शब्दौ अपकृष्येते 'त्रीणि मध्यमानि पदानि' इति वचनं सार्थं कर्तुम्।

१७ ऋग्वेदपदकारः शाकल्यः सामवेदपदकारो गार्ग्यः। 'यदिन्द्र चित्र म इह नास्ति' इति छन्दोगानां पाठः (साम० सं० ४।२।१४।१)।

२० प्रतिविशिष्टतरं विद्यायाः धनाद्वा महनीयतरं पूजनीयतरम्।

२१ अकिंचनस्य गृहेऽल्पान्येव वस्तूनि सन्ति। स विशिष्टं वस्तु प्रार्थयेत न वा।

२२ अर्थावधारणार्थमृचि विशेषलिङ्गं नास्ति। २३ एतयार्थमत्या = एतमर्थं मत्वा।

२०४ ३ आदृणाति एतेन आयुधेन। अद्रि० = लोह इति च. पुस्तके पाठान्तरम्।

११ अस्मान् स्मारयति।

१५ 'उभ पूरणे' (धा० ६। ३८)।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ३०४ | २२ | गृहपतिरत्राग्निः। गृहार्थे 'दोमस्'शब्दो लातिनभाषायां वर्तते। दमूनाः (दामिनस् लातिनभाषायां) गृहपतिः। 'मनो मनोतेः' (३०२। २१–२२) इति न व्याख्यातम्। |
| ३०५ | २ | 'अयमपीतरोऽतिथिरेतस्मादेव' इति क. ख. पुस्तकयोरधिकः पाठोऽन्येषु पुस्तकेषु न लभ्यते। |
| | २१ | अभियोक्त्यः = अस्माकमुपन्यापतन्त्यः। तवात्वदागमन° (घ. ट. ठ. ड. पाठः) = तत्रागमन° + त्वदागमन°। त्वदागमनमेव प्रतिबन्धस्तेन वर्तमानाः = त्वया प्रतिबध्यमानाः। |
| | २३ | 'तान् विहत्य तेषां बलानि' अत्र 'तान्' व्यर्थम्। अथवा। 'तान् विहत्य तेषां बलान्यस्मभ्यमाभर' इत्यन्वयः स्यात्। तान् विहत्य = तेषां बलानि विहत्य इत्यर्थः। 'निहत्य' (४) इति मूलपाठः ङ. थ. ध. पुस्तकेषु। दुर्गपाठस्तु 'विहत्य'। 'आहर' इति छ. त. द. पाठः 'शत्रूणां भवताम्' इति च (४)। |
| | २२–२४ | 'अभियुजः अन्येषां बलानि विहत्य भवतां शत्रूणां भोजनान्याहर' (३–५) इति यास्ककृतोऽन्वयो व्याख्या च। 'शत्रूणां भवनात्' इत्यस्य न किमपि मूलम्। 'शत्रूणां भवतां' 'शत्रूणां भवनात्' इत्यनयोर्न कोऽपि पाठो दुर्गेण व्याख्यातः। |
| ३०६ | ३ | 'गृहाणि' 'परगृहाणि' (३०५। २) वा न व्याख्यातम्। |
| | ३–४ | 'अयमपीतरोऽतिथिरेतस्मादेव' इति न मूलं किंतु दुर्गस्यैव। अतिथिः प्राघूर्णकः। |
| | ११ | 'परिशेषात्'शब्दो नात्र युक्तो यस्माद्दमूनःशब्दस्य विविधा अन्वया नैव दर्शिताः। अयमन्वयो न युक्त एतेऽपरे च न युक्ताः परिशेषादयमेवान्वयो युक्त इति परिशेषशब्दस्य स्वारस्यम्। |
| | १८ | 'मूष इत्यनेनोक्तो भवति' इति युक्तम्। |

पत्रं पङ्क्तिः

२०६ १९ आख्यानं पर्यायाख्यानं तेन प्रसक्तस्य ।

२०७ ८ ' त्रितस्यापां पुत्रत्वम् ( तै० ब्रा० ३।८।१०।११ ) इत्यत्र । तमेतमार्ष्यं बहूवृचास्तकारोपजनेनाधीयते ' आप्त्यः ' इति । एकतद्वितौ भ्रात्रा कूपादुद्धृतं जलं पीत्वा तं कूपेऽपातयतां तद्धनं गृहीत्वा च गृहं न्यवर्ततां त्रितस्तु देवानमेन सूक्तेनास्तौदिति शाट्यायनिन इतिहासमाचक्षते ' ( ऋ० सं० १।१०५ सायणभाष्यम् ) ।

९ नेयं पङ्क्तिः किंतु यवमध्या महाबृहती ।

१० ' कूपे पतितस्य ' इत्यसंबद्धम् । ' कूपे पतितस्य त्रितस्यार्षम् ' इति स्यात् । ' कूपे पतितस्य ' इति प्रान्तभागे लिखितं त्रितस्य वर्णनं टीकायां लेखकप्रमादेन सर्वेषु पुस्तकेष्वन्तर्भावितं स्यात् ।

११ ' परस्परं वा पीड्यन्ते ' ( पाठभेदः ) इति सायणभाष्यात् च. ट. पुस्तकयोर्विवरणत्वेन प्रान्तभागे लिख्यते ।

१४ ' कार्पाससूत्राणि संघटनार्थं भक्तमिश्रोदकेन लिप्यन्ते । ' पायितानि = लिप्तानि कुविन्देन ' ( च. ) । ' अस्नातानि ' ( २०६ । २७ ) इति भाष्यशब्दो न व्याख्यातः । अस्नातानि = न कदापि धौतानि ।

२१ ' अयमप्युपमार्थः ' इत्यन्वयः । विकल्पयते = विकल्पेन शिक्षशब्दस्यार्थो दीयते ।

२०८ १ मयि उत्तिष्ठन्तीति मद्रुत्थाः । ३ तव नाम = तवापि । ' न च नाम ' इत्यत्रापि ' नाम ' विस्मये ।

४ ' उभययोः आधीनां पशूनां च पार्श्वीकृतं लक्ष्यीभूतम् ' इत्यर्थः स्यात् ।

६ युक्तं° क्तो ( च. पुस्तके ) । ' अहो न युक्तो भक्तपरित्यागः ' इत्यन्वयः । किंतु ' युक्तो'पाठः प्रामादिको यस्मात् ' भक्तपरित्यागो हि० ' इदं वाक्यान्तरम् । सर्वेभ्यः पापेभ्यः पापिष्ठः प्रामादिकम् । ' सर्वेषु पापेषु ' इति शुद्धम् । ९ यत्प्रयोजनं = यस्मै प्रयोजनाय ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ३०८ | ९ | ' श्रुत्याख्यस्य ' श्रुतिः सूक्तं त्रितेन दृष्टम् । स्तुत्याख्यस्य ( पाठभेदे ) = स्तुतिः आख्या यस्य । स्तुतिरूपस्य । |
| | १० | प्रतिभयः भयानकः आकारो यस्य । ' प्रतिभयाकरात् ' इति पाठे प्रतिभयः भयानकरसः तस्य आकरः खनिः तस्मात् । |
| | १४ | एतस्मिन्सूक्ते ' त्रितः कूपेऽवहितः ' इति त्रितस्य कूपपतनं विशेषलिङ्गम् । अत एव सूक्तगताद्विशेषलिङ्गात् त्रितसंबन्धिज्ञानमुपलभ्य यस्मात् ' त्रितं कूपेऽवहितमेतत्सूक्तं प्रतिबभौ ' यत्रेयमृक् तस्मात्कूपपर्शत्र एता इति भाष्यकारेण तदेव कूपपर्शुत्वं ख्यापितम् । |
| | १९ | सूत्रशब्दः शिश्नशब्दस्य कथं शेषभूत इति न ज्ञायते । शिश्नभक्षणमशक्यं तस्मात्पारिशेष्याच्छिश्नशब्देन सूत्रं लक्ष्यत इत्यर्थः स्यात् । |
| | २२ | ब्रह्म = वेदः । इतिहासमिश्रं ब्रह्म ऋङ्मिश्रं गाथामिश्रं च भवतीत्यन्वयः । |
| | २५ | सुभाषितत्वेन सर्वैर्गीयमाना गाथेति सायणः ( ऐ० ब्रा० २५ । ५ ) । |
| | २६ | गाथा नैव ऋक्प्रकारः । ' ब्राह्मणजाः श्लोका गाथाः । यं न्विमं पुत्रमिच्छन्ति ( ऐत० ब्रा० ३३ । १ ) इत्येवमाद्या गाथाः ' ( आश्व० श्रौ० ९ । ३ । टीका ) । ' इदं जनाः ' इत्याद्याः कुन्तापसूक्तगतास्तिस्र ऋचो नाराशंस्यः । तत्रैव ' यदिन्द्रो० ' इति पञ्चेन्द्रगाथाः । |
| ३०९ | ७–८ | ' सोऽङ्गारेणापः । अभ्यपातयत् । तत एकतोऽजायत । स द्वितीयमभ्यपातयत् । ततो द्वितोऽजायत । स तृतीयमभ्यपातयत् । ततस्त्रितोऽजायत ' ( तै० ब्रा० ३ । २ । ८ ) ' सोऽपोऽङ्गारेणाभ्यपातयत्तत एकतोऽजायत द्वितीयं ततो द्वितस्तृतीयं ततस्त्रितः ' ( मैत्रा० सं० ४ । १ । ९ ) । ' सोऽपोऽभितिष्ठेव तत आप्त्याः संबभूवुस्त्रितो द्वित एकतः ' ( शत० ब्रा० १ । २ । ३ । १ ) । भार्यागारेणेत्यादि |

पत्र पङ्क्तिः

१०९ — कुत्रस्थं वाक्यमिति भार्यागारेणाभ्युपादयदित्यस्यार्थोऽपि न ज्ञायते । ‘ अगारेण ’ इति ‘ अङ्गारेण ’ इति स्यात् । तथा ‘ अभ्युपादयत् ’ इति ‘ अभ्यपातयत् ’ इति स्यात् ।

११० ५–६ मातीव भिद्येमहि = अननुज्ञातसोमभक्षणेन यथा पापानां जठरमतीव भिद्यते तथा मा भिद्येमहि । सोमो देवानां कृतेऽभिषूयते । देवैरनुज्ञाताश्च मनुष्यास्तं भक्षयन्ति ।

६–७ ‘ तारीः ’ ‘ तारय ’ इत्यनयोर्मध्ये ‘ मा चास्मानभिपावी ’ इति ग. ज. पाठः । ‘ मा चास्मानतिप्रातीष्व ’ इति च. पाठः । किन्त्वयं च.पाठोऽपमृष्टः । अनयोः पाठयोरर्थो न ज्ञायते ।

९ ‘ वेसराणि ’ इत्यस्य स्थाने ‘ विसराणि ’ इति च.पाठः । अयं पाठः साधुर्भाति यस्मात् विसराणि = द्विसराणि ।

१०–११ विवासनानि = गमनानि । ‘ वासराणि ’ इत्यस्य ‘ गमनानि ’ ( ११–१२ ) इत्यनेन न व्युत्पत्तिर्दीयते ।

१२ ‘ विसृतानि ’ कुत उपलब्धमिति न ज्ञायते । वि = वा । वासृतानि = वासराणि । ‘ विवासृतानि ’ इति घ. झ. ट. ठ. ड. पाठः । च. पुस्तकेन च स्वीकृतः ।

१४ ‘ तप्तनप्तनथनाश्च ’ ( पा० ७ । १ । ४५ ) इति सूत्रेण छन्दसि तस्य स्थाने तबादय आदेशा भवन्ति । उपजनाः = अधिकाक्षराणि ।

१७ ‘ शुनं सुफाला० ’ इयमृक् कस्यां शाखायां वर्तत इति न ज्ञायते । य० वा० सं० ( १२ । ६९ ) इत्यत्र ‘ विनुदन्तु ’ इत्यस्य स्थाने ‘ वितुदन्तु ’ वर्तते । अथर्ववेदेऽपि ( ३ । १७ । ५ ) ‘ वितुदन्तु ’ ‘ अभियन्तु वाहैः ’ इत्यस्य स्थाने ‘ अनुयन्तु वाहान् ’ ‘ कर्तनास्मे ’ इत्यस्य स्थाने च ‘ कर्तमस्मे ’ इति पाठाः । मैत्रा० सं० अपि ( २ । ७ । १२ ) ‘ वितुदन्तु ’ ‘ कीनाशा अभियन्तु ’ इत्यस्य स्थाने ‘ कीनाशो अभ्येतु ’ इति पाठौ । ऋग्वेदे ( ४ । ५७ । ८ ) तैत्तिरीयसंहितायां ( ४ । २ । ५ । ६ ) च. पाठा अत्यन्तं भिन्नाः ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ३१० | १८ | तोर्शमाना ( च. पाठः ) = तोषमाणा । |
| | १९ | ' यजुषा युनक्ति यजुषा ( शुनं सुफाला इत्यनेन ) कृषति' ( तै० सं० ५ । २ । ५ ) । |
| | २१ | कीणशब्दः कोशेषु न वर्तते । किणः = मांसग्रन्थिभेदः । |
| | २३ | ' शुनासीरौ = इन्द्रवायू वाय्वादित्यौ वा ' ( च. ) । |
| ३११ | ८ | ' स मुचीष्ट ' ( २ ) इति पदपाठः । दुर्गमते ' समुचीष्ट ' इत्येकं पदम् । वस्तुतस्तु ' स दुर्हणायुः ' इत्यन्वयः । मुचीष्ट = मुक्षीष्ट ( आशिषि लिङ् ) मोक्तुमिच्छेत् । |
| | ९ | ' हन्त ' इति पाठः प्रामादिकः । ग. ज. पुस्तकयोः 'तत' । हतेति शुद्धं रूपम् । |
| | १३ | ' मतौ छः सूक्तसाम्नोः ' ( पा० ५ । २ । ५९ ) इत्यनेन ' कया शुभा ' शब्दौ वर्तेते अस्मिन्निति कयाशुभीयम् । |
| | १७–१८ | ' अच्छा ( १० ) = आभिमुख्येन ' ( ट. ) । |
| | १८ | ' आयात ' इति साधीयान् पाठः । |
| ३१२ | ३ | ' जग्धधरम् ' इति ग. ज. पाठः साधुः । |
| | २० | स्वधा = अन्नं सवने ये पुरोडाशास्तद्रूपम् । अनुष्वधं = पुरोडाशभक्षणानन्तरम् । |
| | २२ | मदनीयाय = मदनस्येदं मदनीयं तस्मै । जैत्राय = जयाय सोममदाज्जयोऽवश्यः । |
| | २४ | ' सिञ्चस्व ' ( ७ ) इति पदम् । निरुक्तभाष्यपाठस्तु ' सिञ्चस्व जठरे ' ( १० ) सायणोऽपीममेव पाठमुदाहरति । यास्कानुमतोऽयं पाठो न वेति न ज्ञायते । |
| ३१३ | १ | मधु पिब = सोमं पिब इत्यौपमिकम् । एवमेतत्सोमस्य मधुत्वमुपमयैवोक्तम् । किं कारणम् । माद्यतेः मदयोगात् । ' धातोः'शब्दो ( २ ) व्यर्थः । |
| | ३ | यत् यस्मात् सोमस्य मधुत्वम् उपचारत्वेन औपचारिकं तत् तस्मात् मधुशब्दस्यात्र माध्वीकं मध्वासव इति नार्थः । माद्वीध्वीकं ( ग. ज. पाठः ) = माद्वीकं + माध्वीकम् । |
| | ५ | ब्रवीषि ( पाठान्तरं ) हे यजमानेतीन्द्रप्रश्नः । |

पत्रं पङ्क्तिः

३१३

६ प्रदिवः = दिवः दिनात् दिने प्र प्रगते पूर्वस्मिन् ।

१० अतीवाल्पोऽयं नवमः खण्डः । ईदृक्खण्डकरणस्य कारणं न दृश्यते । अष्टम एव खण्डेऽयमन्तर्भावितव्यः ।

तितउ । तित = तत अथवा तुन्न । उ = वत् । अथवा । ति = तिल । त = तुन्न । वत् = उ ।

१६ ' तद्वति ' ( च. पाठभेदः ) इति ' नद्धम् ' इत्यस्यार्थः पाठान्तरं वा । तद्वति = ततवति = चर्मवति वस्तुनि तितउशब्दः प्रयुज्यते । तताः = गुणाः तन्तवः धातु-सूत्राणि तद्वत् ।

३१४

१५ ' अक्रृषत ' इति करोतेर्लुङि रूपम् ।

१६ ' वाचमक्रृषत ' इत्यनेनात्र केचिद्धीराः प्रज्ञानमक्रृषत दर्शितवन्त इत्यभिधीयते ।

२० संजानते = ऐकमत्येनाभ्युपगच्छन्ति ।

२३ विज्ञानस्य संजानते = विज्ञानमभ्युपगच्छन्ति । २३ किंचिज्ज्ञास्यते ( ठ. ड. पाठः ) न किंचिदित्यर्थः ।

३१५

१ भजनीयं सेव्यं भूतानाम् अभिद्रवणीयं च भूतानाम् ।

२ भ = अभि । द्र = द्रवणीयम् । भद् = भवत् । र = रमणीयम् ।

३–४ भाजनभूतैः पुरुषैः तद्वत् ।

६ ' लाभाद्वा लक्षणाद्वा ' ( ३१४ । ४ ) इति दुर्गस्वीकृतः पाठः । तेन लाभाद्वा + आलक्षणाद्वा इति संधिविग्रहः । आ = आसमन्तात् । ७ लक्षितः = विख्यातः । लक्ष्मीवान् सर्वत्र लक्ष्यते ।

७ ' लाञ्छितः ' इति शुद्धं रूपम् । लाञ्छितः = चिह्नितः ।

१० पुरुषमाश्लिष्येत्यन्वयः ।

१२ लक्ष्मीवन्त आत्मश्लाघाया लज्जन्ते ।

१५ उत्कृष्टम् अस्मात्क्रमविवरणात् ।

२१ सायणाङ्गीकृतपाठोऽपि ' अयुक्त ' ( क. ख. छ. द. पाठः ) इत्येव ।

पत्रं पङ्क्तिः

३१६ ५ कर्मणां क्रियमाणानां = प्रारब्धापरिसमाप्तानां कृष्ययज्ञादिलक्षणानाम् ( इदं सायणभाष्यस्थं विवरणं ) च. ट. पुस्तकयोः प्रान्ते लिख्यते ।

६ कर्माणि तत्कर्तारश्च सूर्येणावगण्यन्ते ।
' विततं तेषाम् ' इति पाठान्तरमसंबद्धमेव । ' विततं '- शब्दः पुनश्चोच्यते । ' मित्रतां तेषाम् ' इति षष्ठ्यनादरे । स्पर्धमानान् पश्यतो वाताननादृत्य ।

११ ' आत्मनि युनक्ति ' इत्यन्वयः ।

१२ सहस्थानं = सर्वेषां रसमादातुमेकं स्थानम् ।

१४ अवमिश्रयन्ती = सर्वत्र मिश्रितं प्रसृतम् अह्नः विमुञ्चती ।

१८ यदि तमो वाससोपमीयते तर्हि ' इव ' इत्युपमावाचकेन शब्देन ' वासः ' इत्यस्यानन्तरं भाव्यम् । ' रात्रीव ' इति प्रयोगे यास्कोद्देशो न ज्ञायते । कदाचिदुत्प्रेक्षार्थे ' इव ' स्यात् ।

३१७ १४ यदा स्वप्रकाशरूपं कर्म पुनर्निधत्ते = यदादित्य उदेति ।

१५ अस्तमयं प्रति = अस्तमये ।

१६ ' असत्यप्युपमाशब्दे ' इति ग. ज. पाठः साधीयान् ।

१९ तस्य वासःशब्दस्य ' वेसरमहः ' इति यास्केनैवास्मिन् खण्डे व्युत्पत्तिरुक्ता ।

२१ ' रात्र्यैव ' इत्यवधारणम् । अत्र उपमार्थ उत्प्रेक्षार्थो वावश्यकः । तस्मात् ' रात्र्येव ' इति पाठः साधुः । ' रात्र्येव ' इत्युत्प्रेक्षा न तूपमा ।

३१७ २४ ' नि अधात् ' इति पदच्छेदः च. पुस्तके ' नि ' इत्युपसर्गस्य विशेषावधारणार्थं क्रियते ।

२५–२६ ' यदा चोत्तिष्ठति ( तदा ) व्यदर्धः ' इति ' तदा ' पदमवश्यम् ।

२६ ' व्यधात् = व्यदर्दः विदारयतीति वेदभाष्ये पाठः ' ( च. ट. ) । इदं ठ. ड. पुस्तकयोर्वृत्तावन्तर्भाव्यते । ' व्यदाधात् ' ( ग. पाठः ) ' व्यवदधात् ' ( ज. पाठः ) इत्यत्र ' व्यदर्धः + व्यधात् ' इत्यस्य मिश्रणं क्रियते ।

| पत्रे | पङ्क्तिः | |
|---|---|---|
| ३१८ | ३ | प्रथमे विवरणे उपमा गूढा । द्वितीये उत्प्रेक्षा गूढा । वस्तुतस्तु द्वयोरप्यृचोः रूपकालङ्कारः । द्वयोर्विवरणयोर्न कोऽप्यर्थविरोधः । |
| | २५ | हे मरुद्गणेति दुर्गकृतोऽर्थ एव साधुः । |
| ३१९ | १४ | सायणस्वीकृतनिरुक्तपाठे ' यदापन् ' इत्यस्य स्थाने ' यदापुः ' वर्तते ' सुसमीरितान्ताः ' ( ७ ) इति च नास्ति । |
| | १९ | अश्वस्य स्तोमः स्तोत्रं तद्यस्मिन्मन्त्रजाते विद्यते तदिदमश्वस्तोमीयं ( ' मतौ छः सूक्तसाम्नोः ' पा० ५ । २ । ५९ इति सूत्रेण ) । आश्वमेधिके मध्यमेऽहन्युपाकरणायावस्थितमश्वमाद्याभिरेकादशभिः स्तौति । ३१९–२१ ' सुसमीरितान्ताः ( ७ ) ' ' आजिम् ' ( १४ ) इत्येते पदे न व्याख्याते । ' दिविजाः ' ( १२ ) इति न पठितम् । |
| | २२ | ' विसृताः ' इति ग. च. ज. पाठः । विसृतप्रसृतशब्दयोर्न कोऽपि भेदः । |
| | २७ | तनवः इति विशेषणम् । |
| ३२० | १ | सिलिकं = शीर्षम् । |
| | ४ | आदित्यो मूर्धा सर्वेषां भूतानां राजा वेति गार्ग्य आदित्यमुपासांचक्रे । |
| | १९ | आप्नुवन्ति स्वर्गपथमुदयादारभ्य यादवस्तमयमिति । |
| ३२१ | २–३ | ' आदित्यात् ' इत्यस्य स्थाने ' सूरात् ' किमर्थं प्रयुक्तमिति न ज्ञायते । |
| | ११ | शक्नुमाप्नुयात् ( ठ. ड. पाठः ) = शक्नुयात् + आप्नुयात् । कोऽन्य एनमश्वमास्थातुमाप्नुयात् । एतादृशाश्वप्रातिरशक्या । |
| | १३ | ' नियमेन रज्जुं गृह्णाति ' ( पाठभेदः ) इत्यत्र ' नियमेन ' इत्यस्य न किमपि स्वारस्यम् । |
| | १४ | ' निस्तष्टवन्तः ' इति पाठः साधीयान् । |
| ३२२ | ११–१२ | ' अथ यदि गार्हपत्योऽनुच्छेत् । अरणी वाव स गच्छति ' ( शत० ब्रा० ६ । ६ । ४ । १३ ) । |

पत्रं पङ्क्तिः

३२२ १३ सा = आपः । अयं प्रमाद एव । 'ताः' इत्यवश्यम् ।

१७ अनुगच्छन् = उपशाम्यन् (२) ।

२३–२४ स्वपुरुषैर्बद्ध्वानीतं वसिष्ठं दृष्ट्वा विश्वामित्रो ब्रूते । हे जनाः मम सायकस्य (बलं) न चिकिते ज्ञायते भवद्भिः यस्मात् भवन्तः लोधं लुब्धम् एतं वसिष्ठं पशुं मन्यमाना नयन्ति । वाजिनाः अश्वाः अवाजिनम् अनश्वम् अश्वजातेर्भिन्नं गर्दभसदृशं प्राणिनं न हासयन्ति हेषाशब्दं न कारयन्ति । अनश्वः अश्वसंनिधौ मूक एव तिष्ठति । अश्वात्पुरा अश्वस्य पुरतः गर्दभं जना न नयन्ति । अत्र विश्वामित्रः अश्वः वसिष्ठः गर्दभः । एवमियमृग् विश्वामित्रस्य द्वेषं दर्शयति (३२३ । १—२) ।

३२३ २–३ अयं निश्चयो वेदावमाने कथं न पर्यवस्यति ।

१० प्रउगस्य (ग. च. ज. पाठः) प्रयोगस्य स्थाने । 'प्रउगम्' इत्युक्थनाम शस्त्रनाम वा न तु ऋषिनाम ।

१४ 'दीर्घश्रोतृभ्यः' इति प्रामादिकं 'दीर्घश्रोतृषु' इत्यावश्यकम् ।

१७ पक्षेण = अवगमपक्षे । अवगते सती अनेकार्थे । 'विदध्रे द्रुपदे' इत्येताभ्यां शब्दाभ्यां दारुपाद्यौ कन्यके विशेष्येते । अथवा । कन्ययोरधिष्ठानमेते प्रवदतः ।

१८ दारुपादूद्यौ (पाठान्तरम्) = दारुपादूः + दारुपाद्यौ । निरुक्तमूले छ. पुस्तके 'दारूपाद्यौ' (३२४ । ३) इत्यशुद्धः पाठः ।

१८–१९ 'द्रुममये पदे' इति सप्तम्येकवचनम् । 'दारुपाद्यौ' (कन्यके) इति प्रथमाद्विवचनम् ।

३२४ २ 'कन्ययोरधिष्ठानप्रवचनानि' : इत्यस्य प्राक् 'विदध्रे नवे द्रुपदे अर्भके' इत्यावश्यकम् ।

५ 'अश्मयोः' (छः त. द. पाठः) इति लेखकप्रमादः ।

१३ कन्या = क (+ म) + न् (+ ई) या । अथवा ।

१४ क (= क) + न् (+ एतव्) + या । अथवा । १५ क

पत्र पङ्क्तिः

३२४ ( मनेन आ ) + न् ( + ई ) + य ( ते ) ।
अथवा । १६ कन्यते काम्यतेऽसौ कन्या ।

१५–१६ 'कमनेनानीयते' ( = भोगेच्छया पतिगृहमानीयते ) इदं 'कनतेर्वा स्यात्' इदं च दुर्गो न व्याख्याति ।

१९ 'सप्तम्येकवचनानि' इति च.पाठो निरुक्तमूलपाठः ( ३ ) स्यात् ।

२१ कन्ये इव कन्यके । 'इवे प्रतिकृतौ' ( पा० ५।३।९६ )। शालभञ्जिके इत्यर्थः ।

२०–२१ 'एकस्मिन् दारुमये पादपीठे यस्मिन्नधिरूढे कन्यके शालभञ्जिके वा' इति च.पाठः सुगमः ।
विदध्रे नवे द्रुपदे अर्भके ( १७ ) = एकस्मिन् दारुमये पादपीठे यस्मिन् द्वे कन्यके शालभञ्जिके वाधिरूढे इत्यन्वयः ।
'अधिरूढेषु पादुका ००० यमनस्थानेषु' ( पाठभेदे ) इदं व्याख्याया अन्ते ( ३२५ । ९–११ ) वर्तमानमत्रानवश्यम् । निःसंशयं केनाप्यज्ञानादत्र लिखितम् ।

२२ तत् = पादपीठम् ।

३२५ १ विकुषितः = निष्कुष्टः । छिद्रयुक्तः कृत इत्यर्थः । कन्यके ( चित्ररूपे पुत्तलिके ) विद्धे । तयोरधोभागो विकुषितः । ते पुत्तलिके दारुमयपादुकयोर्दृढं स्थापिते । ३ अश्वे = अश्विन्यौ ।
विद्धयोर्दारुपाद्वोः प्रवचनानीति यास्कः ( ३२४ । २ ) ।

३ सूर्यभार्या शरण्यूः विमनस्का सत्यश्वा भूत्वा प्राद्रवत् । तस्याः पादौ खुराकारौ । अश्विनीनक्षत्रे द्वे तयोः खुराकारः ।

४ उपादानं ( पाठान्तरं ) = प्रयोगः ।

६ 'द्रू'धातुर्धातुपाठे न वर्तते । 'द्रुण हिंसागतिकौटिल्येषु' ( धा० ६।५६ )। तस्य 'द्रुणति' न तु 'द्रुणाति' रूपम् ।

७ अन्यतरस्य = अन्यतरस्मात् ।

८ निरुक्तमूले 'तस्मात्' ( ३२४ । ४ ) इति पाठो न तु 'एतस्मात्' ।

पत्रं पङ्क्तिः

३२५ १० ‘ पादुका पादूः उपानत् ’ ( अमरः २ । १० । ३०–३१ ) ।

३२६ ५ ‘ उत मे प्रयियोः ’ इत्यस्या ऋचः सायणभाष्यं न वर्तते ।

८ येन धनेन प्रगम्यते संसारयात्रा निर्वाह्यते तत् । १३ तं ताश्च गा इत्यन्वयः ।

२५ मीहूळुषः ( ‘ मिह सेचने ’ धा० १ । १०१७ ) = सेक्तॄन् ।

३२७ २ ‘ आप्तत्वात् ’ इति ग. च. ज. पाठः साधीयान् । यस्मान्मरुत इन्द्रस्याप्ताः ।

५ पुनः पुनः वृष्ट्यादि कृत्वा ।

७ ‘ हेडृ अनादरे ’ ( धा० १ । २८५ ) । मरुत्प्रसादात् एनसि अस्माकम् आदरो न वर्तते ।

एनः ( एनसः ) लज्जामहे । मरुतोऽस्मानेनसो लज्जयन्ति ।

२०–२१ सोमो भूयस्त्वेन क्षीरादिकमाशिरमभिभवति । मिश्रणे सोमरसाधिक्येन क्षीरादि न ज्ञायते । सोमाशिरमिश्रणं तृतीयसवने क्रियते ।

२२ वचनवत्त्वेन = स्तुतियुक्तत्वाद्धेतोः । ‘ वञ्चनवत्त्वेन ’ इत्यपपाठः । ‘ पटुवचनेन ’ ठ. ड. पाठः सुगमः । परवञ्चनत्वेन ( ग. ज. पाठः ) = पटवः वञ्चनवत्वेन । परवञ्चनत्वेन ( ट. पुस्तके पाठान्तरं ) = परस्य वञ्चनवत्वेन । सोमः पातृवञ्चनं करोति ।

‘ सूत्रे इदमाहतं ब्राह्मणे इदमाहतमित्यादिप्रयोगदर्शनादाहन्तिर्वचनार्थः ’ ( निघ० भा० ४ । १ । २३ ॥ निरुक्तवृत्तिः पत्रम् ८ । २० ) ।

३२८ ९ भासाध्यूह्हः इति छ. त. द. पाठः । किं तु ‘ वक्षः- ’ शब्दो नपुंसकः ।

३२९ ८ अध्यूढं = उपरि स्थापितम् ।

९ आदित्येनाश्लिष्टा. उषा आदित्यस्य वक्ष एव दृश्यते ।

१७ नोधाः = नवनं + धा ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ३२९ | १९ | ' आविष्कृणोति ' इत्यशुद्धं रूपम् । ' कृञ् हिंसायां ' ( धा० ५ । ७ )। अत्र हिंसार्थो न वर्तते । ' डुकृञ् करणे ' ( धा० ८ । १० )। उखा इति च.पाठः छ पुस्तकस्थपाठसदृशः ( ३२८ । १२ )। |
| | २२ | कर्तव्यतया = अन्नं कर्तव्यं पाकसिद्धिः कर्तव्येति हेतुना । |
| | २४ | ' बोधयन्ती ' इति रूपेण वाक्यमपूर्णम् । ' बोधयति ' इति स्यात् । |
| | २५ | हितकर्तव्यार्थे ( घ. ट. पाठः ) हि तत्कर्तव्यार्थे ( ठ. ड. पाठः ) द्वावप्यपभ्रंशौ ' इति कर्तव्यतार्थे ' इत्यस्य । ' बुध् ' ( धा० ४ । ६६ ) आत्मनेभाषः । ' प्रतिबुध्यन्ति ' इत्यशुद्धम् । |
| ३३० | ९–१० | मक्षिकान्यान् कथं बोधयति । |
| | १५ | ' पृश्नियै दुग्धे प्रैयङ्गवं चरुं निर्वपेन्मरुद्भ्यो ग्रामकामः। प्रियवती याज्यानुवाक्ये भवतः ' ( तै० सं० २ । २ । १९ )। |
| | १६ | प्रियङ्गवो मरुतां प्रिया यस्माद् द्वावपि पृश्न्या जातौ ( तै० सं० २ । २ । ११ ) |
| | १७ | श्रियोऽर्थाय = श्रियं प्राप्तुम् । |
| | १८ | आत्मने = पुरोहितस्य ऋत्विजो वा स्वार्थाय । |
| | २० | मिमिक्षिरे । ' मिह सेचने ' ( धा० १ । १०१७ ) इत्यस्मात् । |
| | २१ | सु + खादयः । खादिः आभरणविशेषः । तानि आभरणानि मरुतामंसेषु हस्तेषु पादेषु चासन् । सुखादयः = खादियुक्ताः । |
| ३३१ | ५ | वाश्यते शब्द्यते उच्चार्यत इति वाशी कर्मणि कारके । |
| | १६ | आभिमुख्येन देवतामुद्दिश्याभिमुखं गच्छतीति आभिमुख्यगामि । ' अभिवोढृ आभिमुख्यगामि ' इति ग. ज. पाठः । अभिवोढृ सत् देवान् वोढुम् आनेतुम् अभिमुखं गच्छति । |
| | १८ | युक्तरूपः = योग्यः । |

पत्रं पङ्क्तिः

३३२

१ एतच्छस्त्रपठने दीर्घकालोऽवश्य इति भयात् ।

२ वाक्सङ्गः ( ग. ज. पाठः ) = वाक्प्रतिबन्धः । मम वाचं न किमपि प्रतिबध्नाति । 'वाक्सघग्न्यं गोरित्ति' इति च.-पाठो दुर्बोधः ।

३ 'उभयथापि तु' इत्यत्र 'तु' अनवश्यं यतः 'ऐन्द्री त्वेव शस्यते' इत्यत्र 'तु' वर्तते ।

४ अस्या ऋच ऐन्द्रत्वे न वादः । 'वाहः' इत्येकमेव पदं वाद-विषयः ।

७ 'उत्कृष्टमिति' इत्यत्र 'उत्कृष्टम्' इति वाक्यसमाप्तिः । 'इति' 'नवमाध्यायस्य' इत्यनेन संबन्द्धव्यम् ।

३३३

६ अयं मन्त्रस्तैत्तिरीयसंहितास्थ इति कृत्वा च. ट. पुस्तकयोः प्रान्तभागे लिख्यते ठ. ड. पुस्तकयोश्चान्तर्भाव्यते 'तैत्तिरीये अनाधृष्ट०' इति ।

९ तनूं शरीरं न पातयति न विनाशयतीति तनूनपा जाठरोऽग्निः । तत्प्रीत्यै गृहीतमाज्यं तानूनप्त्रम् । परस्परसखिभावाय तदाज्यमृत्विग्भिः संस्पृश्यते । 'तानूनप्त्रमुपयन्त्यृत्विजो यजमानश्च । युगपत्समवमृश्यानाधृष्टमसीति जपन्ति' ( मान० श्रौ० २ । २ । १ । ३–४ ) ।

१० समयः द्रोहं न कुर्म इति शपथः कृतस्तेनोपयन्त्रिता अवरुद्धाः ।

१३ 'अनभिशस्तेन्यम्' ( ६ ) इति मैत्रायणीयपाठः । 'अनभिशस्ति' इति पाठो दुर्गेण कुत उपलब्ध इति न ज्ञायते । च. ट. पुस्तकयोः 'अनभिशस्ते' इति शुद्धीक्रियते । 'अनभिशस्ति' इति 'अनभिशस्तेन्यम्' इत्यस्यार्थः स्यात् । हे घृत त्वम् अनभिशस्ति असि आत्मना । वा अथवा केनचित् अनभिशंसनीयमसि । 'आत्मना वा' इति व्यर्थम् । ग. ज. पुस्तकयोः 'अनभिशस्ति हे घृत' नास्ति ।

३३४

१ अनेके विकल्पा यस्याः सानेकविकल्पा । अनेकविकल्पा प्रकृतिर्यस्याः सा ।

पत्रं पङ्क्तिः

१३४ २–३ 'इण् गतौ' ( धा० २। ३५ )। तस्माद्व्युत्पाद्य। 'पूङ् प्राणिगर्भविमोचने' ( धा० २। २१ )। तस्माच्च व्युत्पाद्य।

४–५ अन्येषां शब्दानामनेकार्थत्वमनेकधातुजत्वम्। अयं त्वनेकार्थ एव।

७ संस्कारः प्रकृतिप्रत्ययादिः। स नैव ज्ञायत इति केचिद्ब्रुवते। ज्ञायत इति दुर्गः। द्वयोरर्थयोः को भेद इति न ज्ञायते यस्माद्द्वयोरपि न निश्चिता प्रकृतिः।

१२–१३ पुराणेन नवं धान्यमुत्पाद्यत इति पुराणेन नवस्य रक्षणं स्यात्। नवे च धान्ये पुराणं वर्तत इति नवेन पुराणस्य रक्षणम्।

१५ उपदयाशब्दः कोशेषु न विद्यते। 'दय दानगतिरक्षणहिंसादानेषु' ( धा० १। ४८२ )।

१९ 'राहूगणस्य' सायणभाष्ये न वर्तते।

१३५ २ अप्रतिस्खालितः = केनापि शत्रुणा स्खलनमद्ययावन्न प्रापितः।

४ 'अन्यत्र' 'अन्यत्' ( ५ ) वा व्यर्थम्।

५ यस्मिन्वाक्ये वसुशब्दो वर्तते तस्मिन्नेव वाक्ये श्रूयमाण इन्द्र ईशानः सन् हवींषि दाशुषे यजमानाय दानविभागाभ्यामन्यत्किं कुर्यात्। वसु दद्याद्विभजेद्वा।

१६ देवपणयः= देवैर्वणिग्व्यवहारं कुसीदवृत्तिं कुर्वाणा असुराः ( असीरियादेशजाः )। 'पणिर्वणिग्भवति' ( निरु० २। १७ )। १८ 'अशनिर्द्वयोः' ( अमर० १। १। ५० ) इत्यशनिशब्दस्य स्त्रीलिङ्गं पुंलिङ्गं वा।

१८ क. ख. घ. झ. ट. ठ. पुस्तकेषु सायणभाष्यस्थाः शब्दा गृह्यन्ते यथा पाठान्तरे 'अशनिर्वज्रः'।

२० प्रसहनं प्रसयनं ( ग. ज. पाठः ) वा कोशेषु न विद्यते। प्रसहनम्=आस्कन्दनम् अभियोगः। प्रसयनं=प्रबन्धनम्।

२१ छिन्नाः ( प्लुष्टा ईषत्प्लुष्टा वा ) भिन्नाः ( भस्मीभूताः ) अवरुग्णाः ( अर्धदग्धाः ) एवं यथासंख्यविशेषणानि।

पत्रं पङ्क्तिः

३३६ १० अद्भिः पूर्णाः ( ९ ) इति मेघाः पुरः ।

१५–१६ ' य इन्द्र एतदकरोत्स किं विदद्वसुत्वेनैकेनैव गुणेन युक्त आसीत् ' इति रचितं वाक्यं युक्तम् । अथवा । ' यः सः ' इति त्याज्यम् ।

२१ दुर्गप्राप्ते निरुक्तमूले ' मां वायसो दोषो दयमानो अबूबुधत् ' इत्येक एव पाद आसीत्तेन स ' मृग्योऽत्र शेषः ' इति ब्रवीति । अस्या ऋचो मूलं नाद्यापि लब्धम् । ' अहम् ' इति क. ख. छ. त. द. पाठो ( ३३२ । १५ ) न तु ' अयम् ' इति । मूलालाभे पाठनिश्चयोऽशक्यः ।

२४ ' डीङ् विहायसा गतौ ' ( धा० ४ । २९ ) । दयमानोड्डीयमानः ( घ. ट. पाठः ) = दयमानः + उड्डीयमानः । संधिः प्रामादिकः । निपातानामत्र न किमपि प्रयोजनम् । निपातप्रकरणे तत्पठनमावश्यकम् ।

३३७ १३ ' कतमत् । वहनम् । उद्दिश्य यत्कर्म ' इति वाक्यरचनावश्यका । ' वहनं ' पदमस्थाने पतितम् ।

१५ अर्थाय = तत्कृते ।

१६ ऋचि ' गातुं ' ( ८ ) न तु ' गमनं ' पदम् । ' किम् । गमनम् ' गमनशब्दस्य व्युत्पत्तिश्चानवश्या ।

१९ घ. ट. पुस्तकयोः ' °कारेणा उ गृह्यते ' इति लिख्यते । ठ. ड. पुस्तकयोस्तत् ' °कारेणा उत् गृह्यते ' इति शुद्धीक्रियते । पुराणपुस्तकेषु ' नु ' ' नु ' इत्येवं लिख्यते । सोऽज्ञानाल्लेखकैः ' उ ' इति गृहीतः । अज्ञानपरंपरया च स ' उत् ' इति कृतः । ' नामभविष्यन् ' ( ठ. ड. पाठः ३३८ । १ ) इत्यत्रापि तदेवाज्ञानम् । ' नाभविष्यन् ' इति मूलपाठः । ' मभ 'योः सादृश्यात् स ' नामविष्यन् ' ( घ. ट. पाठः ) इति लिखितः ' नामभविष्यन् ' इति च शुद्धीकृतः ।

३३८ २ ' इह ' ( ३३२ । १७ ) । तत्र = तयोरर्थयोः ।

३ नवाभिधायिनो नूचिदित्यस्य ।

पत्रं पङ्क्तिः

३३८ ७ व्यूढस्य षष्ठेऽहनि ' इत्याश्वलायनश्रौतसूत्रे ( आश्व० श्रौ० ८ । ८ ) । क. ख. च. पुस्तकेषु ' पृष्ठस्य षष्ठेऽहनि ' इति ।

१४ ' निर्जगाति ' इत्येतस्य स्थाने ' निर्जानाति ' इति ( मैत्रा० सं० १ । ८ । २ ) वर्तते ' अन्वग्नौ ' इत्यस्य स्थाने ' अत्यग्निम् ' इति च । अविद्वान् शयानां गां मृतां मन्यते वस्तुतस्तु साग्निं प्रविष्टा । तस्मात्पशूनामग्निर्निवासः ।

३३९ १८ अयतः ( पाठान्तरम् ) = अतः + यतः ।

३४० ६ ' न्यकुपरणं ' ( पाठान्तरम् ) अत्र ' अ ' न्यसदृशः । तेन ' अकु० ' ' न्यकु० ' इत्येवं लिखितम् ।

९ समाम्नायेषु ( पाठान्तरम् ) = समाम्नातपदेषु । निघण्टुकारेण किंकारणमेते पदे व्यत्यस्ते इति न ज्ञायते । ' दावने'शब्द ऋग्वेदे बहुकृत्वः प्रयुज्यते । तस्य स्वातन्त्र्येणार्थः कर्तव्य इति स प्रथममुपात्तः । ' अकूपारस्य दावने ' इति क्रमेऽस्यामेवर्चि ' दावने ' इत्यस्यार्थः कर्तव्य इति भवेत् । ' अकूपारस्य ' ' अकूपारः ' इति च सकृदेव प्रयुक्ते उपलभ्येते ।

१२–१३ अविवक्षितः अनुक्तः स्वार्थो यैस्ते निगमा वैदिकशब्दाः । पाठान्तरे अविवक्षितः अर्थो येषां ते । निगमानां वैदिकशब्दानां स्वार्थः कथं न विवक्षितः ।

१३ संपत्त्या = समापत्त्या काकतालीयन्यायेन आकस्मिकतया । ' संपत्या ' इति शब्दो नावश्यकः । निगमे = ऋचि ।

१४ ' यथापाते ' ( पाठान्तरम् ) प्रामादिकं ' यथोपात्ते ' शुद्धम् । ' यथोपानते ' ( पाठान्तरम् ) = यथोपागते ।

२४ कच्छः कूपेऽपि वर्तते । संपुटे कच्छशब्दः कोशेषु न दृश्यते । ' प्राणिवाच्यः कच्छपुटः ' ' पाणिकच्छपुटः ' वा कस्मात्कोशादुद्धृतमिति न ज्ञायते ।

३४१ ७ ' आदित्योऽप्यकूपारः ' इत्यस्योदाहरणम् ( ऋ० सं० १० । १०९ । १ ) । समुद्रकच्छार्थे अकूपारशब्दो न वैदिकः ।

पत्रं पाङ्क्तिः

३४१ १७ दुरवा: = दु:खेन रक्षणीया: ।

३४२ ११ आवक्षि = आवहसि ।

१३ सर्वेषु लिखितपुस्तकेषु ' आसीद्सि च । 'होतृत्वेऽग्निरि० ' एवं वर्तते । अयं विपरिणामोऽनवश्य: । ' सुतुकोऽग्निस्त्वं सुतुकेभिरश्वै: ' इत्येतत्संबोधनं विनैव सार्थम् ।

२१ अश्वद्वारेण चाग्नि: श्रूयत इति वाक्यशेष: । प्रजाप्रशंसाया-मश्वप्रशंसा । अश्वप्रशंसायां चाग्निप्रशंसा । इयं न साक्षा-त्प्रशंसा ।

अथवा स एवाग्नि: साक्षात्स्तूयते सुतुक: सुप्रजा इति । ' अश्वद्वारेण चाग्नि: स्तूयते ' इत्यन्वयोऽपि साधु: ।

३४३ ९ ट. पुस्तकप्रान्ते लिखित: ' प्रैष'शब्द: ठ. ड. पुस्त-कयोरन्तर्भाव्यते ।

१२ ' कषिता: ' ( पाठान्तरम् ) । ' कष हिंसायाम् ' (धा० १ । ६ । ८६ ) ।

१७ द्वारोद्घाटने कपाटानि संचार्यन्ते न तु संव्रियन्ते । 'संवरणै:=' पाठ: प्रामादिक: ।

३४५ १० ' विश्वत: ' इत्यस्य ' सर्वत: सर्वदैव ' इति द्वावर्थौ दुर्गेण कृतौ ।

११ ' कैश्चिदपि दस्युभि: अनुपहता: ' इत्यन्वय: । अथवा । 'कैश्चिदपि दस्युभि: अपरीतास: ' इत्यन्वय: स्यात् । अयं संदेह: ' अविगुणा: ' इत्यनेन पदेनोत्पादित: । अनुपहता: कैश्चिदपि दस्युभि: । अविगुणा: इत्यर्थ: । एवं वाक्यरचना साधीयसी ।

१६ स्यु:स्थाने ' असन् ' इति पाठो न कस्मिंश्चिदपि पुस्तके लभ्यते । दुर्गेण केषुचित्पुस्तकेष्वयं पाठो दृष्टोऽत एव ' असन्नित्येष प्रमादपाठ: ' इति स वदति ।

२० ' रक्षणे हि सति ' इत्यत्र ' सति ' पदं व्यर्थम् ।

३४६ १ इतरथा= च्यवानमिति रूपेण ।

८ 'च्यावयितारम् = देवान्प्रति प्राप. ( च. वास ) यितारम् ' ( च. ट. ) । इदं ठ. ड. पुस्तकयोरन्तर्भाव्यते ।

पत्रं पङ्क्तिः

३४६ ९ 'पुराणं' [ ३४४ । ९ ] वृत्तौ न विव्रियते ।

१२ 'तुग्रपुत्रं भुज्युं समुद्रस्योपरीति वा' इति ढ. ड. पाठः ट. पुस्तके प्रान्तभागे लिखितात्सायणभाष्यात् ।

१७–१८ सुकन्यां च्यवनभार्यां दृष्ट्वा तद्रूपेणाश्विनौ कामाविष्टौ बभूवतुर्जराजर्जरितं च पतिं त्यक्तुं तामुपदिदिशतुः । पतिपरायणायास्तस्या निश्चयं ज्ञात्वा एनं युवानं रूपसंपन्नं करिष्यावस्ततस्त्रिष्वस्मासु यस्तुभ्यं रोचिष्यते तं वृणीष्वेति तामूचतुः । सभर्तृकया तया तद्वचस्यङ्गीकृते त्रयोऽप्येकं जलाशयं प्रविविशुर्बहिरागताश्च समानरूपा ददृशिरे । तथापि सा स्वपतिमेव वव्रे ( महा० वनप० १२४ ) ।

३४७ १२ 'लोकाद्दूढेन' ह' इति च. पुस्तके शुद्धीकरणम् । कदाचित् 'लोकाद्दूढेन' हृते' इति शुद्धीकरणं स्यात् ।

१३ स्वःसाम् = स्वः स्वर्गं सनोतीति स्वःसा आदित्यस्तम् ।

१६ पौर्णमास्स्याग्नेयस्य हविषो याज्यैषा ( मैत्रा० सं० ४ । १० । १ ) ।

२२ 'स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् । मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति' (वासिष्ठधर्मशास्त्रम् २८।४)।

३४८ ३ रजःशया रजसि ( रजते ) शेते इति । अयःशया = अयसि शेते इति । हरःशया हरसि हिरण्ये शेते इति । 'अयाशया रजाशया हराशया' इति रूपाणि ( तैत्ति० सं० १ । २ । ११ । कठक सं० २ । ८ । मैत्रा० सं० १ । २ । ७ ) । 'हरःशया' इति रूपं कस्यां संहितायां वर्तत इति न ज्ञायते ।

'हरःशया = हरिशयाना इति माध्यंदिनाः । हरितसुवर्णशोभिनीत्यर्थः' ( च. ) । 'अयाशया रजःशया हरिशया' ( वाज० सं० १ । ५ । ८ ) । 'हरिशया = हरितसुवर्णशायिनी' ( तस्यैव महीधरभाष्यम् ) ।

'नमस्ते हरसे शोचिषे' ( का० सं० २१ । ७ । मैत्रा० सं० २ । १० । १ ) । 'सूर्यस्य हरसे त्वा' ( मैत्रा० सं० ४ । ९ । ३ ) ।

पत्रं पङ्क्तिः

३४८ ६ ' लोका हरा उच्यन्ते ' इति छ. त. द. पाठः ( ३४४ । १४ ) ग. ज. पाठश्च ।

१७–१८ वेदप्रामाणिकाः = प्रमाणम् अधीते वेद वा असौ प्रामाणिकः । वेदे प्रामाणिकाः वेदप्रामाणिकाः । केन सूत्रेण प्रामाणिकरूपसिद्धिः ।

३४९ ७ 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्विति कोशात्' (ट.)। अमरकोशोऽयम् ( ३ । ३ । ९३ ) ।

९–१० ' ये विद्वांसः स्तुतिभिरग्नेर्याथात्म्यं पश्यन्तः ' इत्यन्वयः ।

१३ ' दधिरे ' इति ट. पुस्तके प्रान्तलिखितं ठ. ड. पुस्तकयोरन्तर्भाव्यते ' दधिरे धारयन्ति ' इति ।

१७ पश्यति अर्थो यस्य स पश्यत्यर्थस्तस्य भावः पश्यत्यर्थता। सा उपपद्यते । पाठान्तरे ' अपि'शब्दस्य न किमपि स्वारस्यम् ।

३५० ७–८ ' अन्यत् ' ' अन्यत्र ' वा व्यर्थम् ।

२०. यदा उष्णे पयसि दधि मिश्रीक्रियते तदा तद्रव्यं सांनाय्यं भवति ।

३५१ ३ अपि सः = सोऽपि । ७ यदेतत् आज्यस्य तत्पिबतम् । ' यदेतत् ' इत्यस्य च विवरणं ' स्वं भागम् ' । ' किंचिदाज्यस्य ' इति शब्दौ यजुर्मन्त्रे प्रयुज्येते । उपस्तरणाभिघारणसंबद्धम् = आज्यं मन्त्रेण उपस्तीर्यते अभिघार्यते च ।

८–९ उस्रियायाः पयसा निष्पन्नस्येति दुर्गवृत्तिस्थाः शब्दाः । ऋचि तु ' पयस उस्रियायाः ' ( ३९० । १३ ) इत्येव । उस्रिया गौः । तस्याः पयसो निष्पन्नम् आज्यं पयस्या च । एतद् द्वयमृचि न श्रूयते किंतु प्रतीयते । ' श्रूयमाणे ' ( ९ ) इति सप्तमी न प्रथमाया द्विवचनम् ।

१५. ' उस्राविणः ' इति निरुक्तमूलपाठः ग. च. ज. पाठश्च । किं त्वयं दुर्बोधः। ' उस्राविणः ' इति सुबोधः। ' उत्स्राविणोऽस्यां भोगा ऊर्ध्वं स्रवन्ति गच्छन्ति क्षीरदधिनवनीतक्रमेणेति स्कन्दस्वामी ' ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ३५१ | १८–१९ | दुर्गस्वीकृतनिरुक्तमूले त्वामिन्द्रेति सर्वा ऋङ् न विद्यते । यतोऽसौ ' गोभिः क्राणा अनूषतेति निगमः । गोभिः कुर्वाणा अस्तोषतेति निर्वचनम् । त्वामिन्द्रेति शेषः ' इति वदति । |
| ३५२ | ३ | ' गोभिरिन्द्रस्याभिमुख्यकरणात् ' इत्यन्वयः । स्तुतिभिरिन्द्रः सोमाभिमुखीक्रियते । |
| ३५३ | ५ | अनड्वान् धुरि युज्यते धुरोऽधस्ताच्च सोमः साद्यते । एवं प्रदेशः सामान्यः साधारणोऽस्यामुपमायाम् । |
| | ८ | सोमांशवः = सोमपर्णभागाः । |
| | १३ | ' यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु । कोशात् ' ( ट. ठ. ड. )। अमरकोशोऽयम् ३ । ३ । १७४ । |
| | १९ | उन्नीयमानसूक्ते = चमसेषून्नीयमाने सोमे यत्सूक्तं पठ्यते तस्मिन् । |
| ३५४ | ४ | ' शिश्नदेवाः = शिश्नोदरपरायणाः ' ( ट. ठ. )। |
| | १२–१३ | त्रयः प्रतिनिषेधा अत्र । त्रयः पुरुषा अत्र प्रतिनिषिध्यन्ते । ' एतेषाम् ' इति पदं व्यर्थम् । ' प्रतिनिषिद्धेष्वेतेषु ' इति पाठः समीचीनः । |
| | १३ | अयंवृत्तस्य मनुष्यस्य यज्ञाभिगमनं विषयो यस्य । |
| | १५ | विषुणशब्दो विषमस्य वाचक इत्यध्याहार्यम् । |
| | १७ | अर्थस्य सतत्त्वं तत्त्वं तात्त्विकस्वरूपम् । |
| | १९ | ' अपिगुः ' इत्यत्र गाङ् धातुर्न तु गमिः । |
| | २२ | अन्यतमस्मिन्नर्थे । अन्यतमे इति शुद्धं रूपं न तु ' अन्यतमस्मिन् ' । अस्मिन् ( १९ ) खण्डे छ. त. द. पाठा दुर्गसंमता यतस्तेनेतरेषु पुस्तकेषु विद्यमानान्यधिकानि वाक्यानि न विव्रियन्ते । |
| ३५५ | १४ | कलियुगस्य अन्ते मध्ये । |
| ३५६ | ७ | अधस्तात् = निरुक्तगताध्यायेषु । ' व्याख्यातम् ' इत्यस्य द्वितीयोऽर्थः क्लिष्टो व्यर्थश्च । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ३५६ | २८ | 'अस्य वामस्य' इति प्रथमा ऋक् । 'मतौ छः सूक्तसाम्नोः' (पा० ५ । २ । ५९ ) इत्यनेन 'अस्य वाम' इति अस्मिन्नस्तीति अस्यवामीयं सूक्तम् । |
| ३५७ | १–२ | उपरि स्थितो लोको द्यौरित्याख्यायते । |
| | ३–४ | विवाहे कन्यायाः पितात्मानं द्यौरिति संपादयति । तदनुरोधेन मन्त्रदृग् द्यौर्मे पितेति ब्रवीति । ग. च. ज. पाठे 'पितरमभिसंपद्यमामम्' इति साधु भवेत् । |
| | ४ | 'पिता वा पालयिता वा' ( ३९६ । १४ । ) 'महती' ( १५ ) 'बन्धुः संबन्धनान्नाभिः संनहनान्नाभ्या० ज्ञातिः संज्ञानात्' ( १५–१७ ) इदं न व्याख्यायते । 'उत्तान उत्ततान ऊर्ध्वतानो वा' ( १८ ) इति च । दुर्गस्वीकृतपाठो भिन्न एव स्यात् । 'द्यौर्मे पिता जनिता जनयिता नाभिरत्र नाभिर्नहनाद्बन्धुर्मे माता पृथिवी मही बन्धुर्बन्धनात् । उत्तानयोश्चम्वोर्योनिरन्तः । उत्तान ऊर्ध्वतानस्तत्र पिता दुहितुर्गर्भं दधाति पर्जन्यः पृथिव्या दुहिता दूरे निहिता दोग्धेर्वा' इति दुर्गस्वीकृतमूलपाठः स्यात् । |
| | ७–८ | संतानोत्पत्तिरेवानुग्रहः । तदर्थं शुक्रोत्पत्तिः । उदकं शुक्रं संतानमीदृशः क्रमः । उदकदाने प्रथमोऽनुग्रहः । संतानोत्पत्तिर्द्वितीयः । |
| | ९ | मातुरुदरेऽङ्गानि संपद्यन्त इति संबन्धान्माता बन्धुः । |
| | १० | 'द्यौरहं पृथिवी त्वम्' इत्यादिर्वैवाहिके कर्मणि विनियुज्यमानो मन्त्रः । 'अमोऽहमस्मि सा त्वं सा त्वमस्यमोऽहं द्यौरहं पृथिवी त्वं सामाहमृक्त्वं ताविह विवहावहै प्रजां प्रजनयावहै संप्रियौ रोचिष्णू सुमनस्यमानौ जीवेव शरदः शतम्' ( आश्व० गृ० १ । ७ । ६ ) । |
| | २० | उत्तानयोः = उद्गतः तानः प्राणः ययोः । |
| | २५ | उपकारत्वे = उपकारे । २५ अयं पर्जन्यः पिता माता च दुहितुः । |
| ३५८ | ४ | दुहिता दुर्हिता दूरे हिता दोग्धेर्वा ( निरु० ३ । ४ ) । |

पत्रं पङ्क्तिः

३५८ ७ ऋचः पूर्वार्धे मातृशब्द उपात्तस्तत्संबन्धात् पिता पितैव । पितृशब्दस्य पाता वा पालयिता वेत्यर्थो न करणीयः ।

८ पितृभूतो मातृभूतश्चायं पर्जन्यः । पिता माता चेत्यादि दुर्बोधम् । 'मन्येते' इति च.पाठः । पिता माता चायं पर्जन्यः । एतस्य पर्जन्यस्य मानवौ मातापितरौ आशासनम् आज्ञां मन्येते । तस्याज्ञां मन्येत पालयेत । आशासनशब्दः कोशेषु न विद्यते । अथवा । 'अयं पर्जन्यः पिता माता च । एतत्पर्जन्यस्य पितृत्वं मातृत्वं च ईश्वराज्ञेति मन्येत' । सर्वेषु पुस्तकेषु 'पिता माता चायमेतदाशासनं मन्येत' ( च. मन्येते° त ) इति लिख्यते ।

९ 'रपो रिप्रम्' ( ३५६ । २०—२१ ) एतौ शब्दौ निघण्टौ न दीयेते ।

१० एवम्= शंयोरिति पञ्चम्यन्तरूपे ।

८–१४ इदं घ.पुस्तके ट.सदृशपुस्तकानुरोधेन शुद्धीकृतम् । तेन कारणेन तन्मूलपाठः क्वचिदुरीक्ष्यः । मूलपाठोऽपि दुर्बोधोऽशुद्धत्वाद्गलितशब्दत्वाच्च । '°मन्येते पञ्चम्यन्तं वा षष्ठ्यन्तं नां वा सन् न चैवं यजमानेना (?) र्थ्यं नाप्येतस्माद् बृहस्पतिपुत्रकस्य शंयोर्ममैते पितरः किंचिदर्थं विदध्युरिति किं कारणम् । स्वत एव हि ते विधातुं समर्थाः षष्ठ्यर्थेमर्थां तस्य किंचिदेभिः पितृभिर्विधीयेतेति' ( घ.मूलपाठः ) । 'अथा नः शंयोररपो दधात' इत्यत्र शंयोरिति पञ्चम्यन्ते षष्ठ्यन्ते वा सति एतदाशासनं मन्येत । बृहस्पतिपुत्राच्छंयोर्यजमानेन नःपदसूचितेन किंचिदरपः कल्याणमाशास्यते तस्य शंयोर्वा किंचित्कल्याणमिष्यत इत्यर्थं कश्चिन्मन्येत । किंतु पितृषु समर्थेषु सत्सु बृहस्पतिपुत्रकात् ( अल्पे कन् ) यजमानेन न किमप्यर्थ्यते । एवं पञ्चम्यर्थोऽकिंचित्करः । षष्ठ्यन्ते शंयुरर्थी भवेत् । तस्यैभिः पितृभिः कीदृशमरपो विधीयेत । न किमपि यस्मात्सोऽपि समर्थ एव । वृत्तेरयमर्थः । ग. ज. पाठोऽतीवाशुद्धः । ग. च. ज. मूलपाठ ईदृशः स्यात् । ' शंयोरित्येतदाशासनं

पत्रं पङ्क्तिः

३५८ मन्येत पञ्चम्यन्तं षष्ठ्यन्तं वा सत् । न चैवं यजमानेनार्थ्ये तस्माद् बृहस्पतिपुत्रकाच्छंयोर्ममैते पितरः किंचिदर्थ्यं विदध्युरिति । किं कारणम् । स्वत एव हि ते विधातुं समर्थाः । षष्ठ्यर्थे नाप्ययमर्थो । तस्य किं स्विदेभिः पितृभिर्विधीयेतेति '। ग. ज. पाठे ' ताप्यमर्थो ' = नाप्ययमर्थो इति स्यात् ।

३५९ १४ प्रथमान्तत्वेन न निरुच्यते । तथापि = तेन रूपेण । अपिशब्दो व्यर्थः ।

२४ 'यदानुजानाति शंयोरनुब्रूहीति तच्छंयुवाकमन्वाह; तच्छंयोरावृणीमह इत्येतदनुवाकस्य ' ( तैत्ति० सं० २ । ६ । १० सायणभाष्ये बौधा० श्रौ० ) ।

३६० १ ' तत् शंयोः वृणीमहे ' इत्यत्र शंयोरिति यदा षष्ठ्यन्तं पदं तदार्थः = शंयोरात्मानमभिसंपाद्य । शंयुमनुनीय । यदा पञ्चम्यन्तं तदार्थः = शंयोः सकाशात् । केचिदित्यनेनास्वारस्यं दर्शयति । के एते केचिदिति न ज्ञायते ।

७ भे = भयम् । षजम् = सादयितृ नाशयितृ ।

२० अयं द्वाविंशतितमः खण्डः सर्वेषामल्पतमः ।

३६१ ६ सायणभाष्ये ' राहुगणस्य ' न विद्यते

७ सर्वस्तोमेष्वेव = ' अदितिर्द्यौरदितिरन्तरिक्षमिति परिदध्यात्सर्वत्र वैश्वदेवे ' ( आश्व० श्रौ० ५ । १८ )। अत्र ' एव '-शब्दस्य प्रयोजनं न ज्ञायते ।

१२-१३ पुत्रः पुरु त्रायते निपरणाद्वा ( निरु० २ । ११ )

१९ ' एनानि ' ( ३ ) इत्यस्य स्थाने दुर्गपाठः ' एतानि ' इति भाति ।

३६३ १३ मूले ' वस्त्रमाथिनम् ' ( ३६२ । २३ )। अत्र सर्वत्र ' वस्त्रमथिनम् ' ।

१६ ' नीचैरयमानं नीचैर्निचितं भवत्युच्चैरुच्चितम् ' ( ३६२ । २६ ) न व्याख्यायते ।

३६४ ९ ' जरते ' कथमनवगतमैकपदिके च किमर्थं पठ्यते ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ३६४ | १३ | अनुक्रमण्यां वत्सप्रिर्न तु वत्सप्रीः । वाज० सं० भाष्ये वत्सप्रीरिति ( वा० सं० १२ । १८ ) ' दिवस्परीत्येकादशभिर्द्वादशभिस्त्रयोदशभिर्वा वात्सप्रेणोपतिष्ठते ' ( तै० सं० ४ । २ । २ । १ सायणभाष्ये आप० श्रौ० ) । आसन्द्यां स्थापितस्योख्याग्नेरुपस्थानम् । |
| ३६५ | १ | निघण्टौ ( ३ । १४ ) मन्दते न तु मन्दाति । |
| | ११ | ऋजि = ऋजुः । श्व = श्वति । |
| ३६६ | २० | अथर्वशिरोभिधानानामिष्टकानामुपधाने दश मन्त्रास्तेष्वियं तृतीया ( तै० ब्रा० १ । ५ । ८ ) । |
| ३६७ | १९ | दशस्यन् = प्रयच्छन् ( च. ट. ) एतत् ठ. ड. पुस्तकयोरन्तर्भाव्यते । दशति दशस्यति वा निघण्टौ न वर्तते । धातुपाठे दशतिर्दंशने न तु दाने । |
| | २० | माध्यमिकाः = अन्तरिक्षे वर्तमानाः । |
| ३६८ | १ | यस्माद्दासैः कर्मकैर्दस्यन्ते तस्मात् दंसयः = कर्माणि । ' दस्यन्ते ' इत्यत्र ' दश्यते ' इति ग. ज. पाठो ' दश्यन्ते ' इति च. पाठो दुर्बोधः । सर्वेषु पुस्तकेषु 'कर्माण्युक्तानि' इत्यस्यानन्तरं विरामो वर्तते । |
| | २ | दासशब्द ऋक्शाखायां बहुकृत्वः प्रयुज्यत इति निगमो न पठितः । |
| | १७–१८ | हन्तेर्निरूढोपधाद्विपरीतात् = हनधातोः उपधा अकारः । निरूढो निष्कृष्ट उपधा यस्य स निरूढोपधः । स विपरीतः कर्तव्यो यथा न् ह् । ततः अकारः आदौ निधेयः । तदा अ + न् + ह् = अंह् इति भवति । नामप्रत्ययेन सह अंहतिरित्यादि । दुर्गमते ' अन् ' इत्युपधा । तस्या उपधाया अकारं निष्कृष्य । किंतु ' अलोऽन्त्यात्पूर्व उपधा ' ( पा० १ । १ । ६५ ) इत्यनेन सूत्रेण अकार एवोपधासंज्ञा । ' हन्तिः ' धातुश्चेत् तकार एवोपधा स्यात् । |
| | १७ | ' निरूढोपधात् = विपरीतात् ' [ घ. ट. ] । एतद्विवरणपदं ठ. ड. पुस्तकयोरन्तर्भाव्यते । |

पत्रं पङ्क्तिः

३६८ २३ सायणभाष्ये ' मैत्रावरुणस्य ' न विद्यते ।

३६९ १ क. ख. व्यतिरिक्तपुस्तकेषु ' उस्त्राविणम् ' इत्येव लिख्यते न तु ' उत्स्राविणम् '

२ ' आर्जवेन दातैव केवलमयम् ' इत्यन्वयः । अयमतीव ऋजुर्न प्रत्युपकारमपेक्षते ।

८ ' यजते ' इत्यस्य स्थाने ग. च. ज. पाठः ' यक्ष्यते ' । अत्र लृटः प्रयोजनं न दृश्यते ।

११ चातयतिर्नाशनार्थे यास्केनावस्थाप्यते निरुक्ते ६ । ३० ।

१७ शम्या गदया समानाकारो व्यामार्धपरिमितः काष्ठविशेषः । व्यैताम् = वियुते दूरे परस्परतोऽभवताम् । ' द्यावापृथिवी सहास्ताम् । ते शम्यामात्रमेकमहव्यैताँ शम्यामात्रमेकमहः ' । ( तै० ब्रा० ३ । २ । ६ ) । मैत्रा० संहितायां शम्यामात्रं द्विवारम् । सर्वेषु पुस्तकेषु ' व्यैताम् ' इत्यस्य स्थाने ' न्यैताम् ' । किं तु तत्प्रामादिकम् ।

३७० १ प्रतिद्वन्द्वी अथवा प्रतिद्वन्द्वः = शत्रुः ।

१० तथा = द्यावापृथिवीविशेषणत्वेन ।

१८ पारणीये = अन्तं गन्तुं योग्ये ।

२२-२३ गिर्वणः = गीर्भिर्वन्यते गिरो वनतीति वा । ' वन संभक्तौ ' ( धा० १ । ४६४ ) ।

२४ क एते व्याचक्षाणाः ।

३७१ ६ ठ. ड. पुस्तकयोर्यद्येति ऋक्शाखीया ऋक्पठ्यते । किं तु तस्यां शाखायाम् 'ऋधगया ऋधगुता' इत्यस्य स्थाने ' ध्रुवमया ध्रुवमुता ' इति पाठो वर्तते । ' ऋधगयाडृधगुताशमिष्ट विद्वा० ' ( मैत्रा० सं० १ । ३ । ३८ ॥ काठकसं० ४ । १२ ) ' ऋधगयाडृधगुताशमिष्ठाः प्रजानन्यज्ञमुपयाहि विद्वान् ' ( तैत्ति० सं० १ । ४ । ४४ ) । ' ऋधगया ऋधगुताशमिष्ट विद्वान्प्रजानन्नुपयाहि साधु ' ( कपि० सं० ३ । १० ) । ' ऋधगया ऋधगुता० विद्वान्स्वाहा ' ( वाज० सं० ८ । २० ) । क. ख. पुस्तकयोः ' विद्वान्स्वाहा ' इति पाठो वाजसनेयिसंहितातो गृहीतः ।

पत्रं पङ्क्तिः

३७१ ९ कल्पः ' जुह्वां नवगृहीतं गृहीत्वा धाता रातिरित्यन्तर्वेद्यूर्ध्वस्तिष्ठन्संततं समशो नव समिष्टयजूंषि जुहोति '। धाता रातिरित्यादयो नव मन्त्राः । सोमयागे समिष्टयजुःसंज्ञा नवाहुतयः । तासां ब्राह्मणम् ( तै० सं० ६ । ६ । २ )।

१० तत्र = मैत्रायणीब्राह्मणे ।

११ ' यज्ञस्य वा एता आणी एतौ वै विश्वामित्रो यज्ञस्याणी अपश्यत् ' ( मै० सं० ३ । ८ । ४ ) । अस्योद्धृतवाक्यस्य प्रयोजनं न दृश्यते । अर्थोऽपि ' आणी 'शब्दस्य न ज्ञायते । वृत्तौ ' अरणी ' शब्दो न तु ' आणी ' । ' अक्षाग्रकीलके तु द्वयोरणिः ' ( अमरः २ । ८ । ५६ )।

१०-११ ' विश्वामित्रस्यौ यज्ञस्या अरणी ' ईदृशः च. पुस्तके पाठ आसीदिति भाति ! 'स्यौ यज्ञ' 'अरणी' इत्यस्य 'अ' चैतान्यक्षराणि विसृष्टानि । तेन ' विश्वामित्रस्यारणी ' इति शुद्धीकृतः पाठः । च.पुस्तकस्थमूलपाठो दुर्वाच्यः ।

१४ पुरोडाशस्येतरस्य स्थूलहविषो वा हवनार्थं यो भागोऽवद्यते सोऽवदानसंज्ञः ।

१५ अग्निर्बहु कुर्यात् ।

१९ अयाः = यजेर्लङि रूपम् ।

३७२ ३-४ ' उपयाहि सोमम् ' इत्यृक्शाखायां पाठः ।

९ तदेतदुपपद्यत इति न वाच्यं यतः पूर्वात्वर्थः साधीयानिति दुर्गो ब्रवीति ।

१७ भाष्यमपि ' ऋध्नुवन्नयाक्षीर्ऋध्नुवन्नशमिष्ठाः ' ( ३६६ १० ) इति। ' ऋधगयाः ' इत्यत्र ' ऋधक् = पृथक्कुर्वन् ' इत्यर्थो न कृतः ।

३७३ २ तीव्रः अर्थो यस्य तत् । अल्पीयान् अर्थो यस्य तत् । ' द्विवचनविभज्योपपदे तरबीयसुनौ ' ( पा० ५ । ३ । ५७ ) इत्यनेन ' तीव्रार्थतरम् ' ' अल्पीयोऽर्थतरम् ' ।

१६ अजनाय गमनायाश्वा यस्य सः अजनाश्वः । पुनरुक्तेन पदेन भिन्नार्थेन भवितव्यमित्यस्मान्नियमात्प्रथमस्य ' अजाश्व '- पदस्य ' गमनाश्व ' इत्यर्थो द्वितीयस्य ' छागाश्व ' इति ।

पत्रं पङ्क्तिः

३७४ १ 'साति'शब्दः प्रथमः मुख्यः ( ३७२ । २२ ) । प्रधानशब्दः इत्यर्थः । तस्य 'अस्याः' इत्यनेनादेशः । तत्तीव्रार्थेतरं पदम् ।

२ 'अनुदात्तं पदमेकवर्जम्' ( पा० ६ । १ । १५८ ) इत्यनेन 'अस्याः' इत्यत्र 'अ' अनुदात्तः 'स्याः' उदात्तः ।

८ 'चारितव्रतः सूर्याविदे वधूवस्त्रं दद्यात्' ( आश्व० गृ० १ । ८ । १३ ) ।

'सूर्येणोत्तम्भिता' ( ऋ० सं० १० । ८५ ) इदं सूक्तं मधुपर्कस्यानन्तरं मङ्गलाष्टके पठ्यमाने पठ्यते ( विवाहप्रयोगे ) ।

११ विवाहसंस्कारोऽग्निसाक्षिकः ।

१३ ऋचि 'जीवाति' ( ६ ) न तु 'जीवातु' ।

१६ लक्षणार्था = भार्या भर्तारं लक्षयति भर्त्रर्थं जीवति । एष एव तस्या जीवितस्यार्थः ।

१९ विशीर्यंछिद्यन्ते ( ग. ज. पाठ ) = विशीर्यन्ते + विच्छिद्यन्ते ।

अस्मिन् ( २५ ) खण्डे 'सममंसत' ( ३६५ । २४ ) 'स्वम्' ( २५ ) 'सत्' ( पाठभेदे ) 'अपिहितम्' 'अमुत्र' (२५) 'गातुं कृणवन्नुषसो जनायेत्यपि निगमो भवति' ( ३६६ । १ ) 'पीयतिर्हिंसाकर्मा' ( ६ ) ( छ. त. पीयुति° ) 'समानं संमानमात्रं भवति मात्रा मानाद्दूरं व्याख्यातमन्तोऽततेः' (७–८) 'रातिरभ्यस्तोऽजाश्वाति पूषणमाह' ( १४ ) एतानि न व्याख्यायन्ते ।

३७५ ६ अस्यवामीयं प्रसिद्धं सूक्तमिति 'एव'शब्दस्यार्थः ।

७ तृतीयमेव तार्तीयम् । तार्तीयसवनीयं ( च. पाठः ) = तार्तीयसवनस्येदं ( शस्त्रम् ) ।

१७ सहः = बलम् । सहस्विणः = बलवतः ।

२३ 'पातारम्' ( ३ ) इति न व्याख्यायते ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ३७५ | २५ | द्विपञ्चशदृक्षु सूर्यः पञ्चानामेवर्चां देव॥। तेन सूक्ते सूर्योऽधिक्रियते प्रधानं वेति कथमुच्यते। अस्मिन्सूक्ते बहवो देवता बहवो विषयाश्च। |
| ३७६ | ६ | अस्य वामस्य मध्यमो भ्राता वायुः। अस्य च तृतीयो भ्राताग्निः। एव प्रकृतानामनुक्रमो न विरुध्यते। |
| | ८ | इतरत् = 'घृतपृष्ठो अस्य' इत्यत्र 'अस्य' पदम्। अन्यत् = अनुदात्तम्। ठ. ड. पुस्तके वर्जयित्वेतरेषु 'अन्यत्' इत्यस्यानन्तरं विरामो न वर्तते। तेन 'अन्तोदात्तं पदमितरत् अन्यत् तृतीयो' इत्यन्वयः स्यात्। इतरत् = भिन्नम्। |
| | १० | पूर्वेण 'अस्य'शब्देन समानरूपम्। द्वावपि 'अस्य'शब्दावेकरूपौ। |
| | १०–११ | यस्मात्स्वरकृतो विशेषस्तस्मादर्थकृतोऽपि विशेषोऽवश्यः। |
| | ११–१२ | स च विशेषोऽप्रधानार्थाभिधायिता। 'अप्रधानार्थाभिधायिना' इति पाठान्तरम्। तस्यार्थः = यदा द्वितीयम् 'अस्य' पदमप्रधानार्थाभिधायि भवति तदैव स विशेषः प्रतीयते। |
| | १५ | 'उदात्तं प्रथमादेशे' इत्याद्युपपन्नं भवति यस्मादस्मिन्सूत्रे प्रथमादेशेत्यादि। |
| | १७ | इदं द्वितीयं निरूपणं साधीयः। |
| | १८ | 'तीव्रार्थतरमुदात्तम्' इत्यनेन लक्षणेन प्रधानार्थतरम्। |
| | २० | अस्य पदस्य = 'अस्य' इति पदस्य। अन्यस्य (पाठान्तरम्) = प्रारम्भे वर्तमानादन्यस्य। ईदृशान्यपदस्य अन्वादेशः कथं स्यात्। यत्प्राक् आदिष्टं तस्यैवान्वादेशो न कस्यापि पदस्य। |
| | २२ | 'अल्पीयोऽर्थतरमनुदात्तम्' इत्यनुदात्तत्वेन लक्षणेन। |
| ३७७ | ३ | मैत्रा० सं० १।६।१२ इत्यत्र 'मृतमितरमण्डमवापद्यत' न तु 'मृतपितरम्'। अदितिः पुत्रकामा हविरन्नभक्षणादण्डमवापेदे प्रासवती। तदण्डं मृतमजायत। |
| | ११ | 'वदन्ति' इत्यस्य 'मन्यन्ते' इत्यर्थः क्रियते। |

पत्रं पङ्क्तिः

**३७८**

९ ' पूर्वोऽर्धर्चे आदित्यप्रधान उत्तरः संवत्सरप्रधानः ' इति ट. पुस्तके प्रान्ते विवरणत्वेन लिखितं ठ. ड. पुस्तकयोरन्तर्भाव्यते ।

१६ अस्मिन्सूक्ते सप्तशब्दो बहुकृत्वो युज्यते तेन सूर्यस्तुतिः सप्तसंख्यायुक्ता । सप्तशब्दयुक्तेत्यर्थः । पाठान्तरे स्तुतीनां सप्तसंख्या । किंतु सूर्यस्तुतयः सप्ताधिकाः ।

१९ घ. ट. ठ. ड. पुस्तकेषु ' प्रस्थापयितुम् ' इति लिख्यते । शब्दनाम=शब्दरूपं नाम । केचिच्छब्दा नामानीत्याख्यायन्ते ।

१९–२० वाक्ये आख्यातं प्रधानमितरत्सर्वं गौणम् । एवं कृत्वा नामान्यपि स्वार्थद्योतने क्रियार्थद्योतने वा आभिमुख्येन विशेषतो गुणीभूय संनमन्ति । गुणीभवन्तीत्यर्थः ।

२४ ' क्रामण ' ( च. पाठः ) शब्दः कोशेषु न वर्तते । ' अमरणधर्माणम् ' इति ग. घ. ज. पाठो नैकस्मिन्नपि निरुक्तमूलपुस्तके उपलभ्यते । जरणं जीर्णभवनं धर्मो यस्य स जरणधर्मा । न जरणधर्मा अजरणधर्मा । चक्रं नपुंसकम् । अजरणधर्माणम् पुंलिङ्गम् ।

**३७९**

५ संवासः = मैथुनम् । अयमर्थः क्लिष्टः ।

१३ कालचक्रमाश्रितानि नश्यन्ति । अनाश्रितानि ( पाठान्तरे ) कथं नश्येयुः ।

१४ ' संस्थितः श्वा मम ' इति च. पाठः ।

१९ अनुसंबधात् ( पाठभेदः ) = अनुमेयसंबन्धेन न साक्षात्संबन्धेन ।

२०–२१ नाभिशब्देन त्रय ऋतव ( पाठभेदः ) उच्यन्त इति विशेषलिङ्गं नास्ति । अस्मिन्पाठे ' एतदपि ' व्यर्थम् ।

२१ ' एतदप्ययुक्तम् ' इत्यत्र ' अपि ' शब्दो व्यर्थः ।

**३८०**

१० ' पञ्चर्तुतायाः ' इति छ. त. द. पाठः च. पुस्तके स्वीकृतः । पञ्चर्तुताया निगम इत्यर्थः ।

१५ ( सर्वभूत ) चक्रेण ( काल ) चक्रमाक्रान्तमिति न युक्तम् ।

१७ अपयास्यति ( ग. च. ज. पाठः ) = भङ्क्ष्यते विशीर्यते । ' संतापयति ' ( णिजन्तम् ) लोकान् । अथवा । संताप-

पत्रं पङ्क्तिः

३८० यति इति चुरादि तप् ( धा० १० । २८९ )। तेन न णिजन्तं रूपम् ।

२२ अरेषु ऋतूनां विशेषलिङ्गं नास्ति ।

२५ ' हेमन्तशिशिरसमासेन ' ( ३७७ । २५ ) इति छ. त. द. पाठः ।

२४–२५ ' पञ्चर्तवो हेमन्तशिशिरयोः समासेन ' (ऐ० ब्रा० १।१) ।

३८१ ४ ' षळृतुतायाः ' ( ३७७ । २६ ) इति छ. त. द. पाठे निगमोऽध्याहार्यः ।

६ ' पितरं सर्वभूतानाम् उत्पादयितुं वा ' इति च.पाठो दुर्बोधः ।

७ ' द्वादश वै मासाः संवत्सरस्य ' ( शत० ब्रा० १२ । ३ २ । २ ) । १२ ' संवत्सरं न सप्तचक्रमिति कृत्वा सप्तर्षयः पदद्वयपक्षे ' ( च. ) ।

दुर्गः ' सप्त चक्रे ' इति द्वे पदे करोति । वस्तुतस्तु तदेकं पदं संवत्सरस्य च विशेषणम् । आदित्यद्वारेण सप्तचक्रं स्यात् । अथवा । 'अयनर्तुमासपक्षाहोरात्रिमुहूर्तैः सप्तचक्रम् ' ( सायणः ) ।

१४ यदि सप्तचक्र आदित्यस्तर्हि केन शब्देनास्यान्वयः ।

३८२ १ प्रश्लेष्य = आसज्य ।

२ प्रधिः = चक्रनेमिः । गण्डपृष्ठशब्दस्यार्थो न ज्ञायते ।

३ ' प्रधयश्चक्रं भवति ' इदं न व्याकरणशुद्धम् । १२ ' षष्टिश्च० संवत्सरस्याहानि ' ( शत० ब्रा० ९ । १ । १ । ४३ ) ।

३८३ २ सप्तपुत्रे सप्तशब्दस्य यः सर्पणार्थस्तत्प्रसङ्गेन ।

४ ऐकपदिकसमाम्नायः समाम्नायस्य ऐकपदिकं नाम प्रकरणं तस्य व्याख्यानम् । ( च. पाठे ) ' समाम्नाये व्याख्यातं ' परिगणितम् । ऐकपदिकं ( क. ख. पाठान्तरे ) व्याख्या॰ नेनान्वेति ।

४ उक्तमेव न तस्य पुनरुक्तिः क्रियते ।

———

पत्रं पङ्क्तिः

पञ्चमोऽध्यायः ।

---

३८५ १८ ' अनवगतसंस्कारान् ( २९१ । २ ) इत्यत्र किं संस्कारस्याविज्ञानमेवानवगमशब्देनोच्यत उतार्थप्रतीतिरपीति प्रश्नेऽर्थाप्रतीतिरपीत्युत्तरम् ।

१९ व्याकरणे यानि लक्षणानि तैः असंपन्नः व्याकरणशास्त्राननुगतः । अविज्ञानम् = अनवगमः ।

२० प्रकृतिः प्रत्ययः स्वर इत्यादयः लक्षणशास्त्रविहितेन संस्कारेण युक्ता न वेति न ज्ञायते ।

२१ उभयस्य = संस्कारस्यार्थस्य च ।

२२ सन्निमित्यस्मिन्नेव शब्दे ।

२४ अन्योऽपि कश्चिदर्थः ।

३८६ ६ ' अथैनमुपतिष्ठन्ते रन्तिर्नामासि दिव्यो गन्धर्वः ' ( तै० आ० ४ । ११ । मैत्रा० सं० ४ । ९ । ११ ) ।

७ मध्येमैत्रायणीयके ( पा० २ । १ । १८ ) ' पारे मध्ये षष्ठ्या वेति सूत्रेण ' ।

८ ' ष्णा शौचे । आदगमहनेति किन् । लिड्वद्भावाद्द्विर्वचनम् । जगतः स्नापयितारमित्यर्थः ' इदं सायणभाष्यादुद्धृतं ट. पुस्तके प्रान्तभागे लिखितं ठ. ड. पुस्तकयोरन्तर्भाव्यते ।

१८ आसामहीनां दानायेत्यन्वयः ।

३८७ १ अयमप्यस्य० ( पाठभेदे ) = अस्या ऋचो द्वावर्थौ इत्यपिशब्दस्यार्थः । अपिशब्दत्यागे ' यद्ययमर्थो न साधुस्तर्ह्ययं गृह्यताम् ' इत्यर्थः ।

प्रथमश्चतुर्थस्तृतीयो द्वितीय इति पादान्वयः । ७ प्रथमार्थे विश्वावसुर्गन्धर्वो ( ३८६ । १५ ) द्वितीये इन्द्रः ।

७ आसां प्रजानां प्राकथयदित्वेत्यन्वयः ।

२३ ' जुधातुर्धातुपाठे न वर्तते ।

२५ ' दूतो देवानामसि मर्त्यानाम् ' ( ऋ० सं० १० । ४ । २ ) इति न व्याख्यायते ( ३८५ । ७ )

| पृष्ठ | पङ्क्तिः | |
|---|---|---|
| ३८८ | ११ | हविषः हविषा पूर्णा अर्चिषः । |
| | १२ | जनानां दर्शनमभि दर्शनाय जनाः पश्येयुरित्यर्थं व्यञ्जयित्वा दर्शयित्वा । |
| | १३ | आदित्यस्यान्तर्हविष उपनियमितवान् । स्वार्चिषं आदित्ये स्थापयामास । |
| | १६ | तमेतमर्थम् = आदित्यस्य स्वार्चिर्भिः प्रदीपनम् । |
| | १७–१८ | सामानाधिकरण्यशब्दः समानविभक्त्यन्तानां शब्दानामन्वये प्रयुज्यते । अत्रान्वयशब्दो युक्तः । |
| | २१ | अथापि = अयमप्यधिकोऽर्थः कदाचित्स्यात् । |
| ३८९ | १ | वरणार्हं संभजनीयमस्माभिर्युष्माभिर्वा । गोपयत्यं रक्षणीयमस्माभिर्युष्माभिर्वा । अथवा । युष्मभ्यं गोपायितव्यम् । |
| | २ | 'गोपायिता' 'गोपिता' (क. ख. पाठः) इति द्वे अपि रूपे । |
| | २–३ | यास्कमते 'गोपयत्यम्' इत्यस्य द्वावेवार्थौ । 'गोपायितारो यूयं स्थ' अयमेकः 'गोपायितव्यं युष्मभ्यम्' इति द्वितीयः (३८५ । १०–११)। ३ स्थ = भविष्यथ इति दुर्गः । |
| | ३ | युष्मभ्यम् = यौष्माकीणम् इति च । 'वर्षिष्ठं' (३८५ । १०) न व्याख्यायते । |
| | १२–१३ | अतिरात्रे प्रथमे पर्याये होतुः शस्त्रयाज्या (आश्व० श्रौ० ६ । ४)। अतिरात्रे द्वादश शस्त्राणि । चतुर्णां शस्त्राणां पर्यायः । अयं होत्रा शस्यते । तस्यैषा ऋग्याज्या । |
| | १८ | 'यस्य पीतिं कामयते तदैव वष्टि' इति ग. च. ज.-पाठेऽन्वयः । |
| | २६ | अनिर्मितमनिश्चितं परिमाणं यस्य तत् । 'अनिर्मितमपरिमाणम्' इति पाठान्तरं साधु । |
| ३९० | १ | 'अयमपीतरोऽन्ध एतस्मादेव' (३८९ । १५) न व्याख्यायते । |
| | २ | दर्शनकृतं = दर्शनेन कृतं जनितम् । 'दर्शनं कृतम्' इति |

पत्रं पङ्क्तिः

पाठान्तरे कृतं = पूर्णम् । अत्र 'चक्षुषः'शब्दो व्यर्थः । अथवा । चक्षुषो दर्शनमित्यन्वयः स्यात् ।

१३–१४ ममैतान् रश्मीन् पुंसः बहुप्रज्ञानान् आहुः । एते तव बुद्धि-रश्मयः पुमांसो बहुप्रज्ञ ना जाता इति ब्रह्मविद आहुः ।

३९० १५–१६ बुद्धेरुपकुर्वन्ति सर्वानर्थान् प्रकाशयन्तः ।

१९–२१ दर्शनविज्ञानगुणाभ्यां नित्ययुक्तोऽसौ रश्मीनपि ताभ्यां युक्तान् पश्यति ।

२२ न श्रुता वेदाश्चोपनिषदश्च येन सः ।

२४ परिनिष्ठिता = स्थिरा ।

३९१ ३ आधिदैविक० = स देवोऽमानुषो भवति ।

३९२ ८ ठ. ड. पुस्तकयोः 'प्रपूरयेते' इत्यस्यानन्तरं विरामो वर्तते । लिखितपुस्तकेषु 'परस्परसंभोगेन' इत्यस्यानन्तरं विरामो न वर्तते ।

१६ अविपर्यस्यन्त्यौ = विपर्यासं स्थानविनिमयं न गच्छन्त्यौ ।

२४–२५ 'जागतं यन्महापाङ्क्तं प्रेदं (ऋ० सं० ८ । ३७) सूक्तमिति स्मृतम् । तस्यैकातिजगत्याद्या महापाङ्क्तानि तान्यपि (छन्दो-नुक्रमणी ८ । २४) । अग्निमस्तोष्युपक्रम्य (८ । ३९) त्रीणि (ऋ० सं० ३९ । ४० । ४१) सूक्तानि' (छ० ८ । २५) । प्रेदं (ऋ० सं० ८ । ३७) सूक्तं जाग-तं महापाङ्क्तं तस्यैकाद्या ऋगतिजगती । तदनन्तरं त्रीणि (३९।४० । ४१) सूक्तान्यपि जागतानि महापाङ्क्तानि न केवलं जागतानि । 'जागतानि' इति दुर्गप्रमादोऽनवबो-धात् । 'अग्निमस्तोषि नाभाक आग्नेयं महापाङ्क्तं हीति अनु-क्रमण्यामुक्तम् । दुर्गवृत्तिकृता तु जागतानीत्युक्तम् । तत्र जगत्या एव महापङ्क्तिभेद इत्यभेदः' (ट.) ।

३९३ १ व्यत्ययः = विपर्ययः । दुर्गेण त्वयं शब्दः पर्यायार्थे प्रयुक्त इति भाति ।

२–३ धनेन पुरस्कृतेन = धनं पुरस्कृत्य ।

५ पृतनां = युद्धम् । ६ संयत्ताः = योद्धुं सज्जाः । ६–७ 'संप्रहारीभूताः' । संप्रहरतीति संप्रहारी । संप्रहर्तुं योद्धुं सज्जाः ।

पत्रं पङ्क्तिः

३९३ ८ हन्मेति ग. च. ज. पाठोऽसाधुः यतो हन्मः + इति = हन्म इति ।
अन्यके = कन् कुत्सितार्थे । मा भूषन् = नश्यन्तु ।

१० 'वन' (धा० १ । १ ८०४) हिंसायाम् । 'वनु' (धा० १ । ८०५) च । अपूर्वोऽयं 'वनु'धातुरिति भट्टोजीदीक्षिताः । वनु + स्य = वनुष्य । वनुष्यतः = हिंसामाचरिष्यन्तः ।

३९४ १ 'वनुष्यतः' हिंसार्थे नवकृत्व ऋक्शाखायां प्रयुज्यते । तथा 'वनुष्यता वनुष्यतां वनुष्यते वनुष्यन् वनुष्यात्' इति रूपैरपि प्रयोगः । तेन वनुष्यतिः कथंकारमल्पप्रयोगविषयः ।

४ 'पापच्यमानः' इति निरुक्तमूले त. द. पाठो (३९१ । १६) वृत्तौ च ग.ज. पाठः । पापच्यमानः = पुनः पुनः पच्यमानः दृढीक्रियमाणः । पापं कर्म पापिनं सततं पाचयति पापशीलं करोति । अयं पाठः साधीयान् यतः 'पापत्यतेर्वा' (३९१ । १६) इति तृतीया व्युत्पत्तिः । किंतु सा दुर्गेण न व्याख्यायते ।

११ 'नास्मिन्नहनि केनचित्कस्यचिद्वाच्यमविवाक्यमेतदित्याचक्षते' (आश्व० श्रौ० ८ । १२) । 'तस्माद्दशममहरविवाक्यं भवति' (ऐ० ब्रा० ५ । २२) ।

३९५ ५ 'पार्थिववैद्युतादिबहु (विश्व) रूपेण' पाठान्तरे वर्तमानं सायणभाष्याद्गृहीतम् ।

११ ग. च. ज. पुस्तकेषु 'वासिष्ठो मृडीको नामाष्टमस्तस्येयमार्षम्' इत्यादिः पाठः । किंतु सर्वानुक्रमण्यामार्षानुक्रमण्यां च भौमस्यात्रेरियमार्षमिति । तथा 'पावमानी सौमी वा' इति ग. च. ज. पाठः । किंतु पवमानः सोम एक एवेति भाति ।

१३ 'जातवेदसे' (ऋ. सं० १ । ९९) इत्येकर्चत्वात्क्षुद्रसूक्तम् । 'अस्य वामस्य' (ऋ० सं० १ । १६४) इत्येतद् द्विपञ्चाशदृक्त्वान्महासूक्तम् ।

पत्रं पाङ्क्तिः

३९५

१४ 'उपनमेत् = उपस्थितं भवेत्' (च.)। 'स्तुनुयाम्' (ठ. ड. पाठः) = स्तुयां + सुनुयाम्। 'सुनुयाम्' इति साधीयान्पाठो यतः सोमकर्म सोमाभिषवरूपम्। सोमस्तुतिस्तत्र गौणी।

१५–१६ प्रजा वयं लभेमहीत्याशंसायुक्ताः स्तुतीः।

१७–१८ 'सर्वतो विश्वायुः' इत्यस्य कोऽर्थः। विश्वम् आयुः यस्य सः। सर्वथैव दीर्घायुरयमित्यर्थः स्यात्।

३९६

२ 'अहर्दिवि' इत्यत्र अहःशब्दो रात्रिवाचीति भाति।

३ दिवैव= दिवापि।

७ याचस्वेत्येतमर्थम्।

१०–११ 'भन्दमानः भन्दिष्ठः भन्ददिष्टये भन्दनायतः' इत्यन्यान्यपि रूपाण्यृक्शाखायां विद्यन्ते। दशकृत्वश्च तेषां प्रयोगः।

१२ असतः संबोधनम् = असद्वाचि संबोधनान्तं पदमित्येव ज्ञायते। तस्यार्थो नैव प्रतीयते। अन्ये शब्दाः प्रयत्नेनाल्पशोऽपि निरुच्यन्ते। नायं तथा।

२१ चिह्नयितारः = चित्रगुप्तादयो मानुषकर्माणि स्वपुस्तके लिखन्तीति पौराणिकाः। स्पाशयितारः = द्रष्टारः। लातिनभाषायां 'स्पेशिओ' अहं पश्यामीत्यर्थे।

२२ 'यस्य सोममभिदहेद् ग्रहानध्वर्युः स्पाशयेत स्तोत्राण्युद्गाता शस्त्राणि होता' (काठ० सं० ३५। १७)। 'यदि राजाभिदह्येत ग्रहानध्वर्युः स्पर्शयेत्स्तोत्राण्युद्गाता शस्त्राणि होता' (मान०श्रौ० ३। ६। २२)। सोमदाहे इयं प्रायश्चित्तिः।

२३ 'आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तम्' (याज्ञवल्क्यव्यवहाराध्याये दिव्यप्रकरणे श्लो० १०२ मिताक्षराटीकायाम्)।

३९७

४ आहंमीति आहनाः। 'आहनः' इति तस्य संबुद्धिः।

५ असभ्यम् = असभ्यार्थवाचि।

पत्रं पङ्क्तिः

३९७ ६ मत्तः अन्यकुलजेनेत्यन्वयः । अभ्युद्यच्छस्व = उच्छ्रयस्व ।

७ 'वि चिद्वृहेव रथ्येव चक्रा' ( १० । १० । ७ ) इति यमी यमं ब्रवीति । यथा रथचक्रे द्वे अक्षमाश्रित्य विवृहतः सार्धं परिवर्तेते एवमावां विवृहेव परिवर्तेवहि रमेवहि । अभ्युद्यच्छतः = अभ्युद्यते भवतः सज्जीभवतो परिवर्तनाय । एकमनस्त्वमक्षसदृशम् । उभे अपि युष्मच्छरीरे रत्यर्थं सज्जीभवेताम् । त्वं च तस्य कामिनः सक्तं शरीरं स च तत्र सक्तं शरीरमेवमुभे अपि शरीरे रत्यर्थं सज्जं कुरुतम् । 'सक्ताम्' ( ९ ) इति च. पाठः सुबोधः ।

८ उपपाद्य = संपाद्य ।

१० अभ्युद्यच्छमाना = अभ्युद्यमं यत्नं कुर्वाणा ।

११ आहनस् शब्दश्चन्द्रमस्वत् । आहनाः आहनसौ आहनसः । आहनसम् । हे आहनः । 'तदाहना अभवत्पिप्युषी' ( ऋ० सं० २ । १३ । १ ) अत्र प्रथमैकवचनम् । 'य आहना दुहितुर्वक्षणासु रूपा मिनानो अकृणोदिदं नः' ( ऋ० सं० ५ । ४२ । १३ ) इत्यत्र च । 'ये ते मदा आहनसो विहायसस्तेभिरिन्द्रं चोदय दातवे मघम्' ( ९ । ७५ । ५ ) अत्र प्रथमाबहुवचनम् । 'अहं सोममाहनसं बिभर्मि' ( १० । १२५ । २ ) अत्र द्वितीयैकवचनम् । 'कद्दु ब्रव आहनो वीच्या नॄन्' ( १० । १० । ६ ) अत्र 'अन्येन मदाहनो याहि तूयम्' इत्यत्र च संबोधनम् । एषु सर्वेषु वाक्येषु आहनःशब्देन सुन्दरं प्रियं वा किंचिदुच्यत इति भाति । षष्ठ्यामृचि यमी यमं ब्रवीतीति सायणः । तत्र यमी यमम् 'आहनः' इति संबोधयति । 'आहंसीव मामसभ्यभाषणात्' इदं निर्वचनं यमविषयेऽयुक्तमेव यतस्तस्य भाषणं सर्वथैव सभ्यम् । आहनःशब्दोऽत्र सुभगवाची । 'अन्यमिच्छस्व सुभगे पतिं मत्' ( १० । १० । १० ) 'न ते भ्राता सुभगे वष्ट्येतत्' ( १० । १० । १२ ) इत्यत्र यमी 'सुभगे'

पत्रं पङ्क्तिः पत्रं

३९७ इति संबोध्यते । विहायःशब्दोऽपि सुन्दरवाची प्रियवाच्युभयवाची वा । ४०१

१५ असभ्यत्वादश्लीलत्वात्तस्य प्रदेशस्य ।
आहनस्यात् स्त्रीपुरुषसंयोगाज्जायमानः पुरुषो यावदग्निं नाधत्ते तावदमेध्य एव । 'अजातो वै तावत्पुरुषो यावदग्निं नाधत्ते स तर्ह्येव जायते यर्ह्यग्निमाधत्ते' ( मैत्रा० सं० १। ६।४ )। 'आहनस्याद्वै रेतः सिच्यते रेतसः प्रजाः प्रजायन्ते' ( ऐ० ब्रा० ३० । ३६ )। आहनस्या नामाष्टौ कुन्तापाध्याये वर्तमाना ऋचस्तासां मैथुनविषयकोऽर्थः ।

१८–१९ देवस्तुत्या नन्दिता नन्दत्यसौ । अथवा । देवस्तुतीनां नदनो देवस्तुतीर्नादयत्यसाविति नदः । ४०२

३९८ ४ कुतः = कुतोऽपि । ७ नीरिणति = उपलभ्मते । ८ अयं मम कामो नागमिष्यदित्यन्वयः । 'न मामागमिष्यत्' इति पाठान्तरम् ।

१२ अधीरा लोपामुद्रा । १३ तस्याः सकाशाच्चेतसा व्यावर्तमानमित्यन्वयः । ४०३

१४ 'श्वसिति' वधकर्मसु पठितं ( निघ० २।१९।९ ) न गतिकर्मसु । ४०४

१६ संरुद्धप्रजननस्य ब्रह्मचारिणः कामो मामागमदिति विलपितम् ।

४०० १३ गोमान् यजमानः । १७–१८ देशानामन्तरान्मध्यात् । समुद्रं संवृण्वन्ति व्याप्नुवन्ति । अथवा । देशानां मध्यं संवृण्वन्ति । तस्मादुदकानि संवरणानीत्युच्यन्ते ।

२० दुग्धाभ्यो गोभ्यः = तासां गात्रेभ्यः ।

४०१ २ 'नितोशते' इति निघण्टुपाठः ।

१० सर्वे जना अन्नभक्षणेन निवसन्ति । अयं तु सोममेवाश्रित्य निवसति । 'एनम्' इति पाठान्तरम् । एनम् = सोमम् । किंतु सर्वे जनाः सोमादन्यानपि पदार्थान्भक्षयन्ति । तेषां केवलः सोमो नाश्रयः । १४ शक्यन्ते गावः । ४०५

१३ 'अक्षाः' पूर्वस्मिन्नेवार्थे = क्षयत्यर्थे न क्षरत्यर्थे ।

पत्रं पङ्क्तिः

४०१ १३–१४ 'सोमो दुग्धाभिरक्षाः' इत्यत्र कोऽर्थः। अथ सोमः = सोमोऽपि। अक्षाः = निवसति।

१६ 'लोपाशः सिंहं प्रत्यञ्चमत्साः' (ऋ० सं० १०। २८। ४) इदं किमर्थमत्र (३९९। ६) पठितमिति न ज्ञायते। दुर्गेणापि न व्याख्यायते। अत्र क्रियापदम् 'अत्साः' न तु 'अक्षाः'।

२२ 'हविष्पान्तमजरमिति प्रथमा ऋक्। 'मतौ छः सूक्तसाम्नोः' इत्यनेन हविष्पान्तीयम्। अनुक्रमण्यां सर्वं सूक्तं त्रैष्टुभमित्युक्तम्। ग. च. ज. पुस्तकेषु 'तत्रेयमेवैका जगती' इत्युच्यते।

४०२ ५ यत्र यस्मिन् जगति।

६ पतत्रि जगत् इत्वरं जगत् यत्स्था जगत् यच्च श्वात्रं गमनशीलं जगत् तत्सर्वमग्निरकरोदुत्पादितवान्। अत्र 'श्वात्रं' जगच्छब्दस्य विशेषणम्। १३ प्रियमेधसमार्षं (च. पाठः)। अत्र प्रैयमेधसमिति पदं शुद्धम्।

४०३ ६ गुणस्पाशनैः = गुणसंकीर्तनैः। स्पाशयतिश्चिह्नार्थ इति द्वितीयखण्डे स्पशव्युत्पत्तावुक्तम्। 'स्पर्शनैरिति वा' (३९९। १३) न व्याख्यातम्।

४०४ ८ ससम् = अन्नं जलं वा। 'ससेन चिद्विमदायावहद्वसु' (ऋ० सं० १। ५१। ३) अत्र ससमन्नम्। 'ससस्य चर्म घृतवत्पदं वेः' (३। ५। ७) अत्र ससः कश्चित्प्राणी। 'ससस्य चर्मन्' (४। ५। ७) 'ससस्य यद्वियुता सस्मिन्नूधन्' (४। ७। ७) इत्यत्रापि। 'ससस्य योनिमासदः' (५। २। १। ४) इत्यत्र जलम्। 'गृभ्णन्ति ह्विजया ससम्' (८। ७२। ३) अत्र प्राणिविशेषः कश्चित्। पक्वं ससं रिरिह्वांसं प्राणिनमिव जनस्तं रिप उपस्थे शुचन्तमविदत्। रिपः = भूमेः। ११ 'जाज्वल्यमानं' (३९९। १५) न व्याख्यायते।

१५ पाठान्तरं 'पक्वम्' इत्यादि सुबोधमेव।

४०५ २१ अन्येभ्यो यजमानेभ्यः सकाशादतिरिक्तया। २२ अस्मिन्मन्त्रे व्राशब्दो न तु व्रात्याः। प्रैषाः = आह्वानमन्त्राः।

पत्रं पङ्क्तिः

४०७ ५ वेष्टा = व्यापकः । '. विष्लृ व्याप्तौ ' ( धा० ३ । १३ ) ' विविष्णुः ' इति ग. च. ज. पाठः । प्रथमं ' वि ' इत्यक्षरं किमुपसर्गोऽभ्यासो वेति न ज्ञायते । विविष्णु = विशेषेण व्यापकः ।

८ ' अदूर एवावस्थितस्य ' इति पाठान्तरम् । अदूरे अव-स्थितस्योपरि वज्रक्षेपे किं कौशलम् ।

११–१२ छ. त. द. पुस्तकेषु ' वराहारो वरमाहारमाहार्षीरिति च ब्राह्मणं बृहति मूलानि ' ( ४-६ । ९–१० ) इति नास्ति ' इति वा ' इति च । दुर्गोऽपि तन्न व्याख्याति ।

१८ दुर्गाद्वा = दुर्गाद् वै ।

१८–१९ ' विष्णुर्यज्ञः । स देवेभ्य आत्मानमन्तरधात् । तमिन्द्रोऽ-वेत् । स इन्द्रमब्रवीत्को भवानिति । इन्द्रः प्रत्यब्रवीदहं दुर्गे हन्ता भवांस्तु कः । सोऽब्रवीदहं दुर्गादाहर्ता यस्मात्त्वं दुर्गे हन्ता तस्माद्दुर्गे निलीनं वराहं जहीति । इन्द्रस्तथा कृत्वा विष्णुमब्रवीद्दुर्गादाहर्ताहमित्यवोचथास्तस्मादेतं दुर्गनिलीनं यज्ञ-माहरेति ' ( मैत्रा० सं० ३ । ८ । ३ । तै० सं० ६ २ । ४ ) ।

४०८ १ त्वा ( त्वया इन्द्रेण ) इषितः प्रेरितः त्वेषितः ( १४ ) । इन्द्रप्रेरितो विष्णुर्यज्ञमाहरत् । ' त्वेषितः ' = संदीपितः ( दुर्गः ४०७ । १८ ) ।

३ प्रायशः सर्वास्वृक्षु दुर्गो यज्ञार्थं पश्यति । अत्र महिषो महिष एव न तु यज्ञः ।

४ प्रायणीयमिति यज्ञनाम । ६ एमुषं = व्यामोहस्थानीयम् । नायमसुरः किंतु वराह इति ते मोहिताः ।

१८ प्रवर्ग्यः यज्ञविशेषः । तत्र घर्मनामकं घृतपूर्णं विशिष्टाकारं मृद्भाण्डत्रयमतीवाग्नौ ताप्यते ।

१९ यज्ञच्छादयितृभिः ( च. पाठः ) = विविधैः कर्मभिरेतेऽङ्गि-रसो यज्ञं छादयन्ति । यज्ञस्वादयितृभिः = यज्ञमास्वादयन्ति यज्ञफलं गृह्णन्ति पुरोडाशादिकं वा भक्षयन्ति ।

पत्रं पङ्क्तिः

४०८ २० अपां वा धारयितारम्। २० 'धारयितृभिः यज्ञसद्भिर्वा' (ट. पाठे) इदमत्र प्रमादेन लिखितम्।

२१ 'अदर्दः' इति तृतीयपुरुषैकवचनम्। 'अदर्दः' इति द्वितीयपुरुषैकवचनम्। अदर्दः। अदर्दताम्। अदर्दरुः। अदर्दः। अदर्दतम्। अदर्दत। 'अदर्दरुत्सम्' (ऋ० सं० ५। ३२। १) इत्यत्र द्वितीयपुरुषैकवचनम्। विपरिणामोऽनावश्यकः।

४०९ ८ वीराः = वि + ईराः। १६ अपिशब्देनाङ्गिरसो देवसमाख्यां लब्धवन्त इति सूच्यते।

२५ सस्वर्ह = सस्वः + ह। 'सस्वः' इदमन्तर्हितवाचकम् (निघ० ३। २५)। 'सस्वर्ह' इदं सायणः क्रियापदं मन्यते 'उच्चारितवान्' इत्यर्थे।

४१० १ 'उद्धन्तॄन् उद्धर्तॄन्' अनयोरेक एवार्थः। ग. पाठः 'उद्धर्तॄन्' इति भाति। ज. पाठः उद्धंर्तॄन् = उद्धंन्तॄन् + उद्धर्तॄन्। उद्धर्हणान् = नाशयितॄन्।

२ सुवर्णस्य विकृतानि (विकाराः) चक्राणि येषाम्। ईषा = लाङ्गलदण्डो युगदण्डो वा।

४ अचेतिः अञ्चतिसरूपः। अत एव तस्य गत्यर्थः। 'अञ्चतेर्गत्यर्थसारूप्यात्'। (ग. च. ज. पाठः) = 'अचेति अञ्चतेः' इत्येतयोः गत्यर्थे सारूप्यम्।

८ 'तेषां सप्तसप्तका गणाः। ब्राह्मणे हि श्रूयते' (ग. ज. पाठः)। १९ प्रउगशस्त्रे 'आश्विनं (तृचं) शंसति' (ऐ० ब्रा० ११। १)।

४११ ५ 'शर्या अङ्गुलयो भवन्ति' (४०६। १६) 'सृजन्ति कर्माणि' (छ. त. द. पाठेऽधिकं) न व्याख्यायते।

११ यथा पिपीलिकाया मध्यमतीवाल्पं तथास्य छन्दसो द्वितीयः पादोऽष्टाक्षरत्वादल्पतरः। इतरौ द्वौ पादौ द्वादशाक्षरौ। 'तस्यान्ते विराजस्तिस्रस्तासामियं द्वितीया' इति ग. च. ज. पाठः। सूक्तस्यान्ते तिस्रो विराजो विद्यन्ते किंतु

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ४११ | | 'अभ्यभि हि०' इयं तासु न वर्तते । च. पुस्तके ऋषि-नामान्यपि कदाकदा भिन्नानि भवन्ति । |
| | १६-१७ | कासांचिद्यज्ञियानामपां वसतीवरीसंज्ञा । ताः सोमेन मिश्री-क्रियन्ते । तेन सोमो वर्धते । |
| ४१२ | ६-७ | 'तस्यान्नमपि संस्कारविशेषेण संस्कृतं पूजायां क्रियते' ( पाठान्तरम् ) । |
| ४१३ | १४ | ग. ज. पाठः 'शैत' शयितशब्दस्याशुद्धोच्चारणेन । वने शेते इव ( च. पाठः )। आस्ते इत्यर्थः । |
| | १५ | श्रूयते = श्रवकारी शब्दकारी भवति । वर्तिः वर्तिका इत्य-र्थेऽत्र प्रयुक्तः । वर्तिका पक्षिविशेषः । |
| ४१४ | ६ | मद्गवः = जलकाकाः । |
| | ६-७ | परुष्णी = तन्नाम्नी नदी माध्यमिका वाक् वा । परु=पर्व । माध्यमिका वाक् पर्ववती संधियुक्ता भिन्नध्वनियुक्ता । |
| | ९ | अभ्युद्गमः = आविर्भावः |
| | १४-१५ | व्ययुः = विघटितवन्तः । तत् तदा वै एनं वृत्रं समतपन् । तस्माद्धविषः सांतपनं नाम । |
| ४१५ | २ | धन्वन्ति धावन्ति । |
| | ३ | विगृहीतान्नाम्नः प्राप्तः । 'नामप्राप्तौ' इति पाठान्तरम् । नामावस्थायाः प्राप्तौ यो हेतुः तस्य निर्देशः । तीर्णमस्य = तीर्णमेतदन्तरिक्षमनेनाग्निना । तीर्णतममिति पाठान्तरे तम-प्प्रत्ययस्य कोऽर्थः । |
| | १० | अनेन = अन्तरिक्षेण । ११ 'पर्षत्' दुर्गेण परि + षद् इति निरुच्यत इति भाति । परि = परितः सर्वतः । षद् = सद् । वस्तुतः 'पर्षत्' इत्येतत् 'पृ' इत्येतस्य लेटि रूपम् । 'पर्षद् = परिषद्' ( च. ट. ) । |
| | १४ | 'शब्दयुक्तिः = व्युत्पत्तिः' ( च. ) । ज्ञातशब्देन संबन्धो निर्वचनम् । |
| ४१६ | ६ | लिखितपुस्तकेषु 'महाभाग्यम्' इति लिख्यते । १०-११ 'नैघण्टके प्रकरणे स्वे स्वेऽभिधानवर्गे पठितान्यपि' इत्यन्वयः । |

पत्रं पङ्क्तिः

४१६ १९ त्रिष्टुप् ज्योतिष्मती = उपरिष्टाज्ज्योतिः । अस्मिश्छन्दसि चतुर्थपादस्याष्टाक्षरत्वम् ।

४१७ ५ यया गवा सोमो राजा क्रीयते सा राजक्रयणी सोमक्रयणी वा गौः । तस्या इयं वाग्रूपेण स्तुतिः ।

६ सा गौः । सामान्यज्ञानं जनयन्ती वृत्तिश्चित्तम् । संकल्पविकल्पात्मिका वृत्तिर्मनः । निश्चयरूपा वृत्तिर्बुद्धिः । 'चितास्त्वयि भोगाश्चेतयसे वा' ( ४१२ । १ ) इति न व्याख्यायते ।

१० 'आ इत्याकारः ० व्याख्यातः' इदं वाक्यम् ( २५३ । १९—२० ) इत्यत्रापि वर्तते ।

१९ पदविभागः 'अभ्रे आ अपः' इत्येव न तु 'अभ्र आँ अपः' । 'अभ्रेऽध्यपः' इति निरुक्तमूलस्थं छ. त. द. ( ४१३ । ३ ) पाठान्तरं दुर्गेण न स्वीकृतम् । 'अपः । अपोऽभ्रेऽधि' इत्येव स्वीकृतम् ।

२१ वैश्वदेवस्य = वैश्वदेवसूक्तस्य । २२ ब्राह्मणदर्शनेन = मैत्रायणीब्राह्मणे कृतेन विधानेन ।

२५ कत्प्रियाय = सुखाय च प्रियाय च । 'कत्' = सुखम् । किंतु 'कत्' पदपूरण एव । 'तत्प्राप्त्यर्थम्' इत्यत्र ग. च. ज. पाठः 'प्राप्त्यर्थम्' । प्राप्त्यर्थम् = स्थानप्राप्त्यर्थम् । कद् = कदा ( सायणः ) ।

४१८ २ 'मनामहे जानीमहे' इति च. पाठः । ५ सांयोगिकानि द्रव्याणि = आयुधादीनि सहाया वा ।

८ 'अध्यापः' ( ग. च. ज. पाठः ) = अधि उपरि आपः अवस्थिताः वर्तन्ते ताः । 'वितनोति' इत्यस्य कर्मार्थं 'ताः' शब्दोऽध्याहार्यः । तत्र 'अधि या आपः' इत्यन्वयः । 'वृणाना' इति पदं न तु वृणानाः । 'अध्यापो वृणानाः संभजमानाः' इति ग. च. ज. पाठोऽशुद्ध इव भाति । वृणाना माध्यमिका वाक् ।

१८ अपां स्थानं प्राप्तव्यम् (१) । आमेन्यं रजः मेना या माध्यमिका वाक् तस्या यो लोकस्तस्येति ( ६—७ ) प्रथमे

पत्रं पङ्क्तिः

४१८ विवरणे। प्राप्तमेव स्थानं सुखकरं भूयात्। आमेन्यस्य आभिमुख्येन याचितव्यस्येति द्वितीये ।

१८ 'पदमुपरि वर्तन्ते तस्मिन्नपो वृणानाः' अयं ग. च. ज. पाठोऽशुद्धः ।

४१९ ५–६ महाव्रते (ऐ० आ० ५ । २ । २) निष्केवल्यशस्त्रं पक्ष्याकारेण निरूप्यते । यथा पक्षिणो द्वौ पक्षौ तथास्य शस्त्रस्य राथन्तरो दक्षिणः पक्षो बार्हत उत्तरः । इदं सूक्तं (ऋ० सं० ७ । २९) दक्षिणे पक्षे शस्यते ।

१३ 'द्युम्नं महि रत्नं च धेहि' (४) इति पाठभेदः घ. ट. ठ. ड. पुस्तकैः स्वीक्रियत इति भाति यस्मात्तत्र 'महि महद्रत्नं च' इति व्याख्यानं क्रियते ।

४२० १० 'पावमानीः पुनन्तु नः' इति सामवेदपाठः (सा. सं. उ. आ. ५ । २ । ८ । ५) । पावमानीः = पावमान्यः ऋचः (सा०) । 'पावमान्यः पुनन्तु माम्' इति खैलिकसूक्तपाठः (१७ । ३) । 'पवमानः पुनातु मा' इति दुर्गस्वीकृतपाठः । कुत्रत्योऽयं मन्त्र इति न ज्ञायते ।

१५ मन्त्रः कथं बहुप्रक्षरः । १६ प्रविचलेन = अत्यन्तगतिना । 'प्रविरलेन' (पाठान्तरे) इत्यस्यार्थो न ज्ञायते ।

१७ ऋत्विग्यजमानेभ्य इतरेषां = देवानाम् । २० पावनेनार्थिनः = ते शुद्धिमर्थयन्ते ।

४२१ १ वृष्णो वर्षितुरिन्द्रस्यार्थे । 'वृष्णः वर्षितुः अग्नौ प्रास्ताहुत्या वृष्टिकर्तुरादित्यस्य चार्थे पवस्व' इति पाठान्तरं मनुस्मृतिश्लोकानुरोधेन । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' (मनु ३ । ७६)। मन्त्रे त्वादित्यस्य न कोऽपि संबन्धः । वृष्टिकर्तेन्द्र एव । निषिच्यमानस्य सोमस्य द्वावंशावुपांशुग्रहार्थमन्तर्धीयेते ।

१० प्र त इत्यष्टाचत्वारिंशदृचं सूक्तम् । प्रथमदशर्चस्याकृष्टा इति माषा इति च द्विनामान ऋषिगणा द्रष्टारः । द्वितीयस्य दशर्चस्य सिकता इति नीवावरी इति । तृतीयस्य पृश्नय इत्यजा इति च । चतुर्थस्य त्रयोऽपि गणा द्रष्टारः । ग. च.

पत्रं पङ्क्तिः

४२१ ज. पाठात् चतुर्थं दशर्चं स्वतन्त्रमेव सूक्तं नाष्टाचत्वारिंशदृचस्य सूक्तस्य भाग इति भाति। इदं विधानं शौनकानुक्रमण्यां न विद्यते। नापि शौनककृतार्षानुक्रमण्याम् (आर्षा० ९ । २६ – २७ )। ( पाठान्तरे ) व्यस्तैः = पृथक्पृथगृषिगणेन । चतुर्थं दशर्चं समस्तैस्त्रिभिर्ऋषिगणैरेकीभूय दृष्टम् । इदं पाठान्तरं शौनकानुक्रमण्याः स्वभाष्ये सायणकृतविवरणानुसारेण । दश दशर्चा इति क. ख. पाठो निर्मूलः ।

१० रश्मयः ( पावनसाधनानि इति कृत्वा ) पवित्रमित्यर्थे पवमान इत्येतामृचमुदाहरन्ति व्याचक्षते च । अस्यामृचि सोमो गभस्तिपूतो रश्मिपूत इत्युच्यते ।

१२ अव्ययम् = अविमयम् । पव्यं = पवित्रम् । १३ आत्मत्वेन = स्वरूपेण। ऋजीषम् = अभिषुतस्य सोमस्य त्याज्यभागः । १४ सोमरसो द्रोणकलशे निधीयते ।

१६ सोमः कथं क्रेयः कथं च विक्रेय इति शतपथब्राह्मणे ( ३ । ३ । ३ ) मैत्रायणीसंहितायां ( ३ । ७ । ७ ) च वर्ण्यते ।

१८ अन्नं धन्यं यस्मात्तत्कृत्स्नं जगद्धारयति । ठ. पुस्तकं वर्जयित्वेतरेषु ‘ कृत्स्नं जगद्धारयित्रे ’ इति पाठः ।

४२२ २ ‘ गभस्तिपूत इत्यपि निगमो भवति ’ ( ४२० । १ ) इति क. ख. छ. त. ट. पाठः । तेन ‘ वाचस्पतये पवस्व वृष्णः ’ इत्येतामृचं दुर्गो व्याख्याति ‘ पवमान मह्यर्णः ’ इत्येतामन्ये । अस्यां ‘ गभस्तिपूतो नृभिरद्रिभिः सुतः ’ इति ञ. थ. ध. ठ. ड. पाठो विद्यते । पवित्रवन्त इत्यत्र न साक्षाद्रश्मिनिर्देशः ।

३ पवित्रवन्तः = पवित्रेण शोधकेन सामर्थ्येन युक्ताः सोमस्य रश्मयः ( सायणः )। अस्यामप्यृचि रश्मीनां पावकत्वमभिधीयते । क एते निरुक्तव्याख्यातार इति न ज्ञायते ।

‘ पवित्रवन्तः परि वाचमिति । पवित्रस्यार्षम् । प्रवर्ग्ये विनियुक्ता । रश्मयः पवित्रम् । तेऽमुष्मादादित्यमण्डलात्प्रसृताः मध्यस्थाने मरुत्प्रभृतिभिर्देवगणैः संयुज्यन्ते । तत्संयोगान्मा-

पत्रं पङ्क्तिः

४२२ ध्यमिका देवगणाः पवित्रवन्तो भवन्ति । ते च पर्युपासते । ते च माध्यमिकां वाचं परिवार्यासते । स वरुणो विद्युदाख्यो मध्यमः पिता पाता रक्षिता तेषां मरुत्प्रभृतीनां प्रत्नः पुराणः व्रतं कर्म तदधिकारयुक्तमभिरक्षति । कथमिति । तदुच्यते । महः महान् वरुणो मध्यमः महान्तं वा समुद्रमादित्यं मेघजालेन यदा तिरोदधाति दुर्दिनं कृत्वा वर्षयोग्यवीषु अथ धीराः धीमन्तो धरुणेषु उदकेषु शेकुः शक्नुवन्ति कर्मणः कृष्यादेर्वैदिकस्य वारभं प्रारम्भमित्येवमभिरक्षति तेषां माध्यमिकानां व्रतम् । यदि ह्यसावावृणोति मेघैस्ततस्तेषामधिकारप्रतिलम्भो भवति ' ( ट. ) ।

१२ येन = इन्द्रव्रतानुपालनेन तस्याज्ञापालनेन । १४ सिन्धुः स्यन्दते । अतः ' स्यन्दनाभ्यः ' पाठः साधीयान् । ग. च. ज. पाठः ' स्पन्दनाभ्यः ' इतरेषां ' स्पन्दमानाभ्यः ' ।

४२४ ८ ' तोदमध्ये० ' इदं कस्माच्छ्रौतसूत्रग्रन्थाद्गृहीतमिति न ज्ञायते । ९ योन्यर्थे तोदशब्दः कोशेषु नोपलभ्यते ।

१६ ' अन्यदेवत्या आहुतयोऽग्नौ हूयन्त इति यत्तदेतद्दृष्ट्वा ' ( ४२३ । ८ ) इत्यन्वयः । १७ ' अवोचत् ' इति वक्तव्ये ' अवक्ष्यत् ' ( ४२३ । ८ ) इति रूपं किमर्थमुपात्तमिति न ज्ञायते । ' अवक्षत् ' ( ४२३ । ८ ) इति छ. त. द. पाठः प्रामादिकः ।

१८ तोदस्य = तुदस्य ( ४२३ । ९ ) तुदशब्दोऽपि दुर्बोधः ।

४२५ १ अभिहूयमानः = यस्मिन्नाहुतयो दीयन्ते सः । २ भानुना सता ( पाठान्तरम् ) = अग्ने स्वकीय एव प्रकाशो वर्तते तेन ।

४२६ ११ सवनार्थो यः सोमः स सवने परिसमाप्ते यद्यतिरिच्येत तदा सोमातिरेक इत्युच्यते । तदा स्तुतशस्त्रयोः प्रयोजनम् । छन्दोगैः स्तोतव्यं होतृभिः शंसतव्यम् । तृतीयसवने सोमातिरेके ' प्र तत्ते अद्य ' इति स्तोत्रियस्तृचः । १२ प्रक्रियते = पृच्छयते ।

१३ ' अप्रख्यातम् अप्रख्यापनीयम् ' ( ४२५ । २३ ) इति प्रथमेऽर्थे ' प्रख्यातं प्रख्यापनीयम् ' ( ४२६ । १ )

पत्रं पङ्क्तिः

४२६ इति द्वितीयार्थे निरुक्तमूलम् । दुर्गस्तु द्वयोरप्यर्थयोः 'परिचक्ष्यं पारख्यापनीयम्' (२५) इति विवृणोति ।

१७ तस्य शेपस्य (पुंस्प्रजननस्य) रूपं स एव गुणः सादृश्यं तेन योगो विद्यतेऽस्य ।

२४ प्रशंसार्थं नाम प्रशंसानाम । २६ प्रतिपन्नमात्रेषु=प्राप्तमात्रेषु ।

४२७ २ रूपद्वयम् = अश्लीलं प्रशंसनीयं च ।

३ 'वर्प इति रूपनाम वृणोतीति सतः' (४२६ । ३-४) न व्याख्यायते ।

५ उपमेयं शेपेन ।

४-५ शिपिः शेपः पुंस्प्रजननं तदिव विष्टः निर्वेष्टितः तेजसानाच्छादितः (३२६ । १५) । अथवा । शिपयो रश्मयस्तेन विष्टः आविष्टः (४२६ । २०—२१) ।

४२८ ३ 'तवस इति महतो नामधेयमुदितो भवति' (४२७ । १६) न व्याख्यात् । 'उदितो भवति' इति दुर्बोधम् ।

१९ "'ह्रणिः' इति केषुचित्कोशेषु दृश्यते तदयुक्तम् । नैगमकाण्डे 'आघृणिः' (निरु० ५ । ९) इत्यत्र 'ज्वलन्नामसु क्रोधनामसु च पाठादनेकार्थत्वमिति स्कन्दस्वामिवचनात्" (देवराजयज्वकृतनिघण्टुनिर्वचने (१ । १७ । १०) ।

४२९ ७ अ + पराधीनराज्यम् । ८ सांयोगिकेन = हस्त्यश्वादियुक्तेन । औरसेन = स्वशरीरस्थेन ।

४३० ६ 'वाजपेये चाज्यशस्त्रे' इत्यधिकं घ. झ. ट. ठ. ड. पुस्तकेषु ।

४३२ १ पानविशेषणत्वेनेन्द्रविशेषणम् ।

८-९ काणुकाशब्दस्याभिधेयं स एव विषयस्तस्य प्रख्यापनं तत्प्रसङ्गेन प्रसक्तम् । सरांसि त्रिंशतमित्यस्याभिधेयमर्थः । १० अर्थवस्तु = वस्तुभूतोऽर्थो याज्ञिकैर्यज्ञे यत्क्रियते तत् ।

१५ शीधुरिक्षुरसैः पक्वैरिति माधवः । 'सरकोऽप्यनुतर्षणम्' (अमरः २ । ९ । ४३) । सरकः = मद्यपानं मद्यभाजनं वा ।

पत्रं पङ्क्तिः

४३२ १६ एकेन प्रणिधानेन = विरामं विना । 'प्रतिधानेन' इति पाठान्तरेऽपि स एवार्थः । २० चान्द्रमस्यः चन्द्रमसि भवा आपः इत्यर्थः ।

४३३ १ रश्मयः सूर्यस्य । ७ 'यथा देवाः' इत्यस्य स्थाने 'यथादित्याः' 'तेन नः' इत्यस्य स्थाने 'एवास्मान्' इति मैत्रायणीपाठौ (४ । १२ । २) । तथापि तत्र वैश्वदेव एव चरुः । 'यथा देवाः' 'यथाक्षितिम्' 'इन्द्रः' इत्येतेषां स्थाने क्रमेण 'यमादित्याः' 'यमक्षितिम्' 'राजा' इति तैत्तिरीयसंहितापाठाः (तै० सं० २ । ४ । १४) । तत्र वैश्वदेवचरोः स्थाने आदित्यश्चरुर्निरुप्यते ।

८–१० 'यो राजयक्ष्मगृहीतः स्यात्तस्मा अमावास्यायां वैश्वदेवं चरुं निर्वपेत् । तेनैवास्मै प्रायश्चित्तिं विन्दत्यमुम् (अमुं = चन्द्रमसम्) एवाप्यायमानमन्वाप्यायते' । (मैत्रा० सं० २ । २ । ७) तत्र 'यथा देवाः' इति याज्या । स्विष्टकृदिति विशिष्टयागः । तस्मात्प्रागनेन मन्त्रेणाज्याहुतिर्हूयते ।

२२ 'एकया प्रतिधा०' इत्यस्मिन्मन्त्रे इन्द्रः पाता । 'यमक्षितिम्°' इत्यत्रादित्यः । अत एवासंबद्धत्वम् । रश्मयः पानपात्राणि चन्द्रमाः पानविषयो न तु सोमः । 'भवतीति' अत्र 'इति'शब्दो व्यर्थः ।

'पानाय याते' (च. पाठः)=पानविषये ।

२३–२४ इतरस्मिन्मन्त्रे । २५ पाठान्तरे 'उच्यते' सकृदेव । तत्र 'आदित्यः' इत्यनन्तरं विरामः ।

४३४ २ समासव्यासस्तुतिभाजः = वस्तुत आदित्यो रश्मिभिः पिबति । किंत्वत्र ते स्वातन्त्र्येण पिबन्तीत्युच्यते । ५ पञ्चदशाहःसु संभृतानि । ९ 'अध्रिगुर्मन्त्रो हि भवति' (च. पाठः) नायं कस्मिन्नपि निरुक्तमूलपुस्तके पाठः ।

१२ ग. ज. 'प्रशंसानाम' इति पाठः । छ. त. द. पुस्तकेष्वपि स एव । 'अध्रिगुः' इत्यनेन कस्यचिदधिका-

पत्रं पङ्क्तिः

४३४ रिणः प्रशंसा बोध्यते । पशुमारणमध्रिगोः कर्म । का तत्र प्रशंसा । कदाचिदनेन जपमन्त्रेण प्रशंसैवाभिमता स्यात् । ' अध्रिगुश्चापापश्च । उभौ देवानां शमितारौ । ताविमं पशुं श्रपयतां प्रविद्वांसौ । यथा यथास्य श्रपणं तथा तथा ' ( मैत्रा० सं० ४ । १३ । ४ । तै० ब्रा० ३ । ६ । ६ ) ।

१२ ' गोरनित्यत्वात् ' इति शुष्कमसंबद्धं कारणं दुर्गेण दीयते । गोरनित्यत्वात्तद्विषयको मन्त्रोऽप्यनित्यो भवतीति दुर्गमतं स्यात् ।

१७ ' अध्रिगो शमीध्वमित्यग्नि० ' ( ४३१ । ९ ) अयं दुर्ग-स्वीकृतनिरुक्तमूलपाठो भाति ।

४३५ ६ ' दुरः = द्वाराणि ' ( च. ट. ) । ७ ' मेधपतिभ्याम् ' इति तैत्ति० सं० ( ३ । ६ । ६ ) ऐ० ब्रा० ( ६ । ६ ) पाठः । मेधपतिभ्याम् = अग्नीषोमाभ्याम् । च. पुस्तकं ट. सदृशपुस्तकेभ्यः पाठान्तराणि शुद्धानीति स्वीकरोति । अत्र तु पाठान्तरं न स्वीकृतम् ।

१० येन दर्भेण पशुर्विशसनायोपाक्रियते स उपाकरणम् । १३ ' सहपूर्वचारी ' ( च. पाठः ) = पूर्वं चरतीति पूर्वचारी । सह पूर्वचारीति सहपूर्वचारी ।

१५ तत् चक्षुः इत्यन्वयः । १७ ' एकधास्य त्वचम् = कृत्स्ना-मखण्डाम् ' ( च. ट. ) ।

१८–१९ ' अपिशसः ' इत्येकं पदम् अपिकक्षवत् । अपिना गूढभागो द्योत्यते । " ' पिश ' अवयवे वा । अखण्डि-तामित्यर्थः " ( च. ) । २० ' उष्माणं = श्वासम् ' ( च. ट. ) ।

२१ ' प्रशसा ' एतदपि प्राणिनामैव स्यात् ।

४३६ २ प्रशसा ( ४३५ । २१ ) = स्वधितिः परशुः । दुर्गमते प्रशसा = प्रशस्तौ । आ अरत्निसंधितः = अरत्न्योर्यौ संधी तावारभ्य ।

३ ' भुजबाहू प्रवेष्टो दोः ' ( अम० २ । ६ । ८० ) इति

पत्रं पङ्क्तिः

४३६ दोःशब्दो बाहुवाची । अत्रायं नपुंसकः । हस्तस्याधोभागो बाहुरुपरिभागो दोः स्यात् । बाहू दोषणी अंसौ इति क्रमेणोच्यन्ते । शला = शलाकाकारे । शलं = शल्यस्य लोम । तदाकारं वा । अरत्निवाची शलाशब्दः कोशेषु नोपलभ्यते ।

४-५ 'श्येन–शला–कश्यप–कवष–स्रेकपर्णेष्वाकृतिवचनं प्रसिद्धसंनिधानात्' इति जैमिनीयन्यायमालापाठः ( ९ । ६ ) 'प्रसिद्धिसामर्थ्यात्' इति ग. च. ज. पाठः । 'सिद्धसाधनं स्यात्' इतीतरेषु पुस्तकेषु । प्रसिद्धिसंनिधानात् = श्येनशलादयः प्रसिद्धाः पदार्थाः । तेषां संनिधानादत्र विशिष्टाकृतय आदिश्यन्ते । प्रसिद्धिसामर्थ्यात् = एतेषां पदार्थानां लोके प्रसिद्धिः । तत्सामर्थ्यात् प्रयोगात् । सिद्धसाधनं स्यात् = एते पदार्थाः सिद्धाः । तद्विषये शङ्का नास्ति । तेषां प्रयोगेण या आकृतयो जगति सिद्धास्ता एव पश्वङ्गेषु साधयितव्याः । एतेषां कतमः पाठो मौलिक इति न ज्ञायते । यथा श्येनः कश्यपश्च प्राणिनौ तथा शलाकवषास्रेकपर्णा अपि प्राणिन एव स्युः । शला = शल्यः । महाराष्ट्रभाषायां 'साळी' । स्रेकपर्णं=करवीर ( महाराष्ट्रभाषायां 'कण्हेर' ) पत्रम् । 'जानूरुपर्वाष्ठीवत्' ( अमर० २ । ६ । ७२ महाराष्ट्रभाषायां 'ढोपर' ) ।

५ 'नैयायिकाः = मीमांसकाः' ( च. ट. ) । ७–८ पिण्डिकाख्ये ऊरू कवषा अच्छिद्रे कुरुत । वङ्क्रयः=वक्राणि पार्श्वास्थीनि ( सा० ) । ९ अनुष्ठ्या=अनुक्रमेण (सायणः) । ११ ऊवध्यं = पुरीषम् ( सा० ) । तद्यत्र गूह्यते स ऊवध्यगोहः । १२ प्रसृष्टं = त्यक्तम् ।

१४–१५ 'उलूको हि भयंकरत्वात् तं दृष्ट्वा०' इदं वाक्यमशुद्धम् । 'उलूकस्य हि भयंकरत्वात्' इति शुद्धम् । च. पुस्तकस्थो मूलपाठो दुर्बोध्यः 'उलूको हि भयंकरस्तं दृष्ट्वा' इति मूलपाठः स्यात् ।

४३७ १ चनिष्ठोरुलूकसरूप्यात् तस्य उलूकस्य आशङ्कया भीत्या ।

पत्रं ४३७ ... १४०

पत्रं ४३७ पङ्क्तिः

१ नेत् = न + इत् = एतत् ( दुर्गः ) । 'नेत्प्रातिभये' ( निरु० १।१० ) । नेत् वः तोके तनये रविता रवत् । रवणे आक्रोशे कृते रविता उलूकः अन्यो वा दुःशकुनः प्राणी अनिष्टा देवता वा युष्माकं पुत्रेषु पौत्रेषु रोष्यति तान् नाशयिष्यति । 'नेद्वः ० = एतत्कर्म युष्माकं पुत्रेषु च पौत्रेषु च रवितृवन्न स्यात्' इत्यन्वयः ।

१२ स्तोकसूक्ते = 'वपायां श्रप्यमाणायां प्रेषितः स्तोकेभ्योऽन्वाह जुषस्व सप्रथस्तममिमं नो यज्ञमिति' ( आश्व० श्रौ० ३।४ ) ।

१३ अग्नेरध्रिगुत्वं कथमुपपद्यत इति न ज्ञायते । ऋक्शाखायामध्रिगुशब्द इन्द्रस्याग्नेरश्विनोर्मनुष्यस्य च विशेषणत्वेन प्रयुज्यते । अध्रिगुरिति कस्यचिद्राज्ञोऽपि नाम । अस्यार्थो दुर्बोधस्तथा व्युत्पत्तिरपि । अध्रि = अधि । अधि गवां यो वर्तते सोऽधिगुः सन्नध्रिगुरित्युच्येत । 'गवामधिपतिः' 'नेता' इत्यर्थः स्यात् । 'अग्निमग्निं वो अध्रिगुं हुवेम वृक्तबर्हिषः' ( ऋ० सं० ८।६०।१७ ) इत्यत्र 'वो अध्रिगुम्' = वो नेतारम् इत्यर्थः स्यात् । 'स हि विश्वानि पार्थिवा एको वसूनि पत्यते । गिर्वणस्तमो अध्रिगुः' ( ऋ० सं० ६।४५।२० ) इत्यत्र यस्मादिन्द्रो गवामधिपतिस्तस्मात्स एकः सर्वेषां वसूनां पतिर्भवतीत्यर्थो युक्तः । 'अग्ने ओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो' ( ऋ० सं० ५।१०।१ ) । अत्र गवामधिपतिरग्निरोजिष्ठं द्युम्नं याच्यते । 'यस्य ते नू चिदादिशं न मिनन्ति स्वराज्यम् । न देवो नाध्रिगुर्जनः' ( ऋ० सं० ८।९३।११ ) । अत्रापि स एवार्थः । १।६४।३ इत्यत्र रुद्रा 'अध्रिगावः' इति विशेष्यन्ते । ८।२२।११ इत्यत्र स्तोतारस्तथैव । शमितापि गवादिपशून्मारयति । सोऽपि गव्यधिकृतत्वादध्रिगुः ।

४४० ९ 'सुप्रप्रहारी' ( ४३९।१२ ) 'धुनि धुनोतेः शिमीति

पत्रं पङ्क्तिः

४४० कर्मनाम शमयतेर्वा शक्नोतेर्वा ' ( १२–१३ ) न व्याख्यातम् ।

१० सोमस्येन्द्रस्य चाधिकारो विनियतः। सोमो मदेन वीर्यमुत्पादयति । इन्द्रो वृत्रादिवधं कृत्वा वर्षति । १३–१४ सोम इन्द्रो वा संनिहितः । तस्मात् ' अस्य '। १९–२० यैः पदार्थैः इन्द्रः स्तोत्रा प्रतिमीयते ।

४४१ ६ मानानि = यैरिन्द्रो मीयते तानि। २१ किण्वं = तण्डुलादिद्रव्यकृतसुराबीजम् । दुर्गमते किण्वम् = असारं द्रव्यम् ।

४४२ १३ हरिवतीः = हरिभ्यां युक्ताः तल्लक्षणायेष्टाः । १५ ऋजीषं हर्योर्भागः । हरी इन्द्रस्याश्वौ । तेन हर्योर्ऋजीषित्वमिन्द्रे स्थापितम् । एवं लक्षिते इन्द्रे लक्षणा ।

१७ भ्राष्ट्रं = चणकादिभर्जनपात्रम् । १८ ' फले ' इत्यस्य स्थाने ' खले ' इति पाठो दुर्गोपलब्धे कस्मिंश्चित्पुस्तके स्यात् ।

४४३ ६ अचीकमतोतो=अचीकमत + उतो । उत + उ=उतो ।

७ हरी अश्वौ युनक्तीति हारियोजन इन्द्रः । तद्देवताको ग्रहो हारियोजनः । अध्वर्युणोन्नेता हारियोजनग्रहग्रहणहवनादिकर्मणे प्रेष्यतेऽनेन प्रैषमन्त्रेण ।

८ धानाभिर्मिश्रिताः सोमास्तेषाम् । ९ धानाः नित्यं स्त्रियां बहुत्वे च ।

१० ' रथचर्षणे ' ( ३ ) इत्यस्य स्थाने च. पाठः ' रथचर्मणे '। कोऽर्थः । ११ स्वगृहं प्राप्तं त्वाम् । १२ तव पत्नी ।

१६ ' उदृचमिति वा पाठः । यज्ञस्य आगुरः संकलितस्य । उत् उत्कृष्टाम् ऋचं समाप्तिं गम्याम् । ऋचं नाम यज्ञसमाप्तिमिति यावत् ' ( च. ट. )।

४४४ ५ ' अपि एव ' इत्यनयोर्न किमपि स्वारस्यम् ।

१२–१३ ' सोमं प्रवर्तते ' इदमशुद्धं यतः सोमशब्दः पुमान् । ' सोमं सुतम् ' इति ग. च. ज. पाठः । द्वावपि पाठौ दुर्बोधावेव । ' सोमसत्राख्यम ' इति समस्तं पदं स्यात् ।

पत्रं पङ्क्तिः

४४५

४ ' ऊरूभ्यामश्नुते ' इति ' ऊर्वशिनी ' भवितुमर्हति । किमर्थम् ' ऊर्वाशिनी ' ।

१६ नायनेन= नयनसंबन्धिना । नयनात्प्रकाशः पदार्थं गत्वा तं प्रकटीकरोतीति वैशेषिकमतम् ।

२० अभक्षस्येति अप्सशब्दवाच्यार्थस्य प्रत्यायकः । नायं साधुः समासः ।

२५ चातुर्मास्येषु वरुणप्रघासनाम द्वितीयं पर्व ।

२५ वरुणपाशरूपं कर्म घ्नन्तीति वरुणप्रघासा यागविशेषाः । दधिसर्पिर्मिश्रैः सक्तुभिर्निष्पादितानि पात्राणि करम्भाणि । तानि शूर्पे निधीयन्ते । पत्नीयजमानौ तच्छिरसोर्धारयित्वा दक्षिणाग्नौ तानि पात्राणि जुहुतोऽनेन मन्त्रेण ।

४४६

२ यदघं तत् = यत्तदघम् । तत्पदं व्यर्थम् ।

४ अवयजनम् = अपनयनम् । मन्त्रपाठः काठकसंहिताया गृहीतः । निरूपणं तु मैत्रायणीसंहितासदृशसंहितापाठस्य । ' यदेकस्यापि धर्मण्येतदवयजामहे स्वाहा ' इत्यस्य स्थाने मैत्रायणीपाठः ' तदेकस्यापि चेतसि तदेकस्यापि धर्मणि । तस्य सर्वस्यांहसोऽवयजनमसि' । निरूपणे 'तत्'—स्थाने ' यत् ' ( १ – ३ ) ' अंहसः ' स्थाने ' एनसः ' ( ३ ) ।

' अवयजामहे० नाशनार्थः ' घ. ट. ठ. ड. पाठो महीधरकृतवाजसनेयिसंहिताभाष्यात् । वाजसनेयिपाठे ' यदेनश्चकृमावयमिदं तदवयजामहे स्वाहा ' । तत्र ' यदप्स ' इत्यादि न वर्तते ।

' करम्भपात्राणि = यवपिष्टेन निर्मितानि दीपाकाराणि ' ( च. ट. ) ।

५ ' प्रघास्यान् हवामहे मरुतो यज्ञवाहसः । करम्भेण सजोषसः ' । वरुणप्रघासानर्हन्तीति प्रघास्या मरुतः । करम्भपात्राख्यं हविर्मरुद्देवताकम् ।

९ तस्य = आप्लृ व्याप्तावित्येतस्मादुत्पन्नस्य अप्सशब्दस्य ।

१५ आश्विन्य इष्टकाः पञ्च । पञ्चभिर्मन्त्रैः पञ्चेष्टका उपदधाति ।

पत्रं पङ्क्तिः

**४४६** १६ पृथिव्याः पुरीषमसि = त्वं पृथ्वीं व्याप्नोषि । १७ तत्र नाम अप्सः ।

१९ ' अस्मे अस्मभ्यं० यजतिर्दानार्थः ' घ. झ. ट. ठ. ड. पाठो महीधरभाष्यात् । च. ट. पुस्तकयोः प्रान्तभागे लिखितं विवरणमपि तस्मादेव ।

**४४७** १ व्याप्त्यर्थस्य प्रोतेः । १४ अतिशयेन = अतिशयवत् । अनपायि = अनश्वरम् ।

१७ ' स्कन्नं = स्खलितम् ' ( च. ) ।

**४४८** १७ इयं वसिष्ठजन्मकथा बृहद्देवतायां ( ५ । १४९ – १५५ ) वर्तते ।

१९ ' निर्बीज० दुत्पन्नः ' इति प्रश्नः ।

**४४९** १ मत्स्यपुराणे परस्परशापेन निमिवसिष्ठौ विदेहौ जातौ । अत्रान्तरे तपस्तपस्यतोर्मित्रावरुणयोर्दृष्टिपथे पुष्पोच्चयं कुर्वत्युर्वश्यागात् । तद्दर्शने तयो रेतोऽस्खलत् । तद्रेतः शापभीतासौ कुम्भे न्यधात् । तस्माद्वसिष्ठागस्त्यौ जातौ ( मत्स्य० अध्या० २०० श्लो० २३ – २९ ) ।

४ वसिष्ठः स्वजन्मान्तरेणात्मानं कथं संबोधयेदिति विरुद्धार्थः । उर्वश्या दर्शनान्मित्रावरुणयो रेतश्चस्कन्द तस्मात्त्वं जात इति वसिष्ठमन्यः कोऽपि कथयेत् । युष्मदश्चात्र प्रयोगः । ' त्वा ' इत्येतत् युष्मच्छब्दस्य द्वितीयैकवचनम् । ५ इवशब्देन विरोधः केवलमाभास इति सूच्यते । वेदा अनाद्यनन्ताः । वसिष्ठः केवलं द्रष्टा । तस्य जन्म पुरैव वेदे कथितम् । वसिष्ठस्तद्वृत्तस्य केवलमन्वादेशं करोति । ' वृद्धवसिष्ठो वसिष्ठं ब्रवीति ' इति ट. पुस्तके विवरणम् ।

७ द्र = संभृतः + प्सः = प्सानीयः । कदाचित् ' संद्रुतः ' इति यास्केन लिखितं स्यात् ।

१५ पूजायाः कारकं करणं साधनं तत् ।

१६ ' अथवा वपुष्करं तदिति पुष्करम् ' इति पाठः सुबोधः । पुष्करं तदिति वपुष्करं = तत्पद्मं पुष्करमिति किमर्थमभिधीयते । यस्मात्तद्वपुष्करम् ।

**४५०** २१–२२ द्वितीयार्धं प्रत्यक्षं तस्मात् ' स इन्द्रः चकार ' इति तृती-

पत्रं पङ्क्तिः

४५० यपुरुषे प्रयोगो द्वितीयपुरुषे दुर्गेण विपरिणम्यते । २२ इन्द्रः ( अध्याहार्यः ) संतनोति ।

२३ ' तौ ( द्यावादित्यौ ) मिथुनं समैतां ततः प्राणोऽजायत स इन्द्रः ' ( बृ० उ० १ । ५ । १२ ) । एषः सूर्यः ।

४५१ ५ ' न श्रयन्ति = अपि तु श्रयन्त्येव ' ( ट. ) । इदं विवरणं ठ. ड. पुस्तकयोरन्तर्भाव्यते ।

६ अपरिक्लिष्टम् = संबाधारहितम् । यज्ञेषु तवासनं न कोऽपि व्याप्नोति ।

२२ निरुक्तं = प्रयुक्तम् ।

२३ ' केवलं समाम्नायानुक्रमविपर्यासो वाजपत्यम् । वाजगन्ध्यं सनेम वाजस्पत्यमिति ' ( च. पाठः ) = ' वाजगन्ध्यं सनेम वाजस्पत्यम् ' अस्मिन्निगमे ' वाजस्पत्यं 'पदं समाम्नाये योऽनुक्रमः ' वाजस्पत्यं वाजगन्ध्यम् ' इति तस्य विपर्यासः ।

४५२ ५ ग. च. ज. पुस्तकेषु अहीनसूक्ते च ' इति पाठः । अत्र ' च 'पदस्य प्रयोजनं न ज्ञायते ।

११ ' धावति 'शब्दो नात्र समीचीनः । ' ईषति 'शब्दो युक्तः स्यात् । रथस्थ इन्द्रः कथं धावेत् ।

२३ ' गध्यं गृह्णातेः ' ( १८ ) गध्यतिर्मिश्रीभावकर्मा ' ( १९ ) । तेन आगधिता = आगृहीता आमिश्रिता च ।

२४ प्रतिकशं = नकुलम् ।

४५३ १ कशीकानाम्नी नकुलजातिः । ' भूम्या आखूनालभतेऽन्तरिक्षाय पाङ्क्त्रान् दिवे कशान् दिग्भ्यो नकुलान् बभ्रुकानवान्तरदिशाभ्यः ' ( मैत्रा० सं० ३ । १४ । ७ ॥ वा० सं० २४ । २६ ) । कशाः = मूषकभेदाः ( मही० भा० ) । द्युदेवताप्रीणनार्थं मूषकविशेषानालभते । ' काचिद्दिवे कशाम् ' इति ग. च. ज. पाठः । ' सा हि काचिन्नकुलजातिः दिवे कशानिति श्रूयतेऽश्वमेधे ' इति मूलवाक्यं स्यात् ।

१३ ' मेध्यातिथेः ' इति ग. च. ज. पाठः । ' प्रतिगृहीतृ ' ( १६ ) इति च । ' प्रतिग्रहीतृ ' इति शुद्धं रूपम् ।

पत्रं पङ्क्तिः

४५३ २० ऋक्शाखायाम् ' स वावशान इह पाहि सोमं मरुद्भिरिन्द्र सखिभिः सुतं नः । जातं यत्त्वा° ' ( ३ । ५१ । ८ ) एवं मन्त्रो विद्यते । तत्रार्धर्चव्यत्यासो दृश्यते । प्रथमार्धे शब्दा अपि भिन्ना वर्तन्ते । 'तौरयाण'शब्द ऋग्वेदे नोपलभ्यते । अयं मन्त्रोऽन्यशाखास्वपि नोपलभ्यते ।

४५४ १५ ' सत्यताते = सत्यं तनोतीति वा सत्यं तायतेऽस्मिन्निति वा सत्यतातिः ' ( ट. ) इदं ठ. ड. पुस्तकयोरन्तर्भाव्यते । यज्ञस्य तनिता तस्य संबोधनम् ।

१७ ' अन्हयाणः ' इति ग. च. ज. पाठः स्यात् । मन्त्रे तु ' अन्हयाग ' इति संबुद्धिरेव लिख्यते ।

२४ रजतमयं = रजतपूर्णं ( ' तत्प्रकृतवचने मयट् ' ५ । ४ । २१ ) । रजतविकृतं = रजतस्य विकृतिः । रजतकृतम् ।

४५५ १ ' उक्षण्वायनिरिति । न कश्चिदासीत्तस्मिन्यजमानहरणे ' (अशुद्धः ग. ज. पाठः ) = उक्षण्वायन इति कश्चिदासीत्तस्मिन्यजमाने हरयाणे ।

१४–१५ सर्वान्स्तोमान्प्रति देवताभावेनागच्छति । सर्वेषु स्तोमेषु वा नित्यमारितोऽवस्थितः । ' सोमेषु चावस्थानात् ' ( घ. झ. ट. ठ. ड. पाठः ) = सर्वेषु सोमयागेष्विन्द्रो नित्यमागच्छति ।

४५६ १–२ धातोरप्रतीतिरेवानवगमः ।

१८ ' निवर्जयसि = विक्षिपसि प्रापयसीत्यर्थः ' ( ट. ) । एतद्विवरणं ठ. ड. पुस्तकयोरन्तर्भाव्यते ।

२० ' आदित्यस्य च ' ( ६ ) इत्यत्र ' च ' पाठान्तरे नास्ति । दुर्गेणापि तन्न व्याख्यातम् ।

४५७ १ संस्तब्धं = कठिनम् ।

२ ' प्रत्यूर्ध्वं रोरुवत् ' इत्यस्य स्थाने ग. च. ज. पाठः ' प्रत्युर्द्ध रोभूवन् ' । प्रायशोऽयं पाठोऽशुद्धः ।

४ ' वधेन ' इत्यत्र सायणपाठः ' धनानि ' ।

६ निवर्जनसंबन्धात् = ' निवृणक्षि ' इति क्रियापदप्रयोगात् ।

पत्रं पङ्क्तिः

४५७ ६ प्रागञ्चितेन = पुरोगतेन । ७ अद्यत्वे = अद्य ।

१० आदित्यस्य मृदुभावकरणाद्भन्दित्वमस्पष्टम् । ११ संस्तम्भः = अपरिपाकः काठिन्यम् । ११ व्रीडयतिना = व्रीडयति-क्रियापदेन । १२ यत्र = यस्मिन्निगमे । ततः = तस्मात् ।

१२–१३ पूर्वोऽपि स्पष्टः । अयमपि स्पष्टतरः ।

१४ 'वीळयति' ( ४५६ । ७ ) इत्येको निरुक्तमूलपाठः । 'वीलयति' इत्यन्यः । वृत्तिपुस्तकेषु 'वीडयति' ।

४५८ ४ ब्राह्मणस्पत्ये लिङ्गतो बार्हस्पत्येऽपि सूक्ते = अनुक्रमणिकायां २ । २४–२६ सूक्तानि ब्राह्मणस्पत्यानि । यास्वृक्षु बृहस्पतिशब्दः श्रूयते ता बार्हस्पत्याः । शिष्टा ब्राह्मणस्पत्याः । ग. च. ज. पाठे इदं सूक्तं बार्हस्पत्यम् । किमाधारेयमुक्तिरिति न ज्ञायते ।

१३ वीळयतेः स्तम्भनार्थः । स्तम्भनं = काठिन्यम् । तद्वैपरीत्यं मृदुता ।

१४ 'वीडयतिः' ऋक्संहितायामितरासु च नोपलभ्यते ।

१५ 'निष्पपी' अयं लेखनप्रमाद एव ।

४५९ ७ हृदयमोकसोपमीयते । निवासमिव हृदयमनुप्रविश्य ।

८ सत्तव्यम् ( पाठान्तरं ) = ( सद् + तव्यम् ) आसितव्यम् ।

'सदनं प्रतिपश्यतीव' ( ४–५ ) इत्यन्वयः । ९–१० 'भवतो हृद्गतं तमर्थम्' इति च । १० 'अभिसंबन्धयित्वा' इदं नामधातुः 'अभिसंबन्ध' इत्यस्य रूपम् ।

१३ आत्मस्तुत्याश्रयभूतात्कर्मणः ।

१४ उपनामय = अस्मदधीनानि कुरु ।

४६० ३ 'बृहत्यैन्द्री' इति पाठान्तरम् । सर्वानुक्रमण्यां छन्दोनुक्रमण्यां च गायत्री छन्द इत्युक्तम् ।

५–६ आह्वयिष्यामीति यन्मयार्त्विज्यमुपगच्छता प्रतिश्रुतम् ।

६ 'संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः' ( अमर० २ । ७ । ४१ ) । 'युष्माकमुपाकरणार्थम्' अत्र उपाकरण-

पत्रं पङ्क्तिः

४६० स्यार्थो न ज्ञायते । पशोरुपाकरणं = पशोः पवित्रीकरणम् । युष्मान्पवित्रीकर्तुमित्यर्थः स्यात् । उपकरणार्थमिति पाठान्तरे ' युष्मद्धिताय ' इत्यर्थः साधुः । उपकरणम् = उपकारः ।

८ इन्द्रं तर्पयामह इत्युद्देशेन ।

४६१ ८ ' अङ्केति क्षिप्रनामाञ्चितमेवाङ्कितं भवति ' ( ४६० । १८ ) ' निचमनेन ' ( १९ ) इति च न व्याख्यातम् ।

१२ ' लोकः ' इदं पदं न कस्मिन्नपि पुस्तके विद्यते । ' अवस्फुरसि ' इति त. द. पाठः । ' अवस्फुरति ' इति छ. पाठः । ' अवस्फुरिष्यति ' इति दुर्गतर्कितपाठो ड. थ. ध. पुस्तकैः स्वीकृतः । लक्ष्यते = अवगम्यते गृह्यते ।

१३ तदेतत् पुरुषवैलक्षण्यं तस्मात् । ' तदेतत् ' इदं व्यर्थमेव । ' शृणोति च गिरः ' इति पाठः ।

१५ अयं मन्त्रः प्रत्यक्षकृतः । तस्य लक्षणम् । ' अवस्फुरसि ' इति मध्यमपुरुषस्य योगः संबन्धः प्रयोगः । ' अभिसंबन्धी '- पदं व्यर्थम् । अयं मध्यमपुरुषयोगो मन्त्रं प्रत्यक्षकृतस्य यल्लक्षणं तेनाभिसंबन्धयति । प्रत्यक्षकृतस्य लक्षणं मध्यमपुरुषयोग एव ।

१६ प्रथमपुरुषयोगः परोक्षकृतस्य लक्षणम् । ' परोक्षकृताः ( ऋचः ) सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य । प्रत्यक्षकृता मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना ' ( निरु० उत्त० १ । १–२ ) ।

१८ लक्षये = तर्कें मन्ये ।

२१ अस्मिन्सूक्ते प्रत्यक्षकृताः परोक्षकृताश्च द्विविधा ऋचः । तेनेयमृक् परोक्षकृता स्यात् ।

४६२ ५ ' चान्तः ' इति चमधातोर्निष्ठान्तं रूपम् ।

१५ ' श्रुतकक्षः ' इति पाठान्तरम् । सर्वानुक्रमण्यामार्षानुक्रमण्यां च सुकक्षो न तु श्रुतकक्षः ।

४६३ ३ ' निचमन'शब्दः कोशेषु नोपलभ्यते । समुद्रवाची निचुम्पुणशब्दः कस्यामपि शाखायां नोपलभ्यते ।

पत्रं ४६३

पङ्क्तिः

५ नीचैरस्मिन्० = ' अवाचीनानि पात्राणि जलमध्ये भ्रियन्ते यस्मिन्यज्ञविशेषे सोऽवभृथः ' ( महीधरः ८ । २७ ) । पात्राणि स्थालीभ्योऽन्यानि चमसदीनि (७) । सर्वं सोम-लिप्तं जले प्रक्षिप्यते ।

६ तत्र ह्युक्तम् = कुत्रोक्तमिति न ज्ञायते । अवभृथेष्टौ सर्वमु-च्चैरेव पठ्यते । अवभृथेष्टौ ' धानेन भवति ' इति ग. ज. पाठः । ' अवभृथेष्टौ उपांश्वेव चरं ध्वानेति ' इति च. पाठः । अयं पाठः शुद्धीकृतः । मूलपाठः कीदृश आसी-दिति न ज्ञायते ।

कात्यायनसूत्रेषु जलगमनादि सर्वं तूष्णीं क्रियते । ' तूष्णी-मेत्यभ्यवेत्य मज्जयत्यवभृथेति ' ( कात्या० ५ । ५ । ३० ) = गृहात्तूष्णीमपः प्रति गच्छन्ति तूष्णीमेवापः प्रविशन्ति । अत्र सामगानं जलावक्रमणवाचनं च प्रतिषिध्यते ।

७–८ ' अवभृथेति मज्जयति ' ( कात्या० १० । ९ । ३ ) = अवभृथेति मन्त्रेण ऋजीषकुम्भमप्सु नीचैः प्रवेशयति ।

११ अनेन मन्त्रेण पात्राण्यभिसाद्यन्ते एकत्र क्रियन्ते ।

' सोमलिप्तं प्रास्यति ' ( कात्या० १० । ९ । ५ ) = स्नानादनन्तरं सोमलिप्तं द्रोणकलशाद्यप्सु प्रक्षिप्यते ।

' अवभृथं संसादयति ' ( सत्या० ९ । ५ ) = अवभृ-थम् अवभृथे प्रक्षेपणीयं द्रव्यमेकत्र करोति । ' अवभृथद्र-व्यम् = पुरोडाशमाज्यान्यौदुम्बरीमधिषवणफलके खरपांसूनृ-जीषं च यत्किंच सोमलिप्तमन्यत्र चतसृभ्यः सोमस्थालीभ्यः ' ( सत्या० ९ । ५ ) । ' अवभृथनिचुङ्कुणेतीत्यवभृथं संप्र-विध्यन्ति ' ( सत्या० ९ । ५ ) अनेन मन्त्रेणावभृथद्रव्यं प्रक्षिपन्ति जले ।

१७ रेषणं = हिंसनम् ।

१८ ' निचुम्पुण निचुङ्कुणेति च ' ( ४६२ । १२–१३ ) इदं न व्याख्यातम् ।

पत्रं पङ्क्तिः

४६४ १५–१६ त्वा यन्तम् ( १४ ) = अध्वानं यन्तं त्वां तव प्राणं क्षुधा विभ्रस्यमानम् (?विभ्रंसमानं)। क्षुधया पीडितोऽध्वगस्य प्राणः स्वर्गमार्गमाक्रमत इव। अतिथिमन्नदानेन जीवयतीत्यर्थः। त्वायन्तं = त्वा आयन्तम् इति पदे। न तु त्वा यन्तम्।

१७ 'कुमारः' ( ३ ) पदं भाष्येऽध्याहृतम्। यथा कुमारो भूमौ पतितं पक्षिणं पाशया बध्नाति तथा क्षुधा पीड्यमानं प्राणमन्नेन शरीरे बध्नाति।

१७–१८ उच्चिक्रमिषून् प्राणांस्त्वच्छरीरे नियन्त्रयति।

४६५ १ एवमेतत्स्यात् = एवं प्राणोऽप्यध्वगः स्यात्।

१४–१५ अस्य सूर्यस्य संबन्धिनं तं प्रत्युपकारं विजानीहि यस्त्वया०।

१७–१८ ते सर्वे भूतानां च मृत्युना संग्रामे वर्तमाने।

४६६ १४ सायणभाष्ये 'वृकश्चन्द्रमा० विक्रान्तज्योतिष्को वा' अयं विंशतिखण्डस्यैको भागो न तु स्वतन्त्रः खण्डः।

४६८ ५ पृष्ठरोगी अत एव सरलं स्थातुमशक्तः। 'कंचिदक्षम्' इति पाठान्तरम्। अक्षः = रथभागः। अयं पाठोऽयुक्तो यस्मादत्रोच्छेदनमुत्पाटनं भवति। तद्वृक्षस्य तत्सदृशवस्तुनो वा संभवति नाक्षस्य।

६ उत्कर्णो भूत्वा = सरलं तिष्ठन् नयने ऊर्ध्वं कुर्वन्।

८ दर्शनेन = तेजसा।

९ 'ऊर्ध्वकायः' इति पाठान्तरम्। चन्द्रमसः कः कायः।

१४ के ते शाखिन इति न ज्ञायते।

४६९ ९ के एते निदानविदो बह्वृचाः कस्मिंश्च ग्रन्थ एतदाख्यानं विद्यत इति न ज्ञायते।

२३ 'उरान् = ऊर्णावतः' ( च. )।

४७० १ आभूषति = पराभवति इत्यर्थः स्यात्। 'उपकरणसंपत् सम्वन् स' ( च. पाठः )। 'सम्वन्'शब्दस्यार्थो न ज्ञायते।

४ सरमायाः पुत्रा नप्तारोऽपि देवानामेव श्वानः स्युः।

५ देवैरितरेषां वन्यपशूनां स्वीकाराभावात्।

पत्रं पाङ्क्तिः

४७० १३ 'वाशृ शब्दे' (धा० ४। ५७)। नायं भूवादिगणस्थः। 'वासते' इति ग. च. ज. पाठः।

१९ वाशिते सति परितुष्टः = वाशितेन परितुष्टः।

४७१ ३–४ 'अनाश्रितमन्यत्र क्वचित् = न तच्चर्मचक्षुः। अविनाशीत्यर्थः।

४७२ ३–४ 'ऋतस्य वर्धयितारौ' (४७१।१२) इति सायणगृहीत-पाठो दुर्गस्यापि संमत इति भाति।

६ 'विविजज्ञपः' (ग. च. ज. पाठः) विविक्ते जपतीति। विजज्ञपः = विजने जपतीति।

१४ विजज्ञपो जपत्येव न जुहोति। इन्द्राग्नी तस्य गृहे भक्ष्यं न लभेथे।

१५ जोषवाकम् = अविज्ञातम्। जोषवाकशब्दः अविज्ञातस्य नामधेयम्। अविज्ञातवाचीत्यर्थः।

२१ 'नृमेधपुरुमेधौ' सर्वानुक्रमण्यामार्षानुक्रमण्यां च।

४७३ १ यथा पितृभ्यो भागोऽनायासेनोत्पन्नो भवति तस्य च लोकाः प्रणयिनः तथा राधस्त्वत्त उत्पन्नं वयं याचामहे। तस्य च वयं प्रणयिनः। उत्पन्नप्रणयित्वात् (पाठान्तरं) = वयमि-तरलोकवदुत्पन्नस्य प्रणयिनस्तेन कारणेन।

२ स्थिरशरीराणाम् = जीवताम्।

'सुमहत्त इन्द्र शरणमन्तरिक्षे कृत्तिरिव' (४७१। १४–१५) अयं भाष्यस्थः क्रमः 'सु' इति पदं च व्याख्याने न विद्येते।

४ 'सुम्ना नः' (४७२।२०) इत्यस्य स्थाने 'सुन्वानः' 'अश्नवन्' (४७२।२०) इत्यस्य स्थाने 'अश्नवम्' इति दुर्गस्वीकृतपाठौ भातः। 'सुम्ना नः' इत्यस्यार्थः क. ख. घ. झ. ट. ठ. ड. पुस्तकेषु दीयते नेतरेषु। 'येन' पदं व्यर्थं यस्मात्तस्यान्वयः कठिनः।

१३–१४ 'कृत्तिवासाः०' अस्य स्थाने ङ. ध. थ. पुस्तकेषु 'कृत्तिं वसान आचर पिनाकं बिभ्रदागहि' (४७१। १६)।

पत्रं पङ्क्तिः

४७३ १७ 'न्याय्यं' = व्याकरणानुसारि रूपम् ।

१८ 'आश्रुतम्' इति ग. च. ज. पाठस्तथा छ. त. द. पाठोऽपि ।

४७४ ५ 'कृतादीनाम्' इत्यत्र च. मूलपाठः 'त्रेतादीनाम्'। आस्फारे = अक्षाणां पाते ।

६ यत्स्यात् (पाठान्तरं) = यदि स्यात् ।

८ द्वितीयं 'यत्' व्यर्थम् । १२ अत्र चोक्तः समाधिः । (४७०।७-८)।

१८ कृतत्रेतादयो द्यूतशब्दाः । कृतसंज्ञक उत्तमोऽक्षपातः । स विद्यतेऽस्य स कृतवान् ।

१९ 'अन्यैः कितवैः सह' ग. च. ज. पाठः । 'सह' स्थाने 'स हि' पाठान्तरम् । अन्यैः कितवैः सहायमपि कृतवान्स्यादिति सुहृद्भिराशास्यते ।

४७५ २ पत्रं ५३।२० इत्यत्र ग. ज. घ. झ. ट. पाठः 'अंशेन त्व नेम°' च. पाठः 'त्व त्वत् नेम°'। अत्र ग. ज. पाठः 'अशीतिनत्वसमसिमेत्यनुच्चानीत्युक्तम् । मसिमेत्यनुर्दानीति ह्युक्तम्'। च. पाठः 'श्रीत्वत्वसमसिमने मेत्यनुच्चानीत्युक्तम्'। कस्मिन्ग्रन्थ इदं सूत्रं कश्च मूलपाठ इति न ज्ञायते ।

४७६ १ स्वभूतिः = स्वस्मात् भूतिः उत्पत्तिर्यस्य सः ।

५ 'यदन्यद्भवति' अत्र 'अन्यत्' व्यर्थम् ।

१० किं त्वेतद् दृष्टव्ययत्वान्नामैव भवितुमर्हति : । अनुदात्तत्वान्नार्हति । दुर्गकृतविवरणं न सरलम् । अत्र तथा निरु० १। ८ (पत्रं १४।१७) इत्यत्र च द्रष्टव्ययम् इति पाठः । उभयत्र क. ख. द. पाठः 'दृष्टव्ययम्'। 'दृ' स्थाने 'द्र' इत्युच्चारस्य कारणं न तर्क्यते ।

१८ भोज्यं = भोग्यतां = मित्राणां सोमजीव्यत्वम् । त्वद्दत्तसोमेन जीवन्ति ते मित्राणि । अंशोपजीव्यत्वं (पाठान्तरं) = सोमांशोपजीव्यत्वम् । यानि धनानि तानि ।

२१ 'शिशीतिर्दानकर्मा' (४७५।११) न व्याख्यातम् ।

पत्रं ४७७ ४७८ ४७९ ४८० ४८१ ४८२ ४८३

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ४७७ | ११ | ' उरुष्यती रक्षाकर्मा० न्यके समे ' ( ४६५ । १२ ) न व्याख्यातम् । |
| | २६ | ' युवां पूरयति ' ( ४७७ । ४ ) इत्यन्वयः । |
| ४७८ | २–३ | सर्वभूतानां बुद्ध्यधिदेवताभावेनावस्थितः । ३ प्राणभावेनावस्थितः सर्वभूतान्तर्गतानामपां जरयिता । |
| | ७–८ | नरौ द्यावापृथिव्यौ आदित्य उदकेन पूरयति । |
| | १० | पृणातिनिगमौ ( ४७७ । १७ ) = पूरयत्यर्थौ । प्रीणातिनिगमौ = प्रीणयत्यर्थौ । |
| ४७९ | ९ | ' दुःपूर्यं ' निरुक्तमूले सर्वपुस्तकेषु ' दुष्पूयम् ' ( ४७७ । २० ) । |
| ४८० | ४ | ' प्रथमा देवहूतयः = पूर्वे मुख्या वा देवानामाह्वातारः ' ( ट. ) । इदं ठ. ड. पुस्तकयोरन्तर्भाव्यते । सायणभाष्याद्गृहीतमेतत् । |
| | १० | ' ऋणेनैव न्यविशन्त । नीचैरविशन्त । अधोगतिं प्राप्ता इत्यर्थः ' इदं पाठान्तरं सायणभाष्याद्गृहीतम् । ' ऋणे हैव ते न्यविशन्तास्मिन्नेव लोक इति वा ' ( ४७९ । १७ – १८ ) इदं न व्याख्यातम् । तथा ' पृथक्प्रयतेः ' ( ४७९ । १४ ) । ऋणे हैव न्यविशन्त = ऋणमुक्ता न भवन्ति । ऋणबद्धा अस्मिन्नेव लोके तिष्ठन्ति । |
| | ११ | अभ्याशो ह यत् = क्षिप्रमेव । १६ समीरितः = प्रसारितः । |
| ४८१ | ४ | निर्वर्तय = संपादय । ६ ' धत्स्व ' ( ४७९ । २१ ) न व्याख्यातम् । |
| | ९ | धर्मणे धारयित्रे ते तुभ्यम् । १० कर्म करणं यस्य येन कर्म क्रियते स कर्मकरणः । |
| | २१ | विश्वामित्र इन्द्रस्य प्रियं धामोपेयाय । स ' ऋषे ' इति संबोध्यते । |
| ४८२ | १ | विकल्पतः = विविधार्थत्वात् । |
| ४८३ | २ | ' द्रोणं द्रुममयं भवति ' ( ४८२।११ ) अत्र द्रोणशब्दो नपुंसकः । कोऽर्थः । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ४८३ | ३ | ' अवतम् = अवटं निम्नभूतमिति यावत् ' ( च. ट. )। इदं ठ. ड. पुस्तकयोरन्तर्भाव्यते । |
| | ४ | व्यापयन्ति = ' व्याप्नुवन्ति ' इति न्याय्यम् । ( ' आप्लृ लम्भने ' १० । ३०६ ) । |
| | ६ | कोशस्थानीयानि = यथा कोशाः कूपेषु तथा अंसत्राणि संग्रामे । कोशः = चर्ममयं पात्रम् । दृतिरित्यर्थः । ७–८ जलवन्नरा उत्सिच्यन्ते । ८ किंचित्साधर्म्यम्=संग्रामकूपयोः सादृश्यमल्पम् । |
| | ९ | संग्रामाधिकारात् । विषयः संग्रामोपमा । तस्य चोत्सेचनेन संबन्धः । संग्रामे धनुःकवचेभ्यः किमन्यदुत्सिच्येत । |
| | ११ | ' ततः'पदं व्यर्थम् । |
| ४८४ | १२ | इदं त्वन्यत्= ' आवह ' पदं भिन्नमाहावपदात् । ' आहावः ' ' आवहः ' आपाततः समानध्वनी एतौ शब्दाविति कृत्वा यास्कस्तौ निर्वक्ति । अथवा । ' द्रोणाहावम् ' इत्यनेन ' द्रोणावहम् ' इति पाठः सूचितो भवेत् । तेन ' आहावः ' यथावस्थित एव निरुक्तः । यदि ' आवहः ' इति पाठः कल्प्येत तदा ' आवहनात् ' इति व्युत्पत्तिः । द्रोणो द्रुममय आवहो यत्र स कूपः । आहावो द्रुममय आवहोऽपि द्रुममयः । यथा कूपे आवहस्तथा संग्रामे आहावो रथः । कूपोपमया आवहशब्दः सूच्येत । |
| | १३ | उह्यतेऽस्मिन्नुदकमित्यावहो न तु ' आहवः ' । ' आहव आहवनात् ' ( पाठान्तरम् ) इति नैकस्मिन्नपि पुस्तके निरुक्तपाठः । ' आवहनात् ' इत्यावहधातोर्विपरिणतस्य नामीभूतस्य न तु ' आह्वे ' धातोः । ' आवह'शब्दः कोशेषु ' मरुद्विशेषे ' ' अग्निजिह्वायां ' च वर्तते । ' आवहः = बलीवर्दादीनां जलपानार्थं जलाधारविशेषः । स च काष्ठमयः ' ( च. ट. ) । |
| | १४ | अव = अवाङ् । आततः = गतः । अवाततो नीचैर्नीचैः खन्यमानो महान् भवति । ' महानवाततो भवति ' ( ४८२ । १२ ) इति दुर्गस्वीकृतमूलपाठः स्यात् । |

पत्रं ४८३

पङ्क्तिः

१५ 'कुष निष्कर्षे' (धा० ९।४६)। निष्कर्षः = विलेखनम्। १६ कुषितः = विलेखितः वितानितः।

१७ आचितः संचितश्चितः। मात्राः द्रव्यांशाः। द्रव्येण पूरितः। महत्त्वात् = महान् द्रव्यसंचयस्तेन। 'आचितमात्रो महान् भवति' (४८२।१५) = यदा द्रव्येण पूरितं भवति तदा महद्भवति। मात्राभिराचितो भवति महत्त्वात्। (दुर्गः) = संचयकोशः कोशागारं महानत एव मात्राभिराचितो भवति।

२० 'कोकुवा' (४८२।१७) कोशेषु नोपलभ्यते। २१ 'सा एतस्मिन् धीयते' (४८२।१७) इति दुर्गपाठः।

४८४

१ तथाविधं = शब्दानुकरणात्मकम्। 'कोकूयमाना' 'कोकूयतेर्वा शब्दकर्मणः' (४८२।१७-१८) न व्याख्यातम्। 'जिह्वा कोकूयमाना (शब्दाननुकुर्वाणा) वर्णान्नुदति तस्मात्कोकुवा। अथवा। शब्दार्थस्य कोकूयधातोः कोकुवाशब्द उत्पन्नः स्यात्' इति यास्कस्यार्थः। कोकुवा तालुनि वर्णान्नुदति तस्मात्कोकुवानुदनात्तालु काकुदं कथं स्यात्। दुर्गविवरणं निराधारं भाति। 'तालुवर्णान्' (ग. च. ज. पाठः) = तालुनि उत्पन्नान् वर्णान्। नुदधातोर्भावे नोदनं न तु नुदनम्।

५ तालु कथं तीर्णतममङ्गम्। कथं चेतरेभ्योऽङ्गेभ्यो विस्तीर्णतरम्। तीर्णतमम् = उच्चतमम् इत्यर्थः स्यात्।

६ तलं लततेरिति दृष्टम्। तेनेतरस्य तालुशब्दस्य प्रतीतिः। दृष्टेन प्रतीतिर्भवतीति तलशब्दोदाहरणम्। लतधातुर्धातुपाठे न विद्यते।

११ अस्य खण्डस्य द्वौ पाठौ। छ. त. द. पाठो दुर्गेण न स्वीकृतः। अस्मिन्पाठे 'सुदेवस्त्वं कल्याणदानो०' किमियमृगथवा 'सुदेवो असि०' इत्यस्या विवरणमिति न ज्ञायते। 'इत्यपि निगमो भवति' इति वचनादयं निगमः स्यात्। किंतु नायं निगमः। 'कल्याणदेवः कमनीयदेवो

| पत्रं | पङ्क्तिः | |
|---|---|---|
| | | वा भवसि ' ( ४८४ । १२ ) ' सिन्धुः स्रवणाद्यस्य ते सप्त स्रोतांसि तानि ते ' ( १३ ) ' कल्याणोर्मिस्रोतः सुषिरमनु यथा ' ( १४ ) न व्याख्यातम् । |
| ४८५ | ४ | अश्वेत्यादीनि कासांचिदिष्टकानां नामानि । तैत्तिरीय ( ४ । ४ । ५ ) मैत्रायणी ( २ । ८ । ३ ) काठक ( २२ । ५ ) संहितासु भिन्नानि नामानि । |
| | ७–८ | यथा सूर्मि कल्याणोर्मि स्रोतः सुषिरमनुक्षरति तथा । यथा महान् जलौघो नगरोदकनिःसरणभ्रमिभिर्वहति तथा । ' निःसरणभूमिमिव ' इति पाठान्तरम् । सिन्ध्वनुक्षरणस्य तालुनश्च कः संबन्ध इति न ज्ञायते । |
| | ८ | समवस्रुत्य = पूरयित्वा । ९ दुर्वचनं ( 'दुर्वचनत्वं' पाठभेदे) = अस्या ऋचो निर्वचनं कठिनम् । अयमर्थोऽन्योऽपि वा कश्चित्स्यात् । १२ दुर्वाच्यत्वं कृत्स्नाध्ययने प्रयोजनम् । |
| | १३ | ' काकुत् 'शब्दास्त्रिःकृत्व एव ऋक्शाखायामुपलभ्यते । |
| | १४-१८ | दुर्गकृतविवरणस्य मूलमागामिनि खण्डे ' बीरिटमन्तरिक्षं० गणे मनुष्याणाम् ' ( ४८६ । ४–६ ) । इदं ' बीरिटं तैटिकि० निगमो भवति ' ( ४८४ । १४–१६ ) इत्यस्मादत्यन्तं भिन्नम् । ' बीरिटम् ' अत्र पूर्वं पदं ' वि ' वयतेः । उत्तरम् ' इरिटम् ' इरतेः । वि = वयांसि + इरिटम् = इरन्ति अस्मिन् । अथवा । बि = वि = भांसि । भांसि इरन्ति अस्मिन् । नेदं निर्वचनं यास्कसंमतम् । ' तदेतस्यामृच्युदाहरन्ति ' इत्यस्यानन्तरम् ' अपि निगमो भवन्ति ' किमर्थम् । छ. त. द. पुस्तकेषु खण्डपाठो भिन्नः । तत्रेदं बीरिटशब्दस्य निर्वचनं नास्ति । दुर्गस्वीकृतपाठो महाराष्ट्रपाठाद्गुर्जरपाठादपि भिन्नः । ' सुदेवस्त्वं कल्याणदेवोऽसि यस्य ते सप्त सिन्धवः काकुदमनुक्षरन्ति सूर्मि सुषिरामिव ' इति तस्य पाठः स्यात् । अपपाठैः प्रक्षिप्तपाठैश्चायं खण्डः संकुलः । |
| | १७ | गणाभिधानपक्षे = यदा बीरिटशब्दस्य गणोऽर्थस्तदा निर्वचनोपपत्तिः ४८७ । ७-९ इत्यत्र द्रष्टव्या । |

पत्रं पङ्क्तिः

४८७ ११ 'नियमात्' इति ग. च. ज. पाठः । 'नियुज्यन्ति' (१२) इति च । १५ अच्छ = आप्तुम् । अभेरुत्पन्न इत्यर्थः स्यात् ।

२० 'षष्टेऽध्याये निघण्टयुक्ते' २३ 'निघण्टसहिते नवमेऽध्याये इति ठ. ड. पाठौ । २२ 'इत्यनेन' । निरुक्तमूले 'इत्येतेन' (४८६।९)।

४८८ ९ 'त्रिष्टुप् । वैश्वदेवी । ऋत्विक्स्तुतिर्वा' इदं सायणभाष्यादुद्धृतम् । अग्नौ = अग्निचितौ । चितेर्दक्षिणश्रोणेः पश्चिमे तिष्ठन्नध्वर्युः प्रतिप्रस्थात्रोत्तरांसपूर्वे षड्भिर्वा दशभिश्चतुर्विंशत्या वा युज्यमानमौदुम्बरं हलमभिमन्त्रयते । 'षड् द्वादश चतुर्विंशतिं वा युनक्ति बलीवर्दान्' (का० श्रौ० १७।२।१०)। पूर्वेणोत्तरांसं दक्षिणामग्निश्रोणिमपरेण तिष्ठन्युज्यमानमभिमन्त्रयते' (तथैव ११)। 'दाम्नः = अनडुत्' (च.)। ११ सीराणि = युगानि = हलानि । युनक्त बलीवर्दैः । वितनुत = कर्षत । 'वितनुत = विस्तारयध्वम्' (ट.)। इदं ठ. ड. पुस्तकयोरन्तर्भाव्यते । १८ दात्रं = लवनम् ।

१५ अवस्थितं = सस्यम् । नेदीयः = अन्तिकत्तरम् । सस्यमविरलं रोहतु । तेनाल्पिष्ठेऽपि स्थले प्रचुरं सस्यं लब्धं स्यात् । आक्रष्टुम् = उत्पाटयितुम् ।

१९ अङ्कुशेनैक एव सस्यस्तम्ब उत्पाट्यते । दात्रेण बहूनि लूयन्ते । सस्यमङ्कुशेन नाकृष्यते । तदा = लवनसमये । अङ्कुशो धान्यकणान् भूमौ निदधाति । द्वितीयोऽर्थः साधुः ।

---

## षष्ठोऽध्यायः

४९१ ७–८ 'अतिक्रम्येमुत्तर०' (च. पाठः) = अतिक्रम्य + इदम् + उत्तर० । 'द' लेखने गलितं स्यात् । ८–९ 'क्षणिः' अयं शब्दो विकल्पेन 'क्षणोतेः सनोतेः' वा । ९ 'षण संभक्तौ' (धा० १।४६५) 'षणु

पत्रं पङ्क्तिः

दाने ' ( धा० ८ । ३ ) । सनोतिः संभजनार्थो धातुपाठे न वर्तते तथा ( १० ) दीप्त्यर्थः शुचिधातुः । ' शुच शोके ' ( धा० १ । १८३ ) ' शुचिर् पूतीभावे ' ( धा० ४ । ५९ ) ।

४९२ १२–१३ ' निःषिक्तं तस्मात्पापकम् ' ( ४९० । १० ) इति दुर्गस्वीकृतमूलं स्यात् ।

२४–२५ ' आसदनात् । तं तमर्थं प्रत्येता आसन्ना भवन्ति । अपि वाभ्यशनात् । अभ्यश्नुवते ह्येतास्तं तमर्थम् ' ( १७४ । २०–२१ ) । एवं ' दिक् 'शब्दो व्युत्पादितः । अभ्यश्नुवते = व्याप्नुवन्ति ।

४९३ ६ ' दृढमवदः ' इति क. ख. च. पुस्तकस्थ ऋक्पाठः । वृत्तावपि स एव सर्वेषु पुस्तकेषु ।

२१–२२ ' चोः कुः ' ( ८ । २ । ३० ) इत्यनेन रुज् = रुक् । विपरीतः क् + उ + र = कुर । रस्थाने लः । तेन कुल् । कुल् + अम् = कुलम् । ' रुजो भङ्गे ' ( धा० ६ । १३५ ) ' रुज हिंसायां ' ( धा० १० । २७१ ) वा ।

२२ रुज् + तं = लुज् + तं = लेज् + तं = लेष् + टं = लोष्टं = लोष्टम् । रुष हिंसायामित्यस्मात् ' लोष्ट'शब्दः स्यात् ।

४९४ ६ ' अपि ' निवसन्तं गच्छन्तमित्यनेन संबध्यते । ' क्षियन्तम् ' ( १ ) इत्यस्य स्थाने ठ. ड. पुस्तकयोर्ऋक्पाठे ' द्युमन्तं ' वर्तते । वृत्तौ तु क्षियन्तमेव ।

१४ सायणस्वीकृतनिरुक्तमूले ' अलातृणो वल इन्द्र व्रजो गोः ' इत्येतावानेव ऋगंशः पठ्यते न तु सर्वा ऋक् ।

४९५ १ ' उतृदिर् हिंसानादरयोः ' ( धा० ७ । ९ ) । तृदधातुर्न चुरादिगणस्थः । आतर्दयितुं हिंसितुं प्राणिनोऽतिवृष्ट्या ।

४ गुणान्तरत्वादजामि = यथा बलनाम्ना मेघस्यावरणगुणो दर्श्यते तथा व्रजनाम्ना तस्यान्तरिक्षसंचारो गुणो दर्श्यते ।

पत्रं पङ्क्तिः

४९५ तस्माद् व्रज इत्यनेन न मेघनाम्नः पुनरुक्तिः । 'जामीत्येतदतिरेकनाम' ( ३५१ । ४ ) । ६ भवत इयं भावत्का ।

१२ यथानिम्नम् = निम्नमनतिक्रम्य निम्नप्रदेशेन । उदपानम् = उदकं पानार्थं यस्मादुद्धृत्यते तद् । 'एकहलादौ पूरयितव्येऽन्यतरस्याम्' ( पा० ६ । ३ । ५९ ) इत्यनेन 'उदकपानम् उदपानम्' इति द्वे रूपे । १३ उपदस्येत् = क्षीणं भवेत् ।

२१ 'सरति' अयं प्रमादः । 'रसति' इति निघण्टुषु ( ३ । १४ । ४० ) । २३ 'निरजे गाः' इत्यत्र गोशब्देन गाव एवोच्यन्ते नोदकमिति केचिद्व्याख्यातारः । गवां संहतिर्गव्या । गवीशब्दः कोशेषु नोपलभ्यते । पशुगव्याः = पशवो या गावस्तासां संघाताः ।

४९६ २१ आ कस्माद्देशात् = कियन्तं देशमभिव्याप्य ।

४९७ २ अप्रतिपक्षं = यथा प्रतिपक्षं न जानीयात्तथा संमृदम् । 'सलुब्धम्' इति ठ. ड. पाठः सर्वत्र ।

६ 'मूलमध्याग्र०' ( पाठान्तरं ) = सहमूलमुद्धृत्यते मध्याग्रौ च छिद्येते तस्मान्नायं पाठः साधुः ।

१० 'मूलं मोचनाद्वा मोषणाद्वा मोहनाद्वा' ( ४९६ । ७–८ ) 'अग्रमागतं भवति' ( ८ ) 'अभ्यस्तात्तपुषिस्तपतेर्हेतिर्हन्तेः' (१०) इदं न व्याख्यातम् ।

४९८ १३ अग्निना प्रकाश्यमानो विषयः ( प्रदेशः कार्यभूमिः ) यस्य सः । 'कर्मणि प्रवर्तते साधुन्यसाधुनि वा' ( पाठान्तरम् ) । १३–१४ साधुभ्यः साधुना कर्मणा स्वकर्मफलभोगायेदं सर्वं विनिर्मीयते । सार्वलौकिकं = सर्वजनसंबद्धम् । प्रायः सर्वकर्मणामितरजनैः संबन्धः । अथवा । सर्वेषां लोकानां कर्मणा । वस्तुतस्तु 'सार्वलौकिकेन' इदं व्यर्थं तथा 'स्वकर्मफलभोगाय' इत्यत्र 'स्वकर्म'। सार्वलौकिकेन कर्मणा स्वकर्मणा ( च. पाठः ) = स्वकृतकर्म साध्वसाधु चेतरैः संबध्यते ।

पत्रं पङ्क्तिः

४९८ १५–१६ वाचा सर्वं ख्यायतेऽभिधीयते । वाचश्चाग्निरधिदेवता ।

१८–१९ 'इयं वा अग्निर्वैश्वानरः' इति मैत्रायणीसंहितापाठः ( मैत्रा० सं० २ । १ । २ ) ।

४९९ ५ जरायुजाण्डजस्वेदजोद्भिज्जा इत्येवं चतुर्विधो भूतग्रामः । ७ क एते केचित् । ८ 'विरोहणाः' इत्यवगमः स्यान्न तु 'विरोहणात्' ( पाठभेदे ) । अवगमशब्देन संस्कृतरूपमभिधीयते । 'विरोहणाः' इति च. पुस्तके शुद्धीकृतः पाठः ।

१३ 'हे ओषधीः ० प्रसूवरीः' इत्यधिकपाठः ( क. ख. घ. झ. ट. ठ. ड. पुस्तकेषु ) सायणभाष्यात् ।

५०० १७ निकृत्त=यद्धस्वं तदादौ महत् सत्कर्तनेनैव ह्रस्वं भवति ।

५०१ ३ 'परिपालनसमर्थ एव' अत्र 'एव' अप्यर्थे ।

९ छ. त. द. पुस्तकेषु 'निशृम्भा निश्रध्यहारिणः' ( ४९६ । १७ ) नास्ति ।

५०२ ६ वृत्तौ ठ. ड. पुस्तके वर्जयित्वा 'निश्रथ्यहारिणः' इति पाठः । 'निश्रथ्याहारिणः' ( ५०१ । १४ ) इति निरुक्तमूले दाक्षिणात्यपाठः । गुर्जरपाठः 'निश्रथ्यहारिणः' ।

८ 'जनश्रियम्' पूषणमित्येतस्य विशेषणम् । ९–१० अजास इत्यनेन समानविभक्त्यन्तत्वात् । ११ निश्रथ्या = निश्लथया । 'निश्लथ्यहारिणः' ग. च. ज. पाठः ।

१६ अनुक्रमणिकायां काण्वस्य मेधातिथेरार्षम् । ८ । २९ इत्यस्य सूक्तस्य मारीचः कश्यपो मनुर्वैवस्वतो वा ऋषिः । ८ । ३२ इत्यस्य मेधातिथिरेव ऋषिः ।

५०३ ३ 'वक्तव्यमस्मा उक्थम्' ( ५०१ । १५ ) इति निरुक्तमूलपाठः । वृत्तौ सर्वत्र 'वक्तव्योक्थः' इति । अयमेव दुर्गस्वीकृतनिरुक्तमूलपाठः स्यात् ।

११ 'सौमेन्द्रं चरुं निर्वपेच्छ्यामाकं सोमवामिनः' ( मैत्रा० सं० २ । २ । १३ ) । प्रातःसवनादिप्रयोगे यो यजमानः पीतं सोमं वमति स एव सोमस्य वमनादिन्द्रियसामर्थ्य-

पत्रं पङ्क्तिः

प्रदेन सोमपानेन व्यृद्धो भवति । तादृशसोमवामिनो यजमानस्यायं चरुः ।

५०३ १५ ' संसचेयं = संगतो भवामि ' ( ट. ) । इदं ठ. ड. पुस्तकयोरन्तर्भाव्यते ।

५०४ २२ ' वैश्वानरनामाग्निः सौचीकनामा वा तस्य ।

५०५ ३ हनने सामर्थ्यं ययोस्ते ( च. पाठः ) । ४ विविधं पृथक् अवधृते स्थिते । ४—५ ' हविषि दारुणि वा ' ( च. पाठः ) = एकस्मिन् हविषि एकस्मिन् दारुणि वा स्वसामर्थ्यं प्रयुङ्क्तः ।

१८ ' क्रिमिर्ना कृमिवत्कीटे ' ( मेदिनी ) । एवं कृमिर्वा क्रिमिर्वा ।

५०६ २—३ ' अस्माकमेतामरमतिम् ' इति ग. च. ज. पाठः । का अस्माकम् अमतिः = अयं परिसमाप्तविद्यो यजमानः । ५ ' अनुनेषथ = प्रति अनुक्रमेण नयथ ' ( ट. ) । इदं ठ. ड. पुस्तकयोरन्तर्भाव्यते ।

८ ' मोषयन्ति ' इति णिचि स्यात् । किंतु तस्यात्र प्रयोजनं नास्ति । मुष चुरादिगणे नास्ति ।

१० ' ऋञ्जभाः ' ( ग. च. ज. पाठः ) । ऋञ्जः = ऋजुः ( ऋक्शाखायाम् ) ।

१९ ' आङ्गेः ' इत्यनुक्रमण्यां न तु ' अङ्गस्य ' इति । ' अंहुस्य ' इति च. पाठः ' अङ्गस्य ' इति ग. ज. पाठः ।

१७—१८ ' अग्ने नेमिरराँ इव देवाँस्त्वं परिभूरसि ' इत्यृक्शाखायां पाठः ।

५०७ ३ एकमेव पदमेकपदम् । नात्र द्वे पदे ।

१० वाचि एव सारो यस्य । ' वाचि वीर्यं द्विजानामितिवत् ।

१४ इतरो दुर्मदस्तद्वत् ।

१९ ' दूनदवननाद्वा ' ( च. पाठः ) = दूननाद्वा + दवनाद्वा ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ५०९ | ११ | 'अवनेनान्नम्' ( ५०९ । २ ) इति छ. त. द. पाठः । १४ 'अनेनान्नम्' इति नैकस्मिन्नपि पुस्तके । |
| | १९ | निरुक्तमूलस्य द्वौ पाठौ गुर्जरमहाराष्ट्राविति ठ.ड. पुस्तकयोर्लिखितम् । |
| | २० | 'अनावृष्ट्यां तु वर्तिन्यां पप्रच्छर्षीञ्छचीपतिः । काले दुर्गे महत्यस्मिन्कर्मणा केन जीवथ । शकटं शाकिनी० ' ( बृहद्दे० ६ । १३७—१३८ ) । यास्कनिरुक्तोत्था बृहद्देवता । तस्मादेतच्छ्लोकद्वयं निरुक्तमूले भवितुं नार्हति । गुर्जरपाठः प्राचीनः । महाराष्ट्रीयोऽर्वाचीनः । |
| ५१० | १ | सक्तुः = भृष्टयवपिष्टम् । २ 'उपलेषु = दृषदादिषु' ( च. ) । 'उपलेषु = वालुकासु' ( च. ) । 'प्रक्षिणाति' ( ५०९ । १९ ) निरुक्तमूले । 'प्रक्षिणोति' वृत्तौ । |
| | ८ | 'इन्द्र ऋषीन् ० निगदव्याख्याता' ( ५०९ । २०–२२ ) न व्याख्यातम् । |
| ५११ | ३ | अनाकाले = दुर्भिक्षे । |
| | ४–५ | बहिर्वा यज्ञाल्लौकिकीभिर्वाचोयुक्तिभिः प्रियवक्ता आसम् । |
| | १० | तन्यतेऽस्मादिति तन्यतेऽसाविति वा ततः । |
| | ११ | सवनीयानां = धानासक्तुकरम्भादीनाम् । |
| | ११–१२ | 'सदासीत्' इति ग. च. ज. पाठः प्रामादिकः । 'दासी पिनष्टि पत्नी वा' इत्यापस्तम्बसूत्रम् ( आप० श्रौ० १ । २१ । ८ ) । |
| | १३ | 'इतरेषां लौकिकानां वा' इति 'वा'पदमावश्यकम् । |
| ५१२ | २ | 'सनिस्त्वध्येषणा याच्ञा' ( अमरः २ । ७ । ३२ ) । अध्येष्यमाणः = प्रार्थ्यमानः याच्यमानः । |
| | ९ | 'पत्तः= पादैरित्यर्थः' ( च. ) । |
| | १५ | आदित्योपसंस्तब्धाम् = आदित्येनात्मन्युपस्थापिताम् । |
| ५१३ | ३ | प्रकलाः = अल्पकलाः । ९ प्रत्यधिष्ठानं = मुख्याधिष्ठानविरुद्धमधिष्ठानम् । |

पत्रं पङ्क्तिः

५१३ १७ उदकस्याल्पदानम् । तस्योपमया संबन्धः ।

१८ अवयवानां प्रत्यवयवभूताः कलाः प्रकलाः । अवयवानामवयवाः प्रत्यवयवाः । कलाः अवयवाः तासां प्रकलाः प्रत्यवयवाः । २१ ' यज देवपूजासंगतिकरणदानेषु ' ( धा० १ १०२७)। २० ' ऋधु वृद्धौ '। ( धा० ४ । १३९ )।

५१४ ४ ' ऋजिश्वा नाम भारद्वाजस्तस्यार्षम् ' इति मूलपाठेन भवितव्यम् । ग. च. ज. पुस्तकेषु ' भारद्वाजः ' नास्ति । इतरपुस्तकेषु ' ऋजिश्वा नाम भारद्वाजस्तस्यार्षम् ' इति प्रामादिकः पाठः ।

६ ' मियक्षति ' एतत् ' म्यक्षति ' ( निघ० २ । १४ । ३६ ) अस्य पाठान्तरं न त्वन्यो धातुः । ' इयक्षतिः ' ( पाठभेदे ) अन्यो धातुः ( निघ० २ । १४ । ४४ )। ' म्यक्षतिर्मियक्षतिर्वा ' एतत् ' इयक्षति ' इत्यस्य प्राग्वर्तते निघण्टुपाठे न पश्चात् ( निघ० २ । १४ )।

७–८ ' यश्च युष्मासु सेवते ते यूयम्० ' इति प्रामादिको वाक्यसंयोगः ।

५१५ ८ ' युवं श्यावाय० ' इत्यस्या ऋचो द्विविधं विवरणं सायणेन कृतम् । तत्र दत्ता कथानुसंधेया ।

१८ ' क्षोणस्य = क्षीणस्य ' इत्येवमेके निरूपयन्ति । ' क्षीणस्य'पदं विशेषणं सत्समानविभक्त्यन्तमेव पदं विशिष्यात् । तादृशं पदं नास्ति । ' कण्वाय ' चतुर्थ्यन्तं न तु षष्ठ्यन्तम् ।

२१ ' अस्मे ' इत्यस्य विशिष्टविभक्त्यर्थे प्रयोगः प्रकरणादिना निश्चीयते ।

५१६ १५ काठकसंहितायां ' सहस्रपोषं पुष्यन्ती ' इत्येतत् ' परमेण पशुना क्रीयसे ' इत्यस्मात्प्राग्वर्तते । अयं पाठः समीचीनतरो भाति । दुर्गवृत्तिरपि तदनुसारिणी । इदं यजुस्तासु तासु संहितासु भिन्नं पठ्यते । दुर्गस्वीकृतपाठः कस्यां संहितायां वर्तत इति न ज्ञायते ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ५१६ | १६–१७ | सोमः क्रीयते यैर्गवादिभिस्ते सोमक्रयणाः । गौः अजो हिरण्यं धेनुः वत्सः ऋषभः अनड्वान् मिथुनौ वासः एवं दश द्रव्याणि ( तै० सं० ६ । १ । १० ) 'गौर्हिरण्यमजा धेनुर्वत्स ऋषभ एव च । अनड्वान् मिथुनौ गावौ वासश्च क्रमको दश ।' 'यथाम्नातं सोमक्रयणानपाकरोति' ( मा० श्रौ० २ । १ । ४ । ११ ) । अपाकरणं = पृथक्करणम् । |
| | १९ | 'आग्नेयी वा एषा यदजा' ( तै० सं० २ । २ । ४ । ५ । ५ । ४ । ३ । २ ) |
| | २० | 'सा वा एभ्यः ( छन्दोभ्यः ) प्रारोचयत्' ( मैत्रा० सं० ३ । ७ । ७ ) । 'प्ररोचयत्' इति सर्वेषु पुस्तकेषु । 'तपसस्तनूरसीति तपसो ह्येषा तनूः प्रजापतेर्वर्ण इत्यग्निर्वै प्रजापतेराग्निजा अजा सहस्रपोषं पुष्यन्तीत्येषा हि पशूनां सहस्रपोषं पुष्यत्यतो ह्यत्र त्रीञ्जनयत्यथो द्वौ परमेण पशुना क्रीयस इति परमा ह्येषा पशूनामस्मै ते बन्धुरित्यात्मन्नेवास्या वीर्यं धत्ते तया निर्वीर्यया भूतया विक्रीणीते' ( का० सं० २४ । ६ ) । |
| ५१७ | १२ | 'न वृथैवाह्वयामि' पाठान्तरं समीचीनतरम् । एवमेव = केवलम् । किंचिदप्यदत्त्वा । |
| | १५ | व्युच्छेदः = स्फोटः उदयः । |
| ५१८ | ४ | तवास्माकं च पौंस्यं पौरुषं समानमेव । |
| ५१९ | ३ | 'गर्गस्य भारद्वाजस्य' इत्यस्य स्थाने ग. च. ज. पुस्तकेषु 'शंयोर्बार्हस्पत्यस्य' । |
| | ४ | दशममण्डलवर्तिन्येव ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता ( आश्व० श्रौ० ८ । ४ ) न तु षष्ठमण्डलस्था । |
| | ११ | तं द्वेष्यं न पश्येम । १७ 'उद्वृह रक्षः' इति सप्तदशी ऋक् । इयं त्वेकोनविंशी सती कथमनन्तरा । 'उद्वृह रक्षः' इत्यस्या यास्ककृतं भाष्यम् ( निरु० ६ । ३ ) इत्यत्र । |
| | १९–२० | भुक्तशेषस्य ते देष्णस्य । |

पत्रं पङ्क्तिः

५२० २ 'वसूनां वसुपते' अत्र 'वसूनां'पदं व्यर्थम् ।

१६ 'ऋचः सूर्याय गीयन्ते' इति ग. च. ज. पाठः । 'ऋचः सौर्यो हि गीयन्ते' इति 'ऋचः सूर्याय गीयन्ते' इति वा बृहद्देवतायां न विद्यते ( बृ० दे० ६ । ५ ) । तत्र तु 'उद्वेतीत्यर्धपञ्चमाः' इत्येव केवलम् ।

१८ आरब्धः गन्तुम् । १९ दीयमानः = गच्छन् । अन्तरिक्ष-मन्वेति = तेन मार्गेण गच्छति । २० प्रतीत्य = ज्ञात्वा ध्यात्वा ।

५२१ १ 'यत्र = यदा' ( ५२० । १७ ) इत्यर्थं कृत्वा प्रथमे निरूपणे द्वयोरर्धयोः संबन्धो दर्शितः । तस्मिन्निरूपणे प्रथमोऽर्धर्चो न सूर्यप्रधानः । द्वितीये निरूपणे सूर्यप्रधान एव सः । तस्य द्वितीयार्धेन न कोऽपि संबन्ध इति द्वितीयो निराकाङ्क्षः ।

१६ जनानां वर्षमुत्सृजन्नादित्यो रश्मिनदीनां स्वभूतं स्वकीय-मुदकं प्रकथयतीव । रश्मिनद्य आदित्यादेशाद्वापीतटाक-समुद्रादिभ्यः स्वभूतं जलं गृह्णन्ति ।

५२४ ८ 'नृमेधसः' इति ग. च. ज. पाठः । अनुक्रमण्यां 'नृमे-धस्य' इत्येव । बृहद्देवतायां 'नृमेधनामाङ्गिरसः' इति ( बृ० दे० ८ । ४३ ) ।

१६ 'प्रवृत्तानि' ( २० ) च. पाठः । प्रत्तानि = दत्तानि ।

१९ उपतिष्ठन्ते रश्मय एव । च. ट. पुस्तकयोः प्रान्ते 'मरुतः' इति लिख्यते तत् ठ. ड. पुस्तकयोरन्तर्भाव्यते ।

२२–२३ यथा तेन भागो विभक्तस्तथा तं भागम् । 'यथा विभक्त-स्तेन' इदमनर्थकम् ।

५२५ ४ 'इत्येवमयमर्थो भवति' इत्ययं ग. ज. पाठः समीची-नतरः । 'सूर्यं समाश्रिता रश्मय इव' एवमुपमार्थः ।

५ 'उब्ज आर्जवे' ( धा० ६ । २३ ) । धातुपाठे 'ओज'-धातुर्न विद्यते ।

९ सोमस्योपरि दधि निधीयते मिश्रणार्थम् । आशिरं = दधि ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ५२९ | १० | आ = ईषत्। श्रपणं = पाकः। 'क्षीराज्यहविषां शृतम्' ( अमरः ३।१।९५ )। 'श्री पाके' ( धा० ९।३ )। पक्कं पयो दधि भवेत्। |
| | १२ | 'आङः शासि इच्छायाम्' ( धा० १।६३० )। |
| | १४ | सायणभाष्येऽनुक्रमण्यां च 'प्रियमेधस्य' न तु 'प्रियमेधसः'। |
| | १५–१६ | सायणभाष्ये 'ब्राह्मणाच्छंसिनः' स्थाने 'मैत्रावरुणस्य'। किंतु तत्प्रामादिकम्। |
| | १७ | श्रयणार्थं = मिश्रणार्थम्। यज्ञे च = यज्ञेऽन्येषु कर्मसु च। आशीः = सोममिश्रणयोग्यं क्षीरादिकम्। अयं शब्दः स्त्रियां वर्तते यथा 'सत्यामाशिरम्' ( ऋ० सं० ७०।१ ) 'नित्ययाशिरा' ( ऋ० सं० १०।३१।५ )। आशीः आशिरौ आशिरः आशिरम् इत्यादीन्यस्य रूपाणि। इतराशीः स्तुतिराशीर्वादो वा। अयमपि शब्दोऽनयोरर्थयोर्ऋक्संहितायां विद्यते। |
| | १९ | 'गावः स्तनैर्दुदुह्रे' इत्यर्थः। |
| ५२६ | १–४ | 'सा मे सत्याशीर्देवान्गम्याज्जुष्टाज्जुष्टतरा पण्यात्पण्यतरा। अरेडता मनसा देवान्गच्छ यज्ञो देवान्गच्छतु यज्ञो देवान गम्यात्' ( मैत्रा० सं० १।४।१ )। अत्र 'शृण्वन्तु ते समर्धयन्तु' नास्ति। 'अहेडता' 'अनुगच्छ' इत्येतयोः स्थाने 'अरेडता' 'देवान्गच्छ'। 'यज्ञो देवान्गम्यात्' इति चाधिकम्। दुर्गकालीनो मैत्रायणीपाठो भिन्न आसीदिति भाति। अथवा। 'शृण्वन्तु० समर्धयन्तु' इति वृत्तिस्थं प्रक्षिप्तं स्यात्। ग. च. ज. पुस्तकेषु 'शृण्वन्तु ते समर्धयन्तु' नास्ति। ग. ज. पुस्तकयोः 'अरेडता' अस्ति। 'असावपि देवान्गम्यात्' (१२) इयं 'यज्ञो देवान्गम्यात्' इत्यस्य वृत्तिः। 'सा मे०' इत्यादियजुःपाठो दुर्गादर्वाचीनेन केनापि अत्र लिखितः स्यात्। तेन यजुःपाठदुर्गवृत्त्योः संवादो नास्ति। अन्यत्रापि केषुचित्स्थलेषु ईदृशः संवादाभावः। |

पत्रं ५२६ ५२७ ५२८

पत्रं पङ्क्तिः

५२६

'सा मे सत्याशीर्देवेषु' (५२३ । २४) इति यास्कः। 'सा मे सत्याशीर्देवेषु भूयाद् ब्रह्मवर्चसं मा गम्यात्। यज्ञो बभूव' (तैत्ति० सं० ३ । २ । ७)। अस्य यजुर्मन्त्रस्य सोमयागेन संबन्धो न दर्शपूर्णमासाभ्याम्। दुर्गेण व्याख्यातो यजुर्मन्त्रः अत्रास्थाने एव।

४ प्रस्तरः = दर्भमुष्टिविशेषः। स इष्टयन्ते अध्वर्युणा आहवनीये प्रक्षिप्यते दह्यते च। तत्प्रस्तरप्रहरणमित्युच्यते।

९ च. पुस्तके 'स्तुतादपि स्तुततरा' इति लिख्यते। ११ असावपि = यज्ञोऽपि। १३ 'अजगारीः' इति ग. च. ज. पाठोऽशुद्धः।

२० 'शरपथे = आजिधावनस्थाने' (च. ट.)। इदं ठ. ड. पुस्तकयोरन्तर्भाव्यते।

२२ 'वाहयन् वा' अत्र 'वा'पदस्य न किमपि प्रयोजनम्। 'वाहयन् त्वाम्' इति स्यात्। त्वं वहसि कर्म करोषि। अश्ववाहस्त्वां वाहयति। 'वाहयत्वाऽप्यपरिश्रान्तः' (ग. ज. पाठोऽशुद्धः।) = वाहयन् त्वाम् अपि (तथापि) अपरिश्रान्तः। अयं पाठः समीचीनतरः।

५२७

१ 'गृणातिकर्मा' (५२४ । २) न व्याख्यायते। तथा 'प्रसितृतमः'।

१० 'हे अग्ने अङ्ग त्वमेव' (ठ. ड. पाठः) अत्र 'अङ्ग एवार्थे' इति ट. पुस्तके विवरणम्। अङ्गशब्दः ठ. ड. पुस्तकयोरन्तर्भाव्यते।

१२ शयः = हस्तः। १३ 'चरति समिति समिद्धत्वात्' (घ. ट. ठ. ड. पाठः)। समिति = यज्ञे। रूपमग्नेर्विशेषात्मा। १३–१४ 'रेरिह्यते' इत्यस्य 'वव्रिः' अग्निर्वा कर्ता न तु त्वम्।

५२८

४ एवंगुणविशिष्टाः। अस्यामृचि ऋत्विग्गुणा न कथिताः। तेन कथमेवंगुणाविशिष्टत्वम्।

१८ 'चतुःषष्ट्यक्षरत्वादष्टिः' (वा० सं० महीं० १५ । ४७) अत्यष्टौ चतुःषष्टिरक्षराणि। 'अतिच्छन्दा अत्यष्टिः'

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ५२८ | | ( पाठान्तरम् ) । अतिच्छन्दाः = छन्दांसि गायत्र्यादीनि सप्त । तान्यतिक्रान्ता । |
| | १८–१९ | छन्दोभिधा इष्टका उपधीयन्ते गायत्र्यादिभिर्विविधैश्छन्दोभिः ( तै० सं० ४ । ४ । ६ । ३ । ८ ) । |
| ५२९ | २ | कृपा = ज्वलया । अयमर्थ ऋक्संहितायां सर्वत्र युक्तो भवति । ' सूरो न हि द्युता कृपा पावक रोचसे ' ( ऋ. सं. ६ । २ । ६ ) । ' उदु तिष्ठ स्वध्वर स्तवानो देव्या कृपा ' ( ८ । २३ । ५ ) । कृप् कृपौ कृपः इत्यस्य रूपाणि । अयं ग्रीकभाषायां ' कृपैन् ' धातुस्तेन संबध्यते । तस्य धातोरर्थः ज्वलता नूतनेनाग्निना क्रियमाणः कटकटाशब्दः । ३ देवाच्या कृपा = देवान्प्रति गच्छन्त्या ज्वालया । |
| | ६ | सर्पिषः = घृतस्य । ८ ' कृप् कृपतेर्वा कल्पतेर्वा ' ( ५२४ । ७ । ) न व्याख्यायते । |
| ५३० | ११ | ' युवां भवन्तौ ' इति प्रामादिकम् । ' घ ' निश्चयार्थे । ' बहुदायितरौ ' ग. च. ज. पाठः छ. त. द. पाठेन समानः । ' बहुदायितरौ ' इत्ययं शब्दः कथं व्युत्पाद्यः कश्चास्यार्थ इति न ज्ञायते । |
| | १७ | शश्वत् = प्रसिद्धम् । ' दाक्षिणात्याः° जाः ' ( ट.पाठः ) । एतत् ठ. ड. पुस्तकयोः ' दाक्षिणात्याः । जाः ' एवं लिख्यते |
| | २१–२२ | मैथुनेनोढायां स्त्रीत्वमुत्पादयति । ऊढा सती कन्या कन्यात्वं त्यजति मैथुने वर्तमाना स्त्रीभावमारभते । |
| | २२–२३ | भ्राता भगिनीभर्तुः स्यालो भवति । तयोः संयोगहेतुर्भगिनी । तेन तौ परस्परासन्नौ । |
| | २४ | आवपति प्रक्षिपति गृह्याग्नौ । ' लाजा लाजतेः ' ५२९ । २० ( राजतेः पाठान्तरं ) न व्याख्यातम् । |
| | २५ | ' षोऽन्तकर्मणि ' ( धा० ४ । ४१ ) न क्षेपणे । |
| ५३१ | २ | ' श्रीणातेः ' इति ग. च. ज. पाठः प्रामादिकः । ' श्रीञ् पाके ' ( धा० ९ । ३ ) । ' शॄ हिंसायाम् ' ( धा० ९ । १६ ) । |

पत्रं पङ्क्तिः

५३१ १५ ' सोतारम् ' इत्यस्य स्थाने ' सोमानाम् ' इति ग. ज. पाठः । प्रथमविवरणे ' सोमानां सोतारम् ' ( ९ ) इति छ. त. पाठः । द. पाठः ' सोमानं सोतारम् । द्वितीये ' सोमानां सोतारम् ' ( १२ ) इति सर्वेषां छ. त. द. पुस्तकानां पाठः । स एव ग. च. ज. पुस्तकैः दुर्गेणापि स्वीकृत इति भाति ।

२० ' स्वरणं स्तोतारम् ' इति ग. ज. पाठः ।

५३२ १ प्रथमे विवरणे ' कमपि सोमानामभिषोतारं प्रकाशनवन्तं कुरु ' इति ' मां ' पदं व्यर्थम् । च. पाठः ' अभिषोतारं स्वरणमा ' दुर्बोधः । ग. ज. पुस्तकयोः ' मा ' न तु ' माम् ' ।

मूले ' प्रकाशनवन्तं ' ( ५३२ । १२ ) न तु ' यशस्विनम् ' ।

५ 'मनुष्यकक्ष्यः' ( ग. च. ज. पाठः ) । नैकस्मिन्नपि निरुक्तमूलपुस्तकेऽयं पाठः । मनुष्यकक्षे भवः मनुष्यकक्ष्यः । अयं कक्षीवान् मनुष्यकक्ष्य एव यस्मात्स मनुष्यकक्षाया जातस्तस्मात्कक्षीवानिति तस्य नाम । ' स हि कक्षे उत्पन्नः ' इति दुर्गव्याख्यानम् । तेन ' मनुष्यकक्ष्यः ' इति तेन स्वीकृतः पाठः स्यात् ।

६ तदुत्पत्तिः = कक्षोत्पत्तिः ।

७ सोमानम् = सु + मन् । यथा कृ + मन् = कर्मन् । येन सोमः सूयते स सोमा तं सोमानं कक्षीवन्तं स्वरणं सु+अरणं सुगमनं कुरु । यः कक्षीवानौशिजः इत्यर्थः स्यात् ।

५३३ २ ' अघं हन्तेर्निर्ह्रसितोपसर्ग आहन्तीति तपुस्तपतेः ' ( ५३२ १८–१९ ) न व्याख्यातम् ।

२–४ ' अघशंसम् अघं तपुः समभियस्तु ' इति ऋगन्वयः । तपुः = तप्तमायुधम् । तपुः तपुषी तपूंषि इति रूपाणि । ' रक्षोयुजे तपुरघं दधात ' ( ६ । ६२ । ८ ) अत्र ' अघं ' ' तपुः ' इत्यस्य विशेषणम् ।

५ ' क्रव्यमदने ' इति छ. त. द. ( ५३२ । २० ) ग. च. ज. पाठः । ' क्रव्यं=पृष्ठमांसम् ' इति नैकस्मिन्नपि

पत्रं पङ्क्तिः

५३३ कोशे : 'पृष्ठमासभक्षयित्रे' (पाठान्तरम्) । अत्र 'मास'शब्दो दुर्बोधः । अयमपपाठः स्यात् । 'घोरख्यानाय' (५३२ । २१) न व्याख्यातम् ।

६ 'अनवायम्' इत्यस्य स्थाने 'अव्यवेयम्' (५३२ । २२) इति छ. त. द. पाठः । अव्यवेयं = व्यवेतुमनर्हम् ।

१५ मृद्भाण्डं सुषिरं तेन तस्माज्जलं लवशो बहिर्गच्छति ।

१६ विकृत्तात् प्राणिशरीरात् । प्राणिशरीरं हि कृत्यते ।

१७ विपुष्यति = महदिदं पापमिति ब्रवीति ।

५३४ १३ अग्निचयनस्य क्षेत्रे प्रथमं सिकतादीन्युप्यन्ते । तेषामुपरि पुष्करपर्णमुपधीयते । तस्योपरि रुक्मम् । तस्योपरि पुरुषाकारं हिरण्यम् (कात्या० श्रौ० १७ । ४ । ३) । तस्य पुरुषस्य कृणुष्व पाज इति पञ्चभिर्ऋग्भिर्व्याघारणं क्रियते । 'वामदेवस्य राक्षोघ्नेन व्याघारयति' (मैत्रा० सं० ३ । २ । ६) ।

१७ 'बलं पाजः' इति ग. च. ज. पाठः । पाज इत्यस्य 'बलम्' इत्यर्थः । 'पाजो बलम्' इति क्रम इष्टः । इयं व्यत्यासपद्धतिः ग. च. ज. पुस्तकेषु बहुकृत्वो दृश्यते । 'ख' 'ष' इति च. पुस्तके लिख्यते ।

२० नीतिः = राजनीतिः कपटपाटवम् । २१ रोगः = कुष्ठादिसंचारिरोगः । २२ आत्मवित्तम् = स्वबलम् ।

५३५ ३ अनुप्रसितया = अनुबद्धया । अनुप्रसृतया (पाठान्तरम्) = अनुचरितया ।

८ 'प्रसितिः प्रसहनात्' इति छ. त. द. पाठो दुर्गस्वीकृतपाठश्च यस्मात्सः 'अभिभूयन्ते' इति पदं प्रयुनक्ति । प्रसह्यन्ते = अभिभूयन्ते । नो चेत् प्रसीयन्ते बध्यन्ते इति ब्रूयात् । मूले दाक्षिणात्यपाठः स्वीकृतो (५३४ । १) यथेतरत्र ।

९ 'तृष्वीति क्षिप्रनाम तरतेर्वा त्वरतेर्वा' (५३४ । ३) 'तृप्रतमैः प्रपिष्टतमैरिति' (५३४ । ४) न व्याख्या-

पत्रं पङ्क्तिः

५३५ तम् । सायणभाष्ये ' तमतमैस्तपिष्ठतमैः ' इत्येव । ११ ' व्याख्यातम् ' । मूले ' व्याख्यातः ' ( ५३४ । ५ ) ।

१५ ' षड्ढाहुतं प्रतिपदि प्रतिपदि पुत्रकामः ' ( मान० गृ० २ । १८ । १ ) । ' पयसि स्थालीपाकं श्रपयित्वा जुहोति ' ( ऋक्शाखीयसूक्तेन १० । १६२ ) । ' द्वादश ऋचो गर्भवेदिन्यः । ' षडाद्याः स्थालीपाकस्य षडुत्तरा आज्यस्य ' ( मान० गृ० २ । १८ । २ ) ।

१८ ' मांसं भक्षयितारम् ' इति च. पाठः । २० ' दुर्णामा क्रिमिर्भवति । क्रिमिः क्रव्ये मेद्यति क्रमतेर्वा स्यात्सरणकर्मणः क्रामतेर्वा ' ( ५३४ । ६–७ ) न व्याख्यातम् ।

५३६ २ ' दुर्गतिगमनानि सर्वाणि ' ( ५३४ । ८ ) न व्याख्यायते । ' दुर्गतिगमनम् ' इत्यस्य स्थाने ' दुष्कृतम् ' ( ४ ) इति वृत्त्यन्ते लिख्यते । स एव दुरितस्यार्थः । दुर्गतिं गमयन्तीति दुर्गतिगमनानि ।

७ अपवीयते = अप + वि + ईयते = म्रियते । अपचेष्टयते प्राणैः = प्राणचेष्टाभिर्वियुज्यते ।

९ ' दुरितम् ( ४ ) अमतिः ' एतौ शब्दौ न दुर्बोधौ नाप्यनवगतसंस्कारौ । दुः + इतं = दुरितं दुष्कृतम् । अविद्यमाना मतिर्यस्य सोऽमतिः । अत्र ' अमतिः ' = बुद्ध्यतीता मन्तुमशक्या ।

१२ ' ऊण्योः ' इति तैत्तिरीयसंहितापाठः ( १ । २ । ६ ) । १३ ' मतिं कविम् ' इति वाजसनेयिसंहितापाठः ( ४ । २५ ) । १९ ' कविं क्रान्तदर्शनम् ' इति च. पुस्तके प्रान्ते लिख्यते ।

१५ प्रवर्ग्ये शस्यते ( आश्व० श्रौ० ४ । ६ ) ।

१६ ' क्षौमं वासो द्विगुणं त्रिगुणं वा प्राग्दशमुत्तरदशं वा चर्मण्यास्तीर्य तस्मिन्हिरण्यपाणिरङ्गुलीभिः सोमांशून्मिमीते ' ( तैत्ति० सं० १ । २ । ६ सायणभाष्ये आप० श्रौ० । कात्या० श्रौ० ७ । ७ । १२ । १३ ) ।

१७ ओण्योः सवितारं तमग्निमभ्यर्चामि यस्योर्ध्वा अमननीया च

पत्रं पङ्क्तिः

५३६ भाः सर्वं वस्तुजातमदीपयत् सूर्याज्ञया च यः स्वर्गं स्वया कृपा ज्वालया प्रकाशेन वा अमिमीत ।

५३७ ६ 'अशु अश्नोति' ( ५३४ । ११ ) न व्याख्यायते । ७ "क्षशनम्" इति निरुक्तमूले नास्ति । वृत्तावपि ( ५३८ । ५ ) 'क्षिप्रनाम' इत्येव । 'पुरंधि'शब्दो भाष्ये न व्युत्पाद्यते ( ५३४ । ११ ) । वृत्तावपि 'पुरंधीः पुरंधी ( ग. ज. पाठः ) पुरुंधी ( च. पाठः )' इति विवरणं न क्रियते ।

५३८ २ 'अग्नेः' ( ५३७ । ११ ) इति दाक्षिणात्यः पाठः प्रामादिकः ।

५ यागस्य विघ्नभयात्क्षिप्रस्येष्टत्वात्=विघ्नो न भवेदिति यागस्य क्षिप्रत्वमिष्टम् ।

६ 'श्रुष्टीवरीः सुखवरीः' । अस्याध्यायस्य २२ खण्डे 'श्रुष्टीवरीः सुखवत्यः' ( ५७१ । ३ ) इति वर्तते ।

१२ 'प्रणेतारौ' 'आग्रयणः' इति ग. च. ज. स्वीकृतनिरुक्तमूलपाठौ ।

१४ पुरंधिशब्दोऽत्र गुणपदं विशेषणम् । अत्र पुरन्धिरिति अश्विनोः सखी उषा॰ स्यात् । अश्विनोः पुरन्ध्याश्च यत्र तत्र सखिभावेन संबन्धः । माता देवानामिति च सोच्यते । पुरन्धिः = ग्रीकभाषयां पॉलिॲड्रास् = बहुप्रजाः । बहुप्रजादायिनी काचिद्देवता पुरन्धिरित्यभिधीयते । ततः बहुप्रजावत्याः स्त्रिया अपि तदभिधायकमभवत् ।

१७ 'नासत्या पुरन्धिम्' = इत्यनयोः शब्दयोर्मध्ये न कोऽपि शब्दः । एवं तावनन्तरौ ।

२० 'अन्येभ्यो देवेभ्यो बहुकर्मतमः' अत्र 'बहुकर्मतरः' इति तरबन्तरूपेण भाव्यम् । अथवा । 'देवेषु बहुकर्मतमः' एवम् ।

५३९ ६ आधर्षयितुं = हिंसितुम् । ७ च. पुस्तके 'उद्रा' 'उद्ना' इति प्रान्तभागे स्पष्टीकृतमज्ञानात् 'उदूना' इति लिख्यते ।

९-१० समुद्रं सिञ्चन्त्यो नद्यो यथा तं न कदापि जलपूरणेन प्रीण-

पत्रं पङ्क्तिः

५३९ — यन्ति तर्पयन्ति तया रश्मिरूपा नद्य इत्यादि । १० 'तेषां रश्मीनां च' इदमसंबद्धमनवश्यं च ।

१०–१२ वरुणस्य मायां विज्ञातुं न शक्नोति कश्चिदपि नापि कथयितुम् । 'नापि'शब्दावावश्यकौ । अपि कथं नायं संपूर्यते इत्यन्वयः । १२ प्रज्ञया प्रज्ञारूपकारणेन । प्रज्ञाद्वारेणेत्यर्थः ।

५४० १ 'अबोधि होता०' इयमृक् प्रातरनुवाके आग्नेये क्रतावपि शस्यते ( आश्व० श्रौ० ४ । १३ ) ।

२ बुध्यते = बोधयति जागरयति । 'देवान्' 'बुध्यते' इत्यस्य कर्म । ३ 'अग्निहोतॄणाम्' इति ग. च. ज. पाठः । 'अग्निहोत्रिणाम्' इतीतरः ।

४ 'रुशत्' एतत् 'पाजः' इत्यस्य विशेषणं भवितुमर्हति ।

६ स देवान् यष्टव्यतया बुध्यते । अत्र 'सः' पदमध्याहार्यम् ।

२४–२५ नैकस्मिन्नपि निरुक्तमूलपुस्तके 'रेशयदासिनः' ( ११ ) इति पाठः । रेशयत् + आसिनः = रेशयदासिनः । २५ ते देवा आयुधानि अस्यन्ति ।

५४१ २ 'दारयति' इत्यपपाठः । 'सजात्यं समानजातिता' इत्यस्य विवरणार्थं ट. पुस्तके 'परस्परम्' इति प्रान्ते लिख्यते तच्च ठ. ड. पुस्तकयोरन्तर्भाव्यते ।

५ स्वभूताय = स्वहस्ते स्थिताय । सुभोगं स्थानं सुखं च गन्तुमनुज्ञां दत्त ।

९ 'सुदानः' इत्यत्र निरुक्तमूले 'कल्याणदानः' ( ६४० । १२ ) । अस्य विवरणस्यान्ते 'कल्याणदानः' एव शब्दो दुर्गेण प्रयुक्तः ( २० ) ।

१४ इयं त्रिष्टुप् न तु द्विपदा ।

५४२ ६ 'धर्मसद्भिर्यज्ञसादिभिः' इत्येष घ. झ. ट. ठ. ड. पाठः सायणभाष्याद्गृहीतः ।

५४३ ८ अन्तरिक्षे संग्रामे वा वर्तमाने बले । अरेणु पौंस्ये इति द्वे पदे नैकम् । अरेणु 'शवः' इत्यस्य विशेषणम् ।

१२ 'अहिं नित्यं शुष्णम्' इति च. पाठः । 'नित्यशुष्णम्' ग. ज. पाठः ।

पत्रं पङ्क्तिः

५४३ १२–१३ ‘ आयसः = देवान्प्रति अयनशीलस्य ’ इति दुर्गः । ‘ अयोमयकवचयुक्तदेहः ’ इति सायणः ।

१३ ‘ आभूषु ’ इत्ययं सप्तमीबहुवचनान्तः शब्दो न सन्नन्तः । ग. च. ज. पुस्तकेषु ‘ आभूषुः ’ इति लिख्यते ।

१४ शत्रूणामुपर्युपरि अहं भवेयमितीच्छन् । दामनि रज्जुबन्धेन शत्रून् सुप्राबध्नात् । ‘ सुबध्नात् ’ इत्यपपाठः । च.पुस्तके स्वबध्नात् = सु सुष्ठु अबध्नात् ।

२१ अनुक्रमण्यां नृमेधपुरुमेधौ ।

५४४ १ ‘ पशवो वा आदित्यो यद्दध्ना मध्यतः श्रीणाति मध्यतो वा एतत्पशूनां पयो दधात्यथ यत्तप्तातङ्क्यं तस्मादामा सती पक्वं दुहे यदि कामयेत वर्षेत्पर्जन्या इति ’ ( मैत्रा० सं० ४ । ६ । ९ ) । आदित्यग्रहे सोमे दधिपयसी मिश्रीक्रियेते । दध्नि मिश्रिते सोमोऽपक्वो भवति पक्वपयसि मिश्रिते पक्वो भवति । तथैव गौः प्रथमा आमा सती एतेनादित्यग्रहेण पक्वं पयो दुग्धे । ‘ दुहे ’ इति पाठान्तरम् ।

३ च. ट. पुस्तकयोः ‘ पूर्वमङ्गिरसां गावः पणिभिराहृत्यान्धकारे स्थापिताः । ततोऽङ्गिरोभिरिन्द्रः स्तुतः । तत इन्द्रो गवां स्थानं तमसावृतं दृष्ट्वा गोदर्शनाय द्युलोके सूर्यमारोहयदित्यर्थः ’ सायणभाष्यादुद्धृतं प्रान्ते लिख्यते । ठ. पुस्तके तदन्तर्भाव्यते ।

५ ‘ सामन् = सामेत्यर्थः ’ ( च. ) । सुष्टं ( ग. च. ज. पाठः ) = सुष्ठं सुस्थितं सुगुणम् । स्थानकरणानुप्रदानानि प्रातिशाख्ये निरूपितानि ।

२३–२४ वैश्वकर्मणाभ्यां द्वाभ्यां सूक्ताभ्यां वैश्वकर्मणानि हवींषि जुहोति । ‘ य इमा विश्वा भुवनानि ’ ( ऋ० सं० १० । ८१ ) ‘ चक्षुषः पिता मनसा ’ ( ऋ० सं० १० । ८२ ) इतीमे द्वे सूक्ते । एतद्धोमानन्तरमाहवनीयाग्निश्चयनं प्रति नीयते ।

५४५ १ ‘ असूर्ता ’ इति मैत्रायणी ( २ । १० । ३ ) कपिष्ठल ( १८ । १ ) संहितापाठः । अयं यास्केन स्वीकृतः स्यात् । किंतु निरुक्तमूलपुस्तकेषु नैकस्मिन्नपि लभ्यते ( ५४४ । १२ ) ।

पत्रं पङ्क्तिः

५४५ ३ 'वाजसमीरिताः' ((५४४ । १३) इति छ. त. द.. पाठः । अन्नार्थम् असुरक्षणार्थं समीरिताः ।

४ मेघा एव वातेन समीर्यन्ते न मरुदादयः। ६ निषण्णे = स्थिरे ।

११-१३ 'य आयजन्त' (५४४ । १३) इति दाक्षिणात्यः पाठः समीचीनतरः । ये रसेन पृथिवीं तर्पयन्तो भूतानि कुर्वन्ति त आयजन्त । दुर्गेण गुर्जरपाठः 'ते रसेन०' इति स्वीकृतः । तदनुरूपं च विवरणं क्रियते । किंतु तन्न समीचीनम् । 'त आयजन्त०' इत्यस्य 'भूतानि कुर्वन्ति' इति नार्थः । 'भूतानि समकृण्वन्' इत्यस्यैव सोऽर्थः ।

२१-२२ अमाक्ता = अ + मा + अक्ता = मां प्रति अ मा (निषेधार्थे) एषा अक्ता अञ्चिता भवतु । माम् + एव + अप्रत्यञ्चिता । २२ 'मामेषा प्रत्यञ्चिता' इत्यर्थे 'अमाक्ता' इत्यत्र 'अ' इत्यस्य कोऽर्थः । अत्र 'अम्यक्' म्यक्ष-धातोर्गत्यर्थस्य रूपं स्यात् । अम्यक् = अगच्छत् ।

५४६ ११ काष्ठे देदीप्यमानः अग्निरिव । यथा काष्ठेऽग्निरास्ति तथा मेवे भवदीया शक्तिः ।

१२ नदीनाम् इमा नादेयाः । १३ मेघ्यानि मेघोद्भूतानि । ताः = ऋष्टीः । 'ताम्' इति पाठोऽवश्यः ।

५४७ १-२ सूर्यस्य कर्मणा प्रज्ञया वा ज्यायांसं त्वां हे अग्ने यजमानः स्तुवन् चरति ।

१५ सः + अस्माकेभिः = सास्माकेभिः । अयं सन्धिश्छान्दसः। १८ 'वन्वन्कृत्वा' इति दुर्गमतेन समासः । शाकल्यमते द्वे पदे । २१ विह्रियमाणः । यज्ञेऽग्निरेकस्माद्विहारादन्यं विहारं (कुण्डं) नीयते ।

५४९ ६ 'प्रदिवः प्रकर्षेण द्योतमानाः सन्त आदधिध्वे' अयमधिकः पाठः क. ख. घ. झ. ट. ठ. ड. पुस्तकेषु वर्तमानः सायणभाष्याद्गृहीतः ।

८-९ दुर्गकृतं विवरणं न यास्कसंमतम् । 'वः युष्मान् जोष-

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ५४९ | | यमाणाः ( मनुष्याः ) प्रास्थुः । विश्वे ( देवाः ) उत वाजा अग्रिया अभवत ' इति यास्काभिप्रायः । |
| | १० | ' अग्रगरणेनेति वा ' ( ५४८ । ९ ) न व्याख्यातम् । |
| | २० | ' पचता ' इदं ' चनः ' इत्यस्य विशेषणम् । ' हवींषि ' इत्यनेन न तत्संबन्धः । ' बहुवचनं वा ' ( ५४९ । १३ ) इत्यधिकः पाठः कदाचिद्दुर्गेण लिखितः स्यात् । |
| ५५० | ७ | अर्थस्य विशेषः । विशेष एव वैशेष्यम् । स्वार्थे ष्यञ् । |
| | ९ | यतः=यस्मिन् प्रदेशे । १० प्रत्यग्रभीष्टां = प्रत्यगृहीताम् । |
| | १२ | मेदो वपा चेति द्वे सत्त्वे पदार्थौ तयोरिदं सात्त्वम् । अस्मिन् पश्ववदाने द्वौ पदार्थौ मेदो वपा च । ' पचता ' एतदनयोर्द्वयोर्विशेषणम् । |
| | १४ | दैव्या दैव्यौ होता होतारौ भिषजा भिषजौ । एवं पचता पचतौ । आकारान्तं द्विवचनम् । |
| | १६ | ' यतो यस्मात् ' इति व्याख्यानेन दुर्गस्वीकृतनिरुक्तमूले ' यतो यत्र ह्येकवचनार्थः ' ( ५४८ । १४ ) इति पाठः स्यात् । |
| ५५१ | २ | घा = निश्चयेन खलु । ' वा ' अपि तस्मिन्नेवार्थे । वा घा = सत्यम् । ' केवलः पक्षः ' इति च. पाठः । |
| | ३ | ' युवतम यविष्ठय ' ( ग. च. ज. पाठः ) । एषु पुस्तकेषु विशेषतः च. पुस्तके बहुकृत्व ईदृशो व्याख्यातव्यव्याख्यानयोर्व्यत्यासः । |
| | ४ | ' यु मिश्रणे ' इत्येतस्मात् युवतम = मिश्रयितृतम । पुरोडाशं केनचिदन्येन पदार्थेन मिश्रयति । तन्मिश्रणमनुपमम् । |
| | १२ | ' अनभ्यमितः ' ( ५४८ । १७-१८ ) इति ग. च. ज. पाठो नैकस्मिन्नपि निरुक्तमूलपुस्तके दृश्यते । ' मीङ् हिंसायां ' ( धा० ९ । ४ ) । तस्य निष्ठा ' मिनः ' । तस्य प्रतिषेधः ' अमिनः ' अहिंसितः । अभि + अमिनः = अभ्यमिनः । ' अनभ्यमितः ' इति पाठे ' अम रोगे ' ( धा० १० । १८७ ) । तस्य निष्ठा ' अमितः ' । अन् + अभि + अमितः = अनभ्यमितः । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ५५२ | १ | ' महान् भवति ' ( ५४८ । १७ ) न व्याख्यातम् । ' परिवृढः ' इदं पाठान्तरं सायणभाष्याद् गृहीतम् । |
| | २ | केन कारणेन अमिनः । |
| | ६ | सुकृतः= प्रीतः । ' प्रत्यभिमुखोऽभूत् ' इत्यन्वयः । |
| | १७–१८ | ' शब्दकारिण्यः ' ( ५४८ । १९ ) इत्यस्य व्याख्यानं ' शब्दानुकरणात् ' । |
| ५५३ | १४ | साधयिता = नाशयिता । १६ समसृजत् = संयुयोज । |
| | १८ | शाशाद्यमानः = पुनः पुनः कर्त्यमानः छिद्यमानः । |
| ५५४ | २९ | सर्पिर्वाची तैलवाची वा सृप्रशब्दः कोशेषु नोपलभ्यते । |
| ५५५ | १४ | ' विष्यस्व ' इत्यस्य च. ट. पुस्तकयोः ' षोऽन्तकर्मणि व्यत्ययेनात्मनेपदम् ' इति प्रान्ते लिखितं विवरणं ठ. ड. पुस्तकयोरन्तर्भाव्यते । |
| | १८ | उपजिह्विका = जिह्वाया मूलभागे वर्तमाना ' पडजीभ ' इति महाराष्ट्रभाषायां ख्याता । |
| | २१ | ' प्रतिसंसेवयस्व ' ( च. पुस्तके ) इति णिजन्तः पाठः प्रामादिकः । |
| ५५६ | ९ | मेधाविभ्य ऋत्विग्भ्यः । असौ अग्निः । १२ ' चिकिते = ज्ञायते ' ( च. ट. ) । |
| ५५८ | १ | स्त्यायन्तीति स्त्यायनाः । स्त्यायन्ति संहता भवन्ति संवातयन्ति वा । ' स्त्यायजाः ' ' स्तियजाः ' एतौ पाठौ प्रामादिकौ । |
| | १३–१४ | पीपाय = आप्याय्यते ( वर्ध्यते ) । अथवा । पीपाय = पानाय संस्कृतः । १८ ' स्तिपः ' ' स्तिपालनः ' इति ग. च. ज. पाठौ । |
| | १९ | स्त्यायन्त इति स्तयो गृहाः ( सायणः ) । स्तिपाः = गृहरक्षकः । ' उप नो वाजान्मिमीह्युप स्तीन् ' ( ऋ० सं० ७ । १९ । २१ ) स्तीन् = गृहान् । ' उत त्रायस्व गृणत उत स्तीन् ' ( ऋ० सं० १० । १४८ । ४ ) । ' नः स्तिपा तनूपा वरुण ' ( ऋ० सं० ७ । ६६ । ३ ) । अत्र सर्वत्र स्तयो गृहा भवेयुर्गावो वा । अथवा । |

पत्रं पङ्क्तिः

५५८ पुत्रा भवेयुः । यस्मात्पुत्राः स्नेहेन स्यायन्ते मातृपितृभिः संहता एकरूपा भवन्ति । ' वृषभः स्तियानाम् ' इत्यत्र जलरूपगवामिन्द्रोऽग्निर्वा वृषभः ।

२० ' पालयतीति वा ' ( ५५४ । १४ ) इत्यत्र ' वा '-शब्दो न व्याख्यातः । दुर्ग एकमेवार्थं गृह्णाति । ' स्तृषां पालनः ' ( ५५४ । १३ ) इति छ. त. द. पाठः । स्तृषां नक्षत्राणाम् । ' ऋक्षाः स्तृभिरिति नक्षत्राणाम् ' ( २७२ । १-२ ) इति यास्कः ।

५५९ ९ ' जबारु जरमाणरोहीति वा जवमानरोहीति वा ' ( ५५४ । १९ ) इति सायणगृहीतपाठः । अस्मिन्पाठे ' गरमाणरोहीति वा ' नास्ति ।

१८ ' प्राष्ट'शब्दः कोशेषु नोपलभ्यते । ' अश व्यापने ' । तस्य निष्ठा । प्राष्टः = विस्तृतः । पृश्निः = भिन्नवर्णः ।

२० रुपः = रिपः ।

२२ ' इह वा असा आदित्यः ' ' आसां प्रजानाम् ' इति मैत्रायणीसंहितायां ( २ । २ । २ ) पाठौ । आभ्यां = द्यावापृथिवीभ्याम् । आदित्य आदौ पृथिव्यामासीत् । द्यावापृथिवीसाहाय्येन आसां प्रजानामुपरि दिवि लोका देवा वा तं न्यदधुः । २४ जवमानं = गच्छत् ।

५६० १ ( नभसो ) रोहति = जायते । तत्र तत्र आकाशस्य भिन्नभागेषु ।

२ गरमाणं = गिलन् । ' जबमानरोहि ' ( ५५४ । १५ ) इति महाराष्ट्रियपाठः । बवयोरभेदः ।

५६१ ३ वधेन = प्रहारेण । अथवा । अस्त्रेण । ' वधैरजेत दुर्मतिं' ( ऋ० सं० १ । १२९ । ६ ) अत्र वधैः = अस्त्रैः । विवृक्णानि छिन्नानि । अङ्गानीत्यध्याहारः ।

स्कन्धो वृक्षस्येत्यादि पृथिव्याः ( ५५४ । १९-२५ ) इत्यन्तं न व्याख्यातम् । प्रक्षिप्तं स्यात् । समास्कन्नः = समन्तात्स्थापितः । ' इदमपि तरत् ' अयं पाठः साधुः । स्कन्धःशब्दो नपुंसको यस्मात् ' आस्कन्नम् ' ( ५५४ । २० ) इति तस्य विशेषणम् । यास्ककालेऽपि स्कन्धः

पत्रं पङ्क्तिः

१६१ शब्दो नपुंसकः सकारान्तश्च स्यात् । ' समास्कन्नम् ' इति पाठः स्यात् ।

४ ' अहिरयनः ' इति ग. ज. पाठः । ' अहिरयनादेत्यन्तरिक्षे ' ( निरु० २ । १७ ) ।

६ ' अहिः ' ( ४ ) पदस्य पुनरुक्तिर्व्यर्था । अगमयत् उदकम् । अत्र शयनं ( स्वप्नः ) न वास्तविकम् । अवस्थानमेव तस्यार्थः । जलरूपेण पृथिव्यामवतिष्ठते ।

१९ उत्तरोत्तरे = उत्तरेभ्य उत्कृष्टेभ्योऽपि उत्तरे उत्कृष्टाः ।

२१ अस्य = ' तुञ्जे तुञ्जे ' इत्यत्र य इन्द्रोऽस्तूयत तस्य ।

१६२ ६ सव्यत्वमापन्नस्येन्द्रस्य = ' स्वयमिन्द्रसमं पुत्रमिच्छतोऽङ्गिरसो मुनेः । वज्रयेव सव्यो भूत्वर्षेर्योगित्वात्पुत्रतां गतः ' ( बृह० ३ । ११५ ) ।

८ शूषं = सुखं धनं बलं वा । तद्युक्तं शूष्यम् ।

१६३ १५ इतः = सोमाभिषवकर्मणः । ' अतः ' इति ग. ज. पाठस्तस्मिन्नेवार्थे । पूर्वैः पूर्वतरैश्च जनैरनुष्ठितात् धर्मसंतानात् ।

१५-१६ धर्मसंतानः = परंपरागतधर्मकर्माणि ।

१६ अलं धर्मेणेति यः करोति वदति सः । अयज्वेत्यर्थः । १७ अलंकरिष्णुः = आत्ममण्डनपरो वा ।

१८ ' स्वविक्ततितनिषुः ' इदं सामासिकपदम् । १९ धर्मे अश्रद्दधानम् । ' अपाप ' ( अप + अप ) इत्युपसर्गाभ्यासः । तितनिषुं = धर्मसंतानादपेतम् ( ४ ) इति यास्कः स्वविक्ततितनिषुम् दुर्गः इति । ' तन विस्तारे ' इत्यस्य सनि रूपम् । धर्मात् आत्मानं तनितुं विस्तारयितुम् अपगमयितुमिच्छति यः स तितनिषुः । तस्यैव ' अलंकरिष्णुः ' इत्यर्थः ।

२० ऊहतेरप्यभ्यासः कृतो भाष्यकारेण ' अपोहत्यपोहति ' ( ३ ) इति ।

२१ दुर्गमते ' कवासखा ' कश्चिदन्यः पूर्वस्मादयज्वनः । ' तनूशोभयितारम् ' ( ५ ) इत्यस्य स्थाने दुर्गवृत्तौ ' शरीरशोभयितारम् ' ।

पत्रं पङ्क्तिः

५६३ २३ ' तनूशुभ्रम् ' इति ' ततनुष्टेः ' विशेषणम् । 'तनूशुभ्रम्' इत्यस्य विशेषार्थः ' कवासखः ' इत्यनेन क्रियते । कः तनूशुभ्रः । यः कवासखः । यस्य कपूयाः पापाः सखायः । इति केचित् । वस्तुतस्तु ' कवासखः ' इति ' मघवा ' इत्यस्य विशेषणम् । कवानां कपूयानां पापानाम् असखा शत्रुः ।

२४ प्रपद्येत = ईश्वरं शरणं गच्छेत् । अथवा । सन्मार्गं प्रपन्नो भवेत् । प्रत्यापद्येत ( ग. ज. पाठः ) = परावर्तेत ।

५६४ ३ गोरुदरे तदूधः केनचिदासञ्जितमिव भाति । उप=समीपे । उत् = उदरस्य । उदरस्य समीपे उपरि नद्धम् उपोन्नद्धम् । उ ( उप ) + उ ( त् ) + धन् ( नद्धम् ) = ऊधन् । उत् + हन् = ऊधन् ।

४ अवश्यायाः = नीहारः तुषारः । तैरोषधिवनस्पतयः स्निग्धा आर्द्रा भवन्ति ।

७ इळा = अन्नम् । ८ आत्मीयानि= स्वस्मिन्वर्तमानानि ।

१६ ' मेघम् ' इत्यस्यानन्तरं वाक्यसमाप्तिरावश्यका ।

१८ यावत् तरः बलम् । ' यावत् तरः त्वय्यस्ति ' इत्यन्वयः । मेघबलेन न किंचित्प्रयोजनमत्र । ' अवधीः ' इत्यत्र 'जहि' इत्यर्थो नावश्यकः ।

५६६ १ कियेधा इन्द्र इति यास्कमतं भाति ( ५६५ । ११ ) । तच्च शब्दक्रमानुरूपमत एव सत्यम् । १ यन्न ज्ञायतेऽपि ।

२ शत्रुबलं धारयति संस्तभ्नाति ।

१५ ' आजवम् ' अयं शब्दो दुर्बोधः ।

१९ इयं पञ्चाग्निविद्या देवयानपितृयाणे ( २१—२२ ) च कठोपनिषदि छान्दोग्ये च वर्ण्यन्ते । दर्शनं ब्रह्मणः ।

५६७ १ विप्पितः = विः = ( विस्तीर्णः ) + पितः = ( प्राप्तः ) । ' विशिष्पते विष्पतिः ' इति च. पाठो दुर्बोधः । 'प्राणिनां कर्मानुरूपेण ' ( च. पाठः ) । ' संभृतं ' ( ५६३ । २३ ) ' विष्यत्विति ' ( तथैव ) अत्र ' इति ' च न व्याख्यायते । इति शब्दस्य स्वारस्यं न ज्ञायते ।

पृ० पङ्क्तिः

५६७ ६–७ ' यदद्य मैत्रावरुणं तु वा सौर्याद्या ' ( अनुक्र० )। आद्या ऋक् सौरी । ' तु वै ' परिभाषया एतदादीनि सप्त सूक्तानि मित्रावरुणदेवतानि । ' स्तुतौ तु मित्रावरुणौ सूक्तैर्यदिति सप्तभिः ( ऋ० सं० ७ । ६०–६६ सूक्तानि )। यदद्य ( ७ । ६० । १ ) उत्सूर्य ( ७ । ६२ । १–३ ऋचः ) इति तिस्र उद्वेति ( ७ । ६३ । १–४½ ऋचः ) इत्यर्धपञ्चमाः '। सौर्यम् ( बृह० ६ । ४–५ श्लोकौ )॥

८ अर्यमास्मिन् सूक्ते चतुर्थ्यामृचि ' मित्रो अर्यमा वरुणः सजोषाः ' इति पञ्चम्यां च ' मित्रो अर्यमा वरुणो हि सन्ति ' इति श्रूयते । एवं सति मित्रावरुणदेवत्यमिदं सूक्तमिति शौनकेन कथमुक्तम् ।

५६९ १५ 'माऋजीकः ' इत्यनेन गतार्थता ( निरु० ६ । ४ )। १६ ' आ व ऋञ्जसे०० ' ( ऋ० सं० १० । ७६ । १ ) इयमृग् ( ५६८ । २–३ ) दुर्गेण न व्याख्याता । ' दूतं वो० ' अयं मन्त्रः कथं शेष उच्यते । अयं पूर्ण एव ।

५७१ १९ ' होताऽपोनप्त्रीया अन्वाह ' ( आश्व० श्रौ० ५ । १ )।

२० एतस्या ऋचो व्याख्यानं निरुक्तटीकाया उद्धृतमिति सायणभाष्ये । तत्रैते पाठभेदाः । यथाशास्त्र ( ' इष्ट ' नास्ति ) क्रमेण ( २३ ) नोऽस्माकं धनानाम् ( २३ ) तद्धि तत्रैव युज्यते ( ५७२ । २ ) निरुक्तकारो ब्रवीति याज्ञे शकट इति वा ( ३ ) अधुनैव सोम० ( ७ )।

५७२ १ वेदे ' ऊधरिव ' ' ऊध इव ' इति द्वे अपि संधिरूपे ।

२–३ ऊधो यथा गोशरीरस्याधःस्थाने वर्तते तथाधिषवणचर्म हविर्धानशकटस्याधस्तात्तिष्ठति ।

५ चर्मरूपमूधः । ६ सोमे उत्सिच्यमाने तच्चर्म० । ' इतरम् ' इति ग. च. ज. पाठः प्रामादिकः ।

११ क एते केचित् । १२ ' शकृदटम् ' ( ५७१ । २ ) इति द. पाठः । सकृत् अटति इति ' सकृदटम् ' (५७१।२) । शकृता अटति इति शकृदटम् । १२–१३ तेन शका तच्छकटमिति युक्तं भवति ।

२७

पत्रं पङ्क्तिः

५७३ २ ' उद्भिद्बलभिदौ स्वर्गकामः । इन्द्र सोममिन्द्रः पूर्भिदिति मध्यंदिनः ' ( आश्व० श्रौ० ९ । ८ ) । ' गोसववीवधौ पशुकामः । इन्द्र सोममेतायामिति मध्यंदिनः ' ( तथैव ) दुर्गदत्तो विनियोग आश्वलायनसूत्रे नोपलभ्यते ।

७ ' गोधे तले ज्याघातवारणे ' ( अमरः २ । ८ । ८४ ) । गोधे अङ्गुलित्रं च । १४ ऋचि ' प्रवृद्धः ' (४) इति पाठान्तरम् । दुर्गेण तत्स्वीकृतमिति भाति यतः ' प्रवृद्धोदकः बहूदकदाता भव ' इति तत्कृतविवरणम् ।

५७४ १–३ उग्रमुग्रम् = अतिशयेन भीषणम् । ३ दमायन् = दमयन् । अन्यमन्यम् = सर्वान् शत्रून् ।

४–६ अतिनेनीयमानः ( ५७३ । १८ ) = भृशं पराजित्य मृत्युसात्कुर्वन् । देवताविशेषमतिशयेन = सर्वा देवता अयमतिशेते इति कृत्वा । अयमिन्द्रः सर्वेषु देवताविशेषेषु उत्तम इति पौनःपुन्येन निर्णीयते इति दुर्गविवरणम् ।

५ ' अमुष्मात्सुतान् कामान् ' इति पाठान्तरम् । सुतान्कामान् सुतरूपकामान् । अथवा । सुतान् इतरांश्च कामान् ।

११ चोष्कूयते = पुनःपुनराह्वयति ( सायणः ) ।

१९ अश्वस्तोत्रमश्वस्तोमः । तत्प्रतिपादका मन्त्रा अश्वस्तोमीयाः । ' यदक्रन्दः प्रथमं जायमान इत्येतैस्त्रिभिरनुवाकैः षट्त्रिंशतमश्वस्तोमीयान् जुहोति ' ( तै० सं० ४ । ६ । ७ ) । ' अश्वस्तोमीयं जुहोति ' ( तै० ब्रा० ३ । ९ । १२ ) । ' मा नो मित्रमिति प्रत्यृचम् ( कात्या० श्रौ० २० । ८ । ७ ) आज्यं चतुर्गृहीतं गृहीत्वा जुहोति ' । अश्वस्तोमीयेन = ' मा नो मित्रम् ' इति. सूक्तेन ( ऋ० सं० १ । १६२ ) ।

' संज्ञपनात्प्राक् मा नो मित्रम् ० इत्यावपेत ' ( आश्व० श्रौ० १० । ८ ) । ' षोडशतपथहुतयः ' ( पाठान्तरम् ) = षोडशाहुतयो हूयन्ते । अयं विनियोगः शतपथब्राह्मणे दीयते । ' शतपथे ' इदं विवरणं घ. ट. ठ. ड. पुस्तकेष्वन्तर्भावितं पाठोऽप्यशुद्धोऽत एव दुर्बोधः कृतः । ' मा नो मित्रो वरुणो अर्यमायुरित्येतत्सूक्तमधिगावावपति । उप·

पत्रं पङ्क्तिः

५७४ प्रागाच्छसनं वाज्यर्वोप प्रागात्परमं यत्सधस्थमिति च' (शत० ब्रा० १३।५।१।१८)।
शतपथे केवलं पठनमेव यथाश्वलायनसूत्रे। आहुतिविनियोगो मानवश्रौतसूत्रेषूपलभ्येत।

२१ 'अनेकविधान्०० चकार तत्तदहमेव' इदं पाठान्तरं सायणभाष्यान्नोद्धृतम्।

५७५ २ आशाः = दिशः। प्रदेशामित्यर्थः। १४ दत्तयः = दानानि। दत्तिशब्दः क्वचिदेव प्रयुज्यते। १७ मात्राः = मानानि।

१९-२० 'अनु' इत्यस्मान्नामरूपे कर्तव्ये प्रत्यय आवश्यको यथा पदधातोः अकारप्रत्यये परे पदमिति नामरूपं भवति पाद इति वा। तादृशः प्रत्ययोऽत्र लुप्तः। २१ 'संप्रति' इत्यत्रापि प्रत्ययलोपः। 'इदं न संप्रति' (योग्यं न्याय्यं वा) इति यास्ककाले प्रयोग आसीदिति भाति। 'सांप्रतम्' इति व्याकरणनियमानुसारि रूपम्। छ. त. द. पुस्तकेषु 'उपसर्गलुप्तो नामकरणः' (५७१।१२) इति पाठान्तरम्। उपसर्ग इति कृत्वा लुप्तो नामकरणप्रत्ययः।

५७६ २ विकुषितं = कन्यानां दानादानाभ्यां सुषिरं विस्तृतं भवति।

९ ठ. ड. पुस्तकयोर्निरुक्तमूले द्वाविंशतिः खण्डः। अत्र तु त्रयोविंशतिः। एतत्केवलमितरपुस्तकानुकरणं स्यात्।

५७७ ८ संपातशब्दो न नपुंसकः। तस्मात् 'संपातं नाम सूक्तम्' इति पाठोऽशुद्धः। 'संपातसूक्तं नाम' इति पाठे 'नाम'-पदं व्यर्थम्।

१३ 'नापि द्यौः' इत्यध्याहृतं दुर्गेण। १५ ऋग्विवरणे 'अमत्रः' (१०) इत्यस्य 'अभ्यमितो वा' (५७६। १३) इति द्वितीयार्थो न प्रदर्श्यते।

२० आद्यौ गायत्रौ पादौ ततो द्वौ जागतौ सास्तारपङ्क्तिः। नेयमास्तारपङ्क्तिः किंतु पुरस्ताद्बृहती। आद्ये पादे द्वादशाक्षराणि शेषेषु प्रत्येकमष्टाक्षराणीति तस्या लक्षणम्। वस्तुतस्त्वाद्ये पादे दशाक्षराण्येव न तु द्वादश। 'विमदस्य सहोदर्काः सर्वा आस्तारपङ्क्तयः' (बृह० छन्दोनुक्रमणी

पत्रं पङ्क्तिः

५७७ १० । ९. )। एतदनुरोधेन 'आस्तारपङ्क्तिः' इति दुर्गेण लिखितं किंतु तत्प्रामादिकं यस्मात्तस्मिन्नेव ग्रन्थे 'षष्ठे पुरस्ताद्बार्हते त्रिष्टुबन्ते कुह श्रुते' इति लिख्यते (छन्दोनु० १० । १०)। दुर्गकृता ईदृशाः प्रमादा अनवधानमूलाः।

२१ वसुक्रपुत्रो वासुक्रो वसुकृत् तस्यार्षम्।

५७८ ११ अश्रयो विद्यन्तेऽस्य तदश्रिमत्। 'अश्रिमत्' इति छ. त. द. पाठः। १४ अनुक्रमण्यां 'नृमेधस्यार्षम्'। पाठान्तरे 'नेमस्यार्षम्'। 'इन्द्राय साम (ऋ० सं० ८ । ९८) सूक्तस्य तथा तस्योत्तरस्य (८ । ९९) च। नृमेधनामाङ्गिरस ऋषिरित्यवगम्यताम्' (बृह० आर्षानुक्रमणी ८ । ४३)। 'श्रयन्त एमि (१००) सूक्तस्य नेमो नाम भृगोः सुतः' (तथैव ८ । ४४)।

१७ दधतः इत्यस्योपरि चिह्नं कृत्वा 'परिचरतो वा' इति ट. पुस्तके प्रान्ते लिख्यते तत् ठ. ड. पुस्तकयोरन्तर्भाव्यते।

१८ 'कामिनां कामान्' इदमनवश्यम्। अस्य इन्द्रस्य कामं विधतः कुर्वतो जनानिन्द्रो न पीडयति।

१९ 'सः' (अध्याहृतं) चोदयन् भवति यः इत्यादि।

५७९ १ 'अगस्त्यस्यार्षम्' अथवा 'आगस्त्यमार्षम्' इति साधु। न 'अगस्त्यमार्षम्' अथवा 'आगस्त्यस्यार्षम्'।

२ तदधीनत्वेन = तदधीनः पराधीन इति।

३ 'मोदनजिह्वमिति वा' (५७८ । १८) ५ 'अर्चनीयैः' (५७९ । १९) न व्याख्यातम्।

५ गाथा नयन्ति ते। नुधातोर्यप्रत्ययेन नव्यः।

६ 'शुष्णम्' अध्याहृतम्। आभिमुख्येन = बृहस्पतिस्थानं प्रति मुखानि कृत्वा।

७-८ अनया स्तुत्या तस्य नवो मानो भवतीत्यन्वयः।

८ 'णु स्तुतौ' (धा० २ । २५) परस्मैपदी एव। तुदादिगणस्थो 'णू' धातुरपि तथैव। 'नवते' इति न पाणिनीयरूपम्।

पत्रं  पङ्क्तिः

५७९  १४ ' इति ह विज्ञायते = ब्राह्मणे श्रूयते ( ट. प्रान्ते ) । ठ. ड. पुस्तकयोस्तदनुरोधेन ' इति ब्राह्मणे श्रूयते ' इति पाठः ।

५८०  २ ' असामि धूतयः ' इति द्वे पदे । हे धूतयो भवतां शवः असामि । ' धवति धावति ' एते पाठान्तरे । ' मर्दति सर्पति ' एतौ मूलपाठौ । दुर्गस्वीकृतो निघण्टुपाठो भिन्न आसीत् ।

१५ ' सुमत्स्वयमित्यर्थः ' ( ५७९ । ८ ) अत्र ' इत्यर्थः ' । ' आ गलना धमनीनामित्यत्रार्थः ' अत्र ' इत्यत्रार्थः ' । एतौ शब्दौ यास्केनेतरत्र न प्रयुक्तौ । अत एव क्षेपकौ स्याताम् ।

२० ' सोमस्य धमनिपूरणेन ' इत्यन्वयः । १९—२१ सोमपानेन कदाचिद्धमन्यो नाड्यः पूर्येरन् । तेन श्वासनिरोधः स्यात् । सदा स्तुवन्नपि कदाचित्सोमं तव धमनिषु प्रवेशयन्नहं तव क्रोधमुत्पादयेयम् । अयमर्थः कदाचित्स्यात् । दुर्गमते सोमेन धमनिपूरणं परितोषहेतुः ।

५८१  ५ अथ मतं = यदि मन्यसे ।

७ ' अयाचताम् ' इति प्रयोगात् ' याचिष्यति ' ( ५८० । १२ ) इत्येव दुर्गस्वीकृतनिरुक्तपाठः । गले स्थिता धमनिः गलधमनिः । गल एव वा धमनिः । ' गल्दा धमनयो भवन्ति ' ( ५८० । १३ ) इत्येव सर्वेषु पुस्तकेषु पाठः । ' गलितं हि तस्यां धीयते ' ( ५८० । ६—७ ) इति दुर्गविवरणम् । भाष्ये तु ' गलनमासु धीयते ' ( ५८० । १३ ) । दुर्गपाठो न कुत्राप्युपलभ्यते । १० भाष्ये ' गल्दा धमनयो भवन्ति ' न तु ' गल्दा धमनिर्भवति ' ।

१० ''गल्दा । 'गल अदने' (धा० १ । ५४७) भौवादिः । गलनं पूरणं कामानाम् । गलेः पूरणार्थत्वं स्कन्दस्वामिनोक्तम् । तद्ददाति । ' आतोऽनुपसर्गे कः ' ( पा० ३ । २ । ३ ) गल्दाः '' ( निघण्टुभाष्ये १ । ११ । ५४ ) ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ५८१ | १४ | ' गलना धमनीनाम् ' ( ५८० । १४–१५ ) इति छ. त. द. पाठः । अस्मिन्पाठे ' आ ' अयमुपसर्गो ' विशन्तु ' इत्यनेनान्वेति । |
| | १४–१५ | ' आगलना धमनीनामित्यत्रार्थः ( ५८० । १९ ) न व्याख्यातम् । |
| | १५ | ' धमन्ति = नवं मदमुत्पादयन्ति ' इति दुर्गकृतोऽर्थः । यदि ' आगलना धमनयः ' तर्हि धमनीनां धमनय इत्यस्य कोऽर्थः । ' इन्दवो धमनयः ' इत्यस्य च कोऽर्थः । 'ताभिर्धमनिभिः ' इति तृतीयार्थः कथं लभ्यते । |
| | १८ | अनयोः पाठयोः कतरो दुर्गस्वीकृत इति न ज्ञायते । ' नानाविभक्ती त्वेते ' इति ग. च. ज. छ. पाठः समीचीनः । नानाविभक्ती इति = नानाविभक्तीति ( पाठान्तरे ) । अयं संधिरपाणिनीयः । |
| | २०–२१ | ' आगल्दा धमनीनाम् ' इति प्रयोगे गल्दाशब्दो धमनिवाचकः कथं भवेत् । यास्कमते ' गल्दा धमनयो भवन्ति '। अत्र ' आगल्दाः ' इति प्रथमान्तं ' धमनीनाम् ' इति षष्ठयन्तम् । एवमेते पदे नानाविभक्ती । भिन्नविभक्ती इत्यर्थः । इन्दवः सोमा धमनीनामागलनाः । धमनीद्वारा उदरे गलन्ति । दुर्गकृतं विवरणं ( १४–१५ ) भिन्नम् । धमनीनां धमनीमध्ये या आगलनास्ताभिः इति दुर्गः । ' आगल्दा धमनीनाम् ' इदं गल्दाशब्दस्य धमनिवाचकत्वे कथं ज्ञापकं भवेत् । ' इन्दवो धमनीनामागल्दाः ' इत्यन्वयः । |
| ५८२ | १२ | तस्यामेव = यथा ' मा त्वा सोमस्य० ' इयमृग्बृहतीसहस्रे विनियुक्ता तथेयमपि । |
| | १४ | ग. च. ज. पाठे 'दानकर्म ' नास्ति । अथ मतं = यदि केचिन्मन्यन्ते । १५ न + अरायासः । रायः = धनम् । |
| | १५ | ' नारायासः ' इत्यस्माद्दानकर्म ' न पापासः ' इत्यस्मादध्ययनं ब्रह्मचर्यं तपश्च ' जल्हवः ' इत्यस्मादाहिताग्नित्वं चानुमीयते । ऋक्संहितायां ' जळ्हवः ' न तु ' जल्हवः '। |

